॥ श्री ॥



# मारुतशक्तिः



श्रीमन्मथुराधीश्वरचरणाब्जचञ्चरीकगोस्वामिवर्यश्री
मद्विठ्ठलनाथमहाशयविरचितस्यप्राभञ्जनस्यशु-
द्धाद्वैतसिद्धान्तमण्डनग्रन्थस्य

पूर्वभागेण सहिता

तट्टीका

पञ्चनद्युपाव्हेन विद्वद्रत्नश्रीघनश्यामभट्टस्यात्मजेन शिष्येण च
गट्टूलालेत्यपरनामकेन गोवर्धनशर्मणा

प्रणीता

स्वसंप्रदायायानारतं प्रयतमानतया
स्वयमेव स्ववसुव्ययेन मुद्रयित्वा प्रसिद्धिं नीता

मुंबय्यां

गणपतकृष्णाजी मुद्रणयन्त्रालये तदधिकारिणा
आत्मारामकान्होबाभिधेन अङ्किता.



शके १८१९

# श्रीहरिर्जयति ।

## प्रस्तावना ।

श्रीकृष्णचरणपरिचरणप्रवणान्तःकरणा विजयन्ते केचन सज्जनाः सज्जनानाशास्त्रबोधाः ।

अथेदं नाविदितं विदुषां वो यत्स्वधर्मसंरक्षणं श्रेयस्करमिति । तदनुरुन्धानैर्विविधानवद्यविद्यानिधानैः श्रुतिस्मृतिसमुचितसदाचारदत्तावधानैः स्वयमपि ग्रन्थनिर्माणनिपुणान्देवीदत्तादिविद्वद्वरान्सानुकम्पं साश्रयदानमनुगृह्णद्भिरधिवसद्भिः सद्भिः परिष्कृतं विविधवनोपवनराजिविराजितपरिसराभिरामं कोटापराख्यं नन्दग्रामं श्रीमथुराधीश्वरचरणकमलयुगलसंसेवनसाधितसकलपुरुषार्थसार्थैर्वैष्णवविबुधगोपीनाथशास्त्रिभिरप्यवाप्तबहुग्रन्थार्थै रश्मिनवार्थीप्रभृत्यनेकप्रौढतरग्रन्थग्रथनकेलिकेभ्यो गोस्वामिवंशमौक्तिकेभ्यः श्रीमद्गोपीश्वराख्यमहाराजमहापण्डितेभ्योधिगतकतिपयस्वमार्गीयग्रन्थैर्गोस्वामिवर्यश्रीवल्लभात्मजैः श्रीविठ्ठलनाथ (कन्हय्यालाल) महाराजमहाशयैर्देशिकमण्डलाखण्डल-मायावादमहान्धकारसंहतिसमुत्सारण-भक्तिमार्गपुण्डरीकमण्डन-मार्तण्डश्रीवल्लभाचार्यचरणानां मनोजवसैः* श्रीमद्विठ्ठलनाथप्रभुचरणैर्विरचितस्य विद्वन्मण्डनस्य खण्डनाभासं वाराणसीवासिगोस्वामिवर्यश्रीगिरिधराख्यमहाराजविरचितस्य शुद्धाद्वैतमार्तण्डस्य खण्डनाभासं च सहस्राक्षनामानं ग्रन्थं तत्प्रसिद्धिं कुर्वाणेन भट्टवंशजेन मथुरादासवर्मणा चिखण्डयिषया प्रेषितं समासाद्य सहस्राक्षाक्षेपभञ्जनः प्राभञ्जननामा ग्रन्थो ग्रन्थयांचक्रे । समादिदृक्षि† च संस्कृत्य मुद्रितो मोहमय्याम् । प्राहायि च तदर्थं समर्याद‡ पण्डितचक्रचक्रवर्तिनां द्वादशदर्शनीदारद§पारदर्शिनां श्रीमद्बालमुकुन्दपादारविन्दमकरन्दबिन्दुसंदोहमिलिन्दायमानमानसानां निगमागमपयःपयोधिमथनमन्दरायमाणगीर्वाणवाणीविलासानां प्रकृतिजन्यसौजन्यादूष्यवैदुष्यसर्वतन्त्रप्रवचनस्वातन्त्र्याद्यनेकानवद्यहृद्यप्रगुणगुण-

---

* पितृसंनिभैः । † संपूर्वाद्दृशेः सन्नन्ताच्चिण् । ‡ समीपम् । § समुद्रः ।

गणार्णवाविर्भूतयशःस्तोमसोमसमुदयविकासितसितसुहृदयहृदयकुवलयवलयानां पञ्चनद्युपनामकानां श्रीघनश्यामभट्टानाम् । तैस्तु मनोजवाय असंभवदवद्यलवाय वैतण्डिकवेतण्डमण्डलगण्डकण्डूतिखण्डनाकुण्ठोत्कण्ठकण्ठीरवाय स्वनिदेशवशंवदाय वदावदाय च सभासु भासुरासु भाजनैरनुकम्पायाः श्रीहरेः सभाजनैः प्रेमपात्राणां छात्राणां गोवर्धनेनान्वर्थितनामधेयाय स्वतनुजनुषे समार्पि स ग्रन्थः । आदेशि च यदस्य ग्रन्थस्य बहुशोधनं विधाय बहुशो धनव्ययेनापि मुद्रयैनं कस्यचिद्भागस्य च स्वकृतया टीकया तिलकितमिति । परमपूज्यपितृपादाज्ञां मालतीमालामिव शिरसि निधाय प्रारम्भितमाम् ।

अथ प्रथमतस्तु तेन प्रस्तुतमासीद्यत्खण्डनं तदपि नातिस्वल्पीयसानेहसानल्पकल्पं समाप्तकल्पमभूदभूतपूर्वम् । तदेव प्राभञ्जनस्यास्य टीकारूपतया पर्यणामि । अवशिष्टा विशिष्टा युक्तिमुक्तावली तत्र समग्रा हि समग्राहि 'अयमर्थः', 'अत्रायं भावः', 'इदमत्र ज्ञेयम्', 'इदं त्वधिकमनुसंधेयम्', 'अत्रायं संदर्भार्थः', 'अत्रायं सारोऽवगन्तव्यः', 'अत्रायं निष्कर्षः' इत्यादिसंदर्भैः "श्रेयांसि बहु विघ्नानि" इति अभियुक्तोक्तिर्न मृषोद्येति अर्थशून्येन पैशुन्येनान्तरायितः कंचिदवसरं ग्रन्थव्यवसायः । यतः सत्येकस्मिन्नपि बाधके साधकसहस्रस्याप्यकिंचित्करत्वात्कार्यमात्रं प्रति प्रतिबन्धकाभावस्य हेतुत्वम् । ततो नीहारतुषारशीकरासारवर्षिणी वेला भास्करकरनिकरेणेव क्षिप्रं प्रत्यक्षेपि । प्रत्यक्षेपि साधीयस्यर्थे सा धीयते पुरोभागिना युक्तिदुरुक्तिः । अथवालमतिप्रसक्तेन । यत्तु केचन व्यतिविद्रते यथा मुद्रयित्वा प्रसिद्धिं प्रापिते सहस्राक्षग्रन्थे जीवति च ग्रन्थकारे न केनाचित्सोयमखण्डि । अपि तु शुद्धाद्वैतसिद्धान्तपरिपन्थिनि परलोकपान्थे व ग्रन्थकर्तर्यस्थान इयमाविष्क्रियते खण्डनाहोपुरुषिकेति । तैरपि सूक्ष्ममीक्षणीयं विद्वन्मण्डनशुद्धाद्वैतमार्तण्डप्रभृतिग्रन्थकारसांनिध्यं क्व सहस्राक्षग्रन्थकारस्यासीदिति समानयोगक्षेममपर्यनुयोज्यम् । किं च यद्ग्रन्थमुद्रणात्प्राक्समास्थित ग्रन्थकार इति समभिव्यज्यते भावप्रधाने तत्प्रस्तावनान्तिमे पद्ये "यशोदेहेनास्मिन् जगति सततं सुस्थितिजुषः" इत्युक्त्या । प्राक्त्वप्रकर्षो यदुपज्ञः प्रस्तावनाप्रणेतुरिति नान्यथा संभावना संख्यावतां समाजं समधिजिगमिषति । अन्यच्च सोयं सहस्राक्षस्तेन ग्रन्थ-

कारेण द्वाविंशत्युत्तरैकोनशतमितविक्रमसंवत्सरे समपारीति प्रतीयते सहस्राक्षान्त्येन पद्येन। तथा हि "सहस्राक्षाभिधो ग्रन्थः संपूर्णः कार्तिकेऽभवत्। वर्षे नेत्राक्षिनन्देन्दौ विक्रमस्य महौजसः ॥" किं च सोयं यस्याः स्मरणस्तम्भत्वेन संभावितः सापि दीर्घनिद्रामशयिष्ट पञ्चविंशत्युत्तरैकोनविंशशतमितविक्रमादित्यवत्सरे तत्स्फुटं प्रस्तावनायाम् "शरनयननन्दनिशाकरप्रमितविक्रमवर्षान्तर्गतोर्जमासवलक्षपक्षचतुर्दशीसमासादितनिलिंपनिलयवासायाः कोपि स्मरणस्तम्भ इवायम्" इत्याद्युक्त्या। किं चायं ग्रन्थकारोपि तस्मिन्नेव वत्सरे वैशाखे मासि वदि स्मरतिथौ शिवपदं प्रापत्। ग्रन्थमुद्रणसमयस्तु मुखपृष्ठलिखितः शकाब्द १७९२ मितोस्ति। अथेत आपामरं युज्यतेवगन्तुं यद्ग्रन्थमङ्कयित्वा ग्रन्थकारेण न प्रेषितोस्ति चिखण्डयिषया। अपि तु मुद्रितोपि ग्रन्थस्तत्प्रसिद्धिकर्त्रा वर्षं यावन्न प्रत्तः। भूयो भूयोनुयुक्तश्च [illegible]
तदुत्तरं [illegible]
ग्रन्थकारस्य [illegible] मन्दं मन्दं व्यराच। प्राभञ्जनस्तु वसुगगननागेन्दु १८०८ मिते शालिवाहनशक एव मुद्रितः प्रसिद्धिं च प्रापितः। अतस्ते दत्तोत्तराः सुहृदया दयामयाशयाः। उपेक्षामहे च तानसूयापिशाचिकावेशविवशान्निन्दातुन्दिलान्मुखरान्खलान्। अथेयं शङ्का समुदेति कुतो न मारुतशक्तिः प्राभञ्जनस्योत्तरभागे प्रणीता तदुत्तरं तु तेनैव ग्रन्थकारेण दत्तं भूतानुवादेनोच्यते। उत्तरार्धं किमिति न कृतमिति मुहुर्मुहुरनुयुक्तोपि स्वहृदयगुहावरुद्धं खेदं बहिरप्रकटयन्सातिनिर्बन्धं तदन्तेवासिभिरस्माभिः स्वहृद्यप्रकाशनायोक्तस्तर्हि शृणुत किंचिदेव सविस्तरमिदं मम खेदोद्गारालपनमिति सनिःश्वासमुक्त्वेमान् पञ्चत्रिंशतं श्लोकान्हेलया तदैवावादीत्। त इमे श्लोका अक्षरशोनूद्यन्तेः—

कालं विशालमपि शक्त्यधिकं स्ववित्तं
चित्तं शरैरिव परैर्वचनैश्च विद्धम्।
देहश्रमं च परमं परियोज्य यावत्
किंचिद्यथामति कथार्थमथाम्ववर्णि ॥ १ ॥

---

१ कोटिकमाय।

लोकेत तावदपि भावविबोधपूर्व-
मप्येकवारमखिलं खलु यः प्रहृष्यन् ।
को निश्चितो निजजनस्वमताभिमन्ता
संतापहृद्भवत संप्रति सोऽस्मदीयः ॥ २ ॥

विद्या वरेषु बलिना कलिना विलीना
हीनादरेषु हरिभक्तिविधौ नवीना[२] ।
प्रायेण पद्धतिरुदेति मुदेऽतिगानां[३]
लेखास्ततो [४]गतजनेषु वनेषु खेदाः[५] ॥ ३ ॥

ये वा मतान्तरनितान्तरता अतान्त-
विद्यावदातवपुषो विबुधा विभिन्नाः ।
स्वैः स्वैः प्रसिद्धपुरुषैर्विहितान्विहाय
द्रक्ष्यन्ति हन्त किमु तत्त्वधिये[६] परोक्तिम् ॥ ४ ॥

[७]उच्छूनमत्सरनमत्सरसावधाना
[८]नानागमा अपि धृतात्ममताभिमानाः ।
विद्वेषरोषकलुषेण विलोचनेन
द्रक्ष्यन्ति केचन विखण्डषया परेऽपि ॥ ५ ॥

प्राय: परेष्वपि बलेन कलेः सुमल्पाः[९]
कल्पा जनेन सधनेन धनाशनाद्यैः ।
न प्रेरिता निरुपधिस्वमताभिमानात्
कालेऽत्र ये कुशलशालिन आलिखेयुः ॥ ६ ॥

यत्साध्वसाध्वपि विसाध्वसमात्मबुद्ध्या
प्रोक्तं मया [१०]रसमयात्समयात्समग्रम् ।
बुद्ध्वा बुधा इह लिखन्तु सुखं तु दोषान्
वादोऽपि मार्मिकबुधैः सह पुण्यलभ्यः ॥ ७ ॥

अग्रे न शक्त इति वक्ति विरक्तिवाचं
पण्याङ्गनो भवितुमिच्छति भूरिपुण्या ।
वृद्धेति[११] बद्धकुटिलभ्रु[१२] वलदृगास्य-
मुच्चास्यहास्यकृदपास्यति मां जनोऽन्यः ॥ ८ ॥

---

१ अस्मत्संप्रदायवर्ती । २ इदं पद्धतिविशेषणम् । ३ अतिक्रामताम् । ४ निर्जनेषु । ५ अरण्यरुदितप्रायाः । ६ तत्त्वज्ञानाय । ७ अभिवृद्धमत्सरेण नम्रकृणीभूतं सुरसवस्तुन्यप्यवधानं येषां ते । ८ अनेकशास्त्रज्ञाः । ९ अत्यल्पाः । १० रसमयमाचारं संविदं चावलंब्य । ११ वृद्धा वेश्या तपस्विनीति न्यायेन । १२ वलदृक् आस्यमिति भिन्नं पदम् ।

आस्तामियं परकथा न तथा व्यथायै
तोदः परान्मनसि मोदमहोदयार्थः।
अङ्गप्रभङ्ग इह संगररङ्गभूमौ
भूमानमानयति मानभृतो बलानाम्[1] ॥ ९ ॥

या स्वैरवैरपरमैरशमैरवज्ञा
स्वैरेव दैवकृतो निशितोक्तिरक्तैः[2]।
सा हन्ति हन्त तु निरन्तरमन्तरं तत्
प्रोत्साहमत्युपरमं[3] परमं तनोति ॥ १० ॥

वर्यं स्वकार्यमिह किं किमकार्यमार्यैः
सत्कार्यधुर्यपदगा अविचार्य नैवम्।
मात्सर्यमेकमुपधार्य निवार्य धैर्य-
गाम्भीर्यवृत्तिमपकुर्वत आत्मपक्षम् ॥ ११ ॥

शास्त्रेष्वखिलागमगतिः खलु पण्डितः[4] स्यात्
साभ्यासमेकमपि शास्त्रमवाप्य शास्त्री।
श्लोकार्थमात्रमतिरेव न वैदुषी स्यात्
प्रायोद्य नैव सुलभा किल भाति[5] सापि ॥ १२ ॥

शास्त्रश्रमं परिविधाय निधाय चित्तं
स्वाचार्यवर्यचरणेष्ववधाय कृत्ये।
संधाय सत्पतिरतिं[6] स्वयमेव सेतु-
बन्धाय साधु सकलैर्यतनीयमेव ॥ १३ ॥

शक्येत न स्वयमिदं यदि शुद्धचित्तं
वित्तं प्रयुज्य च परैरपि कारणीयम्।
चेद्दुस्त्यजोर्थ इह साधुगिरोपकार्यः
सोत्तेजनं निजजनः स्वयमेव कुर्वन् ॥ १४ ॥

वाचो व्ययेपि यदि भूरिपरिश्रमः स्या-
द्वीक्ष्य स्वतः स्वजनमुद्यतमार्यकार्ये।

---

१ प्रत्युत बलबाहुल्यं मानभृत इति द्वितीयान्तमानयतिक्रियायाः कर्म। २ प्रसाद्यमानैरप्यप्रसन्नैः। ३ लेखप्रोत्साहबुद्धेर्विरामम्। ४ मध्यमणिन्यायेनोभयत्र संबन्धः। ५ श्लोकलापनशक्तिरपि। ६ भगवान्।

औदास्यमात्रमवलम्ब्य सदास्यमुद्रां
कार्या दया परतयात्र परापकारे ॥ १५ ॥

कुर्वन्ति न स्वयममी कतिचित्कृतेर्ष्या
नान्यैः सहन्त इह हन्त विधीयमानम् ।
निन्दन्ति सत्सरणिमत्सरिणः परार्था-
नुन्मूलयन्ति वचसा बहुमान्यवाचैः ॥ १६ ॥

लब्ध्वा न शास्त्रमधियन्ति धियं विशालां
तां योजयन्ति कुपथेषु नुताः कुभक्तैः ।
केचित्कथंचिदपि शास्त्रलवानवाप्य
स्वाचार्यवाचमतिमुच्य परं चरन्ति ॥ १७ ॥

आचार्यवर्यविभुपादगिरः समग्रा
दृक्कर्णशोधनकृते किल वर्णशोपि ।
पीताः सकृज्जनुषि यैरधुना सुधन्याः
स्युर्वैष्णवेषु कति तान्दिशतांक्षिश्रोतः ॥ १८ ॥

अन्यस्तनोति न वयं निजकर्म कुर्म
एतत्तु नोचितमतो न परः करोतु ।
एवं प्रपञ्चपदसंचयमञ्चयन्तः
साधून्मृदूनधमयन्ति जनेषु वाग्भिः ॥ १९ ॥

दोषैकसेचनविवेचनदक्षवाचो
ग्रामेत्र केचन सदैव मदीयनिन्दाम् ।
प्रत्यालयं प्रतिजनं कृतिविघ्ननिघ्ना
आवर्तयन्त्यविदिताः किमु वैष्णवाग्र्याः ॥ २० ॥

यैर्भ्रामितः स कितवामितवाक्प्रपञ्चैः
पूर्वाटवीष्वनुदकासु तपर्त्तुपूर्त्तौ ।
क्रूरैर्भ्रमन्सममदृक्स्वजनैर्वियुक्त-
स्त्रातोस्मि दासकरुणेन गदाधरेण ॥ २१ ॥

---

१ सदा मुखमुद्रणं तूष्णींभाव इति यावत् । २ बहुभिर्विश्रब्धैर्मान्या वाक् येषाम् । ३ उल्लंघ्य । ४ दृशोः करणयोश्च शुध्यै । ५ ग्रन्थनिर्माणविघ्नतत्परैः । ६ स्वजनासंनिधानादगत्या क्रूरैः समं भ्रमन् । ७ अन्धः ।

श्रान्तं[1] यथामतिबलं समधीत्य मार्गे
तत्पारितोषिकमिदं बिरुदं मयाप्तम् ।
अत्रत्यभावकचये धृतराष्ट्रशब्दः[3]
किं वर्णितैरुपकृतैरितरैः[2] कृतैस्तैः ॥ २२ ॥

आजीवनानि च धनानि जनानुरागा-
न्सौख्यानि कीर्त्तिमपि हन्त हठैर्हरन्तः ।
जीवन्तु संततमनन्तपदैकभक्ते-
र्हेतुं विरागमिह मन्मनसेर्पयन्तः ॥ २३ ॥

आचार्यवाच्यपि न चेद्यतते कथा का
श्रीपूरुषोत्तममुखोक्तिसुधावधाने ।
भट्टस्य मे तु रणितं मशकोपमस्य
दूरं क्षिपेच्छ्रवणतो नहि वैष्णवः कः ॥ २४ ॥

लेशो स्वतन्त्र इह मेस्ति समाप्तकल्पो
भागः परोप्युपहतो वहतो विरागम् ।
प्रायोवकोशवसुचित्तविकाशहैन्या-
द्व्याख्यात्मना परिणतिं न गतस्ततः किम् ॥ २५ ॥

श्रीवल्लभप्रभुपदाब्जरतिर्मुकुन्द-
सेवाकृतिः श्रुतिमतिर्[4] हरिवक्त्रवाचाम् ।
अर्थादृतिर्[5] हृदि धृतिः[6] प्रतिजन्म मे स्तात्
चित्रैश्चिरादिह भवे भ्रमतः स्वकृत्यैः ॥ २६ ॥

अष्टाक्षरस्मरणमेव गुरोः प्रसादा-
च्चित्ते चिरं शरणभावपुरःसरं चेत् ।
भव्याय किं न भविता भुवि तावदेव
सासूयमत्सरकरै[7]रपरैः श्रमैः[8] किम् ॥ २७ ॥

ये[9] नाम केचिदिति यो भवभूतिनोक्तो
न्यायेन तेन लिखितं व्यसनेन किंचित् ।

---

१ यच्छ्रान्तं तस्य श्रमस्य । २ उपकारैः । ३ एतन्नामा नानाग्रन्थकारस्तदादीनाम् । ४ गीतादीनां सुबोधिन्यां चार्थेष्वादरः । ५ वैदिकज्ञानम् । ६ तासामेव हृदये धारणम् । ७ असूयावतां मत्सरोत्पादकैः । ८ ग्रन्थनिर्माणादिरूपैः ।

९ ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्तु ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोपि समानधर्मा कालोह्ययं निरवधिर्विपुला च पृथ्वी ॥

कर्त्तास्म्यहो उपरतः पुरतः स्वभाव-
कृत्यं प्रसह्य हृदि मां प्रकृतिर्नियुङ्क्ते[1] ॥ २८ ॥

चेन्मण्डनेपि विदुषां च सुवर्णसूत्रे
व्याख्या मनोभिलषिता कृपया हरेः स्यात्[2] ।
वक्ष्ये मया यदिहँ वाच्यतयोक्तमग्रे
प्राभञ्जनोपकरणं च समासतोऽस्याम्[3] ॥ २९ ॥

दूरं निजोरुयुगलाद्विरचय्य वासो
दूरयेत नग्न इह दूरयितेति जाने ।
निर्गच्छदच्छसुहृदां[4] पुरतः प्रतप्ता-
च्चित्ताद्बहिः प्रलपितं क्षणविश्रमाय ॥ ३० ॥

वाचाटितेन कुटिलैः परिभाव्य मूर्त-
दुर्दैवर्वद्भि महुधैव समर्दयद्भिः[5]
अस्मन्मतानुगतलोकविशेषवार्त्ता
स्वल्पा मयाकथि नमः शिरसा महद्भ्यः ॥ ३१ ॥

गोस्वामिवंशतिलकः किल कश्मलानां
हर्त्तोद्यतो निजमतोदयतोषहेतोः ।
गोवर्धनोस्ति गिरिभृत्पदपङ्कजालि-
विद्याविलास्यथ विभुः सदयो मयि स्वे ॥ ३२ ॥

श्रीदीक्षितान्वयविभूषणमार्यकार्यं
कुर्वन्स्वयं प्रमदितैश्च विधापयन्स्वैः ।
सेवास्वधर्मशुचिशास्त्रनिधिः स्वमार्गो-
द्धर्त्ता विभाति विभुविठ्ठलनाथनामा ॥ ३३ ॥

मादृग्जनेपि सदयाभ्युदयाः स्वधर्म-
शर्मस्पृहाः श्रमवहा हि महानुभावाः ।

---

१ प्रकृतिस्त्वां नियोक्ष्यतीति भगवद्वाक्यात् । २ विद्वन्मण्डनं श्रीविठ्ठलनाथप्रभुकृतो वादग्रन्थः सुवर्णसूत्रं च तस्यैव टीका श्रीपुरुषोत्तममहाशयैः कृता । ३ मारुतशक्त्याविदमग्रे वक्ष्यामि इदमुत्तरार्धे वक्ष्यत इत्यादिकथनेन मया यदग्रे वाच्यतया प्रतिज्ञातं तत्तस्यां टीकायां वक्ष्ये प्राभञ्जनोपयुक्तमपि तत्रैव प्रसङ्गात्किञ्चिद्वक्ष्ये । ४ विमलाशयानां पुरः प्रतप्ताच्चित्ताद्बहिर्निर्गच्छत्प्रतापः क्षणं विश्रान्तये भवति । ५ मूर्तदुर्दैवेनेवात्यन्तं पीडयद्भिर्वाचाटितेन मत्का लोकविशेषाणां वार्ता चोक्ता न तु सर्वेस्तादृश इति विशेषपदं तदेवाभिप्रेत्यमह नग्न इति ।

अन्येपि सन्ति विलसन्तु यथोपकारी
श्रीदेवकीसुतसुहृद्भृतिधर्मधुर्याः ॥ ३४ ॥

पुनरमृतघनैर्यैर्दग्धमाशुप्ररोहे-
दघविघटनवज्रा दासवर्गे दयार्द्राः ।
ददतु सुभगसिद्धीरत्र चामुत्र सर्वाः
सततमथ कटाक्षाः श्रीमुकुन्दस्य ते मे ॥ ३५ ॥

मुद्रालयमनुष्याणां विशेषतः प्रमादात्परिशोधेऽस्माभिर्नियुक्तानामपि दृष्टिप्रमादाच्च अत्र ग्रन्थे बहून्यशुद्धानि सन्त्यापतितानि यानि प्रेक्षकैर्ग्रन्थकारप्रमादतयैव संभाव्येरंस्तादृशानि यथा पृ० ९६ पं० २४ "व्यवस्थातो नाना" इति काणादसूत्रानुवादे "व्याख्यान्तो नाना" इत्यापतितं तानि गुणैकग्राहिभिर्बुधैः परिशोध्यानुग्राह्योयं ग्रन्थ एतदर्थमेव ग्रन्थान्ते ग्रन्थकृता तेनामुना श्लोकद्वयेनाभ्यर्थ्यन्ते भवादृशा अकृशानुभावा विबुधाः ॥

वेदानुयायिविदुषः परभक्तिनिष्ठा-
न्विज्ञापयामि चरणौ परिगृह्य नम्रः ।
उच्चद्दयागुणदृशोन्यपरिश्रमज्ञा
अस्मिन्प्रमादशतकानि मम क्षमध्वम् ॥ १ ॥

अन्धोस्म्यहं निजकरेण न लेखशक्त-
स्तल्लेखितं निखिलमेव करैः परेषाम् ।
भ्रान्त्यादयो जगति मानुषबुद्धिधर्माः
सर्वांशतो न परिहर्तुमिमे च शक्याः ॥ २ ॥

अयं मारुतशक्तिग्रन्थनिर्माता गट्टूलालेतिनाम्ना प्रसिद्धस्तैलङ्गवेल्लनाटीज्ञातीयः पञ्चनद्युपाह्वो गोवर्धनशर्मा विक्रमार्कशकस्य विंशशतकस्य प्रथमवर्षे लब्धजन्मा सौराष्ट्रदेशे गिरिनार इति प्रसिद्धस्य रैवतकपर्वतस्योपत्यकावर्तिनि (जूनागढ) जीर्णदुर्गपुरे श्रीमद्वल्लभाचार्यवंश्यगोस्वामिश्रीव्रजवल्लभमहाराजस्य स्वमातामहस्य गृहे वृद्धिं गतो गर्भाष्टमे वर्षे वैशाखवलक्षपक्षे पित्रोपनीयोपदिष्टसावित्रीकः स्वमान्तामहादवाप्तसंप्रदायदीक्षः स्वजन्मतो नवमे (१९०९) वर्षे शीतलाख्यरोगेण हृतनयनद्वयः स्वपितुः

१ देवकीनंदनाख्यः सुहृत्।

परिश्रमादेवाधीतवेदतदङ्गषड्दर्शनादिको दशमे (१९१०) मुम्बापुरे निवासमिच्छता स्वतातेन सहागत्येह पुरे कृतसद्मा पद्मापतिदासो निजसदने स्ववसुव्ययेन स्थापितविद्यालक्ष्मीपाठशालो बहूनन्तेवासिनोऽध्यापितवान्ग्रन्थांश्च निर्मितवान् । अद्यापि स्वयं स्थापितायां विद्यालक्ष्मीपाठशालायां स्वतः परतश्च च्छात्रान्पात्राणि विद्यादानस्याध्यापयमानः स्वमातामहदत्तं श्रीप्रभुरणात्मजश्रीगिरिधरसेवितं श्रीबालमुकुन्दाख्यं भगवत्स्वरूपं तदिच्छोपलब्धैरुपचारैः सेवमानोऽत्यल्पविभवोपि यथोपपत्तिप्रायसंप्रदाय आवश्यकग्रन्थान्निर्मिमाणो दैवोपसादितमन्नं देवपित्रतिथ्यादिभ्यो यथासंभवं विभज्य शेषमुपभुञ्जानः "संतुष्टो यर्हि वर्तेत ब्राह्मणो येन केनचित्" इत्यादिशास्त्रमनुसृत्य आस्ते । अद्यापि तत्सदनं ग्रहणधारणपटुभिर्वटुभिः प्रौढैश्च साहित्यव्याकरणन्यायवेदान्तादिशास्त्रार्थकोलाहलेन मुखरीक्रियते । अथ मारुतशक्तिग्रन्थकारस्य प्रस्तावनाप्रणयनेऽनवकाशात्तदनुज्ञावशादेतां प्रस्तावनां भावेनायमचीक्लृपत् ।

विनिवेदयति च चराचरोद्भवनोपचयापचयचातुरीचणस्य सकलविद्यास्थानसंपदुपलम्भिनो जगदीश्वरस्य सच्चिदानन्दस्य श्रीहरेश्चरणारविन्दयोः प्रणतिततिपुरःसरं प्रस्तावनापुष्पाञ्जलिमिमं

जामनगरनिवासी गिरिनारायणज्ञातीयभट्टावटङ्क-

वालजीतनुजनुः शीघ्रकविः शास्त्री,

**श्यामशर्मा.**



॥ श्री ॥

# अथ मारुतशक्तिसहितप्राभञ्जनप्रारम्भः

## सहस्राक्षखण्डनम्



॥ श्रीगणेशाय नमः॥ श्रीकृष्णाय नमः॥ श्रीगोपीजनवल्लभाय-नमः॥ श्रीमन्मथुरेशो जयति ॥ वृन्दारण्यनिकुञ्जमञ्जुभवने देदीप्यमानं सदा भक्त्यास्वाद्यलसद्रसैकसदनं सेव्यं सदा सज्जनैः ॥ वेदान्तैकविचारवेद्यममलं गोपीजनानन्दकृद् भक्तानां भवभञ्जनं भयहरं भव्यं महो भावये ॥ १ ॥

### टीका

श्रीमदाचार्यश्रीविठ्ठलेश्वरचरणकमलेभ्यो नमः॥ वन्दे श्रीसुखवृद्धये धृततनुं स्वैकाश्रितानाममुं तीव्रासारघनोद्यमोद्धतसहस्राक्षस्य भिन्दन् मदम्॥दासं स्वं कृपया करेण मृदुना गोवर्द्धनं प्रोद्धरन् त्वत्त्वार्त्ति स निजव्रजं सुखनिधिं यो लीलयैव व्यधात् ॥ १ ॥ अर्थोन्तत्सद्धामभुवमधुरलीलावलिपरः परानन्दाकारो भुवि करुणयाऽऽविष्कृततनुः ॥ गदां विघ्नान् भेत्तुं तिमिरमपहर्तुं जनेत्वदां दधच्चक्रं सोऽस्मानवतु मथुराऽधीश्वरहरिः ॥ २॥ शुभा विद्यासंप्रद्व्रजपसुतभक्तिः परपदं स्वतः संसिद्ध्येद्यन्नखशशिकरव्याप्तवपुषाम्॥ तदास्तां मस्ते मे सकलकलुषोन्मोषि रुचिरं चिरं स्वाचार्याणां चरणमरुणं भूरिकरुणम् ॥ ३॥ सदालिसेवितौ वन्दे पराऽऽगमहितौ मृदू ॥ अरविन्दरुचां चोरौ चरणौ विठ्ठलेशितुः॥ ४ ॥ श्रीमद्बालमुकुन्दसुन्दरवपुःस्पर्शेन सानन्दतां नीतो नित्यमहं महं च महतामर्हे जडोप्यापितः॥ यैर्मन्त्रानुपदिश्य तान्हरिरतेर्दाने स्वतन्त्रान्सदा गोस्वामिव्रजवल्लभाभिधगुरून् मातामहान्स्वान्भजे ॥५ ॥ श्रीमच्चक्रधराऽऽस्यचन्द्ररुचां पश्यंश्चकोराश्चिराद्दुर्वादोन्नतगर्वपर्वतपविप्रायप्रचण्डोक्तयः ॥ श्रीमद्विठ्ठलनाथनामविभवो गोस्वामिवर्याः सदा जीयासुः कुविदां विदारणकृते प्राभञ्जनो यैः कृतः॥६॥नृणां ये व्यामोहं मथितमतयो हन्त यतयो वहन्ते वाग्जालैर्जगति कलिकालैधितबलैः ॥ समस्ताः प्रोदस्तास्त इह सहसा तैर्विभुवरैर्वयं कुर्मस्तेषां वचसि पुनराहेपुरुषिकाम्॥७ सत्पक्षपातिनो हंसा नूनं नालीकवल्लभाः॥ गुणं गृह्णीत मा दोषं नीरक्षीरविवेकिनः॥८॥

मार्त्तण्डेक्षणसंकटां घनघटां क्षोदैः क्षिपन्ती क्षणान्निघ्नानाप्यशनिं सहस्रनयनं निर्गर्वय-
न्ती स्वतः॥पुष्णन्ती हरिभावमात्मजमसावुच्छ्वासयन्ती जनाञ्जीयान्मारुतशक्तिराशुग-
तिदा संजीवयन्ती जगत् ॥ ९ ॥ अथ श्रीपुरुषोत्तमवदनरूपश्रीमदाचार्यप्रकटिते वेद-
गीतासूत्रश्रीभागवतादिसिद्धे ब्रह्मवादसिद्धान्ते दोषोद्भावाभिलाषिणा केन चिद्द्वेषविशे-
षकषायकलुषमतिना वेषमात्रयतिनाऽधुना निबद्धं सहस्राक्षनामकं ग्रन्थं चिखण्डयि-
षवो गोस्वामिश्रीविट्ठलनाथचरणाः प्रारिप्सितग्रन्थस्य निष्प्रत्यूहपरिपूर्तिप्रचारादिफ-
लकं शिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं श्रीपुरुषोत्तमध्यानलक्षणं मङ्गलमाचर-
न्ति ॥ **वृन्दारण्येत्यादिना** ॥ **महस्तेजः** पुरुषोत्तमरूपं **भावये** ध्यायामीति
संबन्धः ॥ "अथयदतःपरोदिवोज्योतिर्दीप्यते ॥ भारूपःसत्यसंकल्पः ॥ परंज्यो-
तिरुपसंपद्ययेनस्वरोचिषाविश्वंरोचितंरोचयाम्यहम्॥ ज्योतिश्चरणाभिधानात्" इत्या-
दिश्रुतिस्मृतिन्यायेभ्यः परस्य महोरूपत्वं स्पष्टम् ॥ एतेन "प्रकाशाश्रयवद्वाते-
जस्त्वात्" इत्यधिकरणसिद्धस्वधर्माभेदोऽपि दर्शितो ज्ञेयः ॥ मह्यतइति महः ॥
महपूजायां असुन् ॥ तेन सर्वोत्तमत्वं बोधितम् ॥ "पुरुषान्नपरंकिंचित्साकाष्ठासा-
परागतिः" इति कठश्रुतेः॥ "अक्षरात्परतःपरः" इति मुण्डकश्रुतेः ॥ मत्तःपरतरं
नान्यदित्यादिस्मृतिभ्यः ॥ "परमतः" इति न्यायाच्च ॥ भावना ध्यानम् ॥ नचाभा-
वयतःशान्तिरशान्तस्यकुतःसुखमिति परमानन्दलाभार्थं तस्याऽऽवश्यकत्वम् ॥
परमानन्दप्राप्तिरूपफलस्य कर्त्तृगामित्वविवक्षणादात्मनेपदम् ॥ कीदृशं मह इत्याका-
ङ्क्षायां लौकिकतेजस्तोव्यवच्छेत्तुमाहुः ॥ **वृन्देत्यादि** ॥ यत्रवृन्दावनंनामवनं-
कामदुघैर्द्रुमैः ॥ मनोरमनिकुञ्जाढ्यंसर्वर्त्तुसुखसंयुतमिति वक्ष्यमाणबृहद्वामनादिवा-
क्येभ्यो वृन्दावनसंबन्धिनो ये निकुञ्जास्तैः मञ्जुनि मनोरमे **भवने** स्वधामनि
तद्रूपे वा मञ्जुभवने **सदा देदीप्यमानं** अतिशयेन प्रकाशमानम् ॥ दीप्यतेर्यङि द्वित्वे
हलादिशेषे पूर्वखण्डगुणे च शानच्॥"नयत्रसूर्योभातिनचन्द्रतारकंनेमाविद्युतोभान्ति-
कुतोयमग्निःतमेवभान्तमनुभातिसर्वंतस्यभासासर्वमिदंविभाति" इतिमुण्डकश्रुतेः॥ कठ-
वल्लीषु तु नतत्रेति पाठः॥ स्वधामनि स्थितिस्तु "यत्रैतत्पदमवभातिभूरि॥योवेदनिहि-
तंगुहायांपरमेव्योमन् ॥ तद्विष्णोःपरमंपदंसदापश्यन्तिसूरयः ॥ सोऽध्वनःपारमाप्नो-
तितद्विष्णोःपरमंपदम् ॥ आविस्संनिहितंगुहाचरंनाममहत्पदमत्रैतत्समर्पितं" इत्या-
दि बह्वृचतैत्तिरीयकठमुण्डकादिश्रुतिभिः॥ यंप्राप्यननिवर्त्तन्तेतद्धामपरमंमम॥ नतद्भास-
यतेसूर्यइत्यादिस्मृतिभिः ॥ विष्णोर्द्धामपरंसाक्षात् ॥ स्वधामनिब्रह्मणिरंस्यतेनमइत्या-
दिपुराणवचनैश्च निर्विचिकित्सैव ॥ **सदेति** कालपरिच्छेदराहित्यम् ॥ द्वादशस्कन्ध-
चतुर्थाध्याये नतस्यकालावयवैःपरिणामादयोगुणाइत्युपक्रम्य तन्मूलभूतंपदमाम-
नन्तीतिस्मरणात् कालस्यापि ततएवोत्पत्तेश्च॥ इदं यथा तथा सहस्राक्षतृतीयश्लो-
कखण्डने प्रपञ्चयिष्यामः॥ योगास्त्रयोमयाप्रोक्तानृणांश्रेयोविधित्सया॥ ज्ञानंकर्मचभ-
क्तिश्चनोपायोन्योस्तिकर्हिचिदित्येकादशे भगवद्वाक्यान्मार्गत्रयस्य साधनतः फलत-

श्चोपयोगं दर्शयिष्यन्तः प्रथमं भक्तिमार्गस्य निष्कर्षमाहुः ॥ **भक्त्येति**॥ भक्त्यैव आस्वादयितुं शक्यो **लसन्** शोभमानो यो **रसः** "रसोवैसः॥आनन्दंब्रह्मण"इत्यादिषु श्राविता निरवध्यानन्दस्तस्यैकं अद्वितीयं **सदनं** स्थानम्॥ भक्त्यैकास्वाद्यत्वन्तु छान्दोग्यकैवल्यादिषु "ब्रह्मसंस्थोऽमृतत्वमेति॥ श्रद्धाभक्तिध्यानयोगादवेहि" इत्यादिश्रवणात् ,पुरुषःसपरःपार्थभक्त्यालभ्यस्त्वनन्यया नाहंवेदैरित्युपक्रम्य भक्त्यात्वनन्ययाशक्य इति स्मरणात् भक्त्याहमेकयाग्राह्यः, भक्त्यैवतुष्टिमभ्येतिविष्णुर्नान्येनकेनचित्, प्रीयतेऽमलयाभक्त्या हरिरन्यद्विडम्बनमित्यादिपुराणाच्च ॥ आनन्दस्यैकसदनत्वंतु तदानन्दांशतएवान्येषामानन्दवत्तायाः"तस्यैवानन्दस्यान्यानिभूतानिमात्रामुपजीवन्ति एषह्येवानन्दयाति" इत्यादावाम्नानात्॥ स्पष्टं चेदं चतुर्लक्षण्यां तद्धेतुव्यपदेशाच्चेत्यादौ ॥ कर्ममार्गनिष्कर्षमाहुः ॥ **सेव्यं सदा सज्जनैरिति**॥ सद्भावेसाधुभावेचेत्याद्युक्तजनैर्दैवसर्गोत्पन्नैरिति यावत् ॥ निरन्तरं सेवितुं योग्यं शक्यं च ॥ मामप्राप्यैवकौन्तेयेत्यासुराणामनधिकारस्मरणात्॥ एतेन "अतोबुधआभजेतभक्त्यैकयेशंगुरुदेवतात्मा; गृहशुश्रूषणंमह्यंदासवद्यदमाययासर्वलाभोपहरणं" इत्याद्येकादशवाक्यसिद्धा तनुजवित्तजसेवाऽवश्यकर्तव्यत्वेन दर्शिता ॥श्रौतस्मार्तकर्माण्यपि तत्तद्रूपस्य भगवत एव सेव्यमिति बुध्याऽवश्यकर्तव्यानीति बोधितम्॥ तेन कर्ममार्गनिष्कर्षो व्याख्यातः ॥ कर्माण्येकंतस्यदेवस्यसेवेत्युक्तेः ॥ ज्ञानमार्गस्य निष्कर्षमाहुः ॥ **वेदान्तेति** ॥ विद्यते ज्ञायते तत्त्वमेभिरिति वेदाः धर्मब्रह्मप्रतिपादकापौरुषेयवाक्यानि ॥ हलश्चेति घञ् ॥ तेषामन्तो निश्चयोऽत्रेति वेदान्ताः ॥ वेदान्तविज्ञानसुनिश्चितार्थाइति वेदार्थनिश्चयं प्रति वेदान्तविज्ञानस्य हेतुत्वश्रवणात् ॥ यद्वा वेदस्यान्ताः शिरोभागाः ॥ "ऋचांमूर्द्धानंयजुषामुत्तमाङ्गंसाम्नांशिरोऽथर्वणांमुण्डमुण्डम्". इति कौषीतकिश्रुतेः ॥ उपनिषद इत्यर्थः॥ तेषां **एकेन** केवलेन ॥ एकेमुख्यान्यकेवलाइत्यमरः ॥ **विचारेण** युक्तिभिः परिचिन्तनरूपमननेनैव वेदितुं शक्यम् ॥ शाकल्यब्राह्मणे "अगृह्योनहिगृह्यते" इत्यादिना प्रमाणान्तरप्रवृत्तिं प्रतिषिध्य "तंत्वौपनिषदंपुरुषंपृच्छामि" इत्युपनिषन्मात्रप्रवृत्तेः प्रतिप्रसवात् ॥ मननस्यावश्यकत्वं तु "तत्त्वेवभयंविदुषोऽमन्वानस्य" इत्यानन्दवल्लीश्रुतेः ॥ **अमलं** निर्दोषं प्राकृतधर्मानाश्रयमिति यावत् ॥ स्पष्टमिदं तृतीयस्य द्वितीयचरणे "प्रकृतैतावत्त्वंहिप्रतिषेधति ततोब्रवीतिचभूयः" इत्यत्र ॥ भक्तवश्यत्वमाहुः ॥ **गोपीजनानन्दकृदिति** ॥ गोपालतापनीवासुदेवाद्युपनिषत्प्रसिद्धा गोपनोपयोग्याधिदैविकशक्तयो गोपीजनाः ॥ एतच्च पञ्चरात्रेपि प्रपञ्चितम् ॥ तेषां परमभक्तत्वादानन्दकृत् ॥ नवमस्कन्धे अहंभक्तपराधीनइत्यादिसंदर्भात्॥ तनुजवित्तजसेवाया अवान्तरफलद्वयं विशेषणद्वयेनाहुः॥ **भक्तानामित्यादि** ॥ **भक्तानां** भजइत्येषवैधातुःसेवायांपरिकीर्त्तितः ॥ तस्मात्सेवाबुधैःप्रोक्ताभक्तिःसाधनभूयसीति गारुडवाक्यात् सेवाकर्तृणां भवं संसारं भनक्तीति भवभञ्जनस्तम् ॥ भञ्जोआमर्दने ॥ पवनस्यन्दनादिशब्दवद् बहुलमन्यत्रापीत्यौ-

णादिकसूत्रेण ( पा० २ सू. १८ ) युच् ॥ यत्पादपोतेनमहत्कृतेनकुर्वन्ति गोवत्सपदंभवाब्धिमित्याद्युक्तेर्युक्तमेतत् ॥ तथा भक्तानामात्मनि प्रपञ्चे चाद्वैतब्रह्मत्वस्फोरणेन **भयहरम्** ॥ तथाच पुरुषविधब्राह्मणे " सोऽबिभेत्तस्मादेकाकीबिभेतिसहाऽयमीक्षाञ्चक्रेयन्मदन्यन्नास्तिकस्मान्नुबिभेमीतिततएवाऽस्यभयंवीयायकस्माध्यभेष्यत्द्वितीयाद्वैभयंभवति" इति ॥ एकादशस्कन्धेपि भयंद्वितीयाभिनिवेशतःस्यादीशादपेतस्यविपर्ययोऽस्मृतिः ॥ तन्माययातोबुधआभजेतभक्त्यैकयेशंगुरुदेवतात्मेत्याद्यनुसन्धेयम् ॥ ऐतन ततःसंसारदुःखस्यनिवृत्तिर्ब्रह्मबोधनमिति श्रीमदाचार्योक्तं तनुजवित्तजसेवाया अवान्तरफलद्वयं संगृहीतं ज्ञेयम् ॥ अत्र विशेषस्तु मदीये वेदान्तचिन्तामणौ पञ्चदशप्रकरणे द्रष्टव्यः॥ तथा **भव्यं** कल्याणगुणपूर्णं अप्राकृतनिखिलधर्मरूपमिति यावत् ॥ "आहचतन्मात्रं" इतिब्रह्मसूत्रात् ॥ अत्र विस्तरस्तृतीयस्य द्वितीये पादे भाष्ये प्रकाशे चावधेयः ॥ किंच तत्तद्धर्मरूपेण तत्तत्फलरूपेण च भवतीति भव्यम् ॥ भव्यगेयेत्यादिना साधुः ॥ भक्तानां भयभञ्जनमित्यादिविशेषणत्रयेण भक्तिज्ञानकर्ममार्गाणां फलान्यपि द्योतितानि ॥ अत्र वेदान्तरूपं प्रमाणं तत्प्रमेयं ब्रह्मस्वरूपं भक्त्यादिरूपं साधनं निरवध्यानन्दास्वादलक्षणं फलं च संक्षेपेण दर्शितमिति व्यासदर्शनानुरोधी सर्वोपि शास्त्रार्थः संगृहीतः ॥ तेनैव मङ्गलस्य वस्तुनिर्देशात्मकत्वमपि फलितम् ॥ आशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमिति मङ्गलस्य त्रैविध्याङ्गीकारात् स्वस्य भक्तत्वात् भक्त्यास्वाद्येत्यादिना प्रत्यगाशीरपि ध्वनिता ॥ नमस्क्रियारूपं त्वग्रिमश्लोके सेत्स्यति ॥ शार्दूलविक्रीडितं वृत्तम् ॥ सूर्याश्वैर्मसजस्तताःसगुरवःशार्दूलविक्रीडितमिति वृत्तरत्नाकरे तल्लक्षणात् ॥ १ ॥

**नमामि मथुराधिपं सकलबल्लवीवल्लभं विचित्रवनमालया लसितपीतपट्टाम्बरम् ॥ किरीटमणिमेखलाकटककुण्डलैर्मण्डितं समुल्लसितराधया नवनिकुञ्जतल्पे स्थितम् ॥ २ ॥**

## टीका

एवं वेदादिप्रमितं पुरुषोत्तमस्वरूपं स्मृत्वा विस्पष्टस्वेष्टदेवतानमनलक्षणं मङ्गलमाचरन्ति ॥ **नमामिमथुराधिपमिति**॥ भगवति जीवैर्नमनस्यैव कर्तुं शक्यत्वान्नमामीत्यारम्भएवोक्तम् ॥ "नमस्कृत्यहिवसीयाꣳसमुपचरन्ति" इति तैत्तिरीयश्रुतेः ॥ क्रिमासनंतेगरुडासनायेत्यादौ परितोषणक्षमस्य साधनान्तरस्याशक्यत्वस्मरणाच्च ॥ अतएव श्रीमदाचार्याः सर्वत्र नमनवाचकं पदमादावेव प्रयुञ्जते ॥ नमनं च प्रह्वीभावः स च मत्तस्त्वमुत्कृष्टस्त्वत्तोहमपकृष्ट इत्यनुसंधानपूर्वकः कायादिव्यापारः ॥ विस्तरस्तु नमोभगवतेतस्मा इत्यत्रावरणभङ्गादाववधेयः ॥ **मथुराधिपं** श्रीमथुरेशाख्यं श्रीमदाचार्यसेव्यं श्यामचतुर्भुजाकृति स्वयमभिव्यक्तं भगवत्स्वरूपम् ॥ कीदृशं तम् ॥

**सकलबल्लवीवल्लभं** सकलाः सर्वाः कलाभिश्चातुर्यैः सहिता वा या बल्लव्यो गोप्यः॥ गोपेगोपालगोसंख्यगोधुगाभीरबल्लवा इत्यमरः॥ पुंयोगलक्षणो ङीष् ॥ ता वल्लभा यस्य तम् ॥ नायंश्रियोङ्गउनितान्तरतेःप्रसाद इत्यादिवाक्येभ्यः॥तासां वा वल्लभम्॥इदं च गोपालविद्यायां तद्विवरणरूपपञ्चरात्रभागादिषु च प्रसिद्धम्॥अथवा सकलेत्यत्र कलया भगवद्रूपया लक्ष्म्या सहिताः सकला रमावेशयुक्ता इति यावत् ॥ अन्यथा भगवत्संबन्धायोगात् ॥ इदं च रेमेरमेशोव्रजसुंदरीभिरित्यत्र सुबोधिन्यां स्पष्टम् ॥ लक्ष्म्याः कलात्वं तु कूर्मपुराणे प्रथमाध्याये इन्द्रद्युम्नेतिहासे तस्यैवंवर्त्तमानस्यकदाचित्परमाकला ॥ स्वरूपंदर्शयामासदिव्यंविष्णुसमुद्भवम् ॥ दृष्ट्वाप्रणम्यशिरसाविष्णोर्भगवतःप्रभामित्यादिना एवमुक्ताथविप्रेणदेवीकमलवासिनी इत्यन्तेन दर्शितम् ॥ मध्ये नमेनारायणाद्भेदोविद्यतेहिविचारतः ॥ तन्मयाहंपरंब्रह्मसविष्णुःपरमेश्वर इति तस्याभगवदभेदोऽप्युक्तः ॥ अतो बृहद्वामनपुराणादौ प्रसिद्धं वरदानं सार्थकयितुं स्वाभिन्नपरमलक्ष्म्यावेशाद्वह्न्याविष्टदारुन्यायेन स्वात्मकत्वं तासां संपाद्य ताभिः समं रमणं तद्वल्लभत्वं च युक्तमेव ॥ **विचित्रेति** ॥ विशेषेण चित्रा स्वमायांवनमालाख्यांनानागुणमर्यादधदिति द्वादशस्कन्धवाक्याददद्भुता विविधवर्णयुक्ता वा ॥ चित्राखुपर्णीगोडुम्बासुभद्रादन्तिकासु च ॥ मायायांसर्पनक्षत्रेनदीभेदेषुचास्त्रियाम् ॥ तिलकालेख्ययोःक्लीबंकर्बुराद्भुतयोरपि ॥ तद्युक्तयोस्त्वन्यलिंगमिति मेदिनी ॥ यद्वा चितं बुद्धिं त्रायत इति चित्रा ॥ प्रेक्षोपलब्धिश्चित्संविदित्यमरः ॥ विशेषेण चित्रा बुद्धित्रात्री ॥ श्रीसुबोधिन्यां बर्हापीडमित्यादिश्लोकविवरणे वनमालायाः कीर्त्तिमयत्वनिरूपणात् ॥ अथवा विभिः पक्षिभिर्भ्रमरैश्चित्रा मधुव्रतव्रातविघुष्टयास्वयाविराजितःश्रीवनमालयाहरिरित्यादिवर्णनात् तादृशी या वनमाला तया लसितं पीतपट्टरूपं अम्बरं यस्य तम् ॥ **किरीटेत्यादि** ॥ इदं कौस्तुभादेरुपलक्षणम् ॥ एतेन तमद्भुतंबालकमम्बुजेक्षणमित्यादिश्लोकद्वयेन निरूपितं स्वरूपमत्रापि प्रदर्शितम् ॥ मथुराधिपेति नाम्नैव चतुर्भुजत्वसायुधत्वादेर्लाभात् ॥ सान्द्रपयोदसौभगत्वं ध्वनयन्ति ॥ **समुल्लसितेति** ॥ सम्यगुल्लसिता ॥ यद्वा मुदा सहिता समुत् सा चासौ **लसिता** शोभिता चेति ॥ शीतोष्णं स्निग्धोष्णमित्यादिवदुत्तरपदार्थस्य विशेष्यत्वविवक्षया समासः ॥ सा चासौ राधा चेति तया ॥ सहार्थकपदयोगाभावेऽपि वृद्धोयूनेति ज्ञापकात् सहार्थविवक्षया तृतीया ॥ नव्यास्तु सहयुक्तेप्रधानइत्यत्र युक्तपदादेवायमर्थो लभ्यतइत्याहुः ॥ दृश्यन्ते चैवंविधा भोजराजादीनां प्रयोगाः ॥ रामेविदेहसुतयातरुमूलसंज्ञमंतःपुरंविशतिलक्ष्मणसौविदल्लमित्यादयः ॥ तेनाप्रयुक्तत्वशङ्काप्यपास्ता ॥ अथच राधा विद्युत् ॥ राधाविद्युद्विशाखयोः विष्णुक्रान्तामलक्योश्चगोपीवेधविशेषयोरिति हैमः ॥ श्लेषमहिम्ना संमुल्लसितविद्युत्साहित्यबोधनेन सम्यङ् मेघलक्ष्मीर्ध्वनिता भवति ॥ **नवेति** ॥ नवं तत्कालकल्पितत्वादम्लानं निकुञ्जसंबन्धि अर्थात् पुष्पादिमयं यत् तल्पं शय-

नीयं तत्र स्थितम्॥ यद्वा नवनं स्तवनम्॥ णुस्तुतौ॥ नवनमस्यास्तीति **नवनी** पक्ष्यादिकर्तृकभगवत्स्तुतिविशिष्टः कुञ्जः॥ श्टण्वन्तिमीलितदृशोविगताऽन्यवाच इत्यत्रान्यपदेन भगवदुपयोगिवागत्यागबोधनात्॥ अथवा नवनी स्वयं स्तुतिविषयः कुञ्जः॥ तलवकारब्राह्मणे "तद्धतद्वनंनामतद्वनमित्युपासितव्यं" इति भगवत एव लीलावनत्वेनोपासनश्रवणात्॥ यद्वा **नवनि** स्तुतिविषयः यत्कुञ्जतल्पं तत्र॥ भगवत्पर्यङ्कस्य कौषीतकिब्राह्मणे अमितौजस्त्वाम्नानात्॥ तथाहि॥ तत्र चित्रगाङ्ग्यायन्युपाख्याने (अ०१ खण्ड ३) "अपराजितमायतनमिन्द्रप्रजापती द्वारगोपौविभुप्रमितंविचक्षणाऽऽसन्द्यऽमितौजाःपर्यङ्कः" इति॥ तथा (अ०१खण्ड५) "सआगच्छत्यमितौजसंपर्यङ्कंसप्राणस्तस्यभूतंचभविष्यच्चपूर्वौपादौश्रीश्चेराचापरौ" इत्यादि श्रूयते॥ अत्र नमनोक्त्या प्राधान्येन कायिकः प्रह्वीभावः॥ पूर्वश्लोके भावनोक्त्या मानसः प्र०॥ वाचिकस्तु श्लोकद्वयपठनादेव सिद्धः॥ तेन मनःस्मरेतासुपतेर्गुणानांगृणीतवाक्कर्मकरोतुकाय इत्यादि षष्ठस्कन्धादिवाक्यसंमतः कायादित्रयस्य भगवदुपयोगोत्र दर्शितः॥ पृथ्वी वृत्तम्॥ जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरिति तल्लक्षणात्॥ २॥

**नत्वा श्रीवल्लभाधीशान् प्रभून् श्रीविठ्ठलेश्वरान्॥ तद्वचःखण्डनाभासं खण्डयामि यथाक्रमम्॥ ३॥**

## टीका

एवं भगवन्तं नत्वा "यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ॥ तस्यैतेकथिताह्यर्थाः प्रकाशन्तेमहात्मनः॥ आचार्यवान्पुरुषोवेद" इत्यादिश्वेताश्वतरच्छान्दोग्यादिश्रुतिभिराचार्यभक्तेरावश्यकत्वाच्छ्रीमदाचार्यश्रीविठ्ठलाचार्यनमनलक्षणं मङ्गलमाचरन्तः स्वचिकीर्षितं प्रतिजानते॥ **नत्वेति**॥ नमनार्थकपदस्यारम्भ एव प्रयोगेभिसंधिस्तूक्त एव॥ श्रीवल्लभाधीशान्नत्वा तथा **प्रभून्** सर्वविधफलदाने प्रभवतः॥ विदा ज्ञानेन ठान् शून्यान् लान्त्यनुगृह्णन्तीति विठ्ठलास्ते च ते ईश्वराः सर्वसमर्थाश्च तान्नत्वा॥ **तद्वचइति**॥ **तेषां** निर्दिष्टपूर्वाणां श्रीमदाचार्याणां श्रीविठ्ठलेश्वराणां च वचसां खण्डनस्य आभासम्॥ ईश्वरवाचां वास्तविकखण्डनस्यासंभवादाभासपदम्॥ **यथाक्रमम्** क्रममनतिक्रम्य खण्डयामि॥ पूर्वं श्रीमदाचार्यवचसां खण्डनाभासस्य खण्डनमनन्तरं श्रीविठ्ठलाचार्यवचसां तस्य तदिति क्रमः॥ यद्यपि प्रथमभागे समर्थ्यमानः शुद्धाद्वैतमार्त्तण्डो न श्रीमदाचार्यकृतस्तथापि तत्प्रतिपाद्यः शुद्धाद्वैतपदार्थः श्रीमदाचार्योक्त एव समर्थ्यते॥ तत्र तत्र दूषिता अणुभाष्यभागा अपि समर्थ्यन्त एवेति श्रीमदाचार्यवचसां मण्डनमविवादम्॥ द्वितीयभागे तु स्पष्टमेव श्रीविठ्ठलेश्वरचरणविरचितं विद्वन्मण्डनं मण्ड्यते॥यद्वा **यथाक्रमम्** येन क्र-

मेण खण्डनाभासः प्रवृत्तस्तेनैव क्रमेण खण्डयामि ॥ एतेन साकल्येन चिखण्डयिषा बोध्यते ॥ श्रीमदाचार्यादिवचस्सु निर्दूषणतायाः स्वयं सम्यग्ज्ञातत्वेपि परेषां तत्र व्यामोहवारणार्थं ग्रन्थारम्भ इति क्रियाफलस्य परगामित्वात्परस्मैपदम् ॥ एतेन प्रयोजनमदर्शि ॥ तद्वचस्समर्थनरूपो विषयोप्यवाबोधि॥ तेनैव तज्जिज्ञासुरधिकारी प्रतिपाद्यप्रतिपादकभावस्संबन्धश्चास्फोरीत्यनुबन्धचतुष्टयं स्पष्टम् ॥ ३ ॥

**शुद्धाद्वैतविभाकरस्य किरणैः प्रोद्बोधितान्सज्जनान् विद्वन्मण्डनमण्डितान्बुधवरानालोक्य कोऽप्यासुरः ॥ व्याततेनेऽभ्रतमःपविं च युगपत्स्रष्टुं सहस्रेक्षणं शक्तस्तद्वितयस्य नाशनविधौ प्राभञ्जनस्तन्यते ॥ ४ ॥**

## टीका .

उत्तरार्द्धोक्तार्थं स्वयं स्पष्ट [illegible]
मयूरव्यंसकादित्वात्समासः। [illegible]
शुद्धाद्वैतमार्त्तण्डाख्यो ग्रन्थस्तस्य किरणैः [illegible] प्रोद्बोधितान् सर्वांशतो निरस्तमोहनिद्राकान् **सज्जनान्** साधुभावप्रशस्तकर्मयज्ञतपोदानस्थित्यादिसंपन्नान् ब्रह्मास्तित्वज्ञानादास्तिकान्॥ सद्भावेसाधुभावेचेत्यादिगीतोक्त्या "अस्ति ब्रह्मेतिचेद्वेद सन्तमेनंततोविदुरिति " इति ब्रह्मवल्लीश्रुत्यौ चेदं लभ्यते ॥ तथा ॥ **विद्वदिति** ॥ विदुषामुचितेन मण्डनेन वस्त्राभरणादिना अथच विद्वन्मण्डनाख्येन ग्रन्थविशेषेण मण्डितान् ॥ मनुष्योयंप्रातरुत्थायप्रथमंशरीरकार्यैष्वाह्निकंततआभरणादिना मण्डनं च करोतीति प्रसिद्धम् ॥ दशमस्कन्धोक्तभगवदाह्निकेप्येष क्रमो दृश्यते ॥ तथात्रापि प्रथमं मार्त्तण्डाभ्यासेऽज्ञाननिवृत्त्या भगवत्सेवादौ प्रवृत्तिस्ततो बुद्धिदार्ढ्यै विद्वन्मण्डनव्यासंग इति क्रमिकाण्येव विशेषणानि ॥ **बुधवरान्** पण्डितश्रेष्ठान् दैवसर्गोत्पन्नान् ॥ बुधवृद्धौपण्डितेपीत्यमरः ॥ अथच देववरान् ज्ञातृचान्द्रिसुराबुधाइति क्षीरस्वामी ॥ प्रयुञ्जते चैनमुभयार्थं श्रीहर्षादयः ॥ तथाद्रियन्ते नबुधाःसुधामपीति ॥ एतेन बहुषु कोशेषु व्युपसर्गरहितबुधशब्दस्य देवपर्यायस्यानुलम्भेप्यदोषः ॥ **आलोक्य** दृष्ट्वा **कोऽपि** अनिर्दिष्टनामकः ॥ भगवदवतारमहानुभावनिन्दकत्वात्तस्य साक्षान्नाम्नो न निर्देशः ॥ यद्वा कोपीति दीर्घान्तच्छेदः ॥ पूर्वोक्तान्दृष्ट्वा कोपी क्रोधवान् **आसुरः** तत्सर्गोत्पन्नः अथच दैत्यः **अभ्रतमः** मार्त्तण्डस्याच्छादनार्थं मेघान्धकारविस्तारं विद्वन्मण्डनापकारार्थं **पविं** वज्रं च **युगपत्** एककालावच्छेदेन स्रष्टुं **सहस्रेक्षणं** एतन्नामकं ग्रन्थं अथच इन्द्रं **व्याततेने** ॥ स्वार्थार्थं तस्य तथाकरणमिति बोधनार्थमात्मनेपदम् ॥ असुरा हि देवाभ्युदयासहिष्णुतया युद्धादौ मायया मेघविस्तारादिकं प्रदर्शयन्तीति पुराणेष्वपाणिपि-

हितम् ॥ व्यातेनइत्युक्त्या तत्कल्पितो मायिकोसौ सहस्राक्षः ॥ वास्तवे देवेन्द्रे मार्त्तण्डादिविरोधबुधविरोधभगवद्विरोधानामनुपपत्तेः ॥ अतस्तत्खण्डनमुचितमेवेति ज्ञाप्यते ॥ एतदेव प्रतिजानन्ति ॥ **शक्र** इत्यादिना ॥ **तद्वितयस्य** सहस्राक्षभागद्वयस्य अथच वास्तवाभ्रान्धकारवज्रयोर्द्वयस्य नाशनविधौ ॥ देवदत्तस्यगुरुकुलमित्यादिवन्नित्यसापेक्षत्वेपि गमकत्वात्समासः ॥ युगपदित्यत्राप्यनुवर्तते ॥ एकहेलया नाशनविधाने **प्राभञ्जनः** प्रबलपवनः ॥ वस्तुतस्त्वेतन्नामको ग्रन्थस्तन्यते ॥ प्रकर्षेण भनक्तीति प्रभञ्जनो वायुः ॥ बहुलमन्यत्रापीति युच् ॥ नभस्वद्वातपवनपवमानप्रभञ्जनाइत्यमरः ॥ प्रकर्षतो भञ्जकत्वात्प्रबलत्वमर्थसिद्धम् ॥ प्रभञ्जन एव प्राभञ्जनः ॥ प्रज्ञादेराकृतिगणत्वात्स्वार्थिकोऽण् ॥ ग्रन्थपक्षे प्रकर्षेण भञ्जनं खण्डनं तत्संबन्ध्ययं प्राभञ्जनः॥ तस्येदमित्यण् ॥ यद्वा प्रकर्षेणासमन्तात् भनक्ति खण्डयतीति तथा॥ पूर्वोक्तो युच् ॥ कृत्यल्युटोबहुलमिति ल्युट् वा ॥ अथवा प्राभज्यते वादिपक्षोऽनेनेति तथा ॥ करणाधिकरणयोश्चेति ल्युट् ॥ खण्डने प्रमाणयुक्तिपुरस्सरत्वं प्रशब्दार्थः॥ परोक्तदूषणानवशेष आङर्थः ॥ किंचैवमैतिहासिका वदन्ति ॥ भगवत्कार्य्यसाधकं संसारसमानापारपारावारप्लवनप्रभुं मूर्त्तमिव भगवद्भावं हनूमन्तं मार्त्तण्डद्वेष्यसुरस्य वचनात्सहस्राक्षो वज्रेण हनुदेशे ताडयामास ॥ ततो मूर्छितं पतन्तं तं वहमानः पवमानः पुरन्दरमानभङ्गाय गिरिवर्य्यस्य गुहां न्यविशत ॥ ततो निरुच्छ्वासं विश्वमनुग्राहको वेदगर्भः स्ववाचा सहस्राक्षस्य दोषं प्रकाश्य जगत्प्राणं च प्रणुत्य प्रभञ्जनप्रचारार्थं स्वयं भगवद्भक्ताऽपराधिनं वृत्रहणं मार्त्तण्डप्रभृतिदेववर्गं चादाय तामेव क्षमाधरगुहां प्रविश्य समीरणं प्रसादयंस्तदुत्संगसंगतं सर्वासुरगर्वापहं भगवद्भक्तिमयमूर्त्तिं हनूमन्तं पुनरुदजीजिवत् ॥ अथ वेदगर्भप्रसादितप्रभञ्जनप्रचारात् सर्वेषां सुखं सहस्राक्षस्य मदभङ्गश्चाभूदिति ॥ तदेतत्प्रायेण सर्वमेवात्राऽपि संगच्छतइति युक्ततमं प्राभञ्जन इत्यभिधानम् ॥ एतद्वाल्मीकीयरामायणस्योत्तरकाण्डे पञ्चत्रिंशषट्त्रिंशसर्गयोः किष्किन्धाकाण्डे षट्षष्टितमसर्गे च प्रसिद्धम् ॥ तत्र हि किष्किन्धाकाण्डे ( सर्ग ६६) हनूमन्तं प्रति जाम्बवान् ( श्लोक-२५-२६ ) ततस्त्वांनिहतंदृष्ट्वावायुर्गन्धवहस्स्वयम् ॥ त्रैलोक्यंभृशसंक्रुद्धोनववौवै प्रभञ्जनः ॥ संभ्रान्ताश्चसुराःसर्वेत्रैलोक्येक्षुभितेसति ॥ प्रसादयन्तिसंक्रुद्धंमारुतंभुवनेश्वराइतिप्रभञ्जनशब्दोक्तिपूर्वकमाह ॥ उत्तरकाण्डेच ( सर्ग ३५ श्लो ५९-६० ६१ ) पुत्रस्तस्यामरेशेनइन्द्रेणाद्यनिपातितः ॥ राहोर्वचनमास्थायततःसकुपितोऽनिलः ॥ अशरीरःशरीरेषुवायुश्चरतिपालयन् ॥ शरीरंहिविनावायुंसमतांयातिदारुभिः ॥ वायुःप्राणःसुखंवायुर्वायुःसर्वमिदंजगत् वायुनासंपरित्यक्तंनसुखंविन्दतेजगत् ॥ अद्यैवचपरित्यक्तंवायुनाजगदायुषा ॥ अद्यैवतेनिरुच्छ्वासाःकाष्ठकुड्योपमाःस्थिताइति प्रजापतिना वायुस्तुतिर्दर्शिता ॥ तैत्तिरीयोपनिषच्छान्तिपाठादिषु श्रुतिभागेष्वपि "नमोब्रह्मणेनमस्तेवायो ॥ त्वमेवप्रत्यक्षंब्रह्मासि ॥ त्वमेवप्रत्यक्षंब्रह्मवदिष्यामि"

इत्यादिरूपा तत्स्तुतिर्दृश्यत एव ॥ ग्रन्थेपि तादृशोत्कर्षबोधनाय तथानामधेयम्॥ विस्तारार्थंकतनोतिना स्वोत्प्रेक्षितं किमपि नोच्यते किन्तु प्राक्तनोक्तमेव विशदीक्रियत इति प्रत्याय्यते ॥ वायुरपि प्रसरन्नेव मेघाद्यपहारे प्रभवति ॥ एतावता पूर्वश्लोकोत्तरार्द्धोदितं विशदितम् ॥ ननु सहस्राक्षकर्तुरासुरत्वं कथमुच्यतइति चेत् जगतोऽसत्यत्वादिकथनेन महानुभावाऽत्यन्तनिन्दाद्युग्रकर्मारम्भेण दम्भमानमदान्वितत्वेन संन्यासित्वेऽपि बहुराजानुसरणानुमीयमानबह्वाशापाशबन्धेन स्वाश्रमविरुद्धच्छत्रचामरसुवर्णाद्यर्थसञ्चयोपार्जनेन अहंकारबलदर्पादिवशात्तुलसीकाष्ठमालात्रोटनादौ प्रद्वेषेऽभ्यसूयने प्रवृत्त्या च तन्निश्चयादिति जानीहि ॥ एतेषां धर्माणामासुरलक्षणत्वन्तु गीताषोडशाऽध्याये ॥ "आसुरंपार्थमेशृणु" इत्युपक्रम्य "प्रद्विषन्तोऽभ्यसूयका" इत्यन्तं भगवतैव प्रदर्शितमित्यलं पल्लवितेन॥उक्तलक्षणकं शार्दूलविक्रीडितं वृत्तम्॥४

**श्रीवल्लभकुलोत्पन्नानामुदयं दृष्ट्वेर्ष्यया [illegible] केनचित् [illegible] तिमन्येन कृतस्य शुद्धाद्वैतमार्त्तण्डविद्व[illegible] स्यादौ तदनुयायिना केनचित् कृताया प्रस्तावनायामासात्कश्चिदित्यारभ्य प्रार्थये परमात्मानमित्यन्तेन तदुत्पत्तिस्तस्य संन्यासाश्रमपरिग्रहप्रकारो ग्रन्थकरणे हेतुस्तत्प्रशंसा च प्रतिपादिताः ॥**

## टीका

अथ सहस्राक्षं खण्डयिष्यन्तो मुद्रिततत्पुस्तके ततः पूर्वनिबद्धां सहस्राक्षकृत्पक्षरक्षणप्रवणेन केनचित्प्रणीतां प्रस्तावनां बाध्यसामान्यचिन्तया प्रथमस्य त्यागे मानाभावात् प्रथमं दूषयितुं तदभिप्रायं तावदुपक्षिपन्ति ॥ **श्रीवल्लभकुलेत्यादिना प्रतिपादिता** इत्यन्तेन॥ ईर्ष्या अक्षमा ॥ अक्षान्तिरीर्ष्येत्यमरः ॥ हेतुत्वं तृतीयार्थः॥ केनचिदिति नाम्नः स्वयमनिर्देशस्याशय उक्तः॥**यतिमन्येन** आत्मानं यतिं मन्यतइति तथा ॥ आत्ममाने खश्चेति खश्॥ शित्वेन सार्वधातुकत्वात् श्यन्॥ अरुर्द्विषदजन्तस्येति मुम्॥ नतु वस्तुतः परिव्राजको वक्ष्यमाणरीत्या तद्धर्मविरहात्॥ वेणुभिर्नभवेद्यतिरिति स्मरणात्॥ **तदनुयायिनेति** ॥ द्वारकां निकषा विषयविशेषन्निवासिना केनचिद्द्विजन्मना क्षत्रियमथुरादासस्य नाम्ना प्रस्तावना निरमायीति किंवदन्त्यावगम्यते ॥

स्वसिद्धान्ते शिवद्वेषाभावमादित एव स्फुटयितुं श्रीमदुमारमणेत्याद्यंशं विहाय दूष्य-भागमेव गृह्णन्ति ॥ **आसीदित्यादि** ॥ अत्र प्रेक्षावतामनायासेनोभयग्रन्थयोस्ता-रतम्यावगमाय परप्रस्तावना सप्तसहस्राक्षभागश्चाक्षरशो मया पृथगेवानूद्यते ॥ तदु-त्पत्तिरित्यादितच्छब्दचतुष्टयेनोक्तचरो यतिमन्यः परामृश्यते ॥ उत्पत्त्यादयश्चत्वारः प्रस्तावनाया मुख्यविषयाः ॥ ग्रन्थकरणे हेतोस्तुरीयविषयत्वेऽपि तस्येति पदस्यो-भयत्रान्वयार्थं मध्ये निर्देशः ॥ अन्तेऽपि प्रशंसायाः सत्वाच्च ॥

तत्रच प्रायेणान्योन्यं विरुद्धानि वाक्यान्यर्थान्तरप्रतिपादका-नीव लक्ष्यन्ते ॥ तथाहि॥ कात्यायनीकान्तकृपापात्रेऽनपत्यता-प्रतप्तचेतस्त्वं विरुद्धम्॥ हेतुं विनैव परदुःखप्रहाणेच्छा कृपा॥सा चेत्समर्थस्येश्वरस्य यद्विषयिका जाता तत्र दुःखं सर्वथैव न सं-भवति॥अथ प्रारब्धकर्म्मणो ज्ञानेनाप्यविनाश्यत्वेन प्रबलत्वा-त्तज्जन्यदुःखवारणे कात्यायनीकान्तस्याप्यसामर्थ्यम् दयालो-रसमर्थस्य दुःखायैव दयालुतेत्युच्यते चेद्वीदृशंदुःखं कर्म्मन्दि-ना निवारितमित्यपि विरुद्धम् ॥ यद्यप्य पूर्वे कस्मिंश्चिद्भिक्षौ तादृशसामर्थ्यं संभावितं तथापि कुरुक्षेत्रनिवासिनि शिष्या भिलाषिणि स्वरूपानन्दाभिधे लोकैर्दृष्टगुणेऽसंभावितमेव ॥

टीका

दूषयन्ति ॥ **तत्र चेत्यादिना** ॥ सहस्राक्षप्रस्तावनायामासीदित्यादिना सुधांशव इत्यन्तेनोक्तं शिवकृपापात्रपुत्रत्वयत्यनुग्रहजन्यत्वलक्षणमुत्पत्तावुत्कर्षं परिहरन्ति ॥ **कात्यायनीत्यारभ्य असंभावितमेवेत्यन्तम्** ॥ **हेतुमित्यादि** ॥ हेतुः फलं

---

सहस्राक्ष

*श्रीमदुमारमणचरणकोकनदेषु विलसन्तु सर्वदा चेतश्चञ्चरीकास्सज्जनानामनवरतानन्द भरपूर्णाः॥ आसीत्कश्चिदौत्तराहोऽनेकनगनगरारामरमणीयस्य निरुपमकमलकुलसंकुलसरस्स हस्रस्य कविविद्वन्नमस्कारिगणकमनीयस्य कश्मीरमण्डलस्य निकटनिवासी कात्यायनीकान्त कृपापात्रं सारस्वतो विप्रः ॥ तेन चानपत्यताप्रतप्तचेतसा कस्यचित्कर्मन्दिनोनुग्रहेण चिराद्व ष्टाः पुत्रमुखसुधांशवः ॥ तन्मध्यात्प्राथमिकस्तनूजन्मा स्वप्रतिज्ञापालनपरेण कुरुक्षेत्रारण्य पुण्यावनिनिवासशालिने तस्मा एव यतिवर्याय समर्पितः ॥

कारणं च ॥ लक्षणहेत्वोः क्रियायाइत्यादौ तथा व्याख्यानात् ॥ निरुपाधिपरदुः-खप्रहाणेच्छात्वं कृपात्वम् ॥ निरुपाधित्वं च हेत्वनधिकरणवृत्तित्वम् ॥ तदेतद्धृदिकृत्योक्तं हेतुं विनैवेति ॥ स्वेष्टानिष्टप्रवृत्तिनिवृत्तीच्छायाः प्राणिमात्रे सत्वात्तत्रातिप्रसङ्गवारणाय परपदम् ॥ प्रहाणस्य चेष्टात्वात् दयया दुःखं ह्रापयतीत्यादिप्रयोगाच्च तत्रातिव्याप्तिवारणायेच्छापदम् ॥ **समर्थस्येश्वरस्येति** ॥ सिद्धान्ते शिवस्येश्वरकोटावेव निवेशाद्वादिविशेषवत्तत्र जीवत्वस्यानङ्गीकारादीश्वरपदम् ॥ एतच्च प्रहस्तवादादिषु प्रपञ्चितम् ॥ तथा च यद्यसौ शिवकृपापात्रं स्यादनपत्यत्वदुःखेन नप्रतप्येतेत्यनुकूलतर्केण तस्मिंस्तत्कृपाविरहोनिश्चीयते ॥ ईश्वरस्य तद्दुःखप्रहाणेच्छासत्वेऽपि तदनिवृत्तावनीश्वरत्वापत्तेः सत्यसंकल्पादिश्रुतिबाधापत्तेश्च ॥ मतान्तरेण समाधिं गृह्णन्ति ॥ **अथेति** ॥ अथशब्दः प्रश्नार्थः ॥ मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोअथेत्यमरोक्तेः ॥ **ज्ञानेनापीति** ॥ "क्षीयन्तेचास्यकर्म्माणि तस्मिन्दृष्टेपरावरे" इत्यादि कठादिश्रुतिषु ज्ञानाग्निःसर्वकर्म्माणि भस्मसात्कुरुतेतथेत्यादिस्मृतिषु च सर्वकर्म्मनाशकतया प्रसिद्धेनापि ॥ **अविनाश्यत्वेनेति** ॥ शारीरकभाष्ये चतुर्थस्य प्रथमपादे "अनारब्धकार्येएवतुपूर्वेतदवधेः" इत्यधिकरणे प्रारब्धतया परिणतपापपुण्ययोर्ज्ञानेनाविनाश्यतायाः "भोगेनत्वितरेक्षपयित्वासंपद्यते" इत्यधिकरणे तयोर्भोगैकनाश्यतायाश्चाङ्गीकारात्तथेत्यर्थः ॥ अतो युक्तं प्रवक्तृत्वम् ॥ **तज्जन्येत्यादि** ॥ तस्य प्रारब्धजन्यमनपत्यतादुःखमीश्वरेणापि कृपासत्वेऽपि नोच्छेत्तुं शक्यमिति निगर्वः ॥ **दयालोरिति** ॥ अयं माधवभट्टोक्तेरनुवादः ॥ एतेन यदिस्यादीश्वरः कश्चित्फलरूप्यन्यकर्मणाम् ॥ कर्त्तारंभजतेसोऽपिनह्यकर्त्तुः प्रभुर्हिस इत्यादौ दर्शितोऽनीश्वरवाद ईश्वरस्यानत्यन्तप्रयोजनकत्वं वा प्रसज्ज्यतइति पूर्वपक्षिणः स्वपादे कुठारः ॥ परिहरन्ति ॥ **ईदृशमित्यादि** ॥ ईदृशं प्रारब्धजन्यम् ॥ **कर्म्मन्दिना** संन्यासिना ॥ **विरुद्धं** उपन्यस्तचराधिकरणादिविरुद्धम् ॥ ईश्वरेणापि तदपरोक्षज्ञानेनाप्यविनाश्ये आधुनिकसंन्यासिविशेषनाश्यताया अशक्यवचनत्वात्प्रारब्धे मनुष्यविशेषनाश्यत्वबोधकमानानुपलम्भाच्चेति भावः ॥ किंचैवं कल्पयताऽऽधुनिकपुरुषविशेषादपि शिवस्यापकर्षो वर्णितो भवतीति तस्यैव शिवद्वेषिताऽऽपद्यते ॥ न च शिव एव मस्करिणा दापितवानिति वाच्यम् ॥ स्वयमदाने चिरमुपेक्षणे च हेत्वभावात् ॥ नच दुष्टप्रारब्धस्य भोगेन क्षयपर्य्यन्तमुपेक्ष्य शुभप्रारब्धोदये दत्तवानिति वाच्यम् ॥ तथासति प्रारब्धेनैव तत्सिद्धौ लाघवेन शिवकर्म्मन्दिनोरुभयोरप्यप्रयोजकत्वापातात् ॥ कृपान्तरापि तल्लाभसंभवाच्च ॥ एवं तत्कल्पनायास्तन्मतविरुद्धत्वं दर्शयित्वा भक्तविशेषाणां प्रारब्धानधीनत्वमते कथंचित्समाधिमाशङ्क्य पाक्षिकोऽपि दोषः परिहरणीय इत्याशयेनाहुः ॥ **यद्यपीति** ॥ तेनैतद्वृत्तं कपोलकल्पितमेवेति द्योतितम् ॥

किंचायं संन्यासाश्रमपरिग्रहप्रकारोऽपि वर्णाश्रमधर्म्मप्रणेतृभिर्मनुयाज्ञवल्क्यादिभिरदर्शितोऽपूर्व एवतत्प्रदर्शितप्रकारविरुद्धश्च ॥ तथाचोक्तंयाज्ञवल्क्येन ॥ वनाद्गृहाद्वाकृत्वेष्टिंसार्ववेदसदक्षिणाम् ॥ प्राजापत्यांतदन्तेतानग्नीनारोप्यचात्मनि ॥ १ ॥ अधीतवेदोजपकृत्पुत्रवानन्नदोऽग्निमान् ॥ शक्त्याचयज्ञकृन्मोक्षेमनःकुर्यात्तुनान्यथा ॥ २ ॥ मिताक्षरायां च तद्व्याख्याने ॥ " यावताकालेनतीव्रतपश्शोषितवपुषोविषयकषायपरिपाको भवति पुनश्च मदोद्भवाशङ्का नोद्भाव्यते तावत्कालं वनवासं कृत्वा तत्समनन्तरं मोक्षे मनः कुर्यात् ॥ वनगृहशब्दाभ्यां तत्संबन्ध्याश्रमौ लक्ष्येते मोक्षशब्देन च मोक्षैकफलकश्चतुर्थाश्रमः" इत्युक्तम् ॥

## टीका

अथ प्रस्तावनायां तन्मध्यादित्यारभ्य समर्पित इत्यन्तेन दर्शितं सन्यासाश्रमपरिग्रहप्रकारमशास्त्रीयत्वोद्घाटनेन दूषयन्ति ॥ **किंचायमित्यादि अबाधित एव बोध इत्यन्तम्** ॥ **मनुयाज्ञवल्क्यादिभिरिति** ॥ (अ० १- श्लो० ४) मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोङ्गिरा इति याज्ञवल्क्याद्युक्तक्रमानुरोधात् (संहिता काण्ड २ प्र० २ अनु० १०) "यद्वैकिंचमनुरवदत्तद्भेषजं" इति तैत्तिरीयश्रुतिप्रशंसितत्वाच्च मनोः प्रथमनिर्देशः ॥ तद्वचनानि तु षष्ठाऽध्याये वानप्रस्थधर्मनिरूपणोत्तरं (श्लो० ३३) वनेषुचविहृत्यैवंतृतीयंभागमायुषः ॥ चतुर्थमायुषोभागंत्यक्त्वासंगान्परिव्रजेत् ॥ आश्रमादाश्रमंगत्वाहुतहोमोजितेन्द्रियः ॥ भिक्षाबलिपरिश्रान्तःप्रव्रजन्प्रेत्यवर्द्धते ॥ ऋणानित्रीण्यपाकृत्यमनो मोक्षेनिवेशयेत् ॥ अनपाकृत्यमोक्षंतुसेवमानोव्रजत्यधः ॥ अधीत्यविधिवद्वेदान्पुत्रांश्चोत्पाद्यधर्मतः ॥ इष्ट्वाचशक्तितोयज्ञैर्मनोमोक्षेनिवेशयेत् ॥ अनधीत्यद्विजोवेदाननुत्पाद्यतथासुतान् ॥ अनिष्ट्वाचैवयज्ञैश्चमोक्षमिच्छन्व्रजत्यधइति ॥ अग्रेपि (श्लो० ८७-८८) ब्रह्मचारीगृहस्थश्चवानप्रस्थोयतिस्तथा ॥ एतेगृहस्थप्रभवाश्चत्वारःपृथगाश्रमाः ॥ सर्वेपिक्रमशस्त्वेतेयथाशास्त्रंनिषेविताः ॥ यथोक्तकारिणंविप्रंनयन्तिपरमांगतिमिति ॥ तथा (श्लो०-९४) दशलक्षणकंधर्ममनुतिष्ठन्समाहितः ॥ वेदान्तंविधिवच्छ्रुत्वासंन्यसेदनृणोद्विजइति ॥ एतदेव याज्ञवल्क्येन तृतीयाध्या-

येऽध्यात्मप्रकरणे संगृह्योक्तम् ॥ ( श्लो० १-२ ) वनादृहाद्वाकृत्वेष्टिमिति ॥ याज्ञवल्क्यादिभिरित्यादिशब्द ऋष्यन्तरसमुच्चायकः ॥ तथाच आचारमाधवपरार्कमदनपारिजातादिषु स्मृत्यन्तरम् ॥ ऋणत्रयमपाकृत्यनिर्ममो निरहंकृतिः ॥ ब्राह्मणः क्षत्रियोवाथवैश्योवाप्रव्रजेद्गृहादिति ॥ कूर्मपुराणेपि ॥ अग्नीनात्मनिसंस्थाप्यद्विजः प्रव्रजितो भवेत् ॥ योगाभ्यासरतः शान्तोब्रह्मविद्यापरायणइति ॥ तथा तत्रैव प्राजापत्यांनिरूप्येष्टिमाग्नेयीमथवापुनः ॥ अन्तःपक्वकषायोसौब्रह्माश्रममुपाश्रयेदिति ॥ एकादशस्कन्धे च भगवान् ( अ० १८ श्लो० १२-१३ ) यदाकर्मविपाकेषुलोकेषुनिरयात्मसु ॥ विरागोजायतेसम्यङ्न्यस्ताग्निःप्रव्रजेत्ततः ॥ इष्ट्वायथोपदेशंमां दत्वासर्वस्वमृत्विजे ॥ अग्नीन्स्वप्राणआवेश्यनिरपेक्षःपरिव्रजेत् ॥ अत्र मन्वादिवचनेषु ऋणानि त्रीण्यपाकृत्येत्यादिना ऋणत्रयापाकरणोत्तरमेव संन्यासेऽधिकारस्तदनपाकृतवतस्तत्प्रतिषेधो दुष्फलं च स्पष्टमाघुष्टम् ॥ ऋणत्रयं च तैत्तिरीया आमनन्ति ( संहिता काण्ड ६ प्र० ३ अ० १० ) " जायमानोवैब्राह्मणस्त्रिभिर्ऋणवाजायतेब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यःप्रजयापितृभ्यएषवानृणोयःपुत्रीयज्वाब्रह्मचारिवासी " इति ॥ मन्त्रवर्णोपि तैत्तिरीयब्राह्मणतृतीयकाण्डसप्तमाध्याये ( अनुवाक ९ ) " अनृणाअस्मिन्ननृणाःपरस्मिंस्तृतीयेलोकेअनृणास्स्याम ॥ येदेवयानाउतपितृयाणाःसर्वान्पथोअनृणाआक्षीयेम " इति ॥ अन्यदपि ब्राह्मणम् ॥ तैत्तिरीयारण्यकद्वितीयाध्याये ( खण्ड १५ ) " सर्वान्लोकाननृणोनुसंचरति " इति ॥ उक्तवचनेषु त्यक्तासंगानित्यादिना, दृढतरवैराग्यसंपन्नस्यैव तत्राधिकारो बोध्यते ॥ वाजसनेयिब्राह्मणेप्याम्नायते ॥ " एवंवैतमात्मानंविदित्वाब्राह्मणाःपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायाथभिक्षांचरन्ति " इति ॥ तैत्तिरीयाणां नारायणोपनिषदि ॥ " वेदान्तविज्ञानसुनिश्चितार्थास्सन्यासयोगाद्यतयःशुद्धसत्वाः " इति ॥ वेदान्तविज्ञानादर्थस्य सुनिश्चयोत्तरं संन्यासः श्रूयते ॥ एतदेवाभिप्रेत्य विज्ञानेश्वरो विषयकषायपरिपाकात् पुनर्मदोद्भवाभावनिश्चये प्रव्राजाधिकारं व्याचष्टे ॥ मूले यावता कालेनेत्यादिश्चतुर्थाश्रम इत्यन्तो मिताक्षराग्रन्थोनूद्यते ॥ आश्रमसमुच्चयपक्षे

**जाबालश्रुतौ च श्रूयते॥ ब्रह्मचर्य्यं परिसमाप्य गृहीभवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेदिति ॥**

## टीका

श्रुतिं प्रमाणयन्ति ॥ **जाबालश्रुतौ चेति** ॥ ननु नेदमैकान्तिकम् ॥ " यदहरेवविरजेत्तदहरेवप्रव्रजेत् " इति जाबालश्रुत्या कालविलम्बनिषेधात् ॥ नचेयं श्रुतिस्तृतीयं भागमायुषइत्यादेरनैकान्तिकत्वबोधिका वनस्थपरत्वेन संकोच्या ॥ अतएवसप्तमस्कन्धद्वादशाध्याये ( श्लो० २२ ) चरेद्वनेद्वादशाब्दान्नष्टौवाचतुरोमुनिः ॥ द्वावे-

कंवायथाबुद्धिर्नविपद्येतकृच्छ्रत इति पक्षान्तराणि स्मर्यन्तइति वाच्यम् ॥ संकोचे मानाभावात् ॥ अतएव जाबाला ब्रह्मचर्यं परिसमाप्येत्यादिना समुच्चयमाम्नायानुपदं विकल्पमप्यामनन्ति " यदिवेतरथाब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वावनाद्वा " इति ॥ एतदेवाश्रित्य याज्ञवल्क्योपि वनाद्गृहाद्वेति व्यचीक्लृप दिति चेदत्र ब्रूमः॥विकल्पपक्षादस्तु कथंचिद्ब्रह्मचर्यादपि प्रव्राजः परं वेदान्तश्रवणमननादिना द्रढिष्ठवैराग्यसंपन्नस्याधीतसाङ्गवेदस्यैव वर्णिनस्तत्राधिकारो नत्वतिबाल्यात्संसारस्वरूपमविजानतोऽनधिगतवैराग्यगन्धस्यानधीताम्नायस्य ॥ एतदेव दर्शयितुं विकल्पश्रुत्यर्थं स्मरति माधवीयेङ्गिराः ॥ संसारमेवनिस्सारंदृष्ट्वासारदिदृक्षया ॥ प्रव्रजत्यकृतोद्वाहःपरंवैराग्यमाश्रितइति ॥ तत्रैव नारदोपि ॥ प्रथमादाश्रमाद्वापिविरक्तोभवसागरात् ॥ ब्राह्मणोमोक्षमन्विच्छंस्त्यक्त्वासंगान्परिव्रजेदिति ॥ उक्तश्रुतावपि " यदहरेवविरजेत् " इति वैराग्यस्यात्यावश्यकत्वमुच्यत एव॥ विकल्पश्रुतावपि इतरथापदस्यार्थं वेदवेदान्तश्रवणादिना दृढतरवैराग्ये सतीति त्वदीया व्याचक्षते ॥ नाप्यविरक्ताधिकारप्रापकं किमपि प्रमाणमुपलभामहे ॥ अनुपनीतस्यानधिकारं तु विकल्पश्रुतिरेव ब्रह्मचर्यात्प्रभृति तदधिकारकथनमुखेन बोधयति॥ अन्यथा सावित्रीप्रवेशप्रैषोच्चारादिलक्षणवैदिककर्तदितिकर्त्तव्यतायाः " सखेमांगोपाय येनदेवाःपवित्रेण " इत्यादिदण्डपवित्रादिग्रहणमन्त्राणां चाप्राप्त्या संन्यासएव नोत्पद्येतेति निर्विवादेऽस्मिन्विषये किं बहुना॥ परंतु बहुषु श्रुतिष्वभ्रूणापाकरणस्यावश्यकत्वबोधनात् मन्वादिभिस्तथैव स्मरणाच्च विकल्पश्रुतौ ब्रह्मचर्यशब्दो वैधुर्यपरः ॥ ब्रह्मचर्यमहिंसाच, सततं ब्रह्मचारिभिरित्यादौ स्त्रीसंगराहित्ये तस्य रूढिदर्शनात् ॥ एतदेवाभिप्रेत्य स्मरति माधवीये यमः ॥ पुनर्दारक्रियाभावेमृतभार्यःपरिव्रजेत् ॥ वनस्थोधूतपापोवापरंपन्थानमाश्रयेदिति ॥ अङ्गिरोवचनमप्येतेनैव समानार्थकम् ॥ नारदवचनेऽपि प्रथमादाश्रमादिति वैधुर्यलक्षकम् ॥ अथवा बहुश्रुतिस्मृतिषु संन्यासाधिकारप्रापकतया वनाश्रमस्यैवोक्तत्वेपि दृढवैराग्योत्पत्तौ ततः प्रथमादाश्रमाद्गार्हस्थ्यादपि परिव्रजेदिति तदर्थः ॥ अतएव याज्ञवल्क्यो वनाद्गृहाद्वेति पक्षद्वयमेवाह नतु ब्रह्मचर्यादपीति ॥ मनुरपि ( अ० ६ श्लो० ३३ ) वनेषुचविहृत्यैवमिति ( श्लो० ३८ ) ब्राह्मणःप्रव्रजेद्गृहादिति च पक्षद्वयमेव दर्शयति ॥ अतो ब्रह्मचर्यशब्दो न साक्षाद्वर्णित्वपरः ॥ बहूनामनुग्रहस्य न्याय्यत्वात् ॥ यदि श्रुत्यर्थस्तथाऽभविष्यत् कथं तर्हि "यःकश्चित्कस्यचिद्धर्मोमनुनापरिकीर्तितः ॥ ससर्वोपिवेदोक्तःसर्वज्ञानमयोहिसः " इत्यादिवास्तवस्तवविषयस्स नाऽवक्ष्यत् ॥ कथं वा प्रत्युतात्यन्तं व्यगास्यत् ॥ तस्मादाश्रमचतुष्टयसमुच्चयस्तत्रयसमुच्चय,"ऐकाश्रम्यं त्वाचार्या"इति गौतमोक्तो गार्हस्थ्येतराश्रमबाधो वेति त्रय एव पक्षाः प्रामाणिकत्वाद्व्रीहियववदिच्छया विकल्प्यन्त् इति मन्यन्ते॥अथ ब्रह्मचर्यात्प्रव्रज्योरीकारेपि श्रुतौ यदिवेत्यस्य नारदवचने वापीत्यस्य चानादरार्थत्वमाश्रित्य तत्पक्षस्यातिगौणत्वं वर्णयन्ति ॥ अतएव एका-

दशस्कन्धे भगवता आश्रमादाश्रमंगच्छेन्नान्यथामत्परश्चरेत् इति स्वपरायण-स्यासौ पक्षः प्रत्यषेधि ॥ सर्वमतेषु उपनयनात्प्राक् तु कामचारकामवादत्वादिकमेव प्रायो विधीयते नतु प्रव्राजो नाप्युपनीतस्याप्यनधीतविद्यस्याऽधीतविद्यस्याप्यन-त्यन्तविरक्तस्य सः ॥ नापि स्वप्रतिज्ञापालनार्थमेव जनकेन बालोप्यनुपनीतोऽप्य-विरक्तोपि स्वेच्छया प्रव्राजनीय इति विधिः काप्युपलभ्यते ॥ तस्माच्छास्त्रविरुद्धः संन्यासाभास एवायम् ॥ तदेतत्सर्वं त्दृदि कृत्वाहुः ॥ **श्रुतिस्मृतिष्वित्यादि** ॥

**श्रुतिस्मृतिष्वेवं कुत्राऽपि न प्रतिपादितं पिता बालं पुत्रमनुपनीतं परिव्राजयेदिति ॥ किंच तत्पित्रापि कनिष्ठपुत्रसद्भावे ज्येष्ठं ददतानुचितमाचरितम् ॥ ज्येष्ठपुत्रस्य सर्वथैवादातव्यत्वात् ॥ तथा च मिताक्षरायां "अनेकपुत्रसद्भावेपिज्येष्ठोनदेयः ॥ ज्ये-ष्ठेनजातमात्रेणपुत्री [illegible] स्यत्वात् " इति ॥**

## टीका

यत्तु जिज्ञासाधिकरणे भामत्यां " जायमानोवैब्राह्मणस्त्रिभिर्ऋणवाजायते इति गृहस्थःसंपद्यमान इति व्याख्येयम् ॥ अन्यथा यदिवेतरथाब्रह्मचर्यादेवेतिश्रुतिर्वि-रुध्येत " इत्यभाणि ॥ तदविचारचारु ॥ तथा सति गार्हस्थ्योत्तरमार्षऋणापाकर-णाय ब्रह्मचर्यस्य गुरुकुलवासस्य चानुष्ठेयतापत्तेः ॥ "ब्रह्मचर्येणऋषिभ्यः ॥ ब्रह्मचा-रिवासी " इत्यनुपदं श्रावणात् ॥ न चेष्टापत्तिः ॥ आरूढपातित्यप्रसङ्गात् ॥ यथाह दक्षः ॥ त्रयाणामानुलोम्यंस्यात्प्रातिलोम्यंनविद्यते ॥ प्रातिलोम्येनयोयातिनतस्मात् पापकृत्तमः ॥ योगृहाश्रममास्थायब्रह्मचारीभवेत्पुनः ॥ नयतिर्नवनस्थश्चससर्वाश्रम-वर्जितइति ॥ एतदेवाश्रित्य पराशरव्याख्याने माधवः॥ "यदिगृहीकथंचित्प्रत्यवरुह्य-ब्रह्मचारीभवेत्तदासौसर्वाश्रमबहिष्कृतः ॥ आरूढपतितत्वात् ॥ अतोनवनस्थादिभिरा-श्रमवाचिभिः शब्दैरभिलप्योभवति" इत्याह ॥ अयं प्रत्यवरोहाभावश्च शङ्कराचा-र्यैस्तृतीयस्य चतुर्थे पादे ( सूत्र ४० ) " तद्भूतस्यतुनातद्भावोजैमिनेरपिनियमाऽत-द्रूपाभावेभ्यः " इत्यधिकरणे विचारितः ॥ तत्र हि तद्भाष्ये "तथाहि अत्यन्तमा-त्मानमाचार्यकुलेऽवसादयन्निति अरण्यमियादिति पदंततोनपुनरेयादित्युपनिषद्" इ-त्याद्युक्तम् ॥ न च ब्रह्मचर्यादेवेत्यस्यानुरोधादिदमन्यथा नेतव्यम् ॥ एतदनुरोधेन त-स्यैव वैधुर्यपरतया परैरन्यथा नयनात् ॥ न च विनिगमनाविरहादनिर्णयः शङ्क्यः॥ समानबलेनैकेन बहूनां बाधाऽयोगात्॥ऋणापाकरणावश्यकतायाबहुत्राम्नानात् ॥ ब-

हूनामनुग्रहस्यन्याय्यत्वात् प्रव्राजकप्राप्यदेवयानपथानामप्यनृणगम्यताम्नानाच्च ॥ अथ यैर्ब्रह्मचर्यात्प्रव्राज उच्यते तैरपि वेदान्ताध्ययनादिनात्यन्तविरक्तं कंचित्पुरुषधौरेयमेवाधिकृत्योच्यतइत्यग्रे स्फुटिष्यति ॥ न तु प्रकृते तथा संभवति ॥ सकलाध्ययनस्योत्तरकालिकतायाः प्रस्तावनाकृतैव वक्ष्यमाणत्वाच्छत्रचामरोरीकारादिना वैराग्याभावनिश्चयाच्च ॥ अनुपनीतस्यत्वत्यन्ताप्राप्तमेवैतदिति प्रागेवावोचाम ॥ तत्पितृकर्तृकतत्प्रव्राजने दूषणान्तरमाहुः ॥ **किंचतत्पित्रेत्यादिमुख्यत्वादितीत्यन्तम् ॥ मिताक्षरायामिति** ॥ व्यवहाराध्याये दायविभागप्रकरणे (श्लोक१७) दद्यान्मातापितावायमित्यस्य विवरण इति भावः ॥ अनेकपुत्रसद्भावइत्यादिर्मुख्यत्वादित्यन्तोमिताक्षराग्रन्थएव ॥ **मुख्यत्वादिति** ॥कामजानितरान्विदुरितिस्मृत्याऽवरजानाममुख्यत्वबोधनाज्ज्येष्ठस्यैव तथात्वमितिभावः॥ ज्येष्ठेनजातमात्रेणेति तु नवमाध्याये ( श्लोक १०६ )• मनुवचनं तत्र हि ज्येष्ठेन जातामात्रेणपुत्रीभवतिमानवः ॥ पितॄणामनृणश्चैवसतस्मात्सर्वमर्हति ॥ यस्मिन्नृणंसन्नयतियेनचानन्त्यमश्नुते ॥ सएवधर्मजःपुत्रःकामजानितरान्विदुः ॥ पितेवपालयेत्पुत्रान्ज्येष्ठोभ्रातॄन्यवीयसः ॥ पुत्रवच्चापिवर्तेरन्ज्येष्ठेभ्रातरिधर्मतः ॥ ज्येष्ठःकुलंवर्धयतिविनाशयतिवापुनः ॥ ज्येष्ठःपूज्यतमोलोकेज्येष्ठःसद्भिरगर्हितः इति स्मर्यते॥ तथाच पित्रा धर्मजस्य ज्येष्ठस्य समर्पणे तस्यानृणीभावाऽऽनन्त्याशनकुलप्रतिष्ठादेरभावात्तदर्पणमप्यत्यन्तानुचितमेव ॥ अतएव बह्वृचब्राह्मणेपि सप्तमपञ्चिकायां हरिश्चन्द्रोपाख्याने ॥ ( खंड १५) " सहज्येष्ठंपुत्रंनिगृह्णानउवाचनत्विममितिनोएवेमंमिति" इत्यादिश्रूयते॥ अर्थस्तु वारुणपुरुषपश्वर्थमजीगर्तस्य सौयवसेस्त्रिषु पुत्रेष्वन्यतमं शतेन चिक्रीषन् हरिश्चन्द्रपुत्रो रोहितस्तेषु ज्येष्ठं निगृह्णानस्सन्नुवाच॥नत्विमंपुत्रमाददीयेति॥तं क्रेष्यमाणस्य पिता प्रत्युवाच नोएवेमं दास्यामि ज्येष्ठस्यादेयत्वादिति ॥ एवकारः सर्वथैवादेयत्वबोधनार्थः ॥ एतदेव लिङ्गमाश्रित्य वीरमित्रोदयादिषु दानक्रयादिकं ज्येष्ठस्य प्रतिषिद्धम् ॥ किंच कनिष्ठस्याप्यापद्येव दानम् ( अध्याय ९ श्लोक २६८ ) मातापितावादद्यातांयमद्भिःपुत्रमापदीति मनूक्तेः ॥ एतदेवाश्रित्य पूर्वोक्तस्थले विज्ञानेश्वरोपि " आपद्ग्रहणादनापदिनदेयः दातुरयंप्रतिषेधः " इत्याह ॥ वीरमित्रोदयकारोपि " आपदीत्युक्तेरनापदिदातुःप्रत्यवायः " इत्याचष्टे॥ अपिच केनचिद्दीयमानः पुत्रादिरपि यतिना प्रतिग्राह्य इति विधायकं वाक्यमन्वेष्टव्यम्॥ तत्र तत्र श्रुतिस्मृतिषु तस्य वेणवदण्डकन्थादिस्वाश्रमलिङ्गातिरिक्तवस्तुपरिग्रहनिषेधात् ॥ तथा पुत्रदानप्रतिज्ञापनमपि यतिवर्य्यस्योचितं नवेति चिन्त्यम् ॥ प्रत्याशावत्तापत्तेः ॥ एकएवचरेद्भिक्षुरित्यादिबाधप्रसक्तेश्च ॥

किंच "परीक्ष्यलोकान्कर्म्मचितान्ब्राह्मणोनिर्वेदमायात्" इत्यादिना "शान्तोदान्तउपरतस्तितिक्षुःसमाहितःश्रद्धावित्तो भूत्वात्मन्येवात्मानंपश्येत्" इत्यादिश्रुत्या च नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमदमादिषट्कसंपन्मुमुक्षुत्वरूपसाधनचतुष्टयसंपन्नस्यैव "तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठं" इत्याद्युक्तरीत्या गुरुसमीपे गमनाधिकारो भवन्मते॥ नत्वनुपनीतस्य साधनचतुष्टयासंपन्नस्य ऋणत्रयाविनिर्मुक्तस्य बालस्येति

## टीका

अपिच त्वन्मतरीत्या तु तादृशस्य बालस्य गुरूपसत्तिरेवासंभाविता कुतस्तरां संन्यास इत्याशयेनाहुः ॥ **किंच परीक्ष्यलोकानित्यादिना ऋणत्रयाऽविनिर्मुक्तस्य बालस्येत्यन्तेन** ॥ अयमर्थः "वेदान्तविज्ञानसुनिश्चितार्थाःसंन्यासयोगाद्यतयःशुद्धसत्वाः" इत्यत्र "समिधोयजति-तनूनपातंयजति इडोयजति बर्हिर्यजति स्वाहाकारंयजन्ति" इत्यादिवत् पाठः क्रमनियामकतयावगम्यते ॥ तथाच वेदान्तविज्ञानोत्तरमेव संन्यासः॥ "शान्ताविद्वांसोभैक्षचर्यांचरन्तः" इति मुण्डकादिश्रुतिष्वपि तथैव निश्चीयते ॥ नचाग्निहोत्रयवागूपाकन्यायेन पाठक्रमादार्थक्रमस्य बलीयस्त्वमाश्रित्य विपर्ययोऽत्र शङ्क्यः ॥ वाजसनेयिभिः "एतमात्मानंविदित्वा" इतिक्त्वाश्रुत्या स्पष्टमेवात्मवेदनस्य भिक्षुचर्यापूर्वकालिकत्वबोधनात् ॥ अतो दर्शपूर्णमासाभ्यामिष्ट्वासोमेनयजेतेत्यादिवच्छ्रौतएव क्रमः ॥ युक्तं चैतत् ॥ अन्यथा दृढतरवैराग्यानुदयात् "यदहरेवविरजेत्" इति विरक्तस्यैव संन्यासेऽधिकारात्तद्रहितसंन्यासिनोऽत्यन्तविगानाच्च॥ वेदान्तविज्ञानं च गुरूपसत्त्येकसाध्यम् ॥ सामगानां श्वेतकेतुविद्यायां गन्धाराऽऽनीताभिनद्धाक्षपुरुषदृष्टान्तमुपन्यस्य "एवमेवेहाचार्यवान्पुरुषोवेद" इतिश्रावणात् ॥ उपसत्तिश्च विविषादिजन्या तद्विज्ञानार्थमितिश्रुतेः ॥ विविदिषा च वेदानुवचनयज्ञदानतपःप्रभृतिजन्या "तमेतंवेदानुवचनेनब्राह्मणाविविदिषन्तियज्ञेनदानेनतपसाऽनाशकेन" इति तेषांतत्कारणत्वाम्नानात्॥ अतः पूर्वमेव वेदानुवचनयज्ञाद्यपेक्ष्यते ॥ अथ जन्मान्तरीयदृढतरयज्ञाद्यपूर्वसत्वेपि वेदानुवचनं वेदान्तव्यासङ्गश्चैतज्जन्मीय एवापेक्षितः ॥ अतएव जिज्ञासासूत्रभाष्ये शङ्कराचार्याः॥ "धर्मजिज्ञासायाःप्रागप्यधीतवेदान्तस्यब्रह्मजिज्ञासोपपत्तेः" इत्याहुः ॥ अध्य-

यनादेव हि विविदिषानियतपूर्ववृत्तीनि नित्यानित्यवस्तुविवेकादीनि संपद्यन्ते ॥ अत एव जिज्ञासासूत्रस्थाथशब्दस्यानन्तर्यार्थकत्वमाश्रित्य तदवधित्वेन तदादिचतुष्टयं निरूपितं शङ्कराचार्यैः ॥ तथाहि तद्भाष्ये ॥ अथशब्दआनन्तर्यार्थःपरिगृह्यतइत्यादिना ॥ प्राचीनाभिमतमधिकारार्थत्वं प्रतिषिध्य मङ्गलस्याऽऽर्थिकत्वमर्थान्तरासंभवं च प्रदर्श्य कैश्चदभिप्रेतं स्वाध्यायानन्तर्यं कर्मावबोधानन्तर्यं च निराकृत्योच्यते "तस्मात्किमपिवक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यतइति उच्यते नित्यानित्यवस्तुविवेकः इहामुत्रार्थफलभोगविरागः शमदमादिसाधनसंपत् मुमुक्षुत्वंच तेषुहिसत्सुप्रागपिधर्मजिज्ञासायाऊर्ध्वंचशक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च॥ नविपर्यये॥ तस्मादथशब्देनयथोक्तसाधनसंपत्त्यानन्तर्यमुपदिश्यते" इति ॥ अत्र भामत्यां "तस्मात्किमपिवक्तव्यमिति ॥ यस्मिन्नसति ब्रह्मजिज्ञासानभवति सतितु भवन्तीभवत्येवेत्यर्थः" इत्यादिना "नित्यानित्यवस्तुविवेकइत्यादि नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तद्धर्मः नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेकोनित्यानित्यवस्तुविवेकः इहामुत्रार्थभोगविरागः अर्थ्यतेप्रार्थ्यतइत्यर्थः फलमितियावत् तस्मिन्विरागोऽनाऽऽभोगात्मिकेऽपेक्षाबुद्धिः ततः शमदमादिसाधनसंपत् वैराग्यहेतुकोमनोविजयः शमइति वशीकारसंज्ञइति चाख्यायते ॥ विजितं च मनस्तत्त्वविषयविनियोगयोग्यतां नीयते सेयमस्य योग्यता दमः आदिग्रहणेनचविषयतितिक्षातदुपरमतत्त्वश्रद्धाः संगृह्यन्ते ॥ ततोऽस्यसंसारबन्धनान्मुमुक्षा भवतीत्याह (मुमुक्षुत्वंच) तस्यचनित्यशुद्धमुक्तसत्यस्वभावब्रह्मज्ञानं मोक्षस्यकारणमित्युपश्रुत्यतज्जिज्ञासा भवतितस्मात्तेषामेवानन्तर्यं" इति व्याख्यायि ॥ अत्र मूलभूताम्नायस्तु यथा ॥ "तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितोलोकःक्षीयते" इत्यादिषु स्वर्गादिसुखस्यानित्यत्वमाम्नायते ॥ मुण्डकेष्वपि ॥ प्रथममुण्डकद्वितीयखण्डे (ऋक् ७) "प्लवाह्येतेअदृढायज्ञरूपाः" इत्यादिना (ऋक् १०) "नाकस्यपृष्ठेतेसुकृतेऽनुभूत्वेमंलोकंहीनतरंचाविशन्ति" इत्यन्तेन स्वर्गादिसुखस्य क्षयितामाम्नाय तपःश्रद्धेयेह्युपवसन्त्यरण्यइत्यृचा निवृत्तिनिष्ठस्य परमपुरुषार्थसिद्धिमुक्त्वोच्यते "परीक्ष्यलोकान्कर्मचितान् ब्राह्मणोनिर्वेदमायान्नास्त्यकृतः कृतेन॥ तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठम् ॥ तस्मैसविद्वानुपसन्नायसम्यक्प्रशान्तचित्तायशमान्विताय ॥ येनाक्षरंपुरुषंवेदसत्यंप्रोवाचतांतत्त्वतोब्रह्मविद्यां" इति ॥ अत्र स इत्यनेनकर्मचितलोकपरीक्षया निर्विण्णो ब्राह्मणः परामृश्यते ॥ प्रोवाचेतिलृकारव्यत्ययो व्यत्ययोबहुलमित्यनुशासनात् ॥ प्रब्रूयादित्यर्थः ॥ स्पष्टं चेदं शाङ्करोपनिषद्भाष्येपि ॥ अत्रापि श्रद्धापूर्वकोपसत्तिप्रशान्तचित्तत्वादिगुणविशिष्टं प्रत्येवोपदेश आचार्येण कर्तव्य इति विधीयते नतु तद्रहितं प्रति ॥ अतएव शमदमादिसंपन्नस्यैवात्मदर्शनविधिं काण्वा दर्शयन्ति ॥ "तस्मादेवंविच्छान्तोदान्तउपरतस्तितिक्षुस्समाहितःश्रद्धाचित्तोभूत्वात्मन्येवात्मानंपश्यति" इति ॥ इह तस्मादिति प्रकृतप्रशंसापरिग्रहाद्विधित्वं स्वीकृतम् ॥

तैत्तिरीयसंहिता ( काण्ड २ प्र० ६ अनु०८ ) "तस्मात्पूषाप्रपिष्टभागोऽदन्तकोहि" इत्यादिवदपूर्वत्वाच्च ॥ माध्यन्दिनास्तु " तस्माच्छान्तोदान्तउपरतस्तितिक्षुःश्रद्धा-वित्तोभूत्वात्मन्येवात्मानंपश्येत्सर्वमात्मनिपश्यति " इतिपठन्ति ॥ शमादिस्वरूपं तु रत्नप्रभायां दर्शितम् ॥ " लौकिकव्यापारान्मनस उपरमः शमः ॥ बाह्यकरणानामु-परमो दमः ॥ ज्ञानार्थंविहितनित्यादिकर्म्मसंन्यासउपरतिः ॥ शीतोष्णादिद्वन्द्वसहनं-तितिक्षा ॥ निद्रालस्यप्रमादत्यागेनमनःस्थितिः समाधानम् ॥ सर्वत्रास्तिकताश्रद्धा ॥ एतत्षट्कप्राप्तिः शमादिसंपत्"इति दिक् ॥ अत्रोपरतिस्वरूपं चिन्त्यमित्यन्यत्रविस्तरः॥ अतो नित्यानित्यवस्तुविवेकादिचतुष्कसंपन्नेनैव ब्रह्मविविदिषा कर्तव्येति प्रथमसूत्र-स्यार्थं वर्णयन्ति शङ्कराचार्याः॥ " तस्माद्यथोक्तसाधनसंपत्यनन्तरंब्रह्मजिज्ञासाकर्त्त-व्या ॥ ब्रह्मणोजिज्ञासाब्रह्मजिज्ञासा ब्रह्मचवक्ष्यमाणलक्षणं " इत्यादि ॥ उपसत्तिश्च विविदिषया ॥तस्यैव चोपदेशार्हत्वम् ॥ नचाशुश्रूषवेवाच्यमित्यजिज्ञासमानायोपदेश-स्यप्रतिषेधात्॥तथाच प्रकृते यथोक्तविवेकवैराग्यादिसाधनचतुष्टयाभावाज्जिज्ञासानुद-याच्च तादृशबालस्य गुरूपसत्तिरेव भवन्मतरीत्यात्यन्तविरुद्धा ॥वस्तुतस्तु अथशब्द-स्यानन्तर्यार्थकत्वेऽधिकाकाङ्क्षाध्याहारादिदोषान् विवेकादीनामानन्तर्यावधित्वेन परिग्रहे चक्रकापत्तिगर्भान्योन्याश्रयादिदोषांश्च प्रदर्श्य तस्याधिकारार्थत्वमेव समर्थि-तमाकरे प्रकाशे च ॥ तदेतदभिप्रेत्य मूले **भवन्मत**इत्यवादि ॥ सर्वमतेषु स्वयमविर-क्तस्याविविदिषोरनुपनीतत्वाद्यधिकारप्रतिबन्धकधर्मशालिनो बालस्य परेच्छया प्र-व्राजार्थमुपसत्तिस्तु सर्वथा शास्त्रविरुद्धैवेति दिक् ॥ तदेतत्सर्वमनुसंधायोक्तं **किं चपरीक्ष्येत्यादिबालस्येत्यन्तम्** ॥ अत्र **इत्यादिनेति** ॥ तद्विज्ञानार्थमित्य-स्यादिभागेनेत्यर्थः ॥ तृतीयान्तद्वयं प्रकृतश्रुत्युक्तोपसत्तौ साधनचतुष्टयसंपन्नस्यैवा-धिकारे हेतुबोधकम् ॥

**परस्परविरुद्धमेवैतत्सर्वमतोऽर्थान्तरमनुमापयति ॥ तदुच्यते ॥ दु-र्भिक्षत्याजितदेशेन बुभुक्षितेन बहुपुत्रेण देशाद्देशान्तरं भ्रममा-णेन कुरुक्षेत्रमागतेन केनचिद्ब्राह्मणब्रुवेणोल्लङ्घितशास्त्रमर्य्या-देन ज्येष्ठस्तनूजन्मा विक्रीतः केनचित्कर्म्मन्दिना वणिग्वृत्त्युप-जीविना क्रीत इत्यविरुद्धम् ॥**

## टीका

अथ "तत्रचप्रायेणान्योन्यंविरुद्धानिवाक्यान्यर्थान्तरप्रतिपादकानि" इति प्रतिज्ञावा-क्यानुरोधात्परस्परविरुद्धत्वमुपपाद्य वास्तवार्थभिन्नार्थप्रतिपादकत्वं स्पष्टयन्ति ॥ **अतोर्थान्तरमित्यादिना अविरुद्धमित्यन्तेन** ॥ **तदुच्यतइति** ॥तत अर्था-

न्तरम्॥ तदुक्तार्थातिरिक्तो वास्तवो भूतार्थ इति यावत् ॥ भ्रममाणेनेति भ्रमणशीलेन ॥ताच्छील्यवयोवचनशक्तिष्विति चानश्॥आत्मानंमण्डयमानइत्यादिवत्॥ **ब्राह्मणब्रुवेणेति** ब्राह्मणइत्युच्यतेऽसा ब्राह्मणब्रुवो नतु वस्तुतस्तल्लक्षणाक्रान्तः ॥ बाहुलकात्कर्म्मणि पचाद्यच् ॥घरूपेत्यादिना निपातनाद्वच्यादेशगुणयोरभावः ॥ तल्लक्षणंतु-दानचन्द्रिकादिषु व्यासः गर्भाधानादिभिर्युक्तस्तथोपनयनेनच॥नकर्मविन्नचाधीतःसभवेद्ब्राह्मणब्रुवइति ॥ **उल्लङ्घितशास्त्रमर्यादेनेति** ॥ पुत्रक्रयज्येष्ठक्रयादिप्रतिषेधोल्लङ्घनात्तथेति भावः ॥ प्रकृतानुमितिसाधकं विश्वजनीनमितिवृत्तमाहुः ॥ **काश्मी-**

**काश्मीरदेशे प्रबलदुर्भिक्षमभूत् सन्तिच कुरुक्षेत्रे व्यवहारकर्त्तारो धनिकाः कर्म्मन्दिन इत्यबाधित एव बोधः ॥**

## टीका

**रेत्यादिना बोधइत्यन्तेन** ॥ तथा च शिष्टकिंवदन्त्या निर्विचिकित्सप्रतिपन्नोयमर्थोनुमितिसंप्रतिपत्त्या सार्वजनिकनिश्चयगोचरो भविष्यतीति किं बहुना ॥ **व्यवहारकर्त्तारइति** ॥ घटानां निर्म्मातुस्त्रिभुवनविधातुश्च कलहइतिवच्छेषषष्ठ्या समासः ॥ तेन तृजकाभ्यांकर्त्तरीत्यस्याविषयः ॥ किंच चतुर्विधेषु भिक्षुषु कतमोयं भिक्षुः ॥ तेषां चातुर्विध्यं तु माधवीये हारीतः ॥ चतुर्विधाभिक्षवस्तुप्रोक्ताःसामान्यलिङ्गिनः ॥ तेषांपृथक्पृथग्ज्ञानंवृत्तिभेदात्कृतंश्रुतम् ॥ कुटीचरोबहूदश्चहंसश्चैवतृतीयकः ॥ चतुर्थःपरमोहंसोयोयःपश्चात्सउत्तमइति ॥ पितामहोपि ॥ चतुर्विधाभिक्षवस्तुमख्याताब्रह्मणोमुखात् ॥ कुटीचरोबहूदकोहंसश्चैवतृतीयकः ॥ चतुर्थःपरहंसश्चसंज्ञाभेदैःप्रकीर्तिताइति ॥ एवं बृहत्पराशरादिस्मृतिष्वपि द्रष्टव्यम् ॥तत्र न तावदाद्यः॥ प्रजापतिना "कुटीचरोनामस्वगृहेवर्त्तमानआहिताग्निषुभिक्षांभुञ्जानोपगतकामक्रोधलोभमोहोहंकारवर्जितोयआत्मानुग्रहंकुरुते" इति ॥ वृद्धपराशरेणच "कुटीचरानामपुत्रादिभिःकुटींकारयित्वाकामक्रोधलोभमोहमदमात्सर्यभयादीन्हित्वाविधिवत्संन्यासंकृत्वा" इत्यादिना दर्शितलक्षणस्याऽप्रवेशात्॥ नापि द्वितीयः॥ स्कन्देन बहूदकश्चसंन्यस्यबंधुपुत्रादिवर्जितः ॥ सप्तागारंचरेद्भैक्षमेकान्नंचपरित्यजेत् ॥ गोवालरज्जुसंबद्धत्रिदण्डंशिक्यमुद्धृतम् ॥ जलपात्रंपवित्रंचखनित्रींचकृपाणिकाम् ॥ शिखांयज्ञोपवीतंचदेवताराधनंचरेदिति ॥ वृद्धपराशरेणापि "तत्रबहूदकानामत्रिदण्डकमण्डलुपद्मपवित्रकाषायवस्त्रधारिणः" इत्यादिना प्रोक्ततदसाधारणधर्माणामभावात् ॥ माधवादिभिः कुटीचरबहूदकयोर्नियतधर्मत्वेन व्यवस्थापितत्रिदण्डशिखासूत्राद्यभावाच्च ॥ वस्तुतस्तु त्रिदण्डधारणमेव मुख्यम् ॥ मनुयाज्ञवल्क्यादिभिरेकदण्डस्यानुक्तत्वात् ॥ तथा चमनुः ॥ अध्या १२ (श्लोक १०) "यस्यैतेनियताबुद्धौसत्रिदण्डीतिचोच्यतइत्यान्तरनियमवतएव वास्तवसंन्यासित्वं वदन्संन्यासस्य त्रिदण्डत्वं बोधयति ॥ याज्ञव-

ल्क्योपि ( अ० ३ यतिधर्मप्रकरणे श्लोक ३ ) सर्वभूतहितःशान्तस्त्रिदण्डीसकमण्डलुः ॥ एकारामःपरिव्रज्यभिक्षार्थीग्राममाश्रयेत् ॥ मिताक्षरादिषु स्मृत्यन्तरम् ॥"त्रीन्वैणवान्दण्डान्मूर्द्धप्रमाणान्दक्षिणेनपाणिनाधारयेत्सव्येनसोदकंकमण्डलुं" इति ॥ देवलोपि " काषायीत्रिदण्डीसकमण्डलुपवित्रपादुकासनकन्थामात्रः " इति ॥ माधवीये हारीतदत्तात्रेयपितामहाः कुटीचरादींश्चतुरोप्युपन्यस्य सर्वेषां त्रिदण्डमेव विदधते ॥ वृत्तिभेदेनभिन्नाश्चनैवलिङ्गेनतेद्विजाः ॥ लिङ्गंतुवैणवंतेषांत्रिदण्डंसपवित्रकमिति ॥ दक्षोपि सर्वेषामाश्रमाणां क्रमाल्लक्षणमभिदधानः "त्रिदण्डोत्रयतिश्चैव" इतियतेर्लक्षणमभिधाय त्रिदण्डरहितस्य यतित्वं निषेधति ॥ यस्यैतल्लक्षणंनास्तिप्रायश्चित्तीनचाश्रमीति ॥ यत्तु क्वचिदेकदण्डवचनं तत्त्वऽपहारादिना त्रिदण्डनाशे तत्त्रयलाभपर्यन्तमेकेन निर्वाहाभिप्रायम् ॥ यथाह मेधातिथिः ॥ यावन्नस्युस्त्रयोदण्डास्तावदेकेनपर्यटेदिति ॥ हारीतोपि नष्टेजलपवित्रेवात्रिदण्डेवाप्रमादतः ॥ एकंतुवैणवंदण्डंपालाशंबैल्वमेववा ॥ गृहीत्वाविचरेत्तावद्यावल्लभेत्रिदण्डकमिति ॥ यत्तु एकदण्डीवेति बौधायनस्मरणं यच्च चतुर्थमाश्रमंगच्छेद्ब्रह्मविद्यापरायणः ॥ एकदण्डीत्रिदण्डीवासर्वसंगविवर्जितइतिचतुर्विंशतिमतेविकल्पाभिधानं तदप्येतेनैव व्याख्यातम् ॥यत्तु केचित् ॥ वाग्दण्डोथमनोदण्डःकायदण्डस्तथैवच ॥ यस्यैतेनियताबुद्धौसत्रिदण्डीतिचोच्यते ॥ त्रिदण्डमेतन्निक्षिप्यसर्वभूतेषुमानवः कामक्रोधौतुसंयम्यततःसिद्धिंनिगच्छतीति" द्वादशाध्याये ( श्लोक १०-११ ) मनुवचनात् ॥ वाग्दण्डोथमनोदण्डःकर्मदण्डस्तथैवच ॥ येस्यैतेनियतादण्डास्त्रिदण्डीतिसउच्यतइति दक्षवचनाच्च सर्वेषां त्रिदण्डवचनानि वाग्दण्डादिविषयाणीति वदन्ति ॥ तन्न ॥ तथा सति कुटीचरबहूदकयोरप्येकदण्डप्रसंगात्तयोस्त्रिदण्डावश्यकतायाःस्वयमङ्गीकारात् ॥ अथ शास्त्रबलात्तयोर्वेणुत्रयधारणमप्यावश्यकमिति चेत्तर्हि सर्वेषां तथास्तु ॥ पूर्वोक्तशास्त्रबलात् ॥ परःपरमहंसस्तुतुर्याख्यश्रुतिरब्रवीत् ॥ यमैश्चनियमैर्युक्तोविष्णुरूपीत्रिदण्डभृदिति ॥ पितामहेन परमहंसस्यापि त्रिदण्डधारणविधानाच्च ॥ तथाच वाग्दण्डादिरहितस्य केवलबाह्यत्रिदण्डधारणान्नत्रिदण्डिव्यपदेशार्हत्वमित्येवमनुदक्षवचसोराशयः ॥ मनुना नलिङ्गंधर्मकारणमिति केवललिङ्गस्य नैष्फल्यकथनात् याज्ञवल्क्येनापि ( अ० ३ आध्यात्मिकप्रकरणे श्लोक ७) कर्तव्याशयशुद्धिस्तुभिक्षुकेणविशेषतः ॥ ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणायचेति तथा ( श्लोक १० ) नाश्रमःकारणंधर्मेक्रियमाणोभवेद्धिसइति च स्मरणात् ॥ श्रीभागवतेपि एकादशस्कन्धाष्टादशाध्याये ( श्लो० १७ ) मौनाऽनीहाऽनिलायामादण्डावाग्देहचेतसाम् ॥ नह्येतेयस्यसन्त्यङ्गवेणुभिर्न भवेद्यतिरिति कथनाच्च ॥ नतु लिङ्गंतुवैणवंतेषांत्रिदंडंसपवित्रकमिति स्पष्टम् वैणवदण्डत्रयस्य चतुर्णां लिङ्गताभिधानं वाग्दण्डादिपरतया नेतुं शक्यम् ॥ पराशरमाधवीये कालिकापुराणे ॥ वैणवायेस्मृतादण्डालिङ्गमात्रप्रबोधकाः ॥ लिङ्गव्यक्त्यैहिधार्यास्तेनपुनर्धर्महेतवः ॥ कायिकायेबुधैर्बिल्वंनृणांपापप्रमोक्षणात् ॥

जितेन्द्रियैर्जितक्रोधैर्धार्यवैतत्त्वदर्शिभिरिति बाह्याभ्यन्तराणामुभयेषां धारणवि-
धानाच्च ॥ अथवास्तु हंसपरमहंसयोः कथंचित्त्रिदण्डेन सहैकदण्डस्य विक-
ल्पः ॥ विष्णुबौधायनाभ्याम् ॥ एकदण्डीभवेद्वापित्रिदण्डीवामुनिर्भवेदिति ॥ व्यासे-
नापि ॥ त्रिदण्डमेकदण्डंवाव्रतमास्थायतत्त्ववित्॥पर्यटेत्पृथिवींनित्यंवर्षाकालेस्थिरीभ-
वेदिति स्मरणात् ॥ नतु हंसादेस्त्रिदण्डधारणं प्रतिषेद्धुं शक्यमित्यन्यदेतत् ॥ अथ
परिशेषात्त्वया हंसः परमहंसो वा स वक्तव्यः ॥ तत्रापि नाद्यः ॥ कुटीचराद्यव-
स्थोत्तरं तीव्रतरवैराग्ये सत्येव तत्राधिकारात् ॥ तथाच माधवीये " तत्राधिका-
रिविशेषःपुराणेदर्शितः ॥ विरक्तिर्द्विविधाप्रोक्तातीव्रातीव्रतरेतिच सत्यामेवतुतीव्रायां-
न्यसेद्योगीकुटीचरः ॥ शक्तोबहूदकेतीव्रतरायांहंससंज्ञिते ॥ मुमुक्षुःपरमेहंसेसाक्षाद्विज्ञा-
नसाधनः" इति ॥ प्रकृते तु परेण स्वेच्छया प्रव्राजितस्य न विरक्तेर्गन्धोपि कुत-
स्तरां तीव्रा सा कुतस्तमां च तीव्रतरेतिदूरापास्तएव हंसत्वाद्यधिकारः ॥ अपिच म-
दनपारिजाते ब्रह्मवैवर्ते वैराग्योत्पत्तिमानेचसंन्यासेपरियुज्यते ॥ रागवान्नतुविमो-
पिवेदवेदाङ्गवित्तमइति विदुषोप्यविरक्तस्य तत्रानधिकारः किमुताविदुषो बालस्य ॥
किंच हंसवृत्तिर्माधवीये स्कन्दपुराणे हंसःकमण्डलुंशिक्यंभिक्षापात्रं तथैवच ॥ क-
न्थांकौपीनमाच्छाद्यमङ्गवस्त्रंबहिःपटमित्यादिना तदितरापरिग्रहदेवताध्यानार्चनादि-
रूपा दर्शिता ॥ विष्णुरपि यज्ञोपवीतंदण्डंचवस्त्रंजन्तुनिवारणम्॥तावान्परिग्रहःप्रोक्तो-
नान्योहंसपरिग्रहइति ॥ पितामहोपि ॥ हंसस्तृतीयोविज्ञेयोभिक्षुर्मोक्षपरायणः ॥ नि-
त्यंत्रिषवणस्नायीत्वार्द्रवासाभवेत्सदा ॥ चान्द्रायणेनवर्तेतयतिधर्मानुशासनात् ॥ वृ-
क्षमूलेवसेन्नित्यंगुहायांवासरित्तटइति ॥ बौधायनोपि ॥ हंसाःकमण्डलुंशिक्यंदण्डंपा-
त्राणिबिभ्रतः॥ ग्रामतीर्थैकरात्राश्चनगरेपञ्चरात्रकाः॥ त्रिषड्रात्रोपवासाश्चपक्षमासोप-
वासिनः ॥ कृच्छ्रसान्तपनाद्यैश्चमन्त्रैःकृशवपुर्धराइति ॥ प्रकृतपुरुषे तु तद्विरुद्धा छत्र-
चामरादिपरिग्रहराजसेवानगरनिवासादिरूपा वृत्तिः प्रस्तावनाकृतैव वक्ष्यतइतिन त-
त्र तत्त्वसंभावना ॥ नाप्ययं परमहंसः तद्वृत्तेरभावात् ॥ सापि स्कन्दपुराणे प्रतिपा-
दिता ॥ कौपीनाच्छादनंवस्त्रंकन्थांशीतनिवारिणीम् ॥ अक्षमालांचगृह्णीयाद्वैणवंद-
ण्डमव्रणम् ॥ माधूकरमथैकान्नंपरहंसःसमाचरेदिति ॥ दण्डमित्येकवचनं जात्यभि-
प्रायाद्विकल्पाभिप्रायाद्वा ॥ एवमादिप्रतिपादितपरहंसधर्माऽभावान्न स तथा ॥ अधि-
कं त्वग्रे वक्ष्यते ॥ तस्मादाश्रमपरिभ्रष्टएवायमिति निगर्वः ॥

सचा प्राप्तगार्हस्थ्यसुखो विधिं विनैव संन्यासाश्रमपरिग्रहा-
दप्राप्ततत्फलश्चोभयभ्रष्ट एवातो युक्तमेवैतादृशस्य महतां नि-
न्दनमेतादृशाचरणं च ॥ परंत्वेतादृशस्य विद्यालाभ इत्याश्च-
र्यम्॥ प्रारब्धकर्म्मणो बलीयस्त्वादेव तल्लाभः ॥अतएव तेनोक्तं-
स च प्राक्तनसंस्कारवशादिति ॥ तत्र व्याससूत्रशारीरकाध्यय-
नस्यब्रह्मविचाररूपत्वादुपयोगित्वेपि व्याकरणन्यायवैशेषिक-
मीमांसाध्ययनं संन्यासाश्रमस्थानां विक्षेपकारित्वादनुचितमे-
व ॥ उक्तंच तन्मतानुसारिभिः "कृषिवाणिज्यसेवादौ काव्यत-
र्कादिकेषु च॥विक्षिप्यते प्रवृत्ताधीस्तैस्तत्त्वस्मृत्यसंभवात्" इति॥

टीका

अथ प्रस्तावनायां सच*प्राक्तनेत्यादिना संबभूवुरित्यन्तेन दर्शितायां तत्प्रशंसायां क-

---

सहस्राक्ष

*सचप्राक्तनसंस्कारबलादल्पेनैव कालेनाधिगतपाणिनीयगोनर्दीयशास्त्रसर्वस्वोनवद्वीपगमनेन संपादितकणभुक्चरणाक्षसिद्धान्तसंपत् भाट्टप्राभाकरमतपारावारपारदृश्वा व्याससूत्रशारीरकादिनिखिलनिगमान्तपयःपयोधिपारीणःकाश्यादिपत्तनेषु स्वदिग्विजयं नाटयन्दिग्गजइव देशिकमण्डलाखण्डलश्रीशङ्कराचार्यसिद्धान्तसन्मार्गाऽवरोधिनो वादिविटपानामूलं समुत्पाटयँस्तत्तद्देशक्ष्मापालपूजितपादपद्मोऽनेकभूजानिलब्धच्छत्रचामराद्यखिलराजचिन्हउत्तरदिक्स्थशङ्कराचार्याभिमानितामुद्वहन्सकलसद्गुणरत्नरोहणगिरिस्सदानन्दगिरिरित्यभिख्यामलङ्कुर्वन्निखिलदेशावलोकनकौतुकी हरिच्चक्रचंक्रमणक्रमेण समाससाद मेदपाटविषयराजधानीम् ॥ अथ तत्सत्कीर्त्तिश्रवणसमुत्पन्नदर्शनाभिलाषेण योजनपरिमितभूभागं सन्मुखसमागतेनश्रीमच्चन्द्रचूडचरणदत्तावधानेन सद्गुणसंपन्निधानेन सरूपसिंहाभिधानेनोदयपुटभेदनाधिपतिनासमानीय निजनगरं स्वगुरुवर्यतया स्थापितः ॥ तदनन्तरं प्रतिदिनवर्द्धमानप्रतापैर्निजविद्याविभववशीकृतानेकविद्वद्भिस्स्वसिद्धान्तप्रतिपादनपुरस्सरापरमतोत्पाटनप्रबलयुक्तिकप्रचुरप्रबन्धकृद्भिर्वागीश्वरीविहारभूभृद्भिस्तैस्तथा चरितं यथाऽऽकल्पमप्याह्लादिताखिलविद्वद्वरविहङ्गानिस्तापनिर्मलीकृतसमस्तमनुजमानसभूमयस्सत्कीर्त्तिकूलंकषानिर्विरामाभवितारः ॥ येषाञ्चसद्विद्यावैदग्ध्यवाक्पाटवप्रौढप्रतापान्निखिलावनिमण्डलमण्डनानि विद्वन्मण्डलानि न प्रेम्णाद्यापि विस्मरन्ति ॥ कदाचित्तीर्थयात्राप्रसंगवशादुदयपुरं प्राप्ताविद्वांसोगोस्वामिनः श्रीजीवनजिच्छर्माणः समर्पयामासुरात्मरचितां बालकृष्णचंपूमुदयपुरभूजानिसरूपसिंहाय तांविलोक्य सोपि स्वामिनां सकाशे प्रेषयामास तद्विलोकनसमुत्पन्नतत्समागमाभिलाषैश्चयैः समागमायामंत्रिताअपि ते गोस्वामिनः कस्माच्चित्कार्यवशात् प्रयाणप्रणयिनः संबभूवुः ॥

लिपतत्वमाश्रमविरुद्धत्वं चोद्घाटयन्ति ॥ **सचाप्राप्तगार्हस्थ्यसुखइत्यादिना अ-
ग्रेवक्ष्यन्तइत्यन्तेन** ॥ **अप्राप्तगार्हस्थ्यसुखइत्यादि** ॥ षष्ठस्कन्धे दक्षवचनेषु
नानुभूयनजानातिपुमान्विषयतीक्ष्णतामित्यादिकथनाद्धर्मतोगार्हस्थ्यानुभवमन्तराऽऽ-
हत्यसंन्यसने कथंचित्कर्मेन्द्रियसंयमनेपि श्रवणदर्शनादिजन्यविषयसंस्कारविशिष्टम-
नसा स्मरणावश्यंभावान्मिथ्याचारत्वमेवापद्यते ॥ कर्मेन्द्रियाणिसंयम्येतिभगवद्वा-
क्यात् ॥ वस्तुतस्त्ववैधप्रव्राजाश्रयणात्तदाश्रयणोत्तरमपि तद्धर्मानाचरणात्तद्विरुद्धध-
र्माचरणाच्च पातित्यप्रसक्त्या शास्त्रोक्तं संन्यासफलमलभमानोगार्हस्थ्यभैक्षवोभया-
श्रमतउभयलोकतश्च परिभ्रष्टएव ॥ यथाह एकादशस्कन्धे भगवान् ( अ० १८श्लो०
४०।४१ ) यस्त्वसंयतषड्वर्गःप्रचण्डेन्द्रियसारथिः ॥ ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीव-
ति ॥ सुरानात्मानमात्मस्थंनिह्नुतेमांचधर्महा ॥ अविपक्वकषायोऽस्मादमुष्माच्चविही-
यतइति॥ माधवीये च ज्ञानादिरहितप्रव्राजस्य फलमाम्नायते॥काष्ठदण्डोधृतोयेनसर्वा-
शीज्ञानवर्जितः ॥ सयातिनरकान्घोरान्महारौरवसंज्ञितानिति ॥ तत्रैव स्मृतावपि ॥
एकदण्डंसमाश्रित्यजीवन्तिबहवोनराः॥ नरकेरौरवेघोरेकर्मत्यागात्पतन्तितइति॥ नि-
र्णयसिन्धावपीदमुदाहारि ॥ काष्ठदण्डोधृतोयेनेति तु यमवचनत्वेन समग्राहि ॥ **मह-
तां निन्दनमिति** ॥ इदं सहस्राक्षे " शनैःपुराब्राह्मणैः वाल्लभिकृतंविन्मण्डनं"
इत्यादावतिस्फुटीभविष्यति ॥ **एतादृशाचरणमिति** ॥ विद्योपजीवनराजसेवादि-
प्रतिषिद्धाचरणम् ॥ स्वस्य तत्सदृशदुराग्रहलेशस्याप्यभावात्तस्यलेखानुमितं वैदुष्यं
साश्चर्यं स्वीकुर्वन्ति ॥ **परंत्वित्यादिना** ॥ **तेनेति** ॥ प्रस्तावनाकृता ॥ प्रस्तावनायां
सचप्राक्तनेत्यादिनापारीणइत्यन्तेन दर्शितं दूषयन्ति **तच्च व्यासेत्यादिना स्मृत्य-
संभवादितीत्यन्तेन** ॥ अयमत्राशयः यतेर्व्याकरणादिबहुग्रन्थाभ्यासोन्याया-
द्यसच्छास्त्रव्यासङ्गश्च नैव युक्तः॥ "नाभ्यसेद्बहूञ्छब्दान्वाचोविग्लापनंहितत्" इ-
ति प्रतिषेधात्॥ श्रीभागवते च सप्तमस्कन्धे त्रयोदशाध्याये यतिधर्मानुपक्रम्य नारदः
(श्लोक ७-८) नासच्छास्त्रेषुसज्जेतनोपजीवेतजीविकाम्॥ वादवादांस्त्यजेत्तर्कान्पक्षं-
कंचनसंश्रयेत्॥ नशिष्याननुबध्नीतग्रन्थान्नैवाभ्यसेद्बहून्॥नव्याख्यामुपयुञ्जीतनारंभा-
नारभेत्क्वचिदिति॥ किंच यतेरध्ययनमेव प्रतिषिध्यते॥ यथाहपराशरमाधवीये दक्षः॥
नाध्येतव्यंनवक्तव्यंनश्रोतव्यंकदाचन॥ एतैःसर्वैःसुनिष्णातोयतिर्भवतिनेतरइति॥बह्वृ-
चशाखायामपि तृतीयारण्यके द्वादशखण्डे "एतद्धस्मवैतद्विद्वांसआहुर्ऋषयःकावषेयाः
किमर्थावयमध्येष्यामहेकिमर्थावयंयक्ष्यामहे" इति ॥ न्यायादीनामसच्छास्त्रत्वंतु
चतुर्लक्षण्यामविरोधस्य द्वितीयपादे तर्काऽप्रतिष्ठानसूत्रे शिष्टापरिग्रहसूत्रे च स्पष्ट-
मेव ॥ ननु विविदिषुत्वाश्रयणान्नाध्ययनं विरुद्धम् ॥ अस्ति संन्यासिनां विद्वद्विवि-
दिषुभेदाद्द्वैविध्यमितिचेत्सत्यमस्तिद्वैविध्यं तथापि कुटीचरबहूदकयोरेव पाक्षिकं
विविदिषुत्वं नतु हंसपरमहंसयोः॥ साक्षाद्विद्यासाधनइत्यादिविरोधात्॥अयं तु शिखा-
सूत्रत्यागात्परमहंसतया भावत्कैरभिमेयतइति न तस्य तथात्वम् ॥ यत्तु कैश्चिन्प-

रमहंसस्यापि विद्वद्विविदिषुभेदेन द्वैविध्यमुक्तं तत्र मूलं चिन्त्यम् ॥ तैर्दर्शितस्य "एतमेवविदित्वामुनिर्भवत्येवमेवप्रव्राजिनोलोकमिच्छन्तःप्रव्रजन्ति" इतिवाजसनेयिब्राह्मणस्य कुटीचरादिपरतयोपपत्तेः पारहंस्यद्वैविध्ये स्पष्टमानानुपलम्भाच्च ॥ किंच यैस्तद्वैविध्यमङ्गीक्रियते तैरपि विविदिषोरेकदण्डादिधारणमावश्यकमभ्युपगम्यते ॥ सर्वथा विद्वद्दशायामेव तदनावश्यकत्वं चोच्यते ॥ प्रकृतपुरुषस्तु मूलत एव दण्डादिरहितइति नासौ विविदिषुव्यपदेशार्हः ॥ विद्वद्विषयकतया कमलाकरभट्टेनोदाहृतायां "नदण्डंनशिखांनाच्छादनंचरतिपरमहंसः" इति महोपनिषदि ज्ञानमेवास्यदण्डइति वाक्यशेषात् ज्ञानरहितः पिपठिषुस्साच्छादनोयं न विद्वत्पदाभिलप्यः ॥ अपिच विविदिषुसंन्यासेपि " एतत्सर्वंभूःस्वाहेत्यप्सुपरित्यज्यात्मानमन्विच्छेत् " इतिमाधवोदाहृतजाबालश्रुतौ श्रुतचरस्य वेदान्तस्यैव दार्ढ्याय पुनः परिशीलनरूपात्मान्वेषणापरपर्यायमध्ययनं विधीयते " आवृत्तिरसकृदुपदेशात् " इत्यधिकरणे व्रीह्यवघातादिवच्छ्रवणादीनामाफलोदयमावर्त्तनस्य मीमांसितत्वात् ॥ " ऊर्ध्वगमनंविसृजेत्त्रिसंध्यादौस्नानमाचरेत्सान्ध्यंसमाधावात्मन्याचरेत्सर्वेषुवेदेष्वारण्यमावर्त्तयेदुपनिषदमावर्त्तयेत्" इति माधवोपन्यस्तारुणिश्रुतेः ॥ तत्रैव पूर्वं "दण्डमाच्छादनंकौपीनंपरिग्रहेच्छेषंविसृजेच्छेषंविसृजेत्" इतिश्रावणाच्च ॥ नतु तस्यापूर्वमेवाध्ययनं नापि न्यायादीनां विक्षेपहेतूनामध्ययनं विविदिषुसंन्यासे क्वापि विधीयते॥ प्रत्युतप्रतिषिद्धं तद्बृहस्पतिना ॥ नतीर्थवासीनित्यंस्यान्नोपवासपरोयतिः ॥ नचाध्ययनशीलःस्यान्नव्याख्यानपरोभवेदिति ॥ इदं वेदान्तब्रह्ममीमांसातिरिक्तविषयमिति माधवादयः ॥ किंच संन्यासोत्तरं दार्ढ्यार्थं संन्यासगुरोरेव समीपे वेदान्तपरिशीलनमपि संवत्सरमात्रमेवोच्यते नतु वादिविजिगीषया बहुत्र बहुशास्त्राभ्यासः ॥ यथोक्तं लिङ्गपुराणे ॥ आश्रमत्रयमुत्सृज्यप्राप्तस्तुपरमाश्रमम् ॥ यतिःसंवत्सरस्यान्तेप्राप्यज्ञानमनुत्तमम् ॥ अनुज्ञाप्यगुरुंचैवचरेद्धिपृथिवीमिमाम् ॥ त्यक्तसंगोजितक्रोधोलब्धाहारोजितेन्द्रियः ॥ पिधायबुद्ध्याद्वाराणिध्यानेनैकमनाभवेदिति ॥ मत्स्यपुराणेपि ॥ गुरोरपिहितेयुक्तः सतुसंवत्सरंवसेत् ॥ नियमेष्वप्रमत्तस्तुयमेषुचसदाभवेत् ॥ प्राप्यचान्तेततश्चैवज्ञानयोगमनुत्तमम् ॥ अविरोधेनधर्मस्यचरेतपृथिवीमिमामिति ॥ आश्रमत्रयमुत्सृज्येत्युक्त्या अध्ययनस्य पुनः परिशीलनरूपत्वमेवार्थात्फलति ॥ श्रीभागवतेप्येकादशस्याष्टादशाध्याये ( श्लोक ३८।३९ ) दुःखोदर्केषुकामेषुजातनिर्वेदआत्मवान् अजिज्ञासितमद्धर्मोगुरुंमुनिमुपाव्रजेत् ॥ तावत्परिचरेद्भक्तःश्रद्धावाननसूयकः ॥ यावद्ब्रह्मविजानीयान्मामेवगुरुमादृतइति सर्वकामनिर्विण्णस्यात्मवतएव संन्यासेपि पुनर्ब्रह्मधर्मविचारद्वारा ब्रह्मानुभवार्थमेवाभ्यासो विधीयते ॥ यत्तु आत्मज्ञानेशमेचस्याद्वेदाभ्यासेप्रयत्नवानिति तत्र वेदाभ्यासः प्रणवाभ्यासइति मिताक्षरामदनपारिजातादयः ॥ एवंच नवद्वीपगमनादिप्रयासपुरस्सरस्तर्काद्यभ्यासस्तस्मै विक्षेपद्वारा पातित्यहेतुरेव ॥

दिग्विजयादिनाटनमपि धनाद्यर्जनार्थं नटवदेव ॥ किंच दिग्विजयस्य काश्यादिपत्तनेषु केनाप्याप्तेनानुच्यमानत्वेन सद्वादिशाखिनां च प्रतिदिनं वर्द्धमानत्वेन जयपुरबुन्दीकोटाद्युत्तमभूपतिभ्यः स्वमेप्यलब्धच्छत्रचामरत्वेन बाधितार्थमेतद्वाक्यजालम् ॥ यद्वित्वेतत्सर्वं तन्मुखादवगत्य वर्णितं भवेन्न तु स्वयं स्तुत्यर्थं कल्पितं तदाप्विदं तस्मिन्ननृतवादित्वे सत्युत्तरदिक्स्थशङ्कराचार्यसंबन्धिस्पर्द्धावत्त्वं द्योतयदतिपातकित्वमपि संपादयति ॥ तथा चोक्तम् ॥ निषिद्धभक्षणंजैह्म्यमुत्कर्षेचवचोनृतम् ॥ रजस्वलामुखास्वादःसुरापानसमानितु इति महापातकतुल्येषूत्कर्षार्थानृतवचनस्य मिताक्षराकारेण गणितत्वात् ॥

## टीका

अथ प्रस्तावनायां काश्यादिपत्तनेष्वित्यादिं राजधानीमित्यन्तं भागं दूषयन्ति ॥ **दिग्विजयादिनाटनमित्यादिना गणितत्वादित्यन्तेन** ॥ अत्रेदमाकूतम् ॥ प्रस्तावनाकृतैव दिग्विजयं नाटयन्निति कथनान्नटवन्नाटनमेव सिध्यति नतु वास्तवो विजयः ॥ तस्य धनाद्यर्जनार्थत्वं तु राजचिह्नादिप्राप्तिं वर्णयता तेनैव स्पष्टीकृतम् ॥ वस्तुतस्तु यतेर्न वादिविजयोपि योग्यः ॥ वादवादांस्त्यजेत्तर्कानिति दर्शितपूर्वप्रतिषेधात् ॥ मनुरपि ( अध्याय ६ श्लोक ४७।४८।४९ ) अतिवादांस्तितिक्षेतनावमन्येतकंचन ॥ नचेमंदेहमाश्रित्यवैरंकुर्वीतकेनचित् ॥ क्रुध्यन्तंनप्रतिक्रुध्येदाक्रुष्टःकुशलंवदेत् ॥ सप्तद्वारावकीर्णांचनवाचमनृतांवदेत् ॥ अध्यात्मरतिरासीनोनिरपेक्षोनिरामिषः ॥ आत्मनैवसहायेनसुखार्थीविचरेदिह ॥ बृहस्पतिरपि ॥ यस्मिन्वाचःप्रतिष्ठाःस्युःकूपेपास्ताःशिलाइव नवक्तारंपुनर्यान्तिसकैवल्याश्रमेवसेत् ॥ यस्मिन्कामाःप्रविशन्तिविषयेभ्योपसंहृताः ॥ विषयान्नपुनर्यान्तिसकैवल्याश्रमेवसेत् ॥ यस्मिन्क्रोधःशमंयातिविफलःसम्यगुत्थितः ॥ आकाशेसिर्थथाक्षिप्तःसकैवल्याश्रमेवसेत् ॥ यस्मिन्क्षान्तिःशमःशौचंसत्यंसंतोषआर्जवम् ॥ आकिंचन्यमदंभश्चसकै० ॥ वृथालापीचयोनस्यान्नलोकाराधनेरतः नान्यविद्याभियुक्तश्चसकै० ॥ अतीतान्नस्मरेद्भोगांस्तथैवानागतानपि ॥ प्राप्तांश्चनाभिनन्देतसकै० ॥ अन्धवन्मूकवत्पङ्गुबधिरक्लीबवच्चयः ॥ आस्तेव्रजतियोनित्यंसकैवल्याश्रमेवसेदिति ॥ एकादशस्कन्धे च ( अ० १८ श्लोक ३०।३१ ) वेदवादरतोनस्यान्नपाषण्डीनहैतुकः ॥ शुष्कवादविवादे-

नकंचित्पक्षंसमाश्रयेत् ॥ नोद्विजेतजनाद्धीरोजनंचोद्वेजयेन्नतु ॥ अतिवादांस्तितिक्षेतनावमन्येतकंचन ॥ वादिनामुत्पाटनमपि स्वाश्रमविरुद्धम् ॥ तस्याऽभयदानादेव संन्याससिद्धेः परपदलाभोक्तेश्च ॥ यथाहमनुः ( अ० ६ श्लोक ३९।४० ) योदत्वासर्वभूतेभ्यःप्रव्रजत्यभयंगृहात् ॥ तस्यतेजोमयालोकाभवन्तिब्रह्मवादिनः ॥ यस्मादण्वपिभूतानांद्विजान्नोत्पद्यतेभयम् ॥ तस्यदेहाद्विमुक्तस्यभयंनास्तिकुतश्चन ॥ याज्ञवल्क्योपि ( अ० ३ यतिधर्म्म प्र० श्लोक.६ ) सन्निरुद्ध्येन्द्रियग्रामंरागद्वेषौप्रहायच ॥ भयंहत्वाचभूतानाममृतीभवतिद्विजइति॥ किंचाभयदानमन्तरासन्यासएवन सिद्ध्यति ॥ तदितिकर्तव्यतायां तद्विधानात् ॥ तदाह पराशरमाधवनिर्णयसिन्ध्वादिषु कपिलः ॥ विधिवत्प्रैषमुच्चार्यत्रिरुपांशुत्रिरुच्चकैः ॥ अभयंसर्वभूतेभ्योमत्तःस्वाहेत्यधोभुवि ॥ निनीयदण्डशिक्यादिगृहीत्वाथबहिर्व्रजेदिति ॥ अतएव सर्वभूताऽपीडनपुरस्सरंविहरणं मनुनोच्यते (अ० ६ श्लोक५२) क्लृप्तकेशनखश्मश्रुःपात्रीदण्डीकुसुंभवान् विचरेन्नियतोनित्यंसर्वभूतान्यपीडयन्निति॥ कुसुम्भःकमण्डलुः॥ यच्चतत्तद्देशक्ष्मापालपूजितपादत्वं तेभ्यश्छत्रचामराद्यखिलराजचिन्होपार्जनंच वर्णितं तदपि संन्यासोज्ज्वालकमेव॥राजसत्कारादिप्रतिषेधं तु दर्शयति मनुः ( अ०६श्लोक५८) अभिपूजितलाभांस्तुजुगुप्सेतैवसर्वशः॥ अभिपूजितलाभैश्चयतिर्मुक्तोपिबध्यतइति ॥ तथा ( श्लोक ४१) आगारादभिनिष्क्रान्तःपवित्रोपचितोमुनिः ॥ समुपोढेषुकामेषुनिरपेक्षःपरिव्रजेदिति ॥ किंच ( श्लोक ५३।५४ ) अतैजसानिपात्राणितस्यस्युर्निर्व्रणानिच ॥ तेषामद्भिःस्मृतंशौचंचमसानामिवाध्वरे ॥ अलाबुदारुपात्रंचमृन्मयंवैदलंतथा ॥ एतानियतिपात्राणिमुनिःस्वायंभुवोऽब्रवीदिति पात्राण्यप्यल्पमौल्यलभ्यानि प्रतिपाद्य ( श्लोक ५५ ) एककालंचरेद्भैक्षंनप्रसज्जेतविस्तरे ॥ भैक्षेप्रसक्तोहियतिर्विषयेष्वपिसज्जतीति भिक्षायाअपि विस्तारं प्रतिषिध्य ( श्लोक ५७ ) प्राणयात्रिकमात्रःस्यान्मात्रासंगाद्विनिर्गतइतीतरवैभवस्याभावमेव बोधयति ॥ याज्ञवल्क्योपि उक्तस्थले ( श्लोक ४।५) अप्रमत्तश्चरेद्भैक्षंसायाह्नेनाभिलक्षितः॥ रहितेभिक्षुकैर्ग्रामेयात्रामात्रमलोलुपः ॥ यतिपात्राणिमृद्वेणुदार्वलाबुमयानिच ॥ सलिलैःशुद्धिरेतेषांगोवालैश्चावघर्षणमिति ॥ तदेवाह॥बौधायनोपि ॥ दारवंवैणवंवापिमार्दंधातुमयंतवा ॥ पात्रंशिलामयंताम्रपर्णादिमयमेववा ॥ चतुरस्रंवर्तुलंवाप्यासनंदारवंशुभम् ॥ कौपीनाच्छादनंवासःकन्थांशीतनिवारिणी मित्यादि ॥ यमोपि हिरण्मयानिपात्राणिकृष्णायसमयानिच ॥ यतीनांतान्यपात्राणिवर्जयेत्तानिभिक्षुकः ॥ पुनर्बौधायनः ॥ स्वयमाहृतपर्णेषुस्वयंशीर्णेषुवापुनः ॥ भुञ्जीतनवटाश्वत्थकरञ्जानांतुपर्णके ॥ कुम्भीतिन्दुकयोर्वापिकोविदारार्कयोस्तथा ॥ आपद्यपिनकांस्येतुमलाशीकांस्यभोजनः ॥ सौवर्णेराजतेताम्रमयेवात्रपुसीसयोरिति पर्णपुटादौ भोजनं विदधाति कांस्यादिपात्राणि च निषेधति क्वपुनाराजचिन्हस्यावसरः ॥ वैभवाभावादेवभिक्षापात्रेणापि भोजनं विदधाति मदनपारिजातादिषु देवलः "तद्भैक्षंगृहीत्वैकान्तेतेनपात्रेणाऽन्येनवातूष्णींभुञ्जीत" इति ॥

तथा देशविशेषस्थाचार्याभिमाननिखिलदेशावलोकनकौतुके अपि मव्राजस्य विभूषणे ॥ ज्ञानामृतेनतृप्तस्यकृतकृत्यस्ययोगिनः ॥ नैवास्तिकिञ्चित्कर्त्तव्यमस्तिचेन्नसर्वविदिति माधवाद्युदाहृतस्मृत्यादिषु कर्तव्यस्य प्रतिषेधात्तादृशस्यैव दण्डशिखादित्यागयोग्यताभिधानाच्च ॥ एतत्सर्वं तदुक्तमभ्युपेत्य वदामः ॥ वास्तवंभूतार्थमाहुः ॥ **किंच काश्यादीत्यादिना जालमित्यन्तेन ॥ अनुच्यमानत्वेनेति** ॥ तत्समानकालिका अपि काशीस्थाः सर्वे विद्वांसोन्ये चामाः केपि वाराणस्यां तदागमनमपि नविदन्ति बहवस्तन्नामापि न जानते क्व तर्हिस्वमोपि दिग्विजयस्येति भावः ॥ **सद्वादिशाखिनामिति** ॥ प्रस्तावनाकारोविटान्पान्तीति दुष्टार्थान्तरमभिप्रेत्य विटपशब्दं प्रायुङ्क्त ॥ इह तु तन्निरसितुं श्लेषेणवेदशाखासंबन्धं वेदमार्गवर्त्तिनां तापहरणच्छायाऽऽचरणफलवितरणश्रमश्रमसमुद्धरणप्रभृतिविविधोपकरणचणतां शरणप्राप्तद्विजादिभरणभावं च ध्वनयितुं शाखिपदमुपात्तम् ॥ स्पष्टमन्यत् ॥ **तथाचोक्तमिति** ॥ तृतीयाध्याये कर्मविपाकपूर्वकपातकपरिगणनप्रकरणे (श्लोक२३) याज्ञवल्क्येनोक्तमित्यर्थः ॥ अत्र उत्कर्षइति सप्तम्या निमित्तार्थत्वे विज्ञानेश्वरसंमतिं बोधयितुमाहुः॥**महापातकेत्यादि**॥**गणितत्वादिति**॥ इदं संपादयतीति पूर्वत्र हेतुतयान्वेति॥ महापातकसमानामतिपातकत्वंतूपपातकमिताक्षरायां महापापंचातिपापमितिस्मृतेः॥ अथ प्रस्तावनायां तत्सत्कीर्त्तीत्यादिना संबभूवुरित्यन्तेन दर्शितं दूषयन्ति॥ **उदयपत्तनाधिपस्येत्यादिना वचनादित्यन्तेन**॥

उदयपत्तनाधिपस्य नगरे स्थितिरुत्कर्षहेतुत्वेन प्रतिपादितापि वस्तुतोऽपकर्षहेतुरेव ॥ तुर्याश्रमिणां तस्या अविहितत्वात् प्रत्युत निषिद्धत्वाच्च ॥ उक्तं च सर्वभूतहितःशान्तस्त्रिदण्डीसकमण्डलुः ॥ एकारामःपरिव्रज्यभिक्षार्थीग्राममाश्रयेत् ॥ मिताक्षरायां च "भिक्षा प्रयोजनार्थं ग्राममाश्रयेन्नप्रविशेन्नपुनः सुखनिवासार्थम्" ॥ ऊर्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासीतिशङ्खस्मृतिरपि ॥ एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकमिति कण्वेनाप्युक्तम् ॥ किंच नृपान्नभक्षणविद्योपजीवित्वराजाश्रितत्वादिकमपि स्वधर्म्महानिकरमेव ॥ तथा चोक्तं मनुना ॥ नचोत्पातनिमित्ताभ्यांननक्षत्राङ्गविद्यया ॥ नानुशासनवादाभ्यांभिक्षांलिप्सेतकर्हिचित् ॥ संवर्त्तः ॥ अष्टौभिक्षाःसमा-

दायसमुनिःसप्तपश्चत्रा ॥ अद्भिःप्रक्षाल्यताःसर्वास्ततोऽश्नीयाच्च-वाग्यतः ॥ तथाच सर्वाश्रमोत्तमंचतुर्थमाश्रममारूढे विद्यो-पजीवित्वनृपाश्रितत्वविवादकर्तृत्वादींस्तुरीयाश्रमिणां पतितत्व-संपादकांस्तस्मिन्दर्शयता एकारामत्वादींश्चादर्शयता तस्मिन्ना-रूढपतितत्वं सम्यकृतया संपाद्यते विहितस्याननुष्ठानान्निषिद्ध-स्यचसेवनात्॥ अनिग्रहाच्चेन्द्रियाणांनरःपतनमृच्छतीतिवचना-त् ॥ यथा पित्तपीतिमदूषितचक्षुषाशङ्खं पीतमिव पश्यता धव-लोपि शङ्खः पीत इत्युच्यते एवमनेनापि स्वनिष्ठारूढपतितत्वदू-षितदृदा सज्जनानारूढपतितानिव जानता सत्कर्म्मनिष्ठा अ-प्यारूढपतिता इत्यग्रे वक्ष्यन्ते ॥

## टीका

अयं भावः॥राज्ञःसम्मुखगमनादिकं तु पूर्ववत्प्रशंसार्थं मनोराज्यविजृम्भितमेव॥ता-त्कालिकतत्रत्यराजकीयजनतानुभवागोचरत्वात् ॥ तत्त्वं तु राज्ञा आजीविकां दत्वा स्वाश्रितविद्वत्त्वेन स्थापितइत्येव ॥ या च राजगुरुतया स्थितिरुत्कर्षायाकल्पि सा-तदाश्रमविरोधात्प्रत्युतापकर्षमेवापादयति॥ **उक्तं चेति** (अध्याय ३ यतिधर्मप्रक-रणे श्लोक ३ ) याज्ञवल्क्येनेति शेषः॥ सुखनिवासार्थमित्यन्तोमिताक्षराग्रन्थः॥ मू-लोक्तं कण्ववचनादिकंतु मिताक्षरामाधवीयमदनपारिजातादिषूदाहृतमेवेति नामूल-त्वशङ्कावकाशः ॥ मनुरपि यतेःसर्वदैकाकित्वाऽनिकेतनत्वादिकमन्नार्थमेव ग्राम-मेवशं च वदति॥ (अ० ६ श्लोक ४२-४३ ) एकएवचरेन्नित्यंसिद्ध्यर्थमसहाय-वान्॥ सिद्धिमेकस्यसंपश्यन्नजहातिनहीयते॥ अनग्निरनिकेतःस्याद्ग्राममन्नार्थमाश्र-येत्॥ उपेक्षकोऽशङ्कुसुकोमुनिर्भावसमन्वितः॥ अशङ्कुसुकःस्थिरमतिरिति कुल्लू-कभट्टः ॥ असंचायकइत्यन्ये॥ पुनः सएव ( श्लोक ५९-६० ) अल्पान्नाभ्यवहारे-णरहस्थानासनेनच ॥ ह्रियमाणानिविषयैरिन्द्रियाणिनिवर्त्तयेत्॥ इन्द्रियाणान्निरोधे-नरागद्वेषक्षयेनच ॥ अहिंसयाचभूतानाममृतत्वायकल्पतइति ॥ एकादशस्कन्धे (अ० १८ श्लोक २०-२१ ) एकश्चरेन्महीमेतांनिस्संगःसंयतेन्द्रियः ॥ आत्मक्रीडआत्मर-तआत्मवान्समदर्शनः ॥ विविक्तक्षेमशरणोमद्भावविमलाशयइति॥ तथा ( श्लोक २४-२५ ) पुरग्रामव्रजान्सार्थान्भिक्षार्थंप्रविशंश्चरेत् ॥ पुण्यदेशसरिच्छैलवनाश्र-मवतींमहीम् ॥ वानप्रस्थाश्रमपदेष्वभीक्ष्णंभैक्ष्यमाचरेत्॥ संसिध्यत्याश्वसम्मोहः

शुद्धसत्वशिलान्धसा ॥ सप्तमस्कन्धे ( अ० १३ श्लोक ९ ) कल्पस्त्वेवंपरिव्र-
ज्यदेहयात्रावशेषितः ॥ ग्रामैकरात्रविधिनानिरपेक्षश्चरेन्महीम् ( श्लोक ३ ) एकएव-
चरेद्भिक्षुरात्मारामोनपाश्रयः ॥ सर्वभूतसुहृच्छान्तोनारायणपरायणइति ॥ मदनपा-
रिजाते पराशरविवरणे च मत्स्यपुराणे ॥ अष्टौमासान्विहारःस्याद्यतीनांसंयतात्मना-
म् ॥ एकत्रचतुरोमासान्वार्षिकान्निवसेत्पुनरिति ॥ माधवीयमिताक्षरादिषु दक्षः ॥
एकोभिक्षुर्यथोक्तस्तुद्वावेवमिथुनंस्मृतम् ॥ त्रयोग्रामःसमाख्यातऊर्ध्वंतुनगरायते ॥
नगरंनहिकर्तव्यंग्रामोपिमिथुनंतथा एतत्त्रयंचकुर्वाणःस्वधर्माच्च्यवतेयतिः ॥ राज-
वार्ताहितेषांचभिक्षावार्त्तापरस्परम् ॥ स्नेहपैशुन्यमात्सर्यसन्निकर्षान्नसंशयइति रा-
जवार्तादेः स्नेहादेश्च संभवात्परिव्राजकान्तरस्यापि संगंप्रतिषेधति क्व पुनर्नगर-
निवासपूर्वकराजादिसंगस्यावसरः ॥ माधवीये श्रुतिः "वर्षासुध्रुवशीलोऽष्टौमासए-
काकीचरेत्"इति ॥ बौधायनः ॥ विधूमेसन्नमुसलेव्यङ्गारेभुक्तवज्जने ॥ कालेपराह्ण-
भूयिष्ठेभिक्षाटनमथाचरेत् ॥ ऊर्ध्वंजान्वोरधोनाभेःपरिधायैकमम्बरम् ॥ द्वितीयमन्तरं-
वासःपात्रीदण्डीचवाग्यतइत्युपक्रम्य सूर्योपस्थानं जपं चोक्त्वा भिक्षापात्रादिशुध्य-
र्थमुपमुच्याप्युपानहौ ॥ ततोग्रामंव्रजेन्मन्दंयुगमात्रावलोककः ॥ ध्यायन्हरिंचत-
च्चित्तइदंचसमुदीरयेदितिभिक्षार्थमेव ग्रामप्रवेशं तत्राप्यटनभिक्षाग्रहणयोः प्रकारं
च विस्तरेण दर्शयित्वा प्राणयात्रिकमन्नंतुभिक्षेतविगतस्पृहइति तदतिरिक्तापरिग्रहं
बोधयति ॥ किंच नृपादेरेकस्यैवाश्रयेण भिक्षासंपादनं निन्दति सएव ॥ एकान्नलोभा-
द्योभिक्षुःपरिपूरणमिच्छति॥ दातास्वर्गमवाप्नोति भोक्ता भुञ्जीतकिल्बिषमिति॥ यमोपि॥
स्नात्वाशुचिःशुचौदेशेकृतजप्यःसमाहितः ॥ भिक्षार्थीप्रविशेद्ग्रामंरागद्वेषविवर्जितम् ॥
चरेन्माधुकरंभैक्षंयतिर्म्लेच्छकुलादपि ॥ एकान्नंनचभुञ्जीतबृहस्पतिसमोयदि ॥ मेध्यं-
भैक्षंचरेन्नित्यंसायाह्नेवाग्यतःशुचिः ॥ एकवासाविशुद्धात्मामन्दगामीयुगान्तदृक् ॥ य-
थालब्धंतदश्नीयात्प्राज्यसंस्कारवर्जितम् ॥ भैक्षंमाधुकरन्नामसर्वपातकनाशनमिति ॥
अत्र एकान्नभक्षणनिषेधे तात्पर्यं नतु म्लेच्छकुलाद्भैक्षग्रहणे ॥ अतएव बौधायनः ॥
ब्राह्मणक्षत्रियविशांमेध्यानामन्नमाहरेत्॥ असंभवेतुपूर्वस्याप्याददीतोत्तरोत्तरम् ॥ सर्वे-
षामप्यभावेतु भक्तद्वयमनश्नता ॥ भैक्षंशूद्रादपिग्राह्यंरक्ष्याःप्राणाविजानतेति ॥ अत्र सा-
धारणक्षत्रियादन्नग्रहणमपि ब्राह्मणालाभएवोच्यते ॥ अपिच माधवीये जाबालश्रु-
तौ सर्ववस्तुत्यागमुक्त्वा "यथाजातरूपधरोनिर्द्वन्द्वोनिष्परिग्रहस्तत्त्वब्रह्ममार्गेसम्यक्-
संपन्नःशुद्धमानसःप्राणसंधारणार्थंयथोक्तकालेविमुक्तोभैक्षमाचरन्करपात्रेणलाभा-
लाभौसमौभूत्वाशून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलि-
नगिरिकुहरकंदरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयतोनिर्ममःशुक्लध्यानपरायणो-
ऽध्यात्मनिष्ठोशुभकर्मनिर्मूलनपरःसंन्यासेनदेहत्यागंकरोतिसपरहंसोनाम" इत्याच्छा-
दनादिपरिग्रहश्रमस्थित्यादिकं परमहंसस्य प्रतिषिध्यते ॥ अभिपूजितलाभादिनिषे-
धाश्च प्रागेव दर्शिताः ॥ अतोराजाश्रयादौद्धत्यमाश्रित्य नगरे चिरं स्थितिःसर्वदा-

तदन्नाशनं तदा तत्रत्यैरनुभूतं वैष्णवानां तुलसीकाष्ठमालोर्ध्वपुण्ड्रादेर्बलादपलोपनं च तस्य पातित्यसंपादकमेव ॥ विहिताननुष्ठानप्रतिषिद्धाचरणादौ पातित्यस्मरणात् ॥ **किंच नृपान्नेत्यादि**॥ राजान्नादिप्रतिषेधस्तु यमस्मृतौ चतुर्थाध्याये (श्लोक ५९ ) राज्ञांप्रतिग्रहस्त्याज्योलोकत्रयजिगीषुभिः ॥ राज्ञःप्रतिग्रहाच्चैवब्राह्मण्यंहिविलुप्यतइति ॥ अत्रिस्मृतौ ॥ अधीत्यचतुरोवेदान्सर्वशास्त्रार्थतत्त्ववित् ॥ नरेन्द्रभवनेभुक्त्वाविष्ठायांजायतेकृमिरिति ॥ **नचोत्पातनिमित्ताभ्यामिति** ॥ इदं षष्ठाध्याये ( श्लो०५० )· अस्ति ॥ तथाच विद्ययोपजीवनं त्वदुक्तरीत्या गुरुत्वेनानुशासनं वादकरणं च प्रतिषिद्धाचरणरूपमेवेति सिद्धम् ॥ प्रतिषेधबाहुल्यं तु ॥ प्रागेव प्रापश्चि नचोत्पातेत्यस्याविद्योपजीवनादिप्रतिषेधपरत्वं तु माधवविज्ञानेश्वरमेधातिथिप्रभृतयोऽव्याचक्षतएव॥ भिक्षालब्धान्नमात्रस्याशने तस्याधिकारं बोधयितुं संवर्त्तवचनमाहुः ॥ **अष्टौभिक्षाइति** ॥ इदमपिमिताक्षरामाधवीयमदनपारिजातादिषु स्फुटं संगृ- [illegible] भिक्षाण्यसंकल्पितसप्तागारेभ्यएव संपाद्या नत नित्यं राजगृहात् ॥ यथाह [illegible]

प्रागानसंकृप्तांस्तुष्येल्लब्धेनतावतेति ॥ भिक्षाविषयेऽपि विशेषस्तु प्रागवादीश ॥ यत्तु प्रस्तावनायां तदनन्तरमित्यादिना विस्मरन्तीत्यन्तेन विवादकर्तृत्वादिकमुक्तं तदप्येतेनैवापास्तम् ॥ प्रचुरप्रबन्धकर्तृत्वंतुमिथ्यैव भाति ॥ शैवसुधाकरातिरिक्तत्प्रबन्धानुपलम्भात् ॥ सुधाकरे च प्रबलयुक्तिकत्वाभावात् ॥ प्रायेण तत्खण्डनं तु मत्कृते सत्सिद्धान्तमार्तण्डे द्रष्टव्यम् ॥ नापि निखिलावनीमण्डलस्थपण्डितमण्डलीनिःशेषा तदभिधानमपि श्रवणातिथीकृतवती क्व पुनः सर्वदा स्मरणसंभावना ॥ यच्च कदाचिदित्यादिना गोस्वामिश्रीजीवनजीमहाराजानां वृत्तं वर्णितं तदप्यन्यथाकारमेव ॥ तथाहि ॥ श्रीमद्वल्लभाचार्यवंशमुक्तामणयः पण्डितवैतण्डमण्डलमूर्द्धमण्डनकराः श्रीजीवनजीमहाराजाः पुरुषोत्तमपुरपर्यन्तप्राच्यतीर्थसार्थयात्रापवित्रगात्रास्तत्फलतया श्रीमद्गोवर्द्धनोद्धरणचरणपरिचरणमभिलषन्तः श्रीनाथद्वारमागच्छन् ॥ ततश्चिरादाकर्णितभृशविशदयशस्कानाचार्यांस्तान् भक्त्या दिदृक्षमाणो भूपभूपः स्वरूपसिंहाभिधो विविधोचिताचारसत्कारप्रकारप्रणयी सादरं समाह्वत॥ तदा तदाऽऽकारणं सद्धर्मशर्म्मकारणंसफलयितुं सदयमुदयपत्तनमलंकुर्वाणास्ते स्वसंदर्शनविदितामन्दानन्दायानन्ताकान्तवृन्दारकवृन्दपुरन्दराय तस्मै मूर्तामिवाशिषं स्वप्रणीतां श्रीबालकृष्णाचंपूमपस्पृशन् ॥ ततः समहाक्षितस्तत्कृत्यचक्षुः सत्कृत्य तान्यथार्हं विसृज्य तत्प्रत्तप्रबन्धप्रमेयं जिज्ञासमानः स्वाश्रितसदानन्दगिरेः करे तत्पुस्तकमदात् ॥ सोऽपि मदादिवर्जितस्य तस्य सागरांबराकान्तस्य तेषु तादृशं भृशं स्वविवित्सितविषयावरोधिनं विनयप्रणयप्रकर्षं प्रेक्ष्य श्रीमत्सरं स्वहृदयाकल्पीकुर्वन्नुर्वीजानेस्तेष्वरुचिमुत्पिपादयिषन्निःशेषएषनिबन्धोधनेशबन्धोरमन्दया निन्दया पूर्णइति तूर्णमचकथत् ॥

अथ श्रीगोवर्द्धनधरमेकलिङ्गेश्वरंचपरंपरया भजतोहरिहराऽभेदविदोममहस्ते हिमरश्मिमस्तकनिन्दाग्रन्थपुस्तकं यद्विश्राणितं तत्तैरनुचितमनुष्ठितमिति दूयमानमानसः पुनस्तान्न समाचीकरत् ॥ ततोयतिस्तैर्महाराजैस्सममहं वादरणे नवाऽऽदरणवानस्मि यदि ते भूयोभ्येष्यन्तीति कौश्चन मानवान्मानवानवादीत् ॥ इदं कर्णाकर्णिकयाऽऽकर्ण्य ते महाराजा नास्मिन्ग्रन्थे लवस्यापि सम्भवोभवनिन्दायाः यदिचावनीवल्लभः पुनराह्वयेत्तर्हि तदेतदुपपादयितुं सिद्धोहमिति व्याहार्षुः ॥ तदेतदवगतवतापि क्षितिभृता स्वसम्मतयोः शैववैष्णवमतयोर्वादोत्पादनमरोचयता भूयस्ते न समाकारिषत इति तात्कालिकतत्रत्यामवदनादवगम्यते ॥ सा चम्पूश्च मुद्रितेदानीमुपलभ्यतएवेति तत्र शिवनिन्दायाअभावस्तु स्वयमेव विद्वद्भिरवगंस्यते ॥ प्रस्तावनायां " कस्माच्चित्कार्यवशात् " इत्यत्र तु कस्यचित्कार्यस्यवशादिति रम्यम् ॥ समासादेकार्थीभावापन्ने कार्ये कस्माच्चिदित्यस्य विशेषणतयान्वये सामर्थ्याभावात् ॥ अन्यथा चक्रवर्तिनोराजपुरुषइत्यपि शक्येत प्रयोक्तुम् ॥ कस्माच्चिदित्यपरिज्ञानं तु कार्यस्यैवाऽवगम्यते॥ अथ मूले एतावता सिद्धमर्थमाह ॥ **तथाच सर्वेत्यादिना वक्ष्यन्तइत्यन्तेन** ॥ **एकारामत्वादीनिति** ॥ एकारामः परिव्रज्येत्यादौ याज्ञवल्क्याद्विभिर्दर्शितान् ॥ **आरूढपतितत्वमिति**॥ अत्र माधवीये मेधातिथिः ॥ श्रद्धयापरयोपेतःपरमात्मपरायणः ॥ स्थूलसूक्ष्मशरीराभ्यांमुच्यतेदशषड्कवित् ॥ त्रिदण्डंकुण्डिकांकन्थांभैक्षभाजनमासनम् ॥ कौपीनाच्छादनंवासः षडेतानिपरिग्रहेत् ॥ स्थावरंजङ्गमंबीजंतैजसंविषमायुधम् ॥ षडेतानिनगृह्णीयाद्यतिर्मूत्रपुरीषवत् ॥ रसायनक्रियांवादंज्यौतिषंक्रयविक्रयम् ॥ विविधानिचशिल्पानिवर्जयेत्परदारवत् ॥ भिक्षाटनंजपःस्नानंध्यानंशौचंसुरार्चनम् ॥ कर्तव्यानिषडेतानिसर्वथानृपदण्डवत् ॥ नापदिमेक्षणंलुब्धंमदांसुत्वदांतथा ॥ भक्ष्यंभोज्यमुदक्यांचषण्नपश्येत्कदाचन ॥ स्कंधावारेखलेसार्थेपुरेग्रामेचसद्गृहे ॥ नवसेतयतिःषट्सुस्थानेष्वेतेषुकर्हिचित् ॥ रागंद्वेषंमदंमायांदम्भंमोहंपरात्मसु ॥ षडेतानियतिर्नित्यंमनसापिनचिन्तयेत् ॥ मञ्चकंशुक्लवस्त्रंचस्त्रीकथालौल्यमेवच ॥ दिवास्वापश्चयानंचयतीनांपतनानिषट् ॥ संयोगंचवियोगंचविभोगस्यचसाधनम् ॥जीवेश्वरप्रधानानांस्वरूपाणिविचिन्तयेत् ॥आसनंपात्रलोपश्चसंचयःशिष्यसंग्रहः ॥दिवास्वापोवृथाजल्पोयतेर्बन्धकराणिषट् ॥ एकाहात्परतोग्रामेपञ्चाहात्परतःपुरे ॥ वर्षाभ्योन्यत्रयत्स्थानमासनंतदुदाहृतम् ॥ उक्तानांयतिपात्राणामेकस्यापिनसंग्रहः ॥ भिक्षोर्भैक्षभुजश्चापिपात्रलोपःसउच्यते ॥ अजिह्वःपण्डकःपङ्गुरन्धोबधिरएवच ॥ मुग्धश्चमुच्यतेभिक्षुःषड्भिरेतैर्नसंशयः ॥ इदंमिष्टमिदंनेतियोश्नन्नपिनसज्जति ॥ हितंसत्यंमितंवक्तितमजिह्वंप्रचक्षते ॥ सद्योजातांयथानारींतथाषोडशवार्षिकीम् ॥ शतवर्षांचयोदृष्ट्वानिर्विकारःसपण्डकः ॥ भिक्षार्थमटनंयस्यविण्मूत्रकरणायच ॥ योजनान्नपरंयातिसर्वथापङ्गुरेवसः ॥ तिष्ठतोव्रजतोयातियस्यचक्षुर्नदूरतः ॥ चतुर्युगांद्भुवंत्यक्त्वापरिव्राट्सोन्धउच्यते ॥ हिताहितंमनोरामंवचः

श्लोकावहंतुयत् ॥ श्रुत्वायोनशृणोतीवबधिरःसप्रकीर्तितः ॥ सान्निध्येविषयाणांयःसमर्थोविकलेन्द्रियः ॥ सुप्तवद्वर्त्ततेनित्यंसभिक्षुर्मुग्धउच्यतइति ॥ तथाच षडतिरिक्तानां राजचिह्नानां परिग्रहात् वादादिप्रतिषिद्धाचरणात् भिक्षाटनादिविहिताकरणात् प्रतिषिद्धनिवासात् परेषुरागद्वेषादिविधानात् सर्वदागमनार्थयानस्यैवनिषेवणात् आसनादिप्रणयनमत् प्रकृतग्रन्थे शैवसुधाकरे वादेषु चाहितासत्यामितभाषणात् वादार्थमटनात् मुग्धत्वाभावाच्च तस्मिन्नारूढपतितत्वमसंदिग्धमेव ॥ सच द्वारकाप्रान्तप्रवेशोत्तरं राजधानीषु प्रायः शिबिकायामेव स्थितिमभिनिविशानस्तत्प्रान्ते जामनगरान्निर्गमनावसरे बहुवसुव्ययतोपि शिबिकावाहकपुरुषाऽलाभाद्धाटकलब्धानडुच्छकटोपरि स्वशिबिकां बध्वा तामधिष्ठाय ततोनिरगादित्येवंविधा यानाभ्यासप्रभृतयः पतनहेतवस्तस्मिन्बहुभिरेवसन्त्यनुभूताइति किंतत्कथनेन ॥ अतएवोक्तं **सम्यक्कृतयेति** ॥ पातित्ये प्रमाणान्तरमाहुः ॥ **विहितस्येति** ॥ **वचनादिति** ॥ तृतीयाध्याये कर्मविपाकपूर्वकपातकपरिगणनप्रकरणे ( श्लोक १३ ) याज्ञवल्क्यवचनादित्यर्थः ॥ मनुरपि ( अ० ११ श्लोक ४४ अकुर्वन्विहितंकर्मनिन्दितंचसमाचरन् ॥ [illegible] श्चेन्द्रियार्थेषुप्रायश्चित्तीयतेनरः॥ [illegible]

एवं [illegible]

नादी [illegible] निःसरणप्रतिबन्धकाश्च कुर्वाणेन स्वनिःसरणस्यापि दुर्विभाव्यत्वात् प्रज्ञाविरहिणां संसारकूपान्निःसारणं दूरापास्तम् ॥ स्वयमसिद्धः कथं परान्साधयेदिति न्यायात्॥किंच श्रीवल्लभसिद्धान्तखण्डनाय संतोषरामनामकस्य प्रार्थनमुपशमशीलानां प्रवृत्तिश्चेति द्वयमपि स्वरूपहानिकरम् ॥ श्रीवल्लभसिद्धान्तस्य वज्रदृढत्वाच्च ॥

## टीका

एवं वृथाप्रशंसां दूषयित्वा प्रस्तावनायां एवमनेकेत्यादिना रचयामासुरित्यन्तेन

---

## सहस्राक्ष

* एवमनेकप्रतिद्वंद्विविद्वदनुभूतप्रौढप्रतापाः प्रत्यक्कुरुस्थतीर्थयात्राप्रसङ्गेन सौराष्ट्रभूभागं भूषयन्तोभावनगरक्षितिजानिमान्येन वेदशिखरनिहितनिष्ठेन चमत्कारनगरनिवासिनागरगृहस्थविप्रेण सन्तोषरामनामकेन श्रीवल्लभसिद्धान्तखण्डनपूर्वकाद्वैतसिद्धान्तमण्डनाय प्रार्थितास्सन्तस्स्वयमुपशमशीलाअपि प्रज्ञाविरहिणां संसारकूपाद्बहिर्निःसारणं स्वधर्मं जानन्तस्समवलोक्य तदीयाणुभाष्यविद्वन्मण्डनशुद्धाद्वैतमार्त्तण्डादीन्ग्रंथान् परार्थमेव धृतशरीरास्ते श्रुतिस्मृत्यविरुद्धानेकप्रौढोक्तिभिः प्रथमत श्शुद्धाद्वैतमार्त्तण्डमनन्तरञ्च विद्वन्मण्डनं सटीकं खण्डयन्तस्सहस्राक्षनामकमपूर्वनिबन्धमिमंरचयामासुः ॥

दर्शितं ग्रन्थकरणे हेतुं सप्रशंसं दूषयन्ति ॥ **एवंचभावनगरेत्यादिना दृढ-त्वाच्चेत्यन्तेन** ॥ अत्र प्रस्तावनायां अनेकप्रतिद्वन्द्वीत्यादिप्रथमविशेषणेन निर्वै-रत्वाभयदानोपशमशीलत्वादिभ्यः सभ्यक्तिलाञ्जलिरदायि ॥ सौराष्ट्रदेशे नगरविशेषे तीर्थत्वानास्पदे भावनगरे धनिकाश्रयफल्कनिवासस्य वर्णनेन वारुणीतीर्थया-त्रापि साध्वी समर्थिता मूले ॥ **नागरनगरेति** ॥ नागरसंबन्धि तदधिष्ठितं य-न्नगरमित्यर्थः ॥ **पतनेत्यादि** ॥ नगरनिवासखण्डनमण्डनादीनां पतनहेतुत्वं नि-स्सरणप्रतिबन्धकत्वं चोपन्यस्तचराद्यनेकप्रमाणसिद्धमेव ॥ **कुर्वाणेनेति** ॥ अ-स्य निस्सारणमित्यग्रिमे कर्तृतयान्वयः ॥ उभयप्राप्तौ कर्मणीत्यनेन विरहिणामि-ति कर्मणि षष्ठीसत्वात् कर्त्तरि तृतीया॥ गवांदोहोगोपेनेत्यादिवत्॥ **स्वरूपहानिक-रमिति** ॥ राज्ञाधिकारे नियुक्तानां कस्मिंश्चिदपि धर्मे द्वेषस्यायोग्यत्वादुपनिषन्नि-ष्ठस्य च सर्वथा तदसंभवात्प्रथमस्य स्वरूपहानिः ॥ लोभःप्रवृत्तिरारंभइति स्मृत्या प्रवृत्तेरजःकार्यत्वाद्रजसा सत्त्वोपमर्दनिश्चयेनोपशमभङ्गापत्तेर्द्वितीयस्य सा ॥ नच परोपकाराय खण्डनाद्यारंभोनानुचितइति वाच्यम् ॥ माधवेन " हिताचरणंनामाहिं-सानुष्ठानमात्रंनपुनरुपकारेषुप्रवृत्तिः हिंसानुग्रहयोरनारंभइतिगौतमस्मरणात् " इ-त्युक्तेः ॥ ( अ० ३ यतिधर्मप्रकरणे श्लोक ३ ) सर्वभूतहितःशान्तइत्यत्र विज्ञानेश्व-रेणापि तथैव विवरणाच्च ॥ नारंभानारभेत्क्वचिदित्यादिप्रतिषेधदर्शनाच्च ॥ अपिच ( अ०६ श्लो०४४ ) कपालंवृक्षमूलानिकुचेलमसहायता ॥ समताचैवसर्वस्मिन्नेतन्मु-क्तस्यलक्षणमिति मन्वाद्युक्तलक्षणाभावादुपशमशीलत्वादिकथनमुपचारमूलकमेव ॥ ( अ० ६ श्लोक ६६ ) नलिङ्गंधर्मकारणमिति मनुना केवलवेशस्यासाधकत्वस्म-रणात्प्रकृतपुरुषे दृढवादित्वेहाविशिष्टत्वादिधर्मदर्शनेन मनुदक्षादिस्मृतवाग्दण्डाद्यान्त-रधर्माभावनिश्चयाच्च ॥ वाग्दण्डादिस्वरूपं तु दक्षेणोक्तम् ॥ वाग्दण्डेमौनमातिष्ठेत्कर्म-दण्डेत्वऽनीहताम् ॥ मानसस्यतुदण्डस्यप्राणायामोविधीयतइति॥ **वज्रदृढत्वादिति**॥ वज्रइवदृढस्तत्त्वात् ॥ उपमानानिसामान्यवचनैरिति समासः तथाचाशक्यार्थप्रार्थना तत्र प्रवृत्तिश्चायोग्यैवेति भावः ॥ ग्रन्थस्य खण्डनाभासरूपत्वन्तु प्रागुक्तम् ॥ दर्शयि-ष्यते च तथा ॥

श्रीवल्लभमतानुयायिनो मथुरादासवर्म्मण एतादृशग्रन्थप्रसि-द्धिकर्तृत्वमपितन्मताननुयायित्वमेव व्यनक्ति ॥ प्रचुरकाला-तिक्रमणेनाप्यनुन्मूलनीयमूलत्वं प्रचण्डवातातपैरप्यलोपनीय-लावण्यत्वं सकललोकलोचनानन्दजनकत्वमित्यादिभिरारो-प्यमाणगुणैः परैस्तोष्टूय्यमानोपि स्मरणस्तम्भत्वेनाभिमतो-प्येकेनैव श्रीवल्लभवंश्येन परीक्षणार्थं हसता मन्दं स्पृष्ट एव

कीटाकीर्णविशिर्णजीर्णतरस्थूणेव स्वल्पकालेनाप्युन्मूलनीयमूलत्वं फूत्कारेणाप्यपलोपनीयलावण्यत्वमारोपयितॄणामपि पश्चात्तापाद्यनेकदुःखोत्पादकत्वं सर्वजनोपेक्षणीयत्वमित्यादीन्साहजिकान्गुणान्प्रदर्शयन् स्तोतॄंश्च क्षेपयञ्छतधाभिद्यमानो निपपातेति ॥ तच्च श्रुतिस्मृत्युक्तसंन्यासाश्रमधर्मप्रतिपालनरहितस्य तन्निषिद्धाचरणशीलस्य केवलं शिखासूत्रवर्जनकाषायवस्त्रपरिधानाभ्यामेव मस्करित्वेन प्रतीयमानस्य न लज्जाकरमस्ति ॥ प्रत्युत आपातालतलप्ररूढमूलसकललोकव्याप्तप्रकाण्डश्रीवल्लभसिद्धान्तशाखिप्रबलप्रभञ्जनाहतः शङ्करसिद्धान्तानभिज्ञो गजम्मन्यो मशकः कान्दिशीकः स सहस्राक्षसहितः क्वचिल्लीनःस्वा गतोवा भ्रमीतो वेति तस्य [illegible]नं नोपलभ्य[illegible]

टीका [illegible]

एवं प्रस्तावनायां मुख्यांश्चतुरोऽपि [illegible] श्रीवल्लभ[illegible]थत्या-

---

[illegible]पाभिलाषिणा भट्टिवंशजेन लवजित्तनूजन्मना मथुर[illegible]न्दानुश[illegible]मितविक्रमवर्षान्तर्गतोर्जमासवलक्षपक्षचतुर्दशीसमासादितनिलपनिलयवासाबालाडकँबाईसमाख्यायानिजाङ्गजायाः प्रचुरकालातिक्रमणेनाप्यनुन्मूलनीयमूलः प्रचण्डवातवर्षातपैरप्यलोपनीयलावण्यस्सकललोकलोचनानन्दजनकः कोपि स्मरणस्तम्भइवायमनेकद्वैतमतान्धकारसंभ्रान्तहृग्भ्योजनेभ्यः सन्मार्गावबोधप्रदानप्रवीणो मयाङ्कयित्वा प्रसिद्धिं नीतः ॥ विलोक्येमं निबन्ध संभूय सर्वेपि श्रीवल्लभवंशीयास्स्वकीयसिद्धान्तानुसारेण तत्खण्डनाय बद्धपरिकराभवितारइति महतीमाशां मन्मनसि स्थापयामि ॥ हन्ताचप्रसन्तोषोयत् केपि ते वीणावेणुमृदङ्गाद्यनेकवाद्यवादननिष्ठचित्तास्संङ्गीतमेव संसारसारं मन्यमानाः प्रबलेन शङ्करसिद्धान्तिसिन्धुरेणामूलतउन्मूलितं स्वसिद्धान्तशाखिनं दृष्ट्वापि न पश्यन्तीति ॥ हाहंत निगमागमोक्तस्वधर्मपालनप्रीतिस्वकीयसिद्धान्तदृढीकरणबद्धपरिकरताव्याससूत्रभाष्यकरणशक्तिमत्तारामदमतितिक्षोपरतिब्रह्मण्यताब्रह्मनिष्ठताद्यखिलाचार्यचिन्हविरहिणां केवलमाचार्यकुलउत्पत्तितएवाचार्यपदाभिमानमुद्वहतां तेषां नैतत्किञ्चिदपि त्रपाकरमस्ति ॥ तद्दयाप्रयात्माऽनवरतनिखिलजगज्जनहितपरायणस्सर्वशक्तिमानीश्वरस्तेभ्यस्सन्मार्गदर्शिनीं दृशं प्रयच्छतादिति प्रार्थये परात्मानम् ॥ जयंत्वद्वैतार्यास्सकलवसुधाख्यातयशसः श्रिताद्वैताभासाऽपरमततमश्चण्डकिरणाः ॥ यशोदेहेनास्मिन् जगति सततं सुस्थितिजुषो विपश्चिद्वर्यास्ते यतिवरमदानन्दगिरयः ॥

**दिना परमात्मानमित्यन्तेन** वर्णितं मुद्रणकारणादिकं परिहरन्ति ॥ **श्रीवल्लभमतेत्यादिना नोपलभामहइत्यन्तेन** ॥ तोष्टूय्यमान इति॥ अतिशयेन पौनः पुन्येनवास्तूयमानः॥ स्तौतेर्यङन्तात्कर्मणिलटः शानचि शित्वेन सार्वधातुकत्वाचक्किं आनेमुगिति मुगागमे च सिद्धम् ॥ **श्रीवल्लभवंश्येनेति** ॥ श्रीवल्लभस्य वंशभवेन ॥ दिगादित्वाद्यत् यस्तु॥श्रीवल्लभवंशीयाइति प्रस्तावनायां प्रयोगः स चिन्त्यः॥अवृद्धत्वेन वृद्धाच्छइत्यस्याप्राप्तेः ॥ दिगादिषु वंशशब्दपाठं निश्चितमप्यनादृत्य बलाद्गहादिषु तत्पाठकल्पनस्यागतिकगतित्वात् ॥ संख्यावंश्येनेत्यादिविरुद्धनिर्देशोपलम्भात् ॥ देवदत्तादिवद्वंशशब्दस्यनामधेयत्वाभावाच्च ॥ **परीक्षणार्थमिति**॥ वर्ण्यमानगुणकोयमस्ति नवेति परीक्षणार्थम् ॥ मन्दमिति स्पर्शक्रियाविशेषणम् ॥ स्थूणा स्तंभः ॥ स्तोतॄन् ॥ प्रस्तावनाकारादीन् लज्जयन् ॥ **निपपातेति** ॥ ग्रन्थस्य प्रत्यक्षत्वेपि तन्निष्ठनिपतनक्रियायाअनायासजन्यत्वादननुसन्धानेन पारोक्ष्याल्लिट् ॥अतएव भाष्ये "कस्मिन्पुनःपरोक्षेलिड्भवति"इत्यादिना परोक्षविचारे "परोक्षेधातौ परोक्षेधात्वर्थइति कःपुनर्धात्वर्थः क्रिया क्रियायांपरोक्षायामिति"व्याख्याय क्रियापारोक्ष्ये मतान्तराण्युक्त्वा तेषूत्तमपुरुषासिद्धिं स्वमते सुप्तादिव्यापारे तत्सिद्धिं च दर्शयित्वोच्यते " अथभवतिवैकश्चिज्जाग्रदपिवर्त्तमानकालंनोपलभते ॥ तद्यथावैयाकरणानांशाकटायनोराजमार्गेआसीनःशकटंसार्थंयान्तंनोपलेभे किंपुनःकारणं कश्चिज्जाग्रदपिवर्त्तमानं कालं नोपलभते ॥ मनसाप्रयुक्तानींद्रियाण्युपलब्धौकारणानिभवन्तिमनसोऽसांनिध्यात् " इति ॥ अत्र कैय्यटः " केचिदिति मतभेदप्रदर्शनायानेकदर्शनोपन्यासः ॥ इन्द्रियागोचरसाधनसाधितानद्यतनक्रियावाचिनस्तुधातोर्लिट्प्रत्ययः " इत्याद्युक्त्वा " असांनिध्यादिति ॥ विषयान्तरेणाकृष्टत्वान्मदाद्यभिभवाद्वेतिभाव " इतिव्याचष्टे ॥ भाष्ये वर्तमानकालमिति वर्तमानकालंवस्त्विति विवरणकारः॥ तथाचात्र स्तम्भे परैरारोपितेषु गुणेषु तत्परीक्षणे च चित्तस्याभिनिवेशादयत्नसिद्धं तत्पतनं वर्त्तमानकालमपि नानुसंहितमितिभावः ॥ नचैवंमत्ततापत्तिः शंक्या ॥ शाकटायनादिवत्तदभावोपपत्तेः ॥ अतएव विवरणे " वैयाकरणानांशाकटायनइत्यनेन तस्यामत्तत्वोक्त्यान्यचित्तताचभाष्ये " इत्युक्तम् ॥ इतिदिक् ॥ निपपातेति निशब्देन पुनरोरापणस्याशक्यत्वं बोध्यते ॥ **शिखासूत्रेत्यादि** ॥ तथाच पराशरमाधवीये पद्मपुराणे ॥ शिखायज्ञोपवीतेनत्यक्तेनासौकथंद्विजइति ॥ तत्रैवात्रिः ॥ यज्ञोपवीतंसर्वेषांद्विजानांमुक्तिसाधनम् ॥ परित्यजन्तियेमोहान्नरानिरयगामिनइति ॥ हारीतः ॥ चत्वारोप्याश्रमाह्येतेसन्ध्यावन्दनवर्जिताः ॥ ब्राह्मण्यादेवहीयन्तेयद्युपगतंबुधैरिति ॥ यच्छास्त्रविद्भिरुपगतं तेनापि वर्जिताहीयन्तएवेतितद्व्याख्यातारः ॥ अथ सन्ति शास्त्रोक्तधर्मानुष्ठायिनां विदुषां परमहंसानामेव पाक्षिकतत्त्यागवचनान्यपि परन्तु विहिताननुष्ठायिनः प्रतिषिद्धसेविनो वेषमात्रेण तु नकार्यसिद्धिरिति सर्वसम्मतम् ॥ दण्डाभावान्मस्करित्वमप्यौपचारिकमेव ॥ **कान्दिशीकः** भयात्पलायितः ॥ कान्दिशी-

कोभयद्भुतइत्यमरः ॥ सः सदानन्दगिरिः ॥ शिष्टं सर्वमतिरोहितार्थम् ॥ यत्तुप्रस्तावनायां वीणावेणुमृदङ्गेत्यादिना वीणावादनादेरनौचित्यं बोधितं तदसत् ॥ भगवद्गुणविशिष्टसंगीते भगवत्प्रीत्यर्थं तदग्रे भक्त्या वीणादिवादने च दोषाभावात् ॥ प्रत्युत तस्य भगवत्प्रीतिसंपादकत्वात् ॥ अतएव पाद्मे कार्तिकमाहात्म्यपञ्चमाध्याये पृथुं प्रति नारदः ॥ तालवेणुमृदङ्गादिध्वनियुक्तान्सनर्तकान्॥पुष्पैर्गन्धैःसताम्बूलैर्गायकानपिचार्चयेत् ॥१९॥ देवालयेगीतपरायतस्तेविष्णुमूर्तयः ॥ तपांसियज्ञदानानिकृतादिषुजगद्गुरोः ॥ २० ॥ तुष्टिदानिकलौयस्माद्भक्त्यागानंप्रशस्यते ॥ क्वत्वंवससिदेवेशमयापृष्टस्तुपार्थिव ॥ २१ ॥ विष्णुरेवंतदाप्राहमद्भक्तिपरितोषितः ॥ नाहंवसामिवैकुण्ठेयोगिनांहृदयेरवौ ॥ २२ ॥ मद्भक्तायत्रगायन्तितत्रतिष्ठामिनारद ॥ तथा ॥ मत्पुराणकथांश्रुत्वामद्भक्तानांचगायनम् ॥ २४ ॥ निन्दतियेनरामूढास्तेमद्द्वेष्याभवन्तिहि ॥ नचास्य शूद्रमात्रपरत्वंशक्यम् ॥ तैत्तिरीयब्राह्मणेतृतीयकाण्डनवमप्रपाठकेअनुवाक (१२) " ब्राह्मणौवीणागाथिनौगायतः श्रियावाएतद्रूपं यद्वीणा श्रियमेवास्मिन्तद्धत्तः ",इत्यादिना "दिवाब्राह्मणोगायेत् नक्तंराजन्यः " इति ब्रह्मक्षत्रयोरपि गानविधानात् ॥ यावदनुवाकसमाप्तितत्फलाम्नानाच्च ॥ याज्ञवल्क्योऽपि तृतीयाध्यायेऽध्यात्मप्रकरणे (श्लो० ६०) वीणावादनतत्त्वज्ञःश्रुतिजातिविशारदः ॥ तालज्ञश्चाप्रयासेनमोक्षमार्गंनिगच्छतीतिमोक्षसाधनत्वं तस्याह ॥ अष्टमस्कन्धादावपि अत्यद्भुतंतच्चरितंसुमङ्गलंगायन्तआनन्दसमुद्रमग्नाइत्यादिना भगवत्संबंधि तदनेकत्र प्रशस्यते ॥ न च गायन्तइत्यस्य कथयन्तइत्यर्थः कल्प्यः ॥ नामान्यनन्तस्ययशोङ्कितानियच्छृण्वन्तिगायन्तिगृणन्तिसाधवइत्यादिषु स्पष्टं भेदेन निर्देशात् ॥ कूर्मपुराणेपिसप्तचत्वारिंशाध्याये हरिवर्षवर्णने गायंतिचैवनृत्यन्तीत्यादिना विष्णोर्गानप्रियत्वं दर्शितम् ॥ विस्तरस्त्वन्यत्र द्रष्टव्यः ॥ इति प्रस्तावनाखण्डनम् ॥

---

## अथ प्राप्तावसरः सहस्राक्षः खण्ड्यते ॥

## टीका

श्रीमद्बालमुकुन्दमिन्दुवदनं वृन्दावनानन्दिनं वन्दे सुन्दरमेकमेव न परान्निन्दामि वृन्दारकान्॥वर्त्तन्तामचिरन्तनादिविषदोनन्ता अनन्तातले मन्तुं ते गणयन्तु माऽयमितरान्मूर्धा न नंतुं क्षमः ॥ १ ॥ एवं तदनुयायिना कृतां प्रस्तावनां बाध्यसामान्यचिन्तया दूषयित्वा साक्षात्तत्कृतं सहस्राक्षग्रन्थं दूषयितुमुपक्रमन्ते ॥ अथेति॥ अथ सूचीकटाहन्यायेन प्रस्तावनाखण्डनानन्तरमवसरसंगत्या सहस्राक्षः खण्ड्यते ॥ संगतिस्तु अनन्तराभिधानप्रयोजकाकाङ्क्षाजनकज्ञानविषयोर्थ इति दीधितिकारादयः॥ वस्तुविशेषस्य वस्तुविशेषानन्तरं निरूपणे प्रयोजिका या जिज्ञासा तज्जनकं तत्स्वरूपोपयोगि यज्ज्ञानं तद्विषयोर्थ इत्यर्थः ॥ अवसरश्च संगतिविशेषः॥ प्रसंगउपोद्घातो

हेतुताऽवसरस्तथा ॥ निर्वाहकैक्यकार्यैक्येषोढासंगतयोमता इत्युक्तेः ॥ वस्तुतस्तु परिगणनं प्रायिकमाक्षेपादीनां संगत्यन्तराणामुपलब्धेरित्याद्यन्यत्र द्रष्टव्यम् ॥ तत्राऽवसरोनाम प्रतिबन्धकीभूतजिज्ञासानिवृत्तावश्यवक्तव्यत्वम् ॥ अथशब्दश्चात्र साक्षाद्ग्रन्थखण्डनारम्भे पुनर्मङ्गलार्थः ॥ ॐकारश्चाथशब्दश्चद्वावेतौब्रम्हणःपुरा ॥ कण्ठंभित्वाविनिर्यातौतस्मान्माङ्गलिकावुभाविति "अथवर्णसमाम्नायः" इत्यत्रत्यत्रिभाष्यरत्नादावुदाहृतशिक्षाकारवचनात् ॥ नच तस्यानन्तर्यार्थकत्वेन व्याख्यातत्वान्न मंगलार्थकत्वं सकृदुच्चरितः शब्दः सकृदेवार्थगमयतीति व्युत्पत्तेरिति शङ्क्यम्॥ संगीतोपकाराद्यर्थं कृतेनापि मृदङ्गध्वनिनेव इतरार्थकतया प्रयुक्तेनानेनापि मङ्गलसिद्धिसंभवात् ॥ अव्ययतत्वबोधिन्यादिषु " निपातस्तुस्वरूपेणैवमङ्गलंमृदङ्गध्वनिवत् " इत्यङ्गीकारात् ॥ "सिद्धेशब्दार्थसंबन्धे वृद्धिरादैच्" इत्यादावन्यार्थकैरपि सिद्धवृद्ध्यादिशब्दैर्मङ्गलसिद्धेर्महाभाष्यादौ दर्शितत्वाच्च ॥ मङ्गलप्रयोजनं तु तत्रैव पस्पशाह्निकवृध्याह्निकयोरुक्तम् ." मङ्गलादीनिहिशास्त्राणिप्रथन्तेवीरपुरुषकाणिच भवन्त्यायुष्मत्पुरुषकाणिचाध्येतारश्चसिद्धार्थायथास्युरितिवृद्धियुक्तायथास्युरिति " एतदेव प्रयोजनं साधयितुं पूर्वोत्तरमीमांसापातञ्जलयोगादिसूत्रवच्छबरस्वामिश्रीमदाचार्यश्रीव्यासाचार्यादिप्रणीततत्तद्भाष्यवच्चाथशब्देनैव साक्षाद्ग्रन्थखण्डनारम्भे पुनर्मङ्गलमाचरितम् ॥ भूयोमङ्गलं तु प्रागेव कृतमापरिसमाप्तिविघ्नपरिहारार्थं भविष्यति ॥

तत्रादौ ओंतत्सदित्यारभ्य विष्णोःस्मृत्याद्यमङ्गलमित्यन्तग्रन्थेन श्रीशङ्कराचार्यनमस्कारपूर्वकं वैष्णवसंप्रदायप्रवर्तकाचार्याणां तन्मतवर्तिनां च शठत्वं कौर्मवाक्यबोधितलक्षणसत्त्वेन प्रतिपादितम्॥ तत्र शङ्कराचार्याणां शिवावतारत्वेपि तदुक्तकौर्मवचनानि तु शिवविषयाण्येव ॥ तेषामवतारप्रयोजनं तु पाद्मवाराहादिषु प्रसिद्धमित्यन्यत्र विस्तरः ॥

## टीका

अथ सहस्राक्षकृता भगवदनुयायिनोऽपार्थाभिधानरहितानजय्यानपि जिगीषता स्वप्रबन्धपूर्वभागे दुःशासनप्रधानाः कौरवाक्षौहिणीकल्पा एकादश श्लोकाः प्राणायिषत ॥ व्यवरिषत, च स्वयमेव ॥ तत्राद्यं पद्यं सव्याख्यानं खण्डयितुं

तत्तात्पर्यकथनमुखेन गृण्हन्ति ॥ **तत्रादाविति** ॥ सहस्राक्षे ॐमित्यादिपदत्रये-णेत्यादि उपपादयिष्यतइत्यन्तं भागमेकहेलया निराकुर्वन्ति ॥ **तत्रशङ्कराचार्याणामित्यादिना विस्तरइत्यन्तेन** ॥ अयमत्राशयः ॥ तदीयश्लोकारम्भे ॐतत्सदिति पदत्रयं क्रियापदाभावाद्गौरश्वः पुरुषोहस्ती शकुनिर्मृगो ब्राम्हण इत्या-

---

सहस्राक्ष.

* श्रीगणेशायनमः॥ ओंतत्सत्स्वनिषेवितिष्यमलन्हृच्छ्रीशंकरं देशिकं न्याय्यश्रौतमतस्य शिष्यसहितं नत्वा पुरा ब्राह्मणैः ॥ शर्मैर्विप्रकुलोद्भवैः श्रुतिपथाद्दुष्टार्थबोधैर्नरा मापच्याविषतेति तान्प्रति मया ज्ञाप्यः सहस्रेक्षणः ॥ १ ॥ ओमित्यादिपदत्रयेण ब्रह्म निर्दिश्यते ॥ ओंतत्सदितिनिर्देशोब्रह्मणस्त्रिविधस्स्मृतइति भगवदुक्तेः ॥ १ ॥ श्रीशङ्कराचार्यस्य स्वभक्तकलिमलहर्तृत्वं श्रौतधर्मोपदेष्टृत्वंच कौर्मे पूर्वखण्डे त्रिंशेऽध्याये वर्णितम् ॥ तथाहि ॥ करिष्यत्यवतारारिणि शंकरोनीललोहितः ॥ श्रौतस्मार्त्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ १ ॥ उपदेक्ष्यतितज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् ॥ सर्ववेदान्तसारं हि धर्मान्वेदनिदर्शनान् ॥ २ ॥ ये तं प्रीत्या निषेवन्ते येनकेनोपचारतः ॥ विजित्य कलिजान्दोषान्यान्ति ते परमं पदम् ॥३ ॥ अनायासेन सुमहत्पुण्यं ते यान्ति मानवाः ॥ अनेकदोषदुष्टस्य कलेरेषमहान्गुणः ॥ ४ ॥ इति ॥ करिष्यत्यवताराणीत्यत्राऽवतारशब्दोऽवेस्तृस्त्रोरित्यधिकरणघञन्तः ॥ तेन पुल्लिङ्गनियमोन ॥ अत्र इहाऽवतरिता लोके इत्येवाऽसंदिग्धं शिवमात्राऽवतारबोधकवाक्यप्रयोगे कर्त्तव्येऽवताराणि करिष्यतीति स्वेतरसाधारणाऽवतारकरणबोधहेतुवाक्यप्रयोगं कुर्वता अवतरन्ति येष्वित्यर्थसूचनात्स्वस्य परेषां चाऽवताराणि करिष्यतीति सूचितम् ॥ तत्र च के तइतरइत्याकांक्षा उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितमिति प्रत्यासन्नेन वाक्येन शाम्यते ॥ एवञ्च शिष्याणामप्यवतारत्वं बोधितम् ॥ एतेन कलीनां बहुत्वेन प्रतिकलि शङ्करावतारसत्त्वेन चावतारबहुत्वसिद्धौ बहुवचनस्य प्रक्षीणशक्तिकतया शिष्याणामवतारत्वे न मानमिति कस्यचिदुक्तिः प्रत्युक्ता ॥ किञ्च चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यतीति वायुपुराणमप्यत्र मानम् ॥ तत्रहि शिष्याणामवतारक्रियया साहित्यमुक्तम् ॥ एवंच तच्छिष्याणां सामान्यतोऽवतारत्वे सिद्धे बुद्धाद्युक्तिष्विवेहाऽप्रामाण्ये मानाभावेन तदुक्तीनां व्यासाद्युक्तिवत्प्रामाण्ये शङ्करदिग्विजयादिरूपतदुक्तिभिर्विशिष्य तेषां तत्तदवतारत्वं निश्चेतव्यमिति तेषां सर्वेषामपि कलिमलहर्तृतया नमनीयत्वेन शिष्यसहितमित्युक्तम् ॥ प्रत्यक्षत्वाऽनुमितत्वाभ्यां द्विविधया श्रुत्योक्तस्य धर्मस्य पुराणे श्रौतस्मार्त्तेतिभेदेन कीर्त्तनेऽपि इहाऽभेदविवक्षया श्रौतत्वेनैव कीर्त्तनं श्रौतेति ॥ ज्ञानमुपदेक्ष्यति उपदेशेन संपादयिष्यति ॥ ब्रह्मसंज्ञितं ब्रह्मविषयकं सर्ववेदान्तानां सारं फलम् ॥ यद्वा ब्रह्मसंज्ञितं ब्रह्माऽऽख्यम् ॥ सर्ववेदान्तसारं सर्ववेदान्ततात्पर्यविषयभूतम्॥ ज्ञानं चिद्रूपम् उपदेक्ष्यति वर्णयिष्यति ॥ धर्मान्वेदनिदर्शनानित्यत्रोपदेक्ष्यतीत्यनुवर्त्य पृथग्वाक्यता ज्ञेया ॥ निदर्श्यन्तेऽनेनेति निदर्शनम् ॥ वेदोनिदर्शनं येषां ते वेदनिदर्शना वेदप्रमाणकास्तानित्यर्थः ॥ ननु पुराणे विजित्य कलिजान्दोषानित्यत्र दोषजयादिकं प्रति सेवकानामे-

दिवदाकाङ्क्षानुपशमादप्रमाणमेव ॥ यथा वदन्ति ॥ यद्यदाकाङ्क्षितंयोग्यंसन्नि-
धानंप्रपद्यते ॥ तेनतेनान्वितःस्वार्थःपदैरेवावगम्यतइति ॥ एतच्चदिनकरभट्टाचा-
र्याः "स्वार्थाकाङ्क्षितं स्वार्थयोग्यं यद्यत्सन्निधानं प्रपद्यते स्वार्थोपस्थितिविषयो भ-
वति तेनतेनान्वितः स्वार्थः पदैः प्रथममनुभाव्यतेऽनन्तरं च महावाक्यार्थबोधः"
इति व्याचक्षते ॥ आकाङ्क्षास्वरूपं तु तार्किकाः॥ येन पदेन विना यत्पदस्यान्वया-
ननुभावकत्वं तत्पदविशिष्टत्वं तस्याकाङ्क्षा॥ क्रियापदं विना कारकपदं नान्वयबोधं
जनयति तेन तस्याकाङ्क्षेत्याहुः ॥ यच्च एकपदे अपरपदवत्त्वं तत्पदे अपरपदाव्य-
वहितोत्तरत्वं तच्च प्रकृतिप्रत्यययोरेव संभवति॥ तेन घटमित्यादौ घटपदवैशिष्ट्यमंपद
आकाङ्क्षा ॥ क्रियाकारकपदयोस्तु नोत्तरपदत्वनियमः॥ पचति चैत्रः, चैत्रः पचती-
तिवाक्यद्वयादन्वयबोधात् ॥ अतः क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थ-
मिति वदन्ति ॥ तत्पक्षेपि प्रकृते नमामीत्यादिपदान्तराभावादन्वयाननुभावकत्वदोष-
स्तदवस्थः ॥ शाब्दिकास्तु॥ वाक्यसमयग्राहिका चाकाङ्क्षा॥ साच एकपदार्थज्ञाने-
तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छा अस्यार्थः कइत्येवंरूपा पुरुषनिष्ठैव ॥
तथापि तस्या आकाङ्क्षाविषयेर्थे आरोपः॥ एतदेवाभिधानापर्यवसानमित्युच्यते ॥
अयमर्थोर्थान्तरमाकाङ्क्षतइतिव्यवहारात् ॥पदे तु नारोपः॥अर्थबोधोत्तरमेव जिज्ञा-
सोदयात् ॥ समर्थसूत्रे भाष्ये अर्थयोर्व्यपेक्षाकथनाच्च ॥ जिज्ञासोत्थापकंचैकपदा-
र्थेऽपरपदार्थव्यतिरेकप्रयुक्तस्यान्वयबोधाजनकत्वस्य ज्ञानमिति तद्विषये तादृशान्व-
यबोधाजनकत्वेप्याकाङ्क्षेतिव्यवहारः ॥ अन्वयबोधश्च तदाकाङ्क्षितसकलक्रि-
याकारकादिविषयो विवक्षितः ॥ एतेन तस्य हेतुत्वे खण्डवाक्यार्थबोधोत्तरं महावा-
क्यार्थबोधो नस्यादित्यपास्तम् ॥ खण्डबोधस्य क्रियातद्विशेषणकारकतद्विशेषणेतद-
न्यतरमात्रविषयकत्वात् ॥ किञ्च उक्तस्यान्वयबोधाजनकत्वज्ञानस्य समभिव्याहार
कारणताज्ञानमूलकत्वात्साप्याकाङ्क्षा॥ अतः ससमभिव्याहारस्तादृशतादृशान्वय-
बोधजनकइति ज्ञानं कारणं तदजानतामबोधाच्च ॥ ससमभिव्याहारस्तत्तदन्वयबो-
धजनकइत्ययमेव वाक्यविषये ऐश्वरः समयस्तत्परिपालिकाचमीमांसेत्याद्याहुः ॥

---

## सहस्राक्ष.

च कर्तृत्वमुक्तं तत्कथं शङ्कराचार्यस्य कलिमलहर्तृत्वमुच्यते इतिचेद् वक्ष्यमाणरीत्येश्वरस्य
कर्मफलदातृत्वे जीवानां तद्वारैव फलाऽऽस्येति गृहाण ॥ इदमुपलक्षणं तेन पुण्यहेतुत्वं तद्वारा
हितसम्पादकत्वं चाऽनायासेन सुमहदिति भक्तानां हितकाम्ययेतिच कौमोक्तिं बोध्यम् ॥
व्याकुर्वन्व्याससूत्राऽर्थं श्रुतेरर्थं यथोचिवान् ॥ श्रुतेर्न्याय्यः सएवाऽर्थः शङ्करः सवितानन इति
शिवपुराणवाक्यमवष्टभ्याह ॥ न्याय्येति ॥ वितानेनोव्याख्याता॥ क्वचित्सवितानना इति पाठः
तत्र ननेत्यस्य नरोनेत्यर्थः ॥ न्यायादनपेतोन्याय्यः ॥ न्यायोयुक्तिस्तत्सहितस्तदविरुद्धश्चेति
निष्कर्षः ॥ श्रौतेऽर्थे युक्तेरपेक्षा तत्रभागे षोडशखण्डखण्डनावसरे उपपादयिष्यते ॥ २ ॥

तेन तन्मतेप्यसमभिव्यात्दृतक्रियापदकं साकाङ्क्षार्थमेतद्वाक्यमबोधकमेव ॥ अन्यथा दशदाडिमानि षडपूपा इत्यादिकमपि प्रमाणं स्यात्॥नन्वनन्वितार्थमपि पदत्रयं मङ्गलार्थमुच्यतइति चेत् ॥ नहि मङ्गलार्थत्वमात्रेण पूर्वोक्तदोषनिस्तारः॥अतएव ओंकारश्चाथशब्दश्चेतिस्मृत्योंकारसमानयोगक्षेमस्याप्यथशब्दस्यान्यार्थमृदङ्गादिध्वनिवच्छ्रवणमात्रेण मङ्गलसिद्धिमभिप्रेत्य तस्यार्थान्तरं तद्व्दितवाक्येन्वयश्चादर्शिशारीरकभाष्ये जिज्ञासासूत्रे शङ्कराचार्यैः ॥ तथात्रापि प्रामाण्यसिद्धये तदन्वययोग्यं किमपि वक्तव्यम् ॥ अन्यथा तत्रापि केवलमङ्गलार्थक एवाथशब्दोनन्वितः स्वीक्रियताम् ॥ कृतं तस्यार्थान्तरपरत्वकल्पनया ॥ अथ प्रथमतरेप्यस्मिन्वाक्ये ओमादिपदवाच्यं नमामि स्मरामीत्यध्याहारेण पूरणंतु प्रथमग्रासे मक्षिकापातः ॥ द्वारमित्यादौ पिधेहीत्यादेरिव नमामीत्यादेः शीघ्रोपस्थितिकत्वाभावोपि प्रचुरव्यवहारविरहाद्द्रष्टव्यः ॥ नच समासादि कल्प्यम् ॥ स्वयमव्याख्यानेन तथाभिप्रायाभावनिश्चयात् ॥ स्वशब्दपरामृष्टदृश्यव्यक्तिविशेषेऽन्वयायोगाच्चेत्यलम् ॥ अपिच गीतावाक्ये ब्रम्हशब्दो [illegible] प्रतीयते ”॥ [illegible]वाचकत्वात् ॥ माण्डक्ये “ॐमित्येतदक्षरं ” इति [illegible]
इति स्फुटं धा[illegible]
नं श्रेष्ठं ” इति तथैव प्रपञ्चनात् ॥ द्वादशस्कन्धेपि ॥ स्वधाम्नाब्रम्हणःसाक्षाद्वाचकः परमात्मन इत्युपबृंहणाच्च ॥ तेन ततः परस्य तत्र रममाणस्य स्मरणलक्षणे मूलस्थमङ्गल एतदपेक्षयोत्कर्षः स्वतः सिद्ध इतिध्येयम् ॥यच्च कौर्मवाक्यावलम्बेन शङ्कराचार्याणां शिवावतारत्वादिकमुक्तं तत्र तेषां तदवतारत्वं त्वस्माकमभिमतमेव ॥ परंत्वदुक्तवचनविषयेतु वदामः ॥ कौर्मब्रम्हाण्डसूतसंहितादिषु द्राविडकेरलशैवैर्भूयएव प्रक्षिप्तमिति विद्वत्किंवदन्तीसत्त्वात् संप्रदायान्तरग्रन्थेष्वपि तस्या उज्जीवनाच्चास्ति तावदेतेषां समूलत्वएव सन्देहः ॥ अतएव तावकोपि न कोपि प्रामाणिक एतान्युदाहार्षीत् ॥ यदीदं समूलमेवमर्थपरंचाभविष्यत्कथंतर्हि माधवादयो दिग्विजयादौ नोदाहरिष्यन् ॥ तथापि त्वयेव नास्माभिरंहोरंहोभयादार्षतया व्यवह्रियमाणे वस्तुनि सहसा प्रक्षिप्तत्वं शक्यवचनमतः सति समूलत्वे समादधामः ॥ करिष्यत्यवताराणीत्यादिवचांसि तु न शङ्कराचार्यविषयाणि ॥ तेषामेकत्वेन अत्रावताराणीति बहुवचनेन चातत्परत्वप्रतीतेः ॥ न च शङ्करपदोपादानमात्रात्तत्परत्वं शङ्क्यम् ॥ तस्मिन्पुराणे ( अध्याय १० ) अव्ययानिदशैतानिनित्यंतिष्ठन्तिशङ्करे ( अध्याय ७ ) निशम्य भगवान्वाक्यं शङ्करोधर्मवाहनः ॥ एवमादिष्वनेकत्र देवाभिप्रायेणैव शङ्करशब्दाभ्यासदर्शनात् ॥ किञ्चात्र शङ्करपदमवतारपरमवतारिपरं वा ॥ नाद्यः ॥ तस्मिन्नीललोहितत्वाप्रसिद्धेः ॥ शङ्कराचार्याणामनेकावतारकर्तृत्वापत्त्या तेषामवतारत्वासिद्धिप्रसक्तेश्च ॥ द्वितीयश्चेदौकुर्मः ॥ तथासति तत्पु-

राणप्रसिद्धा रुद्रशुकसांबादयः शिवावताराएवात्रावतारपदेन गृह्येरन् ॥ एकग्रन्थावगतत्वात् ॥ नतु शङ्कराचार्याः ॥ एकत्वेन बहुवचनविरोधात् ॥ अमुकस्मिन्देशे कालेच अमुको नाम भविष्यतीति निर्देशाऽभावाच्च ॥ रुद्रादीनां शिवावतारत्वं तु यथा तत्रैव सप्तमाध्याये ॥ भृकुटीकुटिलात्तस्यललाटात्परमेष्ठिनः ॥ समुत्पन्नोमहादेवःशरण्योनीललोहितइत्याद्युक्त्वोच्यते॥ निशम्यभगवान्वाक्यंशङ्करोधर्मवाहनः ॥ स्वात्मनासदृशान्रुद्रान्ससर्जमनसाशिवः ॥ कपर्दिनोनिरातङ्कांस्त्रिनेत्रान्नीललोहितानिति ॥ एकादशाध्यायेच स्वात्मनासदृशान्रुद्रान्ससर्जमनसाशिवः ॥ कपर्दिनो निरातङ्कान्नीलकण्ठान्पिनाकिनः ॥ त्रिशूलहस्तानुद्रिक्तान्महावृषभवाहनान् वीतरागांश्चसर्वज्ञान्कोटिकोटिशतान्प्रभुरिति ॥ तथा एकान्नविंशाध्याये ॥ द्वैपायनाच्छुकोजज्ञे भगवानेवशङ्करः ॥ अंशांशेनावतीर्योर्व्यांस्वंप्रापपरमंपदमिति ॥ चतुस्त्रिंशाध्याये च शैवान्व्यासं प्रत्यभिज्ञापयन्तः पैलादयः ॥ यस्यदेवोमहादेवःसाक्षाद्देवः पिनाकधृक् ॥ अंशांशेनाभवत्पुत्रोनाम्नाशुकइतिप्रभुरिति ॥ तथा चतुर्विंशाध्यायसमाप्तौ तच्छृणुध्वंमुनिश्रेष्ठायथासौदेवकीसुतः ॥ दृष्ट्वालेभेसुतंरुद्रंतप्त्वातीव्रंमहत्तपइति ॥ ततोनिरन्तरेण दशश्लोकमुक्त्वा सप्तविंशाध्यायारंभे पुनरुदितम् ॥ ततोलब्धवरःकृष्णोजांबवत्यांमहेश्वरात् ॥ अजीजनन्महात्मानंसांबमात्मजमुत्तममिति ॥ महेश्वराल्लब्धवरइत्यन्वयः॥ नच लडर्थबाधः शङ्क्यः॥तस्मिन्पुराणे "व्यत्ययमिच्छतिशास्त्रकृदेषां" इत्याश्रित्य क्वचिद्भूतेपि लटः प्रयोगात्॥यथा कलिप्रवृत्त्यनन्तरं युगधर्मान्वदता व्यासेनैकोनत्रिंशे ॥ कृतंत्रेताद्वापरंचसर्वेष्वेतेषुतेनराः ॥ भविष्यन्तिमहात्मानोधार्मिकाःसत्यवादिनइत्यत्र भविष्यन्तीति प्रयुक्तम् ॥ मुख्योर्थस्तु वक्ष्यते ॥ यस्तु बहुवचनं सार्थकयितुं अवेतॄस्त्रोरित्यधिकरणे घञं स्वीकृत्य प्रयोगसाधुत्वाय पुल्लिङ्गानियमउक्तः सतु पाणिनीयगौनर्दीयसर्वस्वानधिगमादेव ॥ अवेतॄस्त्रोरित्यत्र पुंसिसंज्ञायामित्यनुवृत्तेस्तत्रापि पुल्लिंगनियमात् ॥ घापवादतयापि तत्समानविषयतौचित्यात् ॥ अतएव तत्त्वबोधिन्याम् " अवेउपपदेतॄस्तृभ्यांकरणाधिकरणयोःपुंसिसंज्ञायांवञ्स्यात् ॥ घस्यापवादः " इतिव्याख्यातम् ॥ ननु पुंसिसंज्ञायांघःप्रायेणेत्यधिकारात् प्रायेणेत्युक्त्या पुंस्त्वानियमः स्यात् ॥ न स्यात् ॥ प्रायेणेत्यस्य प्रधानेन प्रत्ययेनैव सहान्वयस्य भाष्यकृता स्वीकारात् ॥ तथाच गोचरसञ्चरसूत्रे भाष्ये " गोचरादीनां ग्रहणंशक्यमकर्तुम् घञ्कस्मान्नभवति प्रायवचनात् यथाकषःनिकषइति प्रायवचनाद्घञ्नभवति " इति ॥ नच प्रायेणपदमावर्त्य प्रायेणपुंसिप्रायेणसंज्ञायामितिव्याख्येयम् ॥ आवृत्तौ तत्र तत्र तस्यान्वये च मानाभावात् ॥ नहि प्राञ्चोऽर्वाञ्चो वा केपि तथा व्याचक्षते ॥ अतोत्र पुंस्त्वं नियतमेव ॥ सूत्रकृतापि पूर्वोत्तरसूत्रेषु गोचरसञ्चरादीना मुदङ्काऽऽनायान्तानां पुंस्त्वेनैव निर्देशात् वार्तिकोक्ताऽवहारादीनामपि " अवह्रियतेस्मिन्नवहारः " इत्यादिनाभाष्ये तथानिर्देशात् ॥ क्वापि लिङ्गान्तरानिर्देशाच्च ॥ अतएव अवस्तारोजवनिकेति

प्रकृतसूत्रोदाहरणं सङ्गच्छते ॥ अनियमेतु स जवनिकापर्यायतया टाबन्तो व्यवह्रियेत ॥ प्रायिकत्वेच पुंसीत्यनर्थकमेव स्यात् पाक्षिकपुंस्त्वस्य निर्देशा-दिनैव सिद्धेः ॥ किंच खनोघचेत्यत्र खनतौ चजोःकुघिण्यतोरिति कुत्वाप्राप्त्या-ऽनन्यार्थकाद्दित्वाज्ज्ञापकादन्यतोपि घं स्वीकृत्य भगःपदमित्युदाहृतम् ॥ तत्र तत्त्वबोधिन्याम् "ननु पदमित्यत्रघस्यकिंप्रयोजनमितिचेदत्राहुः करणाधिकर-णयोःपुंसिसंज्ञायामितियदिघःस्यात्तदापदमितिनपुंसकंनस्यादनेनचेद्धोभवतितदाविष्ट-सिद्धिरिति" इत्युच्यते ॥ तेन पूर्वत्र सर्वत्र पुंस्त्वं नियतमेवेत्यवगम्यते ॥ एतदपि प्राचामनुरोधेन भगपदयोरुभयोरुदाहरणत्वाभिप्रायम्॥नव्यानुरोधात् "भगःपदमिति-क्वचित्प्रयोगः" इत्याश्रित्य भग इत्यस्यैवोदाहरणत्वेऽभिप्रेयमाणे त्वत्रापि पुंस्त्वमेव-नियतम् ॥ "लिङ्गमशिष्यंलोकाश्रयत्वात्" इतितु लिङ्गानुशासनस्यैव प्रत्याख्यानं नत्वष्टाध्यायीस्थानां पुंसीत्याद्यधिकाराणाम् ॥ अन्यथा स्त्रियामित्यादेरभावात्पुंस्य-पि टाबादयस्युः ॥ चतुर्थीतदर्थार्थेतिसूत्रे अर्थेन नित्यसमासो विशिष्यलिंगता चेति वार्तिककारोक्तं प्रत्याचक्षाणेन भाष्यकृता "यदप्युच्यते सर्वलिंगता-वक्तव्येति ॥ नवक्तव्या [illegible] प्राधान्येन लि[illegible] त्त्वबोधिनीका[illegible] अन्यथा व्याकरण-स्यैव वैयर्थ्यप्रसंगात्" इत्याहुः ॥ तत्प्रत्याख्यानबलाल्लिङ्गानियमविवक्षणेतु भा-वार्थघञं परित्यज्याधिकरणार्थकघञ्पर्यन्तानुधावनप्रयासोव्यर्थएव ॥ शेषंपुंव-दित्यादिप्रयोगदर्शनेन घञप्पाःपुंसीत्यस्य प्रायिकतायाः शक्यवचनत्वात् ॥ अ-धिकरणार्थतदाश्रयणे त्ववतारःकूपादेरित्यादाविव सुतरां पुंस्त्वनियमापत्त्या व्याधि-नाशाय भक्षिते लशुने प्रत्युत वृद्धो व्याधिः ॥ अपिच अवतरन्तियेष्वितिव्याख्याने कानि तान्यवतारशब्दवाच्यान्यवतरणाधिकरणानीत्याकाङ्क्षानुपशमान्मूलवाक्ये स्वार्थबोधनासामर्थ्यं दोषः ॥ तथा व्याख्यात्रा त्वयाप्यकथितत्वेन तवापि तदनव-बोधप्रतीतिश्च ॥ अथ यथाकथंचित्कस्यचिद्विशेष्यतयाऽत्राध्याहारं ब्रूयास्तथापि तेन सहावतारशब्दस्य संज्ञासंज्ञिभावग्राहकं शास्त्रं शिष्टव्यवहारोवा त्वया दर्शनीयः॥ सं-ज्ञायां घञ्विधानात् ॥ नच प्रायेण संज्ञायामिति वाच्यम् ॥दत्तोत्तरत्वात्॥ गुणप्रधा-नसन्निधौ प्रधानस्य विशेषणनिरूपिताकाङ्क्षावत्त्वेसति गुणे विशेषणान्वयस्यायुक्त त्वेन तथा व्याख्यातुमशक्यत्वात् ॥ उपदेशेजितिसूत्रेभाष्ये "नह्युपाधेरुपाधिर्भव-तिविशेषणस्यवाविशेषणं" इति भाष्यकृता तादृशार्थस्यावहेलनाच्च ॥ इहहि विधे-यत्वेन प्रत्ययः प्रधानं तत्रैव प्रायेणपदस्यान्वयः ॥ तत्रैव भाष्यकृत्कैयटाभ्यां हलश्चे-तिसूत्रे संज्ञानुवृत्तेः कण्ठरवोक्ततया अवेतॄसूत्रेपि तदनुवृत्तिस्तदभिप्रेतैव ॥ एतत्सर्व-मुपदेशशब्दार्थविचारे मनोरमाशब्दार्थरत्नयोरपि स्पष्टम् ॥ किञ्चाधिकरणार्थघञङ्गी-कारेऽवतरणाधिकरणानामेव बहुत्वं सिद्ध्यति नत्ववतरणस्य ॥ तेन त्वस्य परेषां

चावतारकरणं निरस्तम्॥के तइतरइत्याकाङ्क्षायाः शिष्याणामित्यनेनशमनोक्तिरपि कुशकाशावलंबनमेव ॥ तेषामुपदेशकर्मतयैवोपादानस्यप्रतीतेः ॥ कस्तर्ह्येषां वाक्यानां वास्तवोऽर्थ इतिचेदुच्यते॥पूर्वोत्तरवाक्यपर्यालोचने त्रिलोचनलिङ्गार्चनपरत्वमेवैषां सिद्ध्यति ॥ तथाहि ॥ कौर्मे पूर्वखण्डेऽष्टाविंशेऽध्याये उवाचपरमप्रीत्याकस्मादेतन्महामुने ॥ इदानींगच्छसिक्षिप्रंगंगादेशंप्रतिप्रभो ॥ संदर्शनाद्वै भवतःशोकोमेविपुलोगतः ॥ इदानींममयत्कार्यंब्रूहित्वन्दलेक्षणेत्यर्जुनेनपृष्टो व्यास एकोनत्रिंशारंभे (श्लोक१) इदंकलियुगंघोरंसंप्राप्तंपाण्डुनन्दन ॥ गच्छामिदेवदेवस्यवाराणसींमहापुरीमिति ॥ तथा (श्लो० २) नान्यत्पश्यामिजन्तूनांमुक्त्वावाराणसींपुरीम् ॥ सर्वपापोपशमनंप्रायश्चित्तंकलौयुगइत्याद्याह ॥ ततोर्जुनेन पृष्टांश्चतुर्युगधर्मान्निरूपयन् (श्लो० ११) ब्रह्माकृतयुगेदेवस्त्रेतायांभगवान्रविः ॥ द्वापरेदैवतंविष्णुःकलौदेवोमहेश्वरइति कलौशिवार्चनस्य मुख्यत्वं बोधयित्वा यावदध्यायसमाप्ति क्रमेण त्रियुगीधर्मान्निरूप्य त्रिंशाध्याये (श्लो० १) तिष्येमायामसूयांचवधंचैवतपस्विनः ॥ साधयन्तिनरानित्यंतमसाव्याकुलीकृताइत्यादिना कलिधर्मान्वदन् (श्लो० ३२) कलौरुद्रोमहादेवोलोकानामीश्वरःपरः॥ तदेवमाराधयेन्नृणांदैवतानांचदैवतमिति शिवोपासनया यज्ञादिकर्मसिद्धिसंभवं बोधयित्वा कथं तदुपासनादीत्याकांक्षायामाह ॥ करिष्यत्यवताराणीत्यादि॥अत्र द्वितीयश्लोके कतिषुचित्पुस्तकेषु उपदेक्ष्यन्तीति बहुवचनपाठोपि दृश्यते तदुत्तरार्धंच सर्ववेदान्तसारंयद्धर्मान्वेदनिदर्शनादित्यपिदृश्यते ॥ तृतीयश्लोकेतु येतंप्रीतानिषेवन्तइत्येव पाठः॥ तुरीये च कलेरेकोमहान्गुणइत्यत्र ॥ अग्रेचानुपदं कलौतुकेवलंकर्त्तालिप्यतेपुण्यपातकैः ॥ आद्येतुवासनामात्रधृत्यातत्प्राप्नुवन्तिहि ॥ तस्मात्सर्वप्रयत्नेनप्राप्यमाहेश्वरंयुगम् ॥ विशेषाद्ब्राह्मणानुरुद्रमीशानंशरणंव्रज ॥ येनमन्तिविरूपाक्षमीशानंकृत्तिवाससम् ॥ प्रसन्नचेतसोरुद्रंतेयान्तिपरमंपदम् ॥ यथारुद्रनमस्कारःसर्वकामफलोध्रुवः ॥ अन्यदेवनमस्कारान्नतत्फलमवाप्नुयात् ॥ एवंविधेकलियुगेदोषाणामेवशोधनम् ॥ महादेवनमस्कारोध्यानंदानमितिश्रुतिः॥ तस्मादनीश्वरानन्यांस्त्यक्त्वादेवंमहेश्वरम् ॥ समाश्रयेद्विरूपाक्षंयदीच्छेत्परमंपदम्॥नार्चयन्तीहयेरुद्रंशिवंत्रिदशवंदितम् ॥ तेषांदानंतपोयज्ञोवृथाजीवितमेवचेत्युक्त्वा ॥ नमोरुद्रायमहतइत्यादिना भास्करंपरमंतपइत्यन्तेन काश्यां तमहं गच्छामीत्यभिधाय॥ इत्येतल्लक्षणंप्रोक्तं युगानांवैसमासतइत्यादिनोपसञ्जहार॥ अग्रे च सूतः।एवमुक्तो भगवता किरीटीश्वेतवाहनः॥ बभारपरमांभक्तिमीशानेऽव्यभिचारिणीमिति ॥तमुवाचपुनर्व्यासइत्युक्त्वा दृष्टवानसितंदेवंविश्वाक्षंविश्वतोमुखम् ॥ प्रत्यक्षमेवसर्वेषांरुद्रंसर्वजगन्मयम् ॥ ज्ञानंतदैश्वरंदिव्यंयथावद्विदितंत्वया ॥ इत्यादिव्यासवचांसि व्रजस्वपरयाभक्त्याशरण्यंशरणंशिवमित्यन्तान्यनूद्य एवमुक्त्वासभगवाननुगृह्यार्जुनंप्रति ॥ जगामशङ्करपुरींसमाराधयितुंभवम॥ पाण्डवेयोपितद्वाक्यात्संप्राप्यशरणंशिवम् ॥ संत्यज्यसर्वकर्माणिज्ञात्वातत्परमोभवदित्याह॥ अत्र इदानींममयत्कार्यमितिद्वितीयप्रश्नस्य एको-

नत्रिंशे ॥ पालयाद्यपरंधर्मत्वकीयंमुच्यसे भयादित्युत्तरमुक्त्वा तदेवोपसंहारे व्रजस्व-परया भक्त्येत्यनेन प्रकृतपुराणाभिप्रेतं परधर्मस्वरूपं दर्शितमिति प्रतीयते॥ तथासत्यय-ममीषामर्थः सिद्ध्यति वचसाम्॥अत्रावतारशब्दोयदाधिकरणघञन्तस्तदा क्लैब्यमा-र्षम् ॥ भावघञन्तोवासौ ॥ क्लीबत्वं घञजपाःपुंसीत्यस्य प्रायिकत्वाभिप्रायमार्षं वा कुर्वन्तिचावताराणीत्यत्रैव॥अधिकरणपक्षे स्वयमवतरत्येष्विति स्वप्रादुर्भावाधिकरणा-नि लिङ्गान्यवताराणि ॥ षड्विंशाध्याये मार्कण्डेयं प्रति श्रीकृष्णेन॥ एषदेवोमहादेवः-सदासंसारभीरुभिः॥ याज्यःपूज्यश्चवंद्यश्चज्ञेयोलिङ्गेमहेश्वरइति लिङ्गस्याधिकरणत्वमु-क्तम्॥ततो मार्कण्डेयेन किंतल्लिङ्गंसुरश्रेष्ठलिङ्गेसंपूज्यतेचक इत्याधेयाधिकरणयोः स्व-रूपे चोदिते अव्यक्तंलिङ्गमित्याहुरानन्दंज्योतिरक्षयम् ॥वेदामहेश्वरंदेवमाहुर्लिङ्गिनम-व्ययमित्यादिना लिङ्गंतल्लयनाद्ब्रह्मन्ब्रह्मणःपरमंवपुरित्यन्तेन स्पष्टं तस्य तदधिकर-णत्वं निरणायि ॥ भावपक्षेपिसएवार्थः ॥ लिङ्गानामर्चावतारत्वात् ॥ अर्चाचेतनभेदे-नावतारद्वैविध्यस्य बहुवादिसम्मतत्वात् ॥ यथा भगवतोमत्स्यादयश्चेतनावताराः ॥ व्यङ्कटेशवरदराजपाण्डुरङ्गप्रभृतयोर्चावताराः ॥ तावकैरपि कलावाकाशलिङ्गादय-स्तदवतारावर्ण्यन्ते ॥ यथोक्तमानन्दगिरिकृते शङ्करदिग्विजये अवतारकथाख्येद्वि-तीयप्रकरणे ॥ ततःसर्वात्मकोदेवश्चिदम्बरपुराश्रितः ॥ आकाशलिङ्गनाम्नातुविख्या-तोभून्महीतलइति ॥ स्वकृतदिग्विजयद्वितीयसर्गे माधवोप्याह ( श्लोक १ ) ततो-महेशःकिलकेरलेषुश्रीमद्वृषाद्रौकरुणासमुद्रः ॥ पूर्णानदीपुण्यतटेस्वयंभूलिङ्गात्मनाऽ-नङ्गधगाविरासीदिति ॥ तथा चावताराणि स्वलिङ्गानि भक्तानां श्रौतस्मार्तकर्मणोः प्रकर्षेण स्थित्यर्थं करिष्यति भावयिष्यतीत्यर्थः ॥ क्रियाभावनयोरैक्यात् ॥ स्व-लिङ्गद्वारा द्विविधधर्मप्रतिष्ठारूपं प्रयोजनं संपादयिष्यतीतिभावः ॥ भक्तानामिति देहलीदीपकवदुभयत्रान्वेति ॥ तेषांहि लिङ्गार्चनादेव श्रौतस्मार्तप्रतिष्ठानम् ॥ नार्च-यन्तीहयेरुद्रमित्यग्रिमवाक्ये तदन्तरेण तयोरानर्थक्यबोधनात् ॥ अत्रावतारश-ब्दप्रयोगोलिङ्गएव भक्तानां शिवसाक्षात्काररूपस्य हि तस्य सिद्धिबोधनार्थः ॥ अतएव त्रयस्त्रिंशे कृत्तिवासेश्वरलिङ्गमाहात्म्ये तेषांलिङ्गान्महादेवःप्रादुरासीत्त्रिलो-चनः ॥ रक्षणार्थंद्विजश्रेष्ठाभक्तानांभक्तवत्सलइति ॥ तथा चतुस्त्रिंशे मध्यमेश्वरलिङ्ग-माहात्म्ये तस्यवैबहवःशिष्याब्रह्मचर्यपरायणाः ॥ लब्ध्वातद्वचनाज्ज्ञानंदृष्टवन्तोम-हेश्वरमित्युक्तम् ॥ अथ साक्षात्कारहेतोर्ज्ञानस्य कथं सिद्धिरित्याकाङ्क्षायामाह ॥ उपदेक्ष्यन्तीति ॥ सर्ववेदान्तानां सारभूतं यज्ज्ञानं वेदनिदर्शनाद्धर्मात्संपद्यते तच्छिव-स्वरूपज्ञानं शैवा महात्मान उपदेक्ष्यन्ति “ ऋतंसत्यंपरंब्रह्म,, इतिश्रुत्या ब्रह्मसंज्ञि-तत्वम् ॥ इदं च ज्ञानं तत्पुराणाभिप्रेतं शिवविषयकमन्यदेव नतु त्वदभिमतनिर्विशे-षब्रह्मज्ञानम् ॥ तथाहि ॥ चतुर्विंशाध्याये कथंसभगवानीशोदृश्योयोगविद्वांवरइति श्रीकृष्णेन पृष्ट उपमन्युः प्रत्याहभगवानुक्तोदृश्यतेपरमेश्वरः ॥ भक्त्यैवोग्रेणतपसात-त्कुरुष्वेहसंयुतइत्यादिना भक्तेरेव साक्षात्कारहेतुत्वं तस्य ध्यानाराधने वसिष्ठाद्युदा-

हरणानि चोक्तवानिति वर्णयित्वोच्यते ॥ एवमुक्त्वाददौ ज्ञानमुपमन्युर्महामुनिः ॥ व्रतं-पाशुपतंयोगंकृष्णायाक्लिष्टकर्मणइति ॥ एकत्रिंशाध्याये च जैमिनिना धर्मसाङ्ख्य योगादीनि सर्वाणि निर्दिश्य किमेषांचभवेच्छ्रेयःप्रब्रूहिमुनिपुङ्गव ॥ यदिवाविद्य-तेप्यन्यद्गुह्यंतद्वक्तुमर्हसीति पृष्टोव्यास ईश्वरेणपुराप्रोक्तंज्ञानमेतत्सनातनम् ॥ गूढ-मप्राज्ञविद्विष्टंसेवितंसूक्ष्मदर्शिभिः ॥ नाश्रद्दधानेदातव्यंनाभक्तेपरमेष्ठिनः ॥ नावेद-विदुषोज्ञेयंज्ञानानामुत्तमोत्तममित्यादिना शिवपार्वतीसंवादमुखेन यावज्जीववाराण-सीवासकृत्तिवासःसमाराधनादिरूपं तद्यावदध्यायसमाप्ति प्रपञ्चितवान् ॥ तत्र-वेदादीनां सर्वेषां सारभूतत्वं तादृशज्ञानस्यैव समर्थितम् ॥ चतुस्त्रिंशाध्यायेच व्या-सवर्णने योवैसाक्षान्महादेवंसर्वभावेनशङ्करम् ॥ प्रपन्नःपरयाभक्त्यायस्यतज्ज्ञानमै-श्वरमिति तदेवोक्तम् ॥ ततः भगवन्भवताज्ञानंविज्ञातंपरमेष्ठिनः ॥ प्रसादाद्दे-वदेवस्ययत्तन्माहेश्वरंपरम् ॥ तद्वदास्माकमव्यग्रंरहस्यंगुह्यमुत्तमम् ॥ क्षिप्रंपश्य-मतंदेवंश्रुत्वाभगवतोमुखादिति मुनिप्रश्नानन्तरं समाभाष्यैवतान्शिष्यान्सुमन्तुप्रमु-खांस्तथा ॥ प्रोवाचमध्यमेशस्यमाहात्म्यंपैलपूर्वकानित्यादिना व्यासकर्तृकस्तादृश-ज्ञानोपदेशोवर्णितः ॥ एवमेकत्रिंशाध्यायमारभ्याध्यायपञ्चके तेषुतेषु स्थलान्तरे-षु च तस्मिन्पुराणे तदेवमुख्यं ज्ञानं ॐकारेश्वरकृत्तिवासेश्वरमध्यमेश्वरादि-लिङ्गेषु शिवप्रादुर्भावाधिकरणत्वं तदर्चादिना श्रौतस्मार्तप्रतिष्ठा च विस्तरेण नि-रूप्यतएवेति किंबहुना ॥ उपदेक्ष्यतीत्येकवचनपाठे तु शिवएव तज्ज्ञानं महात्म-नामुपदेशेन संपादयिष्यति ॥ कारीषेग्निरध्यापयतीत्यादिवत्कर्तृत्वम् ॥ अन्तर्भा-वितण्यर्थोवा प्रयोगः ॥ अथवा स्वाश्रमवाराणसीवसननैष्ठिकब्रह्मचर्यादिना शिष्या-न् शासितुं योग्यांस्तारकब्रह्माख्यं ज्ञानं शिवः स्वयमेव साक्षादुपदेक्ष्यतीत्य-र्थः ॥ यथोक्तमेकत्रिंशे शिवेनैव ॥ कृत्वावानैष्ठिकींदीक्षामविमुक्तेवसन्तिये ॥ तेषां-तत्परमंज्ञानंददाम्यन्तेपरंपदमिति ॥ पुनस्तत्रैव ॥ यत्रसाक्षान्महादेवोदेहान्तेक्षय्य-मीश्वरः ॥ व्याचष्टेतारकंब्रह्मतथैवह्यविमुक्तकमिति अतएव कलौ व्यासस्यापि तत्र गमनमवर्णि ॥ ननुकलिजदोषाक्रान्तानां कथमेतज्ज्ञानप्राप्तिरिति चेत्तत्राह ॥ येतमिति ॥ येजनाः प्रीताः सन्तस्तं शिवं येन केन बिल्वपत्रपुष्पादिरूपेण सुलभे-नाप्युपचारेण ॥ उपचारतइति सार्वविभक्तिकस्तसिः ॥ नितरां सेवन्ते ते कलि-जान्दोषांस्त्रिंशाध्यायारंभे तिष्येमायामसूयांचेत्यादिना दर्शितपूर्वान्विजित्य परमं पदं रुद्रधाम यान्ति ॥ पत्रपुष्पाद्युपचारेण सेवनं लिङ्गपक्षएव संगच्छते नतुशङ्करा-चार्यपक्षे ॥ तद्व्यक्तेरिदानीमनुपलम्भात्तन्मूर्तिप्रतिष्ठापनस्याप्यभावाच्च ॥ निषेवन्तइ-ति वर्तमानप्रयोगोपि तथैव स्वरसतो युज्यते ॥ लिङ्गार्चनव्यवहारस्य व्यासार्जुन-कालेपि सत्त्वात् ॥ अन्यथा निषेविष्यन्तइति वदेत् ॥ तत्काले शङ्कराचार्यावतारा-र्चनप्रचारस्य सर्वथैवाभावात् ॥ मायादिकलिदोषजयोपि लिङ्गार्चनसाध्यतयैवा-स्मिन्पुराणेऽभिप्रेयते ॥ अथ द्वितीयाध्याये 'जगन्मोहयेतिमायामुपदिशता हरिणो-

च्यते ॥ येयजन्तिजपैर्होमैर्देवदेवंमहेश्वरम् ॥ स्वाध्यायेनेज्ययादूरात्तान्प्रयत्नेनवर्जय॥ भक्तियोगसमायुक्तानीश्वरार्पितमानसान् ॥ प्राणायामादिषुरतान्दूरात्परिहरामलान् ॥ प्रणवासक्तमनसोरुद्रजाप्यपरायणान् ॥ अथर्वशिरसोध्येतॄन्धर्मज्ञान्परिवर्जय ॥ बहुनात्रकिमुक्तेनस्वधर्मपरिपालकान् ॥ ईश्वराराधनरतान्मन्नियोगान्नमोहयेति ॥ एवं तत्र स्थलान्तरेष्वपि द्रष्टव्यम् ॥ प्रकृतवचनतोग्रेप्यनुपदं येनमन्तिविरूपाक्षमीशानंकृत्तिवाससमित्यादिना रुद्रार्चनमेव प्रशस्यते नतु तदवतारविशेषयत्यर्चनम्॥ दोषाणामेवशोधनं ॥ महादेवनमस्कारइति तदाराधनस्यैव कलिदोषप्लोषकत्वं भाष्यते ॥ रुद्रार्चनादेव च परमपदप्राप्तिः प्रतिपाद्यते ॥ परमपदं च रुद्र धामैव प्रकृतपुराणस्य संमतं नत्वविद्यानाशान्निर्विशेष स्वरूपेण व्यवस्थानं त्वदभिमतम् ॥ यथोक्तं चतुश्चत्वारिंशे ॥ ऊर्ध्वंतद्ब्रह्मसदनात्पुरंज्योतिर्मयंशुभम् ॥ वह्निनाचपरिक्षिप्तस्तत्रास्तेभगवान्हरः ॥ देव्यासहमहादेवश्चिन्त्यमानोमनीषिभिः ॥ योगिभिःशतसाहस्रैर्भूतैरुद्रैश्चसंवृतः ॥ तत्रतेयान्तिनिरताभक्तावैब्रह्मचारिणः ॥ महादेवपराःशान्तास्तापसाः सत्यवादिनः ॥ निर्ममानिरहंकाराःकामक्रोधविवर्जिताः ॥ द्रक्ष्यन्तिब्राह्मणायुक्तारुद्रलोकःसर्वैस्मृतइति ॥"किञ्च धर्माब्धिसारे तृतीयपरिच्छेदे वचनानि "॥ विष्णुंशिवंवाभजतांगुरोःपित्रोश्चसेविनाम् ॥ गोवैष्णवमहाशैवतुलसीसेविनामपि ॥ नस्यात्कलिकृतोदोषःकाश्यांनिवसतामपि ॥ तथा ॥ कलौदानंमहाश्रेष्ठंशिवविष्ण्वोश्चकीर्तनमिति ॥ एवमादिवाक्यैकवाक्यतयापि प्रकृतवचसां लिङ्गार्चनपरत्वमेव सिध्यति॥ ननु पापदूषितत्त्वदां कथं सत्कर्मणि प्रवृत्तिरतआह ॥ अनायासेनेति ॥ अनुपदमग्रे रुद्रनमस्कारेणापि महाफलकथनात् अनायासेनसुमहत्पुण्यमाप्नोति ॥ अथवा कलौसंकल्पमात्रेणापिपुण्यावाप्तिकथनादनायासतएव तदाप्नोति ॥ अतएव धर्माब्धिसारे कुशलान्याशुसिध्यन्तिनेतराणिकृतानियदितिश्रीभागवतवचनमुदाहृत्य "कलौपुण्यकर्मणांसंकल्पेपिसिद्धिःपापानांत्वाचरणादेव" इत्युक्तम् ॥ एवमन्यत्रापि द्रष्टव्यम् ॥ अनेकदोषेपि गुणोमहानुपदंस्पष्टयति ॥ कलौतुकेवलंकर्तेति ॥ आद्ये पुण्येतु वासनामात्रस्य धृत्या तत्पुण्यंप्राप्नुवन्ति ॥ यद्वा आद्ये शिवइत्यर्थः ॥ यातु प्रतिकलियुगं शङ्कराचार्यावतारसत्वाद्बहुवचनं प्रक्षीणशक्तिकमिति कस्यचिदुक्तिस्त्वयानूदिता सा त्वसंगतैव ॥ तथासति कलिष्ववतरत्येवेति करोत्यत्रावतारंहीतिवा वदेत् ॥ नतुकरिष्यत्यवताराणीति ॥ करिष्यतीतिलृट्प्रयोगासंगतेः ॥ तथाहि ॥ अयंव्यासार्जुनसंवादोवर्तमानकलेरारंभेभूदिति तेन मन्तव्यम् ॥ एवंसति कल्पारंभात्प्रभृति सप्तममन्वन्तरसप्तविंशकलियुगपर्यन्तं न तस्यावतारः अष्टाविंशतितमादिसर्वकलियुगेषु तु तदवतारइति करिष्यतीत्युक्त्या सिध्येत् ॥ तत्र तावत्सु कलिष्वनवतारे इतःप्रभृत्यवतारे च कारणं सप्रमाणं वक्तव्यम् ॥ तथाङ्गीकारे वक्ष्यमाणानां त्रिपञ्चाशत्तमाऽध्यायवचसां विरोधश्चापद्येत ॥ किंच प्रतिकलियुगावसानभाविकल्क्यवतारादौ न क्वापि बहुवचनं प्रयुज्यत इति प्रकृतेपि बहुवचनानर्थक्यं

तदवस्थमेव ॥ येतं प्रीताइत्यत्र तत्पक्षे येतान्प्रीताइति पठनीयं स्यात् ॥ त्वयापि सोक्तिः प्रत्युक्तेति किंविशेषतस्तत्खण्डनेन ॥ वस्तुतस्तु तत्सकलंपुराणं त्वयानालोकितमिति प्रतिभाति॥अस्तितत्रप्रतिकलियुगं शिवावतारस्य तेनसहचतुर्णांशिष्याणामवतारस्य च वर्णनम् ॥ तथापि न शङ्कराचार्यावतारस्तत्पुराणसंमतः॥ तथाहि ॥ तत्र एकपञ्चाशाध्यायारंभे ऋषयोतीतानागतमन्वन्तराणि व्यासावतारं शाखाप्रणयनं च पृष्ट्वाऽप्राक्षुः॥ धर्मार्थानांप्रवक्तारोह्मीशानस्यकलौयुगे ॥ कियन्तोदेवदेवस्यशिष्याः-कलियुगेपिवाइति ॥ ततः सूतः प्रश्नक्रमानुरोधेन शाखाप्रणयनान्तं निरूप्य त्रिपञ्चाशाध्यायारंभआह ॥ वेदव्यासावताराणि द्वापरेकथितानितु ॥ महादेवावताराणिकलौशृणुतसुव्रताः ॥ आद्येकलियुगेश्वेतोदेवदेवोमहाद्युतिः ॥ नाम्नाहितायविप्राणामभूद्वैवस्वतेन्तरे ॥ हिमवच्छिखरेरम्येसकलेपर्वतोत्तमे ॥ तस्यशिष्याःप्रशिष्याश्चबभूवुरमितप्रभाः ॥ श्वेतःश्वेतशिखश्चैवश्वेताश्वःश्वेतलोहितः ॥ चत्वारस्तेमहात्मानोब्राह्मणावेदपारगाः ॥ इति वैवस्वतमन्वन्तरप्रथमकलियुगेश्वेताख्यं शिवावतारमुक्त्वा द्वितीयकलियुगात्प्रभृत्यष्टाविंशतितमकलियुगपर्यन्तं प्रतिकलियुगं भाविनएकैकावतारस्य क्रमेण नामान्याह ॥ सुतारोमदनेश्चैवसुहोत्रःकङ्कणस्तथा ॥ लोकाक्षिस्त्वथयोगीन्द्रोजैगीषव्यस्थसप्तमे ॥ अष्टमेदधिवाहःस्यान्नवमेऋषभःप्रभुः ॥ भृगुस्तुदशमेप्रोक्तस्तस्मादुग्रःपुरःस्मृतः ॥ द्वादशेतिसमाख्यातोवालीचाथत्रयोदशे चतुर्दशेगौतमस्तुवेदशीर्षाततःपरः ॥ गोकर्णश्चाभवत्तस्माद्गुहावासःशिखण्डधृक् ॥ जयमाल्यट्टहासश्चदारुकोलाङ्गलीतथा ॥ महायामो मुनिःशूलीमुण्डीमुण्डीश्वरस्तथा ॥ सहिष्णुःसोमशर्माचनकुलीश्वरएवचइत्यष्टाविंशतितमेस्मिन्कलियुगे नकुलीश्वराख्योवतारउक्तोनतुशङ्कराख्यः ॥ नच शङ्कराचार्याणामेव नकुलीश्वर इतिनाम कल्पनीयम् ॥ कल्पने मानाभावात् प्राचीनार्वाचीनदिग्विजयादिषु क्वाप्यदर्शनाच्च ॥ तेषु तु शङ्करइत्येव नाम निर्दिश्यते ॥ अतएव माधवेन स्वकृतशङ्करविजयद्वितीयसर्गे नामकरणस्थले (श्लो०८३) यत्पश्यतांशिशुरसौकुरुतेशमग्र्यंतेनाऽकृतास्यजनकःकिलशङ्कराख्याम्॥ यद्वाचिरायकिलशङ्करसंप्रसादाज्जातस्ततोव्यधितशङ्करनामधेयमित्युक्तम् ॥ तस्मात्पाशुपतादिग्रन्थप्रसिद्धोमहाशैवप्रस्थानप्रवर्तकोनकुलीश्वरएवेहाऽद्यत्वेशिवावतारतयाभिमतोभाति ॥ शिष्याश्च प्रथमकलियुगे श्वेतःश्वेतशिखश्चैवश्वेताश्वःश्वेतलोहित इत्युक्ताः ॥ नकुलीश्वरएवचेत्यस्याग्रेनुपदं प्रतिकलियुगं चत्वारस्तत्तदवतारस्यशिष्याभवन्तीत्युक्त्वा क्रमेणतान्प्रवक्ष्यामियोगिनोयोगवित्तमान् ॥ दुन्दुभिःशतरूपश्चऋचीकःकेतुमांस्तथेत्यादिना द्वितीयकलियुगात्प्रभृति प्रतिकलि चतुरश्चतुरो नामतोनिर्दिशन्नष्टाविंशतितमे कलियुगे कुणिश्चैवचगर्गश्चमित्रकोरुष्टएवच ॥ शिष्याएतेमहात्मानःसर्वावर्तेषुयोगिनामिति कुण्यादींश्चतुरोवदति नतुशङ्करदिग्विजयोक्तान् विष्ण्वादिदेवावतारान्पद्मपादादीन् ॥ एतेच प्रतिकलि के चत्वारोऽवतरन्तीत्याकाङ्क्षापि तत्रैवाष्टचत्वारिंशाध्याये तत्तत्पर्वतविशेषे तत्तद्देवधाम्नां निरूपणे रत्नधार-

गिरिवर्णनं प्रक्रम्य पठितैः तस्यैकशिखरेरम्येमहापद्मैरलंकृतम् ॥ स्वच्छामृतज-लंपुण्यंसुगन्धंसुमहत्सरः ॥ जैगीषव्याश्रमंपुण्यंयोगीन्द्रैरुपसेवितम् ॥ तत्रास्तेभगवा-न्नित्यंसर्वैशिष्यैःसमावृतः ॥ प्रशान्तदोषैरक्षुद्रैर्ब्रह्मविद्भिर्महात्मभिः ॥ शङ्खोमनोहरश्चै-वकौशिकःकृष्णएवच ॥ सुमहान्तोवेदविदःशिष्यास्तस्यप्रसादतः ॥ सर्वेयोगरताशा-न्ताभस्मोद्धूलितविग्रहाः ॥ उपासतेसदाचार्यंब्रह्मविद्यापरायणाः ॥ तेषामनुग्रहा-र्थाययतीनांशान्तचेतसाम् ॥ सान्निध्यंकुरुतेभूयोदिव्यासहमहेश्वरइतिवाक्यैः पूर्य-ते ॥ तथाच शङ्खमनोहरकौशिककृष्णाख्याश्चत्वारोयतयएव प्रत्यवतारमवतरन्ती-ति सिध्यति ॥ माधवकृतशङ्करविजयेतु तृतीयसर्गे ( श्लोक २ ) कमलानिलयः कलानिधेरित्यादिना ( श्लोक ६ ) वरुणोजायतचित्सुखाह्वयइत्यन्तेन पद्मपाद-हस्तामलकतोटकोदङ्कसुरेश्वरानन्दगिरिसनन्दनचित्सुखान्विष्णुपवनतद्दशांशनन्दिब्र-ह्मबृहस्पत्यरुणवरुणावतारत्वेन वर्णयित्वा ( श्लोक ७ ) अपरेप्यभवन्दिवौकस-इत्यन्येषामप्यवतरणं निरूप्यते ॥ केषांचिन्मते सुरेश्वरस्य बृहस्पत्यवतारत्वमानन्द-गिरेश्चनन्दीश्वरावतारत्वंचाभिधीयते ॥ अतोनशङ्करदिग्विजये शिष्याणां चतुर्द्धं नापि कौर्मशङ्करदिग्विजययोरेकवाक्यत्वम् ॥ त्रिपञ्चाशाध्यायैकवाक्यतया तु करिष्यत्यवताराणीति त्रिंशाध्यायवचसां नकुलीश्वरपरत्वापत्तेः ॥ अथ नकुली-श्वरस्यैकत्वेनावताराणीति बहुवचनविरोधान्नैवं युक्तमिति चेत्तर्हि प्रागुक्तं लिङ्गा-र्चनपरत्वमाद्रियस्व ॥ त्रिंशाध्यायस्थप्रकृतवचनेषुकुरीत्याप्रसिध्यन्तं लिङ्गार्चनो-त्कर्षमेव तस्मादित्यनेन हेतुतया परामृशन्ननुपदं व्यासआह ॥ तस्मात्सर्वप्रय-त्नेनप्राप्यमाहेश्वरंयुगम् ॥ विशेषाद्ब्राह्मणानुरुद्रमीशानंशरणंव्रजेति ॥ नह्यस्यार्थः शङ्कराचार्यं नकुलीश्वरं वा शरणंव्रजेति शक्योव्याख्यातुम् ॥ नन्वेवंसति कलौ देवोमहेश्वरइतिवाक्यादिदानीं विष्ण्वाद्यर्चनमयुक्तमेवेति चेन्नैवम् ॥ तत्र एको-नत्रिंशे कलौदेवोमहेश्वरइत्यतोनुपदमेवाद्ये ॥ ब्रह्माविष्णुस्तथासूर्यःसर्वएवकलि-ष्वपि ॥ पूज्यतेभगवान्रुद्रश्चतुर्ष्वपिपिनाकधृगितिकथनात् ॥ किंच त्रयोविंशा-ध्याये सहस्रार्जुनपुत्राणां कथायाम् ॥ जयध्वजस्तुमतिमान्देवंनारायणंहरिम् ॥ जगामशरणंविष्णुंदैवतंधर्मतत्परः ॥ तमूचुरितरेपुत्रानायंधर्मस्तवानघेत्यादिना तेषां विष्णुशिवार्चनविषये विवादं कोटिक्रमं चोक्त्वोच्यते ॥ एवंविवादेविततेशूरसेनोब्रवी-द्वचः ॥ प्रमाणमृषयोह्यत्रब्रूयुस्तेयत्तथैवतत् ॥ ततस्तेराजशार्दूलाःपप्रच्छुर्ब्रह्मवादिनः ॥ गत्वासर्वेसुसंरब्धाःसप्तर्षीणांतदाश्रमम् ॥ तानब्रुवंस्तेमुनयोवसिष्ठाद्यायथार्हतः ॥ याय-स्याभिमतापुंसःसाहितस्यैवदेवता ॥ किन्तुकार्यविशेषेणपूजिताचेष्टदानृणाम् ॥ वि-शेषात्सर्वदानायंनियमोह्यन्यथानृपाः ॥ नृपाणांदैवतंविष्णुस्तथैवचपुरन्दरः ॥ विप्राणा-मग्निरादित्योब्रह्माविष्णुःपिनाकधृक् ॥ देवानांदेवताविष्णुर्दानवानांत्रिशूलधृक् ॥ ग-न्धर्वाणांतथासोमोयक्षाणामपिकथ्यते ॥ विद्याधरगणांवाग्देवीसिद्धानांभगवान्हरिः ॥

रक्षसांशङ्करोरुद्रःकिन्नराणांचपार्वती ॥ ऋषीणांभगवान्ब्रह्मामहादेवस्त्रिशूलभृत् ॥ मान्यास्त्रीणामुमादेवीतथाविष्ण्वीशभास्कराः ॥ गृहस्थानांचसर्वेस्युर्ब्रह्मावैब्रह्मचारिणाम् ॥ वैखानसानामर्कःस्याद्यतीनांचमहेश्वरः ॥ भूतानांभगवान्रुद्रःकूष्माण्डानांविनायकः ॥ सर्वेषांभगवान्विष्णुर्ब्रह्मादेवःप्रजापतिः ॥ इत्येवंभगवान्ब्रह्मास्वयंदेवीम्यभाषत ॥ तस्माज्जयध्वजोनूनंविष्ण्वाराधनमर्हतीति ॥ अतोयादेवतायस्यसंप्रदायप्राप्तासैवतेनाराधनीया ॥ तैत्तिरीयसंहिताद्वितीयकाण्डे प्रपाठक (५ अनु० ४ ) " योवैस्वांदेवतामतियजतेप्रस्वायैदेवतायैच्यवतेनपरांप्राप्नोतिपापीयान्भवति " इत्यन्याश्रयणेन स्वदेवतातिक्रमे दोषश्रावणात् ॥ अपिच द्वितीयाऽध्याये आश्रमचतुष्टयंनिरूप्य ॥ आश्रमोवैष्णवोब्राह्मोहराश्रमइतित्रयः ॥ तल्लिङ्गधारीनियतंतद्भक्तजनवत्सलः ॥ ध्यायेदथार्चयेदेकंब्रह्मविद्यापरायणइतित्रयः संप्रदायाउक्ताः ॥ तत्रहैरण्यगर्भसंप्रदायस्येदानीमुच्छेदेपि शैववैष्णवसंप्रदायावुभावपि शास्त्रसिद्धौ परस्पराविरुद्धौ शिष्टसंमताविव ॥ तत्र योयस्य पारंपरिकोधर्मः सएव तेन सेवनीयः॥ स्वधर्मेनिधनंश्रेयइतिभगवद्वाक्यात् ॥ येच विष्णुभक्ताः शिवं वेदाविरुद्धशैवशास्त्राणि वा निन्दन्ति येच शिवभक्ताभगवन्तं तदविरुद्धभगवच्छास्त्राणिवा गर्हयन्ति तउभयेऽन्तर्कभयेन्निपतन्ति ॥ एकस्यैव हि वेदगीताश्रीभागवतादिषु परब्रह्मपरमात्मपुरुषोत्तमभगवदादिशब्दैरभिधीयमानस्य परवस्तुनोनिर्गुणस्य सत्वाद्युपाधिभेदाल्लीलावताराब्रह्मविष्णुमहेश्वराः ॥ अतोनिर्गुणपुरुषोत्तमभक्तानां शुद्धाद्वैतब्रह्मवादनिष्ठानां तु न क्वापि निन्दाऽवकाशइति दिक् ॥ विस्तरस्तु बालबोधप्रहस्तवादादिषु प्राक्तनप्रबन्धेषु तदुच्छिष्टसंग्राहके मम सत्सिद्धान्तमार्तण्डादौ च द्रष्टव्यः ॥ तस्मात् कलावपि वैष्णवानां भगवदर्चनमेव ॥ तत्कीर्तनादितएव च निःशेषकलिदोषक्षोषः ॥ श्रीभागवतादिवचनोपन्यासपुरःसरं हेमाद्रिकौस्तुभधर्माब्धिसारादिषु तथा निर्णयादित्यलं प्रासङ्गिकेन ॥ यच्च वायुपुराणवचनं शिवपुराणवचनं चोक्तं तत्त्वनाकरमेव॥ तत्तत्पुस्तकेष्वनुपलंभात् ॥ त्वयाप्यदृष्टमूलं च॥ अतएवात्यावश्यकेपि विषये पूर्ववदध्यायसङ्ख्यादिकं नोदाहारि ॥ ( अवतारक्रियया साहित्यं ) इत्यत्रावतारक्रियाया मिति रमणीयम् ॥ साहित्यस्थले हि अप्रधानएव तृतीया प्रयुज्यते नतु क्रियायाम् ॥ व्युत्पत्तिवादादिषु " सहशब्दार्थस्तत्क्रियाकालः क्वचित्तत्क्रियान्वयिप्रथमान्तपदार्थेष्वेति क्वचित्त्वसमभिव्याहृतक्रियायाम् ॥ सपुत्रआगच्छतीत्यस्य पुत्रेण सहागच्छतियइतिविग्रहात्प्रथमान्तान्यपदार्थेएवपुत्रागमनकालान्वयोन तुक्रियायामितिनसमासानुपपत्तिः" इत्यादौगदाधरभट्टादिभिः क्रियायां समन्व्येव प्रयुज्यते ॥ नतु क्वापि तथा प्रयोगोविद्वद्व्यवहारगोचरः ॥ शिष्योक्तीनां व्यासाद्युक्तिवत्प्रामाण्यकथनं तु स्वीयगोष्ठ्यैव श्रद्धेयम् ॥ व्यासादितौल्ये मानाभावात् ॥ शङ्करदिग्विजयादीनां प्रानतयोदाहरणे क्वपिलोयदिसर्वज्ञःकणादोनेतिकाप्रमा ॥ इतिन्यायःप्रसज्येतसर्वत्रैवव्यवस्थिताविति पराशरस्मृतिव्याख्यायां माधवोक्तदिशैव तत्तत्संप्रदायप्रसिद्धतत्त-

द्राचार्यदिग्विजयादिग्रन्थानां त्वयापि मानतयाऽऽदर्तव्यत्वापत्तेः ॥ तथासति ग्रहाङ्-
करापसारणश्रमे क्रमेलकप्रवेशः ॥ तेषांसर्वेषां कलिमलहर्तृत्वमुक्तं तदपि मानाभा-
वात्स्वानुयायिमात्रश्रद्धागोचरः ॥ स्वयं मानत्वेनोपन्यस्ते येतंप्रीताइतिवाक्ये . त-
मित्येकवचनप्रयोगेण त्वदुक्तार्थादरणेपि शिष्याणां कलिमलहर्तृतायास्ततोप्राप्तेः ॥
तेषु फलमतइतिन्यायस्याप्रवृत्तेश्च ॥ ब्रह्मसंज्ञितमित्यस्य ब्रह्मविषयकमित्यर्थः कथ-
मितिविचार्यम्॥ इतरत्तु प्रागेवापास्तम् ॥ किंच श्रौतपदेन श्रौतस्मार्तधर्मं स्वयं व्या-
ख्याय तत्र स्वयं विशेषितन्याय्यतोपष्टम्भकत्वेन व्याकुर्वन्व्याससूत्रार्थमितिपद्यो-
पन्यासोहासोल्लासकः ॥ व्याससूत्रेषु श्रौतस्मार्तकर्मणोर्निर्णयस्याभावात् ॥ सूत्रा-
नुसारिवाक्यैः सूत्रार्थवर्णनरूपे भाष्येपि तदसम्भवात् ॥ व्याससूत्रैरेव धर्मनिर्ण-
याङ्गीकारे जैमिनीयद्वादशलक्षण्या आपार्थक्यप्रसङ्गाच्च ॥ व्याकुर्वन्नितिश्लोके
ऊचिवानिति भूतार्थप्रयोगोपि तस्यार्वाचीनकल्पितत्वमेवावगमयति ॥ शङ्कराचार्या-
वतारस्य वर्षसहस्रादेवप्राग्जातत्वेन तत्कृतशारीरकभाष्ये पुराणापेक्षया प्राक्तनता-
या अशक्यवचनतया पुराणे तथा प्रयोगानुपपत्तेः ॥ अपिच एवङ्कारमत्र यद्यपि
शक्यते वक्तुम् ॥ चतुर्भिःसहेतिवाक्यं वक्ष्यमाणपाद्मवाराहादिविषये विशेषसम-
र्पकम् ॥ उक्तकौर्मवाक्यैकवाक्यतया नकुलीश्वरपरं वा ॥ व्याकुर्वन्नितिवाक्यं
तु शिवः सूत्रार्थं सूत्रात्मना कारणरूपेण स्थितं सर्वमर्थं पदार्थं नामरूपाभ्यां व्या-
कुर्वन् " तद्धेदंतर्ह्यव्याकृतमासीत् ॥ तन्नामरूपाभ्यांव्याक्रियत " इतिबृहदार-
ण्यके श्रावणात् ॥ व्यास ॥ विशेषेणआस जगद्रूपेणाविर्बभूव ॥ " सहैतावानास "
इतितत्रैवाम्नानात् यथा यथावत् श्रुतेरर्थमुक्तवान् ॥ नारदादीन्प्रतीतिशेषउप-
बृंहणेभ्योऽवगन्तव्यः " ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणो-
धिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् " इत्यादिश्रुतिसिद्धमिदम् ॥ सः व्याकरणा-
दिकर्ता सविताननः वितानतया प्रपंचस्य पटवद्विस्तारणया सहितः शङ्करएव न्या-
यादनपेतः श्रुतेरर्थः ॥ सवितानेनेतिपाठे तु सविता जगत्प्रसविता शिवो ननु ना जी-
वः ॥ शिवस्य पुरुषोत्तमलीलावतारत्वात् ॥ नृशब्दस्य जीवपरत्वंतु " इतिनृगतिं
विविच्यकवयोनिगमावपनं " इत्यादौ प्रसिद्धम् ॥ एवं शिवस्य परब्रह्मतया स्तु-
तिपरत्वेन व्याख्येयम् ॥ निर्णीतंचेदं ब्रह्मैवतादृशंयस्मात्सर्वात्मकतयोदिताविंत्यादौ
ब्रह्मविष्णुशिवास्ततः ॥ देवतारूपवत्प्रोक्ताइत्यादौ च श्रीमदाचार्यचरणैः ॥ त्वत्प-
क्षेतु ॥ शङ्करःसवितानन्इति समाप्तपुनरात्तिः ॥ केचित्त्विमंदोषंसमाप्तपुनरात्तमि-
तिव्यवहरन्ति ॥ एतत्स्वरूपंतुमञ्जूषायाम् " क्रियाकारकभावेनान्वयबोधकसकल-
पदोक्त्यनन्तरं तद्घटकयत्किंचिदन्वयिविशेषणोपादानंहि समाप्तपुनरात्तं " इत्यु-
क्तम् ॥ यथोचिवानित्यत्र च यमूचिवानिति पठनीयं स्यात् ॥ अन्यथा सइत्यनेन-
सामानाधिकरण्यायोगात् ॥ ऊचिवानितिप्रयोगात्त्वदभिमताऽसिद्धिश्च ॥ तथाहि ॥ भू-
तइत्यधिकृत्य " छन्दसिलिट् ॥ लिटःकानज्वा ॥ क्वसुश्च ॥ " इतिभूतार्थकस्यै-

व लिटः स्थाने पक्षे क्वसुर्विधीयते ॥ अतोभाष्यादिस्थे आजिवान्नतितीर्वानित्यादा-वजननतरणादिवदिहापि भूतकालमेववचनम् ॥ तच्च न संगच्छेत ॥ पुराणापेक्षया शङ्कराचार्याणामुत्तरकालिकत्वादितिप्रागेवादर्शयाम ॥ नचोक्तव्याख्यानेपि आसे-तिप्रयोगोनुपपन्नः॥ अस्तेर्हि भ्वादेशेन बभूवेत्येव स्यादिति वाच्यम् ॥ प्रामाणिकग्र-न्थेष्वनेकेषु तथाप्रयोगदर्शनात् ॥ धात्वन्तरतः साधयितुं शक्यत्वाच्च ॥ यथा मा-धवकृतशङ्करदिग्विजये तृतीयसर्गे (श्लोक ६) विधिरासस्सुरेश्वरोगिरांनिधिरानं-न्दगिरिर्व्यजायतेतिप्रयुज्यते ॥ कालिदासोपि कुमारसंभवप्रथमसर्गे (श्लोक ३५) वृत्तानुपूर्वेचनचातिदीर्घेजङ्घेशुभेसृष्टवतस्तदीये ॥ शेषाङ्गनिर्माणविधौविधातुर्लावण्यउ-त्पाद्यइवासयत्नइतिप्रयुङ्क्ते ॥ अत्र आसेतिबभूवाऽर्थेतिङन्तप्रतिरूपकमव्ययमित्याह शाकटायनः ॥ वल्लभपण्डितस्तु नतिङन्तप्रतिरूपकमव्ययम् ॥ अस्तेर्भूरितिभ्वादेशा-नियमात्ताहक्तिङन्तस्यैवाभावात् ॥ किन्तुकवीनामयं प्रामादिकः प्रयोगइत्याह॥ वाम-नस्तु असगतिदीप्त्यादानेष्वितिधातोर्लिटिरूपमिदमित्याह ॥ असेत्यनुदात्तेद्दीप्त्यर्थे ॥ आस दिदीपेप्रवृत्तइत्यर्थइतिमल्लिनाथः ॥ वस्तुतस्तुभ्वादावथगुहूत्यन्ताःस्वरितेतइत्यु-दीर्य हिक्कअव्यक्तेशब्दइत्यारभ्य पठितेषु गुहूत्यन्तेष्वष्टात्रिंशद्धातुष्वन्तर्भूतोऽयमपि स्वरितेत्त्वादुभयपदी ॥ कुर्दखुर्दगुर्दगुदक्रीडायामेवेत्येवकारग्रहणाज्ज्ञापकात्परौभुवो-ऽवज्ञानइतिसौत्रज्ञापकाद्वा धातूनामनेकार्थत्वमाश्रित्यास्य सत्तार्थकत्वमपि शक्यव-चनम् ॥ गतिदीप्तिभ्यां वोक्तार्थनिर्वाहः ॥ श्रुतिपुराणादिषु च “ तस्यहनचिकेतानाम-पुत्रआस ॥ सहैतावानास ॥ नयदिदमग्रआसनभविष्यदितोमिथनात् ” इत्यादिप्रचु-रप्रयोगदर्शनात्प्रकृते नानुपपत्तिः काचित् ॥ तस्मादुक्तएवार्थोयुक्तइति ॥ तथापि कादम्बरीकल्पस्य किं व्याख्यानेन॥ श्रुत्यर्थे युक्त्यपेक्षायामपि न्यग्रोधफलाहरणल-वणाऽऽचमनादिरूपा वैदिक्येव सा तत्राऽपेक्षिता॥ तदनुकूला च लौकिक्यपि ॥ नतु तद्विरुद्धा सा तथा ॥ आर्षधर्मोपदेशस्य वेदशास्त्राविरोधितर्केणानुसन्धेयत्वस्मरणा-दित्यादि मयापि द्वितीयभागे वक्ष्यते ॥ तदेतत्सर्वमनुसंधायोक्तंमूले ॥ **शिवविषया-ण्येवेति** ॥ एवकारः करिष्यत्यवताराणीत्यादिवचसां शङ्कराचार्यविषयकत्वं व्यव-च्छिनत्ति॥ **तेषामित्यादि** ॥ अत्रप्राञ्चः॥ पाद्मोत्तरखण्डे चत्वारिंशेऽध्याये (श्लोक १) भगवञ्छ्रोतुमिच्छामिद्वादश्याश्चविधानकम् ॥ विष्णोःपूजाविधानंचकर्तव्यंतत्र वैप्रभो ॥ इत्यादिपार्वत्या पृष्टःशिवः (श्लोक ४) एकादश्यांतुप्रासायांसमुपोष्य-तुमानवइत्यादिना तत्कृत्यं वदन्नुपवासावश्यकत्वमरुणोदयवेधादिकं चोक्त्वा द-शम्यादिदिनत्रयकृत्यकथने (श्लोक २९।३०।३१) पाषण्डिनंविकर्मस्थंपतितं-श्वपचंतथा ॥ नावलोकेन्नसंभाषेत्त्रिदिनंतत्रवैष्णवः ॥ अवैष्णवस्तुयोविप्रःसपाष-ण्डीप्रकीर्तितः ॥ शिखोपवीतत्यागीचविकर्मस्थइतीरितः ॥ महापापोपपापाभ्यांयु-क्तःपतितउच्यते ॥ अन्त्यजःश्वपचःप्रोक्तोदेवितत्रैषनिर्णयइत्याह ॥ ततएकचत्वा-रिंशे ॥ पाषण्डिनांचसंलापंवर्जयेदितियत्त्वयां ॥ उक्तंमभेहभगवन्ब्रूहित्वंगर्हितान्हि-

तान्‌ ॥ तेषांवृत्तीःसमाचक्ष्वकैर्लिङ्गैश्चिन्हिताभुवीति पार्वत्या पृष्टः सः येन्यंदेवंपरत्वे-
नवदन्त्यज्ञानमोहिताः ॥ नारायणाज्जगन्नाथात्तेवैपाषंण्डिनोमताः ॥ द्वेष्टारोविष्णु-
भक्तानांयेचावैष्णवसंश्रयाः ॥ पाषण्डिभिश्चसंयुक्तास्तेवैपाषण्डिनःस्मृताः ॥ कपाल-
भस्मास्थिधरायेचावैदिकलिङ्गिनः ॥ अन्तेवनस्थादंभाच्चजटावल्कलधारिणः अवै-
दिकक्रियोपेतास्तेवैपाषण्डिनःस्मृताः ॥ शङ्खचक्रोर्ध्वपुण्ड्रादिचिन्हैःप्रियतमैर्हरेः ॥
रहितायेनरादेवितेवैपाषण्डिनःस्मृताः ॥ श्रुतिस्मृत्युक्तमाचारंयस्तुनाचरतिद्विजः ॥
सपाषण्डोतिविज्ञेयःसर्वलोकेषुगर्हितः ॥ स्मार्तंश्चात्क्रियतेयैस्तुनचवेदोदितंमहत्‌ ॥
विनैवभगवत्प्रीत्यातेवैपाष० ॥ समस्तयज्ञभोक्तारमविदित्वाऽच्युतंहरिम्‌ ॥ उद्दिश्य-
देवताअन्याजुहोतिचददातिच ॥ सपाषण्डीतिविज्ञेयःस्वतन्त्रोवापिकर्मसु ॥ यस्तु-
नारायणंदेवंब्रह्मरुद्रादिदैवतैः ॥ समत्वेनैववीक्षेतसपाषण्डीभवेत्सदा ॥ अवस्थात्रितये-
यस्तुमनोवाक्कायकर्मभिः ॥ वासुदेवंनजानातिसपाषण्डीभवेन्नरः ॥ किमत्रबहुनोक्ते-
नब्राह्मणायेह्यवैष्णवाः ॥ तेवैपाषण्डिनोज्ञेयाःसर्वलोकेषुगर्हिताइत्याद्याह ॥ ततोगिरि-
जया कपालभस्मचर्मास्थिधारणप्रभृतिदुराचारकारणेऽनुयुक्ते श्रीमहादेवः ( श्लोक
२० ) नमुच्याद्यामहादैत्याःपुरास्वायंभुवान्तरइत्यादिना कर्मज्ञानभक्तिसंपन्नैर्दैत्यैर्दे-
वानां स्थानादेर्हरणं ततोनिर्जराणां श्रीहरिं प्रति शरणभावेन सरणं प्रार्थनं च वर्ण-
यित्वाह ॥ ( श्लोक २७ ) इत्याकर्ण्यहरिर्वाक्यंदेवतानां भयार्दितः ॥ तानवध्यान्वि-
दित्वाथमामाहपुरुषोत्तमः ॥ ( तान्दैत्यान्‌ ) त्वंचरुद्रमहाबाहोमोहनार्थंसुरद्विषाम्‌ ॥
पाषण्डाचरणंधर्मंकुरुष्वसुरसत्तम ॥ तामसानिपुराणानिकथयस्वचतान्प्रति ॥ मोहना-
निचशास्त्राणिकुरुष्वचमहामते ॥ मय्यभक्ताश्चयेकेचिद्भविष्यन्तिमहर्षयः ॥ त्वच्छ-
क्त्यातान्समाविश्यरचयस्वचतामसान्‌ ॥ कणादंगौतमंशक्तिमुपमन्युंचजैमिनिम्‌ ॥
दुर्वाससंचकपिलंमृकण्डुंचबृहस्पतिम्‌ ॥ भार्गवंजमदग्निंचदशैतांस्तामसानृषीन्‌ ॥ त-
वशक्त्यासमाविश्यकुरुष्वजगतोहितम्‌ ॥ त्वच्छक्त्यासन्निविष्टास्ते तमसोद्रिक्तया-
भृशम्‌ ॥ तामसास्तेभविष्यन्तिक्षणादेवनसंशयः ॥ कथयिष्यन्तितेविप्रास्तामसानिज-
गत्त्रये ॥ पुराणानिचशास्त्राणित्वत्परत्वेनबृंहिताः ॥ कपालभस्मचर्मास्थिचिन्हान्यम-
रपूजित ॥ त्वमेवधृत्वातांल्लोकान्मोहयस्वजगत्त्रये ॥ तथापाशुपतंशास्त्रंत्वमेवकुरु
सुव्रत ॥ कङ्कालशैवपाषण्डमहाशैवादिभेदतः ॥ अवलम्ब्यमतंसम्यग्वेदबाह्यंद्विजोत्त-
माः ॥ भस्मास्थिधारिणःसर्वेभविष्यन्तिनसंशयः ॥ त्वांपरत्वेनवक्ष्यन्तिसर्वशास्त्रेषु-
तामसाः ॥ तेषांमतमधिष्ठायसर्वेदैत्याश्चदानवाः ॥ भवेयुस्तेमद्विमुखाःक्षणादेवनसंश-
यः ॥ अहमप्यवतारेषुत्वांचरुद्रमहाबल ॥ तामसानांमोहनार्थंपूजयामियुगेयुगे ॥
मतमेतदवष्टभ्यपतन्त्येवनसंशयइति भगवदाज्ञामनूद्य पाषण्डप्रवर्तने स्वस्योद्वेगं तद्वार-
णाय भगवताज्ञप्तं नामसहस्रस्य रामषडक्षरतारकमन्त्रस्य च जपितव्यत्वं (श्लो०५३)
मनसैवार्चयित्वातुमांनाथंपुरुषोत्तमम्‌ ॥ मदाज्ञांकुरुमत्प्रीत्यासर्वमेतच्छुभंतवेत्यन्तेन
निरूप्य ततः स्वयं पाशुपतादिशास्त्रोत्पादनं तमःप्रधानशक्त्याऽऽविष्टविप्रद्वारा मोहक

शास्त्रोत्पादनं च यावदध्यायसमाप्तिनिर्दिष्टवान् ॥ ततोद्विचत्वारिंशे ॥ पार्वत्युवाच॥ तामसानिचशास्त्राणिसमाचक्ष्वममानघ ॥ संप्रोक्तानीहतैर्विप्रैर्भगवद्भक्तिवर्जितैः ॥ तेषांनामानिक्रमशःसमाचक्ष्वसुरेश्वर ॥ श्रीरुद्रउवाच ॥ शृणुदेविप्रवक्ष्यामितामसानियथाक्रमम् ॥ येषांश्रवणमात्रेणपातित्यंज्ञानिनामपि ॥ प्रथमंतुमयैवोक्तंशैवंपाशुपतादिकम् ॥ मच्छक्त्यावेशितैर्विप्रैःसंप्रोक्तानिततःपरम् ॥ कणादेनतुसंप्रोक्तंशास्त्रंवैशेषिकंमहत् ॥ गौतमेनतथान्यायंसाङ्ख्यंतुकपिलेनवै ॥ धिषणेनतथाप्रोक्तंचार्वाकमतिगर्हितम् ॥ दैत्यानांनाशनार्थायविष्णुनाबुद्धरूपिणा ॥ बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् ॥ मायावादमसच्छास्त्रंप्रच्छन्नंबौद्धमुच्यते ॥ मयैवकथितंदेवि कलौब्राह्मणरूपिणा ॥ अपार्थंश्रुतिवाक्यानांदर्शयल्लोकगर्हितम् ॥ कर्मस्वरूपत्याज्यत्वमत्रैवप्रतिपाद्यते ॥ सर्वकर्मपरिभ्रष्टंविकर्मत्वंतदुच्यते ॥ परेशजीवयोरैक्यंमयात्रप्रतिपाद्यते ॥ ब्रम्हणश्चपरंरूपंनिर्गुणंवक्ष्यतेमया ॥ सर्वस्यजगतोप्यत्रमोहनार्थंकलौयुगे ॥ वेदार्थवन्महाशास्त्रंमायावादमवैदिकम् ॥ मयैववक्ष्यतेदेविजगतांनाशकारणात् ॥ द्विजन्मनाजैमिनिनापूर्ववेदमयार्थतः ॥ निरीश्वरेणवादेनकृतंशास्त्रंमहत्तरम् ॥ शास्त्राणिचैवंगिरिजेतामसानिनिबोधमइति ॥ इमानि च वचनानि विज्ञानेन्द्रभिक्षुनागोजीभट्टादिभिः प्रामाणिकैरप्युदाहृतानीति न तेषु कल्पितत्वादिशङ्कावकाशः ॥ वाराहे च प्रागितिहासे रुद्रगीतासु भगवान् ॥ त्वंचरुद्रमहाबाहोमोहशास्त्राणिकारय ॥ अतथ्यानिवितथ्यानिदर्शयस्वमहाभुज ॥ प्रकाशंकुरुचात्मानमप्रकाशंचमांकुर्विति ॥ इतिवदन्ति ॥ अवशिष्टं तूत्तरभागे वक्ष्यते ॥ तदेतत्सर्वमनुसंधायोक्तंमूले ॥ **पाद्मवाराहादिषुप्रसिद्धमिति ॥ अन्यत्रेति** ॥ निबंधादिषु बुद्धावतारेत्वधुना हरौ तद्वशगाः सुराइत्यादिस्थले विस्तरइत्यर्थः ॥ अथ सहस्राक्षे* ब्राह्मणैरितीत्यादिना उदाहृतमेवेत्यन्तेनारोपितं वैष्णवाचार्येषु तदनुयायिषु च शमत्वं परिहर्तुं तं भागं निराकुर्वन्ति ॥ **यच्चशमानामित्यादिनाफलानीतिबहुवचनस्यानुपपन्नत्वादित्यन्तेन** ॥ अत्रेदं बोध्यम् ॥ यत्सहस्राक्षे सप्तविंशाध्यायवचनं प्रथममुक्तं तत्पूर्वापरविचारान्न वैष्णवविषयकम् ॥ तथाहि ॥ तस्मिन्नध्याये

**यच्च शमानां लक्षणसप्तकमुक्तं तदपि तेषांलक्षणत्वेनाभिमतानां वास्तवलक्षणत्वएव घटते नत्वारोपमात्रेण ॥ नहि मरुमरीचिका केनचिदज्ञेन जलत्वेनारोपितापि स्नानपानादि-**

---

## सहस्राक्ष

* ब्राह्मणैरिति ॥ गौतमादिभिरित्यर्थः ॥ उक्तंहि कौर्मे पूर्वखण्डे सप्तविंशेऽध्याये श्रीकृष्णेन भृग्वादीन्प्रति ॥ द्विषन्तो देवमीशानं युष्माकं वंशसंभवाः ॥ शप्ताश्च गौतमेनोर्व्यां न संभाष्या द्विजोत्तमैः ॥ १ ॥ तत्रैवैकोनत्रिंशेऽध्यायेऽर्जुनं प्रति व्यासेन ॥ कुर्वन्ति चाव-

कार्यक्षमा भवति ॥ किंतावद्वास्तवं लक्षणत्वम् ॥ लक्ष्यताव-
च्छेदकसमनियतत्वमिति गृहाण ॥ लक्ष्यवतावच्छेदकसमनि-
यतत्वं च लक्ष्यतावच्छेदकवन्निष्ठभेदप्रतियोगितानवच्छेदक-
त्वे सति लक्ष्यतावच्छेदकनिष्ठावच्छेदकताकप्रतियोगिताकभे-
दवदवृत्तित्वम् ॥ इदमेवासाधारणत्वम् ॥ तादृशमेव च लक्ष-
णमव्याप्त्यतिव्याप्त्यसंभवरूपदोषत्रयरहितं भवति ॥ तद्भिन्नं च
लक्षणाभासत्वेन व्यवह्रियते ॥ नहिलक्षणाभासेन व्यवहर्तव्य-
व्यवहारो भवति ॥ अन्यथाश्रृङ्गित्वरूपलक्षणेन महिष्यादावपि
गौरिति व्यवहारापत्तिः ॥ तस्माद्दोषत्रयविनिर्मुक्तेनैव लक्षणेन
प्रामाणिकानां व्यवहारः ॥ तस्यैव लक्ष्यतावच्छेदकसमनिय-
तत्वात्॥त्वदुक्तलक्षणानां तु दोषदूषितत्वेन न प्रामाणिकव्यव-
हारप्रयोजकत्वम् ॥ लक्षणाभासत्वात् ॥

## टीका

पृथिव्यां धर्मस्थापनादिसर्वकार्यानन्तरं श्रीकृष्णः स्वधाम जिगमिषंस्तस्मिन्नवसरे समागतान्भृग्वादीन्यथोचितं सत्कृत्याह ॥ गमिष्यामिपरंस्थानंस्वकीयंविष्णुसंज्ञितम्॥ कृतानिसर्वकार्याणिप्रसीदध्वंमुनीश्वराः ॥ इदंकलियुगंघोरंसंप्राप्तमधुनाऽशुभम् ॥ भविष्यन्तिजनाःसर्वेह्यस्मिन्पापानुवर्तिनः ॥ प्रवर्तयध्वंविज्ञानमज्ञानांचहितावहम् ॥ येनेमेकलिजैःपापैर्मुच्यंतेहिद्विजोत्तमाः ॥ येमांजनाःसंस्मरन्तिकलौसकृदपिप्रभुम् ॥ तेषांनश्यतितत्पापंभक्तानांपुरुषोत्तमे ॥ येर्चयिष्यन्तिमांभक्त्यानित्यंकलियुगेद्विजाः ॥ विधिनावेददृष्टेनतेगमिष्यन्तितत्पदम् ॥ येब्राह्मणावंशजातायुष्माकंवैसहस्रशः ॥ ते-

---

## सहस्राक्ष.

ताराणि ब्राह्मणानां कुलेषु वै ॥ देवीशापविनिर्दग्धाः पुरा दक्षाऽध्वरे द्विजाः ॥ १ ॥ निन्दन्ति च महादेवं तमसाऽऽविष्टचेतसः ॥ वृथाधर्मं चरिष्यन्ति तस्मिन्काले युगान्तके ॥ २ ॥ येचाऽन्ये शापनिर्दग्धा गौतमस्य महात्मनः ॥ सर्वेतेऽवतरिष्यन्ति ब्राह्मणाद्भुतासु योनिषु॥३॥ इत्याद्युक्तोक्तम् ॥ मोहयन्ति जनान्सर्वान्दर्शयित्वा फलानि वै इति ॥ कौर्मे पूर्वखण्डएव दक्षं प्रति दधीचेन ॥ भविष्यन्ति त्रयीबाह्याः सर्वेऽपीश्वरविद्विषः ॥ निंदन्तोहीश्वरं मार्गं कुशा-

षांनारायणेभक्तिर्भविष्यतिकलौयुगे ॥ परात्परतरंयान्तिनारायणपरायणाः ॥ नते-
तत्रगमिष्यन्तियेद्विषन्तिमहेश्वरम् ॥ ध्यानंयोगस्तपस्तप्तंज्ञानंयज्ञादिकोविधिः ॥ ते-
षांविनश्यतिक्षिप्रंयेनिन्दतिमहेश्वरम् ॥ योमांसमर्चयेन्नित्यमेकान्तंभावमाश्रितः ॥
विनिन्दन्देवमीशानंसयातिनरकायुतम् ॥ तस्मात्संपरिहर्तव्यानिन्दापशुपतौद्विजाः ॥
कर्मणामनसावाचामद्भक्तेष्वपियत्नतः ॥ येचदक्षाध्वरेशापाद्दधीचेनद्विजोत्तमाः ॥
भविष्यन्तिकलौभक्तेःपरिहार्याःप्रयत्नतः ॥ द्विषन्तोदेवमीशानंयुष्माकंवंशसंभवाः ॥
शप्ताश्चगौतमेनोर्व्यानसंभाष्याद्विजोत्तमैः ॥ एवमुक्ताश्चकृष्णेनसर्वेतेवैमहर्षयः ॥ ओ-
मित्युक्त्वाययुस्तूर्णंस्वानिस्थानानिसत्तमाः ॥ ततोनारायणःकृष्णोलीलयैवजगन्मयः ॥
संहृत्यस्वकुलंसर्वंययौतत्परमंपदमिति ॥ अत्र सर्वेषां पापानुवर्तनमज्ञानां तेषां हिता-
र्थं कलिजपापनाशार्थं च स्वविज्ञानस्य प्रवर्तनमाज्ञाप्य कथंत्वद्विज्ञानमित्याकाङ्क्षा-
यां सर्वदापुरुषोत्तमस्मरणनित्यतत्सेवनादिनेत्याशयेन येमांजनाःसंस्मरन्तीतिश्लोक-
द्वयमुक्त्वा पुरुषोत्तमस्मरणसेवाऽपरोक्षज्ञानसाधकवैष्णवसंप्रदायानां भवनं सूचयित्वा
श्रीमहादेवनिन्दकस्यदुष्फलावश्यंभावाद्वैष्णवैरपिशिवनिन्दा न कार्येति निश्चाय्य वै-
ष्णवनिन्दापि प्रयत्नतस्त्याज्येति चाभिधाय वेदादिविमुखैः सह संसर्गोवैष्णवैर्नकार्यइ-
त्युच्यते येचेतिश्लोकेन ॥ देवमीशानमिति तूपलक्षणम् ॥ विनिन्दन्तित्वदृषीके-
शंब्राह्मणांन्ब्रह्मवादिनइति वक्ष्यमाणत्रिंशाध्यायवाक्यैकवाक्यत्वसिद्धेः ॥ अतोवि-
ष्णुशिवदेववेदादिद्वेषिणोये वेदबाह्यांस्ते न संभाष्याइत्येवार्थः ॥ तत्रैव षोडशाध्याये॥
कापालंलाकुलंवामंभैरवंपूर्वपश्चिममित्यादिना गौतमशप्तानां कापालादिवेदबाह्यशा-
स्त्रेष्वेव प्रवृत्तिकथनात् ॥ शिवादिद्वेषरहिताः प्रत्युत शिवप्रवर्तितपुरुषोत्तमभक्तिमा-
र्गनिष्ठा वेदानुयायिनो वयंतु नास्य वाक्यस्य गोचराः ॥ एवमुक्ताश्चेति श्लोके
ओमित्युक्त्वेति॥ प्रवर्तयध्वंविज्ञानमित्यादिना भगवताऽऽज्ञप्तं तत्साक्षात्कारसाधनसंप्र-
दायप्रवर्तनादिकमङ्गीकृत्येत्यर्थः ॥ एवं स्वस्थापितधर्मज्ञानादीनां भुवि चिरमवस्थान
सिद्धये भृग्वादीन्प्रत्याज्ञापनोत्तरं भगवतः स्वधामगमनं वर्णितम्॥ लोकक्षेमार्थमेवक-
लौ भूयो भक्तिमार्गप्रवृत्तिरित्यत्र साधकानि ब्रह्माण्डादिवचनानि मूले वक्ष्यन्ते॥ यच्च

---

## सहस्राक्ष·

स्त्राऽऽसक्तचेतसः ॥ १ ॥ मिथ्याऽधीतसमाचारामिथ्याज्ञानप्रलापिनः ॥ प्राप्य कलियुगं घोरं
कलिजैः परिपीडिताः ॥ २ ॥ त्यक्त्वा तपोबलं कृत्स्नं गच्छध्वं नरकान्पुनः ॥ भविष्यति हृ-
षीकेशः स्वाश्रितोऽपि पराङ्मुखः ॥ ३ ॥ ये ये शापाऽग्निनिर्दग्धा दधीचस्य महर्षयः ॥ द्वि-
षन्तो मोहितादेवं संभूतास्ते कलिष्वथ ॥ ४ ॥ इत्याद्युक्त्वा त्यक्त्वा तपोबलं कृत्स्नं विप्राणां
कुलसम्भवाः ॥ इतिचोक्त्वा कल्पान्ते रौरवादिषु निपात्यमानाः कालेनेत्युक्तम् ॥ तत्र द्विषन्तो-
देवम् इत्यत्र लक्षणहेत्वोः क्रियायाइति सूत्रेण लक्षणे हेतौ वा शता अदन्विप्रो न नमनीयः
पचन्विप्रो न श्राद्धे भोजनीयइत्यादिवत् ॥

कुर्वन्तिचावताराणीत्यादिवचसामेकोनत्रिंशाध्यायस्थत्वमुक्तं तत्प्रमादात् ॥ तेषां त्रिंशाध्यायएवोपलंभात् ॥ तत्रापि ब्राह्मणास्तासुयोनिष्वित्यस्याग्रेऽनुपदमेवोच्यते ॥ विनिन्दन्तितद्दर्षीकेशंब्राह्मणान्ब्रह्मवादिनः ॥ वेदबाह्यव्रताचाराद्दुराचारावृथाश्रमाः ॥ मोहयन्तिजनान्सर्वान्दर्शयित्वाफलानिवै ॥ तमसाऽऽविष्टमनसोबैडालव्रतिकाधमाइति ॥ इमान्यपि वचनानि शिवविष्ण्वादिनिन्दक वेदबाह्यनिरर्थकाचारविशिष्टविषयकाणि ॥ कण्ठरवेण वेदबाह्यव्रताचाराइत्याद्युक्तेः ॥ षोडशाध्यायैकवाक्यत्वसिद्धेश्च ॥ विरागिशब्दवाच्यवर्णाश्रमपरिभ्रष्टत्वादृशयतिविषयाणि च ॥ एकोनत्रिंशे ॥ अस्मिन्कलियुगेघोरेनराःपापानुवर्तिनः ॥ भविष्यन्तिमहाबाहोवर्णाश्रमविवर्जिताइत्यर्जुनंप्रति व्यासेन कथनात्॥प्रकृताध्यायेच॥ यतयश्चभविष्यन्तिशतशोथसहस्रशः ॥ नाशयंतःस्वकंधर्मनाधिगच्छन्तितत्पदमिति तेनैवनिरूपणात् ॥ एतच्च सर्वं मूलएव स्फुटीभविष्यतीति व्याख्यानेपि तत्रैव प्रपञ्चयिष्यते ॥ यानिचभविष्यन्तित्रयीबाह्याइत्यादीनि पूर्वखण्डपञ्चदशाध्यायवचांसि प्रकरणगोपनाय पूर्ववदध्यायादिकमनिर्दिश्योक्तानि तेषामपि पूर्वापरभागपर्यालोचनेऽन्यएव विषयः सिध्यति नतु तेषु त्वदुक्तं किञ्चिदपीति मूलएवोपपादयिष्यते ॥ लक्षणहेत्वोरिति शताऽपि विचारयिष्यते ॥ वास्तवार्थाऽऽच्छादनाय त्वया यथा त्रिंशाध्यायवाक्येषु विनिन्दन्तितद्दर्षीकेशमित्येकं श्लोकं " इत्याद्युक्ता " इत्युक्त्या पिधाय मोहयन्तिजनान्सर्वानित्यर्धमेवानूदितम् ॥ तथा पञ्चदशाध्यायवचस्स्वपि पूर्वापरभागौ मध्यमाल्पभागविशेषांश्च तिरोधाय भ्रमजननक्षमएव भागोऽनूद्यते तत्सर्वपुरस्तादुद्घाटयिष्यामः ॥ तस्माज्ज्ञानदुर्बलच्छलनमात्रफलकमखिलमेतदिति प्रेक्षावतामुपेक्षार्हम् ॥ तथापि शास्त्रविनोदरसिका मूलग्रन्थकाराः प्रथमं तदुक्तमभ्युपेत्य तेन लक्षणतयाभिमतेषु सत्तसु वास्तवलक्षणत्वमस्ति नवेत्येव तावत्परीक्षन्ते ॥ **तदपितेषामित्यादिना** ॥ **कार्यक्षमेति** ॥ कार्ययोग्या कार्यस्य भूमिर्वा ॥ **लक्ष्यतावच्छेदकसमनियतत्वमिति** ॥ समनियतत्वं हि तद्व्यापकत्वविशिष्टतद्व्याप्यत्वम् ॥ वैशिष्ट्यं च स्वरूपघटितसामानाधिकरण्यसंबन्धेन ॥ तादृशसामानाधिकरण्यं च स्वरूपसंबन्धावच्छिन्नतद्व्यापकत्वनिष्ठाधेयतानिरूपिताधिकरणतावन्निरूपितस्वरूपसंबन्धावच्छिन्नतद्व्याप्यत्वनिष्ठाधेयतारूपम् ॥ यथा प्रमेयत्वेऽभिधेयत्वसमनियतत्वमभिधेयत्वे च तत्समनियतत्वम् ॥ लक्ष्यतावच्छेदकव्यापकत्वं च लक्ष्यतावच्छेदकाधिकरणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् ॥ लक्ष्यतावच्छेदकवन्निष्ठभेदप्रतियोगिताऽनवच्छेदकत्वंवा॥ लक्ष्यतावच्छेदकसमानाधिकरणा यावन्तोधर्मायत्समानाधिकरणास्तत्त्वं वा ॥ लक्ष्यतावच्छेदकव्याप्यत्वं च लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदवदवृत्तित्वम् ॥ लक्षणाधिकरणनिष्ठात्यन्ताभावाप्रतियोगिलक्ष्यताऽवच्छेदकसामानाधिकरण्यं वा ॥ अत्र गोत्वाव्याप्ये तद्व्यापकेशृङ्गित्वे गोर्लक्षणत्वाभावाय विशेष्यदलम् ॥

लक्ष्यतावच्छेदकव्याप्यस्यैव लक्षणत्वे तु गृष्टित्वसमानाधिकरणशृङ्गित्वेपि गोलक्षणत्वं स्यात् ॥ तथाच द्विस्त्रिःप्रसूतगव्यादावव्याप्तिरिति तत्र तल्लक्षणत्वव्यवच्छेदाय विशेषणदलम् ॥ एतदेव सर्वमुरसिकृत्वाहुः ॥ **लक्ष्यतावच्छेदकवन्निष्ठेत्यादि** ॥ अत्र तद्व्यापकत्वं सत्यन्तदलस्यार्थः ॥ तद्व्याप्यत्वं प्रथमान्तदलस्य ॥ यथा ॥ शृङ्गित्वसमानाधिकरणसास्नावत्वं गोर्लक्षणम् ॥ सरटेऽतिव्याप्तिवारणाय शृङ्गित्वसामानाधिकरण्यम् ॥शृङ्गित्वंहि शृङ्गसंबन्धः॥सास्नावत्वे तत्सामानाधिकरण्यं च स्वरूपसंबन्धावच्छिन्नशृङ्गित्वनिष्ठाधेयतानिरूपिताधिकरणतावन्निरूपितस्वरूपसंबन्धावच्छिन्नाधेयताशालित्वम् ॥ शृङ्गित्वमात्रस्य महिष्यादावतिप्रसङ्गात्तद्वारणाय सास्नावत्वम् ॥ अत्र लक्ष्यतावच्छेदकं गोत्वम् ॥ तद्वन्निष्ठो भेदश्च घटादिप्रतियोगिको भेदः तादृशभेदप्रतियोगितावच्छेदकं घटत्वादि अनवच्छेदकं लक्षणम् ॥ तथा गोत्वनिष्ठा अवच्छेदकता यस्यास्तादृशी प्रतियोगिता यस्य तादृशोयोभेदः लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदइतियावत् ॥ तद्वन्तो घटादयः तदवृत्तित्वं गोलक्षणस्य वर्ततइति तत्र लक्षणसमन्वयः॥ दलद्वयकृत्यं तु प्रागेव दर्शितम् ॥ प्रतियोगिताकपदरहितपाठेतु अवच्छेदकतायां भेदस्य स्वनिरूपितप्रतियोगितावच्छेदकतात्वं संसर्गः ॥ **तादृशमेवेति** ॥ असाधारणमेव वास्तवमेवेति यावत् ॥ **अव्याप्त्यतिव्याप्त्यसंभवरूपदोषत्रयरहितमिति** ॥ अव्याप्तिर्हि लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् ॥ लक्षणतावच्छेदकतयाभिमतसंबंधेन लक्ष्यैकदेशावृत्तित्वं वा॥ यथा कपिलत्वं गोर्लक्षणमित्युच्यमाने शुक्लादिगवीष्वव्याप्तिः॥ कालिकसंबन्धेन तद्वृत्तित्वस्यानपनोद्यतया द्वितीयलक्षणे संबन्धविशेषनिवेशः॥अतिव्याप्तिस्तु लक्षणस्यालक्ष्यवृत्तित्वम् ॥ लक्ष्यतावच्छेदकाधिकरणवृत्तित्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यं वा ॥ यथा शृङ्गित्वस्य गोलक्षणत्वे महिष्यादावतिव्याप्तिः ॥ असंभवश्च लक्ष्यमात्रावर्तनम् ॥ लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वं वा ॥ यथा एकशफत्वरूपगोलक्षणस्यासंभवः ॥ एतद्दोषत्रयात्यंताभाववदित्यर्थः ॥ व्यावृत्तिर्व्यवहारोवालक्षणस्यप्रयोजनमित्यभियुक्तोक्तेर्व्यवहारस्य लक्षणप्रयोजनत्वमभिप्रेत्याहुः ॥ **व्यवहर्तव्यव्यवहारइत्यादि** ॥ व्यवहर्तव्यानांगवादिपदानांव्यवहारइत्यर्थः ॥ **अन्यथेति** ॥ लक्षणाभासवत्यपि तत्वेन व्यवहारस्याङ्गीकारे॥ **लक्षणेनेति** ॥ लक्षणाऽऽभासेन ॥ अतएव ( आर्या ५ व्याख्या ) साङ्ख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रः ॥ " समानासमानजातीयव्यवच्छेदोलक्षणार्थः " इत्याह ॥ अत्र " समानजातीयेभ्यश्चासमानजातीयेभ्यश्च व्यवच्छिद्यतेनेनेतिव्युत्पत्तिलभ्योलक्षणशब्दार्थः" इतिकश्चिद्व्याचष्टे ॥ वस्तुतस्तु तदुभयव्यवच्छेदोलक्षणप्रयोजनमित्यक्लिष्टोर्थः प्रतीयते ॥ एवं च समानासमानजातीयव्यवच्छेदकत्वं लक्षणत्वमिति तन्मतं फलति ॥ समानजातीयव्यवच्छेदकत्वमात्रं विशेषणेतिव्याप्नोति ॥ नीलोघटइत्यादौ नीलादिपदेन समानजातीयस्य रक्तघटादेरेव व्यवच्छेदात् ॥ लक्षणं तु स्वलक्ष्यं ग-

वादिकंअसमानजातीयेभ्योपि महिष्यादिभ्योव्यवच्छिनत्ति ॥ असमानजातीयव्यव-च्छेदकत्वमात्रकथने सामान्येतिव्याप्तिः ॥ गोत्वादिसामान्यस्यासजातीयव्यवच्छेद-कत्वात् ॥ अतउभयग्रहणम् ॥ एवंलक्षणस्य व्यावृत्तिरूपे प्रथमप्रयोजने सिद्धे व्यावृ-त्तस्थलएव तत्त्वव्यवहारोऽर्थात्सिद्ध्यतीति नलक्षणाभासेन व्यवहारः ॥ एतदेवाहुः ॥ तस्मादित्यादि ॥

**कथं तेषां दुष्टत्वमिति चेच्छृणु ॥ शिवद्वेषोविप्रशप्तस्य प्रथमं लक्षणमुक्तं तत्र लक्ष्यतावच्छेदकं विप्रशप्तत्वम् ॥ शिवद्वेषो-लक्षणम् ॥ एवंच लक्ष्यतावच्छेदकनिष्ठावच्छेदकताकभेदव-त्त्वन्धकजालंधरादिदैत्येषु शिवद्वेषस्य सत्वेनातिव्याप्तिः ॥ न तेषां विप्रशप्तत्वं पुराणेषु प्रसिद्धम् ॥ मनुष्यत्वे सतीति विशे-षणान्नैवमिति चेद्बौद्धेष्वतिव्याप्तिः ॥ त्वय्यव्याप्तिश्च ॥ वि-प्रत्वावच्छिन्नयावद्विप्रशप्तत्वस्याप्रसिद्धत्वेनतत्तद्व्यक्तित्वावच्छि-न्नशप्तत्वस्य च तत्तद्व्यक्तित्वेन तत्तद्व्यक्तीनां ज्ञानासंभवात्दुर्ज्ञे-यत्वेन यत्किंचिद्व्यक्तिशप्तत्वस्यैव लक्ष्यतावच्छेदकस्य वक्तव्य-त्वेनेदृशग्रन्थकर्तृत्वेन वैष्णवविप्रशप्ते त्वय्यप्येतादृशलक्ष्यताव-च्छेदकाक्रान्ते लक्षणस्यासत्वादव्याप्तिः स्यादेव ॥**

## टीका

सहस्राक्षे तेन*शिवद्वेषइत्यादिनाऽनभिरञ्जनमित्यन्तेन दर्शितं प्रथमलक्षणं दूषयन्ति ॥ **शिवद्वेषोविप्रशप्तस्येत्यादिना शिवद्वेषोनलक्षणमित्यन्तेन** ॥ **लक्ष्यताव-च्छेदकनिष्ठावच्छेदकताकेति** ॥ लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताको-योभेदस्तद्वत्त्वितिभावः ॥ अवच्छेदकतायां भेदस्य स्वनिरूपितप्रतियोगितावच्छेदक-तात्वं संसर्गः ॥ **अन्धकजालंधरादिदैत्येष्विति** ॥ अल्पाच्तरत्वादन्धकस्य-पूर्वनिपातः ॥ अन्धकोहि हिरण्याक्षपुत्रः शिवं द्विष्टवान् ॥ तथाच कौर्मएव पूर्वखण्डे षोडशाध्याये ॥ अभिषेकेनयुक्तेनहिरण्याक्षप्रयोजयत् ॥ सबाधयामासस्तुरान्रणेजित्वा

---

**सहस्राक्ष**

* तेन शिवद्वेषः शप्तानामेकं लक्षणमुक्तम् ॥ द्वेषस्याऽसंभाव्यत्वहेतुत्वं तु स्पष्टमेवोक्तम् ॥ द्वेषोऽप्रीतिः कलिमलहर्तरि श्रौतधर्मवक्तरि च तस्मिन्ननभिरञ्जनम् ॥

मुनीनपि ॥ लब्ध्वान्धकंमहापुत्रंतपसाराध्यशङ्करमितितदुत्पत्तिरुक्ता ॥ अग्रेच अ-
वापतन्महद्राज्यमन्धकोऽसुरपुङ्गवः ॥ हिरण्यनेत्रतनयःशंभोर्देहसमुद्भवः ॥ मन्दर-
स्थामुमांदेवींचकमेपर्वतात्मजामित्यादिना विस्तरेण शिवद्वेषोवर्णितः॥ अतएवान्धक-
रिपुरिति शिवस्याभिख्या सुप्रसिद्धा॥ जालंधरस्तु पुरन्दरोपरि क्रुद्धस्य शङ्करस्य नेत्र-
जन्मा वह्निर्बृहस्पतिप्रसादितेन तेन गङ्गासागरसंगमे क्षिप्तः सागरपुत्रोभूत्वा दैत्येश्वर-
तां प्राप्तः श्रियः प्रार्थनया हरिणापि रणे न हतः सर्वसुराञ्जित्वा नारदगिरा गिरिसु-
ताकामः शिवं द्विष्टवानितिपद्मपुराणे कार्तिकमाहात्म्ये नवमाध्यायमारभ्य सप्तदशा-
ध्यायपर्यंतंविस्तरेण निरूपितम् ॥ आदिपदेन श्रीभागवतादिप्रसिद्धा वृकासुरप्रभृतयः
शिवद्वेषिणः संगृह्यन्ते ॥ **नतेषांविप्रशप्तत्वमिति**॥ पुराणेषु तथाकथाया अदर्शना-
त्प्रत्युतशिवप्रसादजन्यत्वशंभुदेहसमुद्भवत्वादिकथनेन शप्तत्वाभावनिश्चयाच्च तथा ॥
किञ्चिदाशङ्क्यपरिहरन्ति ॥ **मनुष्यत्वइत्यादिना** ॥ बौद्धेषु वेदादिद्वेषिषु शिवद्वेष-
स्यापि सत्वादितिभावः ॥ वस्तुतस्तु लक्षणसप्तकस्य कौर्मवचोभ्यएवावगमस्य स्वी-
कारात्तेष्वस्य विशेषणस्यानुपादानाच्च मनुष्यत्वे सतीतिवादिनःकल्पनमेवायुक्तम् ॥
मानाभावात् ॥ नचं ऋषीन्प्रतियुष्माकंवंशसंभवाइत्युक्तिरेव तत्र मानमिति वाच्यम् ॥
दैत्यानां दानवानां च कश्यपवंशसंभवत्वेन राक्षसानां पुलस्त्यकुलसंभवत्वेन च ऋषि-
वंशोद्भवतानपायात् ॥ प्रत्युत तासुयोनिष्वितिबहुवचनेन दैत्यादेरपि संग्रहस्यौचित्यं
प्रतीयते॥ **तत्तद्यक्तित्वावच्छिन्नशप्तत्वस्येति**॥ अस्य दुर्ज्ञेयत्वेनेत्युत्तरेणान्वयः॥
तत्तद्यक्तीनामित्यादिस्तु दुर्ज्ञेयत्वेहेतुः॥ **वैष्णवविप्रशप्तइति**॥ कौर्मे सप्तविंशे कर्म-
णामनसावाचामद्भक्तेष्वपियत्नतइतिवैष्णवनिन्दायाविशेषतः प्रतिषेधात्॥त्रिशेपि वि-
निन्दन्तित्दृषीकेशंब्राह्मणान्ब्रह्मवादिनइति भगवन्निन्दायां परमाणुप्रधानमायादिवादान्
हित्वा ब्रह्मवादमाश्रयतां ब्राह्मणानां निन्दायां च त्वद्रीत्यैव शप्तलक्षणतासिद्धेश्च तथे-
ति भावः॥ किंच श्रीभागवते चतुर्थस्कन्धद्वितीयाध्याये (श्लो०२८।२९।३०।३१।३२)
भवव्रतधरायेचयेचतान्समनुव्रताः ॥ पाखण्डिनस्तेभवन्तुसच्छास्त्रपरिपन्थिनः ॥ नष्ट-
शौचामूढधियोजटाभस्मास्थिधारिणः ॥ विशन्तुशिवदीक्षायांयत्रदैवंसुरासवम् ॥ ब्रह्म-
चब्राह्मणांश्चैवयद्यूयंपरिनिन्दथ ॥ सेतुंविधारणंपुंसामतःपाखण्डमाश्रिताः ॥ एषएव-
हिलोकानांशिवःपन्थाःसनातनः ॥ यंपूर्वेचानुसंतस्थुर्यत्प्रमाणंजनार्दनः ॥ तद्ब्रह्मपरमं-
शुद्धंसतांवर्त्मसनातनम् ॥ विगर्ह्ययातपाखण्डंदैवंवोयत्रभूतराडितिभृगोः शापः पठ्यते॥
त्वयि तादृशधर्मसत्वं तु त्वदीयशैवसुधाकरदर्शनान्निःसंशयमवगम्यते ॥ पुनः कि-
चिदाशङ्क्य परिहरन्ति ॥ **नन्वित्यादि** ॥ **बौद्धेष्विति** ॥ इदमुपलक्षणम् ॥ तेन

ननु नाहं शिवद्वेषपदेन देवतात्मकेश्वरद्वेषं ब्रवीमि येनान्धकादि-
ष्वतिव्याप्तिः प्रसज्येत॥ किंतु शिवावतारशङ्कराचार्यद्वेषम्॥ अ-
तएवोक्तं श्रौतधर्मप्रवक्तारं कलिमलहर्तारमितिचेत्तथापि बौद्धेष्वति

व्याप्तिः स्यादेव ॥ मण्डनमिश्रादावतिव्याप्तिश्च ॥ किंचाप्रीतिपदेन प्रीतिभेदो विवक्षितः प्रीत्यत्यन्ताभावोवा प्रीतिविरोधि वा ॥ नाद्यः ॥ वृक्षादावतिव्याप्तेः ॥ शिवभक्तेष्वतिव्याप्तेश्च ॥ नापि द्वितीयतृतीयौ ॥ घटादावतिव्याप्तेः ॥ प्रीतिविरोधिनोद्विष्टसाधनताज्ञानजन्यस्यांतःकरणवृत्ति विशेषस्य शिवभक्तेषु रावणादिष्वसत्त्वेन सनकादिशप्तेषु तेषु विप्रशप्तत्वरूपलक्ष्यतावच्छेदकाक्रान्तेष्वव्याप्तेर्दुर्वारत्वाच्च ॥ तस्माच्छिवद्वेषो न लक्षणम् ॥

## टीका

येये वादिनोदिग्विजयादिषु शङ्कराचार्यैः सममाग्रहपूर्वकवादादिकर्तृत्वेन प्रसिद्धास्तेषु सर्वेष्वतिव्याप्तिः ॥ नचेष्टापत्तिः ॥ अशेषस्य जगतः शप्ततायाः वक्तुमशक्यत्वात् ॥ शङ्कराचार्यानुयायिष्वप्यतिव्याप्तिमाहुः ॥ **मण्डनमिश्रादाविति** ॥ प्रतिज्ञापूर्वकवादादिकरणात्स्पष्टैवं तदादेः शङ्कराचार्येष्वप्रीतिः ॥ अथ विधातृशप्तगीष्पत्यवतारपक्षाश्रयणाददोषइतिचेत्तदर्थं विधातुर्विप्रत्वमाश्रयणीयम् ॥ शिष्यभावोत्तरमव्याप्तिश्च॥ दुर्वासःशप्तभारत्यामपि सा ॥ वस्तुतस्तु द्विषन्तोदेवमीशानमितिवाक्ये ईशानपदं न शङ्कराचार्यपरं भवितुमर्हति ॥ सप्तविंशाध्याये शङ्कराचार्यावतारगन्धस्याप्यभावात् ॥ ननु त्रिंशे तदवतारकथनं मया स्वीक्रियतइत्येकपुराणस्थत्वादेतद्वाक्यमपि तत्परं भविष्यतीतिचेत्तर्हि ॥ एवंसंबोधितोरुद्रोमाधवेनमुरारिणा ॥ चकारमोहशास्त्राणीति कौर्मेषोडशाध्यायवाक्यमपि तत्परं कुतोन भवेत् ॥ किंच ॥ श्रीभागवते बुद्धोनाम्नाजिनसुतःकीकटेषुभविष्यतीत्युक्तत्वात् तत्रप्रकरणान्तरे पठितानि तानानयध्वमसतोकृतविष्णुकृत्यानित्यादिवचांसि अकृतबुद्धकृत्यपराणि कुतो न स्युः ॥ तस्माद्देवमीशानमित्युक्तेर्देवतारूपशिवपरमेवैतदिति न त्वदुक्तं किंचित् ॥ त्रिंशाध्यायवचसामपि वास्तवार्थस्य दर्शितचरत्वाच्च ॥ यत्तु "द्वेषोऽप्रीतिः अनभिरञ्जनम्" इत्युक्तं तदर्थं विकल्प्य दूषयन्ति ॥ **किंचाप्रीतिपदेनेत्यादिना** ॥ अयंभावः ॥ तत्सादृश्यमभावश्चतदन्यत्वंतदल्पता ॥ अप्राशस्त्यंविरोधश्चनञर्थाःषट्प्रकीर्तिता इति मनोरमादौ संगृहीतेषु मीमांसकग्रन्थप्रसिद्धेषु षट्सु नञर्थेषु अब्राह्मणः अनुदराकन्या अपशवोवान्येगोअश्वेभ्यइत्यादिवत्प्रकृते सादृश्याल्पत्वाप्राशस्त्यानामन्यतमस्य त्वदविवक्षितत्वप्रतीतेर्भेदादयस्त्रयएवावशिष्यन्ते ॥ तत्र न तावद्भेदः ॥ तथासत्यनश्वइत्यादिनाऽश्वभिन्नोगवादिरिव अप्रीतिरित्यनेन प्रीतिभिन्नोधर्मोगृह्येत ॥ शिवविषय-

कप्रीतिभिन्नधर्मश्च वृक्षादौ शिवभक्तेषु चास्त्येवेति तत्रातिव्याप्तिः ॥ नापि अपापप्र-विघ्नमित्यादिवदत्यन्ताभावः ॥ तथासति वक्ष्यमाणरीत्या जडे चिदानन्दयोस्तिरोभा-वाद्घटादावतिव्याप्तिः ॥ तत्र प्रीतिमात्रस्यासत्वेन शिवविषयकप्रीतेरप्यभावात् ॥ ना-प्यधर्मोऽसितइत्यादिवद्विरोधः ॥ रावणादिषु सनकादिविप्रशप्तत्वे सत्यपि शिवविषय-कप्रीतिविरुद्धधर्माभावादव्याप्तेः॥ भगवन्तं दिदृक्षमाणैर्द्वारि निरुद्धैः सनकादिभिः श-प्तौ जयविजयावेव हिरण्यकशिपुहिरण्याक्षौ रावणकुंभकर्णौ शिशुपालदन्तवक्त्रौ चा-भूतामिति श्रीभागवततृतीयस्कन्धसप्तमस्कन्धादौ प्रसिद्धम् ॥ वृक्षादिष्वत्यन्ततामसेषु प्रीतिविरोधिनो विषादस्य सत्वादतिव्याप्तिरपि ॥ तमसोविषादात्मकत्वं त्वाहुः साङ्-ख्याः ॥ प्रीत्यप्रीतिविषादात्मकाःप्रकाशप्रवृत्तिनियमार्थाः अन्योन्याभिभवाश्रयजनन-मिथुनवृत्तयश्चगुणाइति॥ तस्माच्छिवद्वेषो न विप्रशप्तानां लक्षणम् ॥ अस्माकं तु शि-वे तदवतारशङ्कराचार्येषु च न. द्वेषगन्धोपि ॥ नच तन्मतखण्डनमात्राद्द्वेषः संभावनी-यः ॥ तथासति स्वभाष्यादौ विष्ण्ववतारकपिलनारदादिमतं खण्डयत्सु शरङ्काचार्ये-ष्वपि विष्णुद्वेषितायास्तदवतारद्वेषितायावा प्रसक्तेर्दुर्वारत्वात् ॥ एतच्च मूले प्रपञ्च-यिष्यते॥ सहस्राक्षे*निन्दन्तीति लट्प्रयोग इत्यादिना वेदार्थएवेत्यन्तेनोक्तं द्वितीयलक्ष-

द्वितीयं लक्षणं शिवनिन्दा ॥ सा च शिवोमोहनायावतीर्णइत्ये-वंकथनम् ॥ तत्र तादृशार्थकवाक्यस्यप्रणेतृत्वं लक्षणत्वेनाभि-मतमनुवादकत्वं वा ॥ आद्ये नास्माभिस्तादृशं वाक्यं रचितं किंत्वनूदितम् ॥ प्रणीतंच पद्मपुराण उत्तरखण्डे व्यासैः ॥ तथाच तत्रातिव्याप्तिः ॥ ननु नव्यासैरीदृशःश्लोको रचितः किंतु केनचित् कायस्थेन तत्र प्रक्षिप्त इतिचेत्तस्मिन्नतिव्या-प्तिः ॥ द्वितीये त्वनुवादकत्वेन सूतस्यापि विप्रशप्तत्वापत्तिः ॥

---

सहस्राक्ष

* निन्दन्तीत्यादिलट्प्रयोग आर्षः॥अनेन तेषां द्वितीयं लक्षणमुक्तम् ॥ निन्दाचाऽविद्यमानदो-षकथनम् ॥ तच्च शिवोमोहनायाऽवतीर्णइत्येवं शुद्धाऽद्वैतमार्त्तण्डटीकाविद्वन्मण्डनाद्युक्तरीत्या प्रलपनम् ॥ तन्निन्दाफलं धर्माचरणस्य वृथात्वम् ॥ त्रयीबाह्यत्वं नाम त्रयीतदर्थग्रहणाऽयो-ग्यत्वं॥ कथंचित्तद्ग्रहणेऽपि तत्फलानर्हत्वं च ॥ मूर्खत्वाच्छूद्रवदनधिकाराच्च ॥ तत्राऽपि सर्वेऽपीश्वरेत्यादिनैकोहेतुर्लक्षणं चोक्तम् ॥ भागवतेऽपि यएतन्मर्त्यमुद्दिश्यभगवत्यप्रतिद्रुहि ॥ द्रुह्यत्यज्ञःपृथग्दृष्टिस्तत्त्वतोविमुखोभवेदित्युक्तम् ॥ तत्त्वं तु वेदार्थएव ॥

किंच त्वयापि तादृशवाक्यस्य स्वग्रन्थेलिखितत्वात्तवाप्य-
नुवादकत्वेनत्वय्यतिव्याप्तिः ॥

## टीका

णं दूषयन्ति ॥ **द्वितीयं लक्षणमित्यादिना त्वयाप्यङ्गीकरणीयत्वादित्य-न्तेन** ॥ अत्र शतृवल्लटोलक्षणहेत्वोर्विधानस्याभावान्निन्दन्तीत्युक्तनिन्दायालक्षण-त्वकल्पने मानमन्वेष्टव्यम् ॥ कलिमवृत्त्यनन्तरं कुर्वन्तिचावताराणीत्यादि कथ-नात्तत्रापि कुर्वन्तीति लट्प्रयोगात्तदानीमपि शिवनिन्दकानां बौद्धादीनां सत्वात् ॥ असत्वे चतुर्लक्षण्यां तर्कपादे स्वयं व्यासेन तेषां खण्डनस्यासंभवान्निन्दन्तीत्यस्या-र्थत्वकल्पनमप्यनत्यन्तप्रयोजनम् ॥ वस्तुतस्तु पुरादक्षाध्वरेद्विजाइतीदमुत्तरश्लोक-एवाऽन्वेति ॥ कौर्मे दक्षाध्वरकाले देवीकर्तृकशापस्यानिरूपणात् ॥ नच यज्ञे दे-हमुत्सृजन्त्या दाक्षायण्याः शापः संभवतीति वाच्यम् ॥ तस्मिन्पुराणे तथाक-थाया अप्यभावात् ॥ प्रत्युत यज्ञतोबहुतिथात्कालात्प्रागेव दाक्षायणीभावं परित्य-ज्य हिमगिरिगेहे तस्याः प्रादुर्भावस्य सिद्धेः ॥ अतएव पञ्चदशाध्याये दक्षयज्ञे प्रवर्तमाने ॥ दक्षोयज्ञेनयजतेऽपितामेपूर्वजन्मनीत्यादिना देवीकर्तृके तद्यज्ञविनाशन-वरप्रार्थने पूर्वजन्मनि पितेत्युच्यते ॥ द्वादशाध्याये हिमाचलं प्रति देवीवाक्येष्व-पि तथैव फलति ॥ अतो न देवीशापेन दक्षाध्वरस्य संबन्धः ॥ केचित्तु तत्र देवी शापस्याश्रुतत्वात्पञ्चदशाध्यायोक्तरीत्या देवीशा चण्डीश्वरेण पविना वज्रेण निर्दग्धाः देवीशाभ्यां पार्वतीमहेश्वराभ्यां अपविनिर्दग्धा वा इत्यर्थमाहुः ॥ तत्र नास्माकं नि-र्बन्धः ॥ पुरादक्षाध्वरइत्यस्यान्वयस्तूत्तरत्रैव ॥ तथाच ये द्विजास्तमसाविष्टचेतसः सन्तः पुरा दक्षाध्वरे महादेवं निन्दन्ति अनिन्दन् ॥ पुरिलुङ्चास्मइति चाल्लट् ॥ व-सन्तीह पुराच्छात्रा इत्यादिवत् ॥ ते तस्मिन्काले वृथाधर्मं षोडशाध्यायाद्युक्तं कापा-लिकाचरणादिरूपनिष्फलधर्मं चरिष्यन्तीति कौर्मवाक्यस्यार्थः ॥ यत्तदोरध्याहारस्तु त्वयापि कल्प्यः ॥ अन्यथा " निन्दाफलंचधर्माचरणस्यवृथात्वम् " इत्यस्यासिद्धेः ॥ अतोन कोप्यस्मासु चोद्यावकाशः ॥ अभ्युपेत्य दूषयन्ति ॥ **तत्रतादृशार्थकेत्या-दिना** ॥ **उत्तरखण्डइति** ॥ तत्र द्विचत्वारिंशेऽध्यायइति प्रागेवादर्शाम ॥ सहस्राक्ष-कारेण वक्ष्यमाणां कल्पितकिंवदन्तीं हृदि निधाय शङ्कन्ते ॥ **ननुनव्यासेरिति** ॥ **तस्मिन्** कायस्थे ॥ इदंसमाधानं तुष्यतुदुर्जनइति न्यायात् ॥ वस्तुतस्तु सा व्यास-कृतिरेवेत्याशयः ॥ अतएव सूतेऽनुवादकत्वाद्दोषः स्वयमुच्यते ॥ प्रक्षिप्तत्वाभिप्रायेतु स न सङ्गच्छेत॥ननु कथं व्यासकृतित्वनिश्चयइतिचेत् ॥ दर्शनान्तरग्रन्थकारैः शङ्करा-चार्यानुयायिभिश्चोदाहृतत्वादित्यवधारय ॥ तथाहि ॥ साङ्ख्यसूत्रभाष्ये, प्रथमा-ध्याये ( सूत्र २२ ) " विजातीयद्वैतापत्तिश्च " इतिसूत्रव्याख्याने " एभिश्चसूत्रैर्ब्र-

ह्ममीमांसासिद्धान्तोनिराक्रियतइतिभ्रमोनकर्तव्यः ” इत्याद्युक्त्वोच्यते “ यत्तुवेदान्तिब्रुवाणामाधुनिकस्यमायावादस्यात्रलिङ्गं दृश्यतेतत्तेषामपिविज्ञानवाद्येकदेशितयायुक्तमेव ॥ ( मायावादमसच्छास्त्रंप्रच्छन्नंबौद्धमुच्यते ॥ मयैवकथितंदेविकलौब्राह्मणरूपिणा ) इत्यादिपद्मपुराणस्थशिववाक्यपरंपराभ्यः॥ नतु तद्वेदान्तमतम् ॥ ( वेदार्थवन्महाशास्त्रंमायावादमवैदिकम् ) इतितद्वाक्यशेषादिति ॥ मायावादिनोत्र च न साक्षात्प्रतिवादित्वम् ॥ विजातीयेतिविशेषणवैयर्थ्यात् ॥ मायावादे सजातीयद्वैतस्याप्यनभ्युपगमादिति ॥ तस्मादत्रप्रकरणे विज्ञानवादिनां बन्धहेतुव्यवस्थैव साक्षान्निराक्रियते॥ अनयैव च रीत्या नवीनानामपि प्रच्छन्नबौद्धानां मायावादिनामविद्यामात्रस्य तुच्छस्य बन्धहेतुत्वं निराकृतं वेदितव्यम् ” इति॥ नागोजीभट्टोऽपि मार्कण्डेयपुराणस्थसप्तशतीविवरणे त्रयोदशाध्याये ( श्लो० ९) ददतुस्तौबलिंचैवेत्यस्य व्याख्याने पुराणेषु क्वाचित्कतान्त्रिकांशे वैदिकाऽनादरणीयताया बोधकानि पराशरोपपुराणादिवचांसि कौर्मे प्रसिद्धं गौतमशप्तोपकाराय शिवकेशवाभ्यां मोहशास्त्राणां निर्माणं चोक्ता पाद्मे पार्वतीश्वरसंवादे शृणुदेविप्रवक्ष्यामितामसानियथाक्रममित्यादीनिपूर्वोक्तान्युत्तरखण्डवचनान्यनूदितवान् ॥ तत्र वेदार्थवन्महाशास्त्रंमायावादमवैदिकम् ॥ मयैवकथितंदेविजगतांनाशकारणादित्यन्तं लिखित्वाऽग्रेनुपदम् “ अस्यपूर्वार्धे आश्रित्येतिशेषः ॥ न्यायवैशेषिकयोःसुखदुःखादिमत्त्वमात्मनःश्रुतिविरुद्धं निरीश्वरतासाङ्ख्यमीमांसयोःश्रुतिविरुद्धेत्ति तदंशे तेषामप्रामाण्यम् ॥ मायावादोनास्तिकानाम् ” इत्यादिना तद्वचनं नास्तिकवादपरतयान्यथानीत्वा समाहितवान् ॥ काशीपुण्यग्रामादिस्थलेषु प्राचीनेषु विद्वत्पुस्तकेषु सर्वत्राऽयं ग्रन्थउपलभ्यतएव ॥ एतावता तद्वचसां व्यासकृतत्वं तु तदभिमतमेव ॥ एवं प्रामाणिकग्रन्थान्तरेष्वपि स्थलविशेषएषामुपन्यासो द्रष्टव्यः ॥ अथ अनुवादोनिन्देति द्वितीयपक्षं दूषयन्ति॥ **द्वितीयेत्वित्यादिना** ॥ इत्थंकारं कौर्मवाराहादिष्वपि चकारमोहशास्त्राणि त्वंचरुद्रमहाबाहोमोहशास्त्राणिकारयेत्यादिकथनात् विष्ण्ववतारेष्वपि श्रीभागवतादौ वादैर्विमोहयतियज्ञकृतोऽतदर्हानित्यादिकथनाच्च तत्रतत्र तादृशवाक्यप्रणेतरि व्यासे तदनुवादकसूतादौ तदुदाहारकेषु निबन्धकारेषु च निन्दन्तिचमहादेवंविनिन्दन्तित्दृषीकेशमिति कौर्मोक्तस्य लक्षणस्य दोषस्य वा प्रसक्तिर्द्रष्टव्या ॥ **किंचशिवइत्यादि** ॥ कथनमात्रस्ये-

किंच शिवोमोहनायावतीर्णइत्यादिकथनमात्रस्य न धर्माचरणस्य वृथात्वं त्रयीतदर्थग्रहणायोग्यत्वं कथंचिद्ग्रहणेपि तत्फलानर्हत्वमित्यादिधर्मसंपादकत्वम् ॥ तादृशनिन्दाकर्तृत्वरहितेष्वपि वेदविष्णुतद्भक्तनिन्दाकर्तृषु तत्तद्धर्मसंपत्तिदर्शनेन व्यभिचारापत्तेः॥

## टीका

तिपदं संपादकत्वमित्यग्रिमेणान्वेति ॥ नेतिनिषेधोपि तत्रैवान्वेति ॥ अत्र मात्रपदमवधारणार्थं विष्ण्वादिदेवविषयकं तथाकथनं व्यवच्छिनत्ति ॥ मात्रं कार्त्स्न्येवधारणइत्यमरः ॥ **तत्तद्धर्मेति** ॥ व्यर्थीभूतपुण्यत्वत्रयीबाह्यत्वतत्फलानर्हत्वादिधर्माणां संपत्तेर्निश्चयेनेत्यर्थः ॥ **व्यभिचारापत्तेरिति** ॥ गौतमपञ्चलक्षण्यां प्रथमाध्यायद्वितीयाह्निके ( सूत्र ४६ ) अनैकान्तिकःसव्यभिचारइतिसूत्रस्य भाष्ये " व्यभिचारएकत्राव्यवस्था " इतिवात्स्यायनः ॥ तत्राप्ययं व्यतिरेकव्यभिचारः ॥कारणे कार्यसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् ॥ तथाच व्यतिरेकव्यभिचारज्ञानरूपप्रतिबन्धकसत्वान्नियतान्वयव्यतिरेकसहचारनिश्चयरूपकारणासंभवेन तादृशकथनेन धर्माचरणवृथात्वादिनिरूपितकारणतासिद्धिरितिभावः ॥ वस्तुतस्तु तादृशकथनशालिष्वपि व्यासादिषु पूर्वोक्ततत्तद्धर्मासंपत्तिनिश्चयेन कार्ये कारणसमानाधिकरणात्यन्ताभावप्रतियोगित्वादन्वयव्यभिचारोप्यग्रे सूचयिष्यते ॥

स्वाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकधर्मघटकतया निवेशेन तृणारणिमणिन्यायेन कार्यतावच्छेदकवैजात्यकल्पनेन वा व्यभिचारवारणेपि त्वंयाप्येतत्कुत्सापरावस्मदीयौ श्लोकावित्यादिना निन्दायाः कृतत्वेन विष्णुभक्तनिन्दानिष्ठजनकतानिरूपितजन्यतावच्छेदकवैजात्याक्रान्ततत्तद्धर्माणां त्वय्युत्पत्तेर्दुर्वारत्वमेवेत्यपि विभावनीयम् ॥

## टीका

पूर्वपक्षिमतेन व्यतिरेकव्यभिचारमात्रस्य वारणमनूद्य दूषणान्तरमाहुः ॥ **स्वाऽव्यवहितोत्तरत्वस्येत्यादिना** ॥ **निवेशेनेति** ॥ यथाऽनुमितित्वेन परामर्शत्वेनच कार्यकारणभावेपि धूमावगाहिपरामर्शजन्यवह्निविधेयकानुमितिस्थले वह्निव्याप्यालोकवानितिपरामर्शाभावाद्व्यभिचारः ॥ एवमालोकाऽवगाहिपरामर्शजन्यवह्निसाध्यकानुमितिस्थले धूमविषयकतदभावाद्व्यभिचारः ॥ तद्वारणायकार्यताऽवच्छेदककोटौ स्वाऽव्यवहितोत्तरत्वं निवेशयन्ति ॥ स्वंकारणम् ॥ स्वाव्यवहितोत्तरत्वसंबन्धेन धूमाऽवगाहिपरामर्शविशिष्टवह्निसाध्यकानुमितित्वाऽवच्छिन्नं प्रति तादृशपरामर्शएव कारणम् ॥ तेन संसर्गेणाऽऽलोकविषयकपरामर्शविशिष्टतादृशानुमितित्वावच्छिन्नं प्रति तद्विषयकः सएव कारणमिति न व्यभिचारः ॥ तथात्रापि स्वाव्यवहितोत्तरत्वसं-

बन्धेन शिवनिन्दाविशिष्टत्रयीबाह्यत्वादीन्प्रति तन्निन्दा हेतुः ॥ तेन संसर्गेण विष्णुनिन्दाविशिष्टतद्धर्मान्प्रति सा हेतुरिति न व्यभिचारः ॥ स्वाव्यवहितोत्तरत्वविशिष्टत्रयीबाह्यत्वत्वादेरेव कार्यतावच्छेदकधर्मत्वात्तत्तद्घटकतया तस्य निवेशः ॥ **तृणारणिमणिन्यायेनेति** ॥ यथा तृणं मणिररणिश्चेत्येकैकमपि वह्निं प्रति कारणम् ॥ इतरासमवधानदशायामपि कार्योत्पत्तेः॥ ननु काव्यहेतुतयोक्तानां कवित्वबीजभूतसंस्कारविशेषलोकशास्त्रकाव्याद्यवेक्षणजन्यनिपुणताकाव्यज्ञशिक्षापूर्वकाभ्यासानामिव त्रितयपर्याप्तसमुदायत्वं तत्र कार्योत्पत्तिप्रयोजकतावच्छेदकम् ॥ स्पष्टं चेदं प्रथमाकारके व्युत्पत्तिवादे ॥ तथात्र त्रयीबाह्यत्वादितत्तद्धर्मत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकं शिवनिन्दात्वादिकं स्वतंत्रमेव नतु शिवनिन्दाविष्णुनिन्दादिघटितसमुदायत्वं कारणतावच्छेदकमिति न व्यभिचारः ॥ **कार्यतावच्छेदकवैजात्यकल्पनेनेति** ॥ यथाऽवयवचिन्तामणौ “ पञ्चाऽवयवाद्विजातीयं शाब्दज्ञानमेवोत्पद्यतइति तद्धीजनकवाक्यत्वंन्यायत्वम् ॥ एवं प्रतिज्ञाद्यवयवादेरपि प्रत्येकं विजातीयंशाब्दज्ञानमिति तद्धीजनकशब्दत्वमेव तल्लक्षणम् ” इति केषांचिन्मतमनूदितम् ॥ अत्र प्रतिज्ञादिनिष्ठजनकतानिरूपितजन्यतावच्छेदिका तत्तच्छाब्दबोधवृत्तिर्विलक्षणैव जातिः स्वीक्रियतइति प्रतिज्ञाजन्यशाब्दबोधवृत्तिजातेर्हेतुजन्यशाब्दबोधे तज्जन्यशाब्दधीवृत्तिजातेः प्रतिज्ञाजन्यबोधे चाऽभावात्परस्परात्यन्ताभावसमानाधिकरणतया न व्यभिचारः ॥ तथाऽत्र शिवनिन्दाजन्यत्रयीबाह्यत्वादिनिष्ठा विष्णुनिन्दादिजन्यत्रयीबाह्यत्वादितत्तद्धर्मनिष्ठा जातयश्च परस्परविलक्षणाएवेति कार्यताऽवच्छेदकवैजात्यान्न व्यभिचारः ॥ वस्तुतस्तु “ तन्न ॥ ज्ञानविशेषजनकत्वं तज्ज्ञानजनकत्वं वा न्याये प्रतिज्ञादौ अनतिप्रसक्तमनुगतरूपमन्तरेण दुर्निरूपम् ॥ तत्स्वीकारे तस्यैव लक्षणत्वात् ॥ अन्यथा जातिसङ्करप्रसङ्गात् ” इतिवदता चिन्तामणिकृतैव तथाकल्पनं निरस्तम् ॥ तथा प्रकृतेऽपि शक्यं निरसितुम् ॥ तथाहि ॥ जनकतावच्छेदकस्य निन्दात्वस्यैक्येन त्रयीबाह्यत्वादिनिष्ठजन्यतावच्छेदकजातीनां नानात्वं न शक्यं प्रतिपत्तुम् ॥ नच शिवसंबन्धादिविशिष्टनिन्दात्वस्यावच्छेदकत्वाददोषः ॥ विशिष्टनिन्दात्वे शुद्धनिन्दात्वाऽनतिरेकात् ॥ विशिष्टं शुद्धान्नातिरिच्यतइतिन्यायात् ॥ अथापि जातिसंकरोदुर्निवारएव ॥ शिवाद्येकैकनिन्दाजन्यत्रयीबाह्यत्वादितत्तद्धर्मनिष्ठजन्यताऽवच्छेदकजातीनां परस्पराऽसमानाधिकरणानांशिवविष्णुवेदतद्भक्तादिसमुदायनिन्दाजन्यत्रयीबाह्यत्वादौ सर्वासां सङ्करापत्तेः ॥ एवं शिवविष्ण्वादिद्वित्र्यादिनिन्दाजन्यतत्तद्धर्मे द्वित्र्यादिजातीनां साङ्कर्यम् ॥ नचैकैकनिन्दासमुदायनिन्दाजन्यतत्तद्धर्मेषु जन्यताऽवच्छेदकजातीनां नानात्वकल्पनान्नसङ्कराऽवकाशइति वाच्यम् ॥ समुदायनिन्दाजन्यतत्तद्धर्मवृत्तेः शिवनिन्दानिरूपितजन्यतावच्छेदकजातेर्विष्णुनिन्दानिरूपितजन्यतावच्छेदकतया विष्णुनिन्दानिरूपितजन्यतावच्छेदकजातेः शिवनिन्दादिनिरूपिजन्यतावच्छेदकतयाच तत्तन्निन्दात्वेन त-

न्निरूपितजन्यतावच्छेदकजात्यवच्छिन्नतत्तद्धर्मत्वेनाभिमतस्य कार्यकारणभावस्य व्यभिचारेण भङ्गप्रसङ्गात् ॥ उभयादिजन्यत्रयीबाह्यत्वादिधर्मे तत्तज्जात्यभावनिर्वाहकप्रतिबध्यप्रतिबन्धकभावकल्पने महागौरवात् ॥ इतरदपि तत्र शिरोमणिगदाधरभट्टाचार्याद्युक्तं प्रकृते यथासंभवमवगन्तव्यम् ॥ तस्मात्पूर्वपक्षिणः कुशकाशाऽवलम्बनमेवैतत् ॥ **एतत्कुत्सापरावस्मदीयौ श्लोकावित्यादिनेति** ॥ इदं संहस्राक्षे द्वितीयभागारम्भेऽस्ति ॥ तत्रहि आत्मात्मार्थमनःसमर्पणपथाहर्तुंपरस्त्रीधनमित्यादिश्लोकद्वयेन विष्णुभक्तेष्वविद्यमानदोषकथनरूपा निन्दा व्यधायि ॥ वैजात्यकल्पनमभ्युपेत्याहुः ॥ **विष्णुभक्तनिन्देत्यादि** ॥ कौर्मएव पूर्वखण्डे सप्तविंशेऽध्याये भृग्वादीन्प्रति श्रीकृष्णः ॥ येमांजनाःसंस्मरन्तिकलौसकृदपिप्रभुम् ॥ तेषांनश्यतितत्पापंभक्तानांपुरुषोत्तमे इत्यादिना वैष्णवान्प्रशस्य परात्परतरंयान्ति नारायणपरायणाइति तेषामक्षरातीतवस्तुप्राप्तिलक्षणं मोक्षमभिधाय वैष्णवशिरोरत्ने गङ्गाधरे स्वाऽभिन्ने द्वेषवतां वैष्णवानामपि दुष्फलमुक्त्वा तस्मात्संपरिहर्तव्यानिन्दापशुपतौद्विजाः ॥ कर्मणा मनसावाचामद्भक्तेष्वपियत्नतइति शिवनिन्दावद्वैष्णवनिन्दाया अपि कर्मणा मनसा वाचा यत्नतः सम्यक्परिहर्तव्यत्वं वक्ति॥ अनुपदमेवाग्रे येचदक्षाऽध्वरेशप्तादधीचेनद्विजोत्तमाः ॥ भविष्यन्तिकलौभक्तैःपरिहार्याःप्रयत्नतइति त्वादृशप्रच्छन्नकापालिकादीनां वैष्णवैः प्रयत्नतः परिहरणीयत्वं बोधयति ॥ तत्रैवत्रिंशेऽर्जुनं प्रति व्यासः ॥ कुर्वन्तिचाऽवताराणिब्राह्मणानांकुलेषुवै इत्यादिना दक्षाऽध्वरे शिवं निन्दितवतामवतरणं वृथाधर्माचरणं चोक्त्वा विनिन्दन्तिहृषीकेशं ब्राह्मणान्ब्रह्मवादिनः ॥ वेदबाह्यव्रताचारादुराचारावृथाऽऽश्रमाः इत्याद्याह ॥ त्वद्रीत्या चेदमपि शप्तानां लक्षणमेव ॥ तेन वृथाश्रमसंपन्ने हृषीकेशनिन्दके ब्रह्मवादितद्भक्तनिन्दके च त्वयि शप्तत्वनिश्चयेन त्वदुक्तयुक्तयात्वय्येव त्रयीबाह्यत्वादितत्तद्धर्मापत्तिर्निश्चलाऽतोयुक्तमेवोक्तं दुर्वारैवेति ॥ **अस्माभिरित्यादि** ॥ अविद्यमान-

अस्माभिर्न शिवनिन्दा क्रियते किंतु प्रसंगागतानां तादृशवचनानामनुवादमात्रम् ॥ सूतवैशंपायनादीनामप्यनुवादकत्वप्रयुक्ततादृशधर्मवत्त्वापत्तिभियाऽनुवादस्य त्रयीबाह्यत्वादिधर्माहेतुतायास्त्वयाप्यङ्गीकरणीयत्वात् ॥

## टीका

दोषकथनएव निन्दात्वस्य त्वयाप्यङ्गीकृतत्वेनास्माभिस्तु पुराणोक्तस्यैवानूदितत्वेन च नास्मासु शिवनिन्दानिरूपितकार्यत्वेनाभिमतधर्माणां सङ्क्रातिः ॥ अन्यथा व्याससूतप्रभृतिष्वपि तथाकथनशालितया तत्तद्धर्मसङ्क्रान्तिर्दुर्वारा स्यात् ॥

सा च तत्राप्यनिष्टेतिभावः ॥ अत्रेदं बोध्यम् ॥ परोक्तमभ्युपेत्येह व्यभिचारादिक-मुक्तम् ॥ धर्माचरणवृथात्वादौ तेन मानतयाऽवलंबितानां कौर्मवचसां विचारे तु तदुक्तं सकलं जले विलेखनकौशलदेशीयमेव ॥ तथाहि ॥ वृथात्वे मानं वृथाधर्मं-चरिष्यन्तीतिवाक्यमेव त्वयाभिप्रेयते ॥ वस्तुतस्तु तत्र तेषांवृथाभवेद्धर्मइत्या-दिकथनाभावात् यथाश्रुतपाठे तदाचरितधर्मोद्देश्यकवृथात्वविधेयकशाब्दबोधानु-दयात् पूर्वोक्तएव तस्य वाक्यस्यार्थइति न किञ्चिदेतत् ॥ यच्च कलिभुवां शि-वनिन्दायाः फलं त्रयीबाह्यत्वमिति दधीचवचनबलाद्दर्शितं तदेव मोहयन्तिजना-नितिवाक्यस्य विषयः ॥ निन्दन्तिचमहादेवमित्यस्य त्रिंशे सत्वेन भविष्यन्तित्र-यीबाह्याइत्यस्य च पञ्चदशे सत्वेन तयोः परस्परसंबन्धगन्धस्याप्यभावात् ॥ ननु मास्त्वनयोः संबन्धः ॥ परं पञ्चदशाऽध्यायेपीदं तन्निन्दाफलमेव पठ्यतइति चे-त्सत्यम् ॥ परंतु यज्ञकाले साक्षाच्छिवे देव्यां च वेदाप्रतिपाद्यत्वलक्षणाऽविद्य-मानदोषारोपणरूपाया दक्षादिभिः कृताया निन्दायाएव, फलं तत्पठ्यते न तु पाद्या दिवचनानुवादस्य ॥ नापि तस्मिन्नध्याये कलौ शप्ता अवतीर्य शिवं निन्दिष्यन्ति निन्दातश्च त्रयीबाह्या भविष्यन्तीति निरूप्यते ॥ तत्रहि ( श्लोक ८ ) सर्वेष्वेवहियज्ञे-षुनभागःपरिकल्पितः ॥ नमन्त्राभार्ययासार्धंशङ्करस्येतिनेज्यते ॥ ( श्लोक ११ ) नह्ययंशङ्करोरुद्रःसंहर्तातामसोहरः ॥ नग्नःकपालीविदितोविश्वात्मानोपपद्यते इत्यादि-रूपायां निन्दायां दक्षेण कृतायां बाढमित्युक्त्या मुनिभिर्देवैश्च सा स्वीकृतेत्यादिवर्ण-यित्वोच्यते ॥ ( श्लोक २५ ) पुनःप्राहचतंदक्षंदधीचो भगवानृषिः॥ संप्रेक्ष्यर्षिगणान्दे-वान्सर्वान्वैरुद्रविद्विषइति ॥ ततःकांचित्तदुक्तिमनूद्य पुनरभिधीयते ॥ ( श्लोक २८ ) एवमुक्त्वासविप्रर्षिःशशापेश्वरविद्विषः ॥ समागतान्ब्राह्मणांस्तान्दक्षसाहाय्यकारिणः ॥ यस्माद्बहिष्कृतोवेदाद्भवद्भिःपरमेश्वरः ॥ विनिन्दितोमहादेवःशङ्करोलोकवन्दितः ॥ भविष्यन्तित्रयीबाह्याःसर्वेपीश्वरविद्विषः ॥ निन्दन्तीहेश्वरंमार्गंकुशास्त्रासक्तचेतसइ-त्यादि ॥ अत्र यस्माद्बहिष्कृतोविनिन्दितइतिक्तान्तप्रयोगेण तत्कालकृतस्याविद्य-मानदोषकीर्तनस्यैव तत्फलमिति निश्चाय्यते ॥ यच्च तत्रापीश्वरविद्विषइत्यादिनै-कोहेतुर्लक्षणं चोक्तमित्यजल्पि तदपि न विद्वदादरणीयम् ॥ शत्रुवद्धिपोलक्षणहे-त्वोर्विधानस्याभावात् ॥ वचने त्वीश्वरविद्विषइतिपदमुद्देश्यबोधकम् ॥ संप्रेक्ष्यर्षिग-णान्देवान्सर्वान्वैरुद्रविद्विषइति शशापेश्वरविद्विषइति च पूर्ववचनबलेन तथैव निश्च-यात् ॥ तथाच यस्मात्परमेश्वरोभवद्भिर्वेदाद्बहिष्कृतोनमन्त्राभार्ययासार्धमित्यादि-ना अतोभवन्तएव त्रयीबाह्याः कापालिकादिमतानुयायिनोभविष्यन्तीत्येव तदर्थः॥ अधिकं तु मूले वक्ष्यते ॥ एतेन " त्रयीबाह्यत्वं नाम त्रयीतदर्थग्रहणायोग्यत्वम् ॥ कथंचित्तद्ग्रहणेपि तत्फलानर्हत्वं च मूर्खत्वाच्छूद्रवदनधिकाराच्च " इति तस्य क-पोलकल्पनामात्रमूलकमकाण्डताण्डवमपास्तम् ॥ अत्र त्रयीतदर्थयोरुभयोर्ग्रहणाऽ योग्यत्वे कथंचिद्ग्रहणेपि तयोः फलाऽनर्हत्वे वा शूद्रवदिति दृष्टान्तोपन्यासस्तु त-

स्यैव शास्त्रार्थाऽपरिज्ञानमवगमयति ॥ शूद्रस्य त्रयीग्रहणायोग्यत्वेऽपि पुराणादिद्वारा तदर्थग्रहणे योग्यत्वात् ॥ अतएव बृहत्पराशरः ॥ कपिलाक्षीरपानेनब्राह्मणीगमनेनच ॥ वेदाक्षरविचारेणशूद्रःपततिजातितइत्यक्षरपदादानुपूर्वीविचारस्यैव प्रतिषेधं गमयति ॥ जातितइत्यत्र तत्क्षणादित्यपि पाठान्तरम् ॥ श्रीभागवतादिष्वपि स्त्रीशूद्रद्विजबन्धूनांत्रयीनश्रुतिगोचरा ॥ कर्मश्रेयसिमूढानांश्रेयएवंभवेदिह ॥ इतिभारतमाख्यानंकृपयामुनिनाकृतमिति भारतव्यपदेशेन ह्याम्नायार्थश्चदर्शितइति चोच्यते ॥ भारतादिषु श्रावयेच्चतुरोवर्णान्कृत्वाब्राह्मणमग्रतइति शूद्रस्यापि श्रावणमभिधीयते ॥ स्मृतिकौमुद्यां स्कान्दे ॥ अस्तिशूद्रस्यशुश्रूषापुराणेनैववेदनम् ॥ वदन्तिकेचिद्विद्वांसःस्त्रीणांशूद्रसमानताम् ॥ सिद्धान्तश्रवणंप्राहुर्द्विजानांमुनिसत्तम ॥ शूद्राणांचविरक्तानांतथास्त्रीणांमहामुने ॥ सिद्धान्तश्रवणंप्रोक्तंपुराणश्रवणंबुधैरिति ॥ एकादशस्कन्धेपि ॥ साधवेशुचयेब्रूयाद्भक्तिःस्याच्छूद्रयोषितामितिभगवद्वाक्यम् ॥ श्रवणाध्ययनार्थप्रतिषेधोक्तिस्त्वानुपूर्वीपूर्वकार्थाभिप्राया ॥ श्रवणादेः साहचर्यात्क्रमत्वारस्याच्च ॥ नच प्रकृतेति तादृशार्थग्रहणमेव विवक्ष्यतइति वाच्यम् ॥ तथाऽर्थग्रहणायोग्यत्वमपि वेदबाह्यत्वमित्यापत्त्या शूद्रस्य तद्बाह्यत्वापातात् ॥ नचेष्टापत्तिः ॥ नवेदबाह्येपुरुषेधर्मलेशोपिशङ्कर ॥ संगच्छतेमहादेवधर्मोवेदाद्धिनिर्बभाविति कौर्मपूर्वखण्डषोडशाध्यायादिवचोभिः सर्वथा निर्धर्मकत्वप्रसङ्गात् ॥ तथासति निर्णयसिन्धुप्रथमपरिच्छेदाद्युदाहृतानां शूद्रोवर्णश्चतुर्थोपिवर्णत्वाद्धर्ममर्हतीत्यादिव्यासादिवचसां व्याकोपात् ॥ प्रकाशे तु पुराणादेः साकल्येन पठनस्यैव प्रतिषेधो न तु तद्द्वाराऽर्थज्ञानस्येति दिक् ॥ विशेषस्तु मदीये सत्सिद्धान्तमार्तण्डे प्रथमाष्टके किंवर्णनिष्ठइत्यस्योत्तरे तृतीयाष्टके शूद्राश्चेदुपदेश्याइत्यस्योत्तरे च द्रष्टव्यः ॥ प्रकृतमनुसरामः ॥ यच्च श्रीभागवतचतुर्थस्कन्धद्वितीयाध्यायस्थं ( श्लोक २१ ) यएतन्मर्त्यमुद्दिश्येति वचनमुदाहृतं तत्र ब्रूमः ॥ तस्मिन्नेवाध्याये पठितेषु भवव्रतधरायेच विशन्तुशिवदीक्षायां विगर्ह्ययातपाखण्डंदैवंवोयत्रभूतराडित्यादिवचनेषु भवशिवादिपदेन शङ्कराचार्या गृह्यन्ते न वा ॥ आद्ये " सदीक्षयाचार्यमूर्तिस्थः " इत्यादिवचनानुरोधात्तद्दीक्षाधरस्य तव पाखण्डित्वाद्यापत्तिः ॥ ननु प्रकरणबलाद्भवादिशब्दानां साक्षाच्छिवपरतया न तत्र शङ्कराचार्याणां संबन्धोऽतोन दोषइति चेद्युक्तमेव ॥ तर्हि यएतदितिवाक्यमपि साक्षाच्छिवपरमेवेति संतुष्येः ॥ तत्रहि ( श्लोक १० ) अयंतुलोकपालानामित्यादिना दक्षेण कृतां शिवनिन्दां पार्वतीसंबन्धायोग्यत्वश्मशानवासनग्नत्वादिलक्षणामनूद्य ( श्लोक १७ ) विनिन्द्यैवंसगिरिशमप्रतीपमवस्थितमित्यादिना निन्दाश्रवणेपि शिवस्याप्रतिद्रोहं दक्षकर्तृकं शापविसर्जनं च निरूप्य ततोरोषकषायितेन नन्दीश्वरेण कृतः प्रथमं दक्षाय शापविसर्गः पठ्यते ( श्लोक २१ ) यएतन्मर्त्यमुद्दिश्येत्यादिभिः सार्धैस्त्रिभिः श्लोकैः ॥ यच्च स्वाभिमतत्रयीबाह्यत्वसमर्थनार्थं " तत्त्वंतुवेदार्थएव " इति व्याख्यातं तदपि मोहनमात्रम् ॥ तत्र तत्त्वशब्दस्योत्तर-

काण्डार्थब्रह्मतत्त्वपरत्वात् ॥ अतएवानुपदं ( श्लोक २२ ) गृहेषुकूटधर्मेषुसक्तोग्रा-
म्यसुखेच्छया ॥ कर्मतंत्रंवितनुतेवेदवादविपन्नधीः ॥ बुध्यापराभिध्यायिन्याविस्मृ-
तात्मगतिःपशुः ॥ स्त्रीकामःसोस्त्वतितरांदक्षोबस्तमुखोऽचिरात् ॥ विद्याबुद्धिरवि-
द्यायांकर्ममय्यामसौजडइति केवलपूर्वकाण्डार्थे सकामतया प्रवृत्तिरुच्यते ॥ अग्रे
तदनुसारिणामपि पुष्पितवेदवाचा चित्तोन्मथनं वर्ण्यते ॥ तस्मादत्रत्यं तत्त्वतो
वैमुख्यं न त्रयीबाह्यत्वरूपम् ॥ अतएवात्र " तत्त्वतःपरमार्थात् " इति श्रीधरस्वा-
मी ॥ यएतन्मर्त्यमित्यस्य स्पष्टतया दक्षमात्रपरत्वं प्रतीयतइति तस्य सर्वसाधारण-
त्वावधारणमपि विचारणवारणकारणकम् ॥ अस्माकं तु शुद्धाद्वैतावलम्बितया का-
पि द्वेषस्यानवसरात्कुतस्तरां महेश्वरावतारेषु शङ्कराचार्येषु तस्य संभावनापि ॥
खण्डनादिकं तु कापिलमतखण्डनादिवन्न दोषायेति दर्शितंप्राग्दर्शयिष्यते च पुरतः ॥

**ईश्वरसंमतमार्गनिन्दा तृतीयं लक्षणम् ॥ सापि विप्रशप्तत्वरूप-
लक्ष्यताऽवच्छेदकसमनियता न भवति ॥ रुद्रयामलादिषूक्त-
त्वेनेश्वरसंमतस्य वाममार्गादेर्निन्दाया वैदिकैर्दक्षिणमार्गस्थैः
क्रियमाणत्वेन विप्रशप्तत्वरूपलक्ष्यताऽवच्छेदकनिष्ठाऽवच्छेद-
कताकभेदवत्वेन निश्चितेषु तेष्वतिव्याप्तत्वात् ॥ एतेनेश्वरसमं-
तमार्गनिन्दायास्त्रय्यनधिकारहेतुत्वं लक्षणत्वं चेत्यादिप्रलापो-
प्यपास्तः ॥ दक्षिणमार्गस्थानां वैदिकानां त्रय्यधिकारस्य सर्व-
संमतत्वात् ॥**

## टीका

सहस्राक्षे ऐश्वरमार्गश्चात्रेत्यादिना तृतीयं लक्षणमित्यन्तेनोक्तं तृतीयं लक्षणं खण्डय-
न्ति ॥ **ईश्वरसंमतमार्गनिन्देत्यादिनाऽतिव्याप्त्यादिदोषग्रस्तत्वादित्य-
न्तेन** ॥ कौर्मवचने ऐश्वरंमार्गमित्यत्रैश्वरपदघटकेश्वरपदेन साक्षाद्विरूपाक्षो विव-

---

## सहस्राक्ष

* ऐश्वरमार्गश्चाऽत्रेशसंमतश्रुत्यर्थवर्णनरूपएव ॥ तन्निन्दयैव त्रयीबाह्यतायायुक्तत्वात् ॥
योयं निन्दति सतद्वेष्योभवतीति न्यायाऽऽनुकूल्यात् ॥ अस्य वाक्यस्याऽपि कौर्मस्यत्वेनोक्त-
विधशङ्करनिष्ठोपदेष्टृत्वबोधककौर्मवाक्यैः प्रत्यासत्त्याऽत्रापि शिवनिन्दायाः प्रसङ्गेन चोक्त-
विधमार्गग्रहणस्यैव युक्तत्वाच्च ॥ ईश्वरसंमतमार्गनिन्दाऽपि त्रय्यनधिकारस्य हेतुर्लक्षणंच ॥
शप्तानांत्वियं तृतीयं लक्षणम् ॥

क्ष्यतउताहो शङ्कराचार्याएव ॥ तत्राद्यं दूषयन्ति ॥ **रुद्रयामलादिष्वित्यादिना** ॥ अत्रादिशब्दः प्रकारवचनः सजातीयानि तन्त्रान्तराणि पाशुपतशास्त्रप्रभृतीनि च संगृह्णाति ॥ तत्र पाशुपतशास्त्रं नाम भगवता पशुपतिना पशुपाशविमोक्षणायाऽथातः पाशुपतयोगविधिंव्याख्यास्यामइत्यादिना पञ्चाध्यायात्मकं प्रणीतम् ॥ तत्र प्रथमेध्याये कार्यरूपोजीवः पशुः ॥ द्वितीये कारणं पशुपतिरीश्वरः॥ तृतीये योगःपशुपतौ चित्तसमाधानम् ॥ तुरीये विधिर्भस्मना त्रिषवणस्नानादिः ॥ पञ्चमे दुःखान्तसंज्ञको मोक्षश्च तत्फलत्वेन निरूपितः ॥ अतएव तस्य पञ्चाध्यायाः क्रमात्कार्यकारणयोगविधिदुःखान्ताख्या उच्यन्ते ॥ अस्य शिवकर्तृकत्वं उमापतिर्भूतपतिःश्रीकण्ठोब्रह्मणःसुतः ॥ ऊचिवानिदमव्यग्रोज्ञानंपाशुपतंशिवइतिमोक्षधर्मादावपि प्रसिद्धम्॥ तन्त्राणि च चतुःषष्टिरत्यन्तविस्तरवन्ति सन्ति विशेषतोमोहनानि ॥ तन्त्रार्थसंक्षेपस्तु व्युत्पादनाय प्रसङ्गात्प्रदर्श्यते ॥ तत्र महामायाशम्बरं तन्त्रम् ॥ अन्यस्मिन्पदार्थेऽन्यथा-प्रतिभानरूपमायाप्रपञ्चरचनोपायप्रतिपादकमैन्द्रजालकविद्यारूपम् ॥ १ ॥ योगिनीजालशम्बरं तन्त्रं योगिनीजालदर्शनोपायप्रतिपादकम् ॥ २ ॥ तत्त्वशम्बरं तन्त्रमिन्द्रजालविद्याविशेषः पृथिव्यादितत्त्वानामन्यत्रान्यबोधोपायप्रतिपादकम् ॥ ३ ॥ सिद्धभैरवं तन्त्रम् ॥ ४ ॥ मायिकभैरवं तन्त्रम् ॥ ५ ॥ कङ्कालभैरवं तन्त्रम् ॥ ६ ॥ कालाग्निभैरवं तन्त्रम् ॥ ७ ॥ शक्तिभैरवं तन्त्रम् ॥ ८ ॥ योगिनीभैरवं तन्त्रम् ॥ ९ ॥ महाभैरवं तन्त्रम् ॥ १० ॥ भैरवनाथतन्त्रम् ॥ ११ ॥ भैरवाष्टकमिदं कापालिकमतप्रतिपादकम् ॥ बहुरूपा शक्तिस्तत्प्रतिपादकतन्त्राणां गणो बहुरूपाष्टकम् ॥ यथा ब्रह्माणीतन्त्रम् ॥ इदमेवब्राह्मीतन्त्रम् ॥१२ ॥ माहेश्वरीतन्त्रम् ॥ १३ ॥ कौमारीतन्त्रम ॥१४॥ वैष्णवीतन्त्रम् ॥ १५ ॥ वाराहीतन्त्रम् ॥ १६ ॥ इन्द्राणीतन्त्रम् ॥१७ ॥ चामुण्डातन्त्रम् ॥ १८ ॥ शिवदूतीतन्त्रंचेति ॥ १९ ॥ ब्राह्म्याद्यष्टकमिदं प्राधान्येन तत्तद्देवताप्रतिपादकम् ॥ यामलानाम सिद्धान्तप्रतिपादकानि तन्त्राणि रुद्रयामलादीन्यष्टौ॥ यथा रुद्रयामलम् ॥ २०॥ भैरवयामलम् ॥ २१॥ शिवयामलम् ॥ २२ ॥ विष्णुयामलम् ॥ २३॥ स्कन्दयामलम् ॥ २४ ॥ ब्रह्मयामलम् ॥ २५ ॥ देवीयामलम् ॥ २६ ॥ यामलम् ॥ ॥ २७ ॥ शाक्ततन्त्रतया चतुःषष्टितन्त्राणामपि यामलतया व्यवहारः ॥ अतएव मूले रुद्रयामलादिष्विति प्राधान्येन तस्य निर्देशः ॥ चन्द्रज्ञानतन्त्रं कामेश्वर्यादिषोडशनित्याप्रतिपादकं कापालिकमतदर्शकं च ॥ तिथिनामधेयं नित्येति ॥ २८ ॥ मालिनीतन्त्रं समुद्रयानोपायप्रतिपादकम् ॥ २९ ॥ महासंमोहनं तन्त्रं जाग्रतामपि निद्रितोपायप्रतिपादकम् ॥ ३० ॥ वामजुष्टं वामकेश्वरं तन्त्रं चतुःशतीत्यपि कथ्यते ॥ ३१ ॥ महादेवतन्त्रं बटुकादिसिद्धकुलाचारप्रदर्शकम् ॥ ३२ ॥ वातुलम् ॥ ३३ ॥ वातुलोत्तरम् ॥ ३४ ॥ कामिकंचेति ॥ ३५ ॥ त्रीण्येतानि तन्त्राणि क्षेत्रकर्षणादिविधिप्रतिपादकानि ॥ हृद्भेदतन्त्रं कापालिकाचारप्रदर्शकम् ॥ ३६ ॥ तन्त्रभेद ३७ गुह्यतन्त्रयोः ३८ प्रकाशं रहस्यं वा परकृत्तमन्त्रतन्त्रप्रयोगाणां परावृत्युपायाः प्रदर्शि-

ताः ॥ कलावादं कामशास्त्रं वात्स्यायनादिमतम् ॥ ३९ ॥ कलासारं रूपादिवृद्ध्युपायप्रतिपादकम् ॥ ४० ॥ कुण्डिकामतं गुटिकासिद्धिप्रदर्शकम् ॥ गुटिका पानपात्रम् ॥ ४१॥ मतोत्तरं तन्त्रं रससिद्धिप्रकाशकम् ॥ ४२ ॥ वीणातन्त्रम् ॥ वीणानाम योगिनी संभोगयक्षिणीत्यस्यानामान्तरम् ॥ तस्याः साधनोपायप्रदर्शकम् ॥४३॥ त्रोतलतन्त्रं गुटिकाञ्जनपादुकासिद्धिप्रतिपादकम् ॥ ४४ ॥ त्रोतलोत्तरतन्त्रे चतुःषष्टिसहस्रयोगिनीनां दर्शनोपायः ॥ ४५ ॥ पञ्चामृततन्त्रंपृथिव्यादिपञ्चभूतानां साधनेन मरणाभावप्रतिपादकं कापालिकतन्त्रम् ॥ ४६ ॥ रूपभेदादिपञ्चतन्त्राण्युच्चाटनादिप्रतिपादकानि ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ सर्वज्ञानादितन्त्रपञ्चकं कापालिकसिद्धान्तैकदेशिदिगम्बरमताचारप्रदर्शकम् ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ पूर्वतन्त्रादिदेवीमतपर्यन्तं तन्त्राष्टकं दिगम्बरैकदेशिक्षपणकमताचारप्रदर्शकम् ॥ ५७ ॥ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ एवमेतानि सर्वाण्यपि त्रयीनिष्ठैर्नितरां हेयानि ॥ एषां सर्वेषामीश्वरवक्तृकत्वं तु प्रायेण तेषु तेषु तन्त्रभागेषु तत्र तत्र पुराणेतिहासादौ च स्फुटमेव ॥ **वाममार्गादेरिति** ॥ अत्राप्यादिशब्दः प्रकारवचनः ॥ तेन वैदिकाः वैष्णवाः शैवाः शाक्ता वामाः सैद्धान्ताः कौलाइति सप्तापि शाक्तभेदास्तत्सब्रह्मचारिणः पाशुपतप्रभृतयश्च संगृह्यन्ते ॥ अत्राद्यास्त्रयः शुद्धवैदिकवैष्णवशैवेभ्योऽतिरिक्ताएव ॥ एषां स्वरूपं तत्त्वदीपनिबन्धादितो ज्ञेयम् ॥ **क्रियमाणत्वेनेति** ॥ पत्नीत्वंदीक्षयारण्डाश्चण्डाअपिभजन्तिहि ॥ दिगम्बराश्चमेचिन्हाःसुरापानपरायणाः ॥ पापरूपादुराचारास्तेकौलाःपरिकीर्तितताइति निन्दादर्शनात् मिताक्षरायां ( अ० ३ आशौचप्रकरणे श्लो० ३० ) उदक्याशुचिभिःस्नायादित्यस्य विवरणे ब्रह्माण्डपुराणे शैवान्पाशुपतान्स्पृष्ट्वालोकायतिकनास्तिकान् ॥ विकर्मस्थान्द्विजाञ्छूद्रान्सवासाजलमाविशेदिति निबन्धेष्वेवमादिनिन्दादर्शनाच्च क्रियमाणत्वेनेत्यर्थः ॥

**किंचेश्वरसंमतमार्गप्रतिपादितानां पञ्चमकारत्वेन तन्मार्गस्थैर्व्यवक्रियमाणानां मद्यमत्स्यमैथुनादीनां मनुयाज्ञवल्क्यादिभिर्वैदिकत्वेन त्रय्यधिकारित्वेन विप्राऽशमत्वेन च निश्चितैर्ब्रह्महत्यासुरापानंस्तेयंगुर्वङ्गनागमइत्यादिना निषिद्धभक्षणंजैह्म्यमित्यादिना पारदार्यंपारिवित्त्यमित्यादिना च महापातकातिपातकोपपातकत्वेन प्रतिपादितत्वेनेश्वरसंमतमार्गनिन्दकेषु तेष्वतिव्याप्त्यापत्तिः ॥ शङ्कराचार्यसंमतमार्गनिन्दायालक्षणत्वे पूर्वोक्तेषु मीमांसकबौद्धादिष्वतिव्याप्तिः ॥**

## टीका

**पञ्चमकारत्वेनेति** ॥ मद्यं मांसं मत्स्या मैथुनं मुद्रा इति पञ्च मकाराः कुलार्णवादिषु मोक्षसाधनतया सुप्रसिद्धाः ॥ ननु ऐश्वरमार्गशब्देन मया ईश्वरसंमत-श्रुत्यर्थवर्णनरूपोमार्ग उच्यते ॥ वामादिमार्गस्य तु तथात्वाभावात् सर्वमेतत्कर्ण प्रश्ने कटिचालनस्य सहोदरीभूतमितिचेन्मैवम् ॥ तत्रापि मधुवाताऋतायतइत्या-दिश्रुतीनां मद्यपरतायाः पश्वालभनविध्यादीनां मांसादिपरतायाश्च स्वयमीश्व-रेण वर्णनाद्बहूनां श्रुतिवाक्यानां तत्तत्तन्त्रे तेनैव स्वयमन्यथा नयनाच्च ॥ तथा-हि ॥ कुलार्णवे द्वितीयोल्लासे पार्वतीं प्रति शिवो बहुलं कुलधर्ममाहात्म्यं वदन् (श्लोक ४७) कुलधर्ममजानन्योमोक्षमिच्छतिदुर्मतिः॥ पारावारमपारंसपाणिभ्यांतर्तु-मिच्छति॥ योवान्यदर्शनेभ्यश्चभुक्तिमुक्तिंचकाङ्क्षति॥ स्वप्नलब्धधनेनांबधनवान्सभ वेद्यदीत्यादिना तद्धर्मवतामत्युत्कर्षं तद्रहितानामत्यन्तगर्हणां च दर्शयित्वा (श्लोक ११२) पेयंमद्यंपलंखाद्यंसमालोक्यंप्रियामुखम् ॥ इत्येवंवरणंजप्यंपरंप्राप्यपरंपदम् ॥ गुरुकारुण्यलब्धव्यमीदृशंकुलदर्शनम् ॥ त्वद्भक्ताएवजानन्तिनेतरेभुक्तिमुक्तिदमित्या-दिनामद्यमांसमैथुनादिसेवनं धर्मत्वेनोक्त्वा सुरामांससेवनादौ दूषणानि प्रायश्चित्ता-नि च धर्मशास्त्रोक्तानि (श्लोक १२७) सुरावैमलमन्नानामित्यादिनाऽनूद्य तेषां प्राय-श्चित्तानां कौलशास्त्रदर्शितविधिं विना सेवनविषयकत्वं तद्विधिना सेवने तु न दोषइ-त्याशयेन (श्लोक १३५) मांससंदर्शनंकृत्वासुरादर्शनवच्चरेत् ॥ तस्मान्नाविधिनाम-द्यंमांसंसेवेत्कदाचन ॥ विधिवत्सेवितेदेवितरसात्वंप्रसीदसि ॥ नाशयस्यप्यविधिनास-त्यमेतद्वरानने ॥ तृणंवाप्यविधानेनच्छेदयेन्नकदाचन॥ विधिवद्ब्राह्मिजंवापिहत्वापापैर्न-लिप्यतइत्याद्यभिधाय तस्य मार्गस्य स्वसंमतत्वं श्रुत्यर्थवर्णनरूपत्वं चाह ॥ (श्लोक १४०) कुलशास्त्राणिसर्वाणिमयैवोक्तानिपार्वति ॥ प्रमाणानिनसन्देहोनहंतव्यानिहेतु-भिः ॥ देवताभ्यःपितृभ्यश्चमधुवाताऋतायते ॥ स्वादिष्ठयामदिष्ठयाक्षीरंसर्पिर्मधूदक-म् ॥ हिरण्यपात्रंमधोःपूर्णमबध्नन्पुरुषंपशुम् ॥ सद्योदीक्षयतीत्याद्याःप्रमाणंश्रुतयःप्रिये-इति ॥ अग्रे च चतुर्थोल्लासे (श्लोक १०) अथप्रातःसमुत्थायगुरुदेवात्मचिन्तन-म् ॥ कर्णमूलस्थसूत्रश्चकुर्याद्विण्मूत्रमोचनम् ॥ शौचास्यशोधनंस्नानंसंध्यांतर्पणमा-चरेदित्यादौ श्रौतस्मार्तकर्मणामप्यनुष्ठेयत्वं बोधयति ॥ तथा पञ्चमोल्लासे (श्लोक १२) अंभसांद्वादशप्रस्थंप्रस्थार्धंतक्रमेवचेत्यादिना पैष्ट्यादिमदिरोत्पादनप्रकारान्प्रप-ञ्च्य (श्लोक ३३) मद्यान्येकादशैतानिभुक्तिमुक्तिप्रदानिच ॥ द्वादशंतुसुरामद्यंसर्वेषा-मुत्तमंप्रिये ॥ गौडीमाध्वीचपैष्टीतिविज्ञेयात्रिविधासुरा ॥ सर्वसिद्धिकरापैष्टीगौडीभोग-प्रदायिनीत्यादिना पैष्ट्यादीनां पृथक्पृथक् फलविशेषं सर्वासां दर्शनस्पर्शनाघ्राणा-दिपुण्यविशेषं पूजायामुपयोगं चोक्त्वा (श्लोक ४७) मांसंतुत्रिविधंप्रोक्तंखभूज-

ल्चरंप्रिये ॥ यथासंभवमेष्वेकंतर्पणार्थंप्रकल्पयेत् ॥ मांससंदर्शनेनापिसुरादर्शनव-
त्फलम् ॥ पितृदैवतयज्ञेषुवेदोहिंसाविधीयते ॥ आत्मार्थंप्राणिनांहिंसाकदाचिन्नोदिता
प्रिये ॥ अनिमित्तंतृणंवापिच्छेदयेन्नकदाचन ॥ देवतार्थंद्विजंगांवाहत्वापापैर्नलिप्यते ॥
मामनादृत्यपुण्येपिपापंस्यात्प्रत्यवायतः ॥ मन्निमित्तंकृतंपापंपुण्यंभवतिशांभवि ॥ यै-
रेवपतनंद्रव्यैःसिद्धिस्तैरेवचोदितेत्यादिना तत्र वेदानुकूल्यं दर्शयति ॥ तथा ( श्लोक
८३ ) सुराशक्तिःशिवोमांसंतद्भोक्ताभैरवःस्वयम् ॥ तयोरैक्यंसमुत्पन्नमानन्दोमोक्ष-
उच्यते ॥ आनन्दोब्रह्मणोरूपंतच्चदेहेव्यवस्थितम् ॥ तस्याभिव्यञ्जकंद्रव्यंयोगि-
भिस्तेनपीयतइत्यादौ “ अन्योन्तरआत्मानन्दमयः ॥ आनन्दोब्रह्मेतिव्यजानात् ॥
आनन्दरूपममृतंयद्विभाति ” इत्यादिश्रुतीनामर्थमद्वैतं च वर्णयति ॥ ( श्लोक ८९ )
देवान्पितॄन्समभ्यर्च्यवेदशास्त्रोक्तवर्त्मना ॥ गुरुंस्मरन्पिबन्मद्यंखादन्मांसंनदोषभागि-
त्यादिना वेदशास्त्रानुकूल्यं प्रकाशयन्निषेधानामभिलाषपूर्वकावैधपानादिपरत्वं स्व-
संमतपानादेः सोमपानादिवददूषितत्वं च प्रपञ्चयति ॥ षष्ठोल्लासे च ( श्लोक ५२ )
प्रथमःप्रकृतेर्हंसःप्रतद्विष्णुरनन्तरम् ॥ त्र्यम्बकस्तुतृतीयःस्याच्चतुर्थस्त्रिपदाभिधः ॥
( तत्पदाभिधइति पाठान्तरम् ) विष्णुर्योनिकइत्याख्यःपञ्चमःकल्पतांमनुरित्यादौ
तत्तद्वैदिकमन्त्रानुग्रहं स्फुटयति ॥ एवं तत्रतत्र तन्त्रग्रन्थेषु श्रुत्यादिप्रामाण्यादरणं
श्रुत्यर्थवर्णनं चावेक्षणीयम् ॥ विस्तरभयाद्विरम्यते ॥ अतस्तादृशमार्गेष्वीश्वरसंमत-
श्रुत्यर्थवर्णनरूपतायाः सत्वात्तन्निन्दकेषु वैदिकशिष्टेष्वतिप्रसंगोमूले यउक्तः सयु-
क्तएव ॥ वस्तुतस्तु कौर्मवचने ईश्वरमार्गशब्देन ईश्वरस्थायमीश्वरेण प्रोक्तोवा
मार्गइत्येवार्थोलभ्यते नतु तत्संमतश्रुत्यर्थवर्णनरूपइति कल्पनेकिंचिदपि लिङ्गं वच-
नेऽस्ति ॥ मनसा कल्पनेप्यनिस्तारस्तु प्रकाशितः ॥ ननु नेश्वरसंमतश्रुत्यर्थवर्ण-
नरूपत्वमात्रं मार्गस्याऽऽदरणीयत्वे बीजमपितु वास्तवतदर्थवर्णनरूपत्वमेव ॥ अ-
तोवामादिमार्गेष्वीश्वरसंमतश्रुत्यर्थवर्णनरूपत्वे सत्यपि प्रयोजनविशेषार्थं शिवेन
तथा कथनान्न तेषामनिन्द्यत्वमितिचेत्प्रियं नः ॥ परं कोवास्तवः श्रुत्यर्थः कश्चाऽ-
वास्तवइत्यत्र किं निर्णायकम् ॥ वेदाङ्गादीनां पूर्वोत्तरमीमांसासिद्धन्यायानां चा-
नुकूल्यप्रातिकूल्ये एव वास्तवावास्तवत्वयोर्निर्णायके इतिचेदोंकुर्मः ॥ श्रीमदाचार्या-
दीनां हि तदनुकूलवेदार्थज्ञापनार्थमेव प्रवृत्तिः ॥ एवंच सत्यस्मत्संमतश्रुत्यर्थस्तदनु-
कूलोऽन्यसंमतोवा सतथेत्यत्रैवावयोर्विवादः पर्यवस्यति नतु पुराणवचनैरर्हं वा नि-
न्द्यस्त्वं वा निन्द्यइत्यत्र वृथाकलहः ॥ **ब्रह्महत्यासुरापानमित्यादि** ॥ मनुना
एकादशाध्याये ( श्लोक ५४ ) ब्रह्महत्यासुरापानंस्तेयंगुर्वङ्गनागमः ॥ महान्तिपात-
कान्याहुःसंसर्गश्चापितैःसहेति सुराप्रतिषेधोबोधितः ॥ याज्ञवल्क्येन तृतीयाध्याये
कर्मविपाकपूर्वकप्रायश्चितप्रकरणे ( श्लोक १३ ) निषिद्धभक्षणंजैह्मयमुत्कर्षेचवचोनृत-
म् ॥ रजस्वलामुखास्वादःसुरापानसमानित्विति निषिद्धस्य मांसलशुनादेः स दर्शितः ॥
मनुयाज्ञवल्क्यादिशास्त्रेष्वनुपाकृतमांसनिषेधाः स्पष्टतराएवेति किमिह बहुना ॥ तेनै-

व तत्रैव ( श्लोक २८ ) गोवधोव्रात्यतास्तेयमित्यादिना (श्लोक ३६ ) भार्याया विक्रयश्चैषामेकैकमुपपातकमित्यन्तेन उपपातकान्युक्तानि तत्र (श्लोक २९ ) पारदार्यपारिवित्त्यमिति परदारसङ्गस्य प्रतिषेधः प्रकाशितः ॥ एवं मत्स्यादिप्रतिषेधाअपि सन्त्येव ॥ **महापातकातिपातकेत्यादि** ॥ यद्यपि प्रायश्चित्तेन्दुशेखरादिषु महापातकसमान्यनुपातकत्वेनोक्तानि अतिपातकानि चातिरिक्तान्येवोक्तानि तथाप्यत्र महापातकसमानामतिपातकत्वव्यवहारस्तु महापापंचातिपापंतथापातकमेवच ॥ प्रासङ्गिकंचोपपापमित्येवंपञ्चकोगणइति मिताक्षरायामुपपातकनिरूपणउदाहृतस्मरणानुरोधात् ॥ अतउभयथापि व्यवहारो न विरुद्धः॥ अथेश्वरशब्देन शङ्कराचार्यएव ग्राह्याइति द्वितीयं कल्पं दूषयन्ति ॥ **शङ्कराचार्येत्यादिना** ॥ मीमांसकादिभिर्बहुभिरेव शाङ्करमतस्य खण्डितत्वात्तथेतिभावः॥ वस्तुतस्तु पञ्चदशाध्याये तथा परिग्रहे प्रकृतहान्यप्रकृताभ्यागमौप्रसज्येयाताम् ॥ भार्यासाहित्यनग्नत्वकपालित्वा दिभिर्दक्षाद्युक्तैः सूर्यमूर्तित्वादिभिर्दधीचोक्तैश्च धर्मैः साक्षाच्छिवस्यैव प्रकृतत्वात्॥ अग्रे देवीप्रार्थितेन तेनैव स्वगणद्वाराऽध्वरस्य विध्वंसात्॥ तत्र शङ्कराचार्याणां कथायालेशतोऽप्यभावाद्दक्षस्य तेषु द्वेषस्याप्यभावाच्च॥ यत्तु अस्य वाक्यस्यापि कौर्मस्थत्वेनोक्तविधशङ्करनिष्ठोपदेष्टृत्वबोधककौर्मवाक्यैः प्रत्यासत्त्येत्याद्युक्तं तदसत् ॥ तथासति पञ्चदशापेक्षया षोडशस्याधिकप्रत्यासन्नत्वात्तत्रत्येषु चकारमोहशास्त्राणीत्यादिवाक्येष्वप्याचार्याणां कर्तृतयान्वयं स्वीकुर्याः ॥ नच कापालंभैरवमित्यादिपरिगणनविरोधः शङ्क्यः ॥ तथान्यानिसहस्रशइत्यनेन संग्रहसंभवात् ॥ ननु प्रकरणाभावाद्विरुद्धलिङ्गदर्शनाच्च न स्वीक्रियतइतिचेत्प्रकृतेपि तुल्यम् ॥ नचैकपुराणस्थत्वमात्रेण तथाऽर्थः शक्यः कल्पयितुम् ॥ श्रीभागवतादिषु बुद्धस्य भगवदवतारतया वर्णितत्वेन तत्पुराणस्थेषु हरिभक्त्यावश्यकत्वबोधकवचस्सु धिग्जन्मनस्त्रिवृद्विद्यामित्यादिषु तद्रहितनिन्दावचस्सु च बुद्धंभक्तिपरतायाबुद्धविरुद्धवैदिकनिन्दापरतायाश्चापातात् ॥ वस्तुतस्तु त्रिंशाध्यायवचांस्यपि न शङ्कराचार्यविषयाणीति प्रकाशितं प्राक् ॥ ऐश्वरमार्गश्चात्र ईश्वरस्य तद्भार्यायाश्च वैदिकमन्त्रपूर्वकाऽऽहुतिभिर्यजनीयत्वादिलक्षणएव नतु शङ्कराचार्यकृतश्रुत्यर्थवर्णनरूपः ॥ दक्षादिकाले तस्याऽभावात् ॥ उपक्रमोपसंहारविरोधाच्च ॥ कौर्मवचनानां त्वयमक्षरलभ्योऽर्थः ॥ यस्मात्परमेश्वरो भवद्भिर्वेदाद्बहिष्कृतोऽतो भवन्तस्त्रयीबाह्या भविष्यन्ति इह यज्ञे सर्वेऽपीश्वरविद्विषोभवन्तऐश्वरं मार्गं नमन्त्राभार्ययासार्धंशङ्करस्येतिनेज्यतइत्यादिना निन्दन्ति अतो यज्ञरक्षार्थं स्वाश्रितोपि हृषीकेशः पराङ्मुखोभविष्यतीति ॥ तदेतदग्रे

**कौर्मवाक्यानि तु न निन्दादीनां लक्षणत्वेन प्रतिपादकानि किंत्वन्यपराणीत्यग्रे वक्ष्यते ॥ स्वकपोलकल्पनया तु तेषां लक्षणत्वं न संभवति ॥ अतिव्याप्त्यादिदोषग्रस्तत्वात् ॥**

## टीका

मपञ्चयिष्यतइत्याहुः ॥ **कौर्मवाक्यानीति** ॥ तथाच निन्दतोहैश्वरंमार्गमिति शत्रन्तघटितपाठस्य केवलस्वकपोलकल्पितत्वात्तन्मूलिका " ईश्वरसंमतमार्गनिन्दापि त्र्य्यंनधिकारस्य हेतुर्लक्षणंच " इत्युक्तिरपि केवलव्योम्नि चित्रारंभमेवानुकरोति ॥ यच्च शप्तानां त्विदं तृतीयं लक्षणमिति तदप्यसत् ॥ सप्तविंशे प्रथमं तेषां लक्षणं त्रिंशे द्वितीयं पञ्चदशे तृतीयमिति कल्पने मानलेशस्याप्यभावात् ॥ यश्च योऽयं निन्दति स तद्वेष्योभवतीति न्याय उक्तः सोपि जीवन्मुक्तानां स्वनिन्दकेषु द्वेषाऽभावादनैकान्तिकः ॥ यच्छब्दयोस्तच्छब्दयोश्च क्रमानपेक्षसामानाधिकरण्याङ्गीकारे तु शिक्षार्थं पित्रादिना निन्द्यमानेपि पुत्रादौ द्वेषस्याऽभावादनैकान्तिकत्वम् ॥

कुशास्त्राऽऽसक्तमानसत्वं चतुर्थं लक्षणम् ॥ कुशास्त्रमप्युक्तविधैश्वरमार्गभिन्नमार्गरूपम् ॥ उक्तश्च त्वयाशङ्कराऽऽचार्यसंमतश्रुत्यर्थवर्णनरूपोमार्गः ॥ तथाच तादृशश्रुत्यर्थवर्णनरूपमार्गभिन्नशास्त्राभ्यासकर्तृत्वं लक्षणं संपन्नम् ॥ तच्च तत्प्राक्तनेषु सर्वेष्वतिव्याप्तम् ॥ किंच तादृशश्रुत्यर्थाऽनभिज्ञेषु शिवभक्तेषु पुराणाद्यभ्यासशालिष्वतिव्याप्तिश्च ॥ किंचाधिगतपाणिनीयगौनर्दीयसर्वस्वे नवद्वीपगमनेन संपादितकणभुक्चरणाक्षसिद्धान्तसंपदि भाट्टप्राभाकरमतपारावारपारदृश्वनि तादृशशास्त्राभ्यासशीले त्वय्यतिव्याप्तिश्च ॥

## टीका

अथ सहस्राक्षे कुशास्त्रमपीत्यादिना* लक्षणत्रयमित्यन्तेन दर्शितानि तुर्यपञ्चमषष्ठलक्षणानि क्रमेण युगपच्च दूषयिष्यन्तः कुशास्त्राऽऽसक्तचेतस्त्वरूपं तुर्यं तावत्प्राधान्येन परिहरन्ति ॥ **कुशास्त्राऽऽसक्तमानसत्वमित्यादिना चतुष्टयंपूर्वंनिरस्तमित्यन्तेन** ॥ **उक्तश्चेति** ॥ उक्तविधेश्वरेत्याद्युक्त्या सूचितइत्यर्थः ॥

---

### सहस्राक्ष

* कुशास्त्रमपि उक्तविधैश्वरमार्गभिन्नमार्गरूपम् ॥ प्रकरणस्वारस्यात् ॥ एवं मिथ्याऽधीतसमाचारत्वमपि शङ्कराऽनभिमताऽधीतसमाचारत्वं ॥ मिथ्याज्ञानप्रलापित्वमपि शिवाऽनभिमतज्ञानप्रलापित्वमेव ॥ शप्तानामिदमपि लक्षणत्रयम् ॥

अत्राऽयं भावः ॥ यद्धि " कुशास्त्रमपिउक्तविधेश्वरमार्गभिन्नमार्गरूपम् ॥ प्रकरण स्वारस्यात् " इत्युक्तं तदसत् ॥ नहि तस्मिन्नध्याये पूर्वाऽपराध्यायेषु वा लेशमात्रमपि शङ्कराचार्याणां प्रकरणस्यास्ति ॥ तत्र दक्षयज्ञादिनिरूपणे तद्द्वेष्यत्वतदध्वरविध्वंसकत्वादिभिः साक्षात्त्र्यक्षस्यैव प्रकरणात् ॥ नग्नत्वकपालित्वाऽष्टमूर्तित्वादितन्मात्रलिङ्गदर्शनात् स्पष्टरुद्रमहादेवादिशब्दश्रुतेश्च ॥ अतो न कुशास्त्रशब्देन शङ्कराचार्यमार्गभिन्नमार्गएवाऽऽहत्य ग्रहीतुं शक्यः ॥ ननु कुशास्त्रशब्देन तु शिवप्रवर्तितातिरिक्तमार्गएव गृह्यते शङ्कराचार्याणामपि शिवावतारत्वादिष्टसिद्धिरिति चेत्तथासति पाशुपतशास्त्रमपि शिवप्रवर्तितमस्ति प्रशंसितं च तत् कथंचिन्मोक्षफलकतया महाभारतादौ ॥ तद्भिन्नं कुशास्त्रं न वा आद्ये शाङ्करमतं तच्चोभयमपि कुशास्त्रतयाऽङ्गीकरणीयं स्यात् ॥ परस्परमतियौगिकभेदवत्त्वात् परस्परविरुद्धत्वात् उभयस्यापिश्रुत्यर्थवर्णनरूपत्वाच्च॥ न द्वितीयः ॥ शिवप्रवर्तितमितरत्सर्वमपि विहाय केवलशाङ्करभिन्नमार्गपरिग्रहे मानाऽभावात् ॥ ननु प्रकृताध्याये तत्प्रकरणाऽभावेऽपि त्रिंशे तदवतारकथासत्वात्प्रकृते तथा व्याख्यायतइति चेदत्र प्रक्रान्तस्य त्यागे अप्रक्रान्तस्य दवीयस उपादाने च किं मानम् ॥ किंचैवंसति षोडशाध्यायद्वादशाध्याययोः स्पष्टतरमुक्तमेवात्र कुशास्त्रशब्देनोपादीयताम् ॥ अतिसान्निध्यात् कण्ठरवेण कुशास्त्रत्वकथनाच्च ॥ तथाहि ॥ तत्र पूर्वखण्डे षोडशाध्याये पुरादारुवनेपुण्येमुनयोगृहमेधिनइत्यादिना दारुवनस्थतापसानामनावृष्टिजतापतोऽन्नार्थं गौतमं प्रति प्रार्थनं तेन द्वादशवर्षपर्यन्तमन्नादिना तेषां निर्वहणं ततोद्वादशे वर्षे दुःखनिवारिवारिवर्षे संपन्ने पुनर्देवदारुवनं जिगमिषतां तेषामादरणविशेषाद्गौतमेन कृतमुपरोधं स्वनिर्मोकार्थं मायया गां विधाय तस्यां गौतमकृतस्पर्शमात्रेण मृतायां गौतमे वृथादुरितमारोप्य तेषां पुनर्देवदारुवनप्राप्तिं च वर्णयित्वोच्यते ॥ सतेषांमाययाजातांगोवध्यांगौतमोमुनिः ॥ केनापिहेतुनाज्ञात्वाशशापातीवकोपतः ॥ भविष्यन्तित्रयीबाह्यामहापातकिभिःसमाः ॥ बहुशस्तेतथाशापाज्जायमानाःपुनःपुनः ॥ सर्वेसंप्राप्यदेवेशंशंकरंविष्णुमव्ययम् ॥ अस्तुवँल्लौकिकैःस्तोत्रैरुच्छिष्टाइवसर्वगौ ॥ देवदेवौमहादेवौभक्तानामार्तिनाशिनौ ॥ कामवृत्त्यामहायोगौपापान्नस्त्रातुमर्हथः॥ तदापार्श्वस्थितंविष्णुंसम्प्रेक्ष्यवृषभध्वजः ॥ किमेतेषांभवेत्कार्यंप्राहपुण्यैषिणामिति ॥ ततःसभगवान्विष्णुःशरण्योभक्तवत्सलः ॥ गोपतिंप्राहविप्रेंद्रानालोक्यप्रणतोहरिः ॥ नवेदबाह्येपुरुषेधर्मलेशोपिशङ्कर ॥ संगच्छतेमहादेवधर्मोवेदाद्धिनिर्बभौ ॥ तथापि भक्तवात्सल्याद्रक्षितव्यामहेश्वर ॥ अस्माभिःसर्वएवैतेगंतारोनरकानपि ॥ तस्माद्धिवेदबाह्यानांरक्षणार्थायपापिनाम् ॥ विमोहनानिशास्त्राणिकरिष्यावोवृषध्वज ॥ एवंसंबोधितोरुद्रोमाधवेनमुरारिणा ॥ चकारमोहशास्त्राणिकेशवोपिशिवेरितः ॥ कापालंलांगलंवामंभैरवंपूर्वपश्चिमम् ॥ पञ्चरात्रंपाशुपतंतथान्यानिसहस्रशः ॥ सृष्ट्वातान्याहनिर्वेदाःकुर्वाणाःशास्त्रचोदितम् ॥ पतन्तोनरकेघोरेबहून्कल्पान्पुनःपुनः ॥

जायन्तेमानुषेलोकेक्षीणपापचयास्ततः ॥ ईश्वराराधनबलाद्गच्छध्वंसुकृतांगतिम् ॥ वर्तध्वंमत्प्रसादेननान्यथानिष्कृतिर्हिवः ॥ एवमीश्वरविष्णुभ्यांचोदितास्तेमहर्षयः ॥ आदेशंप्रत्यपद्यन्तशिवस्यासुरविद्विषः ॥ चक्रुस्तेन्यानिशास्त्राणितत्रतत्ररताःपुनः ॥ शिष्यानध्यापयामासुर्दर्शयित्वाफलानिच ॥ मोहायसइमंलोकमवतीर्यमहीतले ॥ चकारशङ्करोभिक्षांहितायैषांद्विजैःसहेत्यादि ॥ तथा द्वादशाध्याये जननोत्तरं हिमालयेन स्तुता गिरिसुता तं प्रति शृणुष्वचतत्प्रथमंगुह्यमीश्वरगोचरमित्यादिनेश्वरस्वरूपतद्भक्त्यादिकं निरूप्य श्रुतिस्मृत्युदितंसम्यक्कर्मवर्णाश्रमात्मकम् ॥ अध्यात्मज्ञानसहितंमुक्तयेसततंकुरु ॥ धर्मात्संजायतेभक्तिर्भक्त्यासंप्राप्यतेपरम् ॥ श्रुतिस्मृतिभ्यामुदितोधर्मोयज्ञादिकोमतइत्यादिना ज्ञानकर्मसमुच्चयादेव फलसिद्धिं भक्तेरेव प्राधान्यं च सर्वं तावकमतानिरिक्तप्रकारकं प्रतिपाद्य वेदस्यैव मुख्यत्वं चोक्ताह ॥नहिवेदादृतेकिंचिच्छास्त्रंधर्माभिधायकम् ॥ योन्यत्ररमतेसोसौनसंभाष्योद्विजातिभिः ॥ ( ब्रह्माभिधायकमिति पाठान्तरम् ) यानिशास्त्राणिदृश्यन्तेलोकेस्मिन्विविधानितु ॥ श्रुतिस्मृतिविरुद्धानिनिष्ठातेषांहितामसी ॥ कापालंभैरवंचैवयामलंवाममार्हतम् ॥ एवंविधानिचान्यानिमोहनार्थायतानितु ॥ येकुशास्त्राभियोगेनमोहयंतीहमानवान् ॥ मयासृष्टानिशास्त्राणिमोहायैषांभवान्तरइति ॥ ततः वेदार्थवित्तमैःकार्ययत्स्मृतंकर्मवैदिकमित्यादिना स्वायंभुवादिस्मृत्यष्टादशपुराणोपपुराणशिक्षाद्यङ्गप्रभृतीनां प्रादुर्भावं प्रादिदेश ॥ अतोऽत्र कुशास्त्रशब्देन वेदविरुद्धं कापालादिकमेवोपादातुमुचितं तस्मिन्पुराणे निःसंदिग्धप्रसिद्धत्वात् ॥ अतिसन्निहितत्वाद्द्वादशाध्याये तानि नामतो निर्दिश्य येकुशास्त्राभियोगेनेति कथनाच्च ॥ न तु वेदगीताव्याससूत्रादिमूलकोऽनादिसिद्धोवैष्णवसिद्धान्तः शङ्कराचार्यमार्गप्रतियोगिकभेदमात्रेण कुशास्त्रशब्देनोपादातुं शक्यः ॥ अतएवैकादशाध्याये ( श्लोक ६५ ) असच्छास्त्राधिगमनंकौशीलव्यस्यचक्रियेतिमनुवचने ॥ तृतीयाध्याये कर्मविपाकपूर्वकप्रायश्चित्तप्रकरणे ( श्लोक ३६ ) असच्छास्त्राधिगमनमाकरेष्वधिकारितेति याज्ञवल्क्यवचने च,तादृशस्यैवाऽसच्छास्त्रत्वमभिप्रेयते ॥ " श्रुतिस्मृतिविरुद्धशास्त्रशिक्षणं " इति कुल्लुकभट्टेन " असच्छास्त्रस्य चार्वाकादिग्रन्थस्यअधिगमः " इतिविज्ञानेश्वरेणचविवरणात् ॥ एवं " असच्छास्त्राभिगमनंनास्तिकताकुशीलवतामद्यपस्त्रीनिषेवणमित्युपपातकानि " इत्यादिषुबृहद्विष्णवादिवचनेष्वपि द्रष्टव्यम् ॥ विशेषस्तु कश्चिदग्रे वक्ष्यते ॥ अथ प्रसङ्ग कुशास्त्रशब्देन शाङ्करमार्गभिन्नमार्गस्यैव परिग्रहे लक्षणे दोषमाहुः ॥ **तथाचेत्यादिना ॥ अभ्यासकर्तृत्वमिति** ॥ अभ्यासोहि पुनः पुनः कीर्तनरूपोव्यासङ्गः॥ सचाऽऽसत्तया संभवति तामन्तरा पठनाऽनिष्पत्तेः ॥ यथोक्तं केनचिदभियुक्तेन ॥ संस्कारबुद्धिविनयोद्यमशास्त्ररागाःपश्चाऽऽन्तराःपठनसिद्धिकराभवंति ॥ आचार्यपुस्तकनिवाससहायभिक्षाबाह्यास्तुपञ्चपठनंपरिवर्धयन्तीति ॥ यथायथाहिपुरुषःशास्त्रंसमधिगच्छति ॥ तथातथाविजानातिविज्ञानंचास्यरोचतइति मनुनाऽपि रुचिनि-

यमः स्मर्यते ॥ अतः कुशास्त्रासक्तचेतस्कत्वमेतेन संगृहीतं भवति ॥ **तत्प्राक्तनेष्विति** ॥ शङ्कराचार्यतः प्राचीनेषु वसिष्ठव्यासप्रभृतिषु गौडपादगोविंदयोगीन्द्रपर्यंतेषु सर्वेष्वपि महर्षिषु निबन्धादिकारेषु मानुषविद्वत्सु चाऽतिव्याप्तमित्यर्थः ॥ प्रागितिकालार्थकमव्ययम् ॥ ततःसायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौतुट्चेतिटघुट्युल्वा तुडागमश्च ॥ अनद्यतनइत्यादिनिर्देशात्तुटः प्रागनादेशः ॥ इदानींत्वेपि लक्षणस्य दुष्टत्वमाहुः ॥ **किंचतादृशेति** ॥ अलक्ष्यत्वं स्पष्टयितुं शिवभक्तपदम् ॥ अतिव्याप्तिश्चेति चकारोदोषान्तरसमुच्चायकः ॥ तथाच तदुक्तमार्गोऽसंमतं परस्य सविशेषत्वं ज्ञानाऽपेक्षया भक्तेः प्राधान्यं तयैव परपदप्राप्तिमेवमादीतरदप्याऽऽम्रेडयत्कौर्मादिपुराणमपि कुशास्त्रतयाऽभिलप्यं स्यादितिभावः ॥ एवंचानेन वचनेन कौर्मस्य कुशास्त्रत्वं ततश्चास्यापि कुशास्त्रवचनत्वादप्रामाण्यं प्रसज्येतेति स्वारूढशाखाच्छेदनम् ॥ तत्र तथा निरूपणं तु पूर्वखण्डे द्वादशाऽध्यायादौ उत्तरखण्डईश्वरगीतादौ चापाणिपिहितमेव ॥ प्रस्तावनोक्तमनुवदन्तःप्रतिवादिन्यतिव्याप्तिमाहुः ॥ **किंचाधिगतेति** ॥ पाणिनिना प्रोक्तं पाणिनीयं व्याकरणम् ॥ वृद्धाच्छः ॥ गोनर्दे काश्मीरमण्डले देशविशेषे भवोगोनर्दीयः पतञ्जलिः ॥ एङ्प्राचांदेशईति पाक्षिकवृद्धत्वाच्छः ॥ न बहुव्रीहाविति सूत्रे भाष्ये गोनर्दीयस्त्वाहेति पतञ्जलौ गोनर्दीयशब्दः प्रयुज्यते ॥ तेन प्रोक्तं गौनर्दीयं महाभाष्यम् "याज्ञवल्क्यानि ब्राह्मणानिआश्मरथः कल्पः" इत्यादिवत्प्राग्दीव्यतीयोऽण् ॥ अधिगतं पाणिनीयगौनर्दीययोः सूत्रमहाभाष्ययोः सर्वस्वं येनेति तथा ॥ नवद्वीपो लोके नदियाइति प्रसिद्धः प्राच्यः स्थलविशेषः ॥ कणभुक् कणादः सप्तपदार्थनिरूपकदशाऽध्यायवैशिषिकदर्शनस्य प्रणेता॥ चरणे अक्षि यस्येति चरणाक्षो गौतमः षोडशपदार्थनिरूपकपञ्चाध्यायन्यायदर्शनस्य निर्माता ॥ बहुव्रीहौसक्थ्यक्ष्णोःस्वाङ्गात्षजिति षच् ॥ भट्टः कुमारिलभट्टाचार्यः तस्येदं भाट्टम् ॥ प्रभाकरोगुरुरिति व्यवह्रियमाणः ॥ तस्येदं प्राभाकरम् ॥ इमे द्वे मते पूर्वतन्त्रविषयके तद्रूपयोः पारावारयोः समुद्रयोः पारं दृष्टवानिति तथा ॥ दृशेः क्वनिबिति क्वनिप् ॥ **तादृशशास्त्रेति** ॥ शाङ्करभिन्नतत्सदृशश्रीविष्णुस्वामिश्रीरामानुजश्रीपूर्णप्रज्ञादिप्रकाशितवेदान्तशास्त्राऽभ्यसनशीले ॥ अन्यथा निखिलनिगमान्तपयःपयोधिपारीणत्वाऽसिद्धेः ॥ खण्डनोत्साहेनापि तदभ्यासस्यानुमितेश्च ॥ अत्र गौनर्दीयेतिप्रयोगेण प्रस्तावनायां गोनर्दीयेत्यपप्रयोगः सूचितः ॥ गोनर्दीयशब्देन तत्प्रोक्तग्रन्थस्यालाभात् ॥ पतञ्जलिमात्रपरत्वे त्वधिगतपाणिनिगोनर्दीयसर्वस्वइत्येव वक्तव्यम् ॥ अतिव्याप्तिश्चेति चकारः शाङ्करवेदान्तानभ्येतृषु व्याकरणन्यायपूर्वमीमांसाद्यासक्तहृदयेषु शङ्कराचार्यतः प्राचीनार्वाचीनेषु बहुषु स्मार्तविद्वत्स्वतिप्रसंगं समुच्चिनोति ॥ नहि सर्वेषां विदुषां तदध्ययननियमोऽस्ति ॥ **तथाचमतिलक्षणमित्यादि** ॥ परदूषणाय कल्पितेषु लक्षणेषु प्रत्युत तस्यैव दोषआप-

तथाच प्रतिलक्षणं परोद्देशेन प्रक्षिप्तं शस्त्रं दुर्बलं प्रक्षेप्तारमेव हन्तीती न्याय आपतीति कौतूहलम्॥यत्तु प्रकरणस्वारस्यात्ता-दृशाऽर्थलाभ इत्युक्तं तदपि प्रकरणाज्ञानमनुमापयति ॥ तथा-हि कूर्मपुराणे पूर्वखण्डे पञ्चदशोऽध्याये ॥ सशप्तःशंभुनापूर्वंदक्षः प्राचेतसोनृपः ॥ किमकार्षीन्महाबुद्धेश्रोतुमिच्छामसांप्रतमि-त्येवं शौनकादिभिः पृष्टः सूतो दक्षस्य चरितं प्रोक्तवान् वक्ष्ये-नारायणेनोक्तमित्यादिना॥तत्र पूर्ववैरमनुस्मरता दक्षेण यज्ञ आ-रब्धः॥ तत्र विष्णुप्रमुखा देवाः शङ्करं विना समागता ऋषयश्च॥ तत्र दधीचो महादेवमदृष्ट्वा सदेवःसांप्रतंरुद्रोविधिनांकिनपूज्यत इतिदक्षं पृष्टवान् ॥ ततो दक्षउवाच ॥ सर्वेष्वेवहियज्ञेषुनभागः परिकल्पितः ॥ नमन्त्राभार्ययासार्धंशङ्करस्येतिनेज्यते ॥ एवं द-क्षेणोक्ते पुनर्दधीचेन यश्चप्रसूतिर्विश्वस्येत्याद्युक्त्वा संस्तूयतेसह-स्रांशुःसामगाध्वर्युहोतृभिः ॥ पश्यैनंविश्वकर्माणंरुद्रमूर्तित्रयी-मयमित्युक्तम् ॥ ततो दक्षउवाच ॥ यएतेद्वादशाऽऽदित्याआग-तायज्ञभागिनः ॥ सर्वेसूर्याइतिज्ञेयानह्यन्योविद्यतेरविः ॥ दक्षे-णैवमुक्ते ये ब्राह्मणास्तत्र समायातास्तेपि तमसाविष्टमनसो नमन्यंतेवृषध्वजम् ॥ सहस्रशोथशतशोबहुशोभूयएवते ॥ निन्दन्तोवैदिकान्मन्त्रान्सर्वभूतपतिंहरम् ॥ अपूजयन्दक्षवा-क्यंमोहिताविष्णुमायया ॥ ततो दक्षेण ब्राह्मणैश्च कृतां निन्दां श्रुत्वा ब्रह्मा अंतर्हितः ॥ ततो दक्षो नारायणं शरणं जगाम यज्ञं च विष्णुना रक्षितः प्रवर्तयामास ॥ तदनन्तरं च दधीचो दक्षसा-हाय्यकारिणो ब्राह्मणान् शशाप ॥ भविष्यध्वंत्रयीबाह्याः सर्वे-पीश्वरविद्विषः॥ निन्दन्तोह्यैश्वरंमार्गंकुशास्त्रासक्तमानसाः ॥ मि-

थ्याधीतसमाचारामिथ्याज्ञानप्रलापिनः॥ प्राप्यघोरंकलियुगंक-
लिजैःपरिपीडिताः ॥ त्यक्त्वातपोबलंकृत्स्नंगच्छध्वंनरकान्पुनः॥
भविष्यतिहृषीकेशःस्वाश्रितोपिपराङ्मुखः ॥ इत्यन्तेन सूतैः
सर्वं व्याख्यातम् ॥ तथाच दक्षयज्ञे समागतैर्ब्राह्मणैर्यः शिवद्वेषः
शिवनिन्दा शिवमार्गनिन्दा च कृता तत्सर्वमनूद्य तदनु कुशा-
स्त्रासक्तचेतस्त्वमिथ्याधीतसमाचारत्वादिकं चानूद्य त्रयीबाह्यत्व-
घोरकलिकल्मषाभ्यर्दितत्वतपोबलहानिनरकप्राप्तिरूपान् शा-
पान्दत्तवान् ॥ ननु तत्र शङ्करोक्तश्रुत्यर्थस्य प्रकरणमस्ति ना-
पि लक्ष्यलक्षणभावस्य येन मिथ्याधीतसमाचारत्वादीनां लक्ष-
णत्वं त्वदुक्तसमाचारत्वादिपरत्वं वा भवेत् ॥ एवं यज्ञकाले द-
क्षेण यज्ञोपकारिब्राह्मणरक्षणार्थं नियुक्तोपि श्रीविष्णुर्भवद्भि-
राश्रितोपि मद्वाक्यात्पराङ्मुखोभविष्यति समर्थोपि मच्छापम-
न्यथा न करिष्यतीत्यर्थः ॥ अयमपि शापएव दधीचेन
दत्तः ॥ एतेन विष्णोः सम्यगसम्यग्वाऽऽश्रितत्वं शप्तानां लक्ष-
णमिति प्रलपितमपास्तम् ॥

## टीका

द्यतइति भावः ॥ अत्र शस्त्रमित्युपलक्षणम् ॥ तेन यथा परोपद्रवायैव शङ्करभक्तिं भावयता सुदक्षिणेन भगवति तदनुयायिषु च प्रयुज्यमानः कृत्याऽभिचारः सुदर्शनेन परिभूतः परावृत्त्य प्रत्युत तमेव सपरिवारं समदं समदहत् ॥ अनन्तरं चानुप्रविष्टं सुदर्शनं तदाश्रयस्थलं दग्ध्वा तं समूलघातं जघान ॥ तथा वैष्णवाऽऽचार्येषु वैष्णवेषु च प्रयुक्तोदूषणाऽभिचारोवैष्णवसुदर्शनाभिभूतः सएव ज्ञानदुर्बलं तमेव प्रथमं प्रमथ्नाति ॥ तदनु वैष्णवसुदर्शनं तदवलंबं सकलं समूलमुन्मूलयतीति गूढोऽभिसंधिः ॥ अथ तदुक्तहेतुदूषणमुखेन वास्तवं कौर्मवचसामर्थं समर्थयन्ति ॥ **यत्तुप्रकरणेत्यादिना** ॥ अत्रारंभात्प्रभृति तावांस्तदध्याय भागोऽत्यपेक्षितव्याख्यानं मध्येकृत्याऽनूद्यते ॥ तत्र चतुर्दशाध्यायान्ते दशाभ्यस्तुप्रचेतोभ्योमारिषा-

यांप्रजापतिः ॥ दक्षोजज्ञेमहाभागोयःपूर्वंब्रह्मणःसुतः ॥ सतुदक्षोमहेशेनरुद्रेणसहधी-
मता ॥ कृत्वाविवादंरुद्रेणशप्तःप्राचेतसोभवदित्यादिना संक्षेपेण सतीदेहत्यागः शिव-
प्राप्तः क्षत्रियकुलेऽवतरणरूपः शापश्च निरूपितः ॥ ततः पञ्चदशाध्यायारंभे ॥ नै-
मिषेयाऊचुः ॥ देवानांदानवानांचगंधर्वोरगरक्षसाम् ॥ उत्पत्तिंविस्तरात्सूतब्रूहिवैव-
स्वतेन्तरे ॥ १ ॥ सशप्तःशंभुनापूर्वंदक्षःप्राचेतसोनृपः ॥ किमकार्षीन्महाबुद्धेश्रोतुमि-
च्छामसांप्रतम् ॥ २ ॥ सूतउवाच ॥ वक्ष्येनारायणेनोक्तंपूर्वकल्पानुषङ्गिकम् ॥ त्रि-
कालंबतपापघ्नंप्रजासर्गस्यविस्तरम् ॥ ३ ॥ सशप्तःशंभुनापूर्वंदक्षःप्राचेतसोनृपः ॥
विनिन्द्यपूर्ववैरेणगङ्गाद्वारेऽयजद्भवम् ॥ ४ ॥ भवं विनिन्द्येत्यन्वयः ॥ देवाश्चसर्वेभा-
गार्थमाहूताविष्णुनासह ॥ सहैवमुनिभिःसर्वैरागतामुनिपुङ्गवाः ॥ ५ ॥ मुनिपुङ्गवाइति
संबोधनमतो न पुनरुक्तिः ॥ दृष्ट्वादेवकुलंकृत्स्नंशङ्करेणविनाऽऽगतम् ॥ दधीचोनामवि-
प्रर्षिःप्राचेतसमथाब्रवीत् ॥ ६ ॥ दधीचउवाच ॥ ब्रह्माऽऽद्यास्तुपिशाचान्तायस्याऽऽ
ज्ञानुविधायिनः ॥ सदेवःसाम्प्रतंरुद्रोविधिनाकिंनपूज्यते ॥ ७ ॥ दक्षउवाच ॥ सर्वे-
ष्वेवहियज्ञेषुनभागःपरिकल्पितः ॥ नमन्त्राभार्ययासार्धंशङ्करस्येतिनेज्यते ॥ ८ ॥
यतोयज्ञेषु न भागोनापि मन्त्राइति हेतोर्नेज्यते ॥ मन्त्राऽभावकथनेन शिवस्य वे-
दाद्बहिर्भावोयज्ञेषु भागाऽभावभाषणेनैश्वरयजनमार्गस्य निन्दा चाऽबोधि ॥ ततः
कुपितोदधीचस्तत्तद्देवरूपेण स्वरूपेण च शिवस्य यज्ञभागभाग्भावं बोधयितुमा-
हेत्युच्यते ॥ विहस्यद्दक्षंकुपितोवचःप्राहमहामुनिः ॥ शृण्वतांसर्वदेवानांसर्वज्ञानमयः
स्वयम् ॥ ९ ॥ दधीचउवाच ॥ यश्चप्रसूतिर्विश्वात्मायश्चासौपरमेश्वरः ॥ संपूज्यते-
सर्वयज्ञैर्विदितःकिंनशङ्करः ॥ १० ॥ आद्यपादे यतःप्रवृत्तिरिति विश्वस्येति च पा-
ठान्तरम् ॥ विदितइत्यत्र विदितेत्यपि ॥ अथ वेदे विश्वात्मत्वादिधर्मैः स्तूयमानोरु-
द्रोऽन्यएव न त्वयं पार्वतीपतित्वादिविशिष्टइत्याशयेन दक्षउवाच ॥ नह्ययंशङ्करो-
रुद्रःसंहर्तातामसोहरः ॥ नग्नःकपालीविदितोविश्वात्मानोपपद्यते ॥ ११ ॥ संहर्तृ-
त्वेन सुखकरत्वाभावान्नायं शङ्करः किंत्वयं सर्वसंहारकस्तामसोहरएव ॥ संहर्तृत्वनग्न
त्वाद्ययोग्यधर्मशालिनोविश्वात्मत्वादिकंनघटते ॥ तस्याऽऽत्महिताऽकरणप्रसङ्गात् ॥
तमसोमुख्यत्वापत्तेः सर्वस्य नग्नत्वादिप्रसक्तेश्चेतिभावः ॥ किंत्वीश्वरादिशब्दाभि-
धेयः सर्वदेवाद्यात्मना सर्वैरिज्यमानः सत्वोपहितो विष्णुरेवेत्याह ॥ ईश्वरोहिजग-
त्स्रष्टाप्रभुर्नारायणोहरिः ॥ सत्वात्मकोसौभगवानिज्यतेसर्वकर्मसु ॥ १२ ॥ अथ वे-
दत्रयस्यापि शिवपरत्वं तत्तद्देवरूपेण शिवस्यैवाराध्यत्वं च स्थालीपुलाकन्यायेन द-
र्शयितुं तदीयाष्टमूर्त्यंतर्भूते भास्करे तथात्वं दर्शयन्दधीचउवाच ॥ किंत्वयाभगवाने-
षसहस्रांशुर्नदृश्यते ॥ सर्वलोकैकसंहर्ताकालात्मापरमेश्वरः ॥ १३ ॥ यंगृणन्तीह-
विद्वांसोधार्मिकाब्रह्मवादिनः ॥ सोर्थसाक्षीतीव्ररोचिःकालाऽऽत्माशाङ्करीतनुः ॥ १४ ॥
एषरुद्रोमहादेवःकपालीचघृणीहरः ॥ आदित्योभगवान्सूर्योनीलग्रीवोविलोहितः ॥१५॥
संस्तूयतेसहस्रांशुःसामगाध्वर्युहोतृभिः ॥ पश्यैनंविश्वकर्माणंरुद्रमूर्तिंत्रयीमयम् ॥१६॥

संस्तूयतइत्यत्र संश्रूयतइत्यपिपाठः ॥ अत्र सूर्येऽपि संहर्तृत्वादिकं वर्णितम् ॥ साम गाध्वर्युहोतृभिरिति ॥ सामगाः प्रसिद्धाः ॥ अध्वर्यवो याजुषाः ॥ होतारोबह्वृचाः ॥ तेन संपूर्णत्रय्यास्तत्रैव तात्पर्यं बोधितम् ॥ तैत्तिरीयाणां नारायणोपनिषदि " आदित्योवाएषएतन्मण्डलंतपतितत्रताऋचः " इत्याद्युक्त्वा " सैषात्रय्येवविद्यातपतीतिश्रावणात् ॥ तैत्तिरयब्राह्मणे ( काण्ड ३ प्रपाठक १२ अनु० ९ ) " ऋग्भिःपूर्वाह्णेदिविदेवईयते ॥ यजुर्वेदेतिष्ठतिमध्येऽह्नः ॥ सामवेदेनास्तमयेमहीयते ॥ वेदैरशून्यैस्त्रिभिरेतिसूर्यः ॥ " इत्याम्नानाच्च ॥ अथात्र द्वादशाऽऽदित्याः समागताएते तु न शिवमूर्तयः ॥ एतदतिरिक्तश्च सूर्योनैवास्ति यस्तन्मूर्तित्वेन संभाव्येत ॥ तस्मान्न शिवस्य वेदगोचरत्वमित्याशयेन दक्षउवाच ॥ यएतेद्वादशादित्या आगतायज्ञभागिनः ॥ सर्वेसूर्याइतिज्ञेयानह्यन्योविद्यतेरविः ॥ १७ ॥ एवमुक्तेतुमुनयःसमायातादिदृक्षवः ॥ बाढमित्यब्रुवन्दक्षंतस्यसाहाय्यकारिणः ॥ १८ ॥ तमसाविष्टमनसोनमन्यन्तेवृषध्वजम् ॥ सहस्रशोथशतशोबहुशोभूयएवहि ॥ १९ ॥ द्वितीयचरणे नपश्यन्तिमहेश्वरमितिपाठान्तरम् ॥ श्लोकान्ते भूयएवतइत्यपि ॥ निन्दन्तोवैदिकान्मन्त्रान्सर्वभूतपतिंहरम् ॥ अपूजयन्दक्षवाक्यंमोहिताविष्णुमायया ॥ २० ॥ देवाश्चसर्वेभागार्थमागतावासवादयः ॥ नापश्यन्देवमीशानमृतेनारायणं हरिम् ॥ २१ ॥ नारायणं विनाऽन्ये नापश्यन् नारायणस्तु सर्वात्माऽपश्यदेवेति भावः ॥ एवमवास्तववेदार्थकथनं तत्राऽनुमतिं चालोक्य वेदगर्भोऽन्तरधादित्याह ॥ हिरण्यगर्भोभगवान्ब्रह्माब्रह्मविदांवरः ॥ पश्यतामेवसर्वेषांक्षणादन्तरधीयत ॥२२॥ पश्यतः सर्वाननादृत्येत्यर्थः ॥ षष्ठीचानादरइतिषष्ठी॥ अथ शिवमाहात्म्यप्रकाशनाय विष्णुना विधापितां यज्ञप्रवृत्तिमाह ॥ अन्तर्हितेभगवतिदक्षोनारायणंहरिम् ॥ रक्षकंजगतांदेवंजगामशरणंत्वयम् ॥२३ ॥ प्रवर्तयामासचतंयज्ञंदक्षोथनिर्भयः ॥ रक्षकोभगवान्विष्णुःशरणागतरक्षकः ॥ २४ ॥ एतावता अत्राध्याये साक्षात्र्यक्षस्यैव प्रकरणं लिङ्गं श्रुतिश्च उत्तरोत्तरं बलिष्ठानि स्पष्टतराण्युपलभ्यन्ते॥नत्विह कलिभुवभवावतारविशेषश्रीशङ्कराचार्यकथायागन्धोप्यस्ति॥पातकस्य दण्डयोग्यतायाश्च सत्वं शापबीजभूतं दर्शयति॥पुनःप्राहचतंदक्षंदधीचोभगवानृषिः ॥ संप्रेक्ष्यर्षिगणान्देवान्सर्वान्वैरुद्रविद्विषः ॥ २५॥ अपूज्यपूजनेचैवपूज्यानांचाप्यपूजने ॥ नरःपापमवाप्नोतिमहद्वैनात्रसंशयः ॥ २६ ॥ असतांप्रग्रहोयत्रसतांचैवावमानना ॥ दण्डोदैवकृतस्तत्रसद्यःपततिदारुणः ॥ २७ ॥ ऋषिगणान्वृषध्वजममन्यमानान्देवांश्च यज्ञभागार्थमागतान्वासवादीन्देवमीशानमपश्यतः सर्वानपीश्वरविद्विषः सम्यक् प्रेक्ष्य प्राह ॥ एतेन कलावीश्वरविद्विषः शङ्कराचार्यद्वेषिणोभविष्यन्तीति व्याख्यानमनोरथोऽपास्तः ॥ ईशानादर्शित्वादपूज्यानां वासवादीनां पूजने पूज्यानां रुद्रादीनां ॥ असतां तमसाऽऽविष्टत्वाद्वैदिकमन्त्रनिन्दकानामृषीणाम् ॥ सतां वास्तववेदार्थवादिनाम् ॥ दारुणोदण्डः पुरस्तादध्वरविध्वंसनरूपः ॥ इत्थं दक्षे दण्डसंभवं प्रदर्श्य तदनुयायिनोब्राह्मणान् शशापेत्याह ॥ एवमुक्त्वासविप्रर्षिः शशापेश्वरविद्विषः ॥ समाग-

तान्ब्राह्मणांस्तान्दक्षसाहाय्यकारिणः ॥ २८ ॥ अयोग्यस्यापि दक्षवचनस्य बाढमित्युक्त्या स्वीकारेण साहाय्यकारिणईश्वरविद्विषः शशापेत्यनेनापि तात्कालिकशिवद्वेषशालिनामेव शापोद्देश्यत्वं स्पष्टं बोधितं नतु त्वदिष्टम् ॥ पूर्वश्लोकद्वयं दक्षंप्रत्युक्तमिदं तु समागतान्ब्राह्मणान्प्रत्युच्यते तेन ( दक्षंप्रतिदधीचेन ) इति सहस्राक्षोक्तिः प्रत्युक्ता ॥ सहेतुनिर्देशं शापाकारमाह॥ यस्माद्बहिष्कृतोवेदाद्भवद्भिःपरमेश्वरः ॥ विनिन्दितोमहादेवःशङ्करोलोकवन्दित; ॥२९॥ भविष्यन्तित्रयीबाह्याःसर्वेपीश्वरविद्विषः॥ निन्दन्तीहैश्वरंमार्गंकुशास्त्रासक्तचेतसः ॥३०॥ मिथ्याधीतसमाचारामिथ्याज्ञानमलापिनः ॥ प्राप्यघोरंकलियुगंकलिजैःपरिपीडिताः ॥ ३१ ॥ त्यक्त्वातपोबलंकृत्स्नंगच्छध्वंनरकान्पुनः ॥ भविष्यतिहृषीकेशःस्वाश्रितोपिपराङ्मुखः ॥ ३२ ॥ एवमुक्त्वाथविप्रर्षिर्विररामतपोनिधिः ॥ जगाममनसारुद्रमशेषाघविनाशनम् ॥ ३३ ॥ परमेश्वरः सर्वमूलभूतोपि भवद्भिर्यस्मान्नमन्त्राभार्ययासार्धमित्यादिदक्षवाक्यपूजनेन वेदाद्बहिष्कृतः तथा सूर्यादिमूर्तिभिः शंकरः सर्वेषां शुभकर्ता सर्वलोकैर्वन्दितोऽपि महादेवो नग्नःकपालीत्यादिवाक्यपूजनेन विनिन्दितः ॥ निन्दन्तोवैदिकान्मन्त्रान्सर्वभूतपतिंहरमितिपूर्वमुक्तेश्च ॥ तस्माद्भवन्तएव त्रयीबाह्याभविष्यन्ति ॥ पूर्वश्लोकोक्तस्य भवच्छब्दस्यैवाऽत्र विभक्तिविपरिणामेनान्वयात्समक्षवचनेपि भविष्यन्तीति प्रथमपुरुषः ॥ भवच्छब्दान्वयमन्तरेण यस्मादिति हेतुहेतुमद्भावानुपपत्तेः ॥ कतिपु चित्पुस्तकेषु भविष्यध्वेंत्रयीबाह्याइविपाठः॥आत्मनेपदं गच्छध्वं नरकान्पुनरित्यत्रैवाऽऽर्षम् ॥ अतोपिवैष्णवाअग्रे शाङ्करमतखण्डनात्त्रयीबाह्याभविष्यन्तीतिद्विवचनाशयो नैव शक्यकल्पनः ॥ त्रयीबाह्यशब्दश्चोक्तचरकापालिकादिपरएव ॥ नवेदबाह्येपुरुषइत्याद्युदाहृतपूर्वकौर्मवचनसंदर्भात् ॥ तथापाशुपतंशास्त्रंत्वमेवकुरुसुव्रत ॥ कङ्कालशैवपाषण्डमहाशैवादिभेदतः ॥ अवलम्ब्यमतंसम्यग्वेदबाह्यंद्विजोत्तमाः ॥ भस्मास्थिधारिणः सर्वेभविष्यन्तिनसंशयः ॥ त्वांपरत्वेनवक्ष्यन्तिसर्वशास्त्रेषुतामसाइत्यादिभ्योनिर्दिष्टस्थलपाद्मादिवचनेभ्यश्च ॥ तथा इह यज्ञे सर्वेपि ऋषयो देवाश्च ईश्वरविद्विषः शिवद्वेषिणः सन्तऐश्वरं मार्गं वैदिकाहुतिभिः शिवयजनादिलक्षणं निन्दति ॥ सर्वेष्वेवहियज्ञेषुनभागःपरिकल्पितइतिदक्षवाक्यस्यपूजनेन तमसाऽविष्टतया वृषध्वजस्यामानेन चाविद्यमानदोषारोपविषयं कुर्वन्ति ॥ अतोहृषीकेशः पराङ्मुखोभविष्यतीत्यग्रे वक्ष्यते ॥ अत्रहेतूननुवदति कुशास्त्रेत्यादिपदत्रयेण ॥ कुशास्त्राणि तामसानि वेदबाह्यशास्त्राणीति दर्शितं प्राक् ॥ तदासक्तिमन्तरा मनसि तमआवेशायोगात् ॥ पूर्वं तदाविष्टमनस्कताकथनेन निष्पद्यमानस्यैवायमनुवादः ॥ वस्तुतस्तु कुशास्तरि सर्वेष्वेवहियज्ञेष्वित्यादिना कुत्सितशासनकर्तरि दक्षआसक्त चेतोयेषां तइत्येव युक्ततरं भाति ॥ शास्त्राणामिह विशेषतः प्रसक्त्यभावात् ॥ तस्यैव साहाय्यकरणात् ॥ वैदिकमन्त्रान्सर्वभूतपतिं हरं चःनिन्दित्वापि तद्वाक्यस्यैव पूजनाच्च सिद्धमेवैतदनूद्यते ॥ चेतसइत्यत्र मानसाइति पाठान्तरम् ॥ यद्यपि तृन्तृचौशंसिक्षदादिभ्यःसंज्ञायां-

चानिटावित्यौणादिकसूत्रेण शासेः क्षदादित्वाच्छासिक्षदादिभ्यइतिशेखरोक्तपाठान्त-
राद्वा शासेस्तृचि संज्ञायामेव शास्तेतियुक्तं॥ मुनीन्द्रःश्रीघनःशास्तेत्यमरोक्तेः ॥ तथा-
पि बुद्धसंज्ञायामेवेति न शक्यं वक्तुम् ॥ मैत्रावरुणाख्यर्त्विग्विशेषपर्याये प्रशास्तृ-
शब्दे इडभावानुपपत्तेः ॥ बाहुलकात्संज्ञायांचानिटावितिचकाराद्वा असंज्ञायामपि
स्वीकारे तु नियामकपर्यायोपि साधुः ॥ अतएव शास्तासमंतभद्रेनाशासकेपुनरन्य-
वदिति विश्वमेदिन्यौ ॥ प्रकृतसूत्रमनोरमातत्वबोधिन्यादिष्वप्यस्य कोशस्य प्रमा-
णत्वेनसंग्रहाच्छासकवाचित्वमप्यसन्दिग्धमेव ॥ चान्द्रे शासेःक्तिचिशिष्टिरित्यत्र
शास्तेतिप्रत्युदाहरता रत्नमतिना त्वनौणादिकतृचोपीडभावोव्याकरणान्तरसंमतइति
दृश्यते ॥ पुराणादिषु तु श्रीभागवतादिषु ( स्कं० १ अ० २२ श्लो० २६ ) शास्ता-
चोत्पथगामिनां ॥ ( अ० १७ श्लो० ९ ) खलानांमयिशास्तरि ॥ ( स्कं ५ अ० १०
श्लो० २६ ) शास्ताभिगोप्तानृपतिःप्रजानां ॥ ( स्कं० ६ अ० ३ श्लो० ४ )
कतिसंतीहशास्तारः ॥ ( श्लो० ५ ) शास्तारोदण्डधारिणइत्यादिस्थलेषु शास्तृशब्द-
स्य प्रचुरप्रयोगदर्शनात्पौराणिकपरिभाषयाप्यत्र तत्प्रयोगोनिर्बाधएव ॥ नन्वध्ययन-
सदाचाराभ्यां संपन्नानां कथं कुशास्त्रेषु कुशास्तरि वाऽऽसक्तिरित्यतआह ॥
मिथ्याधीतेति ॥ अधीतं वेदादिकमध्ययनं वा ॥ नपुंसकेभावेक्तः ॥ समाचारः
संध्यावन्दनाद्यनुष्ठानं मिथ्या अधीतसमाचारौ येषां ते तथा ॥ अथवा मिथ्यैव
अधीतः समाचारोवेदव्रतोपदेशपरोग्रन्थोयैरित्येव मुख्योऽर्थः ॥ अन्यथा सहस्र-
शोथशतशोबहुशोभूयएवहि ॥ निन्दन्तोवैदिकान्मन्त्रानित्यस्यायोगात् ॥ ननु ज्ञा-
निनामध्ययनानुष्ठानयोः समाचाराध्ययनस्य वा कथं वैयर्थ्यमितिचेत्तत्राह ॥ मि-
थ्याज्ञानेति ॥ नग्नःकपालीविदितोविश्वात्मानोपपद्यतइत्यादिदक्षवाक्यस्य बाढमिति
स्वीकारात्पूजनाच्च वास्तवज्ञानिनां तमआवेशस्य मायया मोहस्य चायोगात् ॥ इह
तु तमसाविष्टमनसइति मोहिताविष्णुमाययेतिचोक्तत्वात्तथेति भावः ॥ अतइदं पद-
द्वयमपि सिद्धस्यैवार्थस्यानुवादकम् ॥ एवमनूद्य तत्फलं दर्शयितुं पुनः शपति ॥
प्राप्यघोरमिति ॥ अनूदितहेतूनामिहावरोहक्रमेण फलान्युच्यन्ते ॥ यस्मादेवं
तस्माद्घोरं कलियुगं प्राप्य मिथ्याज्ञानप्रलापित्वेन दोषप्लोषकतात्त्विकज्ञानाभावात्क-
लिजैर्दोषैर्मद्यपानादिभिः परितः पीडिताः सन्तोमिथ्याधीतसमाचारत्वादशेषं तपो-
बलं त्यक्त्वा तत्त्यागात्कुशास्त्रेषु कुशासनकर्तरि वाऽऽसक्तमानसत्वाच्च नरकान्प्रा-
प्नुत ॥ यस्माच्च भवन्तः सर्वेपीश्वरविद्विषः सन्तऐश्वरं मार्गं निन्दन्ति तस्मादिदानीं
स्वाश्रितःयज्ञरक्षार्थं स्वेन आत्मना आत्मीयेन दक्षेण वा आश्रितोपि हृषीकेशः
पराङ्मुखो भविष्यति ॥ हरिहरयोरभेदेन हरद्वेषे हरिद्वेषस्य हरेज्यायामविद्यमान-
दोषारोपेण हरीज्यानिन्दनस्य च सिद्धेरिति भावः ॥ अयमपि शापएव ॥ स्वाभिन्न-
शिवद्वेषिषु भवत्सु प्रवृत्तं मच्छापं समर्थोपि सोऽन्यथा न करिष्यतीति निगर्वः ॥
हृषीकेशे पराङ्मुखे भवतामन्तःकरणं बाह्येन्द्रियाणि च सत्कर्मसु न प्रवर्तिष्यन्ते ॥

तद्वैमुख्ये सकलदुष्फलसंभवइति नातःपरं शमव्यमतो विररामेति सूतआह ॥ एवमुक्तेति ॥ भविष्यतित्वृषीकेशइति ॥ शापानुरोधादेव तस्मिन् यज्ञे विष्णोर्गरुडरूपेण पराङ्मुखीभावः स्वयमपि यज्ञस्यानिर्वहणं चाग्रेऽस्मिन्नेवाध्याये वर्ण्यते ॥ एवंचेह त्रयीबाह्यत्वं कलिजदोषपरिपीडितत्वं तपोबलत्यागो नरकमाप्तिर्यज्ञरक्षार्थं प्रार्थितस्यापि विष्णोः पराङ्मुखत्वं चेति पञ्चैव दक्षयज्ञे शिवद्वेषादिकर्तृषु शापस्य विषयाः ॥ ईश्वरद्वेषादेस्तद्धेतुतयैवानुवादइति सिद्धम् ॥ तदेतत्सर्वमनुसन्धायोक्तं मूले ॥ **तथाहि कूर्मपुराणइत्यादिना प्रलपितमपास्तमित्यन्तेन** ॥ अत्र **यःशिवद्वेषइति** ॥ वेदाप्रतिपाद्यत्वादिकथनरूपः सः ॥ प्रकरणस्वारस्यात् ॥ तेन " कलिमलहर्तरिश्रौतधर्मवक्तरिचतस्मिन्ननभिरञ्जनम् " इति कल्पनमपास्तम् ॥ यच्छब्दोलिङ्गविपरिणामेन शिवनिन्दाशिवमार्गनिन्दयोरप्यन्वेति ॥ **तत्सर्वमनूद्येति** ॥ यस्माद्बहिष्कृतोवेदादित्यनेन शिवद्वेषं विनिन्दितोमहादेवइत्यनेन तन्निन्दां निन्दन्तीहैश्वरंमार्गमित्यनेनतद्यजनलक्षणमार्गनिन्दांचानूद्येत्यर्थः ॥ **कुशास्त्रेत्यादि** ॥ आदिपदं मिथ्याज्ञानप्रलापित्वसंग्राहकम् ॥ यच्छब्दनियन्त्रितप्रकृतशिवद्वेषादिपरामर्शिना तत्सर्वमितितच्छब्देन शिवोमोहनायावतीर्णइतिकथनशाङ्करमतखण्डनादेर्नेह संबंधगन्धोपीति द्योतितम् ॥ तदेवाहुः ॥ **नतुतत्रशङ्करोक्तेति** ॥ शङ्कराचार्यव्याख्यातश्रुत्यर्थस्येत्यर्थः ॥ इदमुपक्रमबलात्समर्थितम् ॥ उपसंहारबलाद्भूयः समर्थ्यते ॥ तथाहि ॥ जगाम्मनसारुद्रमिति शापदानजन्यपापलोपनार्थं शापनिर्वहणार्थं च शिवं प्रत्येव मनसा गमनं ज्ञायते ॥ एतदग्रे चानुपदमेव ॥ एतस्मिन्नन्तरेदेवीमहादेवंमहेश्वरम् ॥ पतिपशुपतिंदेवंज्ञात्वैतत्माहसर्वदृक् ॥ ३४ ॥ एतद्दधीचशापादि दक्षयज्ञवृत्तं ज्ञात्वा तद्वचननिर्वाहार्थं प्राहेत्यर्थः ॥ यतः सर्वदृक् ॥ देव्युवाच ॥ दक्षोयज्ञेनयजतेपितामेपूर्वजन्मनि विनिन्द्यभवतोभावमात्मानंचापिशङ्कर ॥ ॥ ३५ ॥ भवतो भावं वेदेषु सत्तां संहरणस्वभावं नग्नतयाऽवस्थानकपालधारणादि चेष्टां च विनिन्द्य तथा भवत आत्मानं विश्वात्मत्वाष्टमूर्तित्वादिगुणविशिष्टं विग्रहं च विनिन्द्येत्यर्थः ॥ देवामहर्षयश्चासंस्तत्रसाहाय्यकारिणः ॥ विनाशयाशुतंयज्ञंवरमेतंवृणोम्यहम् ॥ ३६ ॥ तत्र पूर्वोक्तनिन्दापूर्वकयज्ञे ॥ एतेन महर्षिकृता शापहेतुभूता निन्दापि साक्षाच्छिवस्यैवेति निश्चीयते ॥ दण्डोदैवकृतइतिदाधीचवचननिर्वाहार्थं विनाशयेति प्रार्थनम् ॥ एवंविज्ञापितोदेव्यादेवदेवःपरःप्रभुः ॥ ससर्जसहसारुद्रंदक्षयज्ञजिघांसया ३७ ॥ एतेनाप्यसन्दिग्धं साक्षाच्छिवस्यैव प्रकरणम् ॥ ततः श्लोकद्वयेन सृष्टस्य स्वरूपमायुधानि च निरूप्योच्यते ॥ वीरभद्रइतिख्यातंदेवदेवसमन्वितम् ॥ सजातमात्रोदेवेशमुपतस्थेकृताञ्जलिः ॥ ४० ॥ तमाहदक्षस्यमखंविनाशयशिवोऽस्तुते ॥ विनिन्द्यमांसयजतेगणेश्वर ॥ ४१ ॥ द्वितीयान्तानां ससर्जेति पूर्वेणान्वयः ॥ देवेशं शिवम् ॥ शिवोस्त्विति पुंस्त्वमार्षम् ॥ विनाशने हेतुर्विनिन्द्येति ॥ सः मां विनिन्द्ययजतइत्युक्त्यापि पूर्वोक्तनिन्दादीनां श्रीमहादेवविषयकत्वमे-

व दृढीभवति ॥ अग्रे ॥ ततोबन्धप्रमुक्तेनार्सिहेनैकेनलीलया ॥ वीरभद्रेणदक्षस्यवि-नाशमगमत्क्रतुः ४२ ॥ मन्युनाचोमयासृष्टाभद्रकालीमहेश्वरी ॥ तयाचसार्धंवृषभं-समारुह्ययौगणः ॥ ४३ ॥ अत्र भद्रकालीसाहित्यकथनेन देवीशापविनिर्दग्धाइति त्रिशाध्यायस्थव्यासवचने देवीशादेवीशेन वा भद्रकालीपतिना वीरभद्रेण अपवि-निर्दग्धाइत्यर्थः साधुः॥ देवीशेन शिवेनैव वीरभद्रद्वारेति वा ॥ अग्रे श्लोकचतुष्टयेन-रोमजाख्यैरन्यैरुद्रगणैः सपत्नीकैः परिवारितस्य तस्य यज्ञदेशं प्रति ससमारंभं गमनं वर्णयित्वोच्यते ॥ उवाचसप्रियोरुद्रैर्वीरभद्रःस्मयन्निव ॥ वयंह्यनुचराःसर्वेशर्वस्यामि-ततेजसः ॥ ४८ ॥ भागार्थलिप्सयाप्राप्ताभागान्यच्छध्वमीप्सितान् ॥ अथचेत्कस्य-चिदियंमायामुनिवरोत्तमाः ॥ ४९ ॥ भागोभवद्भ्योदेयस्तुनास्मभ्यमितिकथ्यताम् ॥ तंब्रूताज्ञापयतियोविनङ्क्ष्यामोवयंततः ॥ ५० ॥ सप्रियः भद्रकालीसहितः ॥ रुद्रैः सहेति शेषः ॥ स्वस्य सवर्गस्य शर्वानुचरत्वं प्रकाश्य यज्ञभागानां प्रार्थनेन पूर्वमुक्ता ऐश्वरमार्गनिन्दा रुद्रभागप्रतिबन्धरूपैव नतु शङ्कराचार्यमतखण्डनरूपेत्यसन्दिग्धमव-गम्यते ॥ अथचेदित्यत्र इयं सगणरुद्रभागावरोधनरूपा यदि कस्यचिन्मायाकपटं दंभोदर्पोवा स्यात्तदा भवद्भ्योरुद्रानचरेभ्यस्तु भागोन देयइत्यस्मभ्यं कथ्यताम् ॥ तथाचेद्योऽस्मद्भागप्रतिषेधमाज्ञापयति तं निर्दिशत ॥ ततोवयं तं विनंक्ष्यामोविना-शयिष्यामः ॥ अन्तर्भावितण्यर्थः प्रयोगः ॥ चतुर्थचरणे वेत्स्यामोहिवयंततमिति पा-ठान्तरम् ॥ तं शिवयजनस्य प्रतिषेद्धारं वेत्स्यामः कीदृक् समर्थः सइति परीक्षिष्या-महे ॥ ततः ॥ एवमुक्तंगणेशेनप्रजापतिपुरःसराः ॥ देवाऊचुः ॥ प्रमाणंवोनजानीमो-भागेमन्त्राइतिप्रभुम् ॥ ५१ ॥ प्रजापतिर्दक्षः ॥ मन्त्राः वोयुष्माकं भागे प्रमाणं सन्ती-ति न जानीमः ॥ यज्ञेषु रुद्रभागोमन्त्रप्रमितोनास्तीति भावः ॥ इति प्रभुं वीरभद्रमूचु-रित्यर्थः ॥ ततः ॥ मन्त्राऊचुःसुरा्यूयंतमोपहतचेतसः येनाध्वरस्यराजानंपूजयेयु-र्महेश्वरम् ॥ ५२ ॥ ईश्वरःसर्वभूतानांसर्वदेवतनुर्हरः ॥ पूज्यतेसर्वयज्ञेषुसर्वाभ्युदय-सिद्धिदः ॥ ५३ ॥ एवमुक्तामहेशानंमाययानष्टचेतसः ॥ नमेनिरेययुर्मन्त्रादेवान्मु-क्तास्वमालयम् ॥ ५४ ॥ येनाऽध्वरस्येति ॥ ये यूयं अध्वरस्य राजानमपि महेश्वरं न पूजयेयुःपूजयेत ॥ पूजयेयुरिति पुरुषव्यत्ययआर्षः॥अन्यत्स्पष्टम् ॥ एवं साक्षान्म-न्त्रैरुक्ताअपिदेवाभगवन्मायया नष्टचेतस्त्वान्महेशानं तथात्वेन न मेनिरे ॥ ततोम-न्त्रादेवान्मुक्ता स्वस्थानं ययुः॥ एतेनापि साक्षाच्छिवे विद्यमाना अध्वरराजत्व-सर्व भूतेश्वरत्वसर्वदेवाऽभिन्नत्वसर्वयज्ञपूज्यत्वादयोधर्मामन्त्रप्रतिपादिताअपि देवैर्न स्वीकृताइति वर्णनेन साक्षाच्छिवस्यैवोक्तविधैव निन्दा प्रकृतकलहबीजमिति फलति॥ न त्वेतच्छङ्कराचार्यपरतयोपपद्यते नापि निर्विशेषवादविवर्तवादादिखण्डनमिह तद्बीजं प्रतीयते ॥ अग्रे च ॥ ततःसरुद्रोभगवान्सभार्यःसगणेश्वरः ॥ स्पृशन्कराभ्यां-विमार्षिदधीचंमाहदेवहा ॥ ५५ ॥ मन्त्राःप्रमाणंनकृतायुष्माभिर्बलदर्पितैः ॥ यस्मा-त्प्रसह्यतस्माद्वोनाशयाम्यद्यगर्वितान् ॥ ५६ ॥ इत्युक्त्वायज्ञशालांतांददाहगणपुङ्गवः ॥

गणेश्वराश्चसंक्रुद्धायूपानुत्पाट्यचिक्षिपुः ॥५७॥ वीरभद्रोपिदीप्तात्माशक्रस्यैवोद्यतंकरम् ॥ व्यष्टंभयद्दीनात्मातथान्येषांदिवौकसाम् ॥ ५८॥ इत्यादिनामुनीनपिमुनीश्वराः (६१) इत्यन्तेनयज्ञभङ्गोवर्णितः ॥ अत्र वज्रस्तम्भनस्य वर्णनेन देवीशापविनिर्दग्धाइतित्रिंशाध्यायवाक्यस्य अपवि निर्वज्रं यथास्यात्तथेत्यर्थान्तरमपि निर्बाधमेव॥ ततः ॥ भविष्यतित्वहृषीकेशइतिशापस्य फलं प्रदर्श्यते ॥ तथाविष्णुंसगरुडंसमायांतंमहाबलः ॥ विव्याधनिशितैर्बाणैःस्तम्भयित्वासुदर्शनम् ॥ ६२॥ समालोक्यमहाबाहुरागत्यगरुडोगणम् ॥ जघानपक्षैःसहसाननादांबुनिधिर्यथा ॥ ६३ ॥ ततः सहस्रशोरुद्रःससर्जगरुडान्स्वयम् ॥ वैनतेयादभ्यधिकान्गरुडंतंप्रदुद्रुवुः ॥ ६४॥ तान्दृष्ट्वागरुडोधीमानपायतमहाजवः ॥ विसृज्यमाधवंवेगात्तदद्भुतमिवाभवत् ॥ ६५॥ अन्तर्हितेवैनतेयेभगवान्पद्मसंभवः ॥ आगत्यवारयामासवीरभद्रंचकेशवम् ॥ ६६॥ अत्र सुदर्शनस्तंभनं विष्णुनापि यज्ञरक्षाया अनिर्वाहश्च निरूपितः॥तदेतत्सर्वं विष्णोः सामर्थ्याभावमूलकमिति नहि केनापि निर्मत्सरेण शक्यं वक्तुम्॥ किंतु भेदबुद्धेः फलं दर्शयितुं शापं सार्थकयितुं च हरेरेतत्पाराङ्मुख्यमेव॥ अतएव गरुडरूपेणापि पराङ्मुखतया गमनम् ॥ अन्यथा वैनतेयश्चपक्षिणामितिगीतावाक्याद्भगवद्रूपस्य तस्य तथा पाराङ्मुख्यं न संगच्छेत ॥ अतएव तदद्भुतमिवाभवदिति तादृशवृत्तान्तस्याद्भुतत्वमुच्यते॥ वस्तुतस्तु शापं सफलयितुं भगवतैव तथा कृतमतोनाद्भुतमिति ज्ञापनायेवशब्दः॥ धीमानिति गमनस्य बुद्धिपूर्वकत्वज्ञापनार्थम् ॥ देवैर्मन्त्राणां तिरस्करणाच्छन्दोमयगरुडरूपेणैव पराङ्मुखतया गमनम्॥ स्वयं त्वनिर्वह्यरूपं पराङ्मुखत्वमवलम्बितम्॥ स्वातन्त्र्यबोधनायैव अन्तर्हितेवैनतेयइतिस्वेच्छयाऽन्तर्धानं वर्ण्यते ॥ अथ भगवतएव स्वाभिन्नशिवमाहात्म्यं प्रचिकाशयिषतोमायया देवादीनां व्यामोहादिदम भूदतः शिवस्य तत्रागमनं विष्णुमायारूपायाउमायाविशेषतः स्तवनं ततः क्लेशोपशमनं च प्रतिपाद्यते प्रसादयामासेत्यादिना ॥ तस्याविष्णुमायारूपत्वं तु यादेवीसर्वभूतेषुविष्णुमायेतिशब्दितेतिसप्तशतीवाक्यात् विष्णोर्माया भगवतीयया संमोहितंजगत् ॥ आदिष्टाप्रभुणांशेनकार्यार्थेसंभविष्यतीति भागवतवाक्याच्च ॥ श्लोकास्तु प्रसादयामासचतंगौरवात्परमेष्ठिनः ॥ संस्तूयभगवानीशंशंभुस्तत्रागमत्स्वयम् ॥ ६७ ॥ वीक्ष्यदेवाधिदेवंतमुमांसर्वगणैर्वृताम् ॥ तुष्टावभगवान्ब्रह्मादक्षःसर्वेदिवौकसः ॥ ६८ ॥ विशेषात्पार्वतींदेवींशङ्करार्द्धशरीरिणीम् ॥ स्तोत्रैर्नानाविधैर्दक्षःप्रणम्यचकृताञ्जलिः ॥ ॥ ६९ ॥ ततोभगवतीदेवीप्रहसन्तीमहेश्वरम् ॥ प्रसन्नमनसारुद्रवचःप्राहघृणानिधिः ॥ ॥ ७० ॥ त्वमेवजगतःस्रष्टाशासिताचैवरक्षिता ॥ अनुग्राह्योभगवतादक्षश्चापिदिवौकसः ॥ ७१ ॥ ततःप्रहस्यभगवान्कपर्दीनीललोहितः ॥ उवाचप्रणतान्देवान्प्राचेतसमथोहरः ॥ ७१ ॥ गच्छध्वंदेवताःसर्वाःप्रसन्नोभवतामहम् ॥ संपूज्यःसर्वयज्ञेषुननिन्द्योहंविशेषतः ॥ ७२ ॥ त्वंचापिशृणुमेदक्षवचनंसर्वरक्षणम् ॥ त्यक्त्वालोकैषणामेतांमद्भक्तोभवयत्नतः ॥ ७३ ॥ भविष्यसिगणेशानःकल्पान्तेनुग्रहान्मम ॥ तावत्तिष्ठम-

प्रदेशात्त्वाधिकारेषुनिर्वृतः ॥ ७४ ॥ एवमुक्त्वातु भगवान्सपत्नीकःसहानुगः ॥अदर्श-नमनुप्राप्तोदक्षस्यामिततेजसः ॥ ७५ ॥ अत्रापि संपूज्यःसर्वयज्ञेषुनिन्द्योहमित्यु-क्त्या यज्ञभागराहित्यकथनलक्षणनिन्दायास्त्यागः सर्वयज्ञेष्वाहुतिभिः सत्करणं चेत्येव प्रसादबीजमवगम्यते ॥ न तु विवर्तवादादिरूपमतविशेषस्वीकरणम् ॥ यच्च यज्ञस्यारक्षणं तच्छापानुरोधेन हरेः पराङ्मुख्यादेव नतु सामर्थ्याभावादिति ज्ञाप-यितुम् हरिहरयोरभेदो भगवतः प्रचिकाशयिषितं ।शिवमाहात्म्यं च ब्रह्ममुखेन प्रका-श्यते ॥ अन्तर्हितेमहादेवेशङ्करेपद्मसंभवः॥व्याजहारस्वयंदक्षमशेषजगतोहितम् ॥७६॥ ब्रह्मोवाच ॥ किंत्वयंभवतोमोहःप्रसन्नेवृषभध्वजे ॥ यदाचसस्वयंदेवःपालयेत्त्वामतं-द्रितः ॥ ७७ ॥ सर्वेषामेवभूतानांसबीजंपरमागतिः ॥ स्तूयतेवैदिकैर्मन्त्रैर्देवदेवोमहे-श्वरः ॥ ७८ ॥ तमर्चयन्तियेरुद्रंस्वात्मनाचसनातनम् ॥ चेतसाभावयुक्तेनतेयांति-परमंपदम् ॥ ७९ ॥ तस्मादनादिमध्यान्तंविज्ञायपरमेश्वरम् ॥ मनसाकर्मणावाचा-समाराधययत्नतः ॥ ८० ॥ यत्नात्परिहरेशस्यनिन्दांस्वात्मविनाशिनीम् ॥ भवन्ति-सर्वदोषायनिन्दकस्यक्रियाहिताः ॥ ८१ ॥ यस्तुचैषमहायोगीरक्षकोविष्णुरव्ययः ॥ सदेवोभगवान्रुद्रोमहादेवोनसंशयः ॥८२॥ मन्यन्तेयेजगद्योनिंविभिन्नंविष्णुमीश्वरात्॥ मोहादवेदनिष्ठत्वात्तेयान्तिनरकंनराः ॥ ८३ ॥ वेदानुवर्तिनोरुद्रंदेवंनारायणंतथा ॥ एकीभावेनपश्यन्तिमुक्तिभाजोभवन्तिते ॥ ८४ ॥ योविष्णुःसस्वयंरुद्रोयोरुद्रःसजा-नार्दनः ॥ इतिमत्वाभजेद्देवंसयातिपरमांगतिम् ॥ ८५ ॥ सृजत्येवजगत्सर्वंविष्णुस्तस्य-महेश्वरः ॥ इत्थंजगत्सर्वमिदंजगन्नारायणोद्भवम् ॥ ८६ ॥ तस्मात्त्यक्त्वाहरौनिन्दां-हरेचापिसमाहितः ॥ समाश्रयमहादेवंशरण्यंब्रह्मवादिनाम् ॥ ८७ ॥ उपश्रुत्याथवच-नंविरंचस्यप्रजापतिः ॥ जगामशरणंदेवंगोपतिंकृत्तिवाससमिति ॥ ८८ ॥ एतावता-साक्षाच्छिवस्यैवेदं प्रकरणं नतु तदवतारपरिव्राड्विशेषवृत्तस्यात्र संबन्धगन्धो-पीत्युपसंहारबलादप्यसन्दिग्धं सिद्धम् ॥ अग्रे चानुपदं येन्येशापाग्निनिर्दग्धाददधी-चस्यमहर्षयः ॥ द्विषन्तोमोहितादेवंसंबभूवुःकलिष्वथ ॥ ८९ ॥ त्यक्त्वातपोबलंकृत्स्नं-विप्राणांकुलसंभवाः ॥ पूर्वसंस्कारमाहात्म्याद्ब्रह्मणोवचनादिह ॥ ९० ॥ मुक्तशापा-स्ततःसर्वेकल्पान्तेरौरवादिषु ॥ निपात्यमानाःकालेनसंप्राप्यादित्यवर्चसम् ॥ ९१ ॥ ब्रह्माणंजगतामीशमनुज्ञाताःस्वयंभुवा॥समाराध्यतपोयोगादीशानंत्रिदशाधिपम् ॥९२॥ संबभूवुर्यथापूर्वंशङ्करस्यप्रसादतः इतिशप्तानां मुनीनामतिक्रान्तकलियुगेषु जन्मा-दिकं शापमुक्तिं च वर्णयित्वाऽध्यायउपसंहृतः ॥ एतद्विषये मूलेऽग्रे किंचिद्वक्ष्यते तत्रैव विशेषं दर्शयिष्यामः ॥

यदि शप्ताः कीदृशा इति कस्यचिज्जिज्ञासा स्यादित्थंभूताः शप्ता ज्ञेया इत्युत्तरं वा भवेत्तदा लक्षणपरत्वं तादृशप्रकरण-

स्य स्यात् ॥ तस्माल्लक्षणपरत्वं तादृशानां वर्णयन्प्रतारकएवे-
त्यवधेयम् ॥ स्वकपोलकल्पनयापि तेषां लक्षणत्वं न संभवति ॥
अतिव्याप्त्यादिदोषग्रस्तत्वादित्युच्यते ॥ लक्षणचतुष्टयं तु पूर्वं
निरस्तम् ॥

टीका

प्रकृतसन्दर्भस्य लक्षणपरत्वं वारयितुं स्पष्टं युक्त्यन्तरमाहुः ॥ **यद्विशसाइत्यादि** ॥ **तादृशानामिति** ॥ उक्तरीतिकार्थान्तरपरवचनानाम् ॥ **प्रतारकएवेति** ॥ मोहय-न्तिजनान्सर्वानिति कौर्मवाक्यार्थानुगमात्सएव तथेत्यर्थः ॥ एवं चतुर्थलक्षणदूषणे प्रसङ्गात्पञ्चमषष्ठसप्तमलक्षणान्यपि निरस्तानि ॥ पुनः प्रत्येकं तानि निराकरिष्यन्तः सहस्राक्षे (एवंमिथ्याधीतसमाचारत्वमपिशङ्करानभिमताधीतसमाचारत्वं) इत्युक्तं पञ्चमलक्षणं दूषयन्ति ॥ **पञ्चमलक्षणमित्यादिनात्वव्याप्तिव्याप्तिरित्यन्तेन** ॥

पञ्चमलक्षणं मिथ्याधीतसामाचारत्वं ॥ तदपि न संभवति ॥
तत्र मिथ्यैव अधीतः समाचारोयैरितिविग्रहः ॥ तद्भावस्तत्त्वम् ॥
मिथ्याशब्दोभवन्मतेऽनिर्वचनीयवचनः ॥ अतएव भवदीयै
र्मिथ्यात्वंसदसत्वानधिकरणत्वमनिर्वचनीयत्वम् ॥ तद्धि किमस-
त्वविशिष्टसत्वाभावः ॥ उतसत्वात्यन्ताभावासत्वात्यन्ताभाव-
रूपं धर्मद्वयं ॥ सत्वात्यन्ताभाववत्वे सत्यसत्वात्यन्ताभावरूपं
विशिष्टं वेति विकल्पत्रयमुद्भाव्य तत्र सिद्धसाधनसाध्यवैक-
ल्यादिदोषैर्दूषयित्वा नैवमित्यादिना सत्वात्यन्ताभावासत्वात्य-
न्ताभावरूपधर्मद्वयएव निर्भरः कृतः ॥ एवंचतादृशार्थं त्यक्त्वा
शङ्करानभिमतेत्यर्थं कुर्वतोऽपसिद्धान्तः ॥ समाचारोवेदव्रतोपदे-
शपरोग्रन्थः ॥ अतएव श्रीशङ्कराचार्यैः स्वाध्यायस्य तथात्वे
नहिसमाचारेधिकाराच्चसववच्चतन्नियमइतिसूत्रे"स्वाध्यायस्यै-
षधर्मोनविद्यायाः॥ कथमिदमवगम्यते यतस्तथात्वेनस्वाध्या
यधर्मत्वेनसमाचारेवेदव्रतोपदेशपरेग्रन्थआथर्वणिकाइदमपिवेद

व्रतत्वेनसमाख्यातमितिसमामनन्ति” इत्युक्तं ॥ तत्रच शङ्करान-भिमतत्वं दुरुपपादम्॥ सर्वस्यैव वेदव्रतोपदेशपरस्य ग्रन्थस्य श-ङ्कराभिमतत्वात् ॥ तदर्थावर्णनमात्रेणैव तदनभिमतत्वं चेच्छङ्क-राऽवर्णितार्थकवेदव्रतग्रन्थाद्यध्ययनकर्तृषु दधीचादिष्वतिव्या-प्तिः ॥ दधीचोक्तिस्तु न शङ्कराभिमतसमाचाराभिप्रायेण किंतु यतोभवद्भिरीश्वरस्य निन्दा कृता अतोभवतां समाचाराध्यय-नादिकं मिथ्या वृथैवेत्युपालम्भः ॥ यथा कश्चिद्धर्माचरणशी-लः कुत्सितं कर्म कुर्याच्चेत्तदा तमन्यउपालंभेत तव धर्माचरणं वृथैवेति तथेयमुक्तिः ॥ यदिच सम्यगाचारः समाचारोयथा-र्थआचारइतियावत् ॥ धनार्जनादिरूपोनृपसेवादिरूपोगृह-स्थाश्रमिणां विहितइत्युच्यते तदातु तत्तत्प्रदिपादकस्मृत्यध्यय-नमपि तेषामेव शङ्कराभिमतं नतु संन्यासिनाम् ॥ तेषां सर्वसं-न्यासस्यैवाभिमतत्वात् ॥ तथाच धनार्जनराजसेवादिपरे त्वव्य-तिव्याप्तिः ॥

## टीका

**अनिर्वचनीयवचनइति** ॥ “मिथ्याशब्दोऽनिर्वचनीयतावचनः” इतिपञ्च-पादिकादिषु कथनात्तथेत्यर्थः ॥ **भवदीयैरिति** ॥ अद्वैतसिद्धिकारादिभिः ॥ अ-स्य कुतइत्युत्तरेणान्वयः ॥ **तद्धि** ॥ सदसत्वानधिकरणत्वं हि ॥ **असत्वविशि-ष्टेति** ॥ वैशिष्ट्यं सत्वस्याभावस्य वा विशेषणम् ॥ अयं प्रथमः कल्पः ॥ धर्मद्वय-मिति द्वितीयः ॥ विशिष्टमिति तृतीयः ॥ **तच्च** ॥ विकल्पत्रयम् ॥ **दूषयित्वेति** ॥ अद्वैतसिद्धौ प्रथमपरिच्छेदारंभएव विप्रत्तिपत्तिप्रतिपादनोत्तरं “विमतंमिथ्यादृश्यत्वात् जडत्वात्परिच्छिन्नत्वात्शुक्तिरूप्यवत्” इति प्राचां प्रयोगानुपन्यस्य ननु किमिदं मिथ्यात्वं साध्यतइत्यादिना विकल्पत्रयमुद्भाव्य “नाद्यः ॥ सत्वमात्राधारे जगत्य-सत्वविशिष्टसत्त्वानभ्युपगमाद्विशिष्टाभावसाधनेसिद्धसाधनात् ॥ नद्वितीयः ॥ सत्वा-सत्वयोरेकाभावेऽपरसत्वावश्यकत्वेनव्याघातात् ॥ निर्धर्मकब्रह्मवदस्यसत्त्वराहित्येपि-सद्रूपेणामिथ्यात्वोपपत्त्यार्थान्तराच्च ॥ शुक्तिरूप्येबाध्यत्वरूपसत्वव्यतिरेकस्यैवबा-

ध्यत्वरूपासत्वस्यव्यतिरेकासिद्ध्यासाध्यवैकल्याच्च ॥ अतएव न तृतीयः॥ पूर्ववद्व्या-घातादर्थान्तरात्साध्यवैकल्याच्च ” इतिदूषयित्वेत्यर्थः ॥ **मैवमिति** ॥ “ मैवम् ॥ सत्वात्यन्ताभावासत्वात्यन्ताभावरूपधर्मद्वयविवक्षायांदोषाभावात् ” इत्यादिना व्या-हत्यादिकं परिहृत्य मिथ्याशब्दस्य तादृशार्थकत्वे निर्भरः कृतइत्यर्थः ॥ तथाच मि-थ्याशब्दस्य शङ्करानभिमतार्थकत्वमेव शङ्कराऽनभिमतमिति भावः॥ अत्रेदं बोध्यम् ॥ मिथ्याधीतसमाचाराइत्यत्र किं मिथ्या अधीतं वेदादिकं समाचारोऽनुष्ठानं च येषा-मित्यर्थ आहोस्विद्भावप्रत्ययान्तसाहचर्येण भावार्थकक्तस्वीकरणादधीतमध्ययनमिति उताहो पूर्वोक्तः ॥ नाद्यौ ॥ वेदादेस्तदध्ययनस्य सन्ध्यावन्दनाद्यनुष्ठानस्य च शङ्करा-ऽनभिमतत्वाऽभावात्॥ न च वैष्णवग्रन्थतदाचरणे एवाऽत्राऽधीतसमाचारौ कल्प्यौ॥ मानाभावात्कपोलकल्पनामात्रस्याऽनुपादेयत्वात् ॥ वैष्णवानां सिद्धान्ताचरणयोर्वेदा-दिमूलकताया उपपादयिष्यमाणत्वाच्च॥ तदध्ययनं तु त्वयापि कृतमतस्त्वय्यतिव्या-प्तिः ॥ समाचाराभावाददोषइति चेत् वैष्णवानां भगवत्सेवाद्याचरणं वेदादिप्रमितं मनुषे न वा॥ आद्ये शङ्कराभिमतत्वं स्वीकुरु॥ द्वितीये त्वद्बुद्ध्या पापरूपेसमाचारशब्दोऽश-क्यः प्रयोक्तुम्॥ पातञ्जलाद्यनुयायिषु चातिव्याप्तिः॥ “एतेनयोगःप्रत्युक्तः” इत्यादिस्थ-लेयोगस्य शङ्कराऽऽचार्यैः प्रत्युक्तत्वात् ॥ नहि सकले जगति शमता सुवचा॥ एतेनैव पातञ्जलादिसूत्रव्याख्यातृषु वैष्णवाचारप्रतिपादकेषु भगवन्मन्त्रग्रहणाऽऽद्याचारवत्त-या पुराणादौ प्रसिद्धेषु व्यासनारदादिष्वतिव्याप्तिरवधेया॥वस्तुतस्तु समाचारशब्दस्य तथा व्याख्यानमेव शङ्करानभिमतमतस्तृतीयएव विग्रहआदर्तव्यइत्याशयेनाहुः ॥ **समाचारइत्यादि** ॥ **शङ्कराचार्यैरिति** ॥ उक्तमित्यग्रिमेणाऽन्वयः ॥ स्वाध्याय-स्यैषइत्यादिः समामनन्तीत्यन्तः साधनाध्याये गुणोपसंहारपादे ( सूत्र ३ ) स्वा-ध्यायस्येतिसूत्रस्य शाङ्करभाष्यस्थोग्रन्थः ॥ वादिनि शङ्करानभिमताधीतसमाचारत्वं स्पष्टयितुं शङ्कराचार्याणामेव निर्देशः ॥ वस्तुतस्तु रामानुजानां श्रीभाष्ये भास्करा-चार्याणां भेदाभेदभाष्ये श्रीकण्ठशैवभाष्ये भिक्षोरविभागाद्वैतभाष्ये तत्तदनुयायिवृ-त्तिषु च सएव समाचारशब्दार्थः॥ यद्यप्यास्माकीनभाष्ये मध्वभाष्यतत्त्वप्रकाशिका-यां च सम्यगाचारइत्यर्थोपि दृश्यते तथापि तत्तवाऽनभिमतमेवेति किं तेन ते ॥ तथा च कौर्मवाक्ये सम्यगाचारः समाचारइति योगेन समाचारशब्दोऽनुष्ठानपरो-भवता न शक्योव्याख्यातुम् ॥ भवन्नये ग्रन्थविशेषे तस्य रूढेर्योगरूढेर्वा सत्वात् ॥ योगाद्रूढिर्बलीयसीति सिद्धान्तात् ॥ अन्यथा सूत्रेऽपि सोऽर्थोमाभूत् ॥ **तत्रचेति** ॥ समाचारग्रन्थे ॥ **तदर्थेत्यादि** ॥ समाचारग्रन्थार्थस्य ॥ **तदनभीति** ॥ शङ्करा-ऽऽचार्याऽनभिमतत्वम् ॥ वेदव्रतग्रन्थादीत्यादिपदेन द्वादशोपनिषदतिरिक्तसकलवे-दभागस्य संग्रहः ॥ शङ्कराचार्यैरीशावास्यादिदशोपनिषदां श्वेताश्वतरनृसिंहतापनी-ययोश्चेति द्वादशानामेव व्याख्यातत्वात् ॥ तथाच तत्तच्छाखाध्यायिषु सर्ववैदिके-ष्वतिप्रसङ्गः ॥ वेदप्रामाण्यवादिनां तेषां वैदिकभागोनानभिमतइति चे दाथर्वणानां

समाचारेपि तुल्यम् ॥ एवंचाऽसंभवोलक्षणदोषः ॥ अथ स्तोकं पाकः स्तोकं स्पृष्ट इत्यादिवदधीतेतिकृदन्तस्यैकदेशेऽपि धात्वर्थे मिथ्याशब्दान्वयं स्वीकुर्यास्तदाप्यसंभवस्तदवस्थः ॥ तदध्ययने तदनभिमतत्वाभावात् ॥ अध्ययने तदनभिमतत्वं नाम तदनभिमतेतिकर्तव्यताकत्वमिति चेन्न तैस्तदध्ययनेतिकर्तव्यता निरणायीति दर्शय ॥ अथ कौर्मवाक्यस्य वास्तवार्थमाहुः ॥ **दधीचोक्तिस्त्विति** ॥ अतोवैदिकमन्त्रादिनिन्दाऽनुमितसमाचाराध्ययनवैयर्थ्यानुवादाभिप्रायमेव मिथ्याऽधीतसमाचाराइति संबोधनमिति भावः ॥ समाचारे शिरोव्रतस्याऽप्याम्नातत्वात्तस्य च रुद्रदेवताकतायाः कैश्चिदभ्युपगमादैश्वरमार्गं निन्दतां भवतां समाचाराऽध्ययनं वृथैवेति संबोधनाभिसन्धिः॥त्वया त्वाऽऽथर्वणभागप्रसिद्धस्य शिरोव्रतस्य भस्मोद्धूलनरूपत्वमेवाऽभ्युपगतं स्वकृतशैवसुधाकरे द्वितीयकिरणे ॥अतोऽत्र संतोष्टव्यम् ॥वस्तुतस्तत्रत्यत्वदुक्तेरयुक्तता तु सत्सिद्धान्तमार्तण्डादौ मया स्पष्टितेति कृतं प्रासङ्गिकेन ॥ प्रस्तावनोक्तं छत्रचामरादि धनार्जनराजसेवादिकं स्मारयन्तोवादिन्येव लक्षणाऽतिप्रसक्तिं वक्तुमाहुः ॥ **यदिचेत्यादि**॥ **स्मृत्यऽध्ययनमपीति**॥ नच तत्प्रतिपादकस्मृत्यभावः शङ्क्यः ॥ ( अ० १ गृहस्थप्रकरणे श्लोक २) राजाऽन्तेवासियाज्येभ्यः सीदन्निच्छेद्धनंक्षुधेति याज्ञवल्क्यादिभिर्गृहस्थधर्मेषु तस्य स्मरणात् ॥ **तेषामेवेति**॥ गृहस्थानामेव ॥ शेषे षष्ठी॥ अथ सहस्राक्षे (मिथ्याज्ञानप्रलापित्वमपि शिवाऽनभिमतज्ञानप्रलापित्वमेव ) इत्युक्तं षष्ठं लक्षणं दूषयन्ति ॥ **मिथ्याज्ञानप्रलापित्वंशमानांषष्ठंलक्षणंमित्यादिना दुर्वारैवेत्यन्तेन** ॥ **लक्षणाभासएवेति** ॥

मिथ्याज्ञानप्रलापित्वं शमानां षष्ठं लक्षणमुक्तं तदपि लक्षणाभासएव ॥ दोषदुष्टत्वात् ॥ कथमितिचेच्छृणु ॥ मिथ्यापदस्य शङ्करानभिमतपरत्वं वर्णयतस्तव पूर्वोक्तयुक्त्याः निगृहीतत्वसंपादकत्वेनेत्यवेहि ॥ अन्येपि दोषायैर्दुष्टत्वं लक्षणस्य तेप्युच्यन्ते ॥ शङ्करानभिमतस्य प्रमाणादिषोडशपदार्थतत्त्वज्ञानस्य मोक्षहेतुत्वेन प्रतिपादके गौतमेतिव्याप्तिः ॥ नहि शमाश्च गौतमेनोर्व्यामिति वदतस्तव गौतमस्यापि विप्रशमत्वमभिमतम् ॥ गौतमेनेति तृतीयया तस्य कर्तृत्वावगमात् ॥ किंचस्वस्वामिशक्त्योः स्वरुपोपलब्धिहेतुः संयोगइति योगसूत्रस्य भाष्ये "पुरुषः स्वामीदृश्येनस्वेनदर्शनार्थंसंयुक्तःतस्मात्संयोगाद्दृश्यस्योपलब्धिर्याभोगः यातु द्रष्टुःस्वरूपोपलब्धिःसोपवर्ग" इत्यादिना शङ्करान

भिमततादृशज्ञानप्रतिपादकेषु व्यासेष्वतिव्याप्तिश्च ॥ एवं धर्म-विशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानांपदार्थानां-साधर्म्यवैधर्म्याभ्यांतत्त्वज्ञानान्निःश्रेयसमित्यादिना पदार्थतत्त्व-ज्ञानस्य मोक्षहेतुत्वं वदति कणभुज्यतिव्याप्तिः ॥ किंच तत्तदु-क्तज्ञानाध्येतरि तत्तज्ज्ञानप्रलापिनि त्वय्यतिव्याप्तिर्दुर्वारैव ॥

## टीका

घत्रजपाः पुंसीत्याभासशब्दस्य क्लीबविशेषणत्वेऽपि पुंस्त्वाऽनपायः ॥ अयं भावः॥ पूर्वत्र शङ्करशब्दस्याऽत्र शिवशब्दस्य च प्रयोगेण शब्दभेदात् " सोमेनयजेत॥दाक्षि-णानिजुहोति ॥ हिरण्यमात्रेयायददाति " इत्यादिवद्वस्तुभेदमभिप्रेत्य साक्षाच्छिवोऽत्र विवक्ष्यतउत शङ्कराऽऽचार्याएव ॥ आद्येऽस्माभिरुच्यमानं ज्ञानं न शिवाऽनभिमतम्॥ चतुर्षु वैष्णवसंप्रदायेष्वास्माकीनसंप्रदायस्य शिवप्रवर्तितत्वात् ॥ श्रीब्रह्मरुद्रसनकवै-ष्णवाःक्षितिपावना इति वक्ष्यमाणपाद्मादिवचनेभ्यः ॥ द्वितीयस्मिन्नुभयत्र मिथ्या-शब्दस्य त्वदुक्तार्थकत्वं मानाऽभावादनास्थेयं पूर्वापरतदध्यायसंदर्भविरोधाद्बाधितं च तथाप्यभ्युपेत्य दूषयन्नाह ॥ **पूर्वोक्तयुक्त्याइत्यादि** ॥ अपसिद्धान्तइतिपूर्वोक्त-युक्त्याः॥ **निगृहीतत्वेति** ॥ अपसिद्धान्तस्यापि निग्रहस्थानत्वादिति भावः॥ अत-एव गौतमपञ्चलक्षण्यां ( अ० ५ आह्निक २ सूत्र १) " प्रतिज्ञाहानिःप्रतिज्ञान्तरंप्र-तिज्ञाविरोधःप्रतिज्ञान्यासोहेत्वन्तरमर्थान्तरंनिरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकंपुनरुक्तमननुभाषणमज्ञानमप्रतिभाविक्षेपोमतानुज्ञापर्यनुयोज्योपेक्षणंनिर-नुयोज्यानुयोगोऽपसिद्धान्तोहेत्वाभासाश्चनिग्रहस्थानानि" इति द्वाविंशन्निग्रहस्थाने-ष्वपसिद्धान्तमपि तत्त्वेन गणयित्वा (सू०२४) " सिद्धान्तमभ्युपेत्यानियमात्कथाप्र-सङ्गोऽपसिद्धान्तः " इति सल्लक्षितः॥ **प्रमाणादीति**॥ गौतमसूत्रेषु हि (अ०१आ०१ सू० १ ) " प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ताऽवयवतर्कनिर्णयवादजल्पवित-ण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानांतत्त्वज्ञानान्निःश्रेयसाऽधिगमः " इति षोडश-पदार्थतत्त्वज्ञानान्मोक्षाऽधिगमं प्रतिज्ञाय कथं तेषां तत्त्वज्ञानान्निःश्रेयसमित्याकाङ्-क्षायां तेन मिथ्याज्ञानस्य नाशात्तन्नाशेन दुःखजन्मप्रवृत्तिदोषाणामवरोहक्रमेण ना-शाच्च त दित्याशयेन ( सूत्र २ ) " दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये-तदनन्तरापायादपवर्गः " इति सूत्रयित्वा तेषां तत्त्वज्ञानसंपादनाय (सूत्र३) " प्रत्य-क्षानुमानोपमानशब्दाःप्रमाणानि " इत्यादिभिरेकोनचत्वारिंशता सूत्रैः प्रथमसूत्रोद्दि-ष्टपदार्थेषु निर्णयान्तान्नव पदार्थान्प्रथमाऽध्यायस्य प्रथमाह्निके लक्षयित्वा द्वितीया-ह्निके वादादीन्सप्तपदार्थान्विंशत्यासूत्रैर्लक्षयित्वा (अ०२ आ०१सू०१) " समानाने

कथमांऽध्यवसायादन्यतरधर्माऽध्यवसायाद्वानसंशयः ” इत्यादिना ( अ० ५ आ०२ सू०२५) “ हेत्वाभासाश्चयथोक्ताः” इत्यन्तेनाऽध्यायचतुष्टयेन तएवपदार्थाः सप्रपञ्चं परीक्षिताः ॥ तत्र ( अ० १ आ०१ सू० १० ) “ इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनोलिङ्गमिति ” इत्यादौ शङ्कराचार्याऽनभिमतमात्मस्वरूपादिकं प्रतिपादयतीति युक्तस्तत्राऽतिप्रसङ्गः ॥ नच गौतमस्य देवीशप्तत्वं मानाभावात् ॥ सर्वर्षिशिरोरत्नेषु व्यासचरणेष्वतिव्याप्तिमाहुः ॥ **किंचेति** ॥ पातञ्जलसूत्रेषु साधनपादे ( सू० १६ ) “ हेयंदुःखमनागतम् ” इति दुःखस्य त्याज्यत्वमुक्त्वा ( सू० १७ ) “ द्रष्टृदृश्ययोः संयोगोहेयहेतुः ” इति दुःखहेतुमुक्त्वा किं तद्दृश्यमित्याकाङ्क्षायां सूत्रद्वयेन भूतेंद्रियरूपं दृश्यं सूत्रद्वयेन द्रष्टुः स्वरूपं भोक्तृत्वं चाभिधाय ( सू० २२ ) “ कृतार्थंप्रतिनष्टमप्यनष्टंतदन्यसाधारणत्वात् ” इत्येकस्यैव प्रधानस्य सर्वपुरुषसाधारणत्वं सर्वथा नाशाभावं च प्रतिपाद्य संयोगस्वरूपं निरूप्यते ॥ ( सू०२३ ) “ स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुःसंयोगः ” इति ॥ संक्षेपतएतदर्थं तु राजमार्तण्डाख्यतद्वृत्तौ भोजराजः ॥ “ स्वशक्तिर्दृश्यस्यस्वभावः ॥ स्वामिशक्तिर्द्रष्टुःस्वरूपं ॥ तयोर्द्वयोरपिसंवेद्यसंवेदकत्वेनव्यवस्थितयोर्यास्वरूपोपलब्धिस्तस्याःकारणंयःससंयोगः ॥ सचसहजभोग्यभोक्तृस्वभावस्वरूपान्नान्यः ॥ नहितयोर्नित्ययोर्व्यापकयोश्चस्वरूपादतिरिक्तःकश्चित्संयोगोस्ति ॥ यदेवभोग्यस्यभोग्यत्वंभोक्तुश्चभोक्तृत्वमनादिसिद्धंसएवसंयोगः ॥ ” इत्याह॥ तथा च पुरुषाणामनौपाधिकं नानात्वं द्रष्टृदृश्ययोर्वास्तवं भेदं नित्यत्वं च श्रीशङ्कराऽऽचार्याऽनभिमतं स्वीकुर्वति पतञ्जलावतिव्याप्तिः ॥ न केवलं तत्र किंतु परमाचार्येषु व्यासेष्वपि सेत्याहुः ॥ **भाष्यइति** ॥ पुरुषःस्वामीत्यादिरपवर्गइत्यन्तः पातञ्जलभाष्यग्रन्थः ॥ **इत्यादिनेति** ॥ अनूदितग्रन्थादग्रेऽनुपदं “ दर्शनकार्यावसानःसंयोगइतिदर्शनंवियोगस्यकारणमुक्तंदर्शनमदर्शनस्यप्रतिद्वंद्वीतिअदर्शनंसंयोगनिमित्तमुक्तंनात्रदर्शनंमोक्षकारणमदर्शनाभावादेवबन्धाभावःसमोक्षइति ” इत्यादिना ज्ञानस्य मोक्षं प्रत्यकारणत्वमौपचारिककारणत्वं च शङ्कराचार्यानभिमतमायमुक्तम् ॥ द्रष्टृदृश्ययोः सार्वदिकः स्वस्वामिभावश्च तदनभिमतएवोक्तः ॥ इतः पूर्वसूत्रे भाष्ये “ अतश्चदृग्दर्शनशक्त्योर्नित्यत्वादनादिःसंयोगोव्याख्यातइति ” इत्यादि तदनभिमतमेवोदितम् ॥ एतद्व्याख्याने च वाचस्पतिमिश्रः ॥ “ नचप्रधानवदेकएव पुरुषस्तन्नानात्वस्यजन्ममरणसुखदुःखोपभोगमुक्तिसंसारव्यवस्थयासिद्धेः ॥ एकत्वश्रुतीनांचप्रमाणान्तरविरोधात्कथंचिद्देशकालविभागाभावेनभक्त्याप्युपपत्तेः प्रकृत्येकत्वपुरुषनानात्वयोश्चश्रुत्यैवसाक्षात्प्रतिपादनात् ” इत्युक्त्वा अजामेकामिति श्रुतिमुदाहरति॥ शङ्कराचार्यैस्त्वियं श्रुतिः समन्वयस्य तुरीये (सू०८) चमसवदविशेषादित्यधिकरणेऽन्यथैव व्याख्याता ॥ तथा प्रकृतसूत्रे भाष्ये किंचेदमदर्शनंनामेत्यादिना तद्विषयकानष्टौ कल्पानुपन्यस्यता भगवता व्यासेन “ कारणान्तरेष्वपिकल्पितेष्वेवसमानश्चर्चः ” इत्यभ्यधायि॥ एतच्च “ नकेवलंप्रधानेकारणान्तरेष्वपिपरब्रह्म-

तन्मायापरमाण्वादिषुकल्पितेषुसमानश्चर्चोविचारः " इति विवृण्वता वाचस्पति-मिश्रेणास्माकं शङ्कराचार्याणां नैयायिकादीनां च सिद्धान्तादन्यदेव तत्रत्यमिति स्पष्टीकृतम् ॥ तस्माद्यासेषु तद्विवरणे सांख्यकौमुद्यादिषु च तदनभिमतं निरूपयति वाचस्पतिमिश्रे सर्वदर्शनसङ्ग्रहादिप्रणेतृविद्यारण्यादिषु चातिप्रसङ्गः सुस्थः॥ एतदेवातिव्याप्तिश्चेति चकारेण बोध्यते ॥ एवंधर्मेत्यादि॥ अत्रेदं ज्ञेयम् ॥ कणादो हि तर्काचार्यो वैशेषिकदशलक्षणीं प्रणिनाय॥ तत्र (अ० १ आ० १ सू० १) "अथातोधर्मंव्याख्यास्यामः" इति धर्मव्याख्यानं प्रतिज्ञाय (सू० २) "यतोऽभ्युदयनिःश्रेयससिद्धिःसधर्मः" इति तं लक्षयित्वा (सू० ३) "तद्वचनादाम्नायस्यप्रामाण्यम्" इति वेदप्रामाण्यमभिधाय (सू०४) "धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानांपदार्थानांसाधर्म्यवैधर्म्याभ्यांतत्त्वज्ञानान्निःश्रेयसम्" इति सुकृतविशेषजन्यात् द्रव्यादितत्त्वज्ञानादेव मोक्षं प्रतिपादयति॥ अत्र साधर्म्यंसमानोधर्मःवैधर्म्यंविरुद्धोधर्म इति मुक्तावलीकारादयः॥ एतदुपस्कारे शङ्करमिश्रः " सर्वपदार्थप्रधानोद्वंद्वश्चात्रसमासः॥ सर्वपदार्थतत्त्वज्ञानस्यनिःश्रेयसहेतुत्वात्॥ तदत्रशास्त्रनिःश्रेयसयोर्हेतुहेतुमद्भावः॥ शास्त्रतत्त्वज्ञानयोर्व्यापारव्यापारिभावः ॥ निःश्रेयसतत्त्वज्ञानयोःकार्यकारणभावः ॥ द्रव्यादिपदार्थशास्त्रयोःप्रतिपाद्यप्रतिपादकभावः संबंधोऽवगम्यते ॥ एतेषांचसंबंधानांज्ञानान्निःश्रेयसाऽर्थिनस्तमिहशास्त्रेप्रवृत्तिः" इति वक्ति ॥ मुक्तिस्वरूपं च अशेषविशेषगुणध्वंसावधिकदुःखप्रागभाव इति सिद्धान्तयति॥एतच्च सर्वं शङ्कराचार्याऽनभिमतमेव ॥ तथा तृतीयाध्यायद्वितीयाह्निकेसूत्रकारः (सू० ४) "प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराःसुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनोलिङ्गानि" इति सूत्र आत्मनां नित्यसविशेषत्वमभिधाय (सू० ५) "तस्यद्रव्यत्वनित्यत्वेवायुनाव्याख्याते" इति तेषां द्रव्यत्वं स्वीकृत्य सूत्रत्रयेणाऽऽगमिकत्वं पूर्वपक्षीकृत्य (सू० ९) "अहमितिशब्दस्यव्यतिरेकान्नागमिकम्" इत्यादिना सूत्रदशकेन निराकरोति ॥ तथा (सू० १९) "सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम्" इत्यात्मैक्यं पूर्वपक्षीकृत्य (सू० २०।२१) "व्याख्यातोनाना ॥ शास्त्रसामर्थ्याच्च" ॥ इत्यात्मनां नानात्वमेव सिद्धान्तयति॥एतद्वृत्तिकाराजयनारायणतर्कालङ्कारप्रभृतयश्चात्र मायावादस्यानुवादपुरःसरनिरासं स्पष्टमेव दर्शयन्ति॥चतुर्थाध्याये च (सू० १।२) "सदकारणवन्नित्यम्" "तस्यकार्यंलिङ्गम्" इत्यादिना नित्यानां परमाणूनां प्रपञ्चोपादानतया विवर्तवादविरोधिनमारंभवादमेवोरीकरोति॥ अतोयुक्तैव तत्र तदनुयायिषु चातिव्याप्तिः॥ अथ पाद्मोत्तरखण्डवचनाश्रयणादसच्छास्त्रत्वमङ्गीकृत्येष्टापत्तिमभ्युपेयास्तर्हि मायावादेपि तुल्यम् ॥ **किंचतत्तदिति** ॥ प्रस्तावनायां तेन न्यायादिशास्त्रं सम्यगभ्यस्तमिति प्रतिपादनात्पञ्चमलक्षणस्य प्रकृतग्रन्थे शैवसुधाकरे च क्वचित्तदनुवादात्षष्ठलक्षणस्य च त्वव्यतिव्याप्तिरिति भावः ॥ नचाभिनिवेशपूर्वकत्वमुभयत्राभिनिवेश्यतइत्यदोषः शक्यवचनः ॥ लक्षणग्राहकमानतयाऽभिमतेकौर्मवाक्ये विशेषणस्यानुक्त्या तन्निवेशे

मानाभावात्॥अस्माभिस्तु तयोः शमलक्षणत्वमेव पुरा निराकारीति नास्मासु तत्सङ्क्रमप्रसङ्गइति भावः॥ सहस्राक्षे *ननु वैष्णवानामित्यादिनाऽनुचितत्वादित्यन्तेन दर्शितं समसं लक्षणं दूषयन्ति ॥ विष्णोःसम्यगित्यादिना असंभवापत्तेरित्यन्तेन ॥

विष्णोः सम्यगसम्यग्वाऽऽश्रयणं तदपि शमानां लक्षणमुक्तं तदपि न लक्षणम् ॥ अत्र सम्यगाश्रितत्वमसम्यगाश्रितत्वं प्रत्येकं लक्षणं मिलितं वा ॥ नाद्यः॥ सम्यगाश्रितेष्वतिभक्तेषु नारदोद्धवसनकादिष्वतिव्याप्तेः॥ नहि तत्र शमत्वसंभावनमपि येनेष्टापत्तिं कुर्याः॥ असम्यगाश्रयणं चान्यदेवताभक्तानामेव संभवति॥ येप्यन्यदेवताभक्तायजन्तेश्रद्धयान्विताः ॥तेपिमामेवकौन्तेययजन्त्यविधिपूर्वकमित्यनेन तेषामेवासम्यगाश्रयणस्य भगवता प्रतिपादितत्वात्॥ तथाच सर्वेष्वन्यदेवताभक्तेष्वतिव्याप्तिः स्यात्॥ किंच विनिन्दन्तिहृषीकेशंब्राह्मणान्ब्रह्मवादिनः अस्यापि श्लोकस्य तादृशप्रकरणस्थत्वेन हृषीकेशनिन्दकतद्भक्तब्राह्मणनिन्दकानां शमत्वस्य त्वयाप्यङ्गीकरणीयतया विष्णुपराङ्मुखेषु तेषु विष्णोः सम्यगसम्यग्वाऽऽश्रयणस्य ( स्वाश्रितोपीत्यपिशब्देनकथंचिदाश्रितस्यग्रहणंनत्वनाश्रितस्य ) इति वदतस्तवाप्यभिप्रेततया तत्राव्याप्तिः स्यात् ॥ किंच व्यावृत्तिर्वाव्यवहारो-

---

सहस्राक्ष

* ननु वैष्णवानां नः कथं नरके पातोविष्णोरक्षायां समर्थत्वादतआह ॥ भविष्यतीति ॥ सत्यं तस्याऽस्ति तत्र सामर्थ्यं सोऽपि चेत्पराङ्मुखस्स्यात् कस्तर्हि त्रातेतिभावः ॥ स्वाश्रितोऽपीत्यपिशब्देन कथंचिदाश्रितस्य ग्रहणं नत्वनाश्रितस्य ॥ तथाभूतस्य पराङ्मुखतायाः प्राप्तत्वेन तत्कथनस्य निष्फलत्वापत्तेः ॥ सुशब्दस्वारस्यभङ्गापत्तेश्च ॥ एवञ्च तादृशानां सम्यग्विष्णोराश्रयणमेव न संभवति ॥ यदि केषांचित्तत्स्यात्तथाऽपि स पराङ्मुखोभविष्यतीत्यपिना सूचितम् ॥तथाच विष्णोस्सम्यगसम्यग्वा यदाश्रयणं तत्तेषां समसं लक्षणम् ॥ परंतु इदं लक्षणमितरस्य कस्यचित्संदिग्धस्याऽपि सत्त्वे एव शमत्वनिर्णायकम् ॥ मुक्तिभुक्तिसाधनविष्णुभक्तिमात्रस्य तल्लिङ्गतायाः वक्तुमनुचितत्वात् ॥ विष्णोः पराङ्मुखता शिवद्वेषादेः फलम्

वाल्लक्षणस्य प्रयोजनम् ॥ तत्र व्यावृत्तिरितरभेदानुमितिस्तज्ज-
नकत्वेनाभिमतस्य लक्षणद्वयस्य कुत्राप्यसत्वेन प्रत्येकं च तयोः
सम्यगाश्रितेष्वसम्यगाश्रितत्वस्यासम्यगाश्रितेषुसम्यगाश्रितत्व-
स्यासत्वेन भागासिद्धतया पक्षतावच्छेदकावच्छेदेनेतरभेदानुमि-
त्यजनकतया निष्फलत्वमेव ॥ एवं व्यवहारजनकत्वमपि प्रत्ये
कं सर्वत्र न संभवति परस्पराव्याप्तत्वात् ॥ नद्वितीयः॥ मिलित-
योर्द्वयोरेकत्रासंभवस्योक्तत्वेन लक्ष्यतावच्छेदकव्यापकीभूता-
भावप्रतियोगित्वेनासंभवापत्तेः ॥ तस्मात्सप्तानामपि लक्षण-
त्वेनाभिमतानामव्याप्त्यतिव्याप्त्यादिदोषग्रस्तत्वेनानिश्चायकत-
या तैर्लक्षिते व्यवहारं कुर्वन्भ्रान्तएव शिष्टैरनादेयवचनश्चेति ॥

टीका

अत्रेदं ज्ञेयम् ॥ भविष्यतित्हृषीकेशइति वाक्यस्याऽर्थः प्रकरणादिभ्योऽसंदिग्धः
प्रकाशतएवाऽतोननुवैष्णवानामित्यादिशङ्का तदुत्तरपरत्ववर्णनं च प्रलाप एव ॥ यच्च
स्वाश्रितोपीत्यत्र प्रलपितं तन्न ॥ अनाश्रितस्यौदासीन्यमात्रसंभवेन पराङ्मुख्याऽनि-
यमात् ॥ स्वतः सर्वाऽनुग्राहके सर्वपालके विष्णौ त्वौदासीन्यस्याप्यसंभवात् ॥ स्वेन
त्वैवाऽऽश्रितइति व्याख्यानस्यौचित्येन तत्र सूपसर्गस्याप्यभावाच्च ॥ अत्राऽपिशब्द-
स्वारस्यं तु विष्णोहव्य॑ꣳरक्षस्वेत्यादिमन्त्रलिङ्गादकृताऽऽश्रयोपि सयज्ञवस्तु रक्षेदेव
किं पुनर्यजमानादिना कृताश्रयः ॥ प्रकृते तूक्तकारणवशात्कृताऽऽश्रयोपि पराङ्मुखो-
यज्ञरक्षाविमुखोभविष्यतीति बोध्यम्॥ इतरस्य शमलक्षणस्य सन्दिग्धस्य सत्त्वे शम-
त्वसंदेहे श्रीविष्णुभक्तेः शमत्वनिर्णायकत्वं वदन् श्रीमान् महानाऽऽस्तिकएव॥ भगव-
द्गीतादयस्तु दुराचारदर्शनादसाधुत्वसंदेहेपि भगवतः सम्यगाश्रयणात्साधुत्वनिश्चयं
बोधयन्ति ॥ अपिचेत्सुदुराचारोभजतेमामनन्यभाक् ॥ साधुरेवसमंतव्यःसम्यग्व्यव-
सितोहिसइत्यादौ ॥ अतोऽयं प्रलापोविष्णुभक्तानां द्वेषादेव॥षट्सु लक्षणेष्वन्यतमस्य
कस्य चिदपि सन्दिग्धस्य सर्वत्रानेतुं शक्यतया शमतायां विष्णुभक्तिव्यापकतायाः
कथनएव पर्यवसानसिद्धेः॥तस्मान्मुक्तिभुक्तीत्यादिकथनं व्यामोहनमात्रम्॥ ( तथा-
चविष्णोःसम्यगसम्यग्वायदाश्रयणंतत्तेषांसप्तमंलक्षणम ) इति रभसोक्ति विकल्प्य
दूषयन्ति ॥ **अत्रेति** ॥ सम्यगाश्रितोयैस्तद्भावस्तत्त्वं सम्यगाश्रयणमित्यर्थः॥ सम्य-
गाश्रितमाश्रयणं येषां तत्त्वं वा॥एवमसम्यगाश्रितत्त्वमसम्यगाश्रयणम् ॥सम्यगसम्य-
ग्वेति परोक्तौ वाशब्दस्य विकल्पार्थत्वाऽभिप्रायात्प्रथमः कल्पः ॥ अवधारणाद्यर्थ-

त्वाभिप्रायाद्द्वितीयः॥ **नारदोद्भवेत्यादि** ॥ नच लक्षणान्तराभावाददोषः शङ्क्यः॥ पञ्चरात्रैकादशस्कन्धादिषु तैः शङ्कराचार्यानभिमतसाकारवादादेर्वर्णिततया त्वद्रीत्या निश्चितस्य तस्य सत्वात् ॥ **प्रतिपादितत्वादिति** ॥ गीतानवमाध्यायवाक्ये मामेवेतिसावधारणोक्त्या योयोयांयांतनुमित्युक्त्या चान्यदेवताकर्मकस्याप्याश्रयणस्य भगवत्कर्मकत्वम् ॥ अविधिपूर्वकत्वोक्त्या कामैस्तैस्तैर्हृतज्ञानाइत्युक्त्या चा सम्यक्त्वमिति भावः ॥ **किंचेति** ॥ विनिन्दन्तितद्धृषीकेशमिति वाक्यं कौर्मपूर्वखण्डत्रिंशाध्यायस्थम् ॥ **नाद्यशेति** ॥ शप्तनिरूपकेत्यर्थः ॥ **तद्भक्तेति** ॥ वाक्ये ब्रह्मवादिपदान्मद्भक्तेष्वपियत्नतइति सप्तविंशाऽध्यायवाक्याच्च तद्भक्तत्वलाभः प्राग्दर्शितः ॥ **तेष्विति** ॥ शप्तेषु ॥ **इतरभेदानुमितिरिति** ॥ व्यावृत्तिरितरभेदइति दीपिका ॥ इतरभेदानुमितिरिति वाक्यवृत्त्यादयः ॥ यथा गौरितरेभ्यो भेदवती शृङ्गवत्त्वे सति सास्नावत्त्वादित्यादौ गवीतरभेदानुमितिः॥ **असत्त्वेनेति** ॥ परस्परमतिद्वन्द्वितया तेजस्तिमिरयोरिव तयोः सामानाधिकरण्यासंभवात्संयोगवदाश्रयणस्याव्याप्यवृत्तित्वाभावाद्युक्तं द्वयोः कुत्राप्यसत्त्वम् ॥ निष्फलत्वमित्यग्रिमे हेतुतया तृतीयान्तस्यान्वयः॥ **तयोरिति** ॥ लक्षणयोः ॥ इदं भागासिद्धतयेत्यनेनान्वेति ॥ **भागासिद्धतयेति** ॥ पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावो भागासिद्धिरिति गदाधरभट्टादयः॥ यथा पृथिवी गन्धवती घटत्वादित्यादौ पृथिवीत्वसामानाधिकरण्येन पटादौ घटत्वाद्यभावः ॥ यथा वा पृथिव्यादयश्चत्वारः परमाणवोनित्यागन्धवत्त्वादिति ॥ अत्र गन्धवत्त्वस्य पार्थिवपरमाणुषु सत्वाज्जलादिपरमाणुष्वसत्त्वाद्भागासिद्धिः॥ **पक्षतेति** ॥ पक्षतावच्छेदकं शप्तत्वं तद्व्यापिकामितरभेदानुमितिविषयतां लक्षणद्वयमपि न जनयति ॥ शप्ताइतरेभ्योभिद्यन्ते विष्णोः सम्यगाश्रयणादिति प्रयोगे असम्यगाश्रयणवत्सु शप्तेष्वनुमितेरसिद्धेः असम्यगाश्रयणलिङ्गकप्रयोगे सम्यगाश्रयणवत्सु तदसिद्धेश्चेति भावः॥**परस्पराव्याप्तत्वादिति**॥ सम्यगाश्रयणवति शप्ते असम्यगाश्रयणस्य तद्वति सम्यगाश्रयणस्य चाऽव्याप्तत्वात्॥ सम्यगाश्रयणासम्यगाश्रयणे मिलिते लक्षणमिति पक्षं दूषयन्ति ॥ **नद्वितीयइति**॥ एवं सप्त लक्षणानि दूषयित्वा सिद्धमर्थमाहुः ॥ **तस्मादिति** ॥ **व्यवहारं** विप्रशप्तत्वव्यवहारम् ॥ ननु लक्षणसप्तकसन्दर्भे लक्षणशब्देन मया नासाधारणधर्मोविवक्ष्यते किन्तु " इत्थंभूतलक्षणे॥ लक्षणेत्थंभूताख्यानभागवीप्सासु ॥ लक्षणहेत्वोः " इत्यादिवज्ज्ञानजनकज्ञानविषयोवा परिचायकं वाऽभिमेयतेऽतोभवदुक्तदोषाणामनवकाशएवेति चेन्मैवम् ॥ तथासति लक्ष्यतावच्छेदकसमनियतत्वाऽभावेनाव्याप्तिपरिहारेप्यतिव्याप्तिदोषापरिहारात् ॥ तत्राप्यव्यभिचारिणएव लक्षणत्वात् ॥ तथाहि ॥ ज्ञानजनकज्ञानविषयः परिचायकमितित्वनर्थान्तरम् ॥ तत्र लक्षणशब्देन च करणव्युत्पत्या ज्ञापकमुच्यते ॥ ज्ञापकत्वं च व्यभिचारिणोन संभवति ॥ नहि व्यभिचारिविषयकज्ञानेन सन्दिग्धलक्ष्यनिर्णयोजैन्यते ॥ जटाभिस्तापसइत्यत्र विवक्षितजटा-

विशेषस्य तापसाव्यभिचारित्वमस्त्येव॥अन्यथामात्र जटाज्ञानेन तापसत्वनिश्चयस्यायोगात्॥ वृक्षंप्रतिविद्योततेविद्युदित्यत्र तत्कालसंबन्धविशिष्टतद्वृक्षव्यक्तेर्विद्युत्प्रकाशदेशव्याप्यत्वमस्त्येव ॥ अन्यथा प्रकाशानधिकरणदवीयःप्रदेशस्थवृक्षान्तरेणापि प्रकाशदेशोलक्ष्येत॥ एवं तिष्ठन्मूत्रयतीत्यादौ तिष्ठतिक्रिया मूत्रयतिक्रियायालक्षणमित्याद्युक्तं भाष्यकृता॥ तेन वर्तमानकालिकमूत्रणक्रियाज्ञानजनकज्ञानविषयस्तात्कालिकस्थितिक्रिया तद्याप्यैव ॥ अथवाऽस्तु तत्र कथञ्चिद्व्यभिचारिणोपि लक्षणत्वम्॥ तथापि तादृशलक्षणत्वाश्रयणे प्रकृते तव नकापीष्टसिद्धिः॥ तत्र वृक्षप्रत्यक्षोत्तरं विद्युद्विद्योतनप्रत्यक्षमिव तिष्ठतिक्रियादिप्रत्यक्षोत्तरं कदाचिन्मूत्रणक्रियादिप्रत्यक्षमिव च नह्यत्र निन्दादिप्रत्यक्षोत्तरमपि विप्रशप्तत्वप्रत्यक्षं भवति॥ किन्त्वनुमितिरेव त्वयावाच्या॥ साच व्याप्तिनिश्चयमन्तरा न संभवतीति स्वसंमतलक्षणानां विप्रशप्तत्वव्याप्यत्वमेव वाच्यमायुष्मता॥ एवं च सति पूर्वोक्तातिव्याप्तिदोषाः सुस्थाः॥ अनुर्लक्षणइतिसूत्रेच किंभवान्कमण्डलुपाणिंछात्रमद्राक्षीदित्युदाहरता भाष्यकृता काकवद्देवदत्तस्यगृहमित्यादौ काकतत्संयोगादेरिवोपलक्षणस्यापि कमण्डलोस्तत्पाणित्वस्य वा छात्रज्ञानजनकज्ञानविषयत्वाल्लक्षणत्वमुक्तम्॥ तच्च लक्षणं पूर्वं कमंडलुपाणिं तं चक्षुर्विषयीकृतवत्येव पुरुषे तज्ज्ञानं जनयितुं प्रभवति नतु तथा तमदृष्टवति॥ अतएव भाष्ये “सकृदप्यसौकमण्डलुपाणिश्छात्रोदृष्टस्तस्यतदेवलक्षणम्॥ इत्युक्तम्॥ तथाचात्र येन पुरा निन्दादिकं विप्रशप्तत्वं चोभयमप्यनुभूतं स्यात्तस्यैव निन्दादिराहित्यकालेपि तत्र शप्तोयमितिनिश्चयो नतु शापमदृष्टवतस्तत्साहित्यकालेपि तत्र तथा निश्चयः॥ अतः प्रकृते तादृशलक्षणत्वाश्रयणमपार्थकमेवेत्यतिदुर्बलत्वान्न मूलेऽनूद्य दूषितम्॥ लक्षणहेत्वोरितिशास्त्रविचारे चाग्रे स्वतो दूषितं तत्स्यादिति॥

ननु कूर्मपुराणे पूर्वखण्डे एकोनत्रिंशेऽध्यायेऽर्जुनं प्रति व्यासेन कुर्वन्तिचावताराणिब्राह्मणानांकुलेषुवै ॥ देवीशापविनिर्दग्धाः पुरादक्षाध्वरेद्विजाः ॥ निन्दन्तिचमहादेवंतमसाविष्टचेतसः ॥ वृथाधर्मंचरिष्यन्तितस्मिन्कालेयुगान्तके ॥ येचान्येशापनिर्दग्धागौतमस्यमहात्मनः ॥ सर्वेतेवतरिष्यन्तिब्राह्मणास्तासुयोनिषु॥ इत्याद्युक्त्वोक्तं मोहयन्तिजनान्सर्वान्दर्शयित्वाफलानिवै॥ इति॥ एवमादिवाक्यैस्तादृशानि लक्षणानि दर्शितानि तैरेवास्माभिरपि व्यवहारः क्रियतइति कुतोस्माकं भ्रान्तत्वमितिचेन्न॥ तादृशप्रकरणस्य लक्षणपरत्वाभावात्॥ नह्यर्जुनस्य वि-

प्रशमाः कीदृशाइत्याकारकः प्रश्नः किंतु कृतंत्रेताद्वापरंचक-
लिश्चेतिचतुर्युगम् ॥ एषांस्वभावंसूताद्यकथयस्वसमासतइति
ऋषिभिः शौनकादिभिः पृष्टः सूतोयुगधर्मान्वक्तुमर्जुनप्रश्नं यु-
गधर्मविषयकमवतारितवान् ॥ गतेनारायणेकृष्णेस्वमेवपरमंपद-
म् ॥ पार्थःपरमधर्मात्मापाण्डवःशत्रुतापनः ॥ पृष्टवान्प्रणिप-
त्यासौयुगधर्मान्द्विजोत्तमाः ॥ तस्मैप्रोवाचसकलंमुनिःसत्यव-
तीसुतः ॥ प्रणम्यदेवमीशानंयुगधर्मान्सनातनान् ॥ इत्यादिना ॥
एवंचार्जुनस्य युगधर्मजिज्ञासया प्रश्ने कथं विप्रशमलक्षणानि
व्यासोब्रूयात् ॥ अनाकांक्षिताभिधानेऽर्थान्तरं च कथं न
स्यात् ॥ अतएव वक्ष्यामितेसमासेनयुगधर्मान्नरेश्वर ॥ नशक्य-
तेमयापार्थविस्तरेणाभिभाषितुम् ॥ आद्यंकृतयुगंप्रोक्तंततस्त्रेता-
युगंबुधैः ॥ तृतीयंद्वापरंपार्थचतुर्थःकलिरुच्यतइत्युपक्रम्य कृते-
तुमिथुनोत्पत्तिरित्यादिना सत्ययुगधर्मानुक्त्वा वर्तयन्तिस्मतेभ्य-
स्तास्त्रेतायुगमुखेप्रजाइत्यादिना त्रेतायुगधर्मानुक्त्वा द्वापरेप्य-
थविद्यन्तेमतिभेदास्तदानृणाम् ॥ रागोलोभस्तथायुद्धंसत्वाना-
मविनिश्चयइत्यादिना द्वापरधर्मानुक्त्वा तिष्येमायामसूयांचव-
धंचैवतपस्विनाम् ॥ साधयन्तिनरानित्यंतमसाव्याकुलीकृताइ-
त्यादिना कलिधर्माउक्ताः ॥ अन्तेच इत्येतल्लक्षणंप्रोक्तंयुगा-
नांवैसमासतः ॥ अतीतानागतानांवैयावन्मन्वन्तरक्षयः ॥ इत्युप-
संहृतम् ॥ तथाच उपक्रमोपसंहाराभ्यां युगधर्मबुबोधयिषयैव
व्यासैस्तादृशवाक्यानि प्रणीतानीति निश्चीयते ॥ तादृशग्रन्थ-
स्य संदर्भमज्ञात्वा विप्रशमलक्षणपरत्वं वर्णयन्भ्रान्तएव ॥ त्रिं-
शाध्यायान्तर्गतांस्तादृशश्लोकांस्तत्रैवेत्यादिना एकोनत्रिंशे-
ध्याये वर्णयन्भ्रान्तत्वे सत्यदृष्टकूर्मपुराणश्चेति शिष्टापरिगृहीं-

तएव ॥ किंच तादृशप्रकरणस्य विप्रशप्तलक्षणपरत्वे शुक्लदंता-
जिताक्षाश्चमुण्डाःकाषायवाससः ॥ तथा ॥ काषायिणोन्येनिर्ग्र-
न्थास्तथाकापालिकाश्चये ॥ वेदविक्रयिणश्चान्येतीर्थविक्र-
यिणःपरे॥ तथा ॥ यतयश्चभविष्यन्तिशतशोथसहस्रशः॥ नाश-
यन्तिस्वधीतानिनाधिगच्छन्तिचापरे ॥ तथा ॥ वामाःपाशुपता-
चारास्तथावैपाञ्चरात्रिकाः ॥ भविष्यन्तिकलौतस्मिन्ब्राह्मणाः
क्षत्रियास्तथा इत्यादिवचनानामपितादृशप्रकरणस्थत्वात्ताद
शयतीनामपि विप्रशप्तत्वं कथं न स्यात् ॥ भवतु तेन किं स्या-
दितिचेत्तन्मध्यपातिनस्तवापि स्यादित्यवधारय ॥

## टीका

अथ सहस्राक्षे एकोनत्रिंशाध्यायस्थतयोक्तानां वस्तुतस्त्रिंशाध्यायस्थानां कुर्वन्ति-
चावताराणीत्यादिवचसामाशयं प्रकाशयिष्यन्तः शङ्कन्ते ॥ **ननुकूर्मेत्यादिना** ॥
परिहरन्ति ॥ **तादृशेति** ॥ व्यासार्जुनसंवादरूपप्रकरणस्य ॥ लक्षणपरत्वाऽभावमे-
वोपपादयन्ति ॥ **नह्यर्जुनस्येत्यादिना** ॥ कौर्मे पूर्वखण्डेऽष्टाविंशाध्यायारम्भे
( श्लो० १ ) कृतंत्रेताद्वापरंचेति प्रश्नः ॥ सूतस्तु ( श्लो०२ ) गतेनारायण इत्यादिना
व्यासार्जुनसमागमादि वर्णयित्वा एकोनत्रिंशे ( श्लो० ६ ) एवमुक्तोभगवतापार्थः
परपुरंजयः ॥ पृष्टवान्प्रणिपत्यासौयुगधर्मान्द्विजोत्तमाः ॥ इतियुगधर्मविषयकंप्रश्नं
( श्लो० ७ ) तस्मैप्रोवाचेत्यादिना व्यासोक्तांस्तद्धर्मांश्चोक्तवान् ॥ तदेतदनुसन्धाया-
हुः ॥ **अवतारितवानिति** ॥ **कथमिति** ॥ नापृष्टःकंचनब्रूयान्नचान्यायेनपृच्छ-
तइति मनुना प्रतिषेधात्कथं ब्रूयादिति भावः ॥ बाधकान्तरमप्याहुः ॥ **अनाका-
ङ्क्षितेत्यादि** ॥ अर्थान्तरं हि निग्रहस्थानम् ॥ गौतमेन पञ्चलक्षण्यां ( अ० ५
आ० २ सू० १ ) प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञाविरोधप्रभृतिद्वात्रिंशन्निग्रहस्थानेष्व-
र्थान्तरमपि निर्दिश्य ( सू० ७ ) " प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम् " इति तस्य
लक्षणमुक्तम्॥ लक्षणपरत्वपक्षे प्रतिज्ञाहानिमपि सूचयन्ति॥ **अतएवेति**॥ (श्लो०८)
वक्ष्यामीतिप्रतिज्ञावाक्ये युगधर्मान्वक्ष्यामीत्युक्त्वा युगधर्माणामपि संक्षेपेण कथनं
प्रतिज्ञाय विस्तरेण कथनस्याशक्यतां चाभिधाय वक्तुं प्रवृत्तेन भगवता श्रोतृजिज्ञा-
साविषयायुगधर्माअपि समासेनैव निरूपणीयाः क्व पुनस्तत्रापृष्टशप्तलक्षणप्रपंचनस्या-
वसरइति भावः ॥ ( श्लो० १४ ) कृतेत्वित्यादिना ( श्लो० २२ ) वर्तयन्तीत्यादिना
( श्लो० ४२ ) द्वापरेप्यथेत्यादिना च यावदध्यायसमाप्ति त्रियुगीधर्मानिरूपिताः ॥

अत्र **तेभ्यइति** ॥ कृतयुगे प्रजानां निर्वाहकान्वृक्षास्तत्राध्याये वर्णितास्तेभ्यः ॥ **सत्त्वानामिति** ॥ प्राणिनाम् ॥ क्वचित्तत्त्वानामिति पाठः ॥ अथ त्रिंशे ( श्लो० १ ) तिष्येमायामित्यादिना कलिधर्मान् ( श्लो० ३८ ) तस्मात्सर्वप्रयत्नेनेत्यादिना कलौ शिवप्रपत्त्यादितः सिद्धिं च प्रदर्श्य ( श्लो०५३ ) इत्येतल्लक्षणंप्रोक्तमिति चतुर्युगधर्म-निरूपणमुपसंहृतम् ॥ अत्रापि समासतएव प्रवचनं वर्णितम् ॥ **उपक्रमोपसंहारा-भ्यामिति**॥ उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ॥ अर्थवादोपपत्तीचलिङ्गंतात्पर्य-निर्णयइत्युक्तेस्ताभ्यां तथा निश्चीयतइति भावः ॥ **शुक्लदन्ताऽजिताक्षाइति** ॥ सवर्णदीर्घआर्षः ॥ शुक्लदन्ताश्च ते अजिताक्षाश्चेति शीतोष्णमितिवद्विशेषणयोः समा-सोवा ॥ तत्रमहाकोपाल्पतेजसइत्यादावपि तथाप्रयोगो दृश्यते ॥ शूद्रसंन्यासिनस्तु त्वादृशाविरागिशब्दवाच्या वृथा गिरिपुरीत्याद्यभिख्यावंतोवर्णादिविभागरहिताः प्र-सिद्धा एव ॥ **काषायिणोन्यइति** ॥ कृतसंन्यासाब्राह्मणाभासाः ॥ नाशयंतिस्व-धीतानीत्यत्र नाशयंतःस्वकंधर्मंनाधिगच्छंतितत्पदमित्यपिपाठः ॥ पाञ्चरात्रिकाः का-पिलादिपञ्चरात्रानुयायिनः ॥ नारदपञ्चरात्रस्य श्रीभागवतभारतमोक्षधर्मादिषु प्रशं-सिततया भगवच्छास्त्रत्वसिद्धेरित्यन्यत्र विस्तरः ॥ अत्र मध्येमध्येऽनुपयुक्तश्लोका-न्विहायोपयुक्तश्लोकाएव संगृह्यन्ते ॥ तथाच ( श्लो० १३ ) शुक्लदन्ताः ( श्लोक १६ ) काषायिणोन्ये ( श्लो०२३ ) यतयश्चेति ( श्लो० २५ ) वामाइति ॥ एवमादिषु स्पष्टतया निरूपणात्त्वादृशविरागिष्वेव विप्रशप्तत्वमापतेत् ॥ **त्वयापिस्यादिति** ॥ स्वस्य ब्राह्मणत्वे स्वयं वर्ण्यमानेपि वर्णादिविभागविरहितविरागिवर्गान्तःपातितया तथात्वं सुस्थमिति भावः॥नच पञ्चदशाध्यायवचस्सूत्प्रेक्षितलक्षणानामत्रासमन्वया-त्तदभावः शंक्यः ॥ त्रिनेत्रत्वपञ्चाननत्वादिविशिष्टविग्रहस्यानित्यत्वाभ्युपगमेन तदा-राधनस्यापि साधनविशेषत्वमात्रस्वीकारेण च शिवद्वेषतन्मार्गनिन्दयोरनपायात् ॥ तादृशशास्त्रासक्तत्त्वात् ॥ वेदसमाचारादावपि मिथ्यात्वोरीकारात् सर्वंमिथ्येत्येवाऽऽ-लपनात् भागवतनिन्दादिलिङ्गाऽनुमितहृषीकेशपराङ्मुख्याच्च तस्मिंस्तत्समन्वयसि-द्धेः॥ इदं चात्र ज्ञेयम् ॥ तस्मिन्नध्याये ( श्लो० ३ ) अधार्मिकानिराधारामहाकोपा-ल्पतेजसः ॥ अनृतंब्रुवतेलुब्धास्तिष्येजाताःसुदुष्प्रजाः ॥ ३ ॥ दुरिष्टैर्दुरधीतैश्चदुरा-चारैर्दुरागमैः ॥ विप्राणांकर्मदोषैश्चप्रजानांजायतेभयम् ॥ ४॥ नाधीयतेतदावेदान्नयज-न्तिद्विजातयः ॥ यजन्तियज्ञान्वेदांश्चपठन्तेचाल्पबुद्धयः ॥ ५ ॥ तथा ( श्लो० ८ ) स्नानंहोमंजपंदानंदेवतानांतथार्चनम् ॥ तथान्यानिचकर्माणिनकुर्वन्तिद्विजातयः ॥८॥ विनिन्दन्तिमहादेवंब्राह्मणान्पुरुषोत्तमम् ॥ आम्नायंधर्मशास्त्राणिपुराणानिकलौयुगे ॥ ९ ॥ कुर्वन्त्यवेददृष्टानिकर्माणिविविधानिच ॥ स्वधर्मेतुरुचिर्नैवब्राह्मणानांप्रजायते ॥ १० ॥ इत्यादिकथनादधार्मिकाः कापालिकादिदुरागमदुराचारदुरध्ययनतज्जन्यदुरि-च्छादिशालिनोवेदाध्ययनस्नानजपादिरहिताः शिवकेशवयोर्निन्दकाः श्रुतिस्मृति-पुराणगर्हिणोभवादृशाः प्रच्छन्नकापालिकादयएव कुर्वन्तिंचावताराणीत्यादिवचसां

गोचराः ॥ एवं ( श्लो० १५ ) तथाकापालिकाश्चयइत्याद्युक्तेः साक्षात्कापालिकप्रभृतयश्च तद्विषयाः ॥ वेदाद्यध्यायिनस्तदुक्त्यनुयायिनः श्रीहरिसंप्रदायिनस्तु नामीषां विषयाः ॥ अनुपदं विनिन्दन्तिहृषीकेशंब्राह्मणान्ब्रह्मवादिनः ॥ वेदबाह्यव्रताचारादुराचाराव्रृथाश्रमाः ॥ ३० ॥ मोहयन्तिजनान्सर्वान्दर्शयित्वाफलानिच ॥ तमसाविष्टमनसोबैडालव्रतिकाधमाः ॥ ३१ ॥ इति कथनेन वैष्णवेषु तदप्रवृत्तेष्षोडशाध्यायादौ मोहकत्वादिना वर्णितेषु तत्प्रवृत्तेश्च निश्चयात् ॥ किञ्च तत्र ( श्लो०२६) ज्ञानकर्मण्यपगतेलोकेनिष्क्रियतांगते ॥ कीटमूषकसर्पाश्च धर्षयिष्यन्तिमानुषान् ॥ ( श्लो० २७ ) कुर्वन्तिचावताराणीत्यादिपठ्यते ॥ तथाच सर्वथा ज्ञानकर्मापगमलोकनिष्क्रियत्वयोरधिकरणे कलियुगान्तएव तेषामवतरणं सिध्यति ॥ ( श्लो०२८) तस्मिन्कलियुगान्तकइत्युक्त्यापि तदेव दृढीक्रियते ॥ बहुषु पुस्तकेष्वेवमेव पाठः ॥ तस्मिन्कालियुगान्तकइतिपाठोऽप्येतदक्षतम् ॥ एवंसति कुर्वन्तिचेति वचसामद्यत्वे नावसरः ॥ अपिच कुर्वन्तिचेत्यत्रावतारशब्दं क्लीबत्वसाधुत्वाय त्वरीत्याऽधिकरणघञन्तं स्वीकरोषि न वा ॥ आद्येऽवतारक्रियाधिकरणानामेव करणं प्राप्यते नत्ववतरणम् ॥ द्वितीये लिङ्गविरोधस्तदवस्थः ॥ ब्राह्मणास्तासुयोनिष्वितिबहुवचनेन शप्तानां पश्वादियोनिष्वप्यवतारोगम्यते ॥ वाक्यार्थस्तु प्रागेव व्याख्यातः ॥

वस्तुतस्तु नास्मन्मते शिवनिन्दा नापि शिवद्वेषः ॥ अतएवास्मदाचार्यैस्तत्रतत्र श्रीशिवस्योत्कृष्टतयैव वर्णनं कृतम् ॥ स्वस्वमतं व्यवस्थापयितुमवतीर्णानां वास्तवीमाचार्यपदवीमुद्वहतांतेषां तत्तन्मतव्यवस्थापनस्य परमतखण्डनं विना दुर्विभाव्यतया तत्तन्मतखण्डनावसरे खण्डनयुक्तिसहकारित्वेनोत्कर्षापकर्षबोधकवचनानि तु न देवनिन्दात्वेन व्यवह्रियन्ते ॥ अतएव कापिलमतखण्डनावसरे शङ्कराचार्याणां ईक्षतेर्नाशब्दमितिसूत्रे " नसाङ्ख्यपरिकल्पितमचेतनंप्रधानंजगतःकारणंशक्यंवेदान्तेष्वाश्रयितुंअशब्दंहितत् " अग्रे च गौणश्चेन्नात्मशब्दादिति सूत्रे " प्रधानमचेतनंसच्छब्दवाच्यमितियदुक्तं तदसत् " इति ॥ द्वितीयाध्यायारंभे च स्मृत्यनवकाशदोषप्रसङ्गइतिचेन्नान्यस्मृत्यनवकाशदोषप्रसंगादितिसूत्रव्याख्याने "परतन्त्रप्रज्ञास्तु प्रायेणजना " इत्यद्युक्त्वा " अस्मत्कृतेच व्याख्याने न विश्वसे-

युर्बहुमानात्स्मृतीनां प्रणेतृषु कपिलप्रभृतीनां चार्षं ज्ञानमप्रतिहतं स्मर्यते ॥ श्रुतिश्च भवति ॥ ऋषिप्रसूतंकपिलं ” इत्याद्या ॥ अग्रे “ या च श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता ॥ नतया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यं कपिलमिति-श्रुतिसामान्यमात्रत्वादन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तु-र्वासुदेवनाम्नः स्मरणात् ” इति ॥ ततः पूर्वं च प्रधानादिकार-णवादाअशब्दत्वेन निराकृताः ॥ एवमादिस्थलेषु कापिलं मतं वेदविरुद्धमित्यादिप्रतिपादनं न निन्दात्वेन व्यवह्रियते ॥ एवं बलादापतितोमायावादःसाङ्ख्यस्यदुर्मतेरित्यादि विद्यारण्यस्य वचनमपि ॥ अन्यथा विष्णोरवतारत्वेन निश्चितस्य कपिलस्य दुर्मतित्वेन वर्णनं तन्मतस्य वेदबाह्यत्ववर्णनं च कथं न विष्णु-निन्दा स्यात् ॥ यच्चाप्येतत्कुत्सापरावस्मदीयौश्लोकावित्यादि-निर्बन्धेन कथनं तत्तु निन्दैव ॥ अतएव तस्य विनिन्दन्तिहृषी-केशंब्राह्मणाब्रह्मवादिनइति तदङ्गीकृतविप्रशमलक्षणप्रकरण मध्यपतितश्लोकप्रतिपाद्यब्रह्मवादिनिन्दाकर्तृत्वेन तस्मिन्वि-प्रशमत्वं दुरुद्धरमेव ॥

## टीका

( सहस्राक्षविष्णोःपराङ्मुखताशिवद्वेषादेःफलम् ) इत्युक्तिं दूषयन्तस्तत्कल्पितलक्ष-णसमकस्य स्वेषु सर्वथैवाप्रवृत्तिं प्रकाशयन्ति ॥ **वस्तुतस्तुनास्मदित्यादिना दुरुद्धरमेवेत्यन्तेन** ॥ एवंच यदि शिवद्वेषादिकं स्यात् स्यान्नाम तद्वस्मात्तु यथाकथंचित्प्रभुपाराङ्मुख्योत्प्रेक्षणस्यावसरः ॥ तदेव तु नास्ति कुतस्तरां तदा तदारोपणस्यावकाश इति भावः ॥ द्वेषनिन्दयोरभावमेवोपपादयन्ति ॥ **अतएवे-त्यादिना** ॥ **तत्रतत्रेति** ॥ बालबोधसिद्धान्तमुक्तावल्यादिषु प्रकरणग्रन्थेषु अतःशिवश्चविष्णुश्चजगतोहितकारकाविति ब्रह्मविष्णुशिवास्ततः ॥ देवतारूप-त्वोक्ताइत्याद्युक्तम् ॥ तथा चतुर्थस्कन्धनिबन्धे (९,श्लोक २२ ) तस्मादन्यतरद्वे-

षेनेतरत्कर्मसिध्यतीति ( श्लोक ३९ ) शिवद्वेषनिवृत्त्यातुधर्मःसिध्येदपिकचिदिति चोक्तम् ॥ एतद्विवरणे श्रीविठ्ठलाचार्याः " संमुह्यन्तुहरद्विषइतिवाक्यात् तद्वेषयुक्तेष्वेव तस्यशापात्तन्निवृत्तौ धर्मः सिध्येदित्यर्थः ॥ अपीतिसंभावनायाम् ॥ पूर्वोक्तवैपरीत्ये संभावनापि नास्तीतिभावः " इत्याहुः ॥ अस्यावरणभङ्गे च श्रीपुरुषोत्तमचरणाः " अपीतिसंभावनायामित्यादि ॥ तथाचशिवद्वेषोनकार्यइत्येवमुख्यःपक्षइत्यर्थः " इति व्याचक्षते ॥ अष्टमस्कन्धनिबन्धे च ( श्लोक ४४ ) विष्णुर्ब्रह्मामहेशश्चसर्वत्रैवहिकारणम् ॥ एकमेकतराभावेनकार्यंजनयेत्कचिदित्यभिहितम् ॥ एतद्योजनायां च श्रीपुरुषोत्तमचरणाः " आत्मेश्वरउपद्रष्टास्वयंदृगविशेषणइतिदक्षंप्रतिभगवद्वचनात्कार्यमात्रंप्रतित्रयाणांकारणत्वेनतत्रापित्रयाणांकारणत्वमनुसन्धेयमित्यर्थः " इति विवृण्वन्ति ॥ पत्रावलंबनग्रन्थसमाप्तौ च काशीपतिस्त्रिलोकेशोमहादेवःसतुष्यत्वितिस्वयं विहितेन वेदविरुद्धवादव्युदासेन ब्रह्मवादस्थापनेन च श्रीमहादेवस्य तोषोऽभ्यर्थितः ॥ एवं सुबोधिन्यादिषु ग्रन्थान्तरेष्वपि द्रष्टव्यम् ॥ चतुर्थस्कन्धनिबन्धादौ शिवस्य स्वमार्गप्रथमाचार्यत्वमपि वर्णितं तदग्रे दर्शयिष्यामः ॥तस्मादस्मासु शिवद्वेषादिकं संभाव्य तस्य लक्षणत्वं चोत्प्रेक्ष्य शप्तत्वमारोपयन् शशं तच्छृङ्गप्राप्तये पुष्करप्रसूनैः पिपूजयिषन्तमनुकरोति ॥ ननु मास्तु शिवद्वेषः शङ्कराचार्यद्वेषस्तु विद्यतएव तन्मतखण्डनात् ॥ खण्डनावसरे क्वचिदपकर्षबोधकशब्दानां प्रयोगाच्चेतिचेल्लक्षणग्राहकप्रमन्तयाऽभिमते शङ्कराचार्याणां न संबन्धगन्धोपीति प्रागेव प्रत्यपादयाम ॥ नापि वयं तेषामपि द्वेषाद्युन्मेषयामइत्याशयेनाहुः ॥ **स्वस्वमतमित्यादि** ॥ **अतएवेति** ॥ अय भावः ॥ ईक्षतिसूत्रे पूर्वं साङ्ख्यादीन्निर्दिश्य " एवमन्येपितार्किकावाक्याभासयुक्त्याभासावष्टंभाःपूर्वपक्षवादिनइहोत्तिष्ठन्ते " इति तेष्वपकर्षबोधकशब्दाः प्रयुक्ताः ॥ सूत्रव्याख्याने च अशब्दंहितदित्यन्तेन साङ्ख्यस्यावैदिकत्वमुक्तम् ॥ गौणश्चेन्नेतिसूत्रेपि तदुक्तस्यासत्त्वमुक्तम् ॥ द्वितीयाध्यायारंभसूत्रे च प्रधानादिवादानां न्यायाभासोपबृंहितत्वप्रतिपादनमपि द्वितीयाध्यायप्रयोजनं कण्ठरवेणोक्ता पर्वपक्षे परतत्त्वप्रज्ञास्त्वित्यादि ऋषिंप्रसूतमित्यन्तमुक्त्वा सिद्धान्ते श्रुतिविरोधात्कापिलादिस्मृतीनां सर्वथानादरणीयत्वं प्रपञ्च्य याचश्रुतिरित्यादिना ऋषिंप्रसूतमितिश्रुतिरन्यथानीता ॥ अत्र ॥ **प्रतप्तुरिति** ॥ प्रदाहकस्येतिरत्नप्रभादयः ॥ **ततःपूर्वमिति** ॥ स्मृत्यनवकाशसूत्रात्पूर्वं प्रथमाध्यायइत्यर्थः ॥ तत्र प्रथमे पादे ( सू० १८।२७ ) कामाच्चनानुमानापेक्षेत्यादौ भाष्ये शङ्कराचार्यैः सांख्यपरिकल्पिताचेतनप्रधानस्याऽनपेक्षितव्यत्वस्य कथनात् द्वितीयपादे (सू०१९) नचस्मार्तमतद्धर्माभिलापादित्यादौ कण्ठरवेण साङ्ख्यस्य निराकरणात् तृतीयपादे ( सू०१) द्युभ्वाद्यायतनंस्वशब्दादित्याद्यधिकरणेषु तथाकरणात् चतुर्थपादे ( सू० १ ) आनुमानिकमप्येकेषां ( सू० ८ ) चमसवदविशेषादित्यादौ तदनुकूलतया प्रतीयमानश्रुतीनां तदननुकूलत्वादेः कथनाच्च निराकृताइति भावः॥ तथाच तेषु कपिलादिद्वे-

षिता कथं न स्यात् ॥ अथ स्वसिद्धान्तस्थापनावसरे खण्डनं खण्डने सहकारितयाऽपकर्षबोधकशब्दप्रयोगश्च न दोषइति चेत्तुल्यम् ॥ **बलादापतितइति** ॥ इदं पञ्चदश्यां चित्रदीपाख्ये षष्ठप्रकरणे ( श्लोक२३२ ) अविवेककृतःसङ्गोनियमश्चेति-चेत्तदेतिपूर्वार्धस्योत्तरार्धमस्ति ॥ **वचनमपीति** ॥ न निन्दात्वेन व्यवह्रियतइत्यनुषज्यते ॥ तदुक्तवाक्यैस्तस्यैव शप्तत्वं निर्धारयन्ति ॥ **यत्रापीत्यादिना**॥ **तत्तुनिन्दैवेति**॥ अविद्यमानदोषकथनरूपत्वादिति भावः ॥ इदं तत्रैव स्फुटीभविष्यति॥

यत्तु (लक्षणहेत्वोःक्रियायाइतिसूत्रेण द्विषन्तोदेवमित्यत्र लक्षणे हेतौ वा शता ॥ अदन्विप्रोननमनीयः पचन्विप्रोनश्राद्धेभोजनीयइत्यादिवत् ॥ तेन शिवद्वेषः शप्तानामेकं लक्षण) मित्युक्तं तदत्यन्तमसत् ॥ तेन सूत्रेण क्रियायाःपरिचायकेहेतौचार्थेवर्तमानाद्धातोर्लटः शतृशानचौविधीयेते नतु कारकपरिचायकार्थात् ॥ अतएव तत्सूत्रभाष्ये लक्षणहेत्वोःक्रियायाइत्युक्त्वा कारकार्थगुणउपसङ्ख्यानमित्युक्तम्॥ तथाच भाष्यं "लक्षणहेत्वोः क्रियायागुणउपसङ्ख्यानंकर्तव्यं तिष्ठन्मूत्रयतिगच्छन्भक्षयतीति" अग्रेच "इहतावत्तिष्ठतिक्रियामूत्रयतिक्रियायालक्षणंगच्छन्भक्षयतीतिगच्छतिक्रियाभक्षयतिक्रियायालक्षणंयोधीयानआस्तेसदेवदत्तइतिअध्ययनक्रियाआसनक्रियायालक्षणं" इत्युक्तम्॥ तदुपरि कैयटेन "गुणशब्देनात्रसाधनमुच्यते तिष्ठन्मूत्रयतीतियदास्थानादिनामूत्रादिक्रियालक्ष्यतेतदातेनैवसूत्रेणादेशसिद्धिर्यदातुकारकंलक्ष्यतेतदर्थमिदंवचनं" इत्युक्तम् ॥ अतस्तादृशभाष्यकैयटोक्तरीत्या क्रियायालक्षणएव वर्तमानाद्धातोः परस्य लटः शत्रादेशस्तादृशसूत्रेण भवतीति तत्सूत्रानुसारेण शिवद्वेषोविप्रशप्तानामेकं लक्षणमितिवदन्भाष्यानभिज्ञएव ॥ किंच योधीयानआस्तेसदेवदत्तइत्यादिवत्तादृशश्लोके यत्तत्पदघटिताख्यातान्तद्वितीयधातुयुक्तवाक्यस्याभावा-

त्तादृशसूत्रस्य प्राप्तिरेव न संभवति ॥ तिङन्तसमभिव्याहार-स्थलएव सर्वोदाहरणेषु भाष्ये शत्रादेशस्य दर्शितत्वेन भा-ष्यानारूढे अदन्विप्रोननमनीयःपचन्विप्रोनश्राद्धेभोजनीयइ-त्युदाहरणे दृष्टान्तविधयाप्रदर्शयन्नुपेक्षणीयः ॥ वस्तुवस्तु तादृ-शप्रकरणालोचने शिवद्वेषस्य शिवनिन्दायाश्च मुनिकोपोत्पा-दनद्वारा शापहेतुत्वं संभवत्यतोऽत्र तादृशतिङन्तक्रियाध्याहारे हेत्वर्थकधातोर्लटः शत्रादेशस्तु संभावितः ॥ तदनध्याहारे तु न संभवतीति ॥

## टीका

यश्च सहस्राक्षे लक्षणप्रमकमतिपादनात्माक्तद्बोधकतयोपन्यस्तेषुवाक्येषु (पृ०५६ पं०५) द्विषन्तइत्यादौ लक्षणे हेतौ वा शता स्वमतिप्रिपादयिषितार्थसमर्थनार्थमुक्तः स न युक्तइतिसिंहावलोकनन्यायेनाऽनूद्य दूषयन्ति॥ **यत्तुलक्षणेत्यादिना नसंभवती-त्यन्तेन** ॥ अयमर्थः ॥ लक्षणहेत्वोरित्यत्र लक्ष्यतेनेनेतिलक्षणं परिचायकम् ॥ हेतु-शब्दश्च फलकारणोभयपरः ॥ क्रियायाइत्यस्य सर्वत्र संबन्धः ॥ तथाच क्रियायाः परिचायके क्रियायाः फले क्रियायाः कारणे च वर्तमानाद्धातोः परस्य लटः शतृ-शानचौ स्तइत्यर्थः ॥ तत्र लक्षणे यथा ॥ शयानाभुञ्जते यवनाः ॥ अत्र शेखरे ॥ "शयनंभुज्यर्थपरिचायकं तदुपलक्षितभुज्यर्थेनचयवनाःपरिचाय्यन्ते" इत्युक्तम् ॥ एवंच प्रकृते लक्षणे शतेतिचेच्छेतिक्रिया भुजिक्रियायाइव द्वेष्टिक्रिया कस्याः प-रिचायिका यया च शमाः परिचाय्येरन् ॥ नहि शमानामेव लक्षणं द्वेष्टिक्रिया शक्या वक्तुम् ॥ तेषामक्रियात्वात् ॥ ननु लक्षणहेत्वोःक्रियाया गुणउपसङ्ख्यानमितिवा-र्तिकेन शमाइति कर्मणोपि लक्षणे स्यात् ॥ गुणशब्दस्य कारकपरत्वात् ॥ कैयटेन "गुणशब्देनात्रसाधनमुच्यते" इतिव्याख्यानात् ॥ तत्रैव विवरणे "भाष्येक्रिया-यागुणेइतिक्रियायाःकारकेइत्यर्थः" इत्यादिव्याख्यानाच्चेति चेन्मैवम् ॥ वार्तिकेन प्रत्ययाङ्गीकारे लक्षणहेत्वोःक्रियायाइतिसूत्रेण शतेतिसोक्तेर्बाधात् ॥ तत्रैव कैय-टेन "तिष्ठन्मूत्रयतीत्यादौयदास्थानादिनामूत्रादिक्रियालक्ष्यतेतदासूत्रेणैवादेशसि-द्धिः ॥ यदातुकारकंलक्ष्यतेतदर्थमिदंवचनम् ॥ बहुषुमूत्रयत्सुकोदेवदत्तइत्युक्ते य-स्तिष्ठन्मूत्रयतीतिप्रतिवचनेनदेवदत्तोलक्ष्यते ॥ अथवाअशौचादिगुणोगृह्यते" इति सूत्रवार्तिकयोर्विषयस्य विभागात् ॥ वस्तुतस्तु कारकलक्षणेऽपि स्थितिगमनादि-क्रियायां मूत्रणभक्षणादिक्रियायाइव द्वेष्टिक्रियायां क्रियान्तरस्य सहकारोऽपेक्षितए-

व॥ अतएव विवरणे "देवदत्तोलक्ष्यतइतिमूत्रणसमानकालिकस्थानक्रिययेत्यर्थः" इति व्याख्यातम् ॥ किंचास्मिन्वार्तिके गुणशब्देन कर्तृरूपकारकमेव गृह्यते ॥ भाष्ये तिष्ठन्मूत्रयति गच्छन्भक्षयतीति तथैवोदाहरणात् ॥ एवमरुच्या स्वीकृते अशौचादिगुणोगृह्यतइति पक्षान्तरे तु प्रकृतेऽप्रसक्तिरेव ॥ "कर्तुश्चलक्षणयोःपर्यायेणाऽचयोगे" इत्यग्रिमवार्तिकेपि "यदापूर्ववाक्येगुणःसाधनंगृह्यतेतदातेनैवसिद्धेपर्यायार्थः ॥ यदात्वशौचादेर्गुणस्यतत्रग्रहणंतदाविध्यर्थः" इति वदता कैयटेन पूर्वत्र वार्तिके प्रथमपक्षे कर्तुरेव ग्रहणं द्वितीयपक्षस्य मुख्यत्वं च ध्वनितम् ॥ अन्यथा कर्तुश्चेतिवार्तिकमपार्थकमेव स्यात् ॥ योऽधीयानआस्तेसदेवदत्तः यआसीनोधीतेसदेवदत्तः इति पर्यायेपि प्रत्येकं पूर्वेण सिद्धौ बाधकाभावात् ॥ एवंसति अशौचादिगुणस्य लक्षणे प्रथमं कर्तुर्लक्षणे द्वितीयं वार्तिकं प्रवर्ततइति न प्रकृते तयोः प्रवृत्तिः ॥ नापि तत्त्वाख्यानेचेत्यनेन शयानावर्धतेदूर्वाआसीनंवर्धतेबिसमित्यादिवत्स्वभावकथनेत्र शता शङ्क्यः ॥ लक्षणे हेतौ वा शतेति स्वोक्तेरपि विरोधात् ॥ "नह्यासनंवृद्धेर्लक्षणं किंतर्हिस्वभावमात्रकथनम्" इतिकैयटोक्तेः ॥ वर्धतइत्यादेरिव समानकर्तृकक्रियोपस्थापकतिङन्तपदस्य प्रकृतेऽनुपलम्भाच्च ॥ वस्तुतस्तु भाष्यकृता "तत्तर्हिवक्तव्यं नवक्तव्यम् ॥ लक्षणहेत्वोःक्रियायाइत्येवसिद्धम् ॥ इहतावत्तिष्ठन्मूत्रयतीतितिष्ठतिक्रियामूत्रयतिक्रियायालक्षणम् ॥ गच्छन्भक्षयतीतिगच्छतिक्रियाभक्षयतिक्रियायालक्षणम्॥ योधीयानआस्तेसदेवदत्तइतिअध्ययनक्रियाआसनक्रियायालक्षणम्" इत्यादिना प्रत्याख्यातं वार्तिकजातं तदिति न ततोपि तवेष्टसिद्धिः ॥ अत्र कैयटः "तिष्ठतिक्रियेति ॥ स्थितिक्रियालक्षितातुमूत्रणक्रियायस्तिष्ठन्मूत्रयतिसदेवदत्तइतिसर्वनामपरामर्शेदेवदत्तस्यलक्षणंतद्गतस्यवाऽशौचादेरितिभावः" इति व्याचष्टे॥ एतच्च नागोजीभट्टः ॥ "ननुक्रिययोरेवलक्ष्यलक्षणभावेकोदेवदत्तइतिप्रश्नेइदमुत्तरंनस्यादतआह॥ स्थितिक्रियेति ॥ सर्वनामपरामर्शेइति ॥ यत्तद्रूपसर्वनामपरामृष्टदेवदत्तस्यलक्षणमितिफलितम् ॥ अन्यथावचनान्तराऽऽरम्भेपितिष्ठतेःशत्रनापत्तिः ॥ नहितद्वाच्यक्रियादेवदत्तस्यलक्षणंकिन्तुतदुपलक्षितमूत्रणक्रियेतिबोध्यम्" इति विवृणोति ॥ एवं सति प्रकृते लक्षणहेत्वोरिति क्रियालक्षणे शतुरङ्गीकारे द्वेष्टिक्रियया लक्षितं क्रियान्तरमेव शमानां लक्षणं भवितुमर्हति ॥ न तु द्विष्यर्थक्रियैव ॥ नच क्रियान्तरं वाक्ये श्रूयते ॥ तेषां कर्मत्वात्तु सत्यपि क्रियान्तरे प्रयोगोन स्यात् ॥ भाष्यादिषु सर्वत्र तिष्ठन्मूत्रयतीत्याद्युदाहरणेषु लक्ष्यक्रियायां समानकर्तृकतायास्तिङन्तपदोपस्थाप्यतायाश्च नियमदर्शनात् ॥ नहि केनापि प्रामाणिकेन अदन्विप्रोननमनीयइत्याद्युदाहृतम् ॥ शमजीवलक्षणे शतुः स्वीकारे च सूत्रे क्रियाया इति पदमपार्थकमेव स्यात्॥ अतएव काशिकायां "लक्षणेहेतौचार्थेवर्तमानाद्धातोःपरस्यलटःशतृशानचावादेशौभवतः ॥ तौचेल्लक्षणहेतूक्रियाविषयौभवतः ॥ लक्षणे ॥ शयानाभुञ्जतेयवनाः ॥ तिष्ठन्तोऽनुशासतिगणकाः ॥ हेतौ ॥ अर्जयन्वसति ॥ अधीयानोवसति ॥ लक्षणहे-

त्वोरितिकिम् ॥ पचतिपठति ॥ क्रियायाइतिकिम् ॥ द्रव्यगुणयोर्माभूत् ॥ यःकम्पते सोऽश्वत्थः ॥ यदुत्प्लवतेतल्लघु ॥ यन्निषीदतितद्गुरु" इत्युक्तम्॥ एतदेव हृदि निधाय शेखरकारोपि ॥ "क्रियायाइतिकिम्॥यःकम्पतेसोऽश्वत्थइत्यादौमाभूत्" इत्याह ॥ एवं हेतौ शतुरङ्गीकारेपि अर्जयन्वसतीत्यादौ हेतुमत्क्रियायास्तिङन्तपदोपस्थाप्यत्वसमानकर्तृकत्वयोर्दर्शनादिह तादृशपदाऽभावाच्च फले शतरि द्वेष्टिक्रिया कस्याः क्रियायाः फलम् ॥ कारणे शतरि सा कस्याः कारणमिति चिन्त्यम् ॥ समानकर्तृकत्वाऽनियमे चैत्रस्य लाभार्थं भोजनार्थं वा मैत्रस्य वासेऽप्यर्जयन्वसति भुञ्जानो वसतीति प्रयुज्येतेति दिक् ॥ **तादृशतिङन्तेति** ॥ अत्र यत्तदोरप्यध्याहारो बोध्यः॥ तिङन्तं तु अकोपयन् अनिन्दन् इत्यादिरूपं किञ्चिदध्याहर्तव्यम् ॥ तथाच ये शिवं द्विषन्तः दधीचं गौतमं वा मुनिं अकोपयन्द्वेषाद्देवमीशानमनिन्दन्वा ते शप्तास्ते च न संभाष्या इत्यर्थः ॥ योऽधीयानआस्तेसदेवदत्तइतिवत्प्रयोगः ॥ इह हेतावेव शतेत्याग्रहेऽसावध्याहारक्लेशः ॥ क्लेशाऽऽनादरे त्वाहुः ॥ **तदनध्याहारइति** ॥ तथाचास्मिन्पक्षे लटःशतृशानचाविति शता ॥ वर्तमानेलडित्यतोलडित्यनुवर्तमानेऽपि पुनर्लड्ग्रहणमधिकवचनार्थम् ॥ तेन अप्रथमासामानाधिकरण्येऽपि क्वचिदिति व्याख्यानात् ॥ गौतमकर्तृकशापे शिवद्वेषस्याऽकारणत्वमपि द्विषन्तोदेवमित्यत्र हेतौ शतुरनादरे बीजं द्रष्टव्यम् ॥

इदं पुनरत्र बोध्यम् ॥ पूर्वोक्तरीत्या दोषपरिहारोस्माभिः परोक्तं यथाश्रुतं दोषमङ्गीकृत्य कृतः॥ वस्तुतस्तु दोषएव नास्ति॥ तथाहि ॥ कूर्मपुराणे पञ्चदशेऽध्याये दधीचशापमुक्त्वा ततउक्तं येन्येशापाग्निनिर्दग्धाद्दधीचस्यमहर्षयः ॥ द्विषन्तोमोहितादेवंसंबभूवुःकलिष्वथ ॥ अत्र संबभूवुरित्युक्तं नतु भविष्यन्तीत्युक्तम् अग्रे च कलिष्वितिबहुवचनमुक्तम् ॥ एवं च सूतशौनकसंवादात्प्राक्तनकलिष्वेव ते जातानतु वर्तमानकलियुगे ॥ कथमन्यथा सूतेन व्यासैर्वा भविष्यन्तीतिनोक्तं स्यात् ॥ तस्मात्तादृशकौर्मप्रकरणं व्यतीतकलिविषयकमेव ॥

## टीका

अथ युक्त्यन्तरेण तु त्वदुक्तदोषप्रसक्तिरेव नास्तीत्याहुः ॥ **इदंपुनरत्रेत्यादिना विषयकमेवेत्यन्तेन** ॥ अत्र कौर्मे ॥ उक्तचरस्थले ब्रह्मणा शुद्धाद्वैतावलम्बेन विष्णुशिवयोरभेददृष्टौ मुक्त्यादिकं भेददृष्टौ नरकप्राप्त्यादिकं चाऽभिहितं निशम्य

दक्षरुद्यक्षं शरणं जगामेति वर्णयित्वा ब्रह्मवचनश्रवणेऽपि शुद्धमद्वैतमनादृत्य साक्षाच्छिवं द्विषतां शममहर्षीणां वृत्तान्तोवर्ण्यते ॥ येन्येशापाग्निनिर्दग्धाद्धीचस्य-महर्षयः ॥ द्विषन्तोमोहितादेवंसंबभूवुःकलिष्वथ ॥ त्यक्तातपोबलंकृत्स्नंविप्राणां-कुलसम्भवाः ॥ पूर्वसंस्कारमाहात्म्याद्ब्रह्मणोवचनादिह ॥ मुक्तशापास्ततः सर्वेकल्पा-न्तेरौरवादिषु ॥ निपात्यमानाःकालेनसंप्राप्याऽऽदित्यवर्चसम् ॥ ब्रह्माणंजगतामीशम-नुज्ञाताःस्वयंभुवा ॥ समाराध्यतपोयोगादीशानंत्रिदशाधिपम् ॥ संबभूवुर्यथापूर्वंशङ्क-रस्यप्रसादतइति॥ इह महर्षयइत्यत्र महात्मन इत्यपि पाठः॥ **प्राक्तनकलिष्विति**॥ संबभूवुरित्यनद्यतनपरोक्षभूतार्थकलकारप्रयोगात्कलिष्विति बहुवचनस्वारस्याच्चेति हृदयम् ॥ क्वचित्पुस्तके चरमश्लोके भविष्यन्तियथापूर्वमितिपाठेऽपि शापमुक्तिब्रह्म-लोकप्राप्त्यन्तस्य पूर्वकालिकत्वं नापैति ॥ किन्त्वस्मिँल्लोके पुनस्तपोभिलाषाद्यथा-पूर्वं जननमेव तादृशपाठेऽर्थः ॥अन्यथा संबभूवुःकलिष्विातिवचनं विरुध्येतैव॥ त्वद-नुकूलोव्यासाऽभिप्रायश्चेत्पूर्ववाक्ये भविष्यन्तिकलाविहेत्येव वदेत् ॥ गृहिलतयैतं नाद्रियमाणे तु प्रागुक्तयाऽसन्दिग्धया व्यवस्थया सन्तुष्य ॥ संभूतास्तेकलिष्वथे-ति त्वन्मात्रकल्पितपाठेऽपि भूतत्वं तदवस्थमेव॥ एतेन सहस्राक्षे पूर्वं (पृ०५६ पं०४) द्विषन्तोमोहिताइत्यादिना कालेनेत्युक्तमित्यन्तेन विहितं व्यामोहनवैदग्ध्यं व्यर्थितम्॥

श्वेतवाराहकल्पे वैवस्वतमन्वन्तरान्तर्गताऽष्टाविंशतितमकलिवि-षयकाणि तु ब्रह्माण्डादिपुराणवाक्यानि ॥ कलौदशसहस्रेण-विष्णुस्त्यक्ष्यतिमेदिनीम् ॥ तदर्द्धंजान्हवीतोयंतदर्द्धंग्रामदेवताः ॥ श्रीभागवते च ॥ कलिंसभाजयन्त्यार्यागुणज्ञाःसारभागिनः ॥ यत्रसङ्कीर्तनेनैवसर्वःस्वार्थोभिलभ्यते ॥ तथा ॥ कृतेयद्ध्याय-तोविष्णुंत्रेतायांयजतोमखैः ॥ द्वापरेपरिचर्यायांकलौतद्धरिकी-र्तनात् ॥ कलेर्दोषनिधेराजन्नस्तिह्येकोमहान्गुणः ॥ कीर्तनादे-वकृष्णस्यमुक्तबन्धःपरंव्रजेत् ॥ पुनस्तत्रैव ॥ कृतादिषुप्रजारा-जन्कलाविच्छन्तिसंभवम् ॥ कलौखलुभविष्यन्तिनारायणप-रायणाः ॥ क्वचित्क्वचिन्महाराजद्रविडेषुचभूरिशः ॥ ताम्रपर्णी-नदीयत्रकृतमालापयस्विनी ॥ कावेरीचमहापुण्याप्रतीचीच-महानदी ॥ येपिबन्तिजलंतासांमनुजामनुजेश्वर ॥ प्रायोभक्ता-भविष्यन्तिवासुदेवेऽमलाशयाः ॥ स्कन्दपुराणेच ॥ कर्मणामन-

**सावाचाश्रीकृष्णांह्रिभजन्तिये ॥ संप्रदायिगुरोर्वाक्यात्तेविष्णोर्नकलेर्नराः ॥ वेदोक्तधर्महीनत्वात्सर्वेनिरयगामिनः ॥ अनाश्रित्यहरिंजीवाःकलौपाषण्डसङ्कुले ॥ पद्मपुराणेच ॥ यदाभागवतीसृष्टिःकलौभवतिवैतदा ॥ अंशेनभगवान्विष्णुःस्वात्मानंसृजतिस्वयम् ॥ तमाश्रित्यजनाःसर्वेभक्तिभाजोभवन्तिहि ॥ तथातत्रैव ॥ चत्वारस्तेकलौभाव्याःसंप्रदायप्रवर्तकाः ॥ भविष्यन्तिप्रसिद्धास्तेह्युत्कलेपुरुषोत्तमात् ॥ इत्यादीनि द्रष्टव्यानि ॥**

## टीका

अतःपरं वैष्णवसम्प्रदायानां तत्प्रवर्तकाचार्याणां च जगदुद्धारकारणत्वं तत्संमतहरिसेवनाद्याचारतत्स्वरूपविषयकज्ञानयोर्हरिपरितोषपुरःसरमोक्षफलकत्वं च पुराणादिषु प्रसिद्धमिति बोधयितुमाहुः ॥ **श्वेतवाराहकल्पइत्यादि द्रष्टव्यानीत्यन्तम्** ॥ अत्र ॥ **विष्णुस्त्यक्ष्यतीति** ॥ दशसहस्रवर्षपर्यन्तमेव विशेषतोविष्णुः स्वसेवादिधर्मप्रचारं स्थापयिष्यतीति भावः ॥ श्रीभागवतवचनेषु हरिकीर्तनमात्रेणापि बन्धमोकपुरःसरपरप्राप्तिपर्यन्तसर्वस्वार्थलाभस्य कथनात्तदनन्यभक्तानां वैष्णवानां प्रत्युत नरकमाप्त्यन्तदुष्फलप्राप्तेः खण्डयिष्यमाणसहस्राक्षे प्रलपनं प्रद्वेषमात्रमूलकम् ॥ स्कान्दवचस्तु ॥ **संप्रदायिगुरोरिति** ॥ विष्णुस्वाम्यादिप्रकाशिताऽनादिसिद्धचतुर्विधवैष्णवसंप्रदायाऽन्यतमसंबन्धिनोगुरोरिति भावः ॥ अत्र मूलमनुपदं वक्ष्यते ॥ **तेविष्णोरिति** ॥ तादृशगुरुतो दीक्षां लब्ध्वा सर्वात्मना भगवन्तं सेवमानाये तएव विष्णोः संबन्धिनो वैष्णवाः ॥ नतु ते कलेःसंबन्धिनस्तदधीनाः ॥ कलिकल्मषकषणसाधनसंपन्नत्वात् ॥ अतो न ते कलिजैः परिपीडिताभवन्ति ॥ **वेदोक्तेति** ॥ हरिमनाश्रित्य वैष्णवत्वमप्राप्य ॥ वेदोक्तैस्तत्सेवासङ्कीर्तनादिधर्मैर्हीनत्वादेव जीवा निरयं गच्छन्ति ॥ भगवद्धर्मास्तु मुक्तिसाधनतयैव ऋगादिषु चतुर्ष्वपि वेदेषु " तमुस्तोतारःपूर्व्यंयथाविदऋतस्यगर्भंजनुषापि पर्तन " इत्यादिना " प्रतासिन्भ्रियमाणोबिभर्ति " इत्यादिना "ब्रह्मसंस्थोऽमृतत्वमेति" इत्यादिना " भक्तिरस्यभजनम् " इत्यादिना च वचःशतेन सप्रपञ्चं निरूपिता इति किं बहुना ॥ नरकप्राप्तिस्तु तद्रहितानामेव ॥ षष्ठस्कन्धादिषु जिह्वानवक्तिभगवद्गुणनामधेयमित्यादिवचनेभ्यः ॥ विष्णुपुराणादिष्वपि स्वपुरुषमभिवीक्ष्यपाशहस्तंवदतियमः खलुतस्यकर्णमूले ॥ परिहरमधुसूदनप्रपन्नान्प्रभुरहमन्यनृणांनवैष्णवानाम् ॥ १ ॥ इत्यादिसन्दर्भदर्शनाच्चेतिदिक् ॥ पाद्मवचनेषु ॥ **यदेति** ॥ भागवती दैवी सृष्टिः ॥ दैवीसंपद्विमोक्षायेतिभगवद्वाक्यान्मोक्षयोग्यापि यदा कलौ भवति तद्दोषवती संपद्यते

तदा भगवान्विष्णुरंशरूपेण वा अंशेन सह स्वयमेव वा स्वस्वरूपं प्रकटयति॥तं प्रकटितात्मानमाश्रित्य ततउपदेशादिकं प्राप्येति भावः ॥ सर्वे जना ब्राह्मणादयो भगवद्भक्तिभाजो भवन्ति ॥ इह विष्णुरिति निर्देशादिदं विष्णुस्वाम्याख्यभगवदवतारपरमिति केचित् शिष्टाः ॥ भगवान्स्वयं विष्ण्वाख्यं स्वात्मानं सृजतीति तेषामाशयः॥ अनचिचेति सकारद्वित्वम् ॥ शङ्करोनीललोहितइत्यस्य शङ्कराचार्यपरत्वं वदता भवता त्विदं न शक्यं प्रत्याख्यातुम् ॥ अस्माकं तु नैवं व्याख्याने निर्बन्धः ॥ चत्वारस्त इति ॥ इतः पूर्वं संप्रदायविहीनायेमन्त्रास्तेनिष्फलामताः ॥ अतःकलौभविष्यन्तिचत्वारःसंप्रदायिनः ॥ श्रीब्रह्मरुद्रसनकवैष्णवाःक्षितिपावनाः ॥ चत्वारस्तेकलौभाव्याइति पठ्यते॥ उत्कले देशविशेषे ॥ पुरुषोत्तमात् श्रीजगन्नाथक्षेत्रात्तदधिष्ठातृजगन्नाथतोवा प्रसिद्धाभविष्यन्तीत्यर्थः ॥ इह श्र्यादिसंबन्धिनः संप्रदायाः क्रमेण रामानुजमाध्वविष्णुस्वामिनिम्बार्काख्याभिर्विदिता ज्ञेयाः ॥ रामानुजानांसरणीरमातोगौरीपतेर्विष्णुमताऽनुगानाम् ॥ निम्बार्कगानांसनकादितश्चमाध्वानुगानांपरमेष्ठितश्चेत्युक्तेः ॥ तत्राऽस्माकं रुद्रसंप्रदायः ॥ अतएव तस्य भक्तिदातृत्वं तत्र तत्र वर्णयन्ति श्रीमदाचार्याः ॥ यथा पुरुषोत्तमनामसहस्रे महादेवस्वरूपश्च भक्तिदाताकृपानिधिरिति॥ निबन्धे चतुर्थस्कन्धविवरणेपि सायुज्याधिकारिणां प्रचेतसां श्रीशिवकर्तृकोपदेशादेव सिद्धिर्दर्शिता ॥ तपसासाधनेतस्यनबन्धोभवतीतिहि ॥ तत्रापिकृष्णसेवायांकृतार्थत्वंहिसर्वथा ॥ ईतितान्सर्वथाशुद्धान्विलोक्येशोहरिप्रियः ॥ प्रोवाचसर्वसन्देहवारकंसर्वबोधकम् ॥ हेतुपूर्वंस्तोत्रमाहशीघ्रंतुष्यतियद्धरिः ॥ अयमेवोपदेशोहिविश्वासार्थंपरंपरेति ॥ एतद्विवरणे च श्रीप्रभुचरणाः " तत्रापि विशेषमाहुः ॥ तपसेति ॥ तस्यपित्रादेशस्यतपसासाधनेप्रवृत्तिमार्गत्वेनस्वस्यसर्वकरणजबन्धोयःसन भविष्यतीतितपसिप्रवृत्ताः ॥ तत्रापिनकेवलंतावन्मात्रत्वंकिन्तुतपस्यपिपुरुषोत्तमभजनंकरिष्यामस्तेनकृतार्थाभविष्यामइतिनिश्चयवन्तः ॥ अतइत्थंभूतत्वेनाऽधिदैविक्यपिशुद्धिःसंपन्नेतिसर्वप्रकारेणशुद्धाञ्ज्ञात्वातान्प्रतिप्रोवाचेत्यर्थः ॥ ईशत्वेनान्तरज्ञानम्॥ तत्रापिहरिभक्तिज्ञानंहरिप्रियत्वेन॥ अन्यथाकथमकस्माद्धरिागच्छेत् " इत्याद्याहुः ॥ द्वादशस्कन्धनिबन्धेच श्रीमदाचार्याः॥ योधिकारीभक्तिमार्गेतत्प्रसादमवाप्यहि ॥ भक्तश्चेत्सर्ववित्स्वस्थस्तृतीयःसउदाहृतः ॥ भक्तियुक्तोमहादेवस्तांदातुंशक्नुयात्तथा ॥ भक्तस्ययावान्संक्लेशःसमायेत्यपिरूपितम् ॥ भक्तिमार्गानुसारेणभक्तिनिष्ठेयमीरितेति ॥ एतद्व्याख्याने च श्रीपुरुषोत्तमचरणाः ॥ " एवंद्वितीयाध्यायार्थउक्तः ॥ तृतीयस्याहुः ॥ यइत्यादि ॥ एतेननारायणपरःप्रशान्तात्माइतितृतीयइत्युक्तंभवति ॥ नन्वत्रशिवदर्शनसंवादाद्युपनिबन्धनस्यकिंप्रयोजनमतआहुः ॥ भक्तियुक्तइत्यादि ॥ एतेनमहादेवेगुरुत्वबोधनायतदुपनिबन्धनमित्युक्तम् ॥ " इत्यादिव्याचक्षते ॥ एतेन शिवस्य भक्तिमार्गाऽऽचार्यत्वं प्रद्विषन्तः स्वमार्गाऽनभिज्ञा अस्मासु शिवद्वेषस्यारोपका-

श्वसर्वथैव प्रत्युक्ताः ॥ परेषां नारायणंपद्मभवंवसिष्ठमित्यादिवदस्माकमाचार्यपरंपरा-तु आदौश्रीपुरुषोत्तमंपुरहरंश्रीनारदाख्यंमुनिंकृष्णव्यासगुरुंशुकंतदनुविष्णुस्वामिनंद्रा-विडम् ॥ तच्छिष्यंकिलबिल्वमङ्गलमहंवन्देमहायोगिनंश्रीमद्वल्लभनामधामचभजेऽस्म-त्संप्रदायाधिपम् ॥ इति बोद्धव्या॥इयं च मिताक्षरादौ विज्ञानेश्वरादिभिरुदाहृतवचना-न्तरायां शाण्डिल्यसंहितायां भक्तिखण्डे पञ्चमाध्यायेऽपि दृश्यते॥यथा॥अथातःश्रूय-तांविप्राःसंप्रदायःपुरद्विषः ॥ एकदाशङ्करोदेवोगतोगोकुलमण्डलम् ॥ १ ॥ तत्रवृन्दाव-नेरम्येसच्चिदानन्दमन्दिरे ॥ त्रिभङ्गललितंदेवंकोटिमन्मथसुन्दरम् ॥ २ ॥ अनौपम्यंवे-णुधरंव्रजस्त्रीगणसेवितम् ॥ श्रुतिभिर्मुनिभिश्चैवसेव्यमानंमुदान्वितम् ॥ ३ ॥ प्रणिप-त्यमुदादेवंसामगानादतोषयत् ॥ जगतोहिसमुद्धर्तुंसंप्रदायस्यलब्धये ॥ ४ ॥ तस्मैदे-दौप्रसन्नात्मातत्रत्यानामनुग्रहात् ॥ सलब्ध्वापरमंलाभंस्वधामसंन्यवर्तत ॥ ५ ॥ पर-मानन्दसंमग्नोनृत्यंचक्रेदिगम्बरः ॥ समुपासततंदेवंतत्प्रहृष्टंभृतकौतुकः ॥ ६ ॥ नचाच-ष्टतदादेवोहत्वात्रिपुरमाहवे ॥ तदाहर्षसमाविष्टोनारदेनप्रसादितः ॥ ७ ॥ जगौतमेव-सन्मार्गंश्रुतंयच्छ्रीपतेर्मुखात् ॥ नारदोऽपिमहायोगीपरमानन्दपूरितः ॥ ८ ॥ अलंप्रसा-दतःप्रादाद्व्यासायामिततेजसे ॥ कौण्डिन्यायमयाप्रोक्तोगर्गाचार्यमहात्मने ॥९ ॥ व्या-सस्तुवक्तिपुत्रायब्रह्मरातायविष्णवे ॥ अथोकलौसंप्रवृत्तेपूर्वाचार्यैस्थागतैः ॥ १० ॥ भविष्यतिपराभक्तिःकिञ्चित्कालंमुनीश्वराः ॥ वेदवेदान्ततत्त्वज्ञैर्वैष्णवैर्ब्राह्मणोत्तमैः ॥ ११ ॥ निर्वाहितातितोभक्तिर्लुप्तप्राया भविष्यति ॥ ततोपिश्रीपतेरस्यस्वीयानुग्र-हतोहरेः ॥ १२ ॥ माथुरेमण्डलेतत्रगोकुलेऽस्मिन्गिरावपि ॥ प्रादुर्भविष्यतिमहा पुरुषैरुपभाविता ॥ १३ ॥ तस्याःसंप्रीतयेतत्रसंप्रदायंरिरक्षिषुः ॥ महात्मासुमहाते-जाभगवद्वदनोदितः ॥ १४ ॥ प्रादुर्भविष्यतिततःसर्वश्रुतिविशारदः ॥ योगीयोगीश्वर-स्तंवैसंप्रदायंवदिष्यति ॥ १५ ॥ भगवानपितंसाक्षादुपदेष्टानिजागमम् ॥ आसाद्यगो-कुलंधामभक्तिसंवर्धयिष्यति॥१६॥ गिरिराजंततःप्राप्यमहात्मैकान्तसंश्रयैः॥ निर्गुणंभ-क्तिमार्गंहिवर्धयन्विचरिष्यति ॥ १७ ॥ निजात्मप्रेमसंपूर्णैर्भगवद्ध्यानतत्परैः ॥ तद्र-साप्लुतचित्तानांस्वाचारपरिवर्त्तिनाम् ॥ १८ ॥ सर्वभूतैकसुहृदांवेदप्रामाण्यमीयुषाम् ॥ विरलेष्वेवभवितासंप्रदायोऽत्यनुत्तमः ॥ १९ ॥ आश्चर्याणिचरित्राणिकृत्वानानाविधा-न्यसौ ॥ स्थापयिष्यतिवैतस्याःपारंपर्यांक्रमंकुलम् ॥ २० ॥ समुत्धृत्यततोजीवान्हरेः प्रीतिंकरिष्यति॥ ततःकतिपयेकालेकालदोषप्रभावतः ॥ २१ ॥ विलयंयास्यतिपन्थाः कापट्येनाकुलःपरः ॥ परदोषान्वितैःपुम्भिर्निजाचार्यपराङ्मुखैः ॥ २२ ॥ इत्येवंहि-सामाख्यातःसंप्रदायःपुरद्विषः॥ अयमेवपरःपुण्यो भक्तिशास्त्रैकसम्मतः॥एतन्माहात्म्य-मतुलंनालंवक्तुंचतुर्मुखः ॥ २३ ॥ अयंहरेःश्रीव्रजदेवतायाअनुगृहीतःकिलसंप्रदायः ॥ आविर्बभौविष्णुगृहीतवेदैर्विभावयध्वंत्रिपुरारिसंमतम् ॥ २४ ॥ अत्र विष्णवे विष्णु-स्वामिनाम्ने इत्यर्थः ॥ भगवद्वदनोदितः श्रीवल्लभाऽऽचार्यः ॥ श्रीमद्गोवर्द्धनधरवदन-वैश्वानररूपत्वात् ॥ एतदनुकूलैः श्रुतिस्मृतिपुराणनारदपञ्चरात्रादिवाक्यैर्विस्तरस्तु-

चरित्रचिन्तामणिसंप्रदायप्रदीपश्रुतिरहस्यादिषु मामके सत्सिद्धान्तमार्तण्डे च द्रष्टव्यः॥

एतेन शापेन चेतसि तमसः प्रवेशस्तासु योनिषु कलौ जन्म च तमःप्रवेशेनमोहइत्यादिकं सर्वमपास्तम् ॥ शप्तब्राह्मणसंभवस्य कूर्मपुराणे संबभूवुरित्यादिना पूर्वमेवोक्तत्वात् ॥ *

## टीका

सहस्राक्षे एवञ्चशापेनेत्यादिं तासुँयोनिष्विति चोक्तमित्यन्तं भागं दूषयन्ति ॥ एतेनेत्यादिना पूर्वमेवोक्तत्वादित्यन्तेन ॥ अयं भावः ॥ तदुक्तः क्रमः केवलं कपोलकल्पितएव ॥ तथाहि ॥ अत्र शापेन तमःप्रवेशउक्तः कौर्मे तु तमसाऽऽविष्टमनसोनिन्दकान्दृष्ट्वा शशापेत्युक्तम् ॥ अत्र तासु योनिषु जन्म द्वितीयं फलमुक्तम् ॥ पुराणे तु द्वेषाद्युत्तरकालिकं तत् ॥ एवं पुराणे कुशास्त्राऽऽसक्त्यादित्रयस्य कलिजपरिपीडाकारणत्वं बोधितम् ॥ इह तु प्रत्युत तस्य तत्कार्यत्वम् ॥ पुराणे शिवद्वेषः शिवतन्मार्गयोर्निन्दा च शापहेतुतयोपात्ता ॥ अत्र तु शापजन्यतया ॥ जनमोहकत्वं तु पुराणोक्तान् हृषीकेशतद्भक्तनिन्दकत्वादिधर्मानप्रकाश्य मध्यतएवोपात्तम् ॥ पुराणे वृथाधर्मंचरिष्यन्तीत्यनेन कापालिकादिषु व्यर्थधर्मस्याऽचरणमेव बोध्यते नतु श्रौतस्मार्तधर्मस्य वृथात्वमतः पूर्वोक्तरीत्या तदुदाहृतपुराणस्यैव विरोधस्तदुक्तक्रमेऽवर्णितोऽपि सुबोधएव सुधियाम् ॥ तस्माद्वैष्णवप्रद्वेषादेवेदं कपोलकल्पितनानाफलकथनं सर्वजनमोहनार्थम् ॥ मोहयन्तिजनान्सर्वान्दर्शयित्वाफलानिवैइति तत्रैवो

---

## सहस्राक्ष

*एवंच शापेन चेतसि तमसः प्रवेशः तासुयोनिषुकलौजन्मच तमःप्रवेशेन मोहः तेनपरस्त्र्यासक्त्यादिप्रयुक्तकलिजपापपरिपीडितत्वं कुशास्त्राऽऽसक्तचेतस्कताच तयामिथ्याऽधीतसमाचारता मिथ्याज्ञानप्रलापिता शिवद्वेषः शिवनिन्दा शिवोक्तवेदार्थनिन्दा ऐहिकाऽऽमुष्मिकानां फलानां बोधनेन जनमोहकत्वं च मिथ्याऽधीतसमाचारत्वादिभिश्च यथायथं ब्राह्मणैरसंभाष्यत्वं धर्माचरणस्य वृथात्वं तपोबलहानिस्त्रयीबाह्यत्वं विष्णोःपराङ्मुखत्वं ततोनरकेपातइति ॥ नच नहि निन्दा निन्द्यं निन्दितुं प्रवृत्ता किन्तु स्तुत्यं स्तोतुमिति न्यायेन शप्तविप्रनिन्दायां नैततात्पर्यमिति वाच्यम् ॥ तत्रतत्र स्तुत्यन्तराऽभावेनैतन्न्यायाऽनवतारात् ॥ किञ्च शापादिविषयेऽपि तन्न्यायाऽवतारे पुराणकथानां बहुविप्लवः स्यादिति दिक् ॥ अत्र ब्राह्मणैरित्युपलक्षणं तेन देव्या शप्तैरित्यपि बोध्यम् ॥ अत्रचेदानीम्पदमध्याहृत्य पुरा ब्राह्मणैरिति पदद्वयमावर्त्यैत्थं व्याख्येयम् ॥ पुरा पूर्वजन्मनि ब्राह्मणैस्तत्रैव ब्राह्मणैः शप्तैरिदानीं विप्रकुलोद्भवैरिति ॥ अनेनेदानीं विप्रकुले जन्मसत्वेऽपि ब्राह्मण्यनियमोनेति सूचितम् ॥ अतएव कौर्मे विप्राणां कुलसम्भवा इति तासु योनिषु इति चोक्तम् ॥

केरिति दिक् ॥ यच्च कौर्मस्थे शापप्रकरणे नहिनिन्देतिन्यायस्याऽनवतारस्तत्रतत्र स्तुत्यन्तराऽभावादुक्तः सोप्यविचारात् ॥ यत्रयत्र प्रकरणे स्थितानि वचांसि त्वयो-पात्तानि तत्रतत्र ( अ०२७ श्लो० १६ ) तस्मात्संपरिहर्तव्यानिन्दापशुपतौद्विजाइति ॥ ( अ०३० श्लो०३८ ) तस्मात्सर्वप्रयत्नेनप्राप्यमाहेश्वरंयुगम् ॥ विशेषाद्ब्राह्मणानुरुद्र-मीशानंशरणंव्रजेति ॥ ( अ०१५ श्लो० ८१।८२ ) तस्मादनादिमध्यांतंविज्ञायपरमे-श्वरम् ॥ मनसाकर्मणावाचासमाराधययत्नतः ॥ ८१ ॥ यत्नात्परिहरेशस्यनिन्दां-स्वात्मविनाशिनीम् ॥ भवन्तिसर्वदोषायनिन्दकस्यक्रियाहिताः ॥८२॥ इति यथायथं निन्दानिषेधादिविधीनां सत्वेन शापादिकथनस्य तत्तद्विधिवाक्यविधेयार्थस्तुतौ ता-त्पर्यमिति कल्पनेऽपि बाधकाऽभावात् ॥ यथा “ स्तेनंमनोनृतवादिनीवाक् ” इति निन्दावचनस्य हिरण्यस्तुत्यर्थत्वम् ॥ अतएव प्रमाणाध्यायेऽर्थवादपादे ( सू०११ ) “ रूपात्प्रायात् ” इत्यत्र शबरस्वामी “ हिरण्यंहस्तेभवतिअथगृण्हाति-इतिसाका-ङ्क्षत्वादस्यविधेःशेषः ॥ स्तेनंमनोनृतवादिनीवाक्इतिनिन्दावचनंहिरण्यस्तुत्यर्थेन॥ यथाकिंकृषिणादेवदत्तएवभोजयितव्यः” इत्याह ॥ यथावा तैत्तिरीयसंहितायां ( कां०१ प्रपाठक ५ अनु०१ ) “ सोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वम् ॥ यदश्रूवशीयत-तत् ॥ १ ॥ रजतꣳहिरण्यमभवत्तस्माद्रजतꣳहिरण्यमदक्षिण्यमश्रुजꣳहियोबर्हिषिददा-तिपुराऽस्यसंवत्सराद्गृहेरुदन्ति ” इति निन्दायाः “ तस्माद्बर्हिषिनदेयं ” इति विधेः शेषत्वम् ॥ तेन च देयस्य हिरण्यस्य स्तुतिः ॥ अतएव तत्र ( सू० १० ) “ गुणवादस्तु ” इत्यत्र भाष्ये “ अथसोऽरोदीत् इतिकस्यविधेःशेषःतस्माद्बर्हिषिरज-तंनदेयंइत्यस्य ” इत्यादिना पदानां साकाङ्क्षत्वं प्रदर्श्य “ योबर्हिषिरजतंदद्यात् ॥ पु-राऽस्यसंवत्सराद्गृहेरोदनंभवतीत्यस्यहेतुत्वेनाऽयंप्रतिनिर्दिश्यतेतस्माद्बर्हिषिरजतंनदेयं-इति ॥ एवंसर्वाणिसाकाङ्क्षाणिकथंविधेरुपकुर्वन्तीति ॥ गुणवादेनरोदनप्रभवंरजतं-बर्हिषिददतोरोदनमापद्यते ॥ तत्प्रतिषेधस्यगुणःयत्अरोदनमिति ” इत्याद्युक्तं ॥ तथा-ऽत्रापिशिवनिन्दादिकरणे दुष्फलसम्भवात्तन्नकार्यमिति ॥ तेन च शिवाराधनं स्तुत्य-मित्येव तात्पर्यं ॥ न तु वैष्णवसंप्रदायवर्तिनां निन्दायाम् ॥ एवमुदिताऽनुदितहोम-स्थलेऽपि ( तैत्तिरीयब्राह्मणे अष्टक २ अध्याय १ अनुवाक २ ) “ आग्नेयीवैरात्रिः॥ ऐन्द्रमहः ॥ यदनुदितेसूर्येप्रातर्जुहुयात् ॥ उभयमेवाऽऽग्नेयꣳस्यात् ॥ ” इत्यनुदितहोम-निन्दायाः ॥ “ उदितेसूर्येप्रातर्जुहोति ॥ तथाग्नयेसायꣳहूयते ॥ सूर्यायप्रातः ॥ ” इति विहितोदितहोमस्तुतावेव तात्पर्यं नतु निन्द्यमानाऽनुदितहोमनिन्दने तथाऽ-त्रापि शिवसमाराधनएव तात्पर्यं न तु शिवनिन्दनइतिशिवम् ॥ वेदे ( तैत्तिरीय-संहिता कांड २ प्रपा० ६ अनुवाक ६ ) अग्नेस्त्रयोज्यायाꣳसोभ्रातरआसन्नित्यु-पक्रम्य “ तंमत्स्यःप्राब्रवीत् तमशपद्धियाधियात्वावध्यासुर्योमाप्रावोचइति ॥ तस्मान्मत्स्यंधियाधियाघ्नन्तिशप्तोहि ” इत्याम्नातासु शापादिकथास्वपि मीमांसकैः पुराकल्पार्थवादतायाअङ्गीकाराच्च ॥ पुराणेषु शापस्थलेषु तन्यायाऽनवतारं वदन्

भवव्रतधरायेचेत्यादिसन्दर्भमपि निर्बाधमेव मन्यते भवान् ॥ यत्तु देव्या शप्तै रित्यपि बोध्यमित्युक्तं तत्र देवीकर्तृकशापाऽऽख्यायिका तु न कौर्मे प्रसिद्धा प्रत्युत तद्विरुद्धा च ॥ अतोऽत्र मानभूता साऽन्वेष्टव्यैव ॥ यच्च मद्विषन्तोऽभ्यसूयकाइत्याद्युक्ताऽसुरधर्मशालितया वैष्णवप्रद्वेषादेव तेष्वब्राह्मण्यं ध्वनयितुं प्रलपितं तत्तु स्वस्य तथात्वादेव ॥ चोरोवेत्तिजगच्चोरमिति न्यायात् ॥ नहि विरागिपदवाच्येषु नाममात्रयतिष्वाऽऽधुनिकेषु वर्णादिनियमः कोप्यस्तीति सुप्रसिद्धमेवैतत् ॥ तासु योनिष्विति वाक्यात्तु पश्वादियोनिष्वेव जन्म स्वरसतोवगम्यते नतु वर्णसाङ्कर्यम् ॥ अतः स्वजातिख्यापनमात्रफलकोयं प्रयासः ॥ तदुक्तवचसां वयं त्वऽविषया एवेति प्रागेव समर्थितमतोस्माभिरत्र यदिचोरस्यजननींभण्डःपरिणयेत्क्वचित् ॥ तर्हिलाभोप्यलाभोवाशिष्टानांतेनकोभवेदिति न्यायएवानुसरणीयः ॥

यत्तुमोहयन्निजनान्सर्वानितिकौर्मवाक्येन तेषांमोहनसामर्थ्यावधारणादित्युक्तं तदपि तादृशवाक्यतः पूर्वं पठितानां कुर्वन्त्यवेददृष्टानिकर्माणिविविधानिच ॥ स्वधर्मेतुरुचिर्नैवब्राह्मणानांप्रजायते ॥ कुशीलचर्यापाषण्डैर्वृथारूपैःसमावृताः ॥ विनिन्दन्तिहृषीकेशंब्राह्मणान्ब्रह्मवादिनः ॥ वेदबाह्यव्रताचाराद्दुराचारावृथाश्रमाः ॥ तमसाविष्टमनसोबैडालव्रतिकाधमाइत्यादिवाक्यानां पर्यालोचनया धनार्जनादिनिरतेषु शान्तिदान्त्यादिस्वधर्मरुचिहीनेषु फलाजनककाषायवस्त्रधारणशिखासूत्रवर्जनादिना वृथारूपधरेषुब्रह्मवादिब्राह्मणनिन्दकेषु स्वाश्रमधर्मानाचरणेन निष्फलीभूताश्रमेषु वाममार्गीयमारणोच्चाटनविद्वेषणाद्यनेकफलप्रदर्शकेषु केषुचिदुभयभ्रष्टेष्वेव तादृशप्रकरणोक्तसर्वधर्मसंपन्नेषु मोहनसामर्थ्यमवधार्यते नतु मोक्षरूपफलप्रदर्शकेष्वस्मासु ॥ अस्मद्दर्शितमोक्षरूपफलस्यैकत्वेन तत्रफलानीति बहुवचनस्यानुपपन्नत्वात्

## टीका

सहस्राक्षे॥ मांमच्याविषतेतीत्यादिमुदात्हतमेवेत्यन्तंमार्गंदूषयन्ति॥ यत्तुमोहयन्ती-त्यादिना अनुपपन्नत्वादित्यन्तेन ॥ मोक्षरूपफलप्रदर्शकेष्विति ॥ तस्य व्यासदर्शनानुसारित्वात् ॥ तत्रच "अथातोब्रह्मजिज्ञासेतिप्रथमसूत्रएवातःशद्बेन यस्मात्कर्मादिभ्योब्रह्मज्ञानमेव पुरुषार्थसाधकमतस्तज्ज्ञानाय विचारारम्भस्य प्रतिज्ञानादितिभावः॥ यत्तु सहस्राक्षेऽसंभाष्यत्वमुक्तं तत्तु भगवद्भक्तद्विषि तन्निन्दैकजीविते तस्मिन्नेव जाघटीति॥ कौर्मपूर्वखण्डे यत्र सप्तविंशाध्याये द्विषन्तोदेवमितिवाक्यं पठ्यते तत्रैव तस्मात्संपरिहर्तव्यानिन्दापशुपतौद्विजाः॥ कर्मणामनसावाचामद्भक्तेष्वपियत्नतइति वदता भगवता शिवनिन्दावत्तद्भक्तमात्रनिन्दायाविशेषतः प्रतिषेधात् ॥ नत्वस्मासु ॥ अस्माकं शिवे द्वेषलेशस्याप्यभावात् ॥ प्रत्युतपूर्वोक्तरीत्या श्रीशिवोक्तमार्गस्यैवास्माभिरनुसरणाच्च ॥ कौर्मे च पूर्वखण्डद्वादशाध्याये हिमाचलं प्रति गिरिजया श्रुतिस्मृत्युदितंसम्यक्कर्मवर्णाश्रमात्मकम् ॥ अध्यात्मज्ञानसहितंमुक्तयेसततंकुरु ॥ धर्मात्सञ्जायतेभक्तिर्भक्त्यासंप्राप्यतेपरमित्यादिना भवदनभिमतमस्माभिरेवाभिमतं ज्ञानकर्मसमुच्चयं भक्तेरेव परप्राप्तिसाधनत्वमित्यादि यावदध्यायसमाप्ति उपदिशन्त्या नचवेदाहतेकिञ्चिच्छास्त्रंधर्माभिधायकम्॥ योन्यत्ररमतेसोसौनसंभाष्योद्विजातिभिरिति कथनात्कौर्मपाद्मोत्तरखण्डादिप्रसिद्धवेदविरुद्धकुशास्त्ररतानां त्वादृशामेवासंभाष्यत्वं प्रप्यते नतु सर्वात्मना वेदमनुसरतां वैष्णवानामिति किंबहुना॥

पुराणानां तामसत्वेनाऽनादेयत्वं राजसत्वेन सात्विकत्वेन वाऽऽदेयत्वमित्यत्रापि नाग्रहोस्माकं सर्वेषामेव पुराणानां व्यासप्रणीतत्वेन समत्वात् ॥ पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः॥ वेदाःस्थानानिविद्यानांधर्मस्यचचतुर्दशेति याज्ञवल्क्यवाक्याच्च सर्वेषांधर्मस्थानत्वबोधनात् ॥ ननु सर्वेषां पुराणानां समत्वेन तुल्यबलतया तत्तत्पुराणस्थपरस्परविरुद्धवाक्यैः सत्प्रतिपक्षवत्परस्परप्रतिबद्धकार्यैः प्रमितिरेव न स्यादुभयत्रा प्रामाण्यज्ञानात्संशयोवा स्यादितिचेन्न ॥ कल्पभेदेन विरोधपरिहारस्य सर्व-

---

### सहस्राक्ष

* माप्रच्याविषतेति ॥ मोहयन्तिजनानिति कौर्मवाक्येन तेषां मोहनसामर्थ्यस्याऽवधारणात् ॥ तान्प्रतीति ॥ नरान्प्रतीत्यर्थः ॥ एतेन शप्तानामसंभाष्यत्वं सूचितम् ॥ तत्र मानन्तु द्विषन्तोदेवमित्यादिकौर्मवाक्यमुदाहृतमेव ॥ ३ ॥

त्रैव संभवात् ॥ अतएव नचवैष्णवग्रन्थेष्वित्यारभ्यस्तुत्यलाभा-
दित्यन्तोवाक्यनिचयः स्वकल्पितपूर्वपक्षसमाधानरूपउन्मत्तप्र-
लपिततुल्योनादेयः॥सतिकुड्येचित्रमिति न्यायादित्यलं पल्लवेन

## टीका

सहस्राक्षे*नचवैष्णवग्रन्थेष्वित्यादिं स्तुत्यलाभादितिदिगित्यन्तं भागं मूलच्छेदेवृक्षच्छे-
दइतिन्यायेन परिहरन्ति॥ पुराणानांतामसत्वेनेत्यादिना अलंपल्लवेनेत्यन्ते-

---

## सहस्राक्ष

* नच वैष्णवग्रन्थेषुधृतेन मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैवच ॥ आग्नेयं च षडेतानि तामसानि निबोध मे ॥ ७ ॥ इति पाद्मोत्तरखण्डवाक्येन कौर्मस्य तामसतया सात्विकामोक्षदाःप्रोक्ताराजसाःस्वर्गदामताः ॥ तथैवतामसादेविनिरयप्राप्तिहेतवः ॥ १ ॥ इति तत्रधृतेन पाद्मवाक्येन तामसस्य निरयहेतुत्वेन च शिष्टैस्तदुक्ताऽर्थस्याऽग्राह्यत्वमिति वाच्यम् ॥ लिङ्गार्चनचन्द्रिकादिशैवग्रन्थधृतेन तत्र शैवानि शैवंच भविष्यच्च द्विजोत्तमाः ॥ मार्कण्डेयं तथा लैङ्गंवाराहंस्कान्दमेवच ॥ मात्स्यमन्यत्तथा कौर्मं वामनं च मुनीश्वराः ॥ ब्रह्माण्डंच दशेमानीति ब्राह्मं पाद्मं ब्रह्मणो द्वे इतिचोपक्रम्य पठितेन् दशशैवपुराणानि सात्विकानिविदुर्बुधाइत्यनेन ब्राह्मे तु राजसे वैश्यसेव्ये इत्यनेनच स्कान्दवाक्येन सात्विकतया निश्चितस्य कौर्मस्य राजसतया निश्चितेन पाद्मेन शिष्टाऽनादेयार्थकताया वक्तुमशक्यत्वात् ॥ अतएव वैष्णवग्रन्थधृतेन वैष्णवं नारदीयं च तथा भागवतं शुभम् ॥ गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥ १ ॥ षडेतानि पुराणानि सात्विकानि मतानिमे इतिपाद्मेनैव सात्विकतयोक्ते नारदीये एतत्कूर्मपुराणं तु चतुर्वर्गफलप्रदम् ॥ पठतां शृण्वतांनृणां सर्वोत्कृष्टगतिप्रदम् ॥ १ ॥ इत्यादिनोक्तः कौर्मपुराणतच्छ्रवणादिमहिमासंगतस्तस्य तामसत्वेतु सन सङ्गच्छेत ॥ येषां श्रवणमात्रेणेति वक्ष्यमाणतदध्यायोपक्रमवाक्यविरोधात् ॥ तामसस्य निरयप्राप्तिहेतुत्वाच्च ॥ एवञ्च पुराणनिन्दावाक्यं पाद्मे प्रक्षिप्तमेव ॥ किञ्च पाद्मे मात्स्यमपि तामसेष्वेव गणितम् ॥ तत्र सात्विकेषु गणिते भागवते तु मात्स्यमुपक्रम्य पुराणं वेदसंमितमित्युक्तम् ॥ अतएवाऽस्य महतोभूतस्य निश्वसितमेतद्यदृग्वेदोयजुर्वेदः सामवेदोऽथर्वाङ्गिरसइतिहासपुराणं विद्योपनिषदइत्यादिना बहुषु स्थलेषूपनिषत्सु सामान्यतोवेदवत्पुराणानामपि ब्रह्मनिश्वसितत्वादिश्रूयते ॥ अतएवच पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ॥ वेदाःस्थानानिविद्यानांधर्मस्यचचतुर्दशेति याज्ञवल्क्यस्मृतावविशेषेण पुराणानां विद्याधर्मयोः स्थानत्वमुक्तम् ॥ अतएव सात्विकतया त्वदभिमते नारदीयेऽष्टादशानामपि प्रत्येकं महिमा वर्णितः ॥ तत्सर्वञ्च तादृशवाक्यस्य प्रामाणिकत्वे न संगच्छते ॥ अतएव पाद्मे बङ्गदेशजकायस्थविशेषेण प्रक्षेपः कृतोस्तीति विदुषां किंवदन्ती संगता ॥ अतएव व्यासवाक्येषु न विश्वासोच्छेदः ॥

न॥ पल्लवेन विस्तरेण॥ पल्लवोऽस्त्रीकिसलयेविटपेविस्तरेवनइतिमेदिनी॥ अयं भावः॥ नहिपाद्मसंमतः सात्विकादिभावः पुराणानां प्रतिषिध्यते॥ व्यासोक्तस्य प्रतिषेधायोगात् किन्तु तामसभावकथनमुपलभ्य कैश्चित्कल्प्यमानं तेषां पुराणानामनादेयत्वमेव प्रतिषिध्यते ॥ व्यासस्यानादेयत्वे तात्पर्याभावात् ॥ सर्वथाऽनादेयत्वे तन्निर्माणस्यैवानर्थक्यप्रसङ्गात्॥ वक्ष्यमाणतैत्तिरीयशतपथछान्दोग्यश्रुतिभ्यः पुराणन्यायमीमांसेत्यादिस्मृतिभ्यश्च साधारण्येन यावत्पुराणानां प्रामाण्यसिद्धेश्च ॥ नचोपादेयत्वे शृणुदेविप्रवक्ष्यामितामसानियथाक्रमम् ॥२॥ येषांश्रवणमात्रेणपातित्यंज्ञानिनामपीतिपाद्मोत्तरखण्डवाक्यविरोधः शङ्क्यः ॥ तदर्थाऽनवबोधात् ॥ अत्र हि येषामिति कर्मणि षष्ठी ॥ यत्कर्मकश्रवणमात्रेणेत्यर्थः॥ मात्रपदं सात्विकादिश्रवणं वेदसात्विकपुराणाद्यविरोधेन तामसानामपि मननं च व्यवच्छिनत्ति ॥ तथाच यदि सर्वाणि श्रूयेरन्यदि वा वेदोपबृंहकतया वेदाविरोधेन सात्विकपुराणाद्येकवाक्यतया च तामसानि मननविषयीक्रियेरन् तदा न पातित्यम् ॥ यदा तु केवलान्येव श्रूयेरन् नाप्युक्तरीत्या मन्येरंस्तदा त्वापाततो विरुद्धार्थबोधाच्छब्दज्ञानवतामपि स्वार्थच्यवनात्पातित्यमिति त्वदयम् ॥वस्तुतस्तु शृणुदेविप्रवक्ष्यामीति प्रतिज्ञा न तामसस्मृतिपुराणविषयिका ॥ तत्र ( श्लोक १ ) तामसानिचशास्त्राणिसमाचक्ष्वममानघ ॥ संप्रोक्तानीहतैर्विप्रैर्भगवद्भक्तिवर्जितैः ॥ तेषांनामानिक्रमशःसमाचक्ष्वसुरेश्वरेति पार्वत्या तमःसमाविष्टऋषिविशेषप्रणीतशास्त्राणामेव पृष्टत्वात् ॥ शिवेनापि शृणुदेवीति प्रति-

---

प्रक्षेपकर्त्ता मूर्खइत्यपिभाति ॥ अतएव तथैव स्मृतयः प्रोक्ता ऋषिभिस्त्रिगुणान्विताः ॥ सात्विकाराजसाश्चैव तामसाः शुभदर्शने ॥ १ ॥ वासिष्ठं चैव हारीतमिति तदीयसर्वपुस्तकस्थपाद्मपाठे लिङ्गनियमो न दृश्यते ॥ अग्रेपि भारद्वाजं काश्यपं च सात्विकामोक्षदाः शुभाः इत्यादिना स्मृतीनां क्लीबत्वेन निर्देशः सात्विकराजसतामसशब्दानां पुलिङ्गेनैव निर्देशोऽस्ति॥ एवञ्च स्थालीपुलाकन्यायेन विज्ञानभिक्ष्वादिधृततदध्यायस्थश्लोकान्तरोक्तशास्त्रान्तरनिन्दापि हेयैव ॥ प्रधानकारणवादाद्यप्रामाण्यं तु व्यासादिदर्शितप्रकारान्तरेण बोध्यम् ॥ तस्मान्मेषु पुराणादिषु विदुषां प्रक्षेपसंभावना प्रमाणान्तरविरुद्धांऽशोपलब्धिर्वा तेषु प्रमाणान्तरविरुद्धांऽशोहेयएव अंशान्तरं तु सतिसंवादे ग्राह्यम् ॥ एवञ्च लिङ्गार्चनचन्द्रिकादिधृतस्कान्दवाक्यस्याऽपि यदि प्रक्षिप्तत्वमुच्यते नारदादिपुराणान्तरविरोधात्तर्ह्यपि न नोविद्वेषः ॥ यत्तु स्तुतिनिन्दारूपद्विविधवाक्यदर्शनेन कश्चिदंशोहेयः कश्चिद्ग्राह्यइति ॥ तन्न ॥ स्कान्दवाक्ये शैवेतरांऽशनिन्दायां पाद्मवाक्ये वैष्णवेतरांशनिन्दायां च तात्पर्येण बहुविप्लवापत्तेः ॥ अतात्पर्यविषयहानोपादानस्वीकारस्तु न युक्तोनिर्मूलत्वात् ॥ पाद्मवाक्यानामन्त्यसंगत्या तद्विरोधस्याऽकिञ्चित्करत्वाच्च ॥ नहिनिन्दानिन्द्यमितिन्यायेनाऽपि न पाद्मवाक्यमुदाहरतां संतोषसंभावना ॥ शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् ॥ येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि इत्युपक्रम्यनिन्दायामेव समाप्त्या स्तुत्यलाभादितिदिक् ॥

ज्ञाय प्रथमंहिमयाप्रोक्तंशैवंपाशुपतादिकम् ॥ २ ॥ मच्छक्त्यावेशितैर्विप्रैःसंप्रोक्तानि-
ततःपरम् ॥ कणादेनतुसंप्रोक्तमित्यादिना तेषामेव कथनाच्च ॥ अग्रेच तदुपसंहृत्य
तामसपुराणकथनं तादृशस्मृतिकथनं च पृथक्प्रतिज्ञातम् ( श्लो० १३ ) शास्त्रा-
णिचैवंगिरिजेतामसानिनिबोधमे ॥ पुराणान्यपिवक्ष्यामितामसानियथाक्रममिति
( श्लो० २२ ) तथैवस्मृतयः प्रोक्ताऋषिभिस्त्रिगुणान्विताइतिच ॥ अत्र एवमनेन
प्रकारेणोक्तानि शास्त्राणि तामसानि निबोध जानीहीतिनिन्द्यशास्त्रकथनस्योपसंहारः॥
ननु तर्हि सात्विकत्वादिना विभागः किंप्रयोजनकइतिचेदुच्यते ॥ सर्वेषामेव जीवा-
नां भगवदंशत्वादिना तौल्येपि व्युच्चरणोत्तरं क्रीडाहेतुवैचित्र्यार्थं प्राधान्येन तत्तद्गु-
णोपहिततयातेषां त्रैविध्यस्य ( बृहदारण्यके अ० ७ ब्रा० २ पृ० ९६४ ) "त्रयाः
प्राजापत्याः" त्रिविधाभवतिश्रद्धादेहिनांसास्वभावजा ॥ त्रिविधाजीवसंघास्त्वित्या-
दिश्रुतिस्मृतिनारदपंचरात्रादिवचनैः सिद्धत्वेन व्यासस्य च सर्वक्षेमार्थं प्रवृत्तत्वेन
तादृशतादृशजीवबोधानुकूलस्तत्तदधिकृतविषयविशिष्टोवेदार्थस्तैस्तैः पुराणैस्तेन
निरूपितः ॥ अतउत्तमैस्तु वेदाविरोधेन सर्वैकवाक्यतया सिध्यन्नर्थएव ग्राह्यइत्येव
योग्यम् ॥ केवलतामसश्रवणे मननाभावे च तामसानुकूलविषयएव सिद्धांततया
गृह्येत ॥ यथा केवलकौर्मश्रवणे शिवादुत्पन्नयोः परस्परानपेक्षयोर्विधातृनारायण-
योरन्योन्यमहमेवेश्वरःकस्त्वमिति विवादादिः ॥ वस्तुतस्तु बहुश्रुतिबाधितमिदमिति
प्रहस्तवादादौ विस्तरः ॥ तस्य सिद्धांततया ग्रहणे च तदनुकूलमन्त्रानुष्ठाने वेदविरोधे
निरयप्राप्तिरपि नासंभाविता ॥ एतेन तथैव तामसादेविनिरयप्राप्तिहेतवइति स्मृतिवि-
शेषविषयकवाक्यमपि व्याख्यातम् ॥ एतत्कूर्मपुराणंत्विति नारदीयविरोधोप्येतेन
परिहृतः ॥ पठतां शृण्वतामिति केवलश्रवणस्यानुपादानात् ॥ सर्वस्य शिवस्य संबं-
धिन्याउत्कृष्टगतेः प्रदायकमितितुयुक्तमेव ॥ सर्वशब्दोपि शिवपर्यायः ॥ ईश्वरःशर्व-
ईशानइत्यत्राऽमरविवेकादिव्याख्यासु शर्वः सर्वइति शब्दद्वयस्वीकारात् ॥ शर्वस्तु
सर्वोभगवान्शंभुः कालंजरः शिवइतितत्रैव रामाश्रम्याप्युदाहृतान्नामविधानाच्च ॥
यत्तु पुराणंवेदसंमितमिति मात्स्यविषयकं भागवतवाक्यतयोक्तं तत्प्रमादात् ॥ भागवते
तस्य वाक्यस्याभावात् ॥ भागवते ( स्कं० ८ अ० २४ श्लो० ५५ ) पुराणसंहितां-
दिव्यांसांख्ययोगक्रियावतीमित्यादिना वर्णितो मात्स्योत्कर्षस्तु निर्दिष्टचरदिशा नैव
विरुद्धः ॥ अतोन कोपि निंदावकाशो नापि प्रक्षिप्तत्वसंभावनागंधोपि ॥ नच
तथैवस्मृतयःप्रोक्ताऋषिभिस्त्रिगुणान्विताः ॥ सात्विकाराजसाश्चैवतामसाःशुभदर्शने ॥
वासिष्ठंचैवहारीतंव्यासंपाराशरंतथा॥ भारद्वाजंकाश्यपंचसात्विकामोक्षदाःशुभाइत्यादौ
लिंगनियमाभावात्प्रक्षिप्तत्वं शंक्यम् ॥ कौर्मेपि करिष्यत्यवताराणिशंकरोनीललो-
हितइति कुर्वंतिचावताराणिब्राह्मणानांकुलेषुवैइति ॥ एवमादिषु अवतारादिशब्दलिंग-
नियमाभावेन प्रक्षिप्तत्वापातात् ॥ तद्युक्त्यंतरेण समाहितमितिचेत्तन्निरस्तं प्राक् ॥

अस्ति चात्रापि समाधायिका युक्तिः ॥ शास्त्राणिचैवंगिरिजेइति पूर्ववाक्यानुरोधेन वासिष्ठंचैवहारीतमित्यादौ शास्त्रमितिविशेष्यस्याभिमततया क्लीबनिर्देशो न बाधितः॥ सात्विकाराजसास्तामसाइति तु टाबंतानिस्मृतिविशेषणानि स्त्रीलिंगान्येव न तु पुल्लिंगानि॥ न च टिड्ढाणितिङ्डीबभावोदोषः सात्विकं ममेयं सात्विको विषयो वा विद्यतेत्रेतिसात्विकाः ॥ अर्शआदेराकृतिगणत्वान्मत्वर्थीयोऽच् ॥ एवंराजसास्तामसाश्च ॥ यातु कायस्थेन प्रक्षिप्तमिति किंवदंती कथिता सा केवलकपोलकल्पितैव ॥ अद्यावधि विदुषः कस्यापि मुखात्तस्याअवगमाभावात् ॥ शैवग्रंथेष्वपि क्वापि तदनुपलंभाच्च ॥ अतोद्राविडेषु प्रसिद्धां रामानुजादिग्रंथेष्वध्यात्मरामायणादिविचारस्थले दर्शितां कौर्मादौ प्रक्षेपस्य किंवदन्तीमुपलभ्य पाद्मविषयिकां तादृशजनश्रुतिं प्रकल्प्य तत्कर्तरि मूर्खत्वं वदन्प्रच्छन्नोव्यासनिंदकोसि न च लिंगार्चनचंद्रिकाधृतवचनविरोधात्प्रक्षिप्तत्वम् ॥ कल्पभेदादिना तदविरोधसिद्धेः ॥ अन्यथा विनिगमनाविरहादनिर्णयप्रसक्तेः ॥ वस्तुतस्तु नारदीयविरोधाच्छतपथश्रुतियाज्ञवल्क्यविरोधाच्च तद्वचसां प्रक्षिप्तत्वं त्वयैव स्वीकृतमिति विराधवहनन्यायावतारः ॥ युक्तं चैतत् लिंगार्चनचंद्रिकायां तत्रशैवानिशैवंचेत्यादिना दशानां शैवत्वमुक्त्वा दशशैवपुराणानिसात्विकानिविदुर्बुधा इति शैवानां सात्विकत्वं कथ्यते॥ एकस्यैव परब्रह्मणो लीलावताराणां ब्रह्मविष्णुमहेश्वराणामैश्वर्यतस्तौल्येपि शिवस्य तमोगुणोपाधिकतायाः (प्रपाठक ५ मंत्र२) "अथयोहखलुवावास्यतामसोंऽशोऽसौसब्रह्मचारिणोयोऽयंरुद्रोथयोहखलुवावास्यराजसोंशोऽसौसब्रह्मचारिणोयोयंब्रह्माथयोहखलुवावास्यसात्विकोंऽशोऽसौसब्रह्मचारिणोयोऽयंविष्णुः" इति मैत्रायण्यादिश्रुतिभ्यः सत्वंरजस्तमइतिप्रकृतेर्गुणास्तैरितिश्रीभागवतादिपुराणेभ्यश्च सिद्धतया शैवेषु सात्विकतायावक्तुमशक्यत्वेन सुगमं तत्राग्रहकल्पितत्वं निष्पक्षधियाम् ॥ नापि पाद्मवत्षण्णां षण्णां विभागसौकर्यं दृश्यते ॥ नापि तत्तत्पुराणपर्यालोचने भगवद्गीताद्युक्तसात्विकादिविषयाणां तत्रतत्र पाद्मोक्तेष्विव बाहुल्यं दृश्यते ॥ किंच पुराणांतराणां तत्तद्वर्णांतरसेव्यत्वकथनमपि नारदीयादिसंदर्भेभ्यः सुतरां विरुद्धम् ॥ हेमाद्रिमाधवादिप्रामाणिकनिबंधेषु ब्राह्मणादिनिर्णयस्थले बहूनामेव पाद्मादिवचसामुपन्यासोपि भ्रमप्रमादादिमूलकतामापद्येत ॥ तस्मात्तदेव प्रक्षिप्तमिति युक्तम् ॥ नचास्माकमीदृशविषये निर्बंधः ॥ तवेव विद्वेषकलुषत्दृदयत्वस्याभावात् ॥ एवं पाद्मस्थवचसामप्रक्षिप्तत्वनिश्चये विज्ञानेंद्रभिक्ष्वादिधृतवचसामपि सिद्धं साकरत्वम् ॥ एतच्च प्रागेव दृढीकृतम् ॥ प्रधानकारणवादादीनामप्रामाण्यमपि ततएव सम्यगवबुध्यते ॥ सूत्राणामतिसंक्षिप्तत्वेन अनेकैरनेकधा व्याख्यातत्वेन च तादृशवादादिकं व्यासानभिमतमेव तादृशसूत्राणां च प्रधानकारणवादादिखंडनपरत्वमेवेति व्यासतात्पर्यस्य पाद्मसंदर्भतः सुखेननिश्चयसिद्धेः ॥ महर्षीणामपि तादृशवेदविरुद्धवादप्रवर्तने कारणं तु ततएव निश्चीयते नतु सूत्रेभ्यः ॥ नापि पाद्मवचसां पुराणनिंदायां तात्पर्यम् ॥ एतत्तेसर्वमाख्यातंप्रसंगाच्छ्रु-

प्रदर्शने इत्युपसंहारवाक्ये स्मृतिपुराणानां सात्विकादिविभागवर्णनस्यप्रासंगिकत्व-कथनात् ॥ शृणुदेवीतिवाक्यं तु तामसशास्त्रपरमेवेत्युक्तंप्राक् ॥ सामान्यतः पुराणानां सर्वेषां श्रुतिसंमतत्वमस्मदभिमतमेवतैत्तिरीयब्राह्मणेकांड ३ (प्रपा० १२ अनु० ९) काठकचयनमंत्रेषु "ऋचोयजूंषिसामानिअथर्वांगिरसश्चये ॥ सर्वास्ताः" इतिचतुरोवे-दानुक्त्वा "इतिहासपुराणंचसर्पदेवजनाश्चये॥ सर्वास्ता" इतीतिहासपुराणयोः पृथ-ग्ग्रहणात्॥ सायणमाधवीयभाष्येपि अत्रेतिहासपुराणशब्दयोर्भारतादिब्राह्मादिपरतया व्याख्यातत्वात् ॥ छांदोग्ये भूमविद्यायां "सहोवाचर्ग्वेदं भगवोध्येमियजुर्वेदं२ सामवेद माथर्वणंचतुर्थमितिहासपुराणंपंचमंवेदानांवेदंपित्र्य२राशिंदैवंनिधिम्"इत्यादि पठ्यते॥ शतपथब्राह्मणेपि चतुर्दशकाण्डेमैत्रेयीब्राह्मणे खंड १० "सयथार्द्रैधाग्नेरभ्याहितात्पृ-थग्धूमाविनिश्चरन्त्येवंवाअरेऽस्यमहतोभूतस्यनिश्वसितमेतद्यदृग्वेदोयजुर्वेदः सामवे-दोथर्वांगिरसइतिहासःपुराणंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्यानानिव्याख्या-नान्यस्यैवैतानिसर्वाणिनिश्वसितानि" इत्याम्नायते ॥ ब्रह्मयज्ञप्रकरणेपि तैत्तिरीय शतपथादिषु तत्पठ्यतइति किंबहुना॥ यत्तु निश्वसितश्रुतौ बहुतरोऽपपाठउपन्यस्तः सतु श्रुतीनामपि गुरुसन्निधावध्ययनाऽभावात्पुस्तकप्रत्ययाधीतत्वात्॥उक्तंहि॥ पुस्त-कप्रत्ययाधीतंनाधीतंगुरुसन्निधौ॥शोभतेनसभामध्येजारगर्भइवस्त्रियाइति॥यत्तु सामा-न्यतः पुराणानां ब्रह्मनिश्वसितत्वनिरूपकत्वमस्याःश्रुतेस्त्वयोक्तं तत्तु शंकराचार्य-विरोधात्त्वदुक्तरीत्या तवैव शमत्वापादकम् ॥ शंकराचार्यास्त्वत्रैवोपनिषद्भाष्ये "यदृ-ग्वेदोयजुर्वेदःसामवेदोऽथर्वांगिरसश्चतुर्विधंमन्त्रजातंइतिहासइत्युर्वशीपुरूरवसोःसंवा-दादिरुर्वशीहाप्सरसइत्यादिब्राह्मणमेवपुराणमसद्वाइदमग्रआसीदित्यादि" इत्यादिना "एवमष्टविधंब्राह्मणम् ॥ एवंमन्त्रब्राह्मणयोरेवग्रहणंनियतरचनावतोविद्यमानस्यैववे-दस्याभिव्यक्तिः ॥ पुरुषनिश्वासवत्" इतिव्याचक्षाणाः श्रुताविति्हासाद्यष्टशब्दै-र्ब्राह्मणभागविशेषानेव गृह्णंति नतुमहाभारतादिब्राह्मादिसंदर्भान् ॥ अतः शंकराचार्य-विरोधः स्पष्टएव ॥

अथेच सहस्रेक्षण इन्द्रस्तत्सादृश्यं त्वस्य सयुक्तिकवेदान्तवाक्य रूप मेघैःशुद्धाद्वैतमार्तण्डस्यतिरस्कारेणेत्युक्तंतदपिनशोभते ॥ वे दान्तवाक्यैरद्वैतमार्तण्डस्यप्रकाशएव भवति नतु तिरस्कारोऽन्य-थासर्वेषामाचार्याणामद्वैतप्रकाशनार्थं वेदान्तवाक्य प्रदर्शनंवि-परीतफलमेवस्यात् ॥ भवतिचतामसाऽसुरविनिर्मित कुयुक्ति-मायामेघैरद्वैतमार्तण्डस्यलोकबुध्याऽऽच्छादनद्वारातिरोभावइव॥ तदुक्तं ॥ घनच्छन्नदृष्टिर्घनच्छन्नमर्कंयथालोकतेनिष्प्रभंचाति

मूढइति ॥ तादृशकुयुक्तिमेघस्य सयुक्तिकवेदान्त वाक्यमहावा-
युना निवारणेशुद्धाद्वैतमार्तण्डस्य प्रकाशोभवतिअतएवास्यास्म-
न्निर्मितस्यग्रन्थस्य प्रभञ्जनो महावायुस्तत्सादृश्यात् प्राभञ्जन-
इत्याख्या

## टीका

सहस्राक्षे ॥ *सहस्रेक्षण इंद्रइत्यादि स्मृत्याचमंगलमित्यंतं भागंदूषयंति॥ **अग्रेचसहस्रेक्षणइत्यादिना इत्याख्येत्यंतेन** ॥ परेण तिरस्कारशब्दोऽनादराच्छादनोभयार्थतया प्रयुक्तः ॥ परीभावस्तिरस्क्रियेत्यमरोक्तेस्तिरस्करिणीत्यादिव्यवहाराच्चोभयार्थकत्वम् ॥ तत्र मार्तंडेनादरस्तु कौशिकदेशीयभिन्नानां नैव संभवति ॥ अथाच्छादनमपि अद्वैतमार्तंडस्य वेदांतवाक्यैर्न संभवति ॥ सर्वेषां वेदान्तानामद्वैतएव तात्पर्यस्योभयवादिसंमतत्वात् ॥ बृहदारण्यके " यत्रहिद्वैतमिव भवतितदितरइतरंपश्यति " इत्याद्युक्त्वा " यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत् " इत्यादिना तत्प्रतिषेधात् ॥ " ब्रह्मतंपरादाद्योन्यत्रात्मनोब्रह्मवेद " इत्यादिश्रवणात्तैत्तिरीये " यदाह्येवैषएतस्मिन्नुदरमंतरंकुरुते ॥ अथतस्यभयंभवति " इति द्वैतदर्शिनोभयश्रवणाच्चेत्यलम् ॥ ननु शुद्धाद्वैतमार्तंडस्यैव तिरस्कारोनत्वद्वैतमार्तंडस्येतिचेच्छुद्धपदेन किंचिद्व्यावर्त्यते न वा ॥ द्वितीये दोषस्तदवस्थः ॥ आद्ये किं तद्व्यावर्त्यम् ॥ नहि त्वन्मतेऽतिरस्करणीयमशुद्धमद्वैतमन्यत्प्रसिद्धमस्ति ॥ परोक्तमनूद्य दूष्यतइतिचेत् अस्माभिरपि परेषामभिमतं व्यवच्छेत्तुं शुद्धपदं निवेशितमित्याद्यग्रे वक्ष्यामः ॥ वस्तुतस्तु मायासंबंधरहितस्य शुद्धस्यैवाद्वैतस्य सर्ववेदांतसंमतत्वात्तस्य तैर्न तिरस्कारःकिंतु मायावादमेघैरेव ॥ सोपि लोकदृष्टीनां तिरस्कारोभास्करे उपचर्यते ॥ अत्र तदीयाचार्यपरंपरास्थहस्तामलकाचार्यसंमतिमाहुः ॥ **घनच्छन्नेति** ॥ ( तत्कृतेस्तोत्रे श्लो० १२ ) अस्योत्तरार्धं तु तथाबद्धवद्भातियोमूढदृष्टेःसनित्योपलब्धिस्वरूपोहमात्मा ॥ इत्यस्ति ॥ तत्प्रयोजनाभावान्मूले नालेखि ॥ **प्रकाशोभवतीति** ॥ घनोयथार्कप्रभवोविदीर्यते चक्षुःस्वरूपं प्रतिपद्यते तदा ॥ तथाह्यहंकारउपाधिरात्मनोजिज्ञासयान-

---

## सहस्राक्ष

* सहस्रेक्षण इन्द्रस्तत्सादृश्यं त्वस्य ग्रन्थस्य सयुक्तिकवेदान्तवाक्यरूपमेघैः शुद्धाऽद्वैतमार्तण्डस्य तिरस्कारेण तादृशमेघोद्भूतभङ्ग्यन्तररूपवज्रेण विद्वन्मण्डनस्य चूर्णीकरणेन-चेति ग्रन्थान्ते वक्ष्यते ॥ किञ्च सहस्रेक्षणोविष्णुः सहस्राक्षःसहस्रपादितिश्रुतेः समया तदर्थंज्ञाप्यइमे नरारक्ष्यन्तामिति प्रार्थ्यः इति वाक्यान्तरकल्पनयाऽऽवृत्त्यादिनाऽर्थइति विष्णोः स्मृत्याच मङ्गलम् ॥ १ ॥ ४ ॥

श्यतितद्धनुस्मरेदित्यादिभिर्द्वादशस्कंधादिवाक्यैरितिभावः ॥ मेघविस्तारे खंडिते च तत्उद्भाविभंग्यंतरवज्रमपि स्वतोदूरापास्तं भवति ॥ यत्त्वसौ सहस्राक्षइति विष्णुसादृश्यारोपविषयोग्रंथोन खंडनार्हइतिकश्चित् ॥ तदाहोपुरुषिकामात्रम् ॥ ग्रंथे तेनें द्रसादृश्यस्यैवांगीकारात् ॥ इह ग्रंथांते च तथैव वर्णनात् ॥ आवृत्त्या वाक्यभेदेनकृतेन विष्णुप्रार्थनरूपाऽर्थांतरवर्णनेन ग्रंथे विष्णुसादृश्यारोपस्यानापत्तेः॥ यदि च सादृश्यमारोपितं भवेत्तदापि प्रत्यवस्थानमदुष्टंम् ॥ अन्यथाऽऽस्माकीनग्रंथेपि शंकररूपतायाअंते वर्णयिष्यमाणतया शैवस्मार्तैरपि न प्रत्यवस्थातव्यम् ॥ प्रकृते त्वारोपस्याप्यभावः ॥ मेघविस्तारेण मार्तण्डमाच्छादयन्नपि भगवत्साक्षात्कारिमंडनं चिचूर्णयिषन्नपि सहस्राक्षः श्रीगोवर्धनधरचरणैकशरणैः शक्यस्तृणमिव लंघयितुम् ॥ अत्र तत्कृतं विष्णुप्रार्थनमपि लोकव्यामोहायैव ॥ शैवसुधाकरेऽत्र च तस्मिन्विष्णुद्वेषितायानिश्चयात् ॥ तथाचायं प्रथमश्लोकखंडनस्य निष्कर्षः ॥ श्रीमद्वैष्णवाचार्यास्तदनुयायिनश्च न शप्ताःकिंतु भवभंगादिभूयोभावुकभावकभक्तिमार्गस्य भगवदाज्ञया दैवोद्धारार्थं प्रवर्तकास्तत्रप्रवृत्ताश्च ॥ श्रीशंकराचार्याअपि साक्षाच्छिवावताराः स्वयं परमतत्त्वज्ञानपरमभक्तिशालिनस्तत्कृततत्तत्स्तोत्राद्यालोचनेन निश्चीयमानतथाभावाश्च॥ तेषामवतारादिकमपि तादृशभगवदाज्ञानुरोधादेव॥ वादाश्च सर्वे प्रायोऽनादिसिद्धाः ॥ ब्रह्मसूत्रादिषु पुराणेषु च तत्तद्वादानुवादखंडनमंडनादिदर्शनात् ॥ वेदेपि छांदोग्ये (अध्याय ८ खंड २) "सदेवसौम्येदमग्रआसीदेकमेवाऽद्वितीयं ॥ तद्धैकआहुरसदेवेदमग्रऽआसीदेकमेवाद्वितीयंतस्मादसतःसज्जायत ॥ कुतस्तुखलुसौम्यैवंस्यादितिहोवाचकथमसतःसज्जायेतेतिसत्त्वेवसोम्येदमग्रआसीदेकमेवाद्वितीयम्" इत्यादौ तथाश्रवणाच्च ॥ अतोभगवतोनुज्ञयावतीर्णैस्तैस्तैर्दिव्यैराचार्यैस्तस्य क्रीडेच्छानुरोधेन तस्मिस्तस्मिन्नवसरे तत्तत्प्रयोजनसिद्धयेस सवादः प्रकाश्यतइति सर्वमविरुद्धम् ॥




अग्रेच नानात्वेपिचेत्यारभ्यसंक्षेपइत्यन्तेन शुद्धाद्वैतपदार्थ निर्वचन खण्डनम् ॥ तत्प्रकारश्च (तत्रतावच्छुद्धाद्वैतमार्तण्डोक्तः

शुद्धाद्वैतपदार्थोसंगत ) इत्युपक्रम्य प्रदर्शितः " भेदज्ञानाभावे " इत्यस्य ( भेदज्ञानाभावः ) इतिपाठःप्रकल्पितः

## टीका

अथसहस्राक्षे नानात्वेपिचेतिद्वितीयंश्लोकं ननु गौतमादीत्यादिना तवेष्टसिद्धि रितिसंक्षेपइत्यंतेन व्याख्यानेन •सहितं दूषयितुं सारार्थकथनमुखेन गृण्हंति ॥ **अग्रेचनानेति** ॥ **खंडनमिति** ॥ तेन कृतमस्तीति शेषः ॥ अत्र सहस्राक्षे *नानात्वेपिचेत्यादिः प्रायेणेत्युक्तमित्यंतोभागःक्षुध्धविधवाविविधवादसगंधत्वा दुपेक्षितांमूले ॥ अथापि तत्र तथात्वस्फुटीकाराय किंचिद्ब्रूमः ॥ तत्र श्लोके चतुप्रभृतिनिरर्थकपदबाहुल्यं द्रष्टव्यम् ॥ व्याख्याने शुध्धाद्वैतेत्यादिना श्रीविष्णुस्वामिरामानुजमध्वनिम्बार्कसिद्धान्तानां मिथ्याज्ञानत्वं तन्निरूपणस्य प्रलापरूपत्वं तत्प्रवर्तकानां चतुर्णामाचार्याणां गौतमादिशप्तत्वं चाऽपाणिपिहितमेवाभाणि ॥ तत्तु प्रागेव पाद्मादिवचोभिर्निराकृतम् ॥ रामानुजानांसरणीरमातोगौरीपतेर्विष्णुमतानुगानाम् ॥ निम्बार्कगानांसनकादितश्चमाध्वानुगानांपरमेष्ठितश्चेत्यादौ तेषां प्रसिद्धत्वाच्च ॥ अतोहरिभक्तमात्रद्वेषलिंगात्त्वस्मिन्नासुरभावनिश्चायनायेदम् ॥ खण्डनज्ञा-

---

## सहस्राक्ष

* नानात्वेऽपिच शप्तविप्रवचसां जिज्ञासया कस्य चिच्छुद्धाद्वैतनिरूपणं प्रथमतः संखण्ड्यतेऽत्राऽपितु ॥ शुद्धाद्वैतमतोष्णरश्मिरवेरे प्रायेण टीकायुतोभागेऽन्यत्र तथैव बाल्लभिकृतं विन्मण्डनं खण्ड्यते ॥ २ ॥ ननु गौतमादिशप्तविप्रवचांसि शुद्धाऽद्वैतविशिष्टाद्वैतद्वैतभेदाऽभेदतदवान्तरभेदैर्विभिन्नानां मिथ्याज्ञानानां प्रलापरूपाणि नानोपलभ्यन्ते तथाच कथं मतान्तराणि विहाय शुद्धाऽद्वैतमतमेव खण्ड्यते इत्यतआह ॥ नानात्वेऽपीति ॥ कस्यचित् भावनगरवासिनोनागरस्य संतोषरामशर्मणः जिज्ञासया खण्डनज्ञानेच्छया अत्रापि शुद्धाऽद्वैतमतखण्डनेऽपि अवरे पूर्वभागे टीकायुतः सटीकः शुद्धाद्वैतमतोष्णरश्मिः शुद्धाऽद्वैतमार्त्तण्डः कस्यचिज्जिज्ञासयेतीहापि संबध्यते प्रायेण बाहुल्येन खण्ड्यते ॥ अन्यत्र उत्तरभागे तथैव सटीकं प्रायेणच विन्मण्डनं विद्वन्मण्डनम् ॥ मार्त्तण्डशब्दं विहायोष्णरश्मिशब्दोपादानमुक्तरीत्या मोहकत्वेन तन्मताऽऽश्रयिणां संतापएव फलमिति बोधनाय ॥ वल्लभशब्दस्य नानार्थकोशेषु अश्वाऽध्यक्षादिवाचित्वकथनात्तदपत्यस्याऽपि तद्वत्साधारणजनतायास्तत्कृतग्रन्थस्यान्धेषु काणोराजेतिन्यायेन तादृशेषु ये विद्वांसस्तन्मण्डनतायाश्च बोधनाय वाल्लभिकृतमिति विन्मण्डनस्यविशेषणं दत्तम् ॥ अस्मिन्ग्रन्थे क्वचित्सटीकैतद्ग्रन्थद्वयस्योक्तिभ्योऽन्याउक्तयोऽपि खण्डिताः क्वचित्तु नैयायिकादिमतदूषणपरास्संरम्भेण प्रवृत्त्या प्रपञ्चमात्रपराश्च तदुक्तयः प्रयोजनाऽभावादुपेक्षया नखण्डिताइति आधिक्यन्यूनतयोः परिहाराय प्रायेणेत्युक्तम् ॥ ५ ॥

नैछयैत्यत्र खण्डनकथंभावविषयिणी बुभुत्सा वक्तव्या ॥ खण्डनमिति ज्ञानस्य खण्डनशब्दमात्रेणापि संभवात् ॥ ज्ञानेच्छायाजीवान्तरसमवेततया खण्डनव्यापार- [illegible] त्र स्वसमवेततया हेतुकार्ययोर्वैयधिकरण्यम् ॥ ( अत्रापिशुद्धाद्वैतमतखंडनेपि, ) [illegible] व्याख्यानमपि न मनोरमम् ॥ संखण्डयतइति पूर्वमुक्तायां खण्डनक्रियायां [illegible] तरभागयोरभावात् ॥ तद्बोधकग्रंथएव तयोः सत्वात् ॥ शुद्धाद्वैतमतस्य खण्डनं [illegible] त व्यधिकरणबहुव्रीह्याश्रयणेनग्रन्थपरत्वकल्पने तु मूलश्लोकविरोधः ॥ श्लोके [illegible] वण्डयतइति पदसमभिव्याहृ तेन अत्रेतिपदेन खण्डनक्रियायाएव परामर्शस्य [illegible] स्थितिकतया तत्परामर्शस्यायोगात् ॥ पूर्वार्थकतयाऽवरशब्दस्य प्रयोगस्तु [illegible] न्यथा ब्राह्मणज्येष्ठभ्रातृप्रभृतयोऽवरवर्णावरजन्मादिशब्दैर्व्यवह्रियेरन् ॥ [illegible] कनीयःप्रभृतयः ॥ उपेंद्रइंद्रावरजइत्यादौ चेंद्रस्य पूर्वजइत्यादिरर्थ- [illegible] क्तं मार्तंडपदं विहाय त्वयमुष्णरश्मिपदमुपादाय तादृशपद- [illegible] पि लभ्[illegible] त्वादिकं परिहाय ग्रन्थनिन्दायाः करणं तु जलौकः स्वभावादेव ॥ [illegible] क्तम् दुग्धंविहायरुधिरंपिबतिजलौकास्तनेषुसंलग्नाइति ॥ परैरपि सहस्राक्षशब्दं विहाय मार्तंडद्वेषितया कौशिकशब्दो वा गौतमस्त्रीजारशब्दो- वा विश्वरूपादिब्रह्महशब्दोवा शक्येत ग्रहीतुं यदि तुभ्यमिवाशिष्टालापएव तेभ्योरो- चेत ॥ अस्मन्मतग्रन्थे मार्तंडत्वारोपतात्पर्यं तु सूर्योदयेशीतमपैतिसर्वमार्गावलोको- जलजप्रकाशः ॥ तमोनिवृत्तिर्द्विजकर्मवृत्तिस्तथैवमार्तण्डनिबन्धबोधेइति तत्समामि- श्लोकाज्ज्ञेयम् ॥ सङ्क्षेपे मोहकत्वारोपस्तु प्रागेव मनोरथमात्रविषयतां नीतः ॥ वल्लभशब्दस्य नानार्थकोशेष्वित्यादिर्भगवद्रूपेषु महानुभावेषु साक्षाद्वालिप्रयोगस्तु नजारजातस्यललाटशृङ्गंकुलप्रसूतस्यनपाणिपद्मम् ॥ यदायदामुञ्चतिवाक्यबाणंतदा तदातस्यकुलप्रमाणमित्यभियुक्तोक्तिं स्मारयत्येव॥यदि त्वादृशःकश्चिदशिष्टस्त्वां प्रत्य- वास्थास्यत तर्हि त्वदीयप्रथमश्लोकखण्डनावसरएव मलत्दच्छब्दस्य चांण्डालाद्यर्थक तामादाय त्वदनुरूपं त्वां प्रत्यवक्ष्यत् ॥ अस्माकं तु गिरं निरंतरं निजनामभिर्निर्म लनीयां कदाचिदपि महानुभावेषु मा दुर्वादप्रादुर्भावभाजं बीभवद्भगवान् ॥ यच्च- वल्लभशब्दस्याश्वपालार्थकताज्ञापनं तत्तु धौर्त्याद्यामोहनमेव ॥ हैमानेकार्थहैमना- ममालाहलायुधहारावलीविश्ववररुचिधरणिधनंजयद्विविधद्विरूपमहीपमेदिन्यमरत्रि- कांडशेषहरदत्तीयनाममालानेकार्थध्वनिमञ्जरीप्रभृतिष्विदानीमुपलभ्यमानेषु कोशेषु तस्य तदर्थकतायाअनुपलंभात् ॥ अतएव न तेन कोशवचनमुदाहारि ॥ नापि कोशनाम निरदेशि ॥ मेदिन्यादौ सल्लक्षणतुरंगमादिवाचितावर्णनेपि नाममात्रेण साम्यं न दोषाय ॥ अथहरिर्दिवाकरसमीरयोः ॥ यमवासवसिंहांशुशशाङ्ककपिवा- जिषु ॥ पिङ्गवर्णेहरिद्वर्णेभेकोपेन्द्रशुकाहिषु ॥ लोकान्तरेचेति हैमोक्त्या हरिशब्दस्य वानरभेकाद्यर्थकत्वेपि हरिर्हरतिपापानि हरयेनमइत्युक्त्वामुच्यतेसर्वपातकादित्या- दौ नकोपिशिष्टोवानरादिपरतामाद्रियते नापि हरिश्रितादेवा हरिपुत्रोजयंतइत्यादौ ॥

एतेन तस्यात्मविद्वत्तानुरूपं मलापानन्तरमप्यपास्तम् ॥ शुद्धाद्वैतमार्तण्डे तत्प्रकाशे च मायावादोच्छेदपरस्तद्विरुद्धसिद्धांतप्रतिपादकोपिबहुतरोभागः खंडनयुक्त्यस्फूर्त्या न दूषितः ॥ विद्वन्मंडने तद्विवरणे चानेकत्र पूर्वपक्षेषु सूचितायुक्तयः सिद्धांततया सहस्राक्षउपन्यस्ताः ॥ एतन्न्योन्यमाच्छादयितुं श्लोके मायेणेत्युक्त्वा धार्ष्ट्यादितरथा व्याख्यातम् ॥ तत्र सप्रकाशस्य मार्तण्डस्याङ्कनादिना सति सौलभ्ये स्वयमेव तद्बोत्स्यते सर्वैः संख्यावद्भिः ॥ मूलविद्वन्मंडनं तु तेनानूदितत्वात्सकलमिहपृथगनुवदिष्यतइति करकंकणपरीक्षणक्षणे न दर्पणमर्पणीयम् ॥ तद्विवरणस्यापि विलोकने वर्णितचरं व्यक्तमेव वेत्स्यन्ति विद्वांसः ॥ इतः परं ग्रन्थस्य पूर्वार्धे सप्रकाशः शुद्धाद्वैतमार्तण्डः समर्थ्यते ॥ मार्तण्डमंडलाऽखण्डमण्डनाःखण्डयन्त्यथ ॥ वितण्डोद्दण्डपाषण्डषण्डिताऽकाण्डताण्डवम् ॥ १ ॥ सहस्राक्षे तत्र*तावच्छुद्धाद्वैतेत्यादिं इष्टसिद्धिरितिसंक्षेपइत्यन्तं भागमर्थतोऽनूद्य दूषयन्ति ॥ **तत्प्रकारश्चेत्यादिनाविनिर्णयइतिसंक्षेपइत्यन्तेन॥प्रकल्पितइति**॥मार्तण्डटीकायां अद्वैतंतुततोन्यथेत्यस्य व्याख्याने प्रकल्पितः ॥ तेन वास्तवे सप्तम्यंतपाठे तु तदुक्ता सर्वाप्यनुपपत्तिर्मृगतृष्णातोयावगाहनकल्पैवेति वक्ष्यामः ॥ एवं "सांकर्यकार्यकारणे" इत्यत्र सांकर्यक्षयकारणमिति पाठः प्रकल्पितः ॥ तादृशपूर्वोक्तपाठसत्वादेव कार्यं च कारणं चेत्यनयोः समाहारमभिप्रेत्य तट्टीकायां "अविद्यावच्छिन्नंचैतन्यं कार्यम्॥मायावच्छिन्नंचैतन्यंकारणमितिसांकर्यम्"

---

सहस्राक्ष

* तत्रतावच्छुद्धाऽद्वैतमार्त्तण्डोक्तः शुद्धाऽद्वैतपदार्थोऽसंगतः ॥ तथाहि द्विधा ज्ञानं तु यत्तस्यान्नामरूपात्मना मुहुः ॥ ईशजीवात्मनावाऽपि कार्यकारणतोऽथवा ॥ द्वीतं तदेव द्वैतं स्याददैतं तु ततोऽन्यथा इति शुद्धाद्वैतपदार्थउक्तः ॥ तट्टीकाकृता तु ये गत्यर्थकास्ते ज्ञानार्थकाइति न्यायेन गत्यर्थकादिणधातोर्भावेक्ते इतमितिसिद्धौ द्विधा इतं द्वीतं तस्मात्स्वार्थेऽणि द्वैतमिति निष्पन्नम् ॥ तस्य च द्विप्रकारकं ज्ञानमित्यर्थः ॥ अन्यथा भेदज्ञानाऽभावेनद्वैतम् अद्वैतमिति व्याख्यातम्॥ अग्रे एतन्मते सुनिष्पन्नं सांकर्यं क्षयकारणम् ॥ तन्निवृत्त्यर्थमाचार्यैः पदं शुद्धं विशेषितम ॥ शुद्धाऽद्वैतपदे ज्ञेयः समासः कर्मधारयः॥ अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः ॥ मायासंबन्धरहितं शुद्धमित्युच्यते बुधैः ॥ कार्यकारणरूपंहि शुद्धं ब्रह्ममायिकम ॥ इत्युक्तम् ॥ एतदपि तट्टीकाकृता एतन्मते शङ्कराचार्यमते अविद्याऽवच्छिन्नचैतन्यंकार्यं मायाऽवच्छिन्नचैतन्यं कारणमिति साङ्कर्यं ॥ तन्निवृत्त्यर्थं साङ्कर्यनिवृत्त्यर्थं ॥ कर्मधारयइति ॥ शुद्धं च तदद्वैतमिति विग्रहः ॥ नचाऽद्वैते सति साङ्कर्याऽभावः स्पष्टएवेति शुद्धपदमपार्थकमितिवाच्यं ॥ परेषां मते पूर्वं साङ्कर्यं ततोऽद्वैतं मन्मते तु सदैव शुद्धत्वमिति ज्ञेयम् ॥ अतएव स्पष्टतयाबोधार्थं षष्ठीतत्पुरुषमाहुरित्यादिना व्याख्यातम् ॥ तन्न युक्तम् ॥ समासद्वयस्याऽप्यसंगतेः ॥

इति व्याख्यातम् ॥ तथा "द्विधाज्ञानंतुयद्यत्स्यात्" इत्यादौ यत्तत्स्यादित्यादीनि तत्कृतपाठान्तराणि विशेषतः प्रयोजनाभावान्न चिन्त्यन्ते ॥ द्विधाज्ञानमित्यस्य टीकायां कृतं नामरूपमायिकत्वस्य खण्डनादिकं तु स्वमतोपमर्दकत्वान्नानूदितम् ॥ [illegible] सप्तम्यन्तपाठे तु न काप्यनुपपत्तिः ॥ तथाहि ॥ द्वैतंहि द्विप्रकारकं ज्ञानम् ॥ [illegible]मेतिभावेक्तस्याङ्गीकारात् ॥ प्रज्ञादेराकृतिगणत्वादणि पूर्वोऽर्थानपायात् ॥ अद्वै-[illegible]ति तु पर्युदासोलाघवात् ॥ एवं चात्रब्राह्मणादिशब्दैर्ब्राह्मणादिभिन्नतत्सदृशइ वाद्वै-[illegible]ब्देन द्वित्वप्रकारकज्ञानभिन्नं ज्ञानत्वेन तत्सदृशमेकत्वप्रकारकज्ञानमभिधीयते ॥ [illegible]स्थले "नञिवयुक्तमन्यसदृशाऽधिकरणेतथाह्यर्थगतिः" इत्यङ्गीकारात् ॥ [illegible] ३ पा० १ सूत्र० [illegible]२ ) "भृशादिभ्योभुव्यच्वेर्लोपश्चहलः" इत्यत्र [illegible]ासमेवास्तु" ॥ ननुचोक्तमिहकस्मान्नभवति ॥ क्वदिवाभृशाभ-[illegible]दृशाधिकरणेतथाह्यर्थगतिः ॥ नञ्युक्तमिवयुक्तंवाय-[illegible]ञ्चिदि[illegible]स्मिंस्तत्सदृशेकार्यंविज्ञायतेतथाह्यर्थोगम्यते ॥ अब्रा-[illegible]मानयेत्युक्तेब्राह्म[illegible]वानीयतेनासौलोष्टमानीयकृतीभवति ॥ एवमिहाप्यच्वे-[illegible]तप्रतिषेधादन्यस्मिन्नच्व्यतेच्विसदृशेकार्यंविज्ञायते॥किञ्चाऽन्यदतोऽच्व्यन्तंच्विस-दृशम्॥अभूततद्भावः" इति॥अत्र "यथान्यासमेवास्तु॥अच्वेरितिपर्युदासाश्रयणेदोष-द्वयस्यापिपरिहारइत्यर्थः" इतिकैयटः ॥ एवं ( अ० १ पा० १ सूत्र ४३ ) सुडनपुं-सकस्येत्यत्रापि कुण्डानितिष्ठन्तिवनानितिष्ठन्तीत्यादौ जसि संज्ञार्थं पूर्वं पर्युदासाऽऽश्रयणात्तत्सदृशयोः स्त्रीपुंसयोरेव प्रवृत्तिः साधिता भाष्यकृता "नायंप्रसज्यप्रतिषेधो नपुंसकस्यनेति ॥ किंतर्हि॥ पर्युदासोऽयंयदन्यन्नपुंसकादिति ॥ नपुंसके न व्यापारः" इति ॥ अथ च विरोधोत्र नञर्थः ॥ अविद्येत्यादिवत् ॥ उक्तंचयोगभाष्येसाधनपादे ( सूत्र ५ ) "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति सूत्रं व्याचक्षाणै र्व्यासपादैः "तस्याश्चामित्रागोष्पदवदवस्तुसतत्वं विज्ञेयंयथाना-मित्रोमित्राभावोन मित्रमात्रंकिन्तुतद्विरुद्धःसपत्नः ॥ यथावाऽगोष्पदंनगोष्पदाभावो नगोष्पदमात्रं किन्तुदेशएवताभ्यामन्यद्वस्त्वन्तरम् ॥ एवमविद्यानप्रमाणं नप्रमाणा-भावः किन्तुविद्याविपरीतं ज्ञानान्तरमविद्येति" इति ॥ भवन्मतस्थाअपि भावरू-पाज्ञानमविद्यापदार्थं मन्यन्ते ॥ इत्थं च प्रकृते अभेदाऽवगाहिज्ञानमेवाद्वैतशब्दार्थः॥ तेन शुद्धपदार्थमायासंबंधरहितकार्यकारणात्मकब्रह्मणोऽभेदसंसर्गेण तत्रान्वयोना-नुपपन्नः ॥ "सत्यंज्ञानमनन्तंब्रह्म" इति स्वरूपलक्षणवाक्येन तस्यज्ञानरूपत्वनि-श्चयात् ॥ "तदात्मानऽस्वयमकुरुत ॥ एकमेवाद्वितीयम् ॥" इत्यादिश्रुतिशतैकवा-क्यतया मायासंबन्धरहितयोरेव कार्यकारणयोरभेदसिद्धेश्च ॥ धर्मधर्मिणोः प्रकाशा-श्रयन्यायेनाभेदस्य वक्ष्यमाणतयापि ज्ञानरूपतायाअबाधाच्च ॥ ज्ञानं गुणएवेति

तु नावयोरभ्युपगमः ॥ तादृशज्ञानं च भेदभ्रमनिवृत्तावेव प्रकाशतइति युक्तमुक्तं " भेदज्ञानाभावे " इति ॥

अत्रशुद्धाद्वैतपदे कर्मधारयःसमासः ॥ संभवतिषष्ठीतत्पुरुषोऽपि ॥ अथकर्मधारयपक्षे शुद्धपदार्थस्य मायासंबंधरहितकार्यकारणात्मकब्रह्मणोऽद्वैतपदार्थेन भेदज्ञानाभावेन तादात्म्यस्य बाधादसंगतिरितिचेत्सत्यं नहिनैयायिकवैशेषिकादीनांमतइवास्मन्मतेप्यभावोतिरिक्तःपदार्थोयेन तत्रकार्यकारणात्मकब्रह्मणस्तादात्म्यस्यबाधःस्यात् किंत्वधिकरणात्मकएव॥ब्रह्मनिष्ठस्य भेदज्ञानाभावस्य ब्रह्मरूपत्वेन कार्यकारणात्मक ब्रह्माभिन्नतया कथंतादात्म्यासंगतिः ॥ नचाऽभावस्याधिकरणात्मकत्वे आधाराधेयभावानुपपत्तिरितिवाच्यं न्यायमतेऽभावाधिकरणकाभावस्याधिकरणभिन्नत्वे तद्भेदस्यापि भिन्नत्वेऽनवस्थापत्यातादृशाऽभावस्याधिकरणीभूताभावाभिन्नत्वेप्याधाराधेयभाववद्भवन्मतेचाविद्याध्वंसस्य ब्रह्माधिकरणकस्य ब्रह्मस्वरूपत्वेनाभ्युपगमेंप्याधाराधेयभाववदत्रापितत्स्वीकारे विरोधाभावात् ॥ ननुकार्यकारणयोर्भेदस्यप्रत्यक्षसिद्धत्वाद्ब्रह्मणःकार्यकारणात्मकत्वंनसंभवति ॥ किंचतद्भेदज्ञानाभावस्य ब्रह्मणिस्वीकारे ब्रह्मणोऽल्पज्ञत्वापत्तिरितिचेत्स्यादेवं ॥ यदिब्रह्मणोनिमित्तकारणत्वमेवस्यात् ॥ अभ्युपगम्यतेतूपादानकारणत्वमपि ॥ तत्रचकार्यस्यकारणात्मत्वंवद्भवादिसंमतमतोभवत्येवकार्यकारणात्मकत्वं ॥ अल्पज्ञत्वंतु भेदासंभवेनैवापास्तम् ॥ नचब्रह्मणः समवायिकारणत्वेमानाभावइतिवाच्यम् ॥ "प्रकृतिश्चप्रतिज्ञादृष्टान्तानुपरोधा" दितिसूत्रस्य "यथासोम्यैकेनमृत्पिण्डेनसर्वंमृण्मयंविज्ञातंस्या"दित्यादिश्रुतीनां त्वय्ययआसीत्त्वयिमध्यआसीत्त्वय्यन्तआसीदिदमात्मतन्त्रे ॥ त्वमादिरन्तो-

जगतोस्यमध्यंघटस्यमृत्स्नेवपरःपरस्मादिति भागवतस्यच प्र-
माणत्वात् ॥ नचोपादानकारणत्वेपि तन्तुपटवद्भेदःकुतोनस्या-
दितिवाच्यं ॥ आरंभवादस्यभाष्येदूषितत्वेन तादृशभेदस्यश-
ङ्कितुमशक्यत्वात् ॥ अत्रतु " सर्वंखल्विदंब्रह्मतज्जलानिति ॥
तदात्मानꣳस्वयमकुरुत॥ सच्चत्यच्चाऽभवत् ॥ ब्रह्मैवेदममृतंपुरस्ता-
[illegible]श्चाद्ब्रह्मदक्षिणतश्चोत्तरेण ॥ अधश्चोर्ध्वंचप्रसृतंब्रह्मैवेदंवि-
[illegible]ष्ठं " इत्यादिश्रुतिभिःशुद्धस्यैवब्रह्मणः सर्वाऽभिन्नत्वं-
[illegible] नन्वविक्रियमाणस्यसमवायित्वं नलोकप्रसिद्धं॥प्र-
कृत्या[illegible]यमाणानामेवसमवायित्वस्यप्रसिद्धत्वात् ॥लो-
कविरुद्ध[illegible]प्रामाणिक्येवेतिचेन्न ॥ नहिलोकप्रसिद्ध-
मेवयद्यत्तत्त[illegible]ह्मणिकल्पनीयमितिनियमः ॥ किन्तुवेदप्रति-
पाद्यम् ॥ ब्रह्मणोवैदैकसमधिगम्यत्वात् ॥ " तंत्वौपनिषदंपुरुषं-
पृच्छामी " तिश्रुतेः॥लौकिकेतुलोकप्रसिद्धमेवकल्पनीयम्॥यथा
पशौलोमवल्लाङ्गूलवत्त्वं ॥ वेदेतुब्रह्मणिविरुद्धधर्मवत्त्वंतत्रतत्रप्र-
तिपाद्यते ॥ यथा " आसीनोदूरंव्रजति शयानोयातिसर्वतः ॥
अपाणिपादोजवनोग्रहीतापश्यत्यचक्षुःसशृणोत्यकर्णः " इत्या-
दिश्रुतिभ्यः ॥ नहिलोकेऽचक्षुषोद्रष्टृत्वमकर्णस्यश्रोतृत्वंवाप्र-
सिद्धं ॥ लोकप्रसिद्धमेवकल्प्यतेचेत्तादृशश्रुतीनामप्रामाण्यं-
स्यात् ॥ एवंचाविकृतस्यैवब्रह्मणोऽलौकिकस्य " तदात्मानꣳ
स्वयमकुरुते" तिवेदप्रतिपाद्यंमृत्स्नादि वैदिकदृष्टान्तैर्दृढीकृतमुपा
दानकारणत्वं नदूषणाय ॥ किन्त्वलौकिकत्वसंपादकतयाभू-
षणायैव भवति नच " मायीसृजत " इत्यादिवाक्यानुरोधेन
"तदाऽऽत्मानꣳस्वयमकुरुत" इत्यस्यापि माययात्मानमाकाशादि
रूपं कृतवानित्येवार्थः ॥ मृदादिदृष्टान्तानांचवाचारम्भणं वा-

गालम्बनमित्यादिरीत्याकार्यमिथ्यात्वकारणसत्यत्वपरत्वमेवेति वाच्यम् ॥प्रसिद्धार्थपरित्यागेऽप्रसिद्धार्थकल्पनेच मानाभावात्॥ किंच 'तदात्मानंस्वयमकुरुते" त्यत्रमायापदस्याभावेनमाययात्मा न मित्याद्यर्थस्य " वाचाऽऽरम्भण" मित्यत्रवागालम्बनपदाभ[illegible] वेन तादृशार्थस्यचकर्तुमशक्यत्वाच्च॥ मायापदेन भगवच्छ[illegible] रेवाऽभिधीयतइत्यग्रेवक्ष्यते॥ नन्वेवमपि " वाचारम्भणं[illegible] इतियथाश्रुतपाठे विकारोवाङ्मात्रेणैवारभ्यते नतुव[illegible] वाऽर्थः करणीयः ॥ तथाच कार्यस्य मिथ्यात्वे[illegible] ॥ एवंसति कस्यब्रह्मकारणंभवेत् ॥ नतुत्रैकालि[illegible]यो- गिनः खपुष्पतुल्यस्य किञ्चिदपिकारणं भवति ॥ [illegible] " तदन- न्यत्वमारम्भणशब्दादिभ्य" इति सूत्रेकारणानन्यत्वंकार्यस्य- व्यासैः प्रतिपादितं विरुध्येत ॥ नहिमिथ्याभूतस्य सत्याऽ- नन्यत्वं संभवति ॥ कार्यस्यापिसत्यत्वं कारणस्यापि वामिथ्या- त्वं विनातयोरनन्यत्वमनुपपन्नं ॥ तत्र कारणस्य मिथ्यात्वे " सत्यंज्ञानमनन्तंब्रह्मे" त्यादिश्रुतिविरोधः ॥ कार्यस्यकारणा- त्मनासत्यत्वे नकोपिविरोधः प्रत्युत एकविज्ञानेनसर्वविज्ञानश्रु- तिरपिसङ्गच्छते ॥ तस्मात्कारणमिव कार्यमपिसत्यमेव ॥ वाचा- रम्भणमित्यस्यायमर्थः ॥ योविकारस्तद्वाचारम्भणं ॥ यदार- भ्यते तदारम्भणं ॥ कृत्यल्युटोबहुलमितिल्युट् ॥ वागारब्धं ॥ कारणस्यैवनामधेयं कारणमेवहितत्तत्क्रियासिध्यर्थंतेनतेन- नाम्नाव्यवह्रियते इतिकारणादभिन्नमेवकार्यंनतुस्वेनरूपेण कारणाद्भिन्नं ॥ तदाहमृत्तिकेत्येवसत्यमिति ॥ अतःकारणाभि- न्नत्वात्कार्यं सत्यमेवनतुमिथ्या ॥ मिथ्यात्वेतु " यतोवाइमानि- भूतानिजायन्ते" इत्यादयःश्रुतयःकुप्येरन् ॥ नच शुक्त्यादीनां-

रजतादीन्प्रतीवब्रह्मणोऽपिजगत्प्रतिकारणत्वस्यवक्तुं शक्य-
त्वेन तादृशश्रुतिसङ्गतिरिति वाच्यम् ॥ शुक्त्यादौ रजतादेरुत्पत्त्य-
नङ्गीकारादित्यन्यत्र विस्तरः ॥ वस्तुतस्तु भेदज्ञानाभावे इत्येव-
सर्वपुस्तकेषु पाठः ॥ ननु तादृशपाठेद्विप्रकारकज्ञानाऽभावेऽद्वै-
[illegible]ेद्विप्रकारकज्ञानेद्वैतमेवपरिशिष्यतइति चेन्न ॥कार्यकारणयो-
[illegible]ऽभावात्तज्ज्ञाज्ञानमपिवास्तवंनसंभवति ॥ कार्यकारण-
[illegible]ात्तदाद्विप्रकारकज्ञानमपिवास्तवंस्यात् ॥ तद्भेदस्यै
[illegible]ज्ञानस्याऽभावादद्वैतमेवसार्वदिकमित्यत्रता
त्पर्या[illegible]ाइत्यस्य सप्तम्यन्तपदेनव्याख्यातंसर्व
त्रदृष्टं सङ्ग[illegible]ान्तपदेनव्याख्याने तदसङ्गतमेवस्या
त् ॥ व्युत्पत्तिस्तु [illegible] द्वैतंयस्मिंस्तदद्वैतम् ॥ द्विधाज्ञानंतुयद्य-
त्स्यान्नामरूपात्मनामु[illegible]त्यादे "द्विधाइतंद्वीतंद्विप्रकारकं ज्ञान-
मित्यर्थ " इत्यादेरपि तत्रैवतात्पर्यम् ॥ अथवा नद्वैत मद्वैत मि-
त्येवविग्रहः अतएवशुद्धं च तदद्वैतमिति कर्मधारयसमासे शुद्ध-
पदार्थेना द्वैतपदार्थस्य भेदज्ञानाऽभावस्य तादात्म्याभाव इति-
पूर्वोक्तदोषोदूरादेवनिरस्तः ॥ १ ॥

## टीका.

अथ रामकृष्णभट्टकृतपरिष्काराद्यनुरोधात् भेदज्ञानाभावइति प्रथमान्तपाठमभ्युपग-
म्यापि समासद्वयं समर्थयितुमुपक्रमन्ते॥अत्रेति॥ तत्र तावत्कर्मधारयपक्षे सहस्राक्षे
तथाहि*स्वसंमततयेत्यादिना तन्मतेऽभावादित्यन्तेन परेणापादितदोषाभासान् अथ-

## सहस्राक्ष.

* तथाहि ॥ स्वसम्मततयोपन्यस्ते कर्मधारयपक्षे तावच्छुद्धपदार्थमायासंबन्धरहितका-
र्यकारणात्मकस्यब्रह्मणोऽद्वैतपदार्थेन भेदज्ञानाभावेनतादात्म्यस्य बाधादसंगतिः ॥ किञ्च नी-
लघटादिसमासघटकनीलादिपदैरनीलादिघटस्येव शुद्धाऽद्वैतसमासघटकशुद्धपदेनाऽशुद्धाऽद्वैतस्य
व्यावृत्तेर्वाच्यतया तादृशस्य तव मतेऽप्रसिद्धत्वेन व्यावर्त्यालाभः ॥ एतेनाऽहंताममतापाशस्य

**कर्मधारयेत्यादिना** ॥ **किञ्चेत्यादिकमसङ्गतमेवेत्यन्तेन** ॥ उद्धरिष्यन्तः प्रथमं तदुक्तमसङ्गतिदोषं परिहरन्ति ॥ **दूरादेवनिरस्तइत्यन्तेन** ॥ प्रश्नार्थोथ शब्दः ॥ **नैयायिकवैशेषिकादीनामिति** ॥ अत्र वैशेषिकग्रहणं ( अ० १ आ० १ सू० ४ ) " धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानांपदार्थानांसाधर्म्यवैधर्म्याभ्यांतत्वज्ञानान्निःश्रेयसम् " इति काणादसूत्रे उपलक्षणविधयाऽभावमपिसङ्गृह्णतां केषांचित्तद्व्याख्यातॄणां " अत्रषट्पदार्थकीर्तनं भावाभिप्रायेण वस्तुतोऽभावोपि पदार्थान्तरतयामुनेरभिप्रेतः " इत्यादि वदतांवृत्तिकारादीनामनुरोधेन ॥ वस्तुतस्त्व त्रापि षडेव पदार्थाः सूत्रकाराभिप्रेताइति कणादमतेपि प्रकृते न बाधः ॥ नचप्रथमाध्यायद्वितीयान्हिके ( सूत्र १ ) " कारणाभावात्कार्याभावः " नवमाध्याये ( आ० १ सू० १।३ ) " क्रियागुणव्यपदेशाभावात् " इत्यादीनामसङ्गतिःशङ्क्या ॥ पूर्वोत्तरमीमांसकानामभावपदघटितप्रयोगवन्निषेधमात्रपरतया तदुपपत्तेः ॥ अन्त र्भावस्तु गुणादौ यत्र विधिः कल्प्येत तत्र निषेधस्यापि स्यात् ॥ एतेन " अभावश्चवक्तव्यो निश्रेयसोपयोगित्वाद्भावप्रपञ्चवत् " इत्यादि वदन् न्यायलीलावतीकारः " एतेचपदार्थाः प्रधानतयोपदिष्टाः अभावस्तुस्वरूपवानपिनोद्दिष्टःप्रतियोगिनिरूपणाधीननिरूपणत्वात्नतुतुच्छत्वात् " इति वदन्तोद्रव्यकिरणावल्यादयोपि सूत्रविरोधात्प्रत्युक्ताः ॥ परं तेषामपि वैशेषिकपदाभिलप्यत्वात्तद्ग्रहणम् ॥ वैशेषिकसूत्रोपन्यासकारशङ्करमिश्रादयस्तु " अत्रचद्रव्यादिपदार्थानामुद्देशएवविभागःपर्यवसन्नः सचन्यूनाधिकसङ्ख्याव्यवच्छेदफलकस्तेन षडेवपदार्थाइतिनियमःपर्यवस्यति " इति षडेव पदार्थान्मन्यन्ते ॥ मूले आदिपदेन बौद्धभेदाग्राह्याः ॥ वैधर्म्येण

---

मायाकृततायाअत्रैव टीकाकृतोक्तत्वेन मायासंबन्धस्य तन्मतेऽपि संभवात्तद्युक्तएवाऽशुद्धइति सएव व्यावर्त्य इतिपरास्तम् ॥ जीवस्याऽशुद्धत्वेऽप्यद्वैतपदार्थस्य तत्वाऽभावात् ॥ मायायाअपि भगवच्छक्तितया ततोऽभिन्नत्वेन न परमतवन्मायासंबन्धः ॥ किञ्चाऽध्यासएव मायिकोनजीवइति तेनैवोक्तत्वेन मायायास्तत्संबन्धिनोवाऽशुद्धत्वस्य वक्तुमशक्यत्वाच्च ॥ मायाकार्याऽहंताद्यध्यासस्य कथंचिदशुद्धत्वेऽपि तद्विशिष्टस्य जीवस्य तन्मतेऽशुद्धत्वाऽभावाच्च ॥ नह्यावृत्तेस्तदुक्तयैव तदसंमतत्वप्रतीतेश्च ॥ अन्यथाहि द्वैतापत्तिः ॥ सर्वं खल्विदमित्यादिश्रुतिविरोधश्च ॥ एतेन शङ्कराचार्यवदद्वैतं न मम संमतमिति बोधनमेवेतरनिवृत्तिरिति प्रत्युक्तम् ॥ अन्वयासम्भवव्यावर्त्याऽलाभयोर्दर्शितत्वात् ॥ किञ्चैवमद्वैते शुद्धत्वं विधीयतइत्यायाति एवञ्चैकप्रसरताभङ्गभयादपि नसमासोपपत्तिः ॥ एवञ्च ननु अद्वैतपदस्यतदुक्तार्थत्वे भवत्वन्वयानुपपत्तिर्नास्तिद्वैतं यस्मिन्नित्यर्थकत्वे तु नसेत्यप्यपास्तम् ॥ एकप्रसरताभङ्गप्रसङ्गात् ॥ अशुद्धाऽद्वैताभावेन व्यावर्त्यालाभाच्च ॥ किञ्च शङ्कराचार्यमतेऽद्वैतज्ञानात्पूर्वमपि ब्रह्मणः शुद्धत्वमेव ॥ त्वन्मते स्वाभिन्नायामायायाः संबन्धोऽस्ति तन्मते तस्याअपि मिथ्यात्वेन सोऽपि नेति तन्मते एव शुद्धाऽद्वैतं स्यात् ॥ एवञ्चैतन्मते इत्याद्यसंगतम् ॥ साङ्कर्यस्य तन्मतेऽभावात् ॥

दृष्टान्तोयम् ॥ बहुभिः पूर्वोत्तरमीमांसकैर्निर्णीतमभावस्याधिकरणात्मकत्वमभिप्रेत्य समादधते ॥ किन्त्विति ॥ एवञ्च अभावस्याधिकरणात्मकतया ब्रह्मणि च भेदज्ञानस्याभावेन कर्मधारयसमासे च पूर्वोत्तरपदार्थयोरभेदस्य प्रवृत्तिनिमित्तत्वेन प्रकृते शुद्धपदार्थमायासंबन्धरहितकार्यकारणात्मकब्रह्माभिन्ने अद्वैतपदार्थेद्वित्वप्रकारकज्ञानाभावे तदभिन्नाभिन्नस्य तदभिन्नत्वमितिनियमानुरोधाच्छुद्धपदार्थाभेदस्यापि सत्वेन पूर्वोत्तरपदार्थयोरभेदान्वयोनानुपपन्नइति कृष्णसारङ्गोमृगइत्यादिवत्कर्मधारयोनिर्बाधः॥ अथवा नीलोत्पलमित्यादौ प्रथमं भेदेन गृहीतं नीलत्वोत्पलत्वरूपधर्मद्वयमिव शुद्धत्वाद्वैतत्वरूपधर्मद्वयं लोकदृष्ट्या भिन्नत्वेन कल्पितमादाय तयोर्धर्मयोः सामानाधिकरण्येन शुद्धत्वाद्वैतत्वसमुदायवद्ब्रह्मेति मञ्जूषारीत्या बोधः॥ ननु घटाभाववद्भूतलं भूतले घटाभावइत्यादौ भूतलादिविशेषणतया तद्विशेष्यतया वा प्रतीयमानोऽभावपदार्थः कथं भूतलादिस्वरूपतया शक्यवचनइति चेदुच्यते ॥ यथा अभावविशिष्टबुद्धिर्विशेषणविशेष्यसंबन्धविषया विशिष्टबुद्धित्वात् ॥ दण्डीपुरुषइति विशिष्टबुद्धिवदित्यनुमाने संयोगादिबाधाद्गुणक्रियादिसमवायवद्भूतलादौ सिध्यदपि वैशिष्ट्यम् ॥ तस्यनित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गः ॥ तस्याऽनित्यत्वे च अनन्तवैशिष्ट्यकल्पनगौरवं प्रदर्श्य नाङ्गीक्रियते ॥ किन्तु घटाभाववद्भूतलमित्यादिप्रमितिकालिकं तत्तद्भूतलादिकमेव तत्तदभावानां सबन्धइति वदद्भिरभाववादिभिस्तत्र स्वरूपविशेषस्यैव संबन्धत्वं स्वीक्रियते ॥ तथात्र घटाद्यनुपलब्धिकालिकभूतलादिस्वरूपमेव तत्तदभावत्वेन कल्प्यतइतिनिरवद्यम् ॥ वैशिष्ट्यनित्यानित्यत्वपक्षयोरुक्तदूषणानामभावनित्यानित्यत्वयोरपिदुर्वारत्वात् ॥ नचाभावनित्यत्वेपि तद्बुद्धिं प्रति तद्वत्ताबुद्धेः प्रतिबन्धकतया घटादिसमवधानस्थलेनाभावबुद्धिरिति वाच्यम् ॥ वैशिष्ट्यनित्यत्वेपि तथा परिहारसंभवात् ॥ येतु नव्याः वैशिष्ट्यं पदार्थान्तरं स्वीकुर्वन्ति तैरष्टपदार्थवादिभिः सम्यक् स्वशास्त्रमुज्ज्वलितमिति किं तैः ॥ तन्मतेप्यत्तरसस्तु रामरुद्रादिभिर्दर्शितएवेत्यलम् ॥ एतेनाभावस्याधिकरणात्मकत्वे भूतले घटसमवधानदशायामपि घटाभावबुद्धिप्रसङ्गइति कुचोद्यमपास्तम् ॥ तथा अधिकरणात्मकत्वपक्षेअनन्ताधिकरणकल्पने गौरवात् भावातिरिक्तकल्पनैव लघीयसीति तार्किकोक्तिरप्यनेनैव निरस्ता ॥ भावसमुदायविलक्षणातिरिक्तकल्पने महागौरवात् ॥ प्रतियोगिभेदादनन्ताभावान्कल्पयित्वापि तदनित्यत्वे त्वत्यन्तगौरवभिया तन्नित्यत्वं प्रकल्प्य तथासति सर्वदा घटाभावबुद्धिप्रसक्त्याधिकरणस्वरूपविशेषस्यैव संबन्धत्वस्वीकारे कण्ठगडुभूतातिरिक्ताभावकल्पनैव गरीयसीति तदपेक्षयाऽभावस्याधिकरणस्वरूपविशेषत्वस्वीकारएव लाघवमिति शुभम् ॥ किञ्च किमिदमभावत्वं नाम ॥ नतावद्द्रव्यादिषट्कान्योन्याभाववत्त्वम् ॥ द्रव्यत्वादेः प्रतियोगितावच्छेदकत्वे गुणत्वद्रव्यत्वादिकमादाय द्रव्यगुणादिष्वतिप्रसङ्गात् षट्त्वावच्छिन्नभेदस्य अभावत्वत्वे घटपटोभयभेदस्य प्रत्येकं घटपटयोरिवं तस्य प्रत्येकं द्रव्यादाव-

पि सत्त्वात्पर्याप्तिसंबन्धेन षट्त्वावच्छिन्नभेदस्य प्रत्येकं द्रव्यादिषु सत्त्वस्य वारयितुमशक्यत्वात् ॥ नचापेक्षाबुद्धिरूपं द्रव्यादिगतषट्त्वमेव प्रतियोगितावच्छेदकम् ॥ द्विप्रतियोगिकभेदस्य द्वित्वमिवेति वाच्यम् ॥ व्यासज्यवृत्तिधर्माणां पर्याप्ति संबन्धेनैव प्रकारत्त्वनियमाङ्गीकारात् ॥ अन्यथा द्वित्वस्य समवायेन प्रत्येकमपि सत्त्वेन एकोद्वावित्येकविशेष्यकद्वित्वप्रकारकप्रमितिप्रसङ्गात् ॥ एकोद्वित्त्ववानिति प्रतीतौ तु मत्त्वर्थ समवायस्यैव प्रकारत्वमङ्गीकृत्य व्यासज्यवृत्तिधर्माणां समवायेन प्रकारतायास्तार्किकैरेव निराकृतत्त्वाच्च ॥ एवञ्च षडभिन्नमिति प्रतीतौ पर्याप्तिसंबन्धेनैव षट्त्वस्य प्रकारतानुभूयतइति षट्त्वावच्छिन्नभेदोऽसङ्गतः ॥ नच द्रव्यादिभेदषट्कमभावत्त्वमिति कल्प्यं गौरवात् ॥ लोके सर्वेषां विशेषान्तपदार्थषट्कनिश्चयानियमेन तदनिश्चयवतामभावा प्रतीतेः प्रसङ्गाच्च ॥ नच तर्हि भावभिन्नत्वं तत्त्वं शङ्क्यम् ॥ भावत्वेन भावप्रज्ञानतस्तदप्रत्ययापातात् ॥ वस्तुतश्च भावत्वावच्छिन्नप्रतियोगिताकभेदस्यैवाप्रसिद्धतायाः परैरङ्गीकारात् ॥ अभावरूपधर्मिसिद्धौ तद्वृत्तितादृशभेदसिद्धिस्तत्सिद्धौ चाभावसिद्धिरित्यन्योन्याश्रयाच्च ॥ किञ्च भेदस्त्वन्मतेऽन्योन्याभावएव ॥ अन्योन्याभावत्वं चाभावत्वगर्भभूतोधर्मः ॥ तथाच भावान्योन्याभाववत्त्वमभावत्वमित्युररीकारेऽभावत्वज्ञानमन्योन्याभावत्वज्ञानाधीनं तज्ज्ञानं चाभावत्वज्ञानाधीनमित्यन्योन्याश्रयः ॥ अन्योन्याभावेऽभावलक्षणसमन्वयआत्माश्रयश्च ॥ अपिचैवंसति, अभावोन भावइति वाक्याच्छाब्दबोधोन स्यात् ॥ उद्देश्यतावच्छेदकस्यभावभेदस्यैव विधेयतायाअनौचित्यात् ॥ यत्तु नव्याः भावभिन्नत्वं समवायसामानाधिकरण्यान्यतरसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभावरूपम् ॥ सामान्यादित्रिकेद्रव्यादित्रिकेचातिप्रसङ्गवारणाय समवायसामानाधिकरण्योरुभयोर्ग्रहणमित्याहुः ॥ तन्न ॥ सत्ताभावरूपत्वोक्तावप्यात्माश्रयानपायात् ॥ सत्तानुपस्थितिदशायामभावाप्रत्ययस्यापत्तेश्च ॥ सत्ताऽभावनिष्ठमभावत्वमपि सत्ताऽभावरूपं पुनस्तन्निष्ठमभावत्वमपि तद्रूपमित्यनवस्थापत्तेश्च ॥ नच सत्तात्यन्ताभावव्यक्तेः स्वरूपतएव प्रकारत्वमुपगम्यते ॥ अतएव सत्तारूपप्रतियोगिज्ञानं विनापि घटेनास्तीति बुद्धौ सोऽत्यन्ताभावः प्रकारः अभावत्वप्रकारकप्रत्यक्षएव ॥ प्रतियोगिधियोहेतुत्वात् ॥ अन्यथा इदं तमइति प्रतीत्यनापत्तिरिति वाच्यम् ॥ कल्पने मानाभावात् ॥ प्रतियोगिज्ञानमन्तरेणाभावज्ञानस्यानिष्पत्तिनियमेन सत्तोपस्थितिमन्तरा सत्ताभावज्ञानाऽसम्भवात् ॥ इदं तमइति ज्ञानं तु न तेजोऽभावविषयकम् ॥ मीमांसकैस्तमसः स्वतन्त्रद्रव्यतायाः स्वीकारात् ॥ वस्तुतस्तु मायिकं पदार्थान्तरं तदिति ( स्कन्ध २ अध्याय ९ श्लोक ३३ ) यथाभासोयथातमइत्यत्र सुबोधिनीतत्प्रकाशयोरन्धकारवादादौ च प्रपञ्चितम् ॥ तेन तेजोधियं विनापीदंतमइति धीर्निर्बाधा ॥ तवसत्ताभावरूपस्याभावत्वस्यानुपस्थितस्य प्रकारत्वे नागृहीत विशेषणेति न्यायव्यभिचारादिकमपि द्रष्टव्यम् ॥ अथाभावस्याधिकरणात्मकत्वपक्षे

नैयायिकोक्तदोषाभासानुद्धर्तुमाशङ्कन्ते॥**नचेति॥ आधाराधेयभाववदिति**॥ लोकदृष्ट्या कल्पितं भेदमादाय आधाराधेयभावव्यवहारवदित्यर्थः ॥ भवन्मतेप्यभावस्याधिकरणात्मकताङ्गीकारआवश्यकएवेत्याहुः ॥ **भवन्मतेचेति**॥ अन्यथा अविद्याध्वंसस्य साद्यनन्ततयामोक्षेनुच्छेद्यद्वैतमेव प्रसज्येतेति भावः ॥ नन्वेवमाधाराधेयभावानुपपत्तिरूपदोषपरिहारेपि येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनैवेन्द्रियेण तद्गताजातिस्तदभावश्चेतिनियमेन जलादौ गन्धाद्यभावस्य जलादिरूपतया जलादेर्घ्राणादिजन्यप्रत्यक्षविषयत्वं चाक्षुषाद्यविषयत्वं चापद्येतेति चेदत्रब्रूमः॥ यथा जलमभास्वरशुक्लरूपवत्वेन चक्षुषा गृह्यते॥शीतस्पर्शवत्वेन तु त्वगिन्द्रियेण एवं गन्धाभावत्वेन रूपेणतुजलादेर्घ्राणग्राह्यत्वेपि न किञ्चिद्बाधकमिति प्राभाकराः॥अतएव " गन्धाभावस्यजलादिरूपत्वेजलत्वादिनैवतेषांनघ्राणेन्द्रियग्राह्यता गन्धाभावत्वेनतुतेषामपितथात्वमिष्टमेवेतिप्राभाकराणामभिप्रायः" इतिरामरुद्रोप्याह ॥ अन्येतुमन्यन्ते जलस्य चक्षुर्ग्राह्यत्वेपि जलत्वजातेस्त्वगिन्द्रियग्राह्यत्वमेव ॥ शीतस्पर्शस्य त्वग्ग्राह्यत्वेन तत्समानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातेस्ततएव निश्चयस्यौचित्यात् ॥ अन्यथाऽनुमेयत्वापत्तेः ॥ दृश्यतेचप्रज्ञाचक्षुषामपि स्पर्शमात्रेणात्र पात्रे जलमिति ज्ञानम् ॥ नहि तज्जलत्वानुपस्थितौ संभवति ॥ नागृहीतविशेषणेति न्यायात् ॥ यत्र तु जलचाक्षुषमात्रं तत्रस्पार्शनानुभवविषयजलत्वस्मरणमेव सामान्यतोदर्शनोद्बुद्धं जलमिदमितिनिश्चयजनकमतोनोक्तन्यायविरोधइति ॥ तस्माज्जलत्वतेजस्त्वयोस्त्वग्ग्राह्यत्वपक्षे येनेन्द्रियेणेति नियमोनैकान्तिकः किञ्चाभावानां प्रत्यक्षविषयत्वाभ्युपगमे तार्किकनियमव्यभिचारशङ्कावकाशः ॥ मीमांसकनयेत्वधिकरणानामभावत्वेन रूपेणानुपलब्धिरूपषष्ठप्रमाणगम्यत्वस्याङ्गीकारान्न सः तार्किकैरपि प्रत्यक्षस्थलएव तादृशनियमस्योरीकारात् ॥ नच प्रमाणान्तराभ्युपगमे गौरवं शङ्क्यम् प्रत्यक्षवादिभिरपि अभावप्रत्यक्षकारणीभूतविशेषणविशेष्यभावाख्यषष्ठसन्निकर्षस्य कल्पनीयतया तौल्यानपायात् नच वैशिष्ट्यं स्वरूपसंबन्धरूपत्वादधिकरणात्मकमिति नातिरिक्तं कल्प्यतइति वाच्यम् अभावानामधिकरणात्मकत्वेन प्रकृतेपि गौरवाभावात् तन्मतेऽभावज्ञानं प्रतीन्द्रियाणामपि कारणत्वकल्पनस्याधिक्याच्च ॥ अपिच येनेन्द्रियेणेत्यस्यैकान्तिकत्वाभ्युपगमे रूपादिप्रतियोगिकाभावानामपि चक्षुर्मात्रग्राह्यतापत्त्या वायौ रूपाभावबुद्धिश्चक्षुर्व्यापारमन्तरैव जायमाना नोपपद्येत ॥ एवंपरमाण्वादिषुमहत्वाद्यभावबुद्धिरपि ॥ वाय्वादेश्चाक्षुषविषयत्वंचापद्येत ॥ तस्मादनुपलब्धिप्रमाणेनैवाधिकरणमभावत्वेन गृह्यते ॥ घटाभाववद्भूतलमितिज्ञानस्यापि भूतलांशेप्रत्यक्षत्वमभावांशेपरोक्षत्वम् ॥ पर्वतोवन्हिमानित्यादेः पर्वतांशे प्रत्यक्षत्वं वन्हिमत्वांशे परोक्षत्वमिवेति ध्येयम् वस्तुतस्तु द्वितीयस्कन्धसुबोधिन्यां ( अ०९श्लो०३२ ) अहमेवासमेवाग्रइत्यत्र " अभावास्त्वस्मन्मतेतिरोभावातिरिक्तानभवन्ति " इत्युक्तम् ॥

तेनतिरोभवनं तिरोभावइतिपक्षे तस्य वस्तुधर्मत्वाद्धर्मधर्मिणोश्चाभेदाद्गुणादीनां द्रव्यात्मकतायावाक्यप्रदीपे हरिणापि द्रव्यात्मानस्त्रयस्तस्माद्गुणानानाव्यवस्थिताः ॥ आश्रयाश्रयिभावेनेत्ययंपूर्वेभ्यआगमइतिकथनात् ॥ तिरोभावयतीति तिरोभावइतिव्युत्पत्त्या शक्तित्वेपि तादात्म्यानपायाच्च स्वमतेप्यभावस्याधिकरणात्मकत्वकथनं न विरुद्धम् ॥ तस्मात्पदार्थान्तरतयाऽभावस्याङ्गीकारोभिमानमात्रम् ॥ तस्याऽलीकत्वात् ॥ अयमिति निर्देष्टुमशक्यत्वात् अतएव लोके वेदे च घटोनास्ति "यस्मात्परंनापरमस्तिकिञ्चि"दित्यादिर्नपदघटितवाक्यप्रयोगव्यवहारएव प्रायो दृश्यते ॥ नतु घटाभाववद्भूतलमिति कोपि लौकिकःप्रयुङ्क्ते ॥ किंबहुनाऽभावपदेपि न भावोऽभावइति नञ्समासएव ॥ नञर्थस्य पृथक्पदार्थताभिमाने त्वब्राह्मणोऽधर्मइत्यादौ प्रतीयमानसादृश्यविरोधादिनञर्थानामपि पदार्थान्तरत्वं स्वीकुरु ॥ तेन बहुपदार्थसिध्या सप्तपदार्थवादोदत्ततिलाञ्जलिः स्यात् ॥ वस्तुतस्तुनञः समभिव्याहृतपदार्थद्योतकत्वादेव न पृथक्पदार्थवाचकता ॥ किन्तुपदार्थएव आविर्भूततिरोभूतत्वाभ्यां द्विविधः ॥ तत्र पदार्थस्य तिरोभूतस्वरूपद्योतकोनञ् ॥ आविर्भावतिरोभावौ तु पुरस्तात्प्रपञ्चयिष्येते ॥ अभावस्यतिरोभावानतिरिक्ततयाऽस्मन्मते ॥ तदनङ्गीकारस्य शुद्धाद्वैतमार्तण्डे ॥ प्रागभावादयोनाङ्गीकार्याआभ्यांयतोखिलम् ॥ तद्विस्तरभियानात्रलिख्यतेन्यत्रदृश्यतामिति दर्शितत्वेपि तदप्रकाशयन् भेदज्ञानाभावइति भ्रान्तपाठं चकल्पयन् ग्रन्थानभिज्ञजनव्यामोहकएवेत्युपेक्ष्यः ॥ अथ विवर्तवादेन कार्यकारणयोर्मायासंबन्धस्याप्रामाणिकत्वमविकृतपरिणामवादेन शुद्धस्यैव कार्यकारणात्मकत्वं च शुद्धाद्वैतसिध्यर्थं दर्शयितुं शुद्धपदार्थं तावदाक्षिपन्ति ॥ **नन्विति** समादधते ॥ **स्यादेवमित्यादिना** ॥ यदि नैयायिकवन्निमित्तकारणत्वमात्रमीश्वरस्य स्वीक्रियेत तदा प्रपञ्चेश्वरयोर्भेदः भेदानभिज्ञतयेश्वरेऽल्पज्ञत्वं चापद्येतेत्यर्थः ॥ **तत्रचेति** ॥ उपादानत्वपक्षे ॥ स्वपक्षे तन्त्रान्तराणामपि संमतिं दर्शयितुमाहुः **बहुवादिसम्मतमिति** तथाच प्रकृत्युपादानकत्ववादिभिः साङ्ख्यपातञ्जलादिभिः कार्ये प्रकृतितादात्म्यमुच्यते ॥ कटकादेःसुवर्णादितादात्म्यं तवापिभाष्यभामत्यादावुपपादितमिति परिणामवादे कार्यस्य कारणात्मकत्वं निर्विवादमिति भावः ॥ **कार्येति** ॥ ब्रह्मणइति शेषः ॥ **अपास्तमिति** ॥ कार्यकारणाद्भेदज्ञानस्य भ्रमरूपत्वादीश्वरस्य चाभ्रान्तत्वात्तथेतिभावः॥अभिन्ननिमित्तोपादानवादे मानमाहुः॥ **प्रकृतिश्चेत्यादि** ॥ समन्वयस्य चतुर्थेपादेऽभिन्ननिमित्तोपादानत्वस्थापनायेदमधिकरणम् ॥ तत्रधर्मविचारे श्रुतिस्मृत्योरेकवाक्यत्ववद्ब्रह्मविचारेपि तयोस्तदपेक्षितमितिसांख्यादिस्मृतिसिद्धा प्रकृतिरेवोपादानंश्रुतिसिद्धं ब्रह्म तु निमित्तमात्रमिति पूर्वपक्षे प्राप्तेइदमारभ्यते ॥ अर्थस्तु मृत्प्रकृतिकोघटस्तन्तुप्रकृतिकः पटइत्यादिव्यवहारात्प्रकृतिशब्दउपादानवचनः ॥ तथाच जगतः प्रकृतिरुपादानकारणं चान्निमित्तकारणं च ब्रह्मैव ॥ अथवा रूढ्या प्रकृतिरुपादानं प्रकृष्टाकृतिर्यस्येति योगेन निमित्तं च ब्रह्मैव ॥ चकारोयत्र

येनयतोयस्येत्यादिवाक्योक्ताधिकरणत्वकरणत्वादिसङ्ग्राहकः ॥ कुतः ॥ प्रतिज्ञादृष्टान्तानुपरोधात् ॥ तत्रतत्रोपनिषत्सु श्रूयमाणाः प्रतिज्ञाः दृष्टान्ताश्चाभिन्ननिमित्तोपादानत्वेसत्येव नोपरुध्येरन् ॥ यथा छान्दोग्ये श्वेतकेतुविद्यायां " उततमादेशमप्राक्षोयेनाश्रुतंश्रुतंभवत्यमतंमतमविज्ञातंविज्ञातं" इतिप्रतिज्ञा ॥ अनन्तरं"कथंनुभगवः सआदेशोभवति" इतिश्वेतकेतुप्रश्ने"यथासोम्यैकेनमृत्पिण्डेनसर्वंमृण्मयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यं ॥ यथासोम्यैकेनलोहमणिनासर्वंलोहमयं विज्ञातंस्यात् ॥ यथासोम्यैकेननखनिकृन्तनेनसर्वंकार्ष्णायसंविज्ञातंस्यात्" इति दृष्टान्ताउक्ताः ॥ प्रथममुण्डके"कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातंभवति" इति प्रतिज्ञा ॥ " यथोर्णनाभिःसृजतेगृण्हतेचयथापृथिव्यामोषधयःसंभवन्ति ॥ यथासतः पुरुषात्केशलोमानितथाऽक्षरात्संभवतीहविश्वम्"इति दृष्टान्ताः ॥ बृहदारण्यकेमैत्रेयीब्राह्मणे "आत्मनोवाअरेदर्शनेनश्रवणेनमत्याविज्ञानेनेदꣳसर्वंविदितं" इतिप्रतिज्ञा ॥ अग्रेच"ब्रह्मतंपरादाद्योन्यत्रात्मनोब्रह्मवेद" इत्यादिनाकार्यकारणभेददर्शनेऽनिष्टमुक्त्वा "इदंसर्वंयदयमात्मा"इति सर्वस्यब्रह्मरूपतां प्रतिज्ञाय दृष्टान्ताआम्नाताः ॥ "सयथादुन्दुभेर्हन्यमानस्यनबाह्याँश्छब्दाञ्छक्नुयाद्ग्रहणायदुन्दुभेस्तुग्रहणेनदुन्दुभ्याघातस्यवाशब्दोगृहीतः"इत्यादयः ॥ नहि निमित्तकारणविज्ञानेन कार्यविज्ञानं संभवति ॥ मृत्सुवर्णादीनि च समवायीन्येव दृष्टान्तीक्रियन्ते ॥ मृत्पिण्डदृष्टान्तश्रुतिरेव श्रीभागवतेऽष्टमस्कन्धेषष्ठाध्याये स्तुवता विधिनोपबृंहिता ॥ ( श्लो १० ) त्वय्यग्रआसीदिति एवं यथासुवर्णंसुकृतपुरस्तात् ॥ यथाहिरण्यंबहुधासमीयते ॥ यथोर्णनाभिर्दद्यात् ॥ इत्यादिषु श्रौतालोहादिदृष्टान्ताउपबृंहिताः ॥ **भाष्यइति** ॥ अविरोधाध्यायेतर्कपादे ( सू. ११ ) महद्दीर्घवद्वेत्यधिकरणे ॥ **सर्वंखल्वित्यादि** ॥ छान्दोग्येपञ्चमाध्याये ( खंड०१४ ) शाण्डिल्यविद्यायां ", सर्वंखल्विदंब्रह्मतज्जलानितिशान्तउपासीत " इतिपठ्यते ॥ अर्थस्तु ॥ इदं परिदृश्यमानं सर्वं खलु निश्चयेन ब्रह्म ॥ तत्र हेतुः ॥ तज्जलानिति जायतइतिजं ॥ लीयतइति लम् ॥ अनितीत्यन् ॥ एषां कर्मधारये तस्मिन्जलान्तज्जलान् तस्माज्जायमानं तत्रैवलीयमानं स्थितिदशायां तद्रूपेण वर्तमानं चेत्यर्थः॥ यद्यस्माज्जायते यत्र लीयते यद्रूपेणावतिष्ठते तत्तदभिन्नमितिनियमः ॥ यथा मृत्प्रभवोमृद्विलयः स्थितिदशायां मृद्भावमपरिमुञ्चन्घटोमृदभिन्नएव ॥ इति हेतोः शान्तोरागद्वेषादिशून्यः सन् ब्रह्मैवोपासीतेति ॥ अत्रविस्तरस्तुसमन्वयस्यद्वितीये पादेप्रथमाधिकरणे ज्ञेयः ॥ " तदात्मानꣳस्वयमकुरुते" ति तु तैत्तिरीयब्रह्मवल्लीस्थम् ॥ अर्थस्तु ब्रह्मैव स्वयमितरानपेक्षं सदात्मानमेवजगद्रूपमकुरुतेति ॥ सच्चत्यच्चाभवदित्यपि तत्रत्यमेव ॥ अर्थस्तु सचेतनमचेतनंच स्वयमेवाभवदिति ॥ ब्रह्मैवेदममृतमितितु द्वितीयमुण्डकसमाप्तिवाक्यम् ॥ अत्र ब्रह्मणएवामृतस्याविकृतस्य सतः सर्वतः सर्वरूपेण प्रसृतत्वम् ॥ विश्वस्यावधारणपूर्वकं ब्रह्मरूपत्वम् ॥ अभेदाद्विश्वस्यवरतमत्वंचाम्नायते ॥ अविकृतपरिणामवादबोधनाय शङ्कन्ते ॥ **नन्वविक्रियमाणस्येत्या-**

**दिना** ॥ समादधते ॥ **नहिलोकेत्यादिना** ॥ यद्यपिलोके सुवर्णादीनि स्वरूपपरित्यागादिविकारमलभमानान्येव कटकरुचकादिरूपेण परिणमन्ति ॥ नतु दध्यादिरूपेण परिणमद्दुग्धादिवद्विक्रियमाणानि ॥ तान्येव वेदे पुराणे च यथासोम्यैकेनलोहमणिना ॥ यथासुवर्णंसुकृतंपुरस्तादित्यादिषु ब्रह्मणोदृष्टान्तीक्रियन्ते ॥ चिन्तामणिकल्पतरुकामधेनुप्रभृतीनि चाविकारीण्येवोपादानानि प्रसिद्धानि ॥ तेनाविकृतमेव ब्रह्म जगद्रूपेण परिणमतीति कथनं नलोकविरुद्धम् ॥ तथापीदमग्रे ऽवसरे प्रपञ्चनीयमेवेति प्रकृते वेदैक वेद्यवस्तुनि कुतर्कानवसरमेवाश्रित्य समादधतइति ज्ञेयम् ॥ ॥ **तन्त्वौपनिषदमिति** ॥ बृहदारण्यके शाकल्यब्राह्मणे " सएषनेतिनेत्यात्माऽगृह्योनहिगृह्यते " इत्यादिना प्रत्यक्षादिप्रमाणग्राह्यतां प्रतिषिध्य शाकल्यं प्रति याज्ञवल्क्येन " तन्त्वौपनिषदंपुरुषंपृच्छामि " इति कथने औपनिषदपदेन उपनिषदामेवतत्रप्रवृत्तिः प्रतिप्रसूयतइति युक्तमतोवेदैकवेद्यत्वम् ॥ **यथापशाविति** ॥ एवं "ब्रह्मपुच्छंप्रतिष्ठा" इति श्रवणेपि तस्य पशुसदृशलोमादिविशिष्टं लाङ्गूलं न कल्प्यते॥ लोकप्रसिद्धस्यैव तत्र कल्पनायाअनियमादितिभावः ॥ **आसीनइति** ॥ कठवल्लीषुद्वितीयवल्ल्यां " अन्यत्रधर्मादन्यत्राधर्मात् " इति नचिकेतःप्रश्ने " सर्वेवेदायत्पदमामनन्ति " इत्यादिना ब्रह्मनिरूपणमुपक्रम्य आसीनइतिपठ्यते ॥ अस्योत्तरार्धंतु " कस्तंमदामदंदेवंमदन्योज्ञातुमर्हति " इति ॥ अत्र आसीनस्य सतोदूरगमनं शयानस्य सतः सर्वतो गमनं च विरुद्धम् ॥ अतएव परमभक्तात्त्वस्मादन्यस्य तज्ज्ञानानर्हत्वमुत्तरार्द्धे दर्शितं यमेन ॥ तस्य तज्ज्ञत्वं तु द्वादशैतेविजानीमइति षष्ठस्कन्धादौप्रसिद्धम् ॥ **अपाणिपादइति** ॥ श्वेताश्वतरे तृतीयाध्यायइदं पठ्यते ॥ अस्योत्तरार्धंतु " सवेत्तिवेद्यंनचतस्यवेत्तातमाहुरग्र्यंपुरुषंमहान्तम् " इति ॥ एतदग्रेऽप्यनुपदं " अणोरणीयान्महतोमहीयान् " इति विरुद्धधर्माश्रयत्वं श्रावितम्॥ अतएव लौकिकानां तदवेत्तृत्वं वीतशोकस्य तत्प्रासादात्तद्वेत्तृत्वंचोक्तमृग्द्वयेन ॥ **नदूषणायेति**॥ तादर्थ्ये चतुर्थी ॥ ब्रह्मणि विकारित्वादिदूषणापादकं न भवति किन्तुविरुद्धसर्वधर्माश्रयत्वेन ब्रह्मतामेव द्रढयतीति भूषणापादकम् ॥ कार्यकारणयोर्मायासंबन्धं निराकर्तुं तयोस्तत्संबन्धं पराभिप्रेतं गृण्हन्ति॥ **नचमायीति**॥ इदमपि वाक्यं श्वेताश्वतरे चतुर्थाऽध्याये " छन्दांसियज्ञाःक्रतवोव्रतानिभूतंभव्यं यच्चवेदावदन्ति ॥ यस्मान्मायीसृजतेविश्वमेतत्तस्मिंश्चान्योमाययासन्निरुद्धः " इति पठ्यते॥ **दृष्टान्तानामिति**॥ दृष्टान्तवाक्यानां ॥ परिहरन्ति॥ **प्रसिद्धेत्यादिना**॥ आत्मानमेवप्रक्रान्तजगद्रूपमकुरुतेति प्रसिद्धोर्थः ॥ श्रूयमाणपदलभ्यत्वात् ॥ माययाकुरुतेत्यप्रसिद्धः॥ तत्र मायापदाश्रवणात्॥ उच्चारितएव शब्दः प्रत्यायको नानुच्चारितइतिनियमस्यबहुसंमतत्वात् ॥ ननुमायीसृजत इति वाक्यमेव तत्र तत्र तथाकल्पने मानमिति चेन्न॥ अनेकेषामन्यथानयनस्याशक्यत्वात् ॥ बहूनामनुग्रहस्य न्याय्यत्वात् ॥ ननु तथापि तस्य वाक्यस्य कोर्थइति चेत्तत्राहुः ॥ **मायापदेनेति** ॥ तथाचायं वाक्यार्थःपूर्व

चि." ऋचोअक्षरेपरमेव्योमन्प्रतिष्ठिताः" इति वेदानामक्षरैकप्रतिष्ठितत्वमुक्तं तत्कथं सङ्गच्छते ॥ वेदेषु यज्ञादिप्रतिपादनादतउच्यते ॥ **छन्दांसीति** ॥ यत्पूर्वोक्तं ब्रह्म ॥ छन्दांसि ऋगादिमन्त्राः ॥ यज्ञावियूपाः ॥ ऋतवः सयूपाः ॥ व्रतानि कृच्छ्रादीनि ॥ भूतं भविष्यच्चाद्वर्तमानं च सर्वं ब्रह्मैव ॥ यच्चान्यद्वेदावदन्ति तत्सर्वं यद्ब्रह्मैव ॥ तच्च सर्वं यस्माद्ब्रह्मणोभवति ॥ यस्तं न वेदेति पूर्वेणतच्छब्देन यच्छब्दद्वयस्यान्वयः ॥ एतेन एवंसर्वंततःसर्वंसइतिज्ञानयोगतइति दर्शितं तथा च वेदानां तद्रूपत्वात्तदेकप्रतिपादकत्वाच्च युक्तं तत्रप्रतिष्ठितत्वम् ॥ यस्मादित्यस्योत्तरत्र वा हेतुतयान्वयः॥ ननु सर्वस्य तद्रूपत्वे यस्तंनवेदकिमृचाकरिष्यतीत्यवेदनं कथमतउच्यते ॥ मायी ॥ सर्वभवनसामर्थ्यरूपमायाख्यस्वाभिन्नशक्तिशाली परमात्मा एतद्विश्वं सृजति तस्मिंश्चान्यः अंशतया भेदमापन्नोजीवः देहेन्द्रियादिमत्त्वे मायया ऽध्यासेन सम्यङ्निरुद्धइति ॥ अत्र च माया भगवच्छक्तिरेव तत्रैव " देवात्मशक्तिं ॥ परास्यशक्तिः" इतिशक्तित्वाभ्यासात् ॥ नतु पराभिमतं ब्रह्माधिष्ठानकमज्ञानं ॥ मानाभावात् ॥ तथाच माली गच्छतीत्यादौ मालया गच्छतीत्यर्थो यथा न संपद्यते तथात्रापि मायया सृजतीति न लभ्यते पुराणवचनैस्तस्याःकरणत्वसाधनेपिवन्हिर्दहति वन्हिर्दाहकशक्त्यादहतीति वाक्ययोरिवमायाकरणत्वबोधकपुराणस्य तदाऽऽत्मानमित्यादेश्च न विरोधः पराभिमतमायोपाधिककर्तृत्वं तु मार्तण्डादिषु किञ्च जन्यात्वजन्यावामाया ऽऽद्येजनकोहिकः अन्याऽभावात्तुब्रह्मैवसविशेषत्वमागतम् ॥ द्वितीये त्वद्वैतभङ्गः कादाचित्कत्वसंगतं ॥ आत्मैवेदमग्रआसीदित्यादिश्रुतिबाधतः ॥ अनादित्वेतु सान्तत्वमितिपक्षोऽप्यसंगतः अनादित्वमनन्तत्वं मायाया इति निश्चयात् इत्यादिदोषैर्निरस्तमेव॥ विस्तरतश्च पुरतो निराकरिष्यते ॥ एवं च प्रकृत वाक्ये स्रष्टुर्मायाशक्तिकत्वेन मायायास्तदधीनतया तया न सृज्यप्रयुक्तोव्यामोहइति मायिपदतात्पर्यं॥जीवस्य तु व्युच्चरणाद्भेदमापन्नस्य मायया सन्निरोधादवेदनं साधनैर्वेदनंच पूर्वकृगुत्तरार्द्धोक्तं घटतइति चतुर्थचरणाशयः ॥ शक्तित्वाच्छक्तिशक्तिमतोश्चाभेदस्योपपादयिष्यमाणत्वान्न कारणेमायासंबन्धः ॥ प्रकृतवाक्ये सृज्यस्य मायिकताबोधनपरत्वस्य कल्पने तु तस्मिन्नेवाध्याये " तदेवाऽग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ॥ तदेवशुक्रंतद्ब्रह्मतदापस्तत्प्रजापतिः ॥ २ ॥ त्वंस्त्रीत्वंपुमानसित्वंकुमारउतवाकुमारी" इति श्रावितं सर्वव्यक्तीनां तद्रूपत्वं पीड्येत ॥ एवंकारणे मायासंबन्धं संक्षेपेणनिराकृत्य कार्येतन्निराकरणाय वाचारम्भणश्रुत्यर्थं निर्मलयितुं शङ्कन्ते ॥ **नन्वेवमिति** ॥ समादधते ॥ **एवंसतीत्यादिना** ॥ **तदनन्यत्वमिति** द्वितीयस्य प्रथमे पादे समस्तसूत्रमिदमधिकरणं ॥ अग्रेजगन्मिथ्यात्वनिराकरणावसरे एतदधिकरणं वाचारम्भणादिश्रुत्यर्थो विवर्त्तवादेऽनुपपत्तयश्च विस्तरेण निरूपयिष्यन्तेऽतोत्रविरम्यते ॥ **यतोवाइति**॥ तैत्तिरीयभृगुवल्यां " यतोवाइमानिभूतानिजायन्तेयेनजातानि जीवन्तियत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति " इतिपठ्यतेमिथ्यावस्तुनंउत्पत्तिस्थितिलयाभिसंवे-

शानामसंभवात्तद्बोधकश्रुतिव्याकोपइतिभावः ॥ **अन्यत्रविस्तरइति** निबन्धावरण-भङ्गभाष्यतत्प्रकाशादिषु विस्तरइत्यर्थः एवमभ्युपेत्य वादेन मार्त्तण्डटीकायां " भेद-ज्ञानाभावः" इतितत्कल्पितम् प्रथमान्तपाठं समाधायवास्तवेसप्तम्यन्तपाठे समादधते॥ **वस्तुतस्त्वित्यादिना** ॥ **वास्तवंनेति** ॥ कठकाण्वादिभिः " नेहनानास्तिकिञ्चन ॥ यत्रहिद्वैतमिवभवतितदितरइतरंपश्यति " इति भेदस्यातात्त्विकतायाआम्नानाद्भेदज्ञा-नं वास्तवंप्रमारूपं न भवति किन्तु भ्रमरूपं ॥ मुण्डकश्वेताश्वतरादिषु " अनीश-याशोचतिमुह्यमानः " इति मोहस्याविद्याहेतुकत्वश्रावणात् ॥ **यद्विस्यादिति** ॥ तात्विकोयदि स्यात् ॥ **तात्पर्यादिति** इति चेन्नेति पूर्वत्रास्य हेतुतयाऽन्वयः ॥ **अतएवेति** ॥ सप्तम्यन्तपाठस्य वास्तवत्वादेव ॥ **सप्तम्यन्तमिति** ॥ सप्तम्य-न्तपदघटितम् ॥ सर्वत्र ग्रन्थान्तरेषु व्याख्येयग्रन्थस्थान्यथापदं सप्तम्यन्तपर्यायक-थनेनैव व्याख्यायते ॥ अतोव्याख्यानशैल्यापि सएव पाठोनिश्चीयते ॥ सहस्राक्ष-कृता ऽद्वैतपदे नञ्बहुव्रीहिः स्वयमुत्प्रेक्ष्य दूषितत्वेन तदुक्तमपाकर्तुं तथाविग्रहमपि स्वीकुर्वन्ति ॥ **व्युत्पत्तिस्त्विति** ॥ परोक्तैकप्रसरताभङ्गादेर्वक्ष्यमाणरीत्या निरा-करणसंभवादयमपि पक्षोन दुष्टइति भावः ॥ मार्तण्डकारिकाटीकयोरभिप्रायल-भ्योऽयंपक्षइत्याहुः ॥ **द्विधाज्ञानमिति** ॥ नन्वेवं सति मार्तण्डटीकायां " अन्य-थाभेदज्ञानाभावे ॥ नद्वैतमद्वैतमिति विग्रहः " इति व्याख्यानं कथं सङ्गच्छता मत आहुः ॥ **अथवेति** ॥ अस्मिन्पक्षे पर्युदासाऽऽश्रयणेन नञोविरोधार्थतया वाऽद्वैत-पदस्याभेदज्ञानमित्यर्थः प्राग्दर्शितः ॥ एवकारोन्ययोगव्यवच्छेदकोस्य विग्रहस्य मुख्यतां द्योतयति ॥ प्राचीनैरस्यैव विग्रहस्याऽऽदरणे बीजं त्वस्मिन्पक्षे लाघवमिति ध्येयम् ॥ अन्यपदार्थप्रधानबहुव्रीह्यपेक्षया व्यधिकरणतत्पुरुषेततोपिसमानाधि-करणे कर्मधारये लाघवमतएव श्रुतिष्वनेकत्र ब्रह्मलोकइत्यादौ कर्मधारयादरणमिति मञ्जूषादिषु स्फुटतरम् ॥ **अतएवेति** ॥ पक्षद्वयस्याप्यदुष्टत्वादेव ॥ एवमसङ्गतिदो-षोनिरस्तः ॥ असङ्गत्याऽऽपादकसहस्राक्षवाक्ये शुद्धपदार्थेत्यत्र शुद्धपदार्थस्येति पृथक्पदमपेक्षितम् ॥ कार्यकारणात्मकब्रह्मणइति सर्वं वा समस्तम् ॥ समस्तपदै-कदेशस्य शुद्धपदार्थेत्यस्य ब्रह्मणोविशेषणतया ऽन्वयस्यायोगात् ॥ कार्यकारणरूपं हिशुद्धंब्रह्मनमायिकमित्यादौ तादृशब्रह्मणएव शुद्धपदार्थतायाः कथनाच्च ॥ अत-स्तद्वाक्यमेवासङ्गतम् ॥

**नन्वेवमपिनीलघटादिसमासघटकनीलादिपदैरनीलादिघटस्ये-वशुद्धाद्वैतसमासघटकशुद्धपदेनाऽशुद्धाद्वैतस्य व्यावृत्तेर्वाच्यत-या तादृशस्य तवमतेऽप्रसिद्धत्वेन व्यावर्त्यालाभः ॥ व्यावर्तक-स्यैवविशेषणत्वात् अन्यथाव्यर्थमेवशुद्धपदमितिचेन्न ॥ नहि-**

स्वमतसिद्धस्य सजातीयस्य व्यावर्तकतयैव विशेषणस्य सार्थ-
क्यमिति नियमः तादृशनियमस्वीकारे भवन्मतेऽपि सत्यंज्ञान-
मनन्तंब्रह्मेत्यत्रासत्यस्य जडस्यसान्तस्यचब्रह्मणोऽप्रसिद्धत्वेन-
व्यावर्त्याऽलाभेन तादृशविशेषणत्रयस्य वैयर्थ्याऽऽपत्तिः कुतोन-
स्यात् ॥ किन्तुयत्रकुत्रचित्प्रसिद्धस्याविरुद्धधर्मस्याऽऽपाततोवि-
शेष्ये संभावना॥तद्व्यावृत्त्यर्थंविशेषणमितिसर्वसंमतम् ॥अतएवतै-
त्तिरीयभाष्ये " सत्यमिति यद्रूपेणयन्निश्चितं तद्रूपं न व्यभिच-
रति तत्सत्यम् ॥ यद्रूपेण निश्चितंयत्तद्रूपं व्यभिचरति तदनृतमि-
त्युच्यते ॥ अतोविकारोऽनृतं ॥ वाचारम्भणं विकारो नामधेयंमृ-
त्तिकेत्येवसत्यं एवंसदेवसत्यमित्यवधारणात् अतः सत्यंब्रह्मेतिब्र-
ह्मविकारान्निवर्तयती" त्युक्तंनतुविकारिब्रह्मणो निवर्तयतीत्युक्त-
मतोविकारस्य कार्यै प्रसिद्धस्य ब्रह्मण्यपि संभावना स्यात्तन्नि-
वृत्त्यर्थं सत्यपदमिति भाष्यकृतामाशयः ॥ ननु सत्यंज्ञानमनन्तं-
ब्रह्मेत्यत्र सत्यादिपदानां लक्षणपरत्वं नतुविशेषणपरत्वंयेनेदृशं
व्यावर्तकत्वंस्यादिति ॥ अतएव " ननुविशेष्यंविशेषणान्तरंव्य-
भिचरद्विशिष्यते यथानीलंरक्तंचोत्पलमिति ॥ एकमेवचब्रह्म न-
ब्रह्मान्तराणियेभ्योविशिष्येतनीलोत्पलव " दितिपूर्वपक्षे " न-
लक्षणार्थत्वाद्विशेषणाना " मितिभाष्ये तत्पूर्वमुक्तमितिचेन्न ॥
" विशेषणार्थत्वेपिचसत्यादीनां स्वार्थापरित्यागएवे " त्यादि-
तदग्रिमभाष्यपर्यालोचनयासत्यादिपदानां विशेषणपरत्वस्या-
पिभाष्यकृत्संमतत्वात् ॥ अतएवतट्टीकाकृताऽपि " नीलंमहत्सुगं
धमितिविशेषणपदानिस्वार्थसमर्पणेनतद्विरुद्धव्यावर्तकानिप्रसि
द्धानि ॥ तथा सत्यशब्दोप्यबाधितसत्वेव्युत्पन्न" इत्याद्युक्तम् ॥
एवंचपरैर्मायाशबलस्यैवाद्वैतब्रह्मणोजगत्कारणत्वंस्वीकृतं तद्व-

दत्रापिशुद्धपदानुक्तौमायाशबलस्यैवकारणत्वंसंभाव्येत अतस्त-द्व्यावृत्त्यर्थंशुद्धपदंसार्थकं एतेनेत्यारभ्यपरास्तमित्यन्तेनाक्षेप-स्त्वनङ्गीकारेणैवपरास्तः॥ टीकाकृतापूर्वपक्षविधयातस्योपन्या-संकृत्वाऽयेखण्डिततत्वात्॥ त्वन्मतेऽपिजडब्रह्मणोऽभावेन व्याव-र्त्याऽलाभस्यसमानत्वेनज्ञानपदवैयर्थ्यस्यदुर्वारत्वात्॥ जडब्रह्म-णोऽभावेऽपिब्रह्मणिसंभावितजडत्वव्यावृत्त्यर्थंतदितिचेदत्रापिमा-यासंबंधसंभावनानिवृत्त्यर्थं शुद्धपदमितितुल्यम्॥ एतेन (जी-वस्याऽशुद्धत्वेऽप्यद्वैतपदार्थस्यतत्वाऽभावात् मायायाअपिभग-वच्छक्तितया ततोभिन्नत्वेने) त्यादिकःप्रलापोप्यपास्तः॥ जीवेमायासंबन्धस्यास्मन्मतेऽसत्त्वेन स्वयमेवमायासंबंधकल्प-यित्वातद्व्यावृत्तिचोक्त्वापुनस्तत्राऽऽक्षेपंकुर्वन्नुन्मत्तएवपरमताऽ-नभिज्ञश्च॥

टीका

अथ सहस्राक्षे किञ्चनीलघटादिसमासेत्यादिना श्रुतिविरोधश्चेत्यन्तेनाऽऽपादितं शुद्धपदव्यावर्त्यालाभमंशतोनूद्य परिहरन्ति॥ नन्वेवमपिलीलेत्यादिना॥ **परमतानभिज्ञश्चेत्यन्तेन**॥ **नहिस्वमतेति**॥ अतएव तार्किकाणां शब्दगुणकमाकाशमित्याकाशलक्षणे तन्मते गुणातिरिक्तशब्दाभावेन स्वमते गुणपदव्यावर्त्यालाभेपि भाट्टैः शब्दे द्रव्यत्वस्याङ्गीकारात्तन्निरासाय गुणपदमिति सिद्धान्तचन्द्रोदयकारादयोबहवः॥ एवं द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाःसप्तपदार्थाइत्यत्र स्वमते सप्तातिरिक्तपदार्थस्याप्रमिततयाऽधिकसङ्ख्यारूपव्यावर्त्यालाभेपि पराभिमतशक्तिसादृश्यादिकमादायाधिकसङ्ख्याव्यवच्छेदार्थं तदिति वदन्ति॥ तथा षट्पदार्थवादेपि वैशेषिकसूत्रोपन्यासे (अ० १ आ० १ सू० ४) "द्रव्यगुणकर्मसामान्यविशेषसमवायानां" इत्यत्र "षडेवपदार्थाइतिनियमःपर्यवस्यति" इत्युक्त्वा "सचानुपपन्नःव्यवच्छेद्यस्यपदार्थान्तरस्य प्रतिपत्तौनियमानुपपत्तिः॥ अप्रतीतौव्यवच्छेदानुपपत्तिः" इत्यादिनाक्षिप्य "शक्तिसङ्ख्यासादृश्यादिषुपदार्थेषु पराभिमतेषु षड्लक्षणायोगःपरैरुच्यते॥ तद्व्यवच्छेदोनियमार्थः" इति शक्त्यादीनां स्वमतेऽप्रसिद्धत्वेपि पराभिमतानां तेषां व्यवच्छेदोदर्शितः॥ एवं साङ्ख्यग्रन्थे-

ष्वपि (आर्या ४) दृष्टमनुमानमाप्तवचनंचसर्वप्रमाणसिद्धत्वात् ॥ त्रिविधंप्रमाणमिष्टंप्र मेयसिद्धिःप्रमाणाद्धीत्यत्रस्वमते ऽप्यधिकप्रमाणाऽभावाद्यावर्त्यालाभेपि नैयायिक-मीमांसकाऽऽलङ्कारिकाद्यभिमतचतुः षडष्टप्रमाणपक्षव्यावर्तकं त्रिविधमिति वि-शेषणम् ॥ अतएवैतद्याचक्षाणोवाचस्पतिमिश्रः "सङ्ख्याविप्रतिपत्तिं निराकरो-ति ॥ त्रिविधमिति" इत्याद्याह एवं नैरुक्तवैयाकरणादिग्रंथेष्वपि "भावप्रधानमा-ख्यातं सत्वप्रधानानि नामानि" इत्यादौ विशेषणानां स्वमते व्यावर्त्यलाभालाभौ-दृश्यौ ॥ तथा ॥ कठगीतादिश्रुतिस्मृतिष्वपि "अजोनित्यःशाश्वतोयंपुराणः" इत्या-दिजीवविशेषणानां स्वमते व्यावर्त्यालाभाद्वैय्यर्थ्यं नापेयात्॥श्रुतिस्मृतिषु भावविका-रयुक्तजीवस्याऽप्रसिद्धेः ॥ अथदेहादौ भावविकाराणांप्रसिद्धतया जीवेपि ते संभाव्ये-रन्नतस्तद्यावर्तनार्थानितानि नापार्थानीति चेत् ॥ प्रकृतेपि लोके मायासंबन्धविशि-ष्टं कार्यकारणयोरद्वैतं भवदभिमतमद्वैतशब्देन संप्रतिसंप्रत्तीयतइति तद्यावर्त्तनार्थमद्वै-ते शुद्धमितिविशेषणं सार्थकमेव ॥ अनेकत्रैतत्सुलभमेवेति तत्रतत्र स्वयमेव द्रष्टव्य-म् ॥ किंच किमनेन शास्त्रान्तरोदाहरणान्वेषणेन ॥ सर्वप्रमाणमूर्धन्यायांश्रुतावपि स्वमतप्रसिद्धविशेष्यसजातीयव्यावर्त्यशून्यानि विशेषणानि भावत्कभाष्यस्थतादृश-व्याख्यानविशिष्टानि सन्त्येवातोन त्वया तादृशनियमः शक्योऽभ्युपगन्तुमित्याशये-नाहुः ॥ **तादृशनियमेत्यादिना** ॥ **सत्यंज्ञानमनन्तंब्रह्मेति** ॥ इदं तैत्तिरीयब्र-ह्मवल्लीवाक्यम् ॥ **तैत्तिरीयभाष्यइति** ॥ श्रीशङ्कराऽऽचार्यकृते तैत्तिरीयोपनिषद्भा-ष्ये ॥ सत्यमितीत्यादिर्निवर्तयतीत्यन्तस्तत्रत्यभाष्यग्रन्थः ॥ ननुविशेषणमित्यादेर्भा-ष्यस्थपूर्वपक्षस्यानुवादंउत्पलमितीत्यतोग्रिमएकमेवचेत्यतः प्राक्तनोमध्यमोग्रन्थः प्र-कृते विशेषतउपयोगस्याऽभावान्नान्ववादि ॥ **तत्पूर्वमिति** ॥ लक्षणपरत्वमनूदितच-रव्याख्यानतः पूर्वं तत्र भाष्यउक्तम् ॥ **तट्टीकाकृतेति** ॥ उपनिषद्भाष्यटीकाकृता आनन्दज्ञानेन ॥ विशेषणपरत्वमपि तत्र स्फुटं ततोऽवधेयम् ॥ प्रकृते शुद्धपदव्याव-र्त्यमाहुः ॥ **एवंचपरैरित्यादिना** ॥ मायाशबलस्यैव कारणत्वमित्युपलक्षणम् ॥ अविद्यापरपर्यायमलिनसत्वमायोपहितस्यैव जीवत्वेन कार्यत्वम् ॥ मायिकस्यैव प्रपञ्चस्य कार्यत्वं च परैरुक्तमिति भावः ॥ तथाच मायासंबन्धरहितकार्यकारणरूपं-ब्रह्मैवेत्यपरोक्षज्ञानं ब्रह्मरूपं शुद्धाद्वैतशब्दार्थः ॥ एवमेव शुद्धपदस्य व्यावर्त्यं गो-स्वामिश्रीगिरिधरैः शुद्धाद्वैतमार्तण्डे अत्रैवशाङ्कराः प्राहुर्मायिकंनश्वरंजगदित्यादिना ॥ इतिब्रह्मविदांहार्दशुद्धाद्वैतंश्रुतेर्मतमित्यन्तेन परोक्तानुवादपुरःसरं दर्शितम् ॥ तट्टीका-यां च रामकृष्णभट्टैः "एवमद्वैतपदार्थं निरूप्य शुद्धपदव्यावर्त्यमाहुः" इत्यादिना "एवं च श्रुतिषु सर्वस्य शुद्धाद्वयत्वं स्पष्टमतः श्रुतेर्मतमित्यर्थः" इत्यन्तेन स्फुटी-कृतम् ॥ एवं सत्यपि व्यावर्त्यालाभं वदन्वृथादोषारोपकएवेति निर्मत्सरैरुभयग्रन्थ-चिन्तकैरवगंस्यते ॥ आक्षेपान्तरं परिहरन्ति ॥ **एतेनेतीत्यादिना** ॥ **इत्यन्तेने-**

नि ॥ कृतइति शेषः ॥ **अनङ्गीकारेणेति** ॥ सिद्धान्ते जीवे मायासंबन्धस्यानङ्गीकारेण ॥ **टीकाकृतेत्यादि** ॥ मार्तण्डे (श्लो० २८) मायासंबन्धरहितमित्यस्य टीकायाम् ॥ "नचाहन्ताममतापाशस्य मायाकृतत्वेनमायासंबन्धस्यस्वमतेपिसंभवइतिवाच्यम्" इति पूर्वपक्षत्वेन जीवे मायासंबन्धस्योपन्यासं कृत्वाऽग्रे "स्वमतेमायायाअपि" इत्यादिना सखण्डितोऽतस्तदनङ्गीकारइति भावः ॥ **व्यावर्त्यालाभस्येति** ॥ स्वमतप्रसिद्धं यद्यावर्त्यं तदलाभस्येत्यर्थः ॥ साङ्ख्यमते तु ब्रह्मशब्दवाच्यं जडं प्रधानं प्रसिद्धमिति तदनुरोधादेव प्रकृतब्रह्मणि जडत्वसंभावनोदयः ॥ तथात्र त्वन्मतप्रसिद्धमद्वैतमादाय कार्यकारणयोर्मायासंबन्धः संभाव्येतेति त्वदयम् ॥ अत्र सहस्राक्षे (तद्युक्तएवाशुद्धइतिसएवव्यावर्त्यइति) इत्यत्र क्लीबनिर्देशोपेक्षितः ॥ मायासंबन्धयुक्तमेवाद्वैतमशुद्धमतस्तादृशाद्वैतमेव व्यावर्त्यमिति तदर्थात् ॥ नच जीवइति विशेष्याऽध्याहाराददोषइति वाच्यम् ॥ कार्यकारणयोर्मायासंबन्ध राहित्यंवदद्भिरस्माभिर्जीवमात्रस्य व्यावर्त्यतायाअनुक्ततया तस्यानुपस्थितेः ॥ नीलघटादिविशेषणनीलादिपदैरनीलघटादीनां व्यावृत्तिं दर्शयता त्वयाऽद्वैतविशेषणशुद्धपदेन जीवस्य व्यावृत्तेर्वक्तुमशक्यत्वाच्च ॥ अथ जीवस्यैवाद्वैतपदार्थत्वान्नायुक्तोऽध्याहारइति चेज्जीवस्याशुद्धत्वेपीत्याद्यग्रिमत्वग्रन्थविरोधः ॥ जीवाशुद्धतायाः स्वयमुक्ततया व्यावर्त्यलाभश्च ॥ एतेन तद्युक्तोवादीत्यादिपुल्लिङ्गविशेष्यान्तराध्याहृतिरपि निरस्ता ॥ अनुपस्थितेः ॥ अद्वैतविशेषणेन वाद्यादेर्व्यावर्तनस्य वक्तुमनौचित्याच्च ॥ क्लीबनिर्देशेऽनायासेनाद्वैतविशेषणतायाबोधेपि बलात्पुल्लिङ्गानि विशेषणमात्राण्यभिधायाद्वैतपदार्थइति तदनुकूलविशेष्याऽध्याहारस्त्वाहोपुरुषिकामात्रम् ॥ यच्च (जीवस्याशुद्धत्वेऽप्यद्वैतपदार्थस्य तत्त्वाभावात्) इत्युक्तं तन्न ॥ कार्योपाधिरयंजीवःकारणोपाधिरीश्वर-इति मायासंबन्धवतोरेव कार्यकारणत्वाङ्गीकारे तयोरद्वैतेपि तद्वत्ताऽनपायात् ॥ अद्वैतपदस्य भेदज्ञानाभावइत्यर्थे सामानाधिकरण्यसंबन्धेनाभेदज्ञानमित्यर्थे विषयतादिसंबन्धेन तस्मिन्मायासंबन्धसाहित्यस्य सिद्धेः ॥ नच "द्वैतशब्देनचद्वाभ्यांप्रकाराभ्यामितंज्ञातंद्वीतंतस्यभावोद्वैतमितिव्युत्पत्त्यानामरूपेउच्यतेतद्रहितंचाद्वैतशब्देन" इतिमञ्जूषाद्युक्त्यनुरोधेन नास्तिद्वैतंयस्मिन्निति विग्रहेण निर्विशेषमद्वैतपदवाच्यमतस्तथोक्तमिति वाच्यम् ॥ निर्विशेषे वाच्यतायाअनङ्गीकारात् ॥ अद्वैतपदलक्ष्यत्वे तद्वाच्यमन्यद्वक्तव्यं तच्च मायासंबन्धवदेव सेत्स्यति ॥ किञ्च निर्विशेषपरत्वेपि तदेकदेशे माया स्वीक्रियतएव ॥ यत्र प्रतिबिम्बितं यदवच्छिन्नं वा चैतन्यं कर्तृतामापद्येत ॥ यतश्च सृष्टिः स्यात् ॥ अन्यथा पुनःसृष्ट्युच्छेदः प्रसज्येत ॥ तस्यास्तदेकदेशवर्तित्वं तु (पञ्चदशीप्रकरण २ श्लोक ५४।५५) नकृत्स्नब्रह्मवृत्तिःसाशक्तिःकिन्त्वेकदेशभाक् ॥ घटशक्तिर्यथाभूमौस्निग्धमृद्येववर्त्तते ॥ पादोस्यसर्वभूतानित्रिपादस्तिस्वयंप्रभः ॥ इत्येकदेशवृत्तित्वंमायायावदतिश्रुतिरिति विद्यारण्यादयोभावत्काः ॥ तथाच बलादापतितस्तत्रापिमायासं-

बन्धः ॥ तस्माद्भवदभिमतमायासंबन्धसहिताद्वैतव्यावर्तनार्थं शुद्धपदमिति निरवद्यम् ॥ यत्तु मायासंबन्धरहितमित्यस्यटीकास्थं मायाया अपीत्यादिकिञ्चित्पाठभेदेनानूद्य ( मायायास्तत्संबन्धिनोवाऽशुद्धत्वस्यवक्तुमशक्यत्वाच्च ) इत्यादि विरोधश्चेत्यन्तमुत्स्वमायितं तत्र ब्रूमः ॥ मार्तण्डे हि अत्रैवशाङ्कराःप्राहुर्मायिकंनश्वरंजगत् ॥ मायासंबन्धतोब्रह्मकारणंनान्यथैवहीति परोक्ताऽनुवादे मायोपाधिसंबन्धादेव ब्रह्मणःकारणत्वं नतु तंविनेति तेषामाशयोदर्शितः ॥ तेन " मायासंबन्धरहितंशुद्धमित्युच्यतेबुधैः ॥ कार्यकारणरूपंहिशुद्धंब्रह्मनमायिकम् " इत्यत्रमायासंबन्धपदेन कारणेऽनन्यथासिद्धकारणभावनिर्वाहकएवोपाधिभावरूपस्तत्संबन्धोहेयतयाविवक्षितः एवं कार्येपि जीवेऽनन्यथासिद्धकार्यभावनिर्वाहकएवोपाधिभावरूपः सतथात्वेन विवक्षितः ॥ तथासत्येव कार्यकारणयोरशुद्धत्वम् ॥ कार्यत्वकारणत्वयोर्मायासंबन्धैकहेतुकत्वात् ॥ एवं प्रपञ्चेपि अस्तिभातिप्रियंरूपंनामचेत्यंशपञ्चके.तन्मते नामरूपयोर्मायिकत्वमेव ॥ स्वमते तु कार्ये कारणे च नोक्तविधस्तत्संबन्धः ॥ ब्रह्मैव स्वेच्छया जीवादिरूपेण परिणमतीत्यङ्गीकारात् ॥ नामरूपयोरपि भगवन्निष्ठयोरेव व्याकरणस्योरीकारात् ॥ मायाशब्देन चात्र सदसत्त्वाभ्यां विलक्षणमज्ञानमेव पराभिमतं विवक्ष्यते प्रकरणात् ॥ नतु भगवदभिन्ना स्वाभाविकी तच्छक्तिः ॥ शक्तिशक्तिमतोरभेदेन संबन्धायोगात् ॥ शक्तिशक्तिमद्भावस्य जिज्ञासुबोधनार्थत्वात् ॥ एतच्च पुरस्तात्प्रपञ्चयिष्यते ॥ अतउक्तविधाज्ञानसंबन्धाभावात्कारणं नाशुद्धम् ॥ जीवोपि भगवदंशस्तदिच्छया व्युच्चरणात्ततः पृथग्भूतः ॥ तस्य जीवभावइच्छया व्युच्चरणान्नत्वविद्योपाधिकृतः ॥ एवं प्रपञ्चोपि न मायिकः ॥ अतः पराभिमताज्ञानसंबन्धाभावात्कार्यमपि नाशुद्धमिति मार्तण्डकारिकाशयः ॥ एवञ्च परास्यशक्तिरित्यादिश्रुत्या परस्य स्वाभाविकशक्तेर्मायायाः पररूपतया नाशुद्धत्वम् ॥ भावरूपाज्ञानापरपर्यायमायायास्तत्संबन्धतएव कारणत्वशालिनश्चाशुद्धत्वं तु वक्तुं शक्यमेव ॥ यद्यपि देहाद्यध्यासोमायिकस्तथापि जीवोनाशुद्धः ॥ स्वरूपस्य मायामूलकत्वाभावात् ॥ त्वन्मतेतुजीवभावएवाविद्यामूलकइति सोशुद्धः ॥ यथा काञ्चनपाञ्चालिकोपरि परितोमषीसलिललापनेपि न सा स्वरूपतोमलिना भवति ॥ प्रक्षालनादिना तदपसारणे शुद्धपुत्तलिकास्वरूपोपलब्धेः ॥ कज्जलजलमिलितमृत्स्नाकलितकृत्स्नावयवा तु सा स्वरूपतो मलिनैव ॥ अतएव ततोमषी नापसारयितुं शक्या ॥ कथंचित्तदपसारणे पि तस्याः स्वरूपनाशएव ॥ नहि कज्जलापलेपनोत्तरं सा पुत्तलिकापदाभिलप्यावतिष्ठते ॥ एवमध्यासनिरासे शुद्धं जीवस्वरूपमस्मन्मते प्रकाशतइति तत्स्वरूपं नाशुद्धम् ॥ भवन्नये त्वविद्याध्वंसे जीवस्वरूपहानिरेव शुद्धचैतन्यस्य जीवपदानभिलप्यत्वात् ॥ अतोजीवस्वरूपमशुद्धमेव ॥ नन्वस्त्वेवं तथाप्यस्मत्सम्मताज्ञानसंबन्धस्य तद्विशिष्टकार्यकारणयोश्चाशुद्धत्वं कुतइति चेत्तावकैरेव तस्य मोक्षविरोधितायास्तदुच्छेदाय साधनानामुपयोगस्य च कथनादिति जानीहि ॥ तस्य शुद्धत्वे तु मोक्षेपि सोवति-

ष्ठतां कृतं तदुच्छेदप्रयासेन ॥ कार्यकारणयोरशुद्धत्वादेव त्वन्मते कार्योपाधिरयं-जीवःकारणोपाधिरीश्वरः ॥ कार्यकारणतांहित्वापूर्णबोधोवशिष्यतइति तद्भावत्याग-उच्यते ॥ प्रपञ्चस्य तु मायिकत्वात्तन्नाशएव मोक्षस्याङ्गीकाराच्चाशुद्धत्वं स्पष्टमेव ॥ मन्मते ब्रह्मणएव सर्वकार्यात्मनाऽऽविर्भूतत्वान्न द्वैतापत्तिगन्धोनापि सर्वंखल्वित्या-दिश्रुतिविरोधगन्धः ॥ किन्तु तवैव तद्विरोधस्तदापत्तिश्च ॥ सर्वस्य मिथ्यात्वेन ब्रह्म-णश्च सत्यत्वेन सर्वस्य ब्रह्मत्वानुपपत्तेस्तेजस्तिमिरयोरिव मिथ्यासत्यवस्तुनोरभेद-स्यासंभवाच्च ॥ ननुसर्वस्य मिथ्यात्वेन द्वितीयस्याभावाद्द्वैतापत्तिस्तुन भवतीति चेदध्यासस्याब्रह्मत्वेपि तस्य मिथ्यात्वान्मन्मतेपिनसेति सन्तोष्टव्यम् ॥ तदेतत्सर्व-मुरसिकृत्याहुः ॥ एतेनजीवस्येत्यादिना ॥

किंचशङ्कराचार्यवदद्वैतंनाऽस्माकंसंमतमितिबोधनम विशुद्धप-दस्यफलं व्यावर्त्यलाभान्वयसंभवौचदर्शितौ तेनव्यावर्त्याला-भेत्यादिदत्तोत्तरं ॥ यत्तु (किंचैवमद्वैतेशुद्धत्वंविधीयतइत्यायाति एवंचैकप्रसरताभङ्गभयादपिनसमासोपपत्तिः ॥ एवंचननुअद्वैत-पदार्थस्य त्वदुक्तार्थकत्वेभवत्वन्वयाऽनुपपत्ति) रित्याद्युक्तं तन्न-एकप्रसरताभङ्गएकवाक्यताभङ्गः ॥ सचाऽद्वैतेशुद्धत्वविधानेपि-नसंभवति ॥ अन्यथाराज्ञःपुरुषइत्यत्रापिसमासोनस्यात् ॥तत्रा-पिपुरुषेराजसंबंधस्यैवविधेयत्वात् ॥ अतएवोक्तं भेदःसंसर्ग-उभयंवेतिवाच्यव्यवस्थितेरिति ॥ तत्रव्यपेक्षावादिनां नैयायि-कमीमांसकादीनांमतेऽजहत्स्वार्थावृत्तिरतोराजलक्ष्यराजसंब-न्धिनः पुरुषपदशक्यपुरुषत्वावच्छिन्नाभेदान्वये राजसंबन्धी-पुरुषइति वाक्यार्थस्वीकारेणराजसंबन्धः पुरुषे बोध्यते॥ एका-र्थीभावस्वीकर्तॄणांवैयाकरणानांमतेसमासेशक्त्यस्वीकारेतस्या-र्थवत्वाऽभावेनप्रातिपदिकसंज्ञानस्यादतःसमासस्यैवार्थवत्त्वेन-पदार्थस्याप्रयोजकत्वान्नपदस्यार्थवत्त्वमतोजहत्स्वार्थावृत्तिस्तैः स्वीक्रियतेतन्मतेऽपिराजसंबन्धविशिष्टपुरुषस्यवाक्यार्थत्वेपिपु-रुषेराजसंबन्धबोधोऽर्थसिद्धएव ॥ एकप्रसरताभङ्गस्तुवषट्कर्तुः

प्रथमभक्षइत्यादौप्रैतुहोतुश्चमसइतिसमाख्याप्रापितस्यभक्ष्य-स्यानुवादेनप्राथम्यंविधीयतइतिचेत्तदाभवति॥ प्रथमभक्षइतिप-दस्यसमस्तत्वेनतादृग्भक्षपदार्थेवषट्कर्तृसंबन्धोबोध्यते तत्रैवप्रा थम्यविधानेवषट्कर्तृसम्बन्धीभक्षः योभक्षः सप्रथमएवंवचनव्य क्तिःस्यात् ॥तथाचस्पष्टोवाक्यभेदः॥प्राथम्यविशिष्टभक्षविधाने चसनसंभवतिभक्षेप्राथम्यमितरव्यावृत्तिस्त्वर्थतएवसंभवति॥एवमे ववषट्काराच्चभक्षयेदितिसूत्रे आद्यभक्षेवषट्कर्तुर्विधिःप्राथम्य एवहि किंवातद्युक्तभक्षेत्याद्वषट्कारनिमित्तके अग्नावेरग्निमोमै-वंसमासच्छित्यसंभवाद्विशिष्टस्यविधिस्तस्माद्वषट्कारोऽपिकारण मितिन्यायमालायामुक्तं॥ एवंचशुद्धाऽभिन्नाद्वैतस्यवाक्यार्थत्वे नमायासंबन्धनिवृत्तेरार्थिकत्वादेकप्रसरताभङ्गस्यानवकाशः ॥ अन्यथानीलघटइत्यत्रापिपीतव्यावृत्त्यर्थंघटेनीलत्वस्यैवत्वदु-क्तरीत्याविधेयत्वैकप्रसरताभंगभियातत्रापिसमासाऽनुपपत्तिः स्यात् ॥ अशुद्धाऽद्वैताभावेपिमायासंबन्धस्याऽशुद्धत्वप्रयोजक-स्यव्यावर्त्यस्योक्तत्वादेव अशुद्धाद्वैताभावेनेत्यादिकंप्रत्युक्तं ॥

## टीका.

सहस्राक्षे एतेनशङ्कराचार्येत्यादिभागं दूषयन्ति **किञ्चशङ्कराचार्येत्यादिना**॥सहस्रा-क्षे एवकारः शुद्धपदप्रयोगस्य प्रयोजनान्तरव्यवच्छेदार्थः ॥ मूले तूक्तरीत्या माया-संबन्धरहितकार्यकारणात्मकत्वबोधनं ततएव शङ्कराचार्यसंमताद्वैताद्वैलक्षण्यबोधनं च तत्प्रयोजनमिति ज्ञापनाय समुच्चयार्थोऽपिशब्दः प्रयुक्तः ॥ सहस्राक्षकृता ऽऽपा-दितमेकप्रसरताभङ्गमनूद्य परिहरन्ति ॥ **यत्तुकिञ्चेत्यादिना** ॥ **इत्याद्युक्तमिति**॥ आदिपदेन व्यावर्त्याऽलाभाच्चेत्यन्तस्तद्भागोगृह्यते ॥ **एकवाक्यताभङ्गइति** ॥ नैयायिकमीमांसकादिसाधारण्येनैतदुक्तम् ॥ वैयाकरणाभिमतंत्वग्रे वक्ष्यते ॥ नैया-यिकादिभिर्हि वाक्यादिव समासादिवृत्तेरप्याकाङ्क्षासहकृतया वृत्तिघटकपृथक्पृथ-क्पदजन्यपदार्थोपस्थित्यैव शाब्दबोधः स्वीक्रियते नतुविशिष्टेशक्तिः ॥ तथाचवा-क्यइवसमासेप्युद्देश्यविधेयभावस्तन्मते नानुपपन्नः ॥ शाब्दिकानामवयवशक्तिंसह-

कृतया समुदायशक्त्या वृत्तिस्थले शाब्दबोधइतिपक्षेऽप्यार्थिकः सोस्त्येवेति वक्ष्यामः **विधानेपीति** ॥ अपिशब्दः कैमुतिकद्योतनार्थः ॥ तेन विधानाङ्गीकारेपि न दोषः ॥ किमुत शुद्धत्वविशिष्टाद्वैतस्य स्वातन्त्र्येण विधानाङ्गीकारे **नस्यादिति** ॥ एकमसरताभङ्गभयान्नस्यादिति भावः ॥ **विधेयत्वादिति** ॥ नच यद्वृत्तयोगःप्राथम्यमित्याद्युद्देश्यलक्षणम् ॥ तद्वृत्तयोगःपश्चात्त्वंस्याद्विधेयस्यलक्षणमित्यभियुक्तोक्तेरनन्तरोपात्तपुरुषपदार्थे प्रथमोपात्तराजपदार्थतत्संबन्धस्य विधेयत्वमनुपपन्नमिति वाच्यम् ॥ तस्याः प्रायिकतायाः "भावप्रधानमाख्यातंसत्वप्रधानानिनामानि॥ (अ०१पा१ सू१ वृद्धिरादैच् ( अ० १ पा० २ सू० ४१ ) अपृक्तएकाल्प्रत्ययः ( अ० २ पा० १ सू१ ) समर्थःपदविधिः ( योगसूत्रपाद १ सूत्र २ ) योगश्चित्तवृत्तिनिरोधः ( पूर्वमीमांसाअध्याय २ पाद १ सूत्र ५ ) औत्पत्तिकस्तुशब्दस्यार्थेनसंबन्धः ( सू० १२ ) समंतुतत्रदर्शनम् (पा० २ सू० ८) तुल्यंचसांप्रदायिकम् " इति निरुक्तपाणिनीयपातञ्जलजैमिनीयादिषु प्रयोगदर्शनतोऽवधारणात् ॥ "दर्शितंचेदंपण्डितोब्राह्मणइत्यादौ यद्वृत्तेर्तिनियमव्यभिचारंप्रदर्श्य "अतएववृद्धैरपियद्वृत्तयोगःप्राथम्यमित्याद्युद्देश्यलक्षणमित्यत्रादिपदोपादानेनास्याऽनैयत्यंसूचितम्" इति प्राचीनमतमुदाहरतामञ्जूषाकृता ॥ किञ्च नहि वैयाकरणैरपि समासाद्यवान्तर्वर्तिविभक्त्यर्थस्य संसर्गमर्यादयैवभानमङ्गीक्रियते येनाविधेयत्वंतस्याशङ्क्येत अपितु प्रकारतयापीत्यभिप्रेत्याहुः ॥ **अतएवोक्तमिति** ॥ भूषणे जहत्स्वार्थाजहत्स्वार्थेद्वेवृत्तीतेपुनस्त्रिधा ॥ भेदःसंसर्ग उभयंवेतिवाच्यव्यवस्थितेः ॥ इत्युक्तमित्यर्थः ॥ एतदर्थस्तु जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था ॥ धनंवनमित्यादिपदेषु धकारादिवर्णानामिव राजपुरुषइत्यादिवृत्तौ तद्घटकराजादिपदानामानर्थक्यम् ॥ अयंभावः ॥ समासशक्त्यैव राजविशिष्टपुरुषबोधे संभवति नराजपुरुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यम् ॥ आनुपूर्व्यन्तरघटकत्वाभावविशिष्टानुपूर्व्याएव शक्ततावच्छेदकतया वृषभादिपदघटकवृषाद्यानुपूर्व्याः शक्ततानवच्छेदकत्ववत्समासान्तर्गतराजाद्यानुपूर्व्याः शक्ततावच्छेदकत्वासंभवात् ॥ अन्यथा रामादिपदात्तदवयवरेफाद्यभिधेयवन्ह्याद्यर्थोपस्थितिशाब्दबोधावापद्येताम्॥ एकवचनमुत्सर्गतः करिष्यतइत्यौत्सर्गिकस्यावान्तरसोरुत्पत्तिर्धनंवनमित्यादौ जश्त्वादिकं चापद्येत ॥ वाक्येतु पदानामेवार्थवत्त्वम् ॥ राजसंबन्धिपुरुषइत्याद्यर्थे राज्ञः पुरुषः पुरुषोराज्ञः इत्यादिविशिष्टतत्तदानुपूर्वीणां पृथक्पृथक्शक्ततावच्छेदकत्वकल्पनापेक्षया पदशक्तिकल्पनायाएव लघीयस्त्वात् ॥ वाक्यवद्वृत्तावपि व्यपेक्षाङ्गीकारे तु राजपदेन विग्रहवाक्यइव राज्ञः स्वातन्त्र्येणोपस्थितिसंभवाद्वाक्ये ऋद्धस्य राज्ञः पुरुषः राज्ञः पुरुषोभार्यायाश्चेत्यादिवद्वृद्धस्य राजपुरुषः राजपुरुषोभार्यायाश्चेत्यपि प्रयुज्येत ॥ विशिष्टशक्तिस्वीकारे तु राजेत्यस्य पदार्थैकदेशत्त्वाद्भेदेपि शक्तेर्वक्ष्यमाणतया ऽराजकीयभिन्नइति बोधाच्च नोक्तदोषप्रसङ्गः ॥ अजहदिति ॥ न जहति पदानि स्वार्थं यस्यां सा ऽजहत्स्वार्था ॥ अयमाशयः ॥ राजपुरुषादिसमास-

स्थले क्लृप्तप्रत्येकपदशक्त्यतिरिक्ता शक्तिर्न कल्प्या ॥ विशिष्टशक्तिकल्पकस्याऽन्यथानुपपत्त्यादेरभावात् ॥ विग्रहवाक्यइव क्लृप्तशक्त्यैव बोधसंभवे शक्त्यन्तरकल्पने गौरवाच्च ॥ वाक्येऽवश्यक्लृप्तप्रत्येकपदशक्तेस्त्यागे मानाभावाच्च ॥ कालभेदेनाप्येकस्यैव राजादिशब्दस्यार्थवत्त्वानर्थवत्त्वे कल्पनामात्रमूलके ॥ राजशब्दादेरर्थवत्त्वाभावे ऽप्रातिपदिकत्वेनलोपशास्त्राप्रवृत्त्या नलोपाद्यनुपपत्तिश्च ॥ एवंमहाबाहुरित्यादौ समानाधिकरणमहच्छब्दाऽभावादात्वाद्यसंभवश्च ॥ तस्माद्वृत्तावपि वाक्यइव क्लृप्तशक्त्यैवविशिष्टार्थोपस्थितिरितिसंक्षेपः ॥ नचास्मिन्पक्षे ऋद्धस्य राजपुरुषइत्यादिप्रयोगापत्तिः शङ्क्या ॥ " सविशेषणानांवृत्तिर्न वृत्तस्यवाविशेषणयोगोन " इति वार्तिककृता प्रतिषेधात् ॥ यद्यपि वैयाकरणाभिमतं अजहत्स्वार्थास्वरूपमन्यदेव भाष्यादौ दर्शितं तथाप्ययं व्यपेक्षापक्षोमहाभाष्ये समर्थसूत्रे " परस्परव्यपेक्षांसामर्थ्यमेके " इत्यादिना मतान्तरतया सङ्गृहीतइत्यत्रापिसव्याख्यातः ॥ तेपुनस्त्रिधेति ॥ तेद्वे अपि वृत्ती पुनस्त्रिविधे भेदः संसर्गः तदुभयं चेति वाच्यस्य त्रिविधस्य मतभेदेन व्यवस्थितत्वात् ॥ तत्र भेदोऽन्योन्याभावः ॥ तथाच राजपुरुषइत्यादावराजकीयभिन्नइतिबोधः ॥ भेदस्यावाच्यत्वे राजपुरुषः सुन्दरइत्यादिवद्राजपुरुषोभार्यायाश्चेत्यपि प्रयुज्येत ॥ अथवा राजसंबन्धवानित्येव शाब्दं भानं भेदस्तु पश्चादुपतिष्ठतइत्याशयेनोक्तं संसर्गइति ॥ भेदाविनाभावित्वादनुमापकस्तन्मूलकः संबन्धः ॥ अथवा विनिगमनाविरहादस्वामिकेऽन्यस्वामिके वा राजपुरुषइत्यादिप्रयोगापत्तेश्च तदुभयं वाच्यमित्याशयेनोक्तमुभयंवेति ॥ तथाचाराजकीयभिन्नोराजसंबन्धवानिति बोधइति भूषणादेः संक्षेपः ॥ तदेतत्सर्वमुक्तं समर्थसूत्रे भाष्ये ॥ तद्यथा " अथवासमर्थाधिकारोयंवृत्तौक्रियेत ॥ सामर्थ्यंचनामभेदःसंसर्गोवा ॥ अपरआह भेदसंसर्गौवासामर्थ्यमिति ॥ कःपुनर्भेदःसंसर्गोवा ॥ इहराज्ञइत्युक्तेसर्वंस्वंप्रसक्तंपुरुषइत्युक्तेसर्वःस्वामीप्रसक्तः ॥ इहेदानींराजपुरुषमानयेत्युक्तेराजापुरुषंनिवर्तयत्यन्येभ्यःस्वमिभ्यः ॥ पुरुषोपिराजानमन्येभ्यःस्वेभ्यः " इति॥अत्र कैयटः॥यदिचवृत्तौभेदसंसर्गौनस्यातांतदासामर्थ्यमेवनस्यात्तदात्मकत्वात्सामर्थ्यस्येत्यर्थः ॥ तत्रभेदःसंसर्गाविनाभावित्वादनुमीयमानसंसर्गःसामर्थ्यम् ॥संसर्गोवाभेदाविनाभाव्यनुमेयभेदः॥उभौवायौगपद्येनाश्रीयमाणौसामर्थ्यमित्यर्थः ॥ सर्वस्वमिति ॥ राज्ञइतिषष्ठ्यासंबन्धिमात्रस्याक्षेपात् ॥ सर्वःस्वामीति ॥ यदातुपुरुषस्यपारतन्त्र्यंप्रमाणान्तरेणावगतंतदपेक्षयैतदुच्यते ॥ अन्यथापुरुषइत्युक्तेअस्तीतिप्रतिपत्तिःस्यान्नतुस्वामिमात्राक्षेपः ॥ तत्रभेदपक्षेराजापुरुषंस्वाम्यन्तरेभ्योनिवर्त्यस्वार्थंजहाति ॥ पुरुषस्तुअजहदपिस्वार्थंस्वान्तरेभ्योनिवर्तयतिराजानंततश्चकृतकार्यस्यभवतुराजार्थस्यनिवृत्तिः ॥ अकृतकार्यस्यनिवृत्तौवृत्तिरेवनस्यात् ॥ एवंसंसर्गेपियोज्यमितिव्याचष्ट ॥ अत्रोद्योतकारः ॥ तत्रभेदइति ॥ स्वत्वसमानाधिकरणोराजभिन्नस्वामिकभेदोराजसंसर्गव्याप्यः ॥ एवंवृत्त्युपस्थाप्यराजसंबन्धवद्व्यक्तिगतराजसंबन्धोराजभिन्नस्वामिकभेदव्याप्यइतिभावः ॥ एवंचभेदवद्व्यक्तिबोधेसाराजसंस-

गैवत्यपीतितद्वतीव्यक्तिरपिबुध्यतएव ॥ एवमितरत्रापीतितात्पर्यम् ॥ उभौवायौगपद्येनेति ॥ अयंभावः ॥ उक्तरीत्योभयोःसमनियतत्वेनविनिगमनाविरहइति ॥ एवंचभेदवदर्थप्रत्यायकत्वंसामर्थ्यम् ॥ इतिव्यवृणोत् ॥ एवं प्रकृतेप्यद्वैतेऽशुद्धभेदःशुद्धत्वं तदुभयं वावगम्यतइत्यनवद्यम् ॥ सर्वमतेष्वपि प्रकृते दोषाभावं समर्थयन्ते॥**तन्त्रेत्यादिना**॥ **तत्र** ॥ जहत्स्वार्थाऽजहत्स्वार्थापक्षयोर्मध्ये ॥ **व्यपेक्षेति** ॥ समर्थसूत्रेभाष्ये "तथेदमपरंद्वैतंभवति ॥ एकार्थीभावोवासामर्थ्यंव्यपेक्षावेति" इति द्विविधंसामर्थ्यमुक्तम् ॥ एतत्स्वरूपं तु "यत्रपदान्युपसर्जनीभूतस्वार्थानिनिवृत्तस्वार्थानिवाप्रधानार्थोपादानाद्यर्थान्यर्थान्तराभिधायीनिवासएकार्थीभावः ॥ परस्पराकांक्षारूपाव्यपेक्षा" इति कैयटः ॥ अत्र विवरणे "अनेकार्थस्यैकार्थत्वमेकार्थीभावइतिशब्दशक्तिमनुसृत्यजहत्स्वार्थाजहत्स्वार्थयोस्तंदर्शयिष्यन्नादावजहत्स्वार्थायांतंदर्शयति यत्रपदानीति ॥ उपसर्जनपदानीत्यर्थः ॥ तदेवध्वनयन्नाह ॥ उपसर्जनभूतस्वार्थानीति ॥ इतरविशेषणभूतस्वार्थोपस्थापकानीत्यर्थः ॥ नतुपृथक्स्वार्थोपस्थापकानीतितात्पर्यम् ॥ एवंचतत्पुरुषादौएकंपदंतादृशंबहुव्रीहौद्वन्द्वेचपदद्वयमपीतिबोध्यम् ॥ जहत्स्वार्थायामाह ॥ निवृत्तस्वार्थानिवेति॥ उभयत्रापिहेतुःप्रधानार्थोपादानादिति॥ आद्येप्रधानार्थेनस्वोपस्थितिकालेएवउपसर्जनपदार्थस्यविशेषणतयोपादानादित्यर्थः॥अन्त्येप्रधानेनपदेनतदर्थस्याप्युपादानादित्यर्थः ॥ बहुव्रीहौतुप्रधानंपदंसमुदायइतिबोध्यम् ॥ एवंद्वन्द्वेपिप्रधानंपदंसमुदायस्तदर्थेनसाहित्येनस्वविशेषणतयाधवाद्यर्थस्योपादानादुपसर्जनभूतस्वार्थानियद्वाविशेष्यसाहित्योपस्थापकतयाप्रधानेनसमुदायेनैवधवाद्यर्थस्याप्युपादानान्निवृत्तस्वार्थानिवेति॥तत्राप्ययमेकार्थीभावः॥समाहारेतरेतरयोगयोरुभयोरपिसाहित्यंविशेष्यम् ॥ आद्येऽनुद्भूतावयवभेदमन्त्येउद्भूतावयवभेदमित्येवतयोर्भेदइतिबोध्यम् ॥ व्यर्थानीतिसन्निहितत्वान्निवृत्तस्वार्थानीत्येतत्पक्षान्वयि ॥ आद्येआह ॥ अर्थान्तरेति ॥ अर्थान्तरान्वितस्वार्थाभिधायीनीत्यर्थः ॥ प्रत्येकशक्तिसहकृतसमुदायशक्त्याविशिष्टार्थप्रतिपादकानीतिभावः ॥ पदानीतिबहुवचनंतुबहुव्रीह्याद्यभिप्रायेण ॥ सएकार्थीभावइति ॥ आद्येएकीभूतार्थानिमिलितार्थानीत्यर्थः ॥ तत्रमिलितस्येतरसाकांक्षत्वाद्द्वयोरपिसमर्थत्वंतत्पुरुषादौ ॥ अन्त्येपदद्वयार्थयोरेकपदार्थत्वप्राप्तिरित्यर्थः" इति वैयाकरणाभिप्रेतजहत्स्वार्थाजहत्स्वार्थयोरपि दिक्प्रदर्शितेत्यन्यदेतत् ॥ व्यपेक्षास्वरूपं तु स्वार्थपर्यवसायिनांपदानामाकांक्षादिवशात्परस्परसंबन्ध इति बहवः ॥ वाक्यइव वृत्तावपि व्यपेक्षां वदतां नैयायिकमीमांसकादीनां मते राजादिपदानि स्वार्थं न जहतीत्यजहत्स्वार्था वृत्तिः ॥ अयं तेषामाशयः ॥ समर्थःपदविधिरितिसूत्रे परस्परान्वययोग्यत्वरूपा व्यपेक्षैव सामर्थ्यमभिप्रेयते ॥ इसुसोःसामर्थ्यइत्यत्र तादृशसामर्थ्यस्यैव सर्वैरङ्गीकारात् ॥ अतएव पुत्रो राज्ञः पुरुषोदेवदत्तस्येत्यादौ व्यपेक्षासामर्थ्याभावादेव न समासप्रसक्तिः ॥ किञ्च वृत्तित्वावच्छेदेनैकार्थीभावस्याङ्गीकारे स्वावयवार्थातिरिक्ताभिप्रायकत्वरूपवृत्ति-

लक्षणस्य कर्मधारयेऽव्याप्तिः नीलोत्पलमित्यादाववयवार्थातिरिक्तार्थाभावात् ॥ वृत्तित्वसामानाधिकरण्येन तु रथन्तरादिशुद्धरूढे पङ्कजादियोगरूढे च कोशव्यवहारादिसिद्धायाः समुदायशक्तेरस्माभिरपि स्वीकारेण सिद्धसाधनम् ॥ शुद्धयौगिकचित्रग्वादिसमुदाये तु शक्त्यन्तरं तद्बोधककोशाद्यभावादवयवपदवृत्त्यैवोपपत्तेश्च हेयमिति ॥ तथाच राजपुरुषइत्यादौ राजपदादेः संबन्धिलक्षणयैव राजसंबन्ध्यभिन्नः पुरुषइति बोधः ॥ नच संबन्धएव लक्ष्योस्तु ॥ एवं च व्याससमासयोः समानाकारबोधजनकत्वप्रवादोप्युपपत्स्यते ॥ राजादिसंबन्धरूपलक्ष्यार्थस्योत्तरपदार्थेआश्रयतयान्वयेनैवोपपत्तौ संबन्धिनि लक्षणाभ्युपगमे प्रयोजनाभावश्चेति वाच्यम् ॥ राजा पुरुषइत्यादावपि राजादिपदार्थस्य स्वस्वामिभावसंबन्धेन पुरुषादावन्वयवारणाय निपातातिरिक्तनामार्थनिष्ठाभेदातिरिक्तसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धिं प्रति विशेष्यतासंबन्धेन प्रत्ययनिपातान्यतरजन्योपस्थितेर्हेतुत्वस्यावश्यकतया प्रकृते राजसंबन्धरूपनामार्थस्य प्रत्ययनिपातान्यतरानुपस्थिते पुरुषादावन्वयासंभवात् ॥ निपातातिरिक्तत्वविशेषणाच्चन्द्रइवमुखमित्यादाविवपदार्थसादृश्यस्य नामार्थस्य प्रत्ययनिपातजन्योपस्थित्यविषये मुखे निपातातिरिक्तनामार्थचंन्द्रस्यच निपातजन्योपस्थितिविषये सादृश्येऽन्वयेपि नक्षतिः ॥ अभेदातिरिक्तसंबन्धावच्छिन्नत्वस्य प्रकारतायां निवेशाच्च राजा पुरुषइत्यादावभेदान्वयेपि न सा ॥ संबन्धिनि लक्षणाभ्युपगमादेव राज्ञः पदार्थैकदेशतयानतत्रशोभनस्येत्यादिविशेषणान्वयः ॥ पदार्थःपदार्थेनान्वेतीतिव्युत्पत्तेः ॥ ननुगभीरायांनद्यांघोषइत्यादौनदीपदलक्ष्यनदीतीरार्थैकदेशजलादौगभीराद्यन्वयवदत्राप्येकदेशान्वयोदुर्वारइतिचेन्न ॥ तत्राप्येतन्मतेनदीपदस्यगभीरनदीतीरेलक्षणा ॥ गभीरपदंतात्पर्यग्राहकमित्यदोषात् ॥ पूर्वोक्तव्युत्पत्तेःससंबन्धिकव्यतिरिक्तविषयतयाचैत्रस्यनप्तेत्यादावेकदेशान्वयेपिनक्षतिः ॥ निष्कौशांबिर्घनश्यामोगोरथइत्यादौकौशांब्यादिपदस्यैवकौशांब्यवधिकनिष्क्रमणकर्त्राद्यर्थेलक्षणाभ्युपगमेनैवेप्सितार्थबोधोपपत्तौक्रान्तेवयुक्तादिशब्दानामुपादानस्यानापत्तिः ॥ एवंचित्रगुरित्यादावपिगवादिशब्दानामेवचित्रगवीस्वाम्यादौलक्षणाचित्रादिपदंतात्पर्यग्राहकम् ॥ नचसमासेखलुभिन्नैवशक्तिःपङ्कजशब्दवदितिप्रतिबन्दी विशिष्टशक्तिसाधिकावाच्या ॥ तत्रावयवशक्तिमजानतोपिबोधात् ॥ नह्यवयवशक्त्यग्रहेलक्षणयापङ्कादिशब्देभ्योविशिष्टार्थप्रत्ययोतस्तत्रैवनलक्षणा ॥ अतएव राजादिपदशक्त्यग्रहे राजपुरुषइत्यादौ न बोधः ॥ प्रामोदकइत्यादौ तूत्तरपदमेव लाक्षणिकम् ॥ शीघ्रोपस्थितिकत्वात् ॥ पूर्वपदस्य यौगिकत्वेन तल्लक्षणायाधातुप्रत्ययतदर्थज्ञानसाध्यतयाविलंबितत्वात् ॥ प्रत्ययानांसंनिहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तेश्च ॥ घटादिपदे त्वतिरिक्ताशक्तिः कल्प्यमाना विशिष्टे कल्प्यते ॥ विशिष्टएव तत्सङ्केतस्य व्यवहारादितोनिर्धारात् ॥ प्रत्येकंवर्णेषु बोधकत्वस्याभावाच्च ॥ स्वीकृतं





च घटादिपदेष्वपि पूर्वपूर्ववर्णानुभवजन्योद्बुध्धसंस्कारसहितचरमवर्णस्यैव वाचकत्वं मीमांसकैः ॥ अतः केवलचरमवर्णादर्थबोधस्तु नापद्यते ॥ उपकुंभमित्यादावुत्तरपदस्यैव समीपाद्यर्थेलक्षणा पूर्वपदंतात्पर्यग्राहकम् ॥अर्धपिप्पलीत्यादौ क्वचित्तत्पुरुषेपिचरमपदस्यैव पिप्पल्यर्धाद्यर्थे सा ॥ नीलोत्पलमित्यादौकर्मधारये तु न सा ॥ प्रत्येकपदशक्त्युपस्थितयोरभेदान्वयसौलभ्यात् ॥ शङ्खपटहमिति द्वन्द्वेप्युत्तरपदस्य शङ्खपटहसमाहारे लक्षणा पदान्तरं द्योतकम् ॥ तत्रैव परम्परया वादनकर्मत्वान्वयः इतरेतरयोगद्वन्द्वे साहित्यापन्नप्रत्येकपदार्थयोरुत्तरपदस्यैवसा ॥ अतएव द्विवचनार्थ द्वित्वाद्यन्वयस्तत्र ॥ समाहारद्वन्द्वे साहित्यं विशेष्यमत्र तु विशेषणमिति भेदः यद्वा समाहारद्वन्द्वे साहित्याप्रतीतेर्न लक्षणातत्र॥किन्तुप्रत्येकपदशक्त्युपस्थाप्ययोरेव तयोः साक्षाद्वादनादिकर्मत्वाद्यन्वयः ॥ एवमितरेतरयोगेपि न लक्षणा ॥ एकस्मृत्यारूढपदद्वयात्प्रत्येकशक्त्युपस्थितार्थयोर्द्वित्वान्वयसंभवात् ॥ एकक्रियान्वयित्वरूपस्यैकबुध्यवच्छिन्नत्वरूपस्य वा साहित्यस्य पश्चादवगमेनपूर्वं तत्र लक्षणाग्रहासंभवाच्च ॥ पङ्कजरथकारादियोगरूढपदेषु पद्मत्वजातिविशेषादिरूपेणोपस्थितये रूढिशक्तिः स्वीक्रियतएव ॥ नच तत्रापि लक्षणैवास्त्विति वाच्यम् ॥ तस्यास्तत्रासंभवात् ॥ तथाहि सा किं पङ्कजपदे उत डप्रत्यये ॥ नाद्यः ॥ समुदाये शक्त्यभावेन शक्त्यघटितलक्षणायाअसंभवात् ॥ मण्डपादिशब्दवज्जहत्स्वार्थायावृत्तेस्तत्रासत्त्वाच्च ॥ यत्र ह्यवयवार्थविरोधिनी रूढिस्तत्रैव साभ्युपगम्यते ॥ जहत्स्वार्थातुतत्रैवयत्ररूढिर्विरोधिनीत्यभियुक्तोक्तेः ॥ न द्वितीयः ॥ प्रकृत्यर्थस्यानन्वयापत्तेस्तदर्थे प्रत्ययस्यासाधुतापत्तेश्च राजपुरुषइत्यादौ तु प्रत्येकपदवृत्त्यापि विशिष्टार्थबोधनिर्वाहे समुदायशक्तिकल्पनं तत्रानुचितमेव ॥ नापि षष्ठे ( पा० १ सू० ४४ ) " वचनाद्रथकारस्याधानेऽस्यसर्वशेषत्वात् " इत्यादिसप्रसूत्ररथकाराधिकरणबाधः ॥ " वर्षासुरथकारआदधीत " इत्यत्र यौगिकार्थरथकरणनिमित्ते वर्षर्तुविधानस्य संकरस्य विशिष्टाधानापेक्षया लघुत्वेपि तैत्तिरीयब्राह्मण प्रथमकाण्डे ( प्रपा० १ अनु० ४ ) " ऋभूणांत्वादेवानांव्रतपतेव्रतेनादधामीतिरथकारस्य" इति श्रवणेन " ऋभूणांत्वा " इति मन्त्रवर्णादभुसौधन्वनपर्यायप्रतिलोमजातिरथकारस्यैव तदधिकारावगत्या लाघवानादरेण रूढार्थे तत्र विशिष्टाधानकल्पनात् ॥ मन्त्रवर्णे विशेषस्तु ( अ०६ पा.१ सू० ५० ) "सौधन्वनास्तुहीनत्वान्मन्त्रवर्णात्प्रतीयेरन् " इति सूत्रे भाष्ये " सौधन्वनानामजातिरभिधीयते॥ हीनास्तु किञ्चित्त्रैवर्णिकेभ्यः, जात्यन्तरम्, नतु शूद्राः न वैश्यानक्षत्रियाः तेषां इदमाधानम् ॥ कथमवगम्यते ॥ प्रसिद्धेर्मन्त्रवर्णाच्च ॥ मन्त्रवर्णोहि भवति ॥ " सौधन्वनाऋभवःशूरचक्षसः " इति ' ऋभूणांत्वा ' इति रथकारस्याधानमन्त्रः ॥ तस्मात्सौधन्वनाऋभवः इति, ऋभवश्चरथकाराः ॥ अपिच " नेमिंनयन्तिऋभवोयथा " इति ये नेमिं नयन्तितेऋभवः इत्युच्यन्ते ॥ रथकाराश्च नेमिं नयन्ति ॥ तस्मात् अत्रैवर्णिकानां अशूद्राणां एतत् आधानमिति" ॥ इति शबरस्वामिना दर्शितः॥रथकारशब्दस्य

तत्र रूढिं तु प्रथमाध्याये वर्णजातिविवेके याज्ञवल्क्योदर्शयति ॥ माहिष्येणकरण्यांतुरथकारःप्रजायत इति ॥ वैश्यायांक्षत्रियादुत्पन्नोमाहिष्यः॥ शूद्रायां वैश्यादुत्पन्नाकरणीत्यन्यदेतत् ॥ नच तस्याऽपूर्वविद्याध्ययनादिकल्पनागौरवम् ॥ फलमुखत्वात् ॥ प्रकृते राजपुरुषादिसमुदाये शक्तिग्राहकंन तादृशं कोशादिकं येन तद्बलादवयवार्थः परित्यज्येतेति स्थिते कोनामैकप्रसरताभङ्गदोषः ॥ विशिष्टशक्तिं स्वीकुर्वतां मते हि तदाशङ्कामात्रमपि प्रसज्यते ॥ नतुव्यपेक्षावादे ॥ नीलोत्पलादौ कर्मधारयस्थले तु लक्षणापि नास्तीत्युक्तं प्राक् ॥ एवं शुद्धाद्वैतपदेपि ॥ अतएव वृत्तिविग्रहयोः समानार्थकत्वाय राजा पुरुषइत्यादौ राजाचासौ पुरुषइति चित्रगुरित्यादौ चित्राणां गवामयमिति मीमांसकाविगृण्हन्ति॥ अथकथंतर्ह्येकप्रसरताभङ्गभिया “ वषट्कर्तुःप्रथमभक्षः ” इत्यत्र भक्षमुद्दिश्य प्राथम्यं विधीयतइत्यस्यायुक्तत्वमुक्तं तृतीयइति चोद्यं तु मूलएव समाधास्यते ॥ एकार्थीभावेत्यादि ॥ अयं भावः ॥ समासे विशिष्टशक्त्यस्वीकारे तस्य प्रातिपदिकसंज्ञादिकंनस्यात् ॥ अर्थवत्वाभावेनार्थवदधातुरप्रत्ययःप्रातिपदिकमित्यस्याप्रवृत्तेः ॥ नच कृत्तद्धितेत्यत्रसमासग्रहणेन सा संभवति ॥ तस्य नियमार्थतायाभाष्यकारादिभिरुक्तत्वात् ॥ समासेशक्त्यभावेन शक्यसंबन्धरूपलक्षणायाअप्यसंभवेन, लाक्षणिकार्थवत्वस्याप्यसंभवाच्च ॥ किञ्च राजपुरुषइत्यादौ राजादिपदस्य संबन्धिनि संबन्धे वा लक्षणा ॥ नाद्यः ॥ राज्ञः पुरुषइति विवरणविरोधात् ॥ समाससमानार्थकवाक्यस्यैव विग्रहत्वात् ॥ अन्यथा तस्माच्छक्तिनिर्णयोन स्यात् ॥ नान्त्यः ॥ राजसंबन्धरूपः पुरुषइति बोधापत्तेः ॥ विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेः ॥ अपिच ॥ बहूनांवृत्तिधर्माणांवचनैरेवसाधने ॥ स्यान्महद्गौरवंतस्मादेकार्थीभावआश्रितः ॥ चकारादिनिषेधोथवहुव्युत्पत्तिभञ्जनम् ॥ कर्तव्यंतेन्यायसिद्धंत्वस्माकंतदितिस्थितिरिति भूषणोक्तकारिकाभ्यामेकार्थीभावस्वीकारपक्षस्यैवसम्यक्त्वंप्रतीयते ॥ तदर्थस्त्वित्थम् ॥ वृत्तेर्धर्मालिङ्गसंख्याविशेषणाद्यऽयोगादयस्तेषाम् ॥ “ सविशेषणानांवृत्तिर्नवृत्तस्यवाविशेषणयोगोने ” त्या दिवचनैःसाधने गौरवम् ॥ तथा धवखदिरौ निष्कौशाम्बिर्गोरथोघृतघटोगुडधानाः केशचूडः सुवर्णालङ्कारोद्विदशाः सप्तपर्णइत्यादाविवेतरेतरयोगादिक्रान्तयुक्तपूर्णमिश्रसंघातविकारसुच्प्रत्ययलोपवीप्साद्यर्थोवाचनिकोवाच्यइत्यतिगौवं स्यादिति ॥ दूषणान्तरमुक्तम् चकारादीति ॥ आदिना घनश्यामोहंसगमना इत्यादाविवाऽऽदीनां पूर्वोक्तानां च सङ्ग्रहः ॥ दूषणान्तरमाह॥ बहुव्युत्पत्तिभञ्जनमिति ॥ अयमाशयः ॥ चित्रगुरित्यत्र स्वाम्यादिप्रतीतिरनुभवसिद्धा ॥ नच तत्र लक्षणा ॥ प्राप्तोदकोग्रामइत्यादौ तदसंभवात् ॥ प्राप्तिकर्त्रभिन्नमुदकमित्यादिबोधोत्तरं तत्सबन्धिग्रामलक्षणायामपि उदककर्तृकप्राप्तिकर्मग्रामइत्यर्थालाभात् ॥ प्राप्तेति क्तप्रत्ययस्यैव कर्त्रर्थकस्य कर्मणि लक्षणेति चेत्तर्हि समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरुदकाभिन्नं प्राप्तिकर्मेति स्यात् ॥ अन्यथा समानाधिकरणप्रातिपदिकार्थयोरभेदा-

न्वयव्युत्पत्तिभङ्गापत्तिः ॥ एवमूढरथः उपत्दतपशुः उत्धृतौदनेत्यादावपि द्रष्टव्यम् ॥ अधिकं तु भूषणादौ स्पष्टमेवेत्यलं प्रासङ्गिकेन ॥ **एकप्रसरताभङ्गस्त्वित्यादि ॥** अयमाशयः ॥ पूर्वतन्त्रे तृतीयस्य पञ्चमे पादे ॥ ( सूत्र १८ ) "ऐन्द्रवायवेतुवचनात्प्रतिकर्मभक्षःस्यात्" इत्येकसूत्रे पञ्चमाधिकरणे संस्कारार्थत्वात्पूर्वाधिकरणन्यायेन सकृद्भक्षे प्राप्ते "द्विरैन्द्रवायवस्य भक्षयतिद्विर्ह्येतस्यवषट्करोति" इति वचनाद्द्विर्भक्षं स्थापयित्वा ( सूत्र १९ ) "सोमेऽवचनाद्भक्षोनविद्यते" इत्यादित्रिसूत्रे षष्ठाधिकरणे ग्रहाणां होमाद्वचनाभावाच्चाभक्षं पूर्वपक्षीकृत्य "अल्पंजुहोति" इति विशेषवचनात्सोमस्य शेषसत्वेन तत्प्रतिपत्तौ विचार्यमाणायां "सर्वतः परिहारमाश्विनं भक्षयति" इत्याद्यपूर्वार्थवचनेभ्यस्तद्भक्षमुत्तरपक्षीकृत्य ( सूत्र २२ ) "चमसेषुसमाख्यानात्संयोगस्यतन्निमित्तत्वात्" इत्येकसूत्रेसप्तमाधिकरणे ज्योतिष्टोमे श्रूयमाणं "प्रैतुहोतुश्चमसःप्रब्रह्मणःप्रोद्गातॄणांप्रयजमानस्यप्रयन्तुसदस्यानां" मिति वाक्यं विचारितम् ॥ तत्र चमसिनां चमसेषु भक्षणमस्ति नवेतिसंशये पूर्ववद्वचनाभावादभक्षे प्राप्ते "होतुश्चमसोब्रह्मणश्चमसः" इत्यादिसमाख्याबलाद्भक्षणं सिद्धान्त्यते ॥ तथाहि चम्यतेऽस्मिन्निति चमसः ॥ भक्षणार्थाच्चमतेरधिकरणार्थऔणादिकोऽसन् ॥ नच तत्र होताऽन्यदोदनादि चमिष्यति ॥ सोमचमसइतिहि तं समाचक्षते ॥ नच तद्धोतुर्द्रव्यं किन्तु यजमानस्य ॥ स्पष्टं चेदं तत्र भाष्ये ॥ अतोहोतुः संयोगश्चमसे भक्षनिमित्तम् ॥ यदातृणादीनामव्युत्पन्नत्वमाश्रीयते तदापि भाट्टदीपिकायाम् "यदितृणादयोऽव्युत्पन्नाइतिपक्षाश्रयणंतदाचमसशब्दस्यपात्रेरूढत्वेयोग्यतयैवहोतृसोमादिसंबन्धोभक्ष्यभक्षकत्वादिसंबधेनैवेतितयाभक्षणसिद्धिरविकला अतश्चहोतृब्रह्मोद्गातृयजमानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणांस्वस्वचमसेषुसमाख्ययाभक्षः ॥ सदस्यपक्षेतस्यापिस्वचमसेवचनंत्वग्रेनिरूपयिष्यते" इत्युक्तम् ॥ ततश्च चतुःसूत्रेऽष्टमाधिकरणेभाष्यवार्तिकभेदेन सुब्रह्मण्यसहितानां तद्रहितानां वा सामगानामुद्गातृचमसे भक्षणं चतुःसूत्रेनवमाधिकरणे ग्रावस्तुतोहारियोजनभक्षं च व्यवस्थाप्य ( सू० ३१ ) "वषट्काराच्च भक्षयेत्" इत्येकसूत्रे दशमाधिकरणे "वषट्कर्तुःप्रथमभक्षः" इति चिन्त्यते ॥ अत्र किं भक्षमुद्दिश्य प्राथम्यं विधीयतउत प्राथम्यविशिष्टोभक्षः ॥ तत्र सप्तमाधिकरणे समाख्यया प्राप्ते प्राथम्यमप्राप्तमत्रविधीयतइतिप्राप्ते प्रथमभक्षइति समस्तपदेन योभक्षः सप्रथमइति व्यक्तेरसंभवात्प्राथम्यविशिष्टभक्षएवात्र वषट्कारनिमित्तकोविधीयते ॥ अतएवेहभाष्ये शबरस्वामी ॥ "अथकिंसमाख्यैवैकाभक्षकारणम् ॥ नइतिब्रूमः ॥ "वषट्काराच्च भक्षयेत्" वषट्कारश्च भक्षणेनिमित्तम् ॥ कथम् ॥ वचनात् ॥ एवंहिश्रूयते ॥ "वषट्कर्तुः प्रथमभक्षः" इति ॥ भक्षणस्यअप्राप्तत्वान्नप्राथम्यविधानार्थएषशब्दःकिन्तु प्राथम्यविशिष्टंभक्षणमेवविदधातिइति" इत्याह ॥ कमलाकरभट्टोपिमीमांसाकमलाकरे "वषट्कर्तुः प्रथमभक्षइत्यत्रान्त्येपदेसमाख्याप्राप्तभक्षानुवादेनकर्तृविशिष्टभक्षानुवादेनवाप्राथम्यविधौवैरूप्याद्वा-

क्यभेदाच्चकर्त्रादिविशिष्टभक्षविधेर्वषट्कारोपिनिमित्तम् ” इत्याचष्टे ॥ एवंचात्रसूत्रे समाख्याप्राप्तभक्षादतिरिक्तएवायंप्राथम्यविशिष्टोभक्षइति बोधनार्थएवसमुच्चयार्थश्चशब्दइति मम मतिभाति ॥ अत्र भाट्टदीपिकायां खण्डदेवः सयुक्तिकं पूर्वपक्षमुपन्यस्य “ प्रथमभक्षइतिसमासरूपेएकस्मिन्पदेएकांशेनोद्देश्यत्वेएकांशेनविधेयत्वेचाङ्गीक्रियमाणेएकप्रसरताभङ्गापत्तेःकर्मान्तरमेवेदं ॥ नचतस्मिन्दूषकताबीजाभावः ॥ सामर्थ्यभङ्गस्यैवतद्बीजत्वात् ॥ तथाहि ॥ सर्वत्रोद्देश्यविधेयभावस्थलेउद्देश्येविधेयान्वयात्पूर्वमुद्देश्यस्योद्देश्यत्वेनक्रियान्वयोवश्यंवक्तव्यः ॥ अतएवयच्छब्दयोगःप्राथम्यमित्याद्युद्देश्यलक्षणमित्यपिसङ्गच्छते ॥ प्राथम्यंतत्वेनप्रथमंक्रियान्वयोन्यस्यातिप्रसक्तत्त्वात् ॥ तदत्र यद्भिन्नपदस्थले यागेनस्वर्गंभावयेदित्यादौ तत्तत्पदात्पदार्थोपस्थित्यनन्तरं स्वर्गस्योद्देश्यत्वेन यागस्य च विधेयत्वेन क्रियान्वये प्रथममवगते पश्चादेव विधेयस्य यागस्योद्देश्ये स्वर्गे ऽन्वयइति स्थितिः ॥ तद्वच्चेहाप्येकपदस्थले भक्ष्ये प्राथम्यान्वयात्पूर्वं भक्षस्य क्रियान्वयोभ्युपगन्तव्यः ॥ ततश्च क्रियान्वयात्पूर्वं भक्षप्राथम्ययोर्विशेषणविशेष्यभावानवगमादेकार्थीभावलक्षणसामर्थ्यभङ्गादपरिपूर्णस्य समासपदस्य पदान्तरेणाख्यातेनाप्यन्वयायोगः ॥ यद्यपि चास्मिन्मते वैयाकरणवद्विशिष्टार्थवाचकत्वं न सामर्थ्यं तथापि क्रियान्वयात्पूर्वं उद्देश्यस्य तत्त्वेन क्रियान्वयस्य वक्तुमशक्यत्वात् ॥ अतएवविविदिषन्तियज्ञेनेत्यादौ विविदिषोद्देशेन यज्ञादिभावनाविधाने पि न क्षतिः ॥ अतश्चैकप्रसरताभङ्गभिया भक्षान्तरमेव विधेयम् ॥ अतएव लोहितोष्णीषेत्यादावतिदेशात्पूर्वमेवलोहितोष्णीषविशिष्टाः कर्तारएवप्रचारोद्देशेन विधीयन्ते विशेषणमात्रविधिफलकाइतितत्रतत्रैकप्रसरताभङ्गपरिहारप्रकारोवक्ष्यते ॥ अतश्च प्रकृते एकप्रसरताभङ्गभिया प्राथम्यस्य पूर्वकर्मण्यनिवेशाद्गुणादेव वषट्कर्तृप्राथम्योभयविशिष्टभक्षान्तरमेवविधीयते सोमसंस्कारार्थम् ॥ तत्र च यागार्थत्वेन वषट्कारस्य क्लृप्तत्वात्कर्तुरुपलक्षणमात्रत्वेनार्थान्निमित्तत्वावगतेर्वषट्कारनिमित्तकमिदं भक्षणं ग्रहेषु चमसेषुचाविशेषात्सिद्धं भवति ” इत्याचष्टे ॥ एवमपि भावत्काभिमतमद्वैतमेवोद्दिश्य न शुद्धत्वं विधीयते येन एकप्रसरताभङ्गप्रसङ्गः स्यात् किन्तु ततोतिरिक्तमेव शुद्धत्वविशिष्टमद्वैतं बोध्यते ॥ तत्रार्थिकः शुद्धत्वगुणयोगस्त्वशक्यप्रतिषेधः ॥ तेन त्वदभिमतस्य व्यावृत्तिरप्यर्थसिद्धैवेति ॥ एतदधिकरणार्थप्रकाशकं माधवकृतजैमिनीयाधिकरणमालास्थं कारिकाद्वयमाहुः ॥ **आद्यभक्षेवषट्कर्तुरिति** ॥ समासस्यच्छित्तिश्छेदः ॥ क्वचित्समासस्थित्यसंभवादितिपाठस्तुव्याख्यानविरोधादयुक्तोभाति ॥ एतच्च माधवेनैव न्यायमालाविस्तराख्येतद्विवरणे स्फुटीकृतम् ॥ “ वषट्कर्तुःप्रथमभक्षइत्येवंश्रूयते ॥ वषट्कर्ताहोतातस्यभक्षणंसमाख्ययाप्राप्तम् ॥ प्राथम्यंत्वप्राप्तमितितदेवात्रविधीयतइतिचेत् ॥ मैवम् ॥ प्रथमभक्षइत्यस्यसमस्तपदत्वेनयोभक्षःसप्रथमइत्येवंविच्छिद्यान्वेतुमयोग्यत्वात्प्राथम्यविशिष्टंभक्षणमत्रविधीयते ॥ तस्मिन्भक्षणेवषट्कारःकारणम् ” इति ॥

अत्रेदमपिबोध्यम् ॥ मीमांसकैर्विशिष्टशक्तेरनभ्युपगमेपिविशिष्टलक्षणायाअंगीकारा-
देकप्रसरतातन्मतेसिध्यति ॥ एकप्रसरत्वंनाम समासघटकपदयोरुद्देश्यविधेयभावेना-
न्वयाबोधकत्वं नतु विशिष्टार्थोपस्थितिजनकत्वम् ॥ तादृशव्युत्पत्तिशरीरं तु समास-
घटकपदार्थनिष्ठविधेयतानिरूपितोद्देश्यतासंबन्धेन शाब्दबुद्धिं प्रति समासघटकप-
दजन्योपस्थितिःप्रतिबन्धिकेति ॥ नचतादृशप्रतिबन्ध्यप्रतिबन्धकभावकल्पने गौरव-
मितिवाच्यम् ॥ सर्वत्र विशिष्टशक्तिकल्पनापेक्षया क्वचित्प्रतिबन्ध्यप्रतिबन्धकभाव-
कल्पने एव लाघवात् ॥ वस्तुतस्तुप्रथमपदार्थान्वितभक्षविशेष्यकबोधानुभवएवेतिमी-
मांसकैर्विशिष्टशक्तिरभ्युपेता ॥ एवं च यत्र वृत्तिघटकपदार्थस्य मानान्तरेणासिद्ध-
त्वरूपमुद्देश्यत्वमवगतं तत्रैवेयं व्युत्पत्तिर्न सर्वत्र ॥ अन्यथा क्वापिसमासोनस्यादित्य-
भिप्रेत्योक्तं प्राक् ॥ क्वापि समासोनस्यादिति ॥ यच्चकैश्चिद्वैयाकरणैरयमेवै-
कप्रसरताभंगोनाम यद्विशिष्टैकोपस्थितिजनकत्वरूपसामर्थ्यभङ्गः ॥ उद्देश्यविधेय-
भावेनान्वये पृथगुपस्थितेस्तत्त्वेनतद्भङ्गादित्युक्तम् तन्न ॥ भाष्यकृतानुक्तत्वात् ॥ कि-
ञ्चोद्देश्यत्वविधेयत्वे यच्छब्दतच्छब्दोपबन्धव्यङ्ग्ये ॥ वृत्तौ रूप्यत्वादिवत्तदन्वयासं-
भवान्न तथान्वयः ॥ एकार्थीभावाभावेपि घटमित्यादौयोघटः सकर्मेत्युद्देश्यविधेयत-
याऽन्वयस्याभावेन सतितात्पर्ये ध्वसोरेद्धावभ्यासलोपश्चेत्यादौ समासेपि तथान्वयद-
र्शनेनचैकप्रसरताभङ्गस्यैकार्थीभावकृतत्वाभावनिश्चयाच्च ॥ किञ्च तथान्वयाऽभिप्राये
णसमासप्रयोगेपि प्राप्तत्वाप्राप्तत्वादिपर्यालोचनोत्तरं लोहितोष्णीषाइत्यादौ तथाबो-
धोभवत्येवेति नासाधुतेत्याशयेनायंभाष्ये नोक्तः ॥ विशेषणंविशेष्येणबहुलमितिसूत्रे
"उभयविशेषणत्वादुभयोश्चविशेष्यत्वादुपसर्जनाप्रसिद्धि" रितिवार्तिके उभयमु-
द्दिश्य विशेषणत्वस्य विधेयताप्रतीतेश्च ॥ प्राप्ताप्राप्तविवेकस्तुपाण्डित्यविधित्सयाप-
ण्डितब्राह्मणइतिप्रयोगेब्राह्मणत्वमवगतंपण्डितत्वंचानवगतमितिध्येयः ॥ अतएव
काव्यप्रकाशकृतेदृशसमासवाक्यानि द्वितीयमौर्वीमिवकार्मुकस्य ॥ वपुर्विरूपाक्षमल-
क्ष्यजन्मतेत्यादीनिसप्तमोल्लासेच्युतसंस्कृतिदोषेनोदाहृतानि किन्त्वविमृष्टविधेयांशए-
व ॥ एवं च पृथगुपस्थितयोस्तथान्वयइत्युत्सर्गस्य त्यागेनसहृदयहृदयस्य वैमुख्यं
केवलं तस्यदूषकताबीजम् ॥ यत्तु काव्यप्रदीपे गोविंदसूरिणा "उद्देश्यंविधेयंचयदि-
पृथक्पदाभ्यामुपतिष्ठतेतदाप्राप्तमुद्दिश्याप्राप्तंविधीयते नच समासे पृथक्पदादुपस्थि-
तिरपृथगुपस्थितौ च न तथा व्युत्पत्तिरित्युक्तं तत्रोत्सर्गेणेति शेषोबोध्यः इतिमञ्जूषा-
कारः साहित्यदर्पणेपिसप्तमपरिच्छेदे स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैःकिमेभिर्भुजै-
रित्यादीन्यविमृष्टविधेयांशस्थलएवोदाहृतानि ॥ च्युतसंस्कारतायांतु गाण्डीवीकनक-
शिलानिभंभुजाभ्यामाजघ्नेविषमविलोचनस्यवक्षइत्येवोदाहृतम् ॥ "आङोयमहनः ॥
स्वाङ्गकर्मकाच्चेतिअनुशासनबलादाङ्पूर्वस्यहनःस्वाङ्गकर्मकस्यैवात्मनेपदंनियमितम् ॥
इह तु तल्लङ्घितमितिव्याकरणलक्षणहीनत्वाच्च्युतसंस्कारत्वम्" इति ॥ यद्येकप्रसरता-
भङ्गेऽपप्रयोगोऽभिप्रेयेततर्हितान्यत्रोदाहरिष्यन् ॥ किञ्च समासादावपि तथाव्युत्पन्न-

स्य तद्बोधोद्दुर्वारः ॥ भाष्याद्यनुक्तेश्च नासाधुत्वम् ॥ विशिष्टोपस्थितावपि विशेषणादौ प्रकारतादिस्वीकारवदुद्देश्यत्वादिस्वीकारे बाधकाभावात् ॥ स्पष्टं चेदं प्रायेण सर्वं लघुमञ्जुषायाम् वृत्तिविचारे ॥ अधिकं च तत्रैव कर्मधारयविचारे " सप्तदशारत्निर्वाजपेयस्ययूपोभवति ॥ लोहितोष्णीषाऋत्विजःप्रचरन्तीत्यादौ वाजपेययूपारत्नीनुष्णीषंचानूद्यसप्तदशत्वलौहित्यादिविधिरितिमीमांसकाः " इत्यादि द्रष्टव्यम् ॥ तदेतत्सर्वमनसिकृत्याहुः ॥ एवञ्चशुद्धाभिन्नेत्यादि ॥

मायायाभगवच्छक्तिरूपत्वेनभगवदभिन्नतयाशुद्धत्वेनसदसद्विलक्षणस्याऽनिर्वचनीयस्याज्ञानस्याऽशुद्धत्वसंपादकस्यास्वीकाराद स्मन्मतेशुद्धाद्वैतंसार्वदिकं।भवन्मतेतुतादृशाज्ञानविशिष्टस्यैवजगत्कारणत्वेनजीवस्यापिमायोपहितत्वस्वीकारेणजगतोपिमायिकत्वेनैतन्मतेइतिसङ्गतम् ॥ एवंचकिञ्चेत्यादिकमसङ्गतमेव ॥

## टीका

यच्चसहस्राक्षे किञ्चशङ्कराचार्यमतइत्याद्वितन्मतेअभावादित्यन्तं तद्दूषयन्ति॥मायाया भगवच्छक्तीत्यादिना ॥ अयं भावः॥ मायायाभगवच्छक्तित्वं " यस्मान्मायी " विद्ययाऽविद्यायाशक्त्यामायायाचनिषेवितमित्यादिश्रुतिपुराणसिद्धम्॥ तस्याभगवदभिन्नत्वं तु " पराऽस्यशक्तिः " इत्यादौ परत्वस्वाभाविकत्वादिश्रावणात् ॥ प्रकाशाश्रयादिसूत्रैः कौर्मादिवचनैश्चशक्तिशक्तिमतोरभेदस्योपपादयिष्यमाणत्वाच्च ॥ एतेन मिथ्यात्वमनोरथोपास्तः॥ मिथ्यावस्तुनः परत्वस्वाभाविकत्वाद्ययोगात् ॥ अभेदादेव नास्माकं द्वैतापत्तिर्नाप्युक्तरीतिकःसंबन्धः ॥ पराऽभिन्नत्वाच्च न तस्याअशुद्धत्वम् ॥ परस्य शुद्धबुद्धत्वाद्याम्नानात्॥ नहि वह्नौ शुद्धे तद्गताशक्तिरशुद्धा भवति ॥ त्वदभिमतं मायाशब्दवाच्यमज्ञानं तु मोक्षविरोधित्वात्साधनैरुच्छेद्यत्वाच्चाशुद्धत्वसंपादकमेवेत्युक्तं प्राक् ॥ तस्य तथात्वादेव तदनुपहिततया जीवेश्वरातिरिक्तस्यैव चैतन्यस्यशुद्धत्वं तावकग्रन्थेष्वभ्यस्यते जीवईशोविशुद्धाचिदित्यादौ ॥ अतः शुद्धकार्यकारणात्मकब्रम्हाद्वैताभावान्न तव मते शुद्धाद्वैतम् ॥ नच मन्मते अद्वैतज्ज्ञानात्पूर्वमपि ब्रह्मणः शुद्धत्वमेवेति वाच्यम्॥ ब्रह्मैकदेशे मायायाः सार्वदिकसत्वाङ्गीकारेण तदभावात् ॥ अनङ्गीकारे पुनः सृष्ट्युच्छेदप्रसङ्गात् ॥ सृष्टिप्रलययोः पौनःपुन्यबोधकस्य " प्रजायन्तेतत्रचैवापियन्ति ॥ धातायथापूर्वम् " इत्यादिशास्त्रस्यव्याकोपाच्च ॥ नच तस्यामिथ्यात्वेन न तत्संबन्धइति वाच्यम् ॥ अज्ञानस्य मिथ्यात्वेन भावरूपत्वासिद्धेः ॥ कल्पितस्यानादित्वानुपपत्तेश्च ॥ मायया जीवभावोजीवकल्पिताचसेत्यन्योन्याश्रयाच्च ॥ सदसत्वाभ्यामनिर्वचनीयत्वस्वीकारेण सत्वांशेन तत्संबन्धस्यानपायाच्च ॥ तस्मात् जीवईशोविशुद्धाचिद्विभागस्तयोर्द्वयोः ॥ अविद्यातत्कृतोबन्धःषड-

स्माकमनादयइत्यूरीकाराद्भवतामद्वैतज्ञानात्पूर्वमपि द्वैतमशुद्धत्वं च ॥ अनादित्वेनानादिभावत्वेन वा मायायानित्यत्वसाधने तु सार्वदिकमपि तत् ॥ मायासङ्कीर्णं कारणमविद्यासङ्कीर्णं कार्यमिति कार्ये कारणे च साङ्कर्यस्य मायाऽविद्यासंबन्धे हेयत्वेनाशुद्धतासंपादकत्वस्य च त्वन्मतग्रन्थेषु कार्योपाधिरयंजीवःकारणोपाधिरीश्वरः ॥ कार्यकारणतांहित्वापूर्णबोधोवशिष्यतइत्यादावनेकत्रकण्ठरवेण स्वीकारादेतन्मतेसुनिष्पन्नमिति मार्तण्डोक्तं सुसङ्गतमेव ॥ औपनिषदमते कार्यकारणयोः शुद्धत्वे मानं तु श्रुतिसूत्रादिषु तत्र तत्र ब्रह्मणएवकारणत्वकथनं जीवादेः कार्यत्वकथनं मायाऽविद्योपाधिभावस्यानभिधानं च स्पष्टमेव ॥ तयोः स्फुटशुद्धत्वबोधकोनृसिंहतापनीसन्दर्भस्तु मार्तण्डटीकायां इतिब्रह्मविदांहार्दमितिकारिकाव्याख्यानेदर्शितः ॥ समार्तण्डखण्डनाकाण्डताण्डवे पण्डितायमानेन भवता नाघ्रातोपि ॥ कुतस्तरां तद्दूषणकथा ॥ विशेषतश्चससन्दर्भौ ( अ०२ पा० १ सू०६ ) दृश्यतेत्वित्याद्यधिकरणभाष्यप्रकाशे उपनिषद्दीपिकादौ च विशदितइत्यलम् ॥ तस्मादस्माकमेव शुद्धाद्वैतं सार्वदिकम् ॥

किञ्चास्मन्मतेजीवस्यापिशुद्धत्वेनषष्ठीतत्पुरुषोपिसंभवति ॥ तत्रापिशुद्धेऽद्वैतमितिसमासेसप्तमी तत्पुरुषेकार्यस्याऽशुद्धत्वशङ्कास्यादेवंशुद्धेनाद्वैतमित्यत्रापि॥शुद्धस्याद्वैतमितिसमासेकारणेऽशुद्धत्वशङ्कास्यादतः शुद्धयोरद्वैतमितिसमासः कर्तव्यः ॥ त्वन्मतेचजीवस्याऽशुद्धत्वेनशुद्धयोरितिसमासाऽसंभवः॥ नचशुद्धयोस्तत्वंपदार्थयोरद्वैतमितिसमासः संभवत्यवेतिवाच्यं ॥ तत्वंपदार्थयोरित्यत्रतत्वंपदवाच्ययोरित्यर्थकत्वेतयोरद्वैतासंभवः ॥ नहितत्पदवाच्यस्यसर्वज्ञत्वादिविशिष्टस्यमायाप्रतिबिंबितस्यतदवच्छिन्नस्यवाऽल्पज्ञत्वादिविशिष्टेनान्तःकरणाऽवच्छिन्नेनतत्प्रतिबिंबितेनवात्वंपदवाच्येनाभेदस्तवसंमतः ॥तत्त्वंपदलक्ष्ययोरित्यर्थकत्वेतुद्विवचनानुपपत्तिः॥पदद्वयस्यापित्वन्मतेस्वरूपमात्रलक्षकत्वात्॥ स्वरूपस्यैकत्वेनतत्रद्वित्वाऽन्वयस्याऽसंभवात् ॥ एवंचषष्ठीतत्पुरुषेपीत्याद्यसङ्गतमेव ॥ ब्रह्मणःशुद्धत्वेऽपिजीवस्यत्वन्मतेमायिकत्वेनशुद्धत्वाऽसंभवात्॥अद्वैतपदार्थेब्रह्मणिशुद्धपदार्थस्याभेदेनान्वयस्य-

शुद्धयोरभेदबोधस्य वोपपादितत्वेन तत्रदोषलेशस्याप्यसम्भ-
वात् ॥ तदज्ञानमूलकः (शुद्धपदार्थस्यान्वयःक्वेतिवाच्यं ॥ भेदे-
वातज्ज्ञानेवातज्ज्ञानाभावेवे ) त्यादिकःस्वकपोलकल्पितशंकास-
माधानखण्डनरूपोग्रन्थः(कर्तुंशक्य) इत्यन्तःप्रलापोऽपास्तः॥य-
दपि ॥ किञ्चेत्यादिनाब्रह्मणोघटादिविषयकमिथ्याज्ञानविषयत्वंश
ङ्कराऽऽचार्याः स्वीकुर्वन्तीत्युक्तंतदपिशङ्कराचार्यमतमज्ञात्वैव॥ब्रह्म-
णोघटादिविषयकस्यायंघटइत्यादिज्ञानस्य विषयत्वे तावतैवब्र-
ह्मज्ञानसंभवेनमोक्षःस्यात् ॥ किंत्वखण्डाकारवृत्तिविषयत्वमेव-
तैःस्वीकृतं ॥ अस्मन्मतेचभेदज्ञानेनशुद्धपदार्थस्यान्वयोनास्त्येवे-
त्यसकृदावेदितमेवातःशुद्धस्यभेदज्ञानेकः सम्बन्धइतिशङ्कैवनसं-
भवति॥ कर्मधारयसमासपक्षेशुद्धपदार्थस्याऽभेदसम्बन्धेनाऽद्वैत-
पदार्थेऽन्वयस्वीकारेणसप्तमीप्रसङ्गस्याऽःशङ्कैवनसम्भवत्यस्मत्संम-
तार्थसिद्धिश्चसंभवति ॥ तथाच ( नापितृतीयःतत्रानुयोगितयाऽ-
न्वयेसप्तमीप्रसङ्गात् ॥ त्वत्संमतार्थासिद्धेश्चे ) त्यादिकंनिरस्तं ॥
किञ्चत्वन्मतेप्यद्वैतमित्यस्याद्वैताभावार्थकत्त्वेपारमार्थिकमद्वैतंप्र-
विश्यशरणंश्रुतिः ॥ बाधनाद्गुपजीव्येननबिभेतिकदाचनेति-
त्वत्संमतश्लोकेपारमार्थिकपदस्यान्वयः कुत्रेतिवक्तव्यम्॥ भेदे-
वाऽभावेवा ॥ नाद्यः ॥ भेदस्यपारमार्थिकत्वेद्वैतापत्तिः॥ नद्वितो-
यः॥ तत्रप्रतियोगितयाऽन्वयेषष्ठीप्रसङ्गादनुयोगितयाऽन्वयेसप्तमी-
स्यात् ॥ इत्यादिदोषस्यापादयितुंशक्यत्वेनतुल्यत्वात् ॥ उक्तं-
चयतः ॥ यत्रोभयोःसमोदोषः परिहारोपिवासमः ॥ नैकःपर्यनु-
योक्तव्यस्तादृशार्थविनिर्णयइति संक्षेपः ॥





## टीका

एवं कर्मधारयपक्षं समर्थ्य षष्ठीतत्पुरुषपक्षमपि समर्थयितुं तत्र मत्यवस्थायकं ॥ सहस्राक्षे एवंशुद्धयोरित्यादिं सिद्धिरितिसंक्षेपइत्यन्तं भागं दूषयन्ति ॥ **किञ्चास्म-न्मतइत्यादिना ॥ विनिर्णयइतिसंक्षेपइत्यन्तेन ॥ जीवस्यापिशुद्धत्वेने-ति** ॥ अपिशब्दोजडप्रपञ्चस्य कारणस्याक्षरस्य च समुच्चायकः ॥ तेन कार्यकारण-योरुभयोः सिद्धान्ते शुद्धत्वम् ॥ मार्तण्डटीकानुरोधेन समासान्तरानुपपत्तिं दर्शयन्ति॥ **तत्रापीति** ॥ सप्तमीतृतीयातत्पुरुषयोः शुद्धपदं कारणमात्रपरं संभवति ॥ तस्मिं-स्तेनसह वा कार्यस्याद्वैतमित्यर्थः ॥ तावता कार्ये शुद्धत्वं न प्राप्यते ॥ षष्ठ्येकवच-नेन तत्पुरुषे शुद्धपदं कार्यमात्रपरम् ॥ तेन कारणे तन्नायातीत्युभयोः शुद्धताबोध-नाय शुद्धयोरद्वैतमित्येव विग्रहोयुक्तः ॥ सप्तमीतत्पुरुषादिपक्षेषु सप्तमीतियोगविभा-गात्समासाश्रयणमित्यादिदोषान्तराणि विशेषतः प्रयोजनाभावान्न लिख्यन्ते ॥ **जी-वस्याशुद्धत्वेनेति** ॥ जीवस्येत्युपलक्षणम् ॥ कार्योपाधिरयंजीवःकारणोपाधिरी-श्वरः ॥ कार्यकारणतांहित्वापूर्णबोधोवशिष्यतइति कण्ठरवेण सङ्कीर्णयोरेव कार्य-कारणभावस्तयोरेवोपाधिभागत्यागेनाद्वैतं च भवत्संमतमिति न त्वन्मते षष्ठीतत्पुरु-षः ॥ उभयोः शुद्धत्वे तु न क्वापि भागत्यागोपेक्ष्यते ॥ तदपेक्षणे तु कार्ये कारणे चोभयत्राशुद्धत्वापादकः साङ्कर्यप्रयोजकस्त्याज्यभागोस्त्येवेति न शुद्धयोस्तयोरद्वैतं त्वन्मते ॥ तेन *( शुद्धयोस्तत्त्वंपदार्थयोस्तन्मतेऽद्वैतसत्वेन ) इत्याद्युक्तिर्निरस्ता ॥ किञ्च काव्यप्रकाशादिषु स्याद्वाचकोलाक्षणिकःशब्दोत्रव्यञ्जकस्त्रिधा ॥ वाच्यादय

---

## सहस्राक्ष

* एवं ॥ शुद्धयोस्तत्त्वंपदार्थयोस्तन्मतेऽद्वैतसत्त्वेन षष्ठीतत्पुरुषपक्षेऽपि शङ्कराचार्यमते शुद्धाऽद्वैतपदसंगतिः ॥ त्वन्मतेतु तत्पक्षे उक्तविधशुद्धपदार्थस्य संबन्धः क्वेतिवाच्यम् ॥ भेदेवा तज्ज्ञानेवातज्ज्ञानाऽभावेवा ॥ नाद्यः ॥ अप्रसिद्धेः ॥ नहि ते शुद्धब्रह्मसंबन्धी भेदः प्रसिद्धः॥ सामर्थ्याऽभावेन समासाऽभावप्रसङ्गाच्च ॥ अतएव न द्वितीयः ॥ नहि देवदत्तस्य यज्ञदत्तज्ञानं तद-भावोयज्ञदत्ते इत्यर्थे देवदत्तस्याऽघटज्ञानं यज्ञदत्ते इति विज्ञाः प्रयुञ्जते ॥ किञ्च शुद्धस्य भेदज्ञानेन कः संबन्धः ॥ नतावद्विषयिता ॥ तवाऽप्रसिद्धेः ॥ भ्रमात्मकस्याऽपि तस्य सत्त्वे त्वत्संमतस्य शुद्धाऽद्वैतस्याऽसिद्धेश्च ॥ नहि तत्सत्त्वे तन्निषेधः कर्तुं शक्यः ॥ किञ्चे-दमेव शङ्कराचार्याः स्वीकुर्वन्ति यद्ब्रह्मणोघटादिविषयकमिथ्याज्ञानविषयत्वं तच्चेत्त्वमपि स्वीकुर्यास्तर्हि कर्मधारयपक्षे स्वमतेन सहैव तन्मतं व्यावर्त्तयेः ॥ नाप्याश्रयाश्रयिभावः ज्ञानस्य सत्यत्वे भेदसिद्धेः ॥ असत्यत्वे ईश्वरस्य भ्रान्तत्वापत्तेः ॥ नापि तृतीयः ॥ तत्राऽ-नुयोगितयाऽन्वये सप्तमीप्रसङ्गात् ॥ त्वत्संमतार्थासिद्धेश्च ॥प्रतियोगितया तु नान्वयसंभवः ॥ भेदज्ञानस्य तयान्वितत्वात् ॥ किञ्च शुद्धप्रतियोगिकोद्वैतप्रतियोगिकोऽभावइत्यर्थे का तवे-ष्टसिद्धिरितिसंक्षेपः ॥ २ ॥ ६ ॥

स्तदर्थास्युरितिकथनात्पदार्थयोरित्यत्र च वृत्तिद्वयस्वीकारपक्षेप्यर्थपदं वाच्यपरं लक्ष्यपरं वेति विकल्प्य दूषयन्ति ॥ **तत्वंपदार्थयोरित्यत्रेत्यादिना** ॥ **अभेदस्तवसम्मतइति** ॥ सर्वज्ञत्वाल्पज्ञत्वादिपरस्परविरुद्धधर्मशालिनोरैक्यस्यासंभवात्साक्षात्तयोः सन संमतइत्यर्थः ॥ किन्तु कार्यत्वकारणत्वनिर्वाहकभागस्य त्यागेन केवलचैतन्यस्यैक्यं संमतम् ॥ तथासति शुद्धयोरिति द्विवचनस्यानुपपत्तिमाहुः ॥ **तत्पदलक्ष्ययोरिति** ॥ **स्वरूपमात्रेति** ॥ स्वरूपपदं शुद्धचैतन्यपरम् ॥ मात्रपदमशुद्धत्वापादककार्यकारणभावप्रयोजकोपाधिभागव्यवच्छेदार्थम् ॥ द्वित्वस्योपाधिमात्रमूलकत्वादुपाधिरहितस्यैव शुद्धतायास्त्वन्मतेपि स्वीकाराच्च शुद्धे द्वित्वानुपपत्तिर्युक्तैव ॥ सिद्धान्ते द्विवचनोपपत्तिं च दर्शयिष्यामः ॥ तस्मात्तदुक्ता तन्मते शुद्धाद्वैतपदसङ्गतिरसङ्गतैव ॥ अपिचैवं समासद्वयेपि स्वमते शुद्धाद्वैतपदसङ्गतिंस्वीकुर्वन्स्वोक्तपूर्वरीत्या शुद्धपदव्यावर्त्यं स्वमतप्रसिद्धं पक्षद्वयेपि प्रदर्शय॥ मतान्तरप्रसिद्धव्यावर्तनार्थमेव तदिति चेज्जितंरस्माभिः ॥ फलितमाहुः ॥ **एवञ्चषष्ठीति** ॥ **ब्रह्मणः** ॥ मायाविद्योपाधिरहितचैतन्यस्य ॥ जीवस्येति शबलस्याप्युपलक्षणम् ॥ अथवा विशुद्धचितैव सह जीवस्याभेदमिच्छन्तमेकदेशिनं प्रतीयमुक्तिः ॥ स्वमते समासद्वयेपि तदुक्तदोषाप्रसक्तिं बोधयितुमाहुः ॥ **अद्वैतपदार्थइत्यादिना** ॥ कर्मधारये शुद्धपदार्थस्याभेदेनान्वयः ॥ षष्ठीतत्पुरुषे शुद्धयोरभेदबोधइति विवेकः ॥ तथाहि षष्ठीतत्पुरुषपक्षेप्यद्वैतशब्दार्थउक्तरीत्या द्वित्वप्रकारकज्ञानविरुद्धमैक्यज्ञानमेव ॥ तत्र शुद्धपदार्थस्य विषयितासंबन्धेनान्वयः ॥ तथाच शुद्धयोरद्वैतमित्यस्य मायासंबन्धरहितकार्यकारणविषयकमभेदज्ञानमित्यर्थोभिप्रेयतेऽतोन काप्यनुपपत्तिः ॥ यद्यद्वैतशब्दार्थोभेदज्ञानाभावः स्यात् ॥ स्यात्तदा ( भेदेवातज्ज्ञानेवातज्ज्ञानाभावेवा ) इति विकल्पावकाशः ॥ तथार्थानङ्गीकारादेव पक्षत्रयउपक्षिप्तदोषानिरस्ताः ॥ किञ्चाभ्युपेत्यापि ब्रूमः ॥ अस्त्वद्वैतशब्दार्थभेदज्ञानाभावैकदेशे भेदे शुद्धपदार्थस्यान्वयः ॥ संबन्धश्च शुक्तिरूप्यमित्यादौ समस्तस्थले शुक्त्यादिरूप्यादाविव स्वाधिकरणकारोपविषयत्वम् ॥ नच शुद्धसंबन्धी भेदस्तवाप्रसिद्धइति वाच्यम् ॥ मायोपाधिसंबन्धमन्तरा शुद्धस्य ब्रह्मणएव बहुस्यामितीच्छया आकाशादितत्तत्कार्यरूपेण परिणततायाः " सहैतावानास ॥ तदात्मानꣳस्वयमकुरुत " इत्यादिकाण्वतैत्तिरीयप्रभृतिश्रुतिभिर्निश्चयात्कार्यकारणयोरुभयोः शुद्धत्वेपि आकाशोवायुश्च वस्तुतोऽतिरिक्तावेवेत्येवं कार्यकारणयोरारोप्यमाणस्य भेदस्य मन्मते शुद्धसंबन्धितायाः प्रसिद्धत्वात् ॥ एतेन सिद्धान्ते शुद्धयोरिति द्विवचनस्योपपत्तिरपि सिद्धा ॥ एकमेवेत्यादिश्रुतिभिरेकसङ्ख्यैव " सएकधाभवतित्रिधाभवतिपञ्चधासप्तधानवधाचैवपुनश्चैकादशःस्मृतः शतञ्चदशचैकश्चसहस्राणिचविंशतिः " इत्यादिभिश्छान्दोग्यभूमविद्यादिश्रुतिभिः सङ्ख्यामात्रमपि ब्रह्मधर्मएव ॥ तच्च बहुस्यामितीच्छयाग्निसंयोगेन जतुघृतगतद्रवत्वमिवाभिव्यज्यते ॥ सङ्ख्यामात्रस्य ब्रह्मधर्मत्वादेवाश्वमेधप्रकरणेतैत्तिरीयसंहितासप्तमकाण्डद्वितीयप्रपाठकेएकादशानुवाकमारभ्य यावदध्यायसमाप्ति " एकस्मैस्वाहा-

द्वाभ्यांस्वाहात्रिभ्यःस्वाहा ” इत्यादिना “ समुद्रायस्वाहामध्यायस्वाहान्तायस्वाहा-परार्धायस्वाहा ” इत्यन्तेन सर्वसङ्ख्याविशिष्टपरमात्मनआहुतयआम्नाताः ॥ तस्माज्जलात्मनोः समुद्रतरङ्गयोरितीव शुद्धयोर्हेतुकार्ययोरिति द्विवचनं नानुपपन्नम् ॥ नचवृत्त्येकदेशेन्वयःसामर्थ्याभावानुपपन्नइति शंक्यम् ॥ शरैःशातितपत्रइत्यादावन्वयितावच्छेदकरूपेणोपस्थितवृत्त्येकदेशार्थेप्यन्वयस्य सर्वैः स्वीकारात् ॥ एतेन ( अप्रसिद्धेः सामर्थ्याभावेनसमासाभावप्रसङ्गाच्च ) इति तदुक्तं हेतुद्वयमपास्तम् ॥ भेदज्ञानेऽन्वयस्वीकारपक्षेपि अतएवेति परामृष्टोद्वितीयहेतुश्चनिरस्तः॥ देवदत्तस्य यद्घटज्ञानमित्याद्युदाहरणं त्वत्यन्तविरूपम् ॥ तत्र देवदत्तसंबन्धि यद्घटज्ञानं तदभावस्याधिकरणं देवदत्तभिन्नमिह तु शुद्धसंबन्धि यद्भेदज्ञानं तदभावस्याधिकरणं न भिन्नं ज्ञाने देवदत्तसंबन्धआश्रयिता भेदज्ञाने तु शुद्धसंबन्धोविषयितेति भेदात् ॥ देवदत्तो-घटं नानयति तस्य घटज्ञानाभावादिति तु विज्ञाः प्रयुञ्जतएव ॥ घटाज्ञानं पटाज्ञानमिति च ॥ तत्रेदेवदत्तस्य वृत्त्येकदेशे घटज्ञानेऽन्वयः ॥ अन्यथा त्वदुक्तरीत्या सप्तमीप्रसङ्गात् ॥ घटाज्ञानमित्यादौ तु घटादिविषयकज्ञानस्याभावइत्येवार्थः ॥ अत्रापि वृत्त्येकदेशेज्ञानेघटादेर्विषयिता ॥ अपि च भवानपि शतशस्तथा प्रयुङ्क्ते ॥ यथा संप्रति शुद्धाद्वैतपदार्थदूषणारंभएव ( समासद्वयस्याप्यसङ्गतेः ) इति भवान्प्रायुङ्क्त ॥ अत्र समासद्वयशब्दार्थस्य सङ्गतावन्वयस्तदभावे वा ॥ नाद्यः ॥ समासैकदेशेन्वयासंभवस्य त्वया स्वीकारात् ॥ न द्वितीयः॥ अनुयोगितयान्वये सप्तमीप्रसङ्गस्य त्वयोक्तत्वात् ॥ तत्र यथा समादध्यास्तथात्रापि समाधिमवधारय ॥ प्रयोगान्तराण्यप्युदाहरिष्यन्ते ॥ शुद्धस्य भेदज्ञाने संबन्धस्तु विषयिता ॥ शुद्धयोः कार्यकारणयोर्मिथ्याद्वैतविषयत्वंतुममप्रसिद्धमेव ॥ द्वैतस्यमिथ्यात्वान्मत्संमतशुद्धाद्वैतस्यसम्यक्सिद्धिः ॥ त्वन्मतेद्वाभ्यांमकाराभ्यामितंज्ञातमितिविग्रहेणद्वैतशब्दवाच्यस्यनामरूपात्मकप्रपञ्चस्यमिथ्याभूतस्यप्रतीतिविषयत्वेप्यद्वैतपदेनयथानिषेधः ॥ स्पष्टंचेदंप्रभूषादिष्वपि ॥ तथाशुद्धकार्यकारणविषयकभेदज्ञानस्यभ्रमात्मकस्यनिषेधःकर्तुंशक्यः ॥ द्वाभ्यांमकाराभ्यामितंज्ञानंतदेवद्वैतमितिविग्रहेणद्वित्वेप्रकारताख्याविषयता ॥ शुद्धयोस्तुविशेष्यताख्यासेतितत्वम् ॥ यथातवघटादिप्रपञ्चविषयकमिथ्याज्ञानविषयत्वंब्रह्मणस्तथास्माकंभेदभ्रमविषयत्वमुपाधिसंबन्धरहितब्रह्मात्मककार्यकारणयोरितिजानीहि ॥ तदेतत्सर्वमनुसन्धायोक्तंमूले ॥ **तद्ज्ञानेत्यादि** ॥ **अपास्तइत्यन्तम्** ॥ एतेनैव-किञ्चेदमित्यादिर्व्यावर्तयेरित्यन्तातदुक्तिरपिप्रत्युक्ता ॥ तेषांमतेकार्यस्यमिथ्यात्वंकार्यकारणयोरौपाधिकत्वमस्माकंतुकार्यस्यापिसत्यत्वंतयोरनौपाधिकत्वंचेत्यादिबहुतरतारतम्यस्यासकृद्बोधितत्वेन ( तच्चेत्वमपिस्वीकुर्याः ) इतिकथनस्याशक्यत्वात् ॥ शुद्धपदार्थभेदज्ञानयोराश्रयाश्रयिभावस्तुनैवस्वीक्रियते ॥ शुद्धयोरभेदज्ञानमितिमुख्येऽस्मत्पक्षेतुसोपिनविरुद्धः ॥ अभेदस्यसत्यत्वादीश्वरस्यभ्रान्तत्वानापत्तेः ॥ ( किञ्चेदमेवशङ्कराचार्याः ) इत्याद्युक्तौदूषणान्तरमप्याहुः ॥ **यदपीत्यादिना** ॥ वस्तुत-

श्वशुद्धयोरद्वैतमैक्यज्ञानमितिसिद्धान्तान्नतदीयकल्पनावकाशइत्याशयेनाहुः ॥ **अ-स्मन्मतेचेत्यादि** ॥ किञ्चास्माकंकर्मधारयपक्षोमुख्यः ॥ तत्रशुद्धाद्वैतशब्दस्यपर-ब्रह्मपरतायाः शीघ्रमुपस्थितेः ॥ षष्ठीतत्पुरुषपक्षस्तुसिद्धान्तबोधसौकर्यार्थः ॥ अत-एवमार्तण्डटीकाकृद्भिः ॥ शुद्धाद्वैतपदेज्ञेयः समासःकर्मधारयः ॥ अद्वैतंशुद्धयोःप्राहुः षष्ठीतत्पुरुषंबुधाइत्यस्यविवरणेकर्मधारयपक्षंव्याख्याय " अतएवस्पष्टतयाबोधायष-ष्ठीतत्पुरुषमाहुः " इत्युत्तरार्धमवतारयद्भिःस्पष्टतयाबोधनार्थमेवपक्षान्तरादरणमिति-दर्शितम् ॥ अभावश्चास्मन्मतेपृथक्पदार्थतयानैवाङ्गीक्रियतेऽतःसहस्राक्षे ( नापितृ-तीयः ) इत्यादिनाऽभावेन्वयपक्षआपादितासप्तमीप्रसङ्गादिशङ्का मूलंनास्तिकुतःशाखे-तिन्यायादेवनिरस्तेत्यभिप्रेत्याहुः ॥ **कर्मधारयसमासइत्यादिना**॥ यदिचशुद्धम-द्वैतमित्यत्रापिकथञ्चित्सतान्दोषान्ब्रूयात्तदाप्रतिबन्दीमाहुः ॥ **किञ्चत्वन्मतेपीति** ॥ यद्यपिप्रतिबन्धाअनुत्तरत्वंतथापि तत्समाधिना प्रकृतेपि समाधिसंभवेन व्यासचरणै-रपि ( अ० २ पा० २ सू० १२ ) " समवायाभ्युपगमाच्च " इत्यादौतस्याआदरणा-दिहापितदादरणमदोषः ॥ नन्वेतावतापिषष्ठीतत्पुरुषपक्षे किमायातमिति चेत्सन्तिता-दृशाःषष्ठ्यन्तघटिताअपिशतशःप्रामाणिकप्रयोगाः ॥ यथागीतायाम् ( अ० ५ श्लो० १६ ) ज्ञानेनतुतदज्ञानंयेषांनाशितमात्मनइति ॥ अत्र आत्मनइत्यस्य अज्ञानमित्यत्रा-पिसंबन्धःशंकराचार्यैः " तदज्ञानंयेषांजन्तूनांविवेकज्ञानेनात्मविषयेणनाशितमात्म-नोभवति " इति व्याचक्षाणैर्दर्शितः ॥ शङ्करानन्दकृततात्पर्यबोधिन्यांच " ज्ञानेनतु-श्रवणादिसमुत्पन्नेनात्मविषयकेणात्मनोबुद्धेःसंबन्धिबुद्धिनिष्ठमित्येतत् " इत्यादिना सोतिस्फुटीकृतः ॥ येषामित्यस्यापितत्रसंबन्धःश्रीधरस्वाम्यादिभिरसन्दिग्धोदर्शितः ॥ तथा चाज्ञानपदैकदेशे ज्ञानआत्मादेः संबन्धे असामर्थ्यादि ॥ तदभावेसंबन्धेनुयो-गिनः षष्ठ्यनुपपत्तिः ॥ इहाज्ञानशब्दस्य ज्ञानविरुद्धावरकवस्तुपरत्वेत्वद्वैतपदस्यापि उक्तरीतिकोऽर्थइति तुल्यम् ॥ तथा ( अ० १६ श्लो० ४ ) अज्ञानंचाभिजातस्यपा-र्थसंपदमासुरीमिति ॥ अत्रापि श्रीधरस्वामिशङ्करानन्दादिभिः " अज्ञानमविवेकः ॥ अज्ञानंसदसद्विवेकाभावः " इत्यादिव्यवारि ॥ इह आसुरींसंपदमभिजातस्यज्ञाना-भावएवसंबन्धः ॥ तस्य यज्ज्ञानं तदभावइत्यर्थस्यतुतावकैरप्यकृतत्वादनौचित्याच्च ॥ एवञ्चषष्ठ्यसङ्गतिः ॥ न चार्षत्वं कल्प्यम् ॥ स्वग्रन्थेषु दोषप्रसङ्गात् ॥ अकल्पनाच्च॥ किञ्चमहाभाष्यादिषु ( अ० १ पा० ४ सू० ९३ ) अधिपरीअनर्थकावित्यादिसूत्रेषु " उक्तार्थानामप्रयोगः " इत्यादयस्तादृशप्रयोगादृश्यन्ते ॥ एवमन्येपिशतशः सहस्र-शः प्राचां प्रयोगाद्रष्टव्याः ॥ अथवा किमेभिः ॥ त्वं तावत्स्वप्रयोगानेव विचारय ॥ यथा षष्ठीतत्पुरुषखण्डनावसरेपि ( तवाप्रसिद्धेः ॥ अप्रात्मकस्यापितस्यसत्वेत्वत्संम-तस्यशुद्धाद्वैतस्यासिद्धेश्च ) इतित्वयं प्रयुङ्क्षे ॥ इह षष्ठ्यन्तार्थस्य क संबन्धः ॥ सिद्धौ वा तदभावे वा ॥ नाद्यः ॥ असामर्थ्योक्तेः ॥ मत्संमतंशुद्धाद्वैतसिद्धिश्च नहि-ते प्रसिद्धा ॥ न द्वितीयः ॥ सप्तमीप्रसङ्गात् ॥ एवं कर्मधारयखण्डनावसरे त्वंया

(समासद्वयस्याप्यसङ्गतेः ॥ तादृशस्यतवमतेऽप्रसिद्धत्वेनव्यावर्त्यालाभः ॥ जीवस्याशुद्धत्वेप्यद्वैतपदार्थस्यतत्वाभावात् ॥ मायायास्तत्संबन्धिनोवाऽशुद्धत्वस्यवक्तुमशक्यत्वाच्च॥ अध्यासस्याशुद्धत्वेपिजीवस्याशुद्धत्वाभावाच्च ) इत्यादयोबहुतरास्तादृशाःत्वीयाःप्रयोगाद्रष्टव्याः ॥ अत्रसप्तमीप्रसङ्क्रान्तास्त्वदुक्तदोषाःप्रायः प्रतिवाक्यं त्वदुक्तावेव प्रसज्यन्ते ॥ ( व्यावर्त्यालाभः ॥ अन्वयासंभवव्यावर्त्यालाभयोः ) इत्यादीनि तादृशसमासघटितपदान्यपि प्रायुज्यन्तायुष्मता ॥ अत्र व्यावर्त्यस्याऽलाभइत्यादिरेव विग्रहउचितोनतु व्यावर्त्येऽलाभइति ॥ इहापि व्यावर्त्यादेर्लाभादौ संबन्धस्तदभावेवेत्याद्यूह्यम् ॥ एवं तदनन्यत्वसूत्रेप्यन्यत्वाभावमेवार्थं वदतस्तव " तयोःकार्यकारणयोरनन्यत्वं " इतिस्वभाष्येपि स्वोक्तदोषप्रसंगः भ्रमत्यादौ तयोरिति षष्ठ्याअवगमात् ॥ तस्मान्मार्तण्डएकत्र दोषलेशानापादयितुं शतकृत्वस्तद्दोषघटितवाक्यानि प्रयुञ्जानोभवान् भास्करे पङ्कसीकरनिकरं संपर्चयितुं महति पङ्कगर्ते नीचैः पतन्तमनुकुरुते ॥ एवं च अज्ञानंचाभिजातस्येत्यादिवदभावेप्यनुयोगितयान्वयः शक्यवचनः ॥ अभावपदेनाभावउपात्तेऽनुयोगिनः प्रायः सप्तमीनियमोनतु नञ्समासघटितपदप्रयोगे ॥ प्रतियोगितयाऽन्वयस्यतु शङ्कापि बालप्रलापकल्पा ॥ ब्रह्मात्मककार्यकारणयोर्नित्यत्वात् ॥ नञ्समासस्थले पदान्तरोपात्तवस्तुनः प्रतियोगितयाऽन्वये सामर्थ्यस्याभावाच्च ॥ अन्यथा वायौ गन्धरूपयोरभावइत्यर्थे रूपस्यागन्धइति प्रयुज्येत ॥ तदेतत्सर्वमनुसन्धाय प्रकृते निरनुयोज्यानुयोगं निग्रहस्थानं वादिनोबोधयितुमभियुक्तोक्तिमाहुः ॥ **उक्तंचेति** ॥ निग्रहस्थानं तु लक्षितं गौतमेन ॥ ( अ० १ आ० २ सू० ६० ) " विप्रतिपत्तिरप्रतिपत्तिश्चनिग्रहस्थानम् " इति ॥ अत्राप्रतिपत्तिस्वरूपं तु तद्भाष्ये " परेणस्थापितंवानप्रतिषेधति ॥ प्रतिषिद्धं वा नोद्धरति " इति वात्स्यायनः ॥ तथाच अनिग्रहस्थाने निगृहीतोसीति कथनाय परेणापादितदोषेषु भूयस्तदुक्तावेवापाद्यमानेषु तदुद्धारे तस्यासामर्थ्यात्तस्यैव पराजयस्थानं सुस्थिरम् ॥ पञ्चमेऽपि ( आ० २ सू० २३ ) " अनिग्रहस्थानेनिग्रहस्थानाभियोगोनिरनुयोज्यानुयोगः " इत्युक्तेः ॥ वस्तुतस्तु अभावोऽस्मन्मते न पदार्थान्तरमतोनेयं शङ्का नापि समाधानम् ॥ किन्तु ज्ञानेनतुतदज्ञानमित्यादौ भवतामात्मादिसंबन्ध्यज्ञानमिवास्माकं शुद्धसंबंध्यभेदज्ञानमिति निरवद्यम ॥ तस्मात्समासद्वयस्यापि सङ्गतेः शुद्धाद्वैतमार्तण्डप्रकाशितः शुद्धाद्वैतपदार्थः सङ्गतएवेति शुभम् ॥ ॥ २ ॥

इति सहस्राक्षस्थद्वितीयश्लोकस्यखंडनम्

अथैचईशानःसृजतीच्छयैवेत्यादिनाईश्वरेच्छायाजगद्धेतुत्वख-
ण्डनपूर्वकंस्वमतव्यवस्थापनंकृतं तत्रक्रमः ॥ (रमणार्थमिदंसर्वं-
ब्रह्मैवस्वेच्छयाऽभवदितिशुद्धाद्वैतमार्तण्डोक्तमीश्वरेच्छामात्रस्य-
जगद्धेतुत्वंनसंभवति ॥यदिईश्वरेच्छानित्यास्यात्तदासर्वदासर्वंका
र्यंस्यात्तस्यचसर्वेभावविकाराःस्युरेकस्याअपीश्वरेच्छायाः प्रति
वस्तुकालभेदेनाऽऽकारस्यधर्मस्यवाभेदकल्पनेतुलोकविरोधः॥लो-
केज्ञानादिवदिच्छायाअपिअनुभवबलेनसमानविषयकत्वेनस्थि
त्यनङ्गीकारात् ॥ तत्रलौकिकेच्छातोऽत्यन्तवैलक्षण्येपीच्छाशब्द-
प्रयोगस्त्वादैचोर्वृद्धिप्रयोगइवपारिभाषिकःस्या) दित्यादिः॥अ-
त्रोच्यतेब्रह्मैवस्वेच्छयास्वात्मभूतयाजगद्रूपमभवत् ॥ तत्रहेतूरम-
णेच्छैवप्रतीयते ॥ कुतः ॥ तथैववेदेप्रतिपादनात् ॥ तथाचश्रुतयः
"एकाकीनरमतेसद्वितीयमैच्छत्॥बहुस्यांप्रजायेय॥सोकामयतबहु-
स्यांप्रजायेयेति॥तदात्मानंस्वयमकुरुत॥सच्चत्यच्चाऽभव"दित्याद-
यः॥नच मायया तथाभवनम् ॥ श्रुतिषुमायावाचकपदाऽभावात्॥
यदिमायाऽकुरुतेतिस्यात्तदातथैवस्वीकृतंस्यात्॥वैदिकानांवेदैकस-
मधिगम्येऽर्थेश्रुतेरेवप्रमाणत्वात्॥ कुतर्काश्रयणेत्वनवस्थास्यात् ॥
मोक्षाऽभावश्चस्यात् ॥ अतएवोक्तं " तर्काऽप्रतिष्ठानादप्य-
न्यथाऽनुमेयमितिचेदेवमप्यविमोक्षप्रसङ्गः" इति ॥ ननुब्रह्मणोज-
गद्रूपत्वे तस्यविकारित्वापत्तिरतोमाययातथात्वमेवाङ्गीकरणीयम्॥
एवञ्चमायायाएवविकारित्वंब्रह्मणश्चकूटस्थत्वेननिर्विकारत्वमेवे-
तिचेन्न॥ ब्रह्मणःकार्याकारत्वेपिविकारित्वंनसंभवति॥सर्वभवनस-
मर्थत्वात् ॥ अन्यथोपादानाभिन्ननिमित्तत्वमपिनस्यात्तस्याऽपि-
लोकेऽदृष्टत्वात् ॥कल्पनायाश्चतवलोकानुसारित्वमेव॥अस्मन्मते-
चयथावेदउपदिष्टं तथैवमन्तव्यम् ॥ वेदेचनिर्विकारस्यैवजगत्का-

रणत्वंप्रतिपादितमतस्तथैवमंतव्यम् ॥ अतएवमृदादीनांदृष्टान्तत्वे नोपादानवेदेकृतम् ॥ नहिमृदोघटादिरूपत्वेपिविकारित्वम् ॥ विंकारस्त्वन्यथाभावः ॥ यथादुग्धस्यदधिरूपतायां ॥ नह्येवंमृदोऽप्यन्यथाभावः ॥ अन्यथाघटतिरोभावेपुनर्मृद्रूपतानस्यात् ॥ दध्नोदुग्धरूपतेव ॥ नापिमृदादीनांमाययाघटादिभावः ॥ मृत्त्वेनज्ञानेघटादीनांबाधःस्यात् ॥ किन्तुमृदादीनामवस्थाविशेषएवघटादिरेवंब्रह्मणोप्यवस्थाविशेषएवजगदित्यन्यत्रविस्तरः ॥ साचेश्वरेच्छानित्या ॥ नचेच्छायानित्यत्वेसर्वदासर्वकार्योत्पत्तिप्रसङ्गइतिवाच्यम् ॥ यदायथायस्योत्पत्तिर्वृद्धिस्तिरोभावादिरिच्छायाविषयीभूतस्तदातथातस्याऽविर्भावादिर्जायतेनान्यथा ॥ त्वन्मतेपिब्रह्मणोनित्यत्वेनसर्वदासर्वकार्योत्पत्तिःकुतोनस्यात् ॥ तदेतत्सर्वमग्रेवक्ष्यते ॥ नचाऽऽकारबाहुल्यंसर्वकार्याकारायाएकस्याएवेच्छायाःकल्पनात् ॥ तथैवश्रुत्यानिरूपणात्॥ नहिलोकानुसारिण्येववेदेकल्पना ॥ लोकेशरीरान्तःकरणादिविशिष्टएवेच्छादर्शनेनेश्वरस्यापिशरीरान्तःकरणादिकंलोकानुसारिभिर्भवद्भिःकुतोनकल्प्यते ॥लोकेभवन्मतेरजतताऽधिष्ठानस्यानित्यत्वाज्जगद्भ्रमाधिष्ठानस्यब्रह्मणोमिथ्यात्वंचकुतोनाङ्गीक्रियते ॥ लोकेजगद्धेतुभूतायाइच्छायाअदर्शनेनलोकेच्छातोऽत्यन्तविलक्षणत्वेनेच्छापदस्यपारिभाषिकत्वमीश्वरेच्छायांभवन्मतेऽपिकुतोनस्यादितिविभावनीयम् ॥ स्याद्वेच्छाशब्दस्यनानार्थतेत्यादिप्रलापस्त्वनभ्युपगमेनैवपरास्तः ॥

## टीका

अथ नित्यायाभगवदिच्छायाः श्रुतिसिद्धे जगत्कारणत्वे मत्यवस्थायिनं मायादेस्तत्कारणत्वबोधकं जगज्जन्मादिकारणंस्वरूपश्रौतसौत्रब्रह्मलक्षणबाधकम् ॥

सहस्राक्षे ईशानः सृजतीच्छयैवयदीतितृतीयं श्लोकं अथरमणार्थमिदमित्यादिना ब्रह्मणोनाज्ञत्वमित्यन्तेन व्याख्यानेन सहितं **अग्रेचईशानइत्यादिना अलमप्रकृतविचारेणेत्यन्तेन** खण्डयिष्यन्तः अथरमणार्थमित्यादिं वक्ष्यमाणत्वाच्चेत्यन्तं भागंतावत्परिहरन्ति ॥ **अत्रोच्यतइत्यादिना॥ अनभ्युपगमेनैवपरास्तइत्यन्तेन** ॥ तत्र मार्तण्डकारिकायां एवकारः स्वाव्यवहितपूर्वब्रह्मपदेनैव संबध्यमानउपादानान्तरकर्त्रन्तरे एव व्यवच्छिनत्ति ॥ नतु करणान्तरम् ॥ नापि टीकाकृता तस्योत्तरत्रान्वयोव्याख्यातः ॥ अतः सहस्राक्षे ( शुद्धाद्वैतमार्तण्डोक्तमीश्वरेच्छामात्रस्य जगद्धेतुत्वं ) इति न वक्तुं युक्तं किन्तु निबन्धादिसिद्धं शङ्कराचार्यपरमगुरुगौडपादनिरूपितं वा तदिच्छामात्रस्य जगदाविर्भावे प्रथमतरकरणत्वमित्येवोचितं वक्तुम् ॥ प्रथमतरेतिविशेषणानुपादाने त्वस्माभिः कर्मादीनामवान्तरकारणत्वस्याप्रत्याख्याततयाऽस्मदनुवादे एवकारेण कर्मादिव्यावृत्त्युक्तिरसङ्गतैव स्यात् ॥ स्पष्टं तेषामवान्तरकारणत्वंत्वाकरे (अ०२ पा०१ सूत्र ३४) "वैषम्यनैर्घृण्येनसापेक्षत्वा" दिति ( अ०२ पा०३ सू० ४२ ) "कृतप्रयत्नापेक्षस्त्वि" त्याद्यधिकरणेषु॥ **रमणेच्छैवेति**॥ रमणार्थमेव जगद्रूपेणाविर्भवनमितितु विशेषतः प्रमाणोपन्यासपुरःसरं तदीयनवमश्लोकनिरसनावसरे दर्शयिष्यामः ॥ इह त्विच्छायाएव जगदाविर्भावे करणत्वं पूर्वमुपपादयिष्यते ॥ अथभगवान् स्वेच्छयैव स्वरूपादेव प्रपञ्चमाविष्कुरुतइति बोधकानि प्रमाणानि तावदुपन्यस्यन्ते ॥ तत्र ऋक्शाखायां ऐतरेयब्राह्मणे "आत्मावाइदमेकएवाग्रआसीत् ॥ नान्यत्किञ्चनमिषत् ॥ सईक्षतलोकान्नुसृजाइति ॥ सइमांलोकानसृजत " तैत्तिरीयाणामानन्दवल्याम् " सोकामयत ॥ बहुस्यांप्रजायेयेति ॥

---

## सहस्राक्ष

* ईशानःसृजतीच्छयैव यदितां केनाऽऽत्मनाऽऽत्माश्रयान्नान्येच्छयापिभयात् श्रुतिस्मृतिगणैरिच्छोद्भवः कालतः ॥ उद्बुद्धाज्जनकर्मणोवत तथाऽविद्याख्यमायावशाद्धेतुत्वं च परस्य लक्षणमिदं शाखेन्दुवद्वाऽन्यगम् ॥ ३ ॥ अथ रमणार्थमिदं सर्वं ब्रह्मैव स्वेच्छयाऽभवदिति शुद्धाऽद्वैतमार्त्तण्डोक्तमीश्वरेच्छामात्रस्य जगद्धेतुत्वं खण्डयति ॥ ईशानःसृजतीति ॥ एवकारेण कर्मादिव्यावृत्तिः ॥ तत्र यदीश्वरेच्छा नित्या स्यात्तदा सर्वदा सर्वं कार्यं स्यात्तस्य च सर्वे भावविकाराः स्युः ॥ एकस्याअपीच्छायाः प्रतिवस्तु कालभेदेनाऽऽकारस्य धर्मस्य वा भेदकल्पने तु लोकविरोधः॥ लोके ज्ञानादिवदिच्छायाअपि अनुभवबलेन समानविषयकत्वेन स्थित्यङ्गीकारात् ॥ तत्र लौकिकेच्छातोऽत्यन्तवैलक्षण्येऽपीच्छाशब्दप्रयोगस्त्वादैचोर्वृद्धिशब्दप्रयोगइव पारिभाषिकःस्यात् ॥ स्यादिच्छाशब्दस्य नानार्थता ॥ सोऽकामयतेति श्रौतव्यवहारस्य तथाप्युपपत्तेः ॥ तस्यानित्येच्छापक्षमरतस्यावक्ष्यमाणत्वाच्च ॥

सतपोतप्यत ॥ सतपस्तप्त्वाइदंसर्वमसृजत” मैत्रायणीयोपनिषदि (प्रपाठक१ खंड २ मंत्र६) “ प्रजापतिर्वाएकोऽग्रेऽतिष्ठत्सनारमतैकःसआत्मानमभिध्यात्वाबह्वीःप्रजाअसृजत” इतिवाजसनेयिनां पुरुषविधब्राह्मणे “ आत्मैवेदमग्रआसीत्पुरुषविधःसोऽनुवीक्ष्यनान्यदात्मनोपश्यत् ” इत्युपक्रम्य “ सवैनैवरेमे तस्मादेकाकीनरमतेसद्वितीयमैच्छत्सहैतावानास ” छन्दोगानां श्वेतकेतुविद्यायां “ सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयम् ” इत्युपक्रम्य “ तदैक्षतबहुस्यांप्रजायेयेति । तत्तेजोसृजत ” इत्यादि ॥ आथर्वणानां गोपथब्राह्मणे “ ब्रह्महवाइदमग्रआसीत्स्वयंत्वेकमेवतदैक्षतमहद्वैयक्षंतदेकमेवास्मिहन्ताहमदेवमन्मात्रंद्वितीयंदेवनिर्ममे ” इति तेषां प्रश्नोपनिषदि ( प्रश्न ६ ) “ सईक्षांचक्रे ” इत्युपक्रम्य “ सप्राणमसृजतप्राणाच्छ्रद्धांखंवायुर्ज्योतिरापःपृथिवीन्द्रियम् ॥ मनोऽन्नमन्नाद्वीर्यंतपोमन्त्राःकर्मलोकालोकेषुचनामच ” इति ऋग्यजुःसामाथर्वस्वेवमादीनि तत्रतत्र श्रुत्यन्तराण्यप्यनुसन्धेयानि ॥ एवं वेदावाच्यतां मायापरपर्यायप्रकृतिकारणवादं च निरस्यन्सूत्रकारोप्याह ॥ ( अ० १ पा० १ सू० ४।१७ ) “ ईक्षतेर्नाशब्दम् ॥ कामाच्चनानुमानापेक्षा ॥ ” ( अ० १ पा० ४ सू० २४ ) “ अभिध्योपदेशाच्च ” इत्यादि ॥ एवमादिषु ब्रह्मणा जगतउत्पादने इच्छायाएव साधकतमत्वश्रवणात् सैव कारणम् नतु विशेषोद्बुद्धजीवकर्माणिमाया वा तत् ॥ अश्रवणात् ॥ ग्रहिलतया तथाङ्गीकारे तु श्रुतहान्यश्रुतकल्पनापातात् ॥ यदि श्रुतिस्तथाभिप्रेयात्त्वदुक्तां प्रक्रियां सैववदेत् ॥ नतु इच्छामात्रेण सर्गम् ॥ तदेतदभिप्रेत्याहुः ॥ **नचमाययेत्यादिना** ॥ **श्रुतिषु** ॥ सर्गप्रकरणश्रुतिषु ॥ **मायाकुरुतेति** ॥ तदात्मानमिति स्वपरिणामबोधकवाक्यवदेवं श्रुतिवाक्यं यदि स्यादिति भावः ॥ श्वेताश्वतरे पुराणेषुचोच्यमाना माया तु तत्रैव तच्छक्तितया प्रतिपादितेति सर्वभवनसामर्थ्यरूपा सा नब्रह्मातिरिक्ता ॥ अतोब्रह्म यथा यथा भवनमिच्छतितथा तथा स्वसामर्थ्यैनैव भवतीति तत्राभिप्रायः ॥ नतु भावरूपाऽज्ञानस्वरूपात्त्वदभिमता सा श्रूयते ॥ विशेषस्तु वक्ष्यते ॥ **अनवस्थास्यादिति** ॥ कैश्चिद्बुद्धिमद्भिर्यत्नेनोत्प्रेक्षिताअपि तर्काबुद्धिमत्तरैरितरैराभास्यन्ते ॥ तदुत्प्रेक्षिताश्चान्यैर्बुद्धिमत्तमैरित्येकत्रतर्के प्रतिष्ठाभावादनवस्था ॥ **मोक्षाभावश्चेति** ॥ अलौकिकेर्थे यथाश्रुतप्रतिपत्तिमन्तरा केवलतर्कैः पर्यवसानस्यासिध्या संशयात्मत्वानपाये साधनासंपत्या मोक्षाभावः ॥ एतेन तर्काप्रतिष्ठानसूत्रस्यार्थोदर्शितः ॥ **अतएवोक्तमिति** ॥ अविरोधस्य प्रथमे पादे व्यासचरणैः ( सूत्र ११ ) उक्तमित्यर्थः ॥ अथ कण्ठरवेणास्मत्संमतप्रक्रियायाः श्रुतितोऽसिद्धावपि युक्त्या तां साधयिष्यामइत्याशयेन शङ्कते ॥ **नन्विति** ॥ समादधते॥ **कार्याकारत्वइत्यादिना**॥ **नसंभवतीति** ॥ यथा तदात्मानमितिश्रुत्योपादानत्वं तथाऽजरत्वाऽमरत्वाऽविक्रियत्वादिश्रुत्या निर्विकारत्वमपि यथार्गमं तत्र प्रतिपत्तव्यमेव ॥ तस्यौपनिषदत्वात् ॥ श्रुतिभिश्च “ तदेजतितन्नैजति ” इत्यादिना तत्र विरुद्धधर्माश्रयतायाबोधनात् ॥ **अन्यथेति**॥

श्रुतिमनाश्रित्य तर्काश्रयणे ॥ **वेदेचेत्यादि** ॥ मुण्डकादिषु " अथपराययातदक्ष-रमधिगम्यतेयत्तदद्रेश्यमग्राह्ममगोत्रमवर्णमचक्षुःश्रोत्रंतदपाणिपादंनित्यंविभुंसर्वगतंसु-सूक्ष्मंतदव्ययंयद्भूतयोनिंपरिपश्यन्तिधीराः " इत्यादावदृश्यत्वादिना निर्विकारस्यै-व भूतयोनिपदेन जगत्कारणत्वमुक्तम् ॥ अग्रे चानुपदंदृष्टान्तपूर्वकं " तथाक्षरा-त्संभवतीहविश्वम् " इति तदेव स्फुटोक्तम् ॥ एवं तत्र तत्रोपनिषत्सु द्रष्टव्यम् ॥ **अतएवेति** ॥ अविकृतपरिणामवादस्यैव वेदाभिप्रायगोचरत्वादेव ॥ **वेदेकृतमि-ति** ॥ छान्दोग्यादिषु " यथासोम्यैकेनमृत्पिण्डेन ॥ यथासोम्यैकेनलोहमणिना " इत्यादिना कृतम् ॥ **विकारस्त्वन्यथाभावइति** ॥ स्वासाधारणधर्मपरित्यागपुरः सरः पुनः कारणभावप्रतिरोधिधर्मान्तरोदयोविकारः ॥ यथा दुग्धस्य दधिभावे दुग्धासाधारणधर्मस्य माधुर्यादेः परित्यागः ॥ पुनर्दुग्धभावापत्तिप्रतिरोधिनोऽम्लत्व-घनत्वादेरुदयश्च ॥ श्रुत्युक्तानां मृत्सुवर्णायःप्रभृतीनां तु घटकटककटाहादिभावेपि तदसाधारणधर्माणां गन्धवत्त्वकषपट्टिकारोहित्वकृष्णकठिनधातुत्वादीनां न परित्या-गः ॥ नापि घटादीनां भूयः कारणभावानापत्तिः ॥ अतएवघटादेः पाकादिदशायां धर्मान्तरोदयेपि न दोषः ॥ तस्य कारणभावापत्तिप्रतिरोधित्वाभावात् ॥ किञ्च यदि मृदादेः श्रौतदृष्टान्तस्य मायया घटादिभावः स्यात्स्यात्तर्हि ब्रह्मणोपि तया प्रपञ्चभावः ॥ तदेवतु नास्तीत्याहुः ॥ **ज्ञापीत्यादि** ॥ यथा रज्जुत्वेन ज्ञानादेव तत्र सर्पप्रत्ययोन भवति तथा मृत्त्वादिना ज्ञानेपि घटादिप्रत्ययस्तथासति नस्यात् ॥ घटाद्याविर्भावे कुलालादिव्यापारोपि नापेक्ष्येत ॥ नहिरज्जौ सर्पप्रत्यये सर्पिण्यागर्भधारणप्रसवाद्यपे-क्ष्यते ॥ एतच्च सर्वं पुरस्तात्प्रपञ्चयिष्यते ॥ **अन्यत्र विस्तरइति** ॥ भाष्यतत्प्रकाश-निबन्धावरणभङ्गादिषु विस्तरः ॥ तस्मादन्यथानुपपत्त्यापि इच्छया ब्रह्मणः सर्वरूपेण-भवनमिति श्रौतीसर्गप्रक्रियैवादरणीयेत्यभिसन्धिः ॥ **अथसाचेश्वरेच्छेत्यादेः अग्रेवक्ष्यतइत्यन्तस्याऽयमभिप्रायः** ॥ साचब्रह्मधर्मत्वान्नित्यैव ॥ "अनुच्छि-त्तिधर्मा" तिमैत्रेयीब्राह्मणादिषु तद्धर्माणां नित्यत्वाम्नानात् ॥ नच यदीश्वरेच्छानित्या-स्यात्तदासर्वदासर्वं कार्यं स्यात्तस्य च सर्वे भावविकाराः स्युरिति वाच्यम् ॥ सृष्ट्य-धिकरणे स्थूले कालोपाधौ क्रमिकेषु सूक्ष्मकालोपाधिष्वस्मिन्कालेऽस्मिन्देशइदमे-तद्द्वारैवमाविर्भावनीयं स्थापनीयं वर्धनीयं विपरिणमनीयमिति निखिलप्रापञ्चिकप-दार्थानां सामान्यतोविशेषतश्च तया विषयीकारात् ॥ तेनैव क्रमेण सर्वभवनौचित्येन सर्वकार्याणां यास्कोक्तानां तत्तद्भावविकाराणां च यौगपद्यस्याप्रसक्तेः ॥ दृश्यते चेत्थंकारं लोकेपि महाराजादीनां समयसमयः ॥ अमुष्मिन्नमुष्मिन्नवसरएवादोदः कार्यमिति॥महाराजादीनां हि श्वः प्रातरुपवनं यास्यामः सङ्गवेऽक्षैः क्रीडिष्यामोम-ध्यान्हे भोक्ष्यामोऽपराण्हे सङ्गीतं श्रोष्यामःसायं नन्द्यावर्तं प्रवेक्ष्यामइत्यादीच्छायाः पूर्वमेव सत्वेपि नहि तत्तत्कालनियतस्य तस्य तस्य कार्यस्य यौगपद्यमापद्यते ॥ इयांस्तु विशेषः ॥ लौकिकेश्वराणां सङ्कल्पः क्वचित्फलं साधनं विषयं वा व्यभिचर-

ति ॥ नतु परमेश्वरस्येति ॥ इदमेवालोचनं " सतपोतप्यत " इतिश्रुतौतपःशब्देनो-च्यते ॥ " यःसर्वज्ञःसर्वविद्यस्यज्ञानमयंतपः " इति मुण्डकश्रुतेः ॥ तपआलोचन इत्यतऔणादिकोऽसुन् ॥ सन्तापार्थकप्रकृतिकासुन्नन्तादरे तु जीवतौल्यादनीश्वर-त्वमापद्येत ॥ ईश्वरान्तराभावेन फलमतइत्यधिकरणं च विरुध्येत ॥ नच क्रीडने कालापेक्षायां द्वैतं पारतन्त्र्यं वा शङ्क्यम् ॥ दशमस्कन्धे ( अ० ८५ श्लो० ४ ) यत्रयेनयतोयस्ययस्मैयद्यद्यथायदा ॥ स्यादिदंभगवान्साक्षात्प्रधानपुरुषेश्वरइति सप्त-मस्कन्धेनवमाध्याये (श्लो० २० ) यस्मिन्यतोयर्हियेनचयस्ययस्माद्यस्मैयथायदुत-यस्त्वपरःपरोवा ॥ भावःकरोतिविकरोतिपृथक्स्वभावःसञ्चोदितस्तदखिलंभवतःस्व-रूपमित्येवमादिषुसर्वस्यापि भगवद्रूपतोक्तेः ॥ अत्र यदायर्हीतिपदाभ्यां तत्तद-धिकरणकालोपाधीनामपि तदनतिरिक्तत्वं बोध्यते ॥ भवन्मतेपि ब्रह्मणः कारणत्वे तस्य नित्यतया मायायास्तत्त्वे तस्याअनादितया च सर्वदासर्वकार्यादिप्रसङ्गादिदोषा-दुरुद्धराएवेति पुरस्तात्प्रपञ्चयिष्यते ॥ **नचाकारेत्यादेःपरास्तइत्यन्तस्याऽय-माशयः** ॥ यत्तुसहस्राक्षे एकस्याअपीत्यादि अङ्गीकारादित्यन्तमुक्तं तदसत् ॥ लोके अपेक्षाबुद्धिवद्विद्याधने मे भूयास्तामित्यादीच्छायाअनेकविषयावगाहित्वानुभवात् ॥ नापि लोकविरोधोदोषः ॥ "पश्यत्यचक्षुः सशृणोत्यकर्णः " ॥ गृह्यमाणैस्त्वमग्राह्योवि-कारैः प्राकृतैर्गुणैः ॥ निर्दोषपूर्णगुणविग्रहआत्मतन्त्रोनिश्चेतनात्मकशरीरगुणैश्चहीनः ॥ इत्यादिश्रुतिस्मृतिशतैर्भगवद्गुणानामप्राकृतत्वसिद्धेः॥ अन्यथा सर्वं विषयीकुर्वत्तस्यैकं नित्यंज्ञानमपि लोकविरोधान्न शक्येतवक्तुम् ॥ नचेष्टापत्तिः ॥ विष्णुसहस्रनामभाष्ये अमृत्युःसर्वदृक्सिंहइत्यत्र " प्राणिनांकृताकृतंसर्वंपश्यतिस्वाभाविकेनबोधेनेतिसर्वदृ-क् " इति ॥ सर्व दर्शीविमुक्तात्मेत्यत्र " सर्वेषांप्राणिनांकृताकृतंसर्वंपश्यतिस्वाभाविके-नबोधेनेति सर्वदर्शीति " एवमादिषु शङ्कराचार्यैरपि तस्य नित्यैकज्ञानस्योरीकारात् ॥ नच नाना ज्ञानानि कल्प्यानि ॥ तेषांयुगपदेकाधिकरणवृत्तितायालोकविरुद्धत्वे घट्टकु-टीप्रभातापातात् ॥ सर्वविषयकज्ञानानङ्गीकारे च " यःसर्वज्ञःसर्वशक्तिः ॥ सवेत्तिवेद्यं-नचतस्यवेत्ता " इति मुण्डकश्वेताश्वतरादिश्रुतयः ॥ वेदाहंसमतीतानिवर्तमाना-निचार्जुन ॥ भविष्याणिचभूतानिमांतुवेदनकश्चन ॥ इत्यादिस्मृतयश्च व्याकुप्येयुः ॥ नच पर्यायेणसर्वज्ञत्वं शङ्क्यम् ॥ सर्वएवहिसर्वेषांभवन्तिक्रमशोमिथइति श्रीभा-गवतोक्तरीत्या पर्यायतः सर्वज्ञतायाजीवेपि संभवेनेश्वरमात्रे तथात्वबोधकश्रुत्या-दिविप्लवानपायात् ॥ तत्त्वमसीत्यादौ स्वेष्टसर्वज्ञत्वकिञ्चिज्ज्ञत्वादित्याज्यभागव्यवस्था-भङ्गप्रसङ्गाच्च ॥ तान्यहंवेदसर्वाणिनत्वंवेत्थपरंतपेत्यादिसार्वदिकसर्वज्ञत्वबोधकप्रमा-णविरोधाच्च॥ पर्यायेणसार्वज्ञ्येऽभिप्रेतेतत्तत्काले तत्तज्जन्मज्ञानस्यार्जुनेपिसत्वेन नत्वं-वेत्थेति निषेधोनोपपद्येत॥ अथ श्रुत्याद्यनाकुलत्वाय सदा सार्वज्ञ्यं तस्य स्वीक्रियेत तदा तानि ज्ञानानि नाना एकमेव वा ॥ नाद्यः ॥ एककालावच्छेदेनानेकेषां तेषां सामानाधिकरण्यस्य बहुकालावस्थायित्वस्य च लोकविरुद्धत्वात् ॥ यदि चेश्वरध-

मैषु लोकविरोधः सह्येतर्तहि तं सोढ्वा लाघवादेकमेव तत्सर्वावगाहि स्वीक्रियताम् ॥ लोकेपि समूहालंबनानां ज्ञानविशेषाणामनेकावगाहित्वस्य दर्शनेन प्रथमपक्षवत्प्रबललोकविरोधाभावाच्च ॥ एवमीश्वरज्ञानस्य सिद्धएकत्वे तदिच्छायाअपि तथात्वमस्तु ॥ तस्याज्ञानसमानविषयकत्वनियमात् ॥ किं च कार्यमात्रं प्रतीश्वरेच्छाप्रयत्नौ कारणं न वा ॥ न द्वितीयः ॥ " सोकामयत ॥ इद ꣳ सर्वमसृजत ॥ कर्तारमीशंपुरुषंब्रम्हयोनिम् " अहंसर्वस्यप्रभवोमत्तःसर्वंप्रवर्ततइति तपाम्यहमहंवर्षंनिगृण्हाम्युत्सृजामिचेत्यादिकर्तृत्वादिबोधकश्रुतिस्मृतिशतपीडापत्तेः ॥ लोकायतिकादितन्त्रतन्त्रनिरीश्वरवादापत्त्या श्रुतिप्रभृतिसर्वविप्लवप्रसक्तेश्च ॥ आद्यश्चेत्तद्विषयिण्यइच्छानाना एकैव वा ॥ न प्रथमः ॥ लोके एकैकस्यास्तस्यास्त्रिक्षणावस्थायित्वनियमेनानेकासां तासां यौगपद्यस्य लोकविरुद्धत्वात् ॥ यदि चेश्वरधर्मेषु तद्विरोधस्याकिञ्चित्करत्वमाश्रीयेत तर्हि तंसोढ्वा लाघवादेकैवेच्छा सर्वानुगता स्वीक्रियताम् ॥ इच्छाविशेषाणामनेकविषयावगाहितायाअनुभवेन प्रथमपक्षवत्प्रबलतद्विरोधाभावाच्च ॥ नच पर्यायेणतत्तदिच्छाः कल्प्याः ॥ कार्ययौगपद्यानुपपत्तेः ॥ एतेनापि ज्ञाननित्यत्वं दृढीकृतम् ॥ तदन्तरेणेच्छायास्तामन्तरेण कार्याणां चासंभवात् ॥ समानविषयकत्वं च तद्विषयविषयकत्वम् ॥ इह चेच्छायाःकिंविषयविषयकत्वेन स्थितिरनुभवबलेनाङ्गीक्रियते ॥ ज्ञानादिसमानविषयकत्वेनेति चेन्न ॥ ज्ञानादिवदिति दृष्टान्ततयोपन्यासासङ्गतेः ॥ अतएकैकविषयावगाहित्वाभिप्रायेण समानविषयत्वोक्तिस्तु प्रेक्षावच्छैलीविरुद्धा ॥ यच्च तत्र लौकिकेच्छातइत्यादि वक्ष्यमाणत्वाच्चेत्यन्तमभ्यधायि तदप्याहोपुरुषिकामात्रम् ॥ इच्छात्वं हि नाम इच्छतीति प्रमितिगोचरेच्छात्वजातिमत्वम् ॥ प्रवृत्तेः साक्षादनुकूलगुणत्वं वा ॥ अत्राद्यलक्षणे प्रमितिःप्रत्यक्षशाब्दाद्यन्यतमा विवक्ष्यते ॥ तेनेश्वरेच्छायां तादृशशाब्दविषयत्वान्नाव्याप्तिः ॥ द्वितीयस्मिंश्च ज्ञानेतिप्रसङ्गवारणाय साक्षात्पदम् ॥ विषये तद्वारणाय गुणपदम् ॥ परे तु विषयस्यापि ज्ञानेच्छाद्वारैवानुकूलत्वमभिप्रेत्यगुणपदं त्यजन्ति ॥ आस्तांचैतत् ॥ तथात्वं चेश्वरेच्छायामपि समन्वेत्येवेति नात्यन्तवैलक्षण्यं तस्याः ॥ उद्देश्यताख्यविषयतावत्वेन तौल्याच्च ॥ अतोन तत्रेच्छाशब्दप्रयोगःपारिभाषिकोनानार्थोवा सः॥नित्यत्वसर्वावगाहित्वाभ्यामेवात्यन्तवैलक्षण्यस्वीकारे तु ईश्वरज्ञानेज्ञानशब्दप्रयोगोपि पारिभाषिकः स्यात् ॥स्याद्वा ज्ञानशब्दस्य नानार्थता॥किञ्चनित्यत्वेनविभुत्वात्सर्ववस्तुसंबन्धित्वेन धर्मान्तरैश्च लौकिकप्रतिबिंबतोविलक्षणतमेपि जीवे लोकविरोधमनुसन्धाय किञ्चिद्वैलक्षण्यस्यादोषत्वंत्वाष्टमश्लोकविवरणे वदन् प्रकृते च ताभ्यामेवात्यन्तवैलक्ष्ण्यंप्रतिपिपादयिषन्कुतोन जिन्हेषि ॥ ईशज्ञानेच्छयोश्च तंतं शब्दं न वयं स्वयमेव प्रयुंज्मः ॥ किन्तु " सआत्मानमेवावेत् ॥ सद्वितीयमैच्छत् " इत्यादिवैदिकव्यवहारानुसारात् ॥ नच श्रौतव्यवहारोनानार्थकल्पनेन पारिभाषिकत्वेन वोपपादनीयः ॥ हनहिंसागत्योरित्यादिवज्जानातीच्छत्योरनेकशक्तिकतायांहक-

मानाभावात् धातूनां पारिभाषिकार्थान्तरादर्शनाच्च ॥ अतएव वृध्यादिसंज्ञास्थलेपि क्तिन्नन्तादयस्तेते शब्दाएव तत्रतत्रार्थैपरिभाष्यन्ते नतु तत्तत्प्रकृतयोधातवः ॥ तस्माद्वेत्तिकामयतिप्रभृतीनामनेकेषांपारिभाषिकत्वकल्पनमरोचिष्णु ॥ इच्छाशब्दमात्रस्य पारिभाषिकत्वकल्पने तु " सद्वितीयमैच्छत् ॥ सोकामयत " इत्यादौ न तत्कल्पनावकाशः ॥ अपिच मूलोक्तरीत्या ईश्वरेशरीराद्यभावादीक्षितृशब्दस्य ब्रह्मणिपारमार्थिकसत्यत्वाद्भ्रमाधिष्ठानशब्दस्य भवन्मतेपीश्वरेच्छायांजगद्धेतुभावादिच्छाशब्दस्यच प्रयोगःपारिभाषिकःकुतोनस्यात्॥ कुतोवानस्यादीक्षित्रादिशब्दानांनानार्थतेत्यादूह्यम् ॥ ईश्वरेच्छायाएवजगद्धेतुत्वंनान्येच्छायाइतितु ( अ० ४ पा० ४ सू० १७ ) " जगद्व्यापारवर्जंप्रकरणादसंनिहितत्वाच्च " इत्यधिकरणेभाष्येमुक्तानामपिजगद्व्यापारंप्रतिषिध्येश्वरएवतंस्थापयद्भिःशङ्कराचार्यैःस्वीकृतमेव ॥ तदैक्षतेत्यादिश्रुतीनामनित्येच्छापक्षपरतात्विच्छानित्यत्वनिर्णयेननिराकारिनिराकरिष्यतेच ॥ किञ्च तावकाअपि बहवः सर्गसमयएव समुदयजुषामीश्वरज्ञानेच्छाप्रयत्नानामाप्रलयस्थायिनीमेकैकामेवव्यक्तिं मन्यंतेऽतस्तादृशानित्येच्छापरत्वपक्षेपि वैलक्षण्यतादवस्थ्यान्नोक्तदोषनिस्तारः ॥ इच्छाजन्यसर्वकार्याणां सर्गारंभकालएवोद्भवस्यापत्तेश्च ॥

यत्तु (किञ्चतदाऽऽकारास्तद्धर्मावायावन्तः कल्प्यन्तेतावत्यइच्छा एवकल्प्यन्ता०) मित्याद्युक्तंतन्न ॥ श्रुत्यनुसारेणैवकल्पनाऽस्मन्मतेसंभवतीत्युक्तमसकृदेवतादृशश्रुत्यभावेनतत्कल्पनाऽसंभवात्॥ धर्मभेदेनाकारभेदेनच धर्मिभेदकल्पनेस्त्वत्यनुभवस्यप्राद्यनेकवृत्ति विशिष्टस्याऽनेकाकारस्यान्तःकरणस्यैकत्वंनस्यात् ॥ तत्तत्क्षणवृत्तित्वविशिष्टैकघटादिकल्पनापेक्षयातावन्तोघटपटादयःकल्प्यन्तां ॥ नत्वेकंघटंप्रकल्प्यतत्रतत्रतत्क्षणवृत्तित्ववैशिष्ट्यानि॥ घटकल्पनायाआधिक्यात् ॥ धर्मकल्पनातोधर्मिकल्पनागौरवस्यत्वन्मतेऽकिञ्चित्करत्वात् ॥ त्वन्मतेत्रापियौक्तिकगौरवस्यासत्वान्मानाभावस्यचोक्तत्वात् ॥ एवंचजितंक्षणिकवादिभिर्नास्तिकैः ॥ " तदैक्षतबहुस्यांप्रजायेये"त्यादिश्रुतौतत्तत्पदार्थाऽऽकारानेकेच्छानामप्रतीतेस्तादृशश्रुतिसत्वे नचेदृशीश्रुतिः स्मृतिर्वाकाचिदस्तीत्यादिकथनमयुक्तम् ॥ तत्रैकेच्छायाएवप्रतीतेः ॥

## टीका

सहस्राक्षे ॥ किंच* तदाकाराइत्यादिमाश्रीयेतेत्यन्तं भागं दूषयंति ॥ **यत्तुकिंचेत्या-
दिना ॥ प्रतीतेरित्यंतेन** ॥ अत्रायं भावः ॥ यच्च किंचतदाकाराइत्यादिमानाभा-
वादित्यंतमवादि तदपि कुशकाशावलंबनम् ॥ बव्हिच्छावादिनापि कश्चिदाकारः प्रती-
च्छमुपगंतव्योन वा ॥ नांत्यः ॥ निराकारकेच्छायाअप्रसिद्धेः ॥ आद्यश्चेद्बव्हिच्छानां
कल्पनैवाधिका नत्वेकेच्छायाः सा॥ किंच प्रकारताविशेष्यतासंसर्गताख्यत्रिविधवि-
षयतानिरूपितविषयितारूपधर्मः प्रतीश्वरज्ञानं प्रति तदिच्छं च मंतव्योन वा ॥ न
द्वितीयः ॥ निर्विषयेच्छाद्यनुपपत्तेः ॥ आद्येइच्छायाःस्वाश्रयनिरूपितधर्मत्वेपिपूर्वोक्त-
विषयितानिरूपितधर्मित्वमक्षतमिति धर्मकल्पनातोधर्मिकल्पनायागुरुत्वान्नेच्छाबव्ह्यः
कल्प्यंतइतियुक्तमेव ॥ अन्यथात्वयापियावंतस्तत्तद्विषयाकारा मायावृत्तिविशेषाःक-
ल्प्यंतेतावत्योमायाएवकल्प्यंतां॥ मायाकल्पनायास्सुतरामाधिक्याद्वचनमात्रेणगौरवा-
दिव्यवस्थायाअसिद्धेस्त्वयांऽगीकारात्॥तथायावतोंतःकरणवृत्तिविशेषाजीवेषुकल्प्ये-
रन्तावंत्यंतःकरणान्येवाभ्युपेयंतां॥धर्मिकल्पनात्वेनगौरवेमानाभावस्यत्वयैवोक्तत्वात्॥
यदिचतत्कल्पनेगौरवस्ययौक्तिकत्वमाश्रीयेततर्हिप्रकृतेपितदाश्रीयतांसमानयोगक्षेम-
त्वात् ॥ धर्मिकल्पनस्यागुरुत्वेघटादिषुघटत्वैकत्वनीलत्वाद्येकैकधर्माश्रयंनानाधर्मिसमु-
दायरूपत्वमपिसुवचम्॥मूलदर्शितदिशाक्षणिकवादस्यापादनमपिसुकरम् ॥ बव्हिच्छा-
वादिनास्वाश्रयेऽनंतेच्छानांसंबंधास्तासुचविषयितादेस्तेऽनंताएवकल्प्याइतिमहदेवगौ-
रवम् ॥ यच्च ( नचेदृशीश्रुतिःस्मृतिर्वाकाचिदस्तियद्बलात्सत्यपिगौरवेबहुधर्मानुग-
तैकेच्छाऽऽश्रीयेत ) इत्युक्तंतदबोधाद्बहुधर्मानुगतामेकामनाश्रित्यैकैकधर्मानुगतानां
बव्हीनामाश्रयणेपीच्छासुधर्मितायाःस्वमुखेनैवोपादानेन ( इच्छैवधर्मपदेन ) इत्यादि-
स्वोक्तपूर्वस्यस्वयमेवनिरासात् ॥ तस्याः सर्वथानिर्धर्मकत्वेऽभिप्रेयमाणेतुधर्मानुगते-
त्येववक्तुंयुक्तं॥नतुबहुपदम्। विषयितादिधर्मशून्येच्छाचाप्रसिद्धैव॥वस्तुतस्तुप्रपंचावि-
र्भावहेतुतयाम्नातायाःपरब्रह्मेच्छायालाघवाद्बहुत्वबोधकश्रुत्याद्यभावाच्चसिद्ध्यदेकत्वं-
सर्वकार्यान्यथानुपपत्त्यासिद्ध्यदपितत्तदाकारवत्त्वंचकुतोनस्वीकार्यम् ॥ लोकविरो-
धादितिचेत्सर्वास्ताःसृष्ट्यवसरएवसंभूताआसंवर्तवर्तिन्योमन्यंतेनवा ॥ नाद्यः॥तद्विरो-

---

### सहस्राक्ष

* किञ्च तदाकारास्तद्धर्मावा यावन्तःकल्प्यन्ते तावत्यइच्छाएवकल्प्यन्तां नतुएका-
मिच्छाम्प्रकल्प्य तदाकारादयः ॥ इच्छाकल्पनाया आधिक्यात् ॥ इच्छैवच धर्मपदेनोच्यतां
तस्याइच्छाश्रयधर्मत्वात् ॥ एतेन धर्मकल्पनातोधर्मिकल्पनायागुरुत्वान्नेच्छाबह्व्यः कल्प्यन्तइ-
तिप्रत्युक्तम् ॥ वचनमात्रेण गौरवादिव्यवस्थाया असिद्धेश्च ॥ नह्यसति यौक्तिकगौरवे-
धर्मिकल्पनात्वेनैव गौरवम् ॥ मानाभावात् ॥ नचेदृशी श्रुतिः स्मृतिर्वा काचिदस्ति यद्बला-
त्सत्यपिगौरवे बहुधर्मानुगतैकेच्छाऽऽश्रीयेत ॥

धतादवस्थ्यात् ॥ तादृशीचश्रुतिःस्मृतिर्वावाच्या॥ययातावत्कालस्थायिन्योबह्व्यईश्वरेच्छाबोधिताःस्युः ॥ द्वितीयश्चेज्जीववत्त्रिक्षणावस्थायिन्योनानेच्छाएकैकशःक्रमेणोत्पद्यंतेयुगपदपिवाआद्यएकक्षणावच्छिन्नबहुकार्यानुपपत्त्याप्रागेवापास्तः॥ अंत्येतर्हि-रोधोनिरुच्छेदः ॥ किंचसृष्टिकालएवोत्पन्नानांतत्तत्सर्वकार्यतत्तद्भावविकारविषयिणीनां लोकानुरोधात् क्षणत्रयमात्रावस्थायिनीनामनन्तेच्छानामाप्रलयं तत्तत्कालनियततत्तत्कार्यसंभवनिर्वाहायानन्तसंतानकल्पने महदेवनिरर्थकगौरवम् ॥ न च कार्यपूर्वक्षणएवेच्छाउत्पद्यंतइति न सृष्टिदिष्टात्प्रभृति तत्संततिः कल्प्येतिवाच्यम्॥ सतपोतप्यतेतिश्रुतिविरोधात् सार्वज्ञ्यविरोधाच्च ॥ तथाहि परमेश्वरः सर्गावसरएव भावीनि यावत्कार्याणि तत्तज्जन्मास्तित्ववृद्ध्यादीनि तत्र सर्वत्र स्वेच्छानिमित्तकत्वं स जानाति न वा ॥ प्रथमे सर्वेच्छास्तदैवसित्स्यन्ति ॥ द्वितीये सर्वविद्त्वश्रुतीनां वेदाहं समतीतानीत्यादिस्मृतीनां च व्याकोपः ॥ अतएकस्याअपि तदिच्छायाः सर्वाकारकत्वं श्रुत्यनुकूलयुक्तिसिद्धम् ॥ ईश्वरधर्मेषु लोकविरोधस्याकिंचित्करत्वात् अन्यथा तदीयैकनित्यज्ञानस्यापि सर्वावगाहित्वं न स्यात् ॥ तत्र ब्रह्मधर्मत्वादिना तद्विरोधसहनेत्वत्रापि स सोढव्यइति पूर्वमेवावोचाम ॥ किंच तदिच्छायाएकत्वं " सईक्षांचक्रे " ( स्कं० १० अ० ३०।२३ श्लो० ३५ ) तस्येच्छयात्तवपुषः कुत एव बंध इत्याद्येकत्वबोधकानेकश्रुतिस्मृतिसिद्धम् ॥ नचोक्तश्रुतौ ईक्षांचक्रइतीक्षतेरेव लिटि रूपमाश्रित्यैकपदं तृदितिशंक्यम् ॥ शंकराचार्यैरप्युपनिषद्भाष्ये " ईक्षांचक्रेईक्षणं दर्शनं चक्रे कृतवान् " इतिव्याचक्षाणैरीक्षामित्यत्र पृथक्पदत्वस्य बोधनात् ॥ नच द्वितीयाश्रुत्या ग्रहगतैकत्ववत्तदविवक्षितमितिशंक्यम्॥ तस्येच्छया ( स्कं०१ अ० ३ श्लो० १ ) आदौ लोकसिसृक्षयेत्यादौ तृतीयाश्रुत्या गवाक्रीणातीत्यादिवत्तस्याभ्युपेयत्वसिद्धेः ॥ एतेन " सोकामयत तदैक्षत सेयंदेवतैक्षत " इत्यादावेकैव सा ज्ञेया ॥ अतएव सूत्रकारोपि " कामाच्च नानुमानापेक्षा ॥ पराभिध्यानात्तु ॥ संकल्पादेवत्वि " त्यादौ तस्याएकत्वमेवाह ॥ नित्यत्वंच " भारूपः सत्यसंकल्पआकाशात्मा " इत्यादिसामगशांडिल्यविद्याप्रभृतिश्रुतिप्रतिपन्नं औपनिषदैः सत्यनित्यशब्दयोः पर्यायतायाः पर्याश्रितत्वात् ॥ ईश्वरधर्मत्वाच्चा " विनाशी वा अरेयमात्माऽनुच्छित्तिधर्मा" इत्यादिश्रुतिसम्मतम्॥ नचात्रोच्छित्तिधर्मत्वाभावोर्थः कल्प्यः॥ अविनाशिपदेन पौनरुक्त्यापातात् ॥ नाप्यनुच्छित्तिर्धर्मोयस्येति॥ तावताऽपि सधर्मकत्वापत्तेः उक्तदोषाच्च॥ धर्मनित्यत्वञ्च तुरीयश्लोकखण्डनादौ विस्तरेणोपपादयिष्यते ॥ एवं सिद्धएकत्वे नित्यत्वे च तस्याएवानेकाकारकत्वं तत्तद्देशकालावच्छिन्नसर्वकार्यान्यथानुपपत्तेः ऋगादिशाखासु क्रमेण " सईक्षत लोकान्नुसृजा इति॥ सद्वितीयमैच्छत्सहैतावानास सेयंदेवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति " इत्यादिभ्यस्तस्याः सर्वकारणत्वबोधकैतरेयकाण्वच्छन्दोगादिश्रुतिभ्यश्च श्रौतार्थापत्त्यैवसिद्ध्यति ॥ किञ्च "बहुस्याम्प्रजायेयेति"

इतिब्रह्मवल्लिश्वेतकेतुविद्याश्रुतिः स्पष्टमेकस्यास्तस्याअनेकाकारानुगतत्वम्बोधयति ॥ अन्यथा इतिशब्दद्वयं ब्रूयात् बहुस्यामित्याकारस्य भिन्नत्वात् ॥ अकामयतेति-चावर्तनीयं स्यात् ॥ नित्यत्वञ्च सिद्धार्थस्सिद्धसंकल्प इतिविष्णुनामसहस्रस्मृतिः स्फुटमाह सिद्धशब्दस्य नित्यपर्यायत्वंतु महाभाष्ये पस्पशाह्निके "सिद्धे शब्दार्थसंबंध" इतिवार्तिकव्याख्याने स्पष्टम् ॥

तादृश्याश्चेच्छायाब्रह्माभिन्नैस्तत्तत्पदार्थैः संबन्धे न किंचिद्बाधकं॥पदार्थस्योत्पन्नत्वानुत्पन्नत्वेनाऽस्मत्संमते सर्वेषां पदार्थानां ब्रह्मस्वरूपेण सत्वात् ॥ एतेन एवंचेत्यादिदूषणमनवकाशं जीवेच्छानां नित्यत्वापादनं सत्कार्यवादिनां मते नसंभवति ॥ इष्टाऽऽपत्तिपराहतत्वात् ॥ नच जीवेच्छानामुत्पत्तिविनाशयोरनुभवसिद्धत्वात्कथमिष्टापत्तिरितिवाच्यम् ॥ अनुभवस्याविर्भावतिरोभावविषयकत्वात् ॥ तिरोभावेऽपिसद्रूपेणास्त्येव॥ एवञ्चतद्दृष्टान्तेनेश्वरेच्छायाअनित्यत्वाऽऽपादनंनसंभवति॥जीवेच्छेश्वरेच्छयोर्नित्यत्वे प्रकारभेदस्त्वस्त्येव॥"सोकामयते"त्यादावुत्पत्तिवाचकपदाऽभावान्नाशवाचकपदाऽभावाच्च कथंतादृशश्रुत्योत्पत्तिविनाशयोः सिध्या नित्यत्वं वक्तुमशक्यम् ॥ वस्तुतस्तु किञ्चेत्यादिप्रलापःपरमताज्ञानेन स्वकल्पितशङ्कासमाधानरूपउन्मत्तप्रलापतुल्यएव ( कश्चायमिच्छाविषययोस्त्वन्मते संबन्धः किंस्वरूपात्मकउत तद्भिन्नः ) इत्यादिनाइच्छासंबन्धविषयकप्रश्नः कृतः तत्रब्रूमः ॥ इच्छाविषययोः स्वरूपएव संबन्धः ॥ सचाविर्भविष्यत्तद्विषयस्वरूपएव फलजनकः ॥ इच्छास्वरूपस्तु नाङ्गीक्रियतेतेनेच्छायानित्यत्वइत्यादिकादोषा अनवकाशाः ॥ नचस्वरूपस्यसंबन्धत्वसंभवे संयोगादिर्व्यर्थः स्यादिति वाच्यम् ॥ नहिकिञ्चित्प्रतियोगिकस्य किञ्चिदनुयोगिकस्य स्वरूपस्य संबन्धत्वसंभवोन्यप्रतियोगिकानां संयोगादीनांव्यर्थत्वसंपादकइति कस्यचि-

दपिसंमतम् ॥ एवं चेच्छायाविषयैर्विषयत्वात्मकस्वरूपसंबन्ध-
स्वीकारेपि घटादीनां भूतलादौ संयोगे कोविरोधः ॥ किञ्च घ-
टादीनां भूतलादौ कालिकदैशिकैकज्ञानविषयत्वादीनां संब-
न्धानां संभवेपि संयोगस्य संबन्धत्वंप्रतीत्यनुसारेण वैशेषिकैरङ्गी
क्रियते ॥ एवं च समानाधिकरणसंबन्धस्यापि संबन्धान्तरानु-
च्छेदकत्वे व्यधिकरणस्योच्छेदकत्वशङ्कातुदूरादपास्ता ॥ घटा
दीनांत्वदभिमतानुत्पन्नतादशायामनाविर्भूतत्वेपि सद्रूपेब्रह्मणि घृ-
तकाठिन्यवल्लीनत्वात्सत्वेन तत्रेच्छायाः स्वरूपसंबन्धः संभव-
त्येव ॥ तथा च एतेनेत्यादिकं दत्तोत्तरम् ॥ नाप्युभयभिन्नइ
त्यादिकं दूषणं तूभयभिन्नस्य संबन्धस्यात्रानङ्गीकारेणैवानवका
शं सतिकुड्ये चित्रमितिन्यायात् ॥

टीका

सहस्राक्षे ॥ एवंञ्च नित्येच्छाया इत्यादिरस्थितेरितिन्यायादित्यन्तंभागंदूषयंति ताद-
श्याश्चेच्छायाइत्यादिना ॥ चित्रमितिन्यायादित्यन्तेन ॥ उत्पन्नत्वेति ॥

---

सहस्राक्ष·

* एवंच नित्येच्छायास्तैस्तैः सृज्यमानैः संबन्धमात्राङ्गीकारपक्षोपिनिरस्तः॥ अनुत्पन्ने-
न पदार्थेन तदाविर्भावेन वा इच्छायाःसंबन्धाऽयोगात् ॥ समानविषयतयैवोपक्षयेण विरम्य-
व्यापाराभावाच्च ॥ अन्यथा लाघवेन जीवेच्छानामपि नित्यत्वप्रसङ्गात् ॥ नच जीवेच्छानां
न नित्यत्वमनुभवेनोत्पत्तिनाशयोः सिद्धत्वादिति वाच्यम् ॥ ईश्वरेच्छायाअपि सोऽकाम-
यतेत्यादिश्रुत्योत्पत्तिनाशयोः सिद्ध्यानित्यत्वस्य वक्तुमशक्यत्वात् ॥ ईश्वरेच्छायामुत्पत्तिना-
शयोर्व्यपदेशस्य संबन्धोत्पत्तिनाशाभ्यां स्वीकारे तु जीवेच्छायामपि तयोरनुभवस्ताभ्यांस्वी-
क्रियेतेति समानम् ॥ किञ्च लाघवमात्रेण श्रुत्यर्थस्यौपचारिकत्वस्वीकारे स्वमादेरप्यनित्य-
त्वाऽसिद्धिः ॥ कश्चायमिच्छाविषययोस्त्वन्मतेसंबन्धः ॥ किं स्वरूपात्मकउत तद्भिन्नः ॥
आद्येऽपि किमिच्छास्वरूपात्मक आहोस्विद्विषयस्वरूपात्मकः ॥ नतावदाद्यः ॥ इच्छाया-
नित्यत्वेन तस्य नित्यत्वानपाये उक्तदोषाऽनिस्तारात् ॥ संबन्धत्वरूपेणेच्छायाअप्यनित्य-
त्वेतु तदीयनित्यरूपमजागलस्तनायमानमेव ॥ अनित्यरूपस्य स्वीकृतत्वेन गौरवाऽनपायात् ॥
किञ्च स्वरूपस्य संबन्धत्वसम्भवे संयोगादिर्व्यर्थः स्यात् ॥ एतेन संबन्धस्य विषयस्वरूपत्व-
मपि निरस्तम् ॥ घटादेस्तदाविर्भावस्य वाऽनुत्पत्तिदशायां तत्स्वरूपाऽभावेनेश्वरस्य तदिच्छा-
ऽनुपपत्तेश्च ॥ नाप्युभयभिन्नः संबन्धः ॥ निर्वक्तुमशक्यत्वात् ॥ किञ्च तस्याऽपि संबन्धा-
न्तरकल्पनायामनवस्था ॥ समवायाभ्युपगमाच्च साम्यादव्यवस्थितेरितिन्यायात् ॥

कालभेदेन व्यवस्थिते ते नास्मत्सम्मते ॥ इदानीमयमुत्पन्नःपूर्वमनुत्पन्नइतिसत्कार्य-
वादिवृकुमशक्यत्वात् ॥ नित्यत्वादनुत्पन्नत्वं तु सम्मतमेवेति त्द्दयम् ॥ अत्रेदमाकू-
तम् ॥ यत् एवञ्च नित्येच्छायास्तैस्तैरित्यादि समानमित्यन्तमलापि तत्तु कोलाहल-
मात्रम् आप्रलयस्थायित्वपक्षे ईशेच्छायास्तैस्तैः सृज्यमानपदार्थैः संबंधस्य तत्त-
त्कार्याणामनुभूयमानक्रमिकत्वोपपत्तये विरम्य व्यापारस्य च त्वयापि स्वीकार्यत्वा-
त्॥अनंतेच्छासंतानपक्षस्तु पुरैव निराकृतः॥तत्पक्षे कार्यसाक्षाज्जनकेच्छातिरिक्ततत्स-
न्तानस्य जीवेच्छावत्फलव्यभिचारितयैश्वर्यमपि भज्येत ॥ समानविषयत्वेनोपक्ष-
योक्तिस्तु विद्वच्छैलीविरुद्धा ॥ किञ्चैकैककार्यनियतैकैकेच्छापि तत्तत्कार्यक्षणएवो-
त्पद्यते ततः पूर्वं वा ॥ नाद्यः तस्याः कारणत्वासिद्धेः॥ अनन्यथासिद्धकार्यनियतपूर्व-
वृत्तेरेवकारणत्वात् ॥ द्वितीयश्चेत् उत्पत्स्यमानेन कार्येण तत्सम्बन्धः क्षणं विरम्य
व्यापारश्च वक्तव्य एव कार्यस्य यत्नोत्तरकाले संभवात् ॥ विषयत्वरूपस्य तस्यास्त-
त्कार्ये सम्बन्धस्यानंगीकारेतु घटेच्छातः पटोप्युत्पद्येतेति महत्येव कार्यकारणभा-
वाऽव्यवस्था ॥ अस्तुचेयमसत्कार्यवादिनां त्वादृशांतार्किकाणाञ्चाविद्यमानेन वस्तु-
ना तत्सम्बन्धचिन्ता ॥ अस्माकं सत्कार्यवादिनान्तु कार्यस्यापि नित्यत्वेन सार्व-
दिकस्तत्सम्बन्धो नानुपपन्नः ॥ आविर्भाव श्च अस्मिन्देशेस्मिन्कालइदमेवंलौकिका-
नुभवगोचरीकरिष्यामीतीश्वरेच्छाविषयत्वमेव ॥ अतो यस्मिन्कालोपाधौ यद्देशाव-
च्छेदेन यत्प्रचिकाशयिषितं तदैव तत्र तत्संसारिजीवैरनुभूयते यस्मिश्चकालोपाधौ
यत्तिरोबिभावयिषितं तदैव तत्तिरोधत्तइति न काप्यव्यवस्था ॥ आपाद्यमानजीवे-
च्छानित्यत्वन्तु सत्कार्यवादिनेष्टतया ऽभ्युपगम्येत ॥ तदुत्पत्तिनाशप्रतीतेराविर्भाव-
तिरोभावविषयकत्वात् ॥ नन्वेवंसति जीवेच्छेश्वरेच्छयोः को विशेषइतिचेदुच्यते ॥
जीवेच्छा घटादिवदाविर्भावतिरोभावशालिनी तेन तत्र जन्यत्वव्यवहारः ॥ वृत्ति-
रूपतज्ज्ञानवत् ॥ स्पष्टञ्चेदं सर्वार्थनिर्णये ( कारिका १३८ ) बुद्धेर्वृत्तिः स्थि-
तिर्नाम गुणतः सा त्रिधा मतेत्यत्र निबंधावरणभंगयोः तृतीयस्कंधसुबोधि-
न्यादौ च ॥ ईश्वरेच्छात्वीश्वरवत्स्वातंत्र्येण नित्या तद्धर्मत्वात् ॥ अतोजीवेश्वरज्ञा-
नयोरिवतदिच्छयोरपि नित्यत्वे अनित्येजननमित्याद्युक्तदिशा प्रकारभेदोस्त्येव ॥
एवञ्च जीवेच्छास्तु नानाव्यक्तयो नेश्वरेच्छावन्नित्याः आविर्भावतिरोभावरूपतदु-
द्भवोपरमयोरनुभूयमानत्वात् ॥ नचानुभवः सम्बन्धोत्पत्तिनाशादिनाऽन्यथानेयः
श्रुतिसंवादित्वात् ॥ संगात्सञ्जायते कामः कठवल्लीबृहदारण्यकयोः " यदासर्वे
प्रमुच्यंते कामाः " सप्तमस्कन्धदशमाध्याये ( श्लोक ७ ) विमुञ्चति यदा कामा-
न्मानवो मनसि स्थितान् ॥ तर्हैव पुण्डरीकाक्ष भगवत्त्वाय कल्पते एवमादिषु तज्ज-
ननप्रलययोर्व्यक्तिबाहुल्यस्य च श्रवणात् ईश्वरेच्छावत्स्वातंत्र्येण तन्नित्यताबोधक-
मानानुपलंभाच्च " सोकामयत " इत्यादिश्रुतयस्तु "बहुस्यांप्रजायेयेति " इति-
स्वरूपव्यवस्थापकेन पूर्वान्वयिनेतिशब्देन तादृशतदाकारस्यैव तदामाकव्यंबोधयंन्ति

न तु नित्येच्छाशक्तेरुत्पत्तिनाशौ ॥ अश्रुतेः ॥ न च भूतार्थकाख्यातश्रुत्या तौ शक्यवचनौ " सदेव सोम्येदमग्रआसीत् ॥ ब्रह्मवा इदमग्र आसीत् " इत्यादौ तच्छ्रुत्या ब्रह्मणोपि तयोरापत्तेः ॥ ननु " सत्यंज्ञानं " इत्यादि तन्नित्यताबोधकश्रुतिविरोधान्नैवमितिचेत् " अनुच्छित्तिधर्मा ॥ सत्यसंकल्पः ॥ पराऽस्यशक्तिः " इत्यादिनित्यत्वगमकश्रुतिविरोधः प्रकृतेपि तुल्यः ॥ स्वतःप्रमाणशब्दप्रतिकूललाघवन्त्वलौकिकेर्थैनादरणीयम् ॥ तस्य स्वतःप्रामाण्यन्तु पूर्वतन्त्रे तर्कपादऔत्पत्तिकाद्यधिकरणेषुसिद्धमेव ॥ अन्यथा लाघवाज्जीवेश्वरज्ञानयोरैप्यविशेषो वाच्यः " सआत्मानमेवावेदहं ब्रह्मास्मीति " इत्यादौलङ्श्रुत्याग्रहिलतयोत्पत्तिनाशयोस्तत्रापि शक्यवचनत्वात् ॥ नचेष्टापत्तिः ॥ शङ्कराचार्यैरपि (अ०१पा०३सू४) " प्राणभृच्च " इत्यादिसूत्रेषु " यद्यपिप्राणभृतोविज्ञानात्मनआत्मत्वंचेतनत्वं च संभवति ॥ तथाप्युपाधिपरिच्छिन्नज्ञानस्य सर्वज्ञत्वाद्यसंभवेसती " त्यादिव्याकुर्वद्भिस्तयोः परिच्छिन्नत्वापरिच्छिन्नत्वादिना विशेषस्यांगीकारात् ॥ प्रथमपादे क्षतिसूत्रेऽपि " यस्यहिसर्वविषयावभासनक्षमंज्ञानं नित्यमस्तिसोसर्वज्ञइति विप्रतिषिद्धम् ॥ अनित्यत्वेहि ज्ञानस्य कदाचिज्जानाति कदाचिन्नजानाति इत्यसर्वज्ञत्वमपि स्यात् " इत्यादिनेश्वरीयज्ञाने विशेषोदर्शितः ॥ एवमीशजीवेच्छयोरपि नित्यत्वानित्यत्वसर्वविषयकत्वाल्पविषयकत्वादिनावैलक्षण्यं तैरप्यनेकत्रस्पष्टीकृतम् ॥ यथा नेतरोऽनुपपत्तेरित्यत्र " प्राक् शरीराद्युत्पत्तेरभिध्यानं सृज्यमानानां विकाराणां स्रष्टुरव्यतिरेकः ॥ सर्वविकारसृष्टिश्च न परस्मादात्मनोऽन्यत्रोपपद्यते " इतिवदद्भिः सर्वत्रप्रसिद्धोपदेशाधिकरणे विवक्षितगुणसूत्रे "सत्यसंकल्पत्वं हि सृष्टिस्थितिसंहारेष्वप्रतिबन्धशक्तित्वात् परमात्मनोवकल्पते परमात्मगुणत्वेन च यआत्मापहतपाप्माइत्यत्रसत्यकामः सत्यसंकल्पइतिश्रुतम् " इत्याद्युक्त्वा अनुपपत्तेस्तु नशारीरइत्यग्रिमसूत्रे जीवे तादृशेच्छाद्यनुपपत्तिर्व्याख्याता ॥ एतेन वैलक्षण्येसतीश्वरेच्छायामिच्छाशब्दप्रयोगपारिभाषिकत्वापाताद्युक्तिस्तस्य स्वाचार्याधिक्षेपरूपेति पुनरप्यपास्तावेदितव्या ॥ अवैलक्षण्यदुराग्रहेतु उभयेच्छयोर्मायामात्रवृत्तिविशेषत्वमन्तःकरणमात्रवृत्तिविशेषत्वं वा स्वीक्रियतां नतु स्वेष्टरीत्या तद्भेदः ॥ तथासति त्वदुक्तदोषाणां त्वन्मतेऽप्यनिस्तारात् ॥ किञ्च नहिकश्चित्क्षणमपि जातुतिष्ठत्यकर्मकृदिति वाक्याज्जीवज्ञानेच्छाप्रयत्नानामपि प्रवाहसातत्यमवश्यमभ्युपेयम् ॥ यावत्तज्ज्ञानेच्छादिकं प्रति कारणत्वं चेश्वरेच्छादेर्वाच्यमेव ॥ उन्निनीषाऽधोनिनीषाश्रुतेः " परात्तुतच्छ्रुतेः " इतिन्यायाच्च ॥ एवंकारंचसति जीवानाम्मानन्त्येनानन्तायुगपत्प्रवर्तमानायावत्तदिच्छाःप्रतिकारणभूतायायुगपदनेकाकारकत्वमीश्वरेच्छायाअर्थात्सिद्धम् ॥ जीवेच्छानां नित्यत्वेतु कार्यकारणभावोपि दुर्वचः ॥ तस्मादनेकश्रुतिसंमतमीश्वरेच्छाया नित्यत्वमेकत्त्वमनेकधर्मशालित्वं सर्वकारणत्वं जीवेच्छातोवैलक्षण्यं च निर्बाधम् ॥ यत्तु लाघवमात्रेणश्रुत्यर्थस्यौपचारिकत्वस्वीकारे स्वप्रादेरप्यनित्यत्वासिद्धिरिति तदकिंचित्करम् ॥ नहिवयंसोका-

मयतेत्यादावप्युपचारमाद्रियामहे किन्तु तद्वदेकेतिशब्दमहिम्नासिद्धमेवार्थमनुवदाम-इति सन्ध्यसृष्टिश्रुतौ नोपचारशंकाप्रसक्तिः ॥ किञ्च " नतत्ररथानरथयोगानपन्था-नः " इतिस्वामिकवस्त्वभावबोधकश्रुतिरिवनेश्वरेच्छायास्तद्बोधिकासोपलभ्यते ॥ नापितदिच्छायाइव स्वप्नस्यनित्यत्वबोधिका सा ॥ अतोनान्यतरस्य नित्यत्वेनानि-त्यत्वेन वाऽन्यतरस्य तत्सिध्यति॥ स्वप्नस्य मायामात्रत्वे न मिथ्यात्वंच सन्ध्येसृष्टि-रित्यधिकरणे परमाचार्यैरेव निरणायि॥ नेत्थंतदिच्छायास्तथात्वसाधकं किंचिदधि-करणमस्ति॥ अतोन किंचिदेतत् ॥यच्च कश्चायमित्यादि इतिन्यायादित्यन्तं तत्तु मा-योनैयायिकानेवोद्दिश्य प्रावर्ततेति तद्ग्रन्थैरेव दत्तोत्तरंस्यात् ॥ अतएव पिशाचः पिशाचभाषयैव बोधनीय इति न्यायमनुसृत्य मूले समाहितम् ॥**स्वरूपएवेति** ॥स्वं विषयस्यात्मा रूपं यस्येति तथा ॥ **वैशेषिकैरिति** ॥ सिद्धान्ते संयोगस्य स्पर्शवि-शेषतयाङ्गीकारादेवमुक्तम् ॥ अत्रायं निगर्वः ॥ वस्तुतस्त्विच्छाविषययोर्विषयविषयि-भावःसंबन्धः ॥ ईश्वरेच्छाप्रपंचयोस्तु कार्यकारणभावोधिकः ॥ तौचानुभवबलात् " सोकामयत ॥ एषउएव " इत्यादिश्रुतिशतबलाच्च शक्येते एवनिर्वक्तुम् ॥ तत्र ब्रूम इत्यादिमूलस्याप्यत्रैव तात्पर्यमित्यवगन्तव्यम् ॥ विषयताच स्वरूपसंबन्धएवेति प्राञ्चस्तार्किकाः॥ तथाहि घटादिनिष्ठं ज्ञानादिविषयत्वं तत्प्रतियोगिकः संबन्धविशेषः सच प्रतियोगित्वादिवत्स्वरूपानतिरिक्तएव क्लृप्तेन स्वरूपेणैवोपपत्तौ अतिरिक्तक-ल्पनानवकाशात्॥नचतादृशसंबन्धस्य ज्ञानविषयान्यतरस्वरूपत्वादरे विनिगमकाभा-वादुभयस्वरूपत्वं कल्प्यम् तदपेक्षयाऽतिरिक्तैकविषयताकल्पनैव लघुरिति वा-च्यम् ॥विषयतायाविषयस्वरूपत्वे घटादिनिरूपिताधेयतायास्तस्यानुपपत्त्या ज्ञाना-दिस्वरूपायाएवोपगमात् ॥ अभेदेप्याधाराधेयभावोपगमेघटोज्ञानादिविषयतावानिति-वद्घटोघटवानित्यादिप्रनीयेत ॥नचविषयतात्वावच्छिन्ननिरूपिताधिकरणतैवघटादावुपे-यते नघटत्वावच्छिन्ननिरूपितेति नातिप्रसङ्गइतिवाच्यम्॥विषयतात्वावच्छिन्ननिरूपित-त्वस्य विषयतात्वाश्रयघटादिरूपविषयतानिरूपितत्वविलक्षणस्य दुर्वचत्वात् ॥ अस्तु-वाविनिगमनाविरहादुभयरूपाविषयता तथापि तादृशोभयस्य क्लृप्तत्वादतिरिक्तविष-यतायास्तत्र ज्ञानादिसंबन्धतायाश्च कल्पनापेक्षया तदुभयस्य ज्ञानादिसंबंधत्वकल्पने गौरवानवकाशइति॥अत्रनव्यास्तु मन्यंते॥ विषयत्वं पदार्थांतरमेव नतु स्वरूपसंबन्ध-विशेषः॥ तथाहि ज्ञानविषयतायाज्ञानात्मकत्वे ज्ञानाधिकरणस्यकालादेर ज्ञानविषय-तापत्तिः कालनिष्ठज्ञानसंबंधस्यापि ज्ञानस्वरूपानतिरिक्तत्वात् ॥ एवं स्वाभावेन समं प्रतियोग्यनुयोगिभावरूपज्ञानसंबन्धस्यापि स्वरूपानतिरिक्ततया घटादिज्ञानस्य घटा-दिविषयकत्ववत्स्वाभावविषयकत्वस्य तत्रापत्तिः कालादौ ज्ञानादिसंबन्धस्यातिरिक्त-त्वे च विनिगमनाविरहात् विषयनिष्ठतत्संबंधस्याप्यतिरिक्तत्वसिद्धिर्निष्प्रत्यूहैव एवं विषयतायाज्ञानस्वरूपत्वे घटवद्भूतलमित्यादिज्ञाननिरूपितानां घटभूतलादिवृत्तिवि-षयतानामभेदाऽऽपत्त्या तादृशज्ञानानन्तरं घटप्रकारकज्ञानवानहमित्यादिप्रत्ययवद्भू-

तत्प्रकारकज्ञानवानहमित्यादिप्रत्ययप्रसंगः घटनिष्ठप्रकारत्वाख्यतज्ज्ञानरूपविशेष्यतायाएव भूतलवृत्तित्वात् ॥ घटपटावित्यादि समूहालंबनात्मकैकज्ञानीयघटपटादिरूपनानाविषयनिष्ठविषयतानामैकैकतया तादृशज्ञानानां घटत्वपटत्वाद्यवच्छिन्नपटघटादिनिष्ठविषयताकतयाभ्रमत्वापत्तिः तदवृत्तिधर्मावच्छिन्नतन्निष्ठविषयताशालिबुद्धेरेव भ्रमत्वात् ॥ तदा घटत्वेन पटंवेद्मीत्यनुव्यवसायश्च स्यात् ॥ घटत्वावच्छिन्नपटनिष्ठविषयताकज्ञानस्यैव तादृशानुव्यवसायविषयत्वात् ॥ विषयतायाविषयस्वरूपत्वेच घटत्वप्रकारकप्रमाविषयतायाः पटत्वप्रकारकभ्रमनिरूपितायाश्च घटनिष्ठविषयताया ऐक्यप्रसंगेन घटत्वप्रकारकप्रमायाअपि भ्रमत्वापत्तिः ॥ एवं घटवद्भूतलं संयोगश्च घटभूतलसंयोगाइतिज्ञानयोः समूहालंबनविशिष्टबुद्धिरूपयोरविशेषश्च स्यात् ॥ विषयाणां तत्तदात्मकविषयतानांचाविलक्षणत्वात् ॥ तस्मादनन्यगत्याज्ञानतद्विषयातिरिक्तमेवविषयत्वंसिध्यति ॥ तच्चविषयेघटादावाश्रयतयाज्ञानेचनिरूपकतयावर्त्तते ॥ एतेनविषयित्वमप्यतिरिक्तंव्याख्यातम् ॥ अधिकंतु गदाधरभट्टाचार्यैर्विषयतावादे प्रपंचितम् तदेवेह दिङ्मात्रमनूदितम् ॥ एतेन ज्ञानतद्विषयस्वरूपातिरिक्तविषयतायाअशक्यनिर्वचनत्वोक्तिरपास्ता ॥ नच तस्या अपि संबन्धान्तरं कल्प्यम् ॥ अनवस्थापातात् ॥ नन्विष्टापत्तिः समवायाभ्युपगमन्यायानुरोधादितिचेत् किमिदं सूत्रं संबन्धमात्रमुच्छेत्तुं प्रववृते कणभक्षाभिमतसमवायमात्रंवा ॥ नाद्यः ॥ सौत्राक्षरतोप्रतीतेः ॥ " अस्मिन्नस्यच तद्योगशास्ति ॥ अध्यात्मसंबन्धभूमाह्यस्मिन् ॥ इह तद्योगात् ॥ परमतःसेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥" इत्यादिषु स्वेष्टतयाऽऽचार्यस्य संबन्धोदाहरणव्याघातापाताच्च ॥ द्वितीयश्चेदौंकुर्मः ॥ तथाच सति गुणकर्मजातिविशेषादि स्थित्यर्थं काणादैर्वृथाङ्गीक्रियमाणोऽयुतसिद्धयोर्नित्यसंबन्धएव समवायाख्योनेन न्यायेननिराक्रियतइति न प्रकृते एतत्प्रवृत्त्यवकाशः ॥ नचैव मनवस्थाभयात्समवायएव विश्रांतिः स्वीकरिष्यतइति प्रकृतन्यायबाधःशङ्क्यः ॥ संबन्धिनि संयोगादिस्थित्यर्थं विलक्षणं संबन्धान्तरं स्वीकृत्य तत्र विश्रमाङ्गीकरणापेक्षया अन्ते रण्डाविवाहश्चेदादावेव कुतोनसइतिन्यायेन संयोगादिरेवाश्रयतादात्म्येन तत्र तिष्ठतीति स्वीकारस्यैव रामणीयकात् विलक्षणव्यर्थपदार्थान्तरस्वीकारे गौरवाच्च ॥ नहिसमवायवत् संयोगादि संबन्धाअपि त्यक्तुं शक्यन्ते ॥ प्रत्यक्षादि प्रमितिसिद्धत्वात् ॥ तस्य वैलक्षण्यंतु संबन्धमात्रस्यापाणिपिहितमुभयनिष्ठतानियममुल्लंघ्य द्व्यणुकत्र्यणुकादिसंबन्धिध्वंसप्रागभावदशायामपि परमाण्वादिषु नित्यस्य तस्याङ्गीकारात्स्फुटमेव ॥ समवाये दूषणान्तराणि श्रीहर्षमिश्रादिभिः खण्डनखण्डखाद्यादिषु श्रीपुरुषोत्तमचरणैः प्रस्थानरत्नाकरेच दर्शितान्येवेति किमिह प्रासङ्गिकेन ॥ न्यायेतस्य ( साम्यादवस्थिते ) रितिलेखस्तु लेखकप्रमादाद्बोध्यात् ॥ एवमीश्वरेच्छायानित्यत्वे उक्तरीत्या ततोव्यवस्थया क्रमेण सर्वं कार्योद्भवेच नकोपित्वादृशचोद्यावकाशः ॥ ननु तन्नित्यत्वे सृष्टिप्रलययोर्व्यवस्था नस्यादितिचे-

न्न ॥ आकारभेदादेव तदुपपत्तेः ॥ तथाहि भगवतइच्छाशक्तिर्नित्या ॥ उक्तादिमा-
नेभ्यः ॥ भगवदभिन्नाच प्रकाशाश्रयन्यायात् ॥ तस्याअनेकआकाराभगवत्स्वभाव
सिद्धाः ॥ " परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकीज्ञानबलक्रियाच " इति वैवि-
ध्यश्रुतेः ॥ तत्रसृष्टिंकरिष्यद्ब्रह्म बहुस्यांप्रजायेयेति तदाकाररूपं भवति ॥ " प्राण-
न्नेवप्राणोभवतिवदन्वाक् "इतिश्रौतन्यायेन " सोकामयते "त्यादिश्रुतिभ्यस्तथासि-
द्धेः ॥ ततः सर्वकार्यकलनानुकूलं कालात्मकं स्वस्वरूपं प्रकटयति " अहोरात्राणि-
विदधत् ॥ सर्वे निमेषाजज्ञिरे " ॥ इत्यादि श्रुतिभ्यः ॥ ततस्तत्तत्कालावयवेषु क्रमि-
काणिसर्वकार्याणि पर्यालोचयति ॥ स्वेच्छाऽऽकारेषु सर्वकार्यवत्तदधिकरणत्वेन
तत्तत्कालोपाधीनपिविषयत्वेन निवेशयतीति निष्कर्षः॥सतपोतप्यतेत्यादिश्रुतिभ्यः ॥
नचोक्ताकाररूपेण भवने कारणान्तरसहकारोपेक्ष्यते ॥ सर्वशक्तेः सर्वेश्वरस्येतर
निरपेक्षत्वात् ॥ नच बहुस्यामित्याद्याकाररूपं सर्वदा भवत्विति शंक्यम् ॥ कालस्यै
वाभावात् ॥ तस्यभगवच्चेष्टारूपत्वात् योयंकालस्तस्यतेव्यक्तबंधोश्चेष्टामाहुश्चेष्टतेये-
नविश्वमिति श्रीभागवतवाक्यात् ॥ चेष्टायाइच्छातंत्रत्वात् अचिंत्यानंतशक्तेः स्वतं-
त्रस्यापर्यनुयोज्यत्वाच्च ॥ नहिलौकिकेश्वरोमहाराजादिरपि उपवनभवनवनप्रभृत्य-
न्यतमस्थानेविजिहीर्षन्पर्यनुयोज्योभवति ॥ ह्यःकथंवनविहारमिष्टवानिदानींचोपव-
नविहारं कथंकारं कामयत इति ॥ अन्यथा तवापि मायाया अनादित्वेन तद्वृत्ति-
विशेषरूपाईश्वरेच्छाः कुतोनशश्वद्भवेयुः ॥ तथासति सर्वकार्यं सर्वदास्यात् ॥ न-
चोद्बोधकेन निर्वाहः ॥ तदपि नित्यमनित्यंवा ॥ आद्येसर्वदातदुद्बोधान्निस्तारः ॥
अन्त्येतस्यापिकाणंकल्प्यम् ॥ तत्राप्युक्तएवविकल्पः ॥ तत्रप्रथमेघट्टकुटीप्रभातम् ॥
द्वितीयेत्वनवस्था ॥ यदिच मायायानित्यत्वेपि तद्वृत्तिविशेषाणां कयाचिद्युक्त्या क्र-
मिकत्वमाश्रीयेत॥तर्हि लाघवाच्छ्रुत्यनुग्रहाच्च इच्छाकाराणामेव तथात्वमाश्रीयताम्

यत्तु मम मते मायावृत्तिविशेषस्तद्विषयाकारईश्वरेच्छा इत्या-
दिना स्वमतप्रदर्शनं कृतं तदपि जल्पवितण्डान्यतरकथामाश्रित्य
परमतं खण्डयतो न संभवति तथैव परेणापि खण्डने प्रतीकारा-
संभवात् ॥ न च प्रतितन्त्रसिद्धान्तेनापि प्रतिकर्तुं शक्यते ॥ तत्रा-
पि दोषोद्भावनस्यशक्यत्वात्॥तदेवोच्यते तत्तद्विषयाकारोमाया-
वृत्तिविशेषईश्वरेच्छाइत्यसङ्गतम्॥सृष्टेःपूर्वं तत्तदाकारताप्रयोज-
कानां विषयाणामभावेन मायावृत्तेस्तत्तदाकारत्वासंभवात्॥नच
तत्तत्पदार्थाभावेपि तत्संस्काराणां पूर्वं मायायांसत्वान्मायावृत्ते-
स्तदाकारतासंभवत्येवेति वाच्यम्॥ तत्तत्संस्काराणां वासनारूपाः

णां भवन्मतेऽनादित्वात्सदैवसृष्टिः स्यात् ॥ नचोद्बुद्धानामेव त-द्धेतुत्वमिति वाच्यम् ॥ सृष्टेः पूर्वमुद्बोधकस्याप्यसत्वात् ॥ न चादृष्टविशेषस्यैवोद्बोधकत्वम् ॥ तस्यापि भवन्मतेऽनादित्वे तद्बो-षतादवस्थ्यात् ॥ किञ्च तादृशेच्छायाविषयैः सह संबन्धोपि न-संभवति तदानींविषयाणामनुत्पन्नत्वात् ॥ अनुत्पन्नैस्तत्संबन्धासं-भवस्तु त्वयैवोक्तः॥ नचेश्वरेच्छायास्तत्तद्विषयाकारतैव संबन्ध-व्यपदेशप्रयोजिका इति वाच्यम् ॥ तत्तद्विषयाकारत्वस्य पूर्वो-क्तयुक्त्याऽसंभवात्॥ किञ्च तत्तदाकारतायाः वृत्तिनिष्ठत्वेन विष-यवृत्तित्वाभावात्कथं विषयेषु संबन्धत्वव्यपदेशप्रयोजकत्वम् ॥ एवमन्तःकरणवृत्तिविशेषोजीवेच्छापि न संभवति वृत्तौ विशेष-स्य वक्तुमशक्यत्वेन ज्ञानतोवैलक्षण्यस्य दर्शयितुमशक्यत्वात् ॥ संबन्धव्यपदेशस्तु पूर्ववदेवापास्तः ॥ तथाचेत्यादिनोक्ताः (ईश्व-रेच्छायाअनित्यत्वे तत्कारणं वाच्यम् ॥ इच्छैव तत्कारणंचेदात्मा-श्रयः तदिच्छान्येच्छया चेदनवस्था ) इत्यादयोदोषास्त्विच्छा-याअनित्यत्वास्वीकारादेवापास्ताः ॥

## टीका

सहस्राक्षे ममतु तत्तद्विषयेत्यादि अनवस्थादिरूपमित्यन्तं भागं दूषयन्ति ॥ यत्तु

## सहस्राक्ष

* ममतुतत्तद्विषयाऽऽकारोमायायावृत्तिविशेषईश्वरेच्छा तस्याश्च तत्तद्विषयाऽऽकारतैव तत्तत्संबन्धव्यपदेशप्रयोजिका एवमन्तः करणवृत्तिविशेषोजीवेच्छासंबन्धव्यपदेशस्तु पूर्वव-दूह्यः ॥ तथाचेश्वरेच्छायाअनित्यत्वे तत्कारणं वाच्यमित्याह ॥ तांकेनेति ॥ तामिच्छां केन सृजतीत्यर्थः ॥ ननु तामपीच्छयैव सृजतीतिचेत्किंतयैवेच्छयोतान्यया ॥ नताबदाद्यः॥ आत्माश्रयप्रसङ्गादित्याह ॥ आत्मनाऽऽत्माश्रयान्नेति ॥ आत्माश्रयप्रसङ्गादात्मना नसृजती-त्यर्थः ॥ नद्वितीयः ॥ अनवस्थापत्तेः ॥ एकैककार्यार्थमेकैकाऽनादीच्छासन्ततेः कल्पनेऽन-न्तकार्यार्थमनन्तेच्छासन्ततीनां कल्पनेऽत्यन्तगौरवाच्चेत्याहान्येष्ट्यापिभयादिति ॥ अपिशब्द-बलान्नसृजतीति संबध्यते ॥ भयन्त्वनवस्थादिरूपम् ॥ ७ ॥

**प्रमप्रमतइत्यादिना ऽपास्ताइत्यन्तेन** ॥ **जल्पवितण्डेति** ॥ अनयोः स्वरूपं गौतमेन पञ्चलक्षण्यां ( अ० १ आ० २ सू० ४३ ) " यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालंभोजल्पः ( ४४ ) स प्रतिपक्षस्थापनहीनोवितण्डा " इति दर्शितम् ॥ यथोक्तोपपन्नः प्रमाणतर्कसाधनोपालंभः सिद्धान्ताविरुद्धःपक्षप्रतिपक्षपरिग्रहः छलादिभिःसाधनमुपालंभश्चास्मिन्क्रियतइति तथा ॥ सजल्पः ॥ यद्यपि छलादिभिर्नकोप्यर्थःसाधयितुं शक्यः ॥ तथापि तदुपयोगोदर्शितोन्यायभाष्यकृता ॥ " यत्तत्प्रमाणैरर्थस्य साधनं तत्र छलजातिनिग्रहस्थानानामङ्गभावोरक्षणार्थत्वात् ॥ तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्षं रक्षयन्ति " इति ॥ सजल्पएव प्रतिपक्षस्थापनया हीनोवितण्डाभवति ॥ अतएव भाष्यम् " यौतौसमानाधिकरणौ विरुद्धौ धर्मौपक्षप्रतिपक्षावित्युक्तौ तयोरेकतरं वैतण्डिकोनस्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्तत इति " इति ॥ एतदन्यतरकथाश्रयणंतु परपक्षखण्डनद्वारा स्वपक्षरक्षणार्थम् ॥ अतएव प्राचःकस्यचिदुक्तिस्तत्रैव भाष्ये संगृहीता " तत्वाध्यवसायसंरक्षणार्थंजल्पवितण्डे बीजप्ररोहरक्षणार्थंकंटकशाखावरणव " दिति ॥ **प्रतितन्त्र सिद्धांतेति** ॥ पंचलक्षण्यां ( अ०१आ० १ सू० २६ ) " सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् " इति तन्त्रभेदात्सिद्धान्तानां चातुर्विध्यमभिधाय (सू० २९) " समानतन्त्रसिद्धः परतन्त्रसिद्धः प्रतितन्त्रसिद्धान्तः " एतत्स्वरूपमुक्तम् ॥ **तदेवोच्यतइत्यादेरयमाशयः** ॥ यच्च प्रमत्वित्यादिज्ञेयइत्यन्तंतदसंगततरम् ॥ स्वोक्तदोषानुन्मोषाद्दोषान्तरपोषाच्च ॥ तथाहि मायायानित्यत्वेन तद्वृत्तीनामपि तथात्वौचित्यात्सर्वदा सर्वं कार्यं स्यात् ॥ सर्वेच भावविकारास्तस्य युगपत्स्युः ॥ तस्याः सान्तत्वकल्पनेतु पुनःसृष्टिर्नस्यात् ॥ तथाच धातायथेत्यादेर्व्याकोपः ॥ अतोमायायाः सान्तत्वं न शक्यवचनम् ॥ यावच्च तस्याः स्थितिस्तावत्सर्वकार्यसातत्यं सुस्थमेव ॥ एककालिकानेककार्यनिर्वाहाय तस्यायुगपदनेकवृत्तिविशेषाङ्गीकारे लोकविरोधः ॥ अंतःकरणे तथा अदर्शनात् ॥ ईश्वरेच्छायां नित्यत्वानेकाकारकत्वमात्रप्रयुक्तवैलक्षण्यस्य च तत्र प्रयुज्यमानेच्छाशब्दे पारिभाषिकत्वाद्यापादकत्वे सति त्वन्मते मायावृत्तित्वेनान्तःकरणवृत्तित्वेन चात्यन्तवैलक्षण्यस्य सुतरां तथात्वं स्यात् ॥ अनेकाकारकत्वाद्यनपायाच्च ॥ किंच यावन्तोवृत्तिविशेषाः कल्प्यन्ते तावत्योमायाएवकल्प्यन्तां लाघवात् ॥ इन्द्रोमायाभिरित्यादिश्रौतबहुवचनानुकूल्याच्च ॥ एवमन्तःकरणान्यपि ॥ नचेदृशीश्रुतिः स्मृतिर्वाकाचिदस्ति यद्बलाज्जडायाअपि मायायाइच्छादिचेतनधर्मवत्त्वमाश्रीयेत ॥ अवैलक्षण्यापहेतु लाघवाज्जीवेच्छानामपि मायावृत्तिविशेषत्वं स्वीकुरु ॥ नहितस्यामायावृत्तितांतासां चान्तःकरणवृत्तितां बोधयत्किंचिद्वाक्यमौपनिषदैराम्नायते ॥ किमिदंच वृत्तिविशेषस्य विषयाकारत्वं नाम ॥ विषयावगाहित्वं विषयप्रतियोगिकयत्किंचित्संबन्धानुयोगित्वं वा ॥ आद्येनुत्पन्नस्य

पदार्थस्य कथमवगाहः ॥ सर्वज्ञत्वादितिचेत् अनुत्पन्नेनपदार्थेनेत्यादि स्वोक्तिबाधः ॥ एतेन द्वितीयोपि परिहृतः ॥ मूलोक्तदूषणग्रस्ततया मायावृत्तिविशेषरूपेच्छाविषययोः संबन्धस्य निर्वक्तुमशक्यत्वाच्च ॥ कश्च त्वन्मतेपीच्छाविषययोः संबन्धः ॥ यव्द्यपदेशप्रयोजकं विषयाकारत्वं विषयविषयिभावोन्योवा ॥ आद्ये सिद्धसाधनम् ॥ विषयाकारपदार्थबोधक्षणएव संसर्गतया भासमानत्वात् ॥ नाप्यन्त्यः ॥ अशक्यनिर्वचनत्वात् ॥ निर्वचनेच निर्वक्तुमशक्यत्वादिति स्वोक्तिविरोधः ॥ एवं मायातद्वृत्तिविशेषयोरपि कःसंबन्धः ॥ न स्वरूपात्मकः ॥ मायाया नित्यतया त्वदुक्तदूषणग्रासात् ॥ नापि समवायः ॥ अनङ्गीकारात् ॥ तदन्यश्चेन्निरुच्यतां सोपि वृत्तिविशेषाणामनित्यत्वे दुर्वचः ॥ किंचेश्वरेच्छायामायावृत्तिविशेषत्वेतस्यामायाधर्मत्वसिध्या "गौणश्चेन्नात्मशब्दात् ॥ कामाच्च नानुमानापेक्षा" इत्यादि सूत्राणि त्वद्रीत्येक्षतिसूत्रंच बाध्येत ॥ तथाहि लक्षणप्रमाणाद्यधिकरणसिद्धब्रह्मकारणवादमाक्षिप्य रजःसत्वाभ्यां क्रियाज्ञानसंभवेन प्राप्तं प्रकृतिकारणवादं पूर्वपक्षीकृत्येदमुच्यते ॥ "ईक्षतेर्नाशब्दम्" इति ॥ अशब्दं प्रकृतिः न जगत्कारणं तद्धि अशब्दं ॥ वेदे "तदैक्षत ॥ स ईक्षत" इत्यादौ ईक्षणपूर्वकसृष्टिश्रवणात् ॥ ईक्षणस्य च चेतनमात्रधर्मत्वात् ॥ यद्यपीदं सूत्रमणुभाष्ये नैवं परं दृश्यते तथाप्यस्यायमप्यर्थ आस्माकीन श्रीभगवत्पादानां संमतइत्ययिमभाष्यशास्त्रार्थतत्त्वप्रकाशादिभ्योज्ञायते ॥ अग्रेच ईक्षणमुपाधिभूतप्रकृतिगुणसंबन्धाद्ब्रह्मण्युपचर्यतइत्याशंक्य परिहरति ॥ "गौणश्चेन्नात्मशब्दात्" इति ॥ तथा "सोकामयत" इत्यत्र "यदाह्येषएतस्मिन्नदृश्य" इति ॥ तदैक्षतेत्यत्रतस्य तावदेव चिरमिति ॥ एवमादिषु ईक्षितृनिष्ठस्य मोक्षोपदेशोपीक्षणस्य प्रकृतिधर्मत्वापाकरणपूर्वकं शुद्धब्रह्मधर्मत्वसाधकउपन्यस्तः यदि मायावृत्तिविशेषएवेशेच्छापदार्थः स्यात् नैतत्तर्हिकिंचिदपि संगच्छेत ॥ किंचानंदमयशब्दार्थस्य परमात्मत्वं साधयित्वा सत्वांशेन सुखरूपाप्रकृतिरेव तदर्थोऽस्त्वित्याशंकायां सूच्यते "कामाच्च नानुमानापेक्षे" ति ॥ आनंदमयस्य सोकामयतेतीच्छाश्रवणान्नजडाप्रकृतिस्तदर्थः चकारेण तपः श्रवणाच्चेत्यर्थः ॥ तथा प्रकृतेरुपादानत्वं निरस्य ब्रह्मणएव तथात्वं साधयन् "अभिध्योपदेशाच्चे" ति श्रौतमिच्छोपदेशं तन्निरासेतस्यैव तथात्वेच हेतूकरोति यदीच्छामायाधर्मः स्यात् ईक्षतिकामादयस्तर्हि विरुद्धतया हेत्वाभासतामापद्यमानास्तत्तत्सूत्राणि प्रलापवचनयेयुः ॥ ननुमायावृत्तिविशेषोपि चेतनसन्निधानेन जायमानत्वात्तद्धर्मोभवत्विति चेन्मैवं ॥ नहिचुंबुकसन्निधानादेवायस्युत्पद्यमानं चलनं चुंबकधर्मोभवितुमर्हति ॥ नाप्युभयसंयोगजन्यत्वादुभयधर्मस्सेति शक्यवचनं ॥ निर्विशेषस्यानुयोगिप्रतियोगित्वान्यतरापादकसंयोगासिद्धेः ॥ अ०२पा०२ सू०७ "पुरुषाऽश्मवदितिचेत्तथापी" त्यादावुभयकारणतावादस्य निरासाच्च ॥ त्रिगुणाप्रकृतिरेव च मायाशब्दार्थइतितु त्वयैवाष्टमश्लोके वक्ष्यते॥ किंच मायाधर्मरूपेश्वरेच्छा सुखदुःखमोहादिवत्सर्वैरपि जीवैरनुभूयेत ॥ त्वयाऽष्टमश्लोकेवक्ष्यमा

णरीत्यातेषां तत्र प्रतिबिंबरूपत्वात्तदवच्छिन्नत्वाद्वा॥नच जीवानधिकरणमायादेशे ईशेच्छोत्पद्यते ऽतोनतथेतिशंक्यम् ॥जीवविभुत्वाभिमानभंगप्रसंगात् तस्यांदेशविभागबोधकश्रुत्याद्यभावाच्च ॥तथा सति तदेकदेशोपहितेश्वरस्याप्यव्यापकत्वं च प्रसज्येतेति दिक् ॥ यत्तु तथाचेश्वरेच्छायाइत्यादि अनवस्थादिरूपमित्यंतं तत्तु तन्नित्यत्वाभ्युपायेनैव निरस्तं ॥ किंच पूर्ववद्वेत्युक्तैकदेशिमतेन प्रथमं साक्षादिच्छारूपेण भवनोरीकारेपिनेच्छांतररूपकरणसहकारापेक्षा सर्वज्ञस्य सर्वशक्तेरितरनैरपेक्ष्यात् लोकन्यायाच्च॥लोके हिजीवाः कार्यकरणेस्वेच्छामपेक्षंते॥नत्विच्छानिर्माणे तामेवेच्छामिच्छांतरं वा ॥ किंतु ज्ञानवशात्स्वतएव तामुत्पादयंति ॥ अज्ञातेर्थे इच्छानुदयात्॥एवं सर्वज्ञोऽपि स्वतएव तादृशेच्छारूपोभवति इति समंजसम् ॥ एतदेवानुसृत्य आकाशवद्व्यापकंहीतिशास्त्रार्थकारिकाविवरणभंगादिषु पूर्वमिच्छारूपेण ततोमायारूपेण भूत्वेत्यादि समगादि ॥ ननु स्वतएवेच्छारूपेणेव प्रपंचरूपेणापि भवनस्य तामंतरेणैव संभवादिच्छाया अप्रयोजकत्वं स्यादिति चेत्तर्हि जीवेच्छानामपि तथात्वं स्वीक्रियतां ॥ प्रयत्नमात्रेण कार्यसंभवात्॥ अथ जानातीच्छतियतत इत्यनुभवबलेनानन्यथासिद्धनियतपूर्ववृत्तित्वनिश्चयान्नैवमितिचेत्तर्हि प्रकृतेपि सृष्टिश्रुतिशतेप्रपंचं प्रतीच्छायाः कारणत्वश्रवणात् ॥ तांप्रतिकारणांतरस्य तत्रक्वाप्यश्रवणाच्चनैवमिति बुध्यस्व ॥ किंच लोके प्रयत्नानामिच्छापूर्वकत्वसिध्यर्थमेव प्रथममिच्छारूपेण भवनं ॥ यथा अहमिति व्यवहारसिध्यर्थंलयमहन्नामकतया भवनं एकाकिनोभयादिसिद्ध्यर्थंच भयादिरूपेण भवनं "सोऽहमस्मीत्यग्रेव्याहरत्ततोहन्नामाभवत्तस्माद्प्येतर्ह्यामंत्रितोहमयमित्येवाग्रउक्त्वाथान्यन्नामप्रब्रूते॥सोबिभेत्तस्मादेकाकीबिभेती" त्यादिश्रुतिषूच्यते ॥ तस्मात्तवानित्येच्छावादएव त्वदुक्तदोषाः स्वारूढशाखाच्छेदनन्यायेन प्रसज्यंते ॥ तथाहि कापिलजैमिनीयकाणादाद्यभिमतान्प्रकृत्यदृष्टपरमाण्वादिकारणतावादानीक्षत्यधिकरणादिष्वाभासीकृत्य शंकराचार्यैरपि कार्यमात्रं प्रतीश्वरस्य कारणतायाः स्वाकारादिच्छाशब्दाभिधेयवृत्तिविशेषनिरूपितं तत्र कारणत्वमस्ति न वा ॥ नद्वितीयः लक्षणप्रमाणाद्यधिकरणसिद्धतन्निरंकुशकारणताबाधेन परतंत्रेच्छत्वेनचानीश्वरत्वप्रसंगात् ॥ सर्वहेतुभूतामीशेच्छां प्रत्यपि ब्रह्मभिन्नस्य जडस्य कस्यचित्कारणत्वे तस्यैव मुख्यकारणत्वसिध्या बहुश्रुतिसिद्धेश्वरकारणतावादोच्छेदप्रसक्तेर्वादांतरापाताच्च ॥ आद्यश्चेद्बहुस्यामिति वृत्तिविशेषं किं तेनैव वृत्तिविशेषेण जनयति उत वृत्तिविशेषांतरेण ॥ उभयत्रक्रमेण त्वदुक्तात्माश्रयानवस्थाने यदिचेश्वरत्वमात्रमिच्छानिरूपितकारणतावच्छेदकं प्रपंचं प्रतितु बहुस्यामितीच्छाविशिष्टेश्वरत्वेन कारणतेत्यंगीक्रियेत तर्हि उक्तैकदेशिमतएवप्रवेशः दूषणोद्भावनप्रयासापार्थक्यंच ॥ इयांस्तुविशेषः सत्यसंकल्पादिश्रुतिसिद्धमिच्छायाईश्वरधर्मत्वं विहायाश्रुतमायावृत्तिविशेषरूपत्वकल्पने श्रुतहान्यश्रुतकल्पने प्रसज्येयातामिति ॥

यत्तु स्वमतेऽपीच्छायाः सृष्टिहेतुत्वेनानित्यत्वेनचे त्युक्त्वा कालादु-द्बुद्धाजनकर्मणइच्छोद्भवइत्युक्तं तन्न सम्यक् सृष्टेःपूर्वकालस-त्वे तस्य नित्यत्वमनित्यत्वं वा ॥ नाद्यः ॥ तस्य सर्वदैवसत्वेन-कारणसत्वस्य कार्यसत्वव्याप्यत्वात्सदैवकर्मोद्बोधेनेच्छोत्पत्ति-सत्त्वात्प्रलयाभावप्रसङ्गः ॥ किञ्च सृष्टेः पूर्वकालकर्मादिस्वी-कारे "सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयम्" इत्यादिश्रुतिवि-रोधस्तत्रैक्यावधारणाद्वितीयपदैःसजातीयविजातीयस्वगतभेद-व्यावृत्तेस्त्वदभिमतायाविजातीयकर्मकालादिसत्त्वेऽसिद्धेः॥न द्वि-तीयः ॥ कालस्यानित्यत्वे तदुत्पादकं वक्तव्यम् ॥ इच्छैवचेदन्यो-न्याश्रयः॥अन्येच्छाचेत्तस्याअप्यनित्यतयातदुत्पादकमन्यच्चेद-प्रामाणिक्यनवस्थास्यात्॥ किञ्च मायायाअप्यनादित्वस्य भव-त्संमततया तस्याश्च दुर्घटघटनापटीयस्त्वात्तयैव सर्वकार्यसंभवे कालेच्छाकर्मणांस्वीकारोनिरर्थकः॥ किञ्च कर्मपदेन क्रियावि-वक्षिताअदृष्टंवा ॥ नाद्यः॥ क्रियायाः क्षणिकत्वेन कर्तृनिष्ठत्वेन च कर्तॄणांसृष्टेः पूर्वमभावेन वक्तुमशक्यत्वात् ॥ न द्वितीयः (अस्मन्मतेऽदृष्टाभावा) दित्यग्रिमस्वग्रन्थविरोधापत्तेः॥ अपिच-त्वन्मते सृष्टिहेतुरीश्वरेच्छा तद्धेतुभूतानि कर्माणि तदुद्बोधहेतुः कालः कालेन कर्मोद्बोधे संहाराव्यवहितप्राक्क्षणे भविष्यत्फल-जनककर्मभिरनुद्बुद्धैरेव स्वज्ञानद्वारा जनिता एतावताकालेन ज-नकर्माण्युद्बोधयिष्यामीतीश्वरेच्छा हेतुस्तत्राप्यन्यएव हेतुरिति महागौरवं वेदविरुद्धकल्पनाचेयं॥नहीदृशप्रणालीबोधिका का-चिच्छ्रुतिरस्तिस्मृतिर्वेत्यास्तां विस्तरः॥ योगिनस्तु योगजन्यसा-मर्थ्यविशेषेणैव नियतकालउत्थानं नतु व्यवहितकारणजन्य-मिति विषमोदृष्टान्तः॥किञ्च योगिनि पुण्यपापादीनां सत्वाददृष्ट-

विशेषेणोद्बोधोयुज्यते ॥ सृष्टेः पूर्वंतु “ आत्मावाइदमेकएवाग्र-
आसीत् ” इत्यादिश्रुत्या तेषामसत्वादिच्छा न संभवत्येव ॥
आगन्तुकंकारणमागन्तुककार्येऽपेक्षितमिति न्यायस्त्वप्रामाणि-
कत्वादनादरणीयः॥ पुण्यपापानामागन्तुकत्वाभावात् ॥ “ ज्यो-
तिष्टोमेन स्वर्गकामो यजेते ” त्यादिश्रुतीनां तत्रप्रामाण्यं
वदन्नुपेक्ष्यः ॥ किञ्चातिप्रसक्तमागन्तुकत्वमप्यनिर्वचनीयम् ॥
यत्तत्राभिमतएव स्यात् ॥ तथाच दृश्यतेह्रीत्यादिकमसङ्गतम् ॥
अग्रे च ( पुण्योवैपुण्येनकर्मणाइत्यादिना कर्मणांफलहेतुत्वम् ॥
जडस्य चेतनमन्तरा हेतुत्वायोगादीश्वरः कल्प्यते एषह्येवसाधुक-
र्मेत्यादिश्रुतिभ्यः ॥ तस्यचेच्छाद्वारैवहेतुता लोकेतथैवदृष्टत्वात् )
इत्याद्युक्तं ॥ तत्रलोकदृष्ट्यैवकल्पने लोके प्रथमं फलेच्छा ततः
फलसाधनताज्ञानं ततउपायेच्छा भवति॥लोकानुसारेणैवेश्वरेपि
कल्पने तत्रापि तथैव कल्पनीयं॥ लोकानुसारिभिर्भवद्भिः॥ तथा
चेश्वरस्याप्तकामत्वंनस्यात्॥लोकानुसारित्वात्तत्रापीष्टापत्तिस्वी-
कारआप्तकामश्रुतिविरोधः॥ तदनादरे वेदबाह्यत्वं दोषः ॥ विल-
क्षणसामग्रीमन्तराकार्यवैलक्षण्यानुपपत्तेश्चेति कथनमपि वे-
दान्तिनां न शोभते ॥ तैरेकस्यैव ब्रह्मणोजगत्कारणत्वस्वीकारा-
त् ॥ अतएव “ नविलक्षणत्वादस्यतथात्वं चशब्दात् ” इति सूत्रे
“ यदुक्तं चेतनं ब्रह्म जगतः प्रकृतिरिति तन्नोपपद्यते ॥ कस्माद्वि-
लक्षणत्वादस्य विकारस्य॥जगद्ब्रह्मविलक्षणमचेतनमशुद्धंचदृश्य-
तेब्रह्मचजगद्विलक्षणंचेतनंशुद्धंचश्रूयते”इत्यादिना पूर्वपक्षंनिरू-
प्य“दृश्यते”त्वितिसूत्रे“तुशब्दःपूर्वपक्षं व्यावर्तयती”त्याद्युक्त्वा दृ-
श्यतेहिलोकेचेतनत्वेन प्रसिद्धेभ्यः विलक्षणानां केशनखादीना-
मुत्पत्तिरचेतनत्वेनप्रसिद्धेभ्योगोमयादिभ्योवृश्चिकादीनामुत्पत्ति-

रेवंब्रह्मणोपि चेतनादचेतनजगदुत्पत्तिःशङ्कराचार्यैर्निरूपिता नतु सामर्थ्यवैलक्षण्यं कार्यवैलक्षण्ये निरूपितं नापीच्छाकृतं वैलक्षण्यंदर्शितमिति तन्मतविरोधः॥अस्मन्मते च रमणेच्छयैव ब्रह्म जगद्रूपमभवत्तत्र श्रुतिरेव प्रमाणं नतु तादृशनियमोलोकदृष्टिर्वा ॥ एवं चास्मन्मतएव सोकामयतेतिश्रुतिसङ्गतिः॥ तेनातएवेत्यादिकमसङ्गतमेव"फलमतउपपत्ते"रितिसूत्रमपि अन्यथानुपपत्याकल्प्यमानमदृष्टमेवफलदानार्हंकल्प्यतां किमीश्वरेणेतिमीमांसकमतखण्डनार्थंनप्रवृत्तं॥तदग्रिमेण"धर्मंजैमिनिरतएवे" तिसूत्रेण तन्मतप्रदर्शनस्य "पूर्वंतुबादरायणोहेतुव्यपदेशा" दितिसूत्रेणपुनस्तत्खण्डनस्यचत्वदुक्तरीत्यावैयर्थ्यापातात्॥ किन्तु मध्यमाधिकारिणंप्रति निरूपणं तेहिफलेप्सवएवभवन्ति॥तच्चफलंफलदातृसत्त्वएव संभवतीति तदाह अतईश्वरादेव फलंभवति यत्किञ्चिदैहिकं पारलौकिकं वा॥कुतः उपपत्तेः ॥"सर्वस्यवशीसर्वस्येशान" इति श्रुतिर्वस्तुमात्रेशितृत्वमसङ्कुचितमाह ॥ नह्यन्यस्यवस्त्वन्योदातुं समर्थोतोभगवानेव तथेत्यर्थः॥अतएव "श्रुतत्वाच्चे" त्यनेन सूत्रेण"सवाएषमहानजआत्मान्नादोवसुदान" इत्यादिरूपा श्रुतिरपि फलदातृत्वबोधिकाप्रमाणत्वेनदर्शिता॥ ईश्वरस्येच्छाद्वाराफलदातृत्वमित्येवयुक्तिरुपपत्तिशब्देन दर्शिता॥ लोके-राज्ञः सेवाचौर्यादिजन्यतोषरोषद्वारैवतत्तत्कर्मफलदातृत्वमेवमत्रापितोषरोषद्वारैवफलं भवतीति यदुक्तं तदपि तन्मते न संभवति॥तथाहि सूत्रस्थेनाऽतइतिपञ्चम्यन्तेनकस्यपरामर्शोब्रह्मणः पारिभाषिकस्यमायावच्छिन्नस्येश्वरस्य वा ॥ नाद्यः ॥ ब्रह्मणितोषरोषादीनांत्वयाऽनङ्गीकारात्, ॥ तस्यनिर्धर्मकत्वंभवद्भिःस्वीक्रियते ॥ नद्वितीयः॥ "तदव्यक्तमाहहि " इत्यादिपूर्वसूत्रेषुतथा-

विधस्यानिरूपणेनाप्रकृतत्वेनैतच्छब्देनपरामर्शासंभवात् ॥ तस्मादतएवेत्यारभ्यसर्वमसङ्गतमेव ॥

## टीका

अथसहस्राक्षे* स्वमतेपीच्छायाइत्यादिं अचेतनस्य तथा कल्पयितुमशक्यत्वाच्चेत्यंतं भागं दूषयंति ॥ यत्तु स्वमतेपीत्यादिना सर्वमसंगतमेवेत्यंतेन ॥ अत्रायमाशयः तथाहि उद्बोधकस्य कालस्य सृष्टेः पूर्वमपि सत्वे सदोद्बोधप्रसंगः सदेवेत्यादि श्रुतिविरोधश्च ॥ तत्र एकमेवाद्वितीयमित्येकपदेन सजातीयभेदस्य एवेत्यवधारणेन विजातीयभेदस्याद्वितीयपदेन स्वगतभेदस्यच व्यावृत्तेस्तावकग्रथेष्वपि दर्शितत्वात् ॥ अनित्यत्वेतु चक्रकापत्तिगर्भोन्योन्याश्रयः ॥ इच्छयाकालस्य जननं कालेन कर्मणामुद्बोधः ॥ उद्बुद्धकर्मभिरिच्छायाजननमिति ॥ किंच कर्मणां क्रियारूपत्वे लोके तस्याक्षिक्षणावस्थायितया संहारप्राक्कालिककर्मणां पुनः सृष्टिकाले ऽसत्वेन तेषामुद्बोधनं तैरिच्छायाजननं चासंभव ॥ तेषामदृष्टरूपत्वेतु अदृष्टस्याभावादिति

---

## सहस्राक्ष

* स्वमतेऽपीच्छायाः सृष्टिहेतुत्वेनाऽनित्यत्वेनच तत्कारणमाह॥ इच्छोद्भवइत्यादि॥कालादुद्बुद्धाज्जनकर्मणइच्छोद्भवः॥ कालेन कर्मोद्बोधस्तु संहाराऽव्यवहितप्राक्क्षणे भविष्यत्फलकजनकर्मभिरनुद्बुद्धैरेव स्वज्ञानद्वाराजनितयैतावताकालेन जनकर्माण्युद्बोधयिष्यामीतीश्वरेच्छयादृश्यतेहि योगिनइच्छायाअपि व्यवहितकाले फलजनकत्वम् ॥ अमुष्मिन्कालउत्थास्यामीति संकल्प्य युञ्जतस्तस्मिन्नेव कालउत्थानदर्शनात् ॥ आगन्तुकं कारणमागन्तुककार्येऽपेक्षितमितिन्यायसम्भावितमर्थं प्रमाणेन विशिष्य द्रढयितुमाह ॥ श्रुतिस्मृतिगणैरिति ॥ निश्चीयतेइतिशेषः ॥ ज्योतिष्टोमेन स्वर्गकामोयजेतेत्यादिभिः पुण्योवैपुण्येन कर्मणा भवति पापःपापेन साधुकर्मकारीसाधुर्भवति पापकर्मकारीपापोभवति पुण्यःपुण्येनकर्मणाभवति पापःपापेन यइहरमणीयचरणाः एषह्येवसाधुकर्मकारयति इत्यादिभिश्चश्रुतिभिः योद्रव्यदेवतात्यागसम्भूतोरसउत्तमः ॥ देवान्संतर्प्यसरसोयजमानंफलेनचेति समवाप्नोतुपुरुषोमोहेच्छाद्वेषकर्मजःइति विपाकः कर्मणांप्रेत्यकेषांचिदिहजायते ॥ इहचामुत्रचकेषांभावस्तत्रप्रयोजनम् इत्यादियाज्ञवल्क्यादिस्मृतिभिश्च कर्मणां फलहेतुत्वमुक्तम् ॥ जडस्य च चेतनमन्तरा हेतुत्वायोगादीशःकल्प्यते एषएवसाधुकर्मेत्यादिश्रुतिभ्यश्च ॥ तस्यचेच्छाद्वारैवहेतुता लोकेतथैवदर्शनात् विलक्षणसामग्रीमन्तराकार्यवैलक्षण्यानुपपत्तेश्च ॥ अतएवसोऽकामयतेत्यादिश्रुतीनांसंगतिः ॥ अतएवफलमतउपपत्तेरितिसूत्रं संगतम् ॥ वस्तुतस्तु लोके राजसेवाचौर्यादेराजतोषरोषद्वारैव हेतुत्वदर्शनादिहाऽपि कर्मभिरीशतोषादिकमेवकल्प्यते ॥ इयमेवयुक्तिःसूत्रउपपत्तिशब्देनोक्ता ॥ एवञ्चाऽन्यथाऽनुपपत्त्या कल्प्यमानमदृष्टमेवफलदानार्हं कल्प्यतामित्यपास्तम् ॥ अस्मन्मतेऽदृष्टस्याऽभावात्॥ अचेतनस्यतथाकल्पयितुमशक्यत्वाच्च ॥

त्वदुक्तिव्याघातः संदेवेत्यादिव्याकोपश्च ॥ किञ्च उभयथापिकर्मणां कर्तृनिष्ठत्वे-
नेश्वरनिष्ठेच्छायाजनकत्वमप्युपपादनसापेक्षम् ॥ हेतुकार्ययोर्वैयधिकरण्यात् ॥
किञ्च किमिदंकर्मणामुद्बुद्धत्वंनाम॥फलजननसामर्थ्यमितिचेत्तदपिअधुनैतत्कर्म स्वफलं
जनयत्वितीश्वरेच्छाविषयत्वमेव वक्तव्यम्॥अन्यथा स्वातंत्र्येण कर्ममात्रात्फलनिष्प-
त्तेःसंभवेनेशतदिच्छादेरजागलस्तनत्वापातात् ॥ तथेच्छाविषयत्वरूपोद्बुद्धत्वस्वीका-
रेत्विच्छयोद्बोधउद्बुद्धैरिच्छायाजननमित्यन्योन्याश्रयादयः ॥ नापि संहारप्राक्क्षणे-
ऽनुद्बुद्धैःकर्मभिः इयताकालेन कर्माण्युद्बोधयिष्यामीतीच्छायाजननं संभवति ॥ नच
कालविशेषस्योद्बोधकत्वं स्वभावोवाच्यः ॥ प्रलयोत्तरं विशेषस्य निर्वक्तुमशक्यत्वा-
त् ॥ स विशेषोऽपि नित्योजन्योवेति विकल्पे पूर्वोक्तदोषानिस्ताराच्च ॥ अनुद्बुद्धैरपि
तस्याजननसंभवे सृष्टिकालेपि तज्जननार्थं कर्मोद्बोधसाधनप्रयासोव्यर्थः द्वारभूतज्ञा-
नस्य नित्यत्वात् ॥ नचेष्टापत्तिः प्रलयकालेपीच्छाजननेन सदासृष्टिप्रसंगात् ॥ अथ
तद्वारणार्थमुद्बुद्धानामेव जनकत्वं नियम्यत इतिचेत्संहारप्राक्क्षणे तदसिद्धिः ॥ ना-
पीच्छाकारे कालपरिमाणनिवेशे भविष्यत्फलककर्मणां हेतुत्वं युज्यते तेषां जडत्वे-
न इयताकालेन वयं फलं साधयिष्याम इति बुध्यसंभवात् ॥ फलमतइतिन्यायेन
फलस्येश्वरतंत्रत्वाच्च ॥ कालनिवेशःस्वातंत्र्यादिति चेदिच्छाकारप्रकटनेपि स्वातं-
त्र्यमस्तु श्रौतप्रक्रियानुपरोधात् ॥ किञ्च तथासतिपापादेस्तौल्येऽपि केषांचित्त्वरित-
मेव फलं केषांचिच्च कारणमंतरैव स्वेच्छयात्यंततरविलंबेन फलं जनयत ईश्वरस्य
वैषम्यनैर्घृण्ये नापेयातां॥आत्मसृष्टेर्नवैषम्यमितिवक्ष्यमाणस्य श्रुतिहृदयसमाधेस्त्वद-
मियत्वात्॥नापि कर्मणामनुद्बुद्धत्वाददोषः तदुद्बोधानुद्बोधयोरपि कालद्वारा स्वेच्छयै-
व भवनस्य त्वया स्वीकारात् ॥ कालेन कर्मोद्बोधइति प्रयोगस्तु कर्मणिचेति समास-
निषेधाच्चिंत्यः ॥ यद्यपि विवरणकारादिभिरिध्मप्रव्रश्चनादिशब्दसिद्धये इहचस्येत्यर्थ-
कत्वमाश्रित्य कर्मणीत्युच्चार्य विहितषष्ठ्याएव समासनिषेधोव्यवस्थापितः ॥ एवमेव
च शब्दानुशासनमित्यादिप्रयोगाः संगच्छंते तथापि प्रकृते कालकर्मणोः कर्तृकर्म-
णोरुभयोरुपात्ततया उभयप्राप्तौ कर्मणीत्यनेनैव षष्ठीसत्व्यानिषेधस्तदवस्थः ॥ ना-
पिचेतनप्रयत्नासमवहितेन कालेन कर्मणामुद्बोधःशक्यवचनः जडत्वात् ॥ नच व-
न्ह्यादेर्दाहकत्वादिवत्स्वभावादुद्बोधकत्वं वाच्यं स्वभावानपायेन सर्वदोद्बोधप्रसंगात् ॥
नच मण्यादिवत्प्रतिबंधकं किंचित्कल्प्यं अप्रसिद्धेः ॥ किंचोद्बोधसिद्धये तन्निवर्तकं
किंचिदुपपादनीयं ॥ तस्य नित्यत्वे सदोद्बोधस्य अनित्यत्वे तस्यापिकारणापेक्षत्वेना-
नवस्थायाश्चापातः॥तच्च निवर्तकमीश्वरेच्छाजन्यं नवा॥ आद्येचक्रकापत्तिरनवस्था
वा ॥ द्वितीयेसिद्धिःसर्वादिरच्युतइत्यादिमानविरोधः ॥ कारणांतरं चाप्रसिद्धं एतेन
तंडुलविक्लित्यादिवत्तस्यागंतुकल्पनापि निरस्ता ॥ तेजःसंयोगादितुल्यनिमि-
त्तापेक्षत्वात् ॥ निमित्तस्य चोक्तनित्यानित्यत्वादि विकल्पग्रस्तत्वात् ॥ वसंतादिका-
लेषु पुष्पाद्युत्पत्तिरपि न तत्तत्कालमात्रहेतुका व्यभिचारदर्शनात् ॥ किंतु ईश्वरेच्छा-

जन्येत्यन्यत्र विस्तरः ॥ अतोनतदृष्टांततोपि निर्वाहः ॥ अन्यथा कालमात्रात्सृष्टेरपि संभवेन ईश्वरवैयर्थ्यप्रसंगस्य दुर्वारत्वात्॥नापि संहारप्राक्क्षणावच्छिन्नेच्छायाव्यवहितकाले तात्कालिकप्रयत्नसमवधानंविना फलजनकत्वं युक्तं लोकविरोधात् स्पष्टतया तथाबोधकशास्त्राभावाच्च ॥ नेचश्वरस्य प्रयत्नाभावःशंक्यः "सोकामयत॥सईक्षते" तीच्छातःपृथक् "इदं सर्वमसृजत॥सइमाँल्लोकानसृजते " त्यादौ सर्जनानुकूलव्यापारादिरूपस्य तस्य श्रावणात् । अन्यथा सोकामयतेत्यनेनैव गतार्थत्वान्नाग्रिमं वदेत् ॥नचेश्वरप्रयत्नसहकारात्कालिनोद्बोधोंऽगीकार्यः । तन्नित्यतायांतस्येच्छांविनाऽनुपपत्त्येच्छानित्यतायाअर्थादापत्तेः अनित्यतायां चक्रकाद्यापाताच्च ॥ योगिनस्तूत्थाने नतदिच्छासाक्षाद्धेतुः किंतु तया कृतानि योगशास्त्रीयसाधनानि सर्वव्यवस्थानियामकनिखिलफलप्रतिपादकेश्वरेच्छाच ॥ नैवमीशेच्छायानाशे व्यवहितकाले तस्याः फलं भवितुमर्हति तस्य फलसमर्पकेश्वरांतराभावात् ॥ किंच त्वन्मते कालकर्मणोरधिष्ठाने भ्रमकल्पितत्वेनेश्वरज्ञानागोचरतया इयता कालेन कर्माण्युद्बोधयिष्यामीति तदिच्छाकारोप्युपपादनसापेक्षः ॥ नहि शुक्त्यादिकं सत्वविशिष्टेंद्रियोवाकल्पितरजतादिकमनुभवति।नापीयताकालेनेति कालपरिमाणं संहारोत्तरमुपपद्यते। परिच्छेदकसूर्यगत्याद्यभावात् ॥ सर्वशक्तेनेश्वरेणैव परिमाणस्य नियमनेतु तन्नियमनरूपकार्यार्थमिच्छाप्रलयेप्यवश्यमंतव्या ॥ आगंतुकं कारणमित्यादि भागं परिहरंति ॥ **इतिन्यायस्त्वप्रामाणिकत्वादित्यादिना** ॥ **आगंतुकत्वाभावादिति** ॥ सकलं प्रलयकालंतूष्णीं स्थित्वा पुनः सृष्टिकाले फलजनकानां तेषां चिरस्थाय्यदृष्टरूपतया आगंतुकत्वस्य वक्तुमनौचित्यादिति भावः ॥ **किंचानतीति** ॥ अतिप्रसंगरहितमागंतुकत्वमपि न निर्वक्तुं शक्यम् ॥ त्वन्मतेऽभिधेयमात्रस्य मिथ्यात्त्वेनेदमागंतु कमिदमनागंतुकमिति कार्येषु कारणेषु वा विवेकस्य दुर्घटत्वात् ॥ **आप्तकामश्रुतीति**॥श्रुतिस्तु "सर्वमिदमभ्याऽऽत्तोऽवाक्यनादरः॥न तस्य कार्यं करणं च विद्यते " इति च्छांदोग्यश्वेताश्वतरादिरूपाबोध्या ॥ " नानवाप्तमवाप्तव्य " मित्यादिस्मृतिश्चात्रानुसंधेया ॥ नचेच्छावादेऽयं दोषःशंक्यः श्रुत्याद्युपरोधेन लोकानुरोधस्यानादरात् ॥ जगतोब्रह्मपरिणामत्वेन ब्रह्मानन्यतया तद्विषयकेच्छायामुक्तदोषस्याप्रसक्तेः । नवमश्लोकखंडनादिस्थलेषु दर्शयिष्यमाणत्वाच्च ॥ अतोजन्येच्छापक्षएवोक्तरीत्या आप्तकामत्वभंगप्रसंगः ॥ **नैकस्यैवेति** ॥ " एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणिच ॥ खंवायुर्ज्योतिरापः पृथिवीविश्वस्य धारिणी " इति मुंडकादिवाक्यानुरोधाद्वेदांतिभिः परस्परविलक्षणमपि प्राणादिकं प्रति एकस्यैव ब्रह्मणः कारणत्वं स्वीक्रियते ॥ ननु सांख्यैरिव मनइंद्रियादिकं प्रति सात्विकराजसाद्यहंकारः काणादैरिव नित्याः पृथिव्यादि परमाणवः ॥ किंच विलक्षणसामग्रीमंतरेत्यादि वदतस्तस्य तत्तत्कार्याणि स्वस्वकारणसलक्षणानि संभवंतीत्याशयमभिप्रेत्य तद्ना-

ञ्यसंमतं बाधकमाहुः ॥ नविलक्षणत्वादित्यादिना ॥ अविरोधस्य प्रथमे पादे ( सू. ४ ) " न विलक्षणत्वात् " इत्यादि सूत्रद्वयेन सालक्षण्याभावाज्जगद्ब्रह्मणोः कार्यकारणभावाभावं पूर्वपक्षी कृत्य ( सू. ६ ) " दृश्यतेतु " इत्येकेन चेतनजन्य-केशलोमादि गोमयाद्यचेतनजन्यवृश्चिकादि दर्शनोपन्यासेन सनिराकृतः ॥ सूत्रइ-ति ॥ अस्य निरूप्येत्यग्रेणान्वयः ॥ यदुक्तमिति ॥ प्रथमस्य चतुर्थे ( सू. २३ ) " प्रकृतिश्च प्रतिज्ञा " इत्यादौ यत्पूर्वमुक्तमित्यर्थः ॥ सूत्रमपीति ॥ नप्रवृत्तमि-त्यग्रेणान्वेति ॥ अत्रायमाशयः ॥ यदपि आगंतुकं कारणमित्यादि सूत्रं संगत-मित्यंतमुक्तम् तदकिंचित्करंत्वदुक्तरीत्या सिद्ध्यन्नित्यताकस्य कालस्यागंतुकं कर्मो-द्बोधं प्रति अनादेर्मायायाआगंतुकं प्रपंचं प्रति नित्यस्य ब्रह्मणोधिष्ठानतया तंप्र-तिच कारणत्वं वदता त्वया ऽऽगंतुकं कारणमितिनियमस्यावश्यबाध्यत्वात् ॥ "ज्योतिष्टोमेन स्वर्गकाम" इत्यादीनितु स्वर्गाद्युद्दिश्यज्योतिष्टोमादीन्विदधानानि आ-ख्यातार्थभावनाकरणभाव्ययागस्वर्गादीनां प्रपंचाविर्भावावसरे साधनफलभावं बोधयंति । प्रलयकाले नियोज्य जीवानां स्वर्गादेश्चतिरोहितत्वेन यजेतेति विधेः कौंठ्यात् ॥ एतेनैव " पुण्योवैपुण्येन कर्मणे " त्यादीन्यपि सृष्टौ प्रवृत्तायामुत्तरोत्त-राधमोत्तमजन्मादिपरंपराव्यवस्थावेदकतया व्यवस्थापितानि वेदितव्यानि ॥ तथाहि " पुण्योवैपुण्येने " ति वाक्यं काण्वानां बृहदारण्यके पंचमाध्याये द्वितीयब्राम्हणे जारत्कारवसंवादेऽस्ति ॥ तत्प्राणोत्क्रांत्यादि विचाराज्जन्मपरंपरापरं प्रतीयते ॥आय-मवाक्यं च तत्रैव सप्तमाध्याये द्वितीयब्राह्मणे " यथाकारीयथाचारीतथाभवति साधुकारीसाधुर्भवति पापकारीपापोभवति पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति " इति पठ्यते ॥ तथासति साधुकर्मकारीत्यादिपाठभेदस्त्वनभ्यासहेतु-कादृष्टविल्लावकत्वादेव । काण्वमाध्यंदिनैरुभयैरपि तत्र कर्मपदस्यापाठात् अत्रापि " तद्यथातृणजलायुकातृणस्यांतंगत्वा ऽऽत्मानमुपसꣳहरत्येवमेवायं पुरुषः शरीरं निहत्याविद्यां गमयित्वा ऽऽत्मानमुपसꣳहरति " इत्यादिना पूर्वशरीरत्यागेपित्र्य-गांधर्वाद्यन्यतमशरीरांतरप्राप्त्यादेः श्रावणं प्रागुक्तमेवार्थं गमयति ॥ नतु सृष्ट्यारंभे प्राक्सृष्टिकर्मणा पुण्यत्वादिकं । बोधकपदाद्यभावात् ॥ एवं छांदोग्ये पंचाग्निविद्यांतेऽ-र्चिर्मार्गधूममार्गनिरूपणे धूममार्गगानां " मासेभ्यःपितृलोकंपितृलोकादाकाशमाका-शाच्चंद्रसमेषसोमोराजातद्देवानामन्नंतंदेवाभक्षयंतितस्मिन्यावत्संपातमुषित्वाऽथैतम-ध्वानंपुनर्निवर्तते " इत्यादिना स्वर्गादेः परलोकात्पुनरिहागमनमुक्त्वा क्रमेणा-न्नभावं वीर्यभावं चापन्नानां वीर्यद्वारा स्वकर्मानुरोध्युत्तमाधमशरीरापत्तिरुच्यते " तद्यइहरमणीयचरणाअभ्याशोहयत्तेरमणीयांयोनिमापद्येरन्ब्राह्मणयोनिंवा " इ-त्यादिना ॥ " अथ यइहकपूयचरणाअभ्याशोहयत्तेकपूयांयोनिमापद्येरन्छ्वयोनिं-वा "इत्यादिनाच ॥ अभ्याशोह । शीघ्रमेव ॥ अतएतदपि सृष्टिदशायां जन्मपरं-परामेवदर्शयति नतु प्रलयोत्तरं पुनःसृष्ट्यारंभे शरीरपरिग्रहम् । श्रूयमाणक्रमहा-

न्यश्रुततत्कल्पनाप्रसंगात् ॥ इच्छायाः कर्महेतुत्वबोधिकाया एषह्येवेति श्रुतेरुदाहा-
रस्तु तावकेकर्मणामिच्छाहेतुत्ववादे स्वपादे कुठारप्रहारः ॥ तथा उक्तयाज्ञवल्क्यस्मृ
तिवाक्येष्वपि ( अध्याय ३ यतिधर्मप्रकरणांते श्लो० ६६ ) योद्रव्यदेवतात्यागेति
प्रथमं वाक्यं सृष्टिकालिकव्यवस्थापरमेव संगच्छते देवतोद्देशेन द्रव्यत्यागलक्षण-
यागादेस्तदैव संभवात् ॥अनुपदमग्रे (श्लो०६७) संयोज्य वायुना सोमं नीयते रश्मि-
भिस्ततइत्यादिना छांदोग्याद्युक्तरीतिकपरलोकपर्यावर्तस्य कथनाच्च ॥ एवं द्वितीयं
( श्लोक ७० ) समवायित्ववाक्यमपि जीवस्यागंतुकसमवायबोधकम् मोहेच्छादिप्र-
दुघटितं सर्गोत्तरकालिकवृत्ताऽऽवेदकमेव॥ इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ॥ सर्व-
भूतानि संमोहं सर्गे यांति परंतपेति भगवद्वाक्यैकवाक्यतया तथाऽध्यवसायात् ॥
एवंतृतीयं (श्लो०७८) विपाकः कर्मणां प्रेत्य केषांचिदिह जायते । इह चामुत्र चैकेषां
भावस्तत्र प्रयोजनमिति वाक्यमपि प्रेत्यादिशब्दघटितम् तथैव । मरणेदं लोकादौ
लोकादिव्यवस्थायाः सृष्टावेवाभिव्यक्तेः॥अतइदमेकस्मिञ्जन्मनि जन्मांतरे वा लोकां-
तरे वा कर्मणां फलावश्यंभावमेव बोधयति ॥ नतु सृष्ट्यंतरव्यवस्थाम् ॥ किंच
कर्मणां तौल्येऽपि फले विलंबाविलंबयोर्नियामिकाभगवदिच्छैव मंतव्या यया
संचितकर्मसमुदायात्प्रारब्धं देहोत्पत्तिसमये निर्मीयते ॥ सैवात्राभिप्रायपर्या
यभावशब्देन प्रतिभाति ॥ जीवाभिप्रायपरत्वे पुत्रेप्सुससाधनवंध्यादिषु प्रत्य-
क्षविरोधात् ॥ अतः सृष्ट्यंतरे प्राक्कर्मणां फलजनकत्वपक्षेपि सर्वनिर्वाहिकातदिच्छा
नित्यैव मंतव्या ॥ तस्मान्नेमाः श्रुतिस्मृतयआम्नायसिद्धभगवदिच्छासर्वकारणता-
वारणतात्पर्यवत्यः । तन्निषेधाश्रवणात् ॥ नच "पंचपंचनखाभक्ष्या" इत्यादाविवेत-
रनिषेधः फलतीति वाच्यं । रागतः पंचनखापंचनखभक्षणस्येव प्रकृतेउभयोः कारण-
तायाः प्रत्यक्षेणाप्राप्त्यान्यतरपरिसंख्यानायोगात् ॥ इमामगृभ्णन्रशनामृतस्येत्यादौ
लिंगेनेवशाब्दलिंगादिनोभयप्रसंजनेपि अश्वगर्दभाभिधान्योर्ग्रहणेतुल्यविनियोगव-
दिच्छाकर्मणोस्तुल्यकारणत्वस्याभावेन सर्वनिदानभूतेच्छायाहेतुतानिरासासिद्धेः ॥
कर्मणांहि फलं प्रत्येवकारणता इच्छायास्तुकर्माणिप्रत्यपिसेतिनतौल्यम् ॥ नहिदं-
डचक्रव्यापारेण घटइत्युक्त्या कुलाललालसायास्तत्रनिमित्ततानिवर्त्यते । कर्मणां रो-
षतोषादिद्वारेश्वरेच्छाजनकत्वं तस्याश्च केवलफलहेतुतेतिकलहे तु जीवानां नानाकर्म
करणे कारणं मृग्यं । कुतस्सर्वोपि नपुण्यमेवानुतिष्ठतीति ॥ जीवेच्छावैचित्र्यमेवानु
ष्ठानवैचित्र्ये प्रयोजकमितिचेत्तत्रापि तन्मृग्यम् ॥ कुतोनसर्वोपि सुखसाधनं साधु
कर्मैव विधित्सतीति ॥अथ पुण्यकर्मणां तथास्वेच्छया तदनुष्ठानमेवं पापकर्मणाम-
पीति पूर्वपूर्वकर्मणामेव जीवकामकारणताकल्प्यतइति चेत्तर्हि सकृदपि सुकृतानु-
ष्ठाने कदाचिदपि कलुषं न स्यात् । एकवारमपि दुरिताचरणे कदाचिदपि सदाचरणं
च नघटेत । दृश्यतेत्वेकस्यापि देहिनोकिविधानि सुकृतदुष्कृतानि । कस्मिंश्चिज्ज-
नुषि कल्मषाधिक्यं कस्मिंश्चिच्च पुण्याधिक्यं ॥ किंच तथासति सर्वेपि औ-

ताः स्मार्ताश्च विधिप्रतिषेधाअपि व्यर्थाभवेयुः। प्राक्तनकर्मणैव प्रवर्त्तननिवर्तनयोः सिद्ध्या तदनुपयोगात् ॥ नचेच्छावादेप्ययंदोषःशंक्यः। कृतप्रयत्नापेक्षसूत्रेण तस्यपरिहरिष्यमाणत्वात् ॥ तस्मात्परमेश्वरएव स्वेच्छानुसारेणाऽऽप्रलयम् तानि तानि कर्माणि कारयित्वा तानि तानि फलानि प्रयच्छतीत्येव स्वच्छं ॥ यथा कौषीतकिब्राह्मणे (अ० ३) इंद्रप्रतर्दनसंवादे "सएषप्राणऽएवप्रज्ञात्मानंदोऽजरोऽमृतो नसाधुनाकर्मणाभूयान्भवतिनोऽएवासाधुनाकनीयानेषह्येवसाधुकर्मकारयतितंयमे भ्योलोकेभ्यऽउन्निनीषतऽएषउऽएवासाधुकर्मकारयतितंयमधोनिनीषतऽएषलोकपालऽएषलोकाधिपतिरेषलोकेशःसमआत्मेतिविद्यात्सम आत्मेतिविद्या „ ८ दिति पुण्यपापैरशक्यस्पर्शत्वमाकारविशेषविशिष्टेच्छयैव साध्वसाधुकर्मकारयितृत्वं ततएवनिरतिशयैश्वर्यादिकं च श्राव्यते ॥ त्वन्मततु जडेनापि कालेनेश्वरनिरपेक्षेण कर्मणा प्रुद्बोधस्यजडैरपि तैःकर्मान्तरानुष्ठानस्येशेच्छायाश्च जनने तेषामितरनिरपेक्षं नरकनाकलोकादिप्रापकत्वमप्यपथ्यभेषजभजनादेरोगारोग्यादिजनकत्ववत्सुवचमतो (जडस्य च चेतनमंतराहेतुत्वायोगादीशःकल्प्यत) इत्युक्तिररण्यरुदितायते कारणभूतकर्मणां वैलक्षण्येन फलरूपकार्यवैलक्षण्यस्याप्युपपत्तेश्च ॥ चेतनस्यैव फलदातृत्वाग्रहे तत्तत्कर्माराध्यानां चेतनानामेव तथात्वसंभवेन तद्दात्रीश्वरकल्पनायावैफल्याच्च ॥ तस्मादास्माकीनरीत्यैव फलमतइत्यधिकरणं संगच्छते नतु त्वद्रीत्या। प्रपंचयिष्यते चेदंपुरस्तात् ॥ कर्मणामिच्छाहेतुकत्वबोधकश्रुतेरपपाठेन पुनःपुनरुपन्यासस्तु प्रकृतविरुद्धः ॥ किंच दर्शनानुरोधादीश्वरस्येच्छाद्वारैवकारणतां संगिरमाणस्तस्य जन्यमात्रं प्रतिकारणत्वात् जन्यानिसाध्वसाधुकर्माणि प्रति स्वदिष्टकाले जन्यं तदुद्बोधं प्रति च तस्य तद्द्वारा कारणतां कुतोनब्रूषे ॥ तदवचनेच जडकारणवादाभ्युपगमादनीश्वरवादापातः त्वदिष्टोपपत्तिबाधात्फलमतइत्यधिकरणासंगतिश्च ॥ मन्मतेतु कर्मफलान्यारोग्यादिकंच प्रतीश्वरेच्छायाएव निदानत्वात्कर्मौषधादेश्च द्वारतयावांतरकारणत्वात् नकोपिशंकावकाशः। सोकामयतेत्यादिश्रुतयस्तु नत्वन्मतेसंगताः। श्रुतहान्यश्रुतकल्पनापत्तेः। तास्विच्छायाएव बहुभावमुच्चनीचभावं लोकसर्जनादिकं च प्रति निमित्तत्वश्रवणात् कालेनोद्बोधितैः कर्मभिस्तस्येच्छोत्पाद्यतेति तत्राश्रवणात् ॥ यच्च वस्तुतस्त्वित्यादि कल्पयितुमशक्यत्वाच्चेत्यंतं तदसत् इहैवसूत्रे उपपत्तिशब्देनोक्तयुक्तेर्ग्रहणेऽत्रैव जैमिनिमतनिरासंसिध्या पुरस्त्ययोस्तदुपन्यासतन्निराससूत्रयोरापार्थ्यापातात् ॥ किंच राजानोहि स्वविषयेषु चौर्यादेर्निवृत्तये स्वेष्टकर्मणां प्रवृत्तयेच तत्तत्फलमर्पयंति। अकुर्वंश्चैवंपूर्वतरोर्वीपतयः सर्वदुराचरणानां स्वराज्यसमये समुच्छेदमिति पुराणादिषु प्रसिद्धम् ॥ ईश्वरश्च सर्वोपायज्ञसर्वशक्तिर्बहुकालाद्दुष्कृतिनोदंडयन्नपि स्वरोषपोषककल्मषाणामविशेषादशेषाणामुच्छेदमेव कुतो न संपादितवान्। तदुपासकानां ज्ञानिनामपि नस्तुवीतनिंदेतस्वभावविषमंजनं सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु साधुष्वपिचपापे-

षुसमबुद्धिर्विशिष्यतइति भागवताद्युक्तभक्तियादर्शनात् सर्वमुक्तोपसृप्यस्य तस्य कथंरोषतोषौ॥ गुणोद्रेकादितिचेद्युगपदुभयविधफलवितरणानुपपत्तिः। उद्रेकेचेश्वरातिरिक्तं किं बीजं स्यात्। तदितरतदुद्बोधनेत्वनीश्वरवादप्रसक्तिः॥ किंच राज्ञांचोरादिदंडने ईश्वरतोषसंपिपादयिषा तत्प्रीतिश्च प्रयोजिका। तथेश्वरस्य फलदाने किं प्रयोजकं॥(अ०३ पा०२ सू० ३१) परमतस्सेत्वित्यधिकरणे तन्नियामकनिषेधात्॥ मन्मतेतु क्रीडार्थमेव प्रपंचरूपेण प्रादुर्भावात्कृतप्रयत्नापेक्षत्वाच्च न काप्यनुपपत्तिः॥ अतएव (अ०२ पा० १ सू ३२ ३३) नप्रयोजनवत्त्वादित्याशंक्य लोकवत्तुलीलाकैवल्यमित्येवासूत्रि श्रीबादरायणाचार्यैः॥ एवं तवोपपत्तेर्बाधितत्वेन अन्यथानुपपत्त्या कल्प्यमानमदृष्टमेव फलदानार्हं कल्प्यतामित्यास्माकीनाक्षेपोदुरुद्धरः। अन्यथानुपपत्तिस्तु "धर्मंजैमिनिरतएवे" त्यत्र शारीरकभाष्ये या दर्शिता सैव॥ नचादृष्टाभावस्त्वयाशक्यवचनः अपूर्वानंगीकारे कर्मणां कालांतरीयफलसाक्षात्कारणत्वस्यानुपपत्त्या त्वदुक्तश्रुतिस्मृतीनां बाधात्। संभूतोरसउत्तमइतित्वदुक्तवाक्येरसशब्देनमिताक्षरायांतस्यैवव्याख्यानात्। कालतउद्बुद्धाज्ञनकर्मणइच्छोद्भवइति त्वदभिमतव्यवस्थाभंगाच्च॥ शंकराचार्यैः फलमतइत्यादिसूत्रव्याख्याने कर्मणोनुक्षणविनाशितायाअंगीकारेण तस्य यावत्प्रलयकालमनुद्बुद्धतया स्थितेः सृष्ट्यारंभउद्बोधस्य चासंभवदुक्तिकत्वात् स्वोक्तनिर्वाहायापूर्वाभ्युपगमे तु गले पादुकान्यायेनादृष्टमूरीकृतम अदृष्टपदस्य तत्पर्यायत्वात्॥ जडस्यापि तथाकल्पनं शक्यमिति त्वौषधादिदृष्टांतेन प्रागेवादर्शयाम॥ अथ कस्तर्हि सूत्रउपपत्तिशब्दार्थइति चेदुच्यते॥ निष्कामानां भजनसिद्धये पूर्वाधिकरणे सर्वोत्तमत्त्वं निरूप्य सकामानां तत्सिद्धये फलदातृत्वं कर्मादिसर्वनियंतृत्वं च निरतिशयैश्वर्यबोधकमुपपादयितुमिदमधिकरणमारभ्यते॥अत्र फलं तत्तत्कर्मसचिवेभ्योदेवेभ्य उत भगवतइति संशयः॥देवानामुद्देश्यतया श्रवणं भगवतःसर्वेश्वरत्वसर्वहेतुत्वश्रवणंच संशयबीजं॥तत्र "यदाग्नेयोष्टाकपालोमावास्यायांच पौर्णमास्यांचाच्युतोभवति॥ ऐंद्रंदध्यमावास्यायाम्।ऐंद्रंपयोमावास्यायामि" त्यादि तत्तदुत्पत्तिवाक्यावलंबेन देवतोद्देशेनैव द्रव्यस्य त्यज्यमानत्वात्।याज्यापुरोनुवाक्याद्यनुरोधेन देवानामेवहव्यभोक्तृत्वनिश्चयात्।" वायुमेव स्वेन भागधेयेनोपधावति सएवैनं भूतिं गमयती" त्यादिना तेषामेव फलदातृत्वश्रावणात् आयुःप्रजां धनं विद्यां स्वर्गं मोक्षं सुखादि च॥प्रयच्छंति तथा राज्यं प्रीतानृणां पितामहा इत्यादि स्मरणाच्च।द्वितीयस्कंधतृतीयाध्यायाद्युक्तरीत्या प्रतिनियतत्वाच्च। देवेभ्यएव फलमिति पूर्वपक्षेऽभिधीयते॥ (अ०३ पा०२ सू०३८) "फलमतउपपत्तेः"॥ अतईश्वरादेव फलं भवति यत्किंचिदैहिकं पारलौकिकं वा॥कुतः॥ उपपत्तेः "सर्वस्य वशी सर्वस्येशान" इति श्रुतिर्वस्तुमात्रेशितृत्वमसंकुचितमाह नह्यन्यस्य वस्त्वन्योदातुं समर्थइति॥ न चोद्देश्यत्वादिविरोधः।" चक्षोःसूर्यो अजायत॥ अग्निर्मूर्द्धाचक्षुषीचंद्रसूर्यौ॥देवानारायणांगजाः॥इंद्रादयोबाहवआहुरुस्रा" इत्यादिश्रुतिस्मृ-

तिभिस्तेषां भगवदवयवोद्भवत्वतद्रूपत्वयोर्बोधनेन भगवतउद्देश्यतानपायात् ॥ भोक्तारंयज्ञतपसां सर्वलोकमहेश्वरं। अहं हि सर्वयज्ञानां भोक्ताच प्रभुरेव च। सुरुचिर्हुतभुग्विभुः। यज्ञभुग्यज्ञसाधनइत्यादौ तस्यैव सर्वरूपेण भोक्तृत्वावगमाच्च ॥ सएवेनमित्यादिकंतु द्वारत्वाभिप्रायकम्। योयोयांयांतनुमित्युपक्रम्य लभतेच ततः कामान्मयैवविहितान्हितानितिस्मरणात् ॥ एतेन तेषांतत्तत्कर्मतत्तत्फलप्रतिनियतत्वमपि तदिच्छयैवेतिसिद्धम् ॥ अग्रेच सएवैनमित्यादिप्रत्यक्षश्रुतेः प्राबल्यमाशंक्य स्वमतेपि प्रत्यक्षश्रुतिमाहाचार्यः ( सू०३९ ) ॥ "श्रुतत्वाच्चे" ति "सवाएषमहानजआत्मान्नादोवसुदान" इत्यादिश्रुतिषु तस्यैव भोक्तृत्वफलदातृत्वयोः श्रवणात्। चकारेण योयोयांयामित्यादिस्मरणात्तथेत्यर्थः ॥ अहिकुंडलवद्देवादिसर्वकार्यरूपत्वनिरतिशयैश्वर्यादिप्रतिपादकपूर्वाधिकरणानां पर्यालोचनेपि इयमेवोपपत्तिरिहोपपत्तिशब्देनोपतिष्ठते ॥ एवं पूर्वपक्षोपि देवानामेव तत्तत्कर्मभिराराध्यमानानां सर्वफलदातृत्वे तस्यपूर्वोक्तं पारमेश्वर्यं कथमिति पूर्वाधिकरणाक्षेपेणोत्करीतिकएवोत्तिष्ठति नतुकर्मणामेवफलदत्वमितिसः अप्रसंगात् तेषां जडत्वस्यापिप्रत्यक्षसिद्धत्वात् ॥ साधितेतु सूत्रद्वयेनेश्वरस्यैव फलदत्वेउपपत्तिश्रुतत्वाभ्यां कर्मणामेव तद्दत्वमस्त्विति निरीश्वरमीमांसकचोद्यंप्रासावसरमतउपन्यस्य निरस्यते सूत्रद्वयेन ॥ नचधर्मंजैमिनिरिरितिसूत्राभिप्रेतोपपत्त्याप्रथमं पूर्वपक्षः प्रसंजनीयः। फलमतइति सूत्राभ्यां जैमिन्यभिमतोपपत्त्यादेरसमाहितत्वादुक्तपूर्वपक्षतादवस्थ्येन तयोरकिंचित्करत्वापत्तेः। अग्रे स्वयमुपन्यासस्य हेत्वन्तरेण तन्निरासस्य चानर्थक्यप्रसक्तेश्चेति पूर्वमेवासूचयाम॥

वैषम्यनैर्घृण्येअपित्वन्मतएव संभवतः ॥ नचकर्मापेक्षयासुखदुःखदातृत्वात्कथंवैषम्यनैर्घृण्येइति वाच्यम् ॥ तस्यैव कर्मकारयितृत्वेन स्वयमेव कर्म कारयित्वा स्वयमेव कस्मिंश्चिज्जीवे सुखं कस्मिंश्चिज्जीवे दुःखं प्रयुञ्जतः कथंनवैषम्यं नैर्घृण्यंवास्यात् ॥ एतेनातएववैषम्यनैर्घृण्येनेत्यादिकंप्रत्युक्तम् ॥ ननु कर्मणः फलजनकत्वइत्यादि प्रश्नस्तु पूर्वापरविरुद्धः ॥ पूर्वमीश्वरेच्छांप्रति कर्मणोहेतुत्वस्योक्तत्वात् ॥ किञ्च कर्तृत्वानुपपत्तिपदेनेच्छाकर्तृत्वानुपपत्तिरुक्ता जगत्कर्तृत्वानुपपत्तिर्वा ॥ नाद्यः ॥ कर्माधीनत्वेपीच्छाश्रयत्वरूपेच्छाकर्तृत्वानपायात् ॥ नापिद्वितीयः ॥ तस्याप्रकृतत्वात् ॥ यदपि कर्तृत्वानुपपत्तावीश्वरत्वासिद्धिरित्याक्षेपेःस्वतन्त्रस्यापि काष्ठादेः कर्तृत्वप्रदर्शनम् ॥ तत्रस्वतन्त्रः

कर्त्तेतिसूत्रविरोधोद्भावनं तदुपरि स्वातन्त्र्येण विवक्षितोर्थः कर्ते-त्याद्युत्तरं तदपि तुच्छम् ॥ कर्तृत्वानुपपत्तेरीश्वरत्वव्याघातकत्वे मानाभावः युद्धपाकाद्यकर्तॄणामपि लोके राज्ञामीश्वरत्वाव्याहतेः॥नचफलदातृत्वमीश्वरत्वमितिवाच्यम् ॥ फलमददतां बलात्कारेण कर्मकारयितॄणामपीश्वरत्वदर्शनात् ॥ काष्ठादेश्च पिराभाषिकं कर्तृत्वंनतुवास्तवम॥अतस्तादृशकर्तृत्वविवक्षणेपिनाभिमतसिद्धिः॥अतएव तादृशस्वातन्त्र्यविवक्षणेपि पुरुषव्यापाराधीनव्यापारवतां काष्ठादीनामन्यव्यापारानधीनक्रियानुकूलव्यापारवत्त्वरूपस्वातन्त्र्यस्याभावा त्तद्बोधकविभक्तीनामप्रामाण्यं दुर्वारमेवेत्याशङ्क्य समभिव्याहृततत्तत्क्रियाकारकान्तरव्यापारानधीनतत्तत्क्रियानुकूलव्यापारवत्त्वरूपंस्वातन्त्र्यमेव स्वतन्त्रः कर्तेतिसूत्रघटकस्वतन्त्रपदार्थत्वेन विवक्षितम् भट्टाचार्यैः ॥ उपादानगोचरज्ञानचिकीर्षाकृतिमत्त्वस्य काष्ठादावभावेन स्वतन्त्रः कर्तेत्यनुशासनविरोधो दुर्वारश्च ॥ नहितद्विवक्षयापि परिहारः संभवति ॥ तादृशकर्तृत्वस्य वैयाकरणासंमतत्वेन तेषां तादृशविवक्षाया असंभवात् ॥

सहस्राक्षे अतएव*वैषम्येत्यादिं अबाधाच्चेत्यंतंभागं परिहरंति ॥ वैषम्यनैर्घृण्ये-अपि त्वन्मतइत्यादिना ॥ विवक्षायाअसंभवादित्यंतेन ॥ अत्रमार्तंडे

सहस्राक्ष

* अतएव वैषम्यनैर्घृण्ये न ॥ जीवसुखदुःखेच्छांप्रति कर्मणोहेतुत्वात् ॥ अन्यथा स्वेच्छया कस्मैचित् सुखस्य कस्मैचिद्दुःखस्य दानेन वैषम्यं क्लेशाऽभावकरणसमर्थस्य तदकरणेननैर्घृण्यंचापद्येत ॥ ननुकर्मणः फलजनकत्वे ईश्वरस्य कर्माऽऽधीनतया स्वातन्त्र्याऽभावात्कर्तृत्वानुपपत्तावीश्वरत्वाऽसिद्धिरितिचेन्न ॥ अस्वतन्त्रस्याऽपि देवदत्तः पचति काष्ठानि पचन्तीत्यादौ देवदत्तकाष्ठादेः कर्तृतायादर्शनात् ॥ नच स्वतन्त्रः कर्तेतिसूत्रविरोधः॥ तस्य स्वातन्त्र्येणविवक्षितोऽर्थःकर्तेतितद्व्याख्यातृभिर्व्याख्यातत्वात्तद्विरोधाभावात्॥उपादानगोचरज्ञानेच्छाइत्यादिरूपकर्तृत्वस्यसहकारिसमवधानेऽबाधाच्च ॥

अनादिकर्मचाश्रित्यसमाधानेत्वनीशतेतिकारिकां तट्टीकां च यथाकथंचिदनुसृत्य सहस्राक्षउपन्यस्तस्य ननुकर्मगः फलजनकत्वमिति प्रश्नस्य विरोधे।क्तिस्तुतदीयग्रंथे पूर्वापरविरोधप्रदर्शनार्था॥वस्तुतस्तु तन्मतेकर्तृत्वोपपत्तिः अनीशतावारणंच नसंभवती-त्यर्थः॥ अयंभावः॥यत्तु अतएव वैषम्यनैर्घृण्येनेत्यादि अबाधाच्चेत्यंतंतदविचारचारु॥ सिद्धांते आत्मसृष्टेर्नवैषम्यमितिदोषपरिहारस्योपपादयिष्यमाणत्वात् अन्यथात्व-न्मतेपि तदपरिहाराच्च ॥ तथाहि फलवत् कर्मनिरूपितापि कारणताब्रह्मणएवास्ति-नवा ॥ आद्यश्चेत्केनचित्सुकृतं कारयित्वा तस्मै सुखं केनचिदेनः प्रणाय्यतस्मै दुः-खंच विश्राणयति तत्रसत्रानृशंसतयोदितदूषणेसुस्थे ॥द्वितीयस्तु प्रागेव "एषउएव। परात्वि" तिप्रभृतिश्रुतिसूत्रावहेलनादिदोषाणां दिशोदर्शनया दूरीकृतः ॥ किंचोक्त-चरोपपत्त्याक्षितिपत्यादिवद्वैषम्याद्यननुषक्तिस्तवाशयगोचरः॥ परंतु धराधीशाहिमैवं-भूयश्चौर्यादिकुर्याअस्यत्वत्कर्मणएतत्फलमितिस्फुटं ज्ञापयंतः पाटच्चरप्रमुखं दुःखा-कुर्वंति। मुहुरनुष्ठानेचोत्तमोत्तमंदमंयथागमं समर्पयंति। प्रवृत्तिंजानानाश्चपापेप्रवर्तमा-नमेव प्रतिबध्नंति ।नतुविदितामपि दुरितप्रवृत्तिमुपेक्ष्यतत्फलंकर्मोत्तरं वितरंति॥परमे-श्वरस्तु तस्मिञ्जन्मनि जन्मांतरे वा तत्तत्कर्मफलानि भोजयन् सर्वस्यचाहंहृदिसन्नि-विष्टोमत्तः स्मृतिर्ज्ञानमपोहनंचेत्यादिप्रमाणेनसर्वांतःकरणशरणः सकलस्मारणसमर्थो-पि इदममुष्यफलमितिनैवज्ञापयति येन ज्ञापितेन दुःखसाधनाद्वृजिनाज्जनोनिवर्तेतैव। प्रवर्तेतचपुण्यएव ॥ नाप्युत्तरोत्तरजन्मसु तस्यैवाघस्यानुष्ठानेदमेतारतम्यंप्रयुंक्ते। तथाबोधकस्मृत्याद्यनुपलंभात् ॥ नापिपापेप्रवर्तमानंसर्वज्ञःसर्वसमर्थोपि निरुणद्धि। येन दुःखमेव कस्यापि नस्यात् ॥ निरोधनाशक्तौतु महीक्षित्प्रमुखापेक्षयापि दुर्ब-लतया फलस्पर्शनमप्यशक्यम् ॥ किंच चौर्याद्यनार्याचरणचणानपिस्वचरणारणा-न्नितरांसुखयन्नितरांश्चविनयन्नवनिनाथोनह्यविषमोभिलप्येत ॥ भगवांस्तु तेषामहं-समुद्धर्तामृत्युसंसारसागरात् ॥ भवामिनचिरात्पार्थमय्यावेशितचेतसां ॥ तेषामेवानु-कंपार्थमहमज्ञानजंतमः ॥ नाशयाम्यात्मभावस्थोज्ञानदीपेनभास्वता ॥ मांहिपा-र्थव्यापाश्रित्ययेपिस्युःपापयोनयः ॥ अपिचेत्सुदुराचारः। अहंत्वासर्वपापेभ्यो मो-क्षयिष्यामिमाशुचः "तन्निष्ठस्य मोक्षोपदेशादि" त्याद्युदितदिशा स्वभक्तान् सक-लकलुषकुलतूलज्वालनपुरःसरं परमदुःखदसंसारान्मोचयन्नपरांश्च त्वद्दिस्थित्वा माय-याभ्रामयन्कथंनविषमः। सुदामद्विजवायकमालाकारादिभ्योऽल्पतरसाधनेभ्योऽधिक-तरंतरसाधनादिकंचददत्कथंनतथा ॥भूरितरदुरितपूरितत्वधर्मोदासीनदासीपत्यपत्यप्र-ण यिदुष्टाजामिलादीन्स्वनाममात्रग्रहेणात्यंतपवित्रतापात्राणिसहसाकुर्वंश्चकथंनतथा॥ शंकराचार्यैरपि सर्वप्रलयकारितयोक्तंनैर्घृण्यंतु कर्मसापेक्षत्वान्नापैति॥तस्माद्वक्ष्यमा-णःपरिहारएव रमणीयः॥ यच्च शुद्धाद्वैतमार्तंडटीकायां अनादिकर्मचाश्रित्यसमाधाने-त्वनीशतेत्यत्र " श्वरस्यकर्माधीनत्वेनस्वातंत्र्याभावात्कर्तृत्वानुपपत्तावीशत्वासिद्धि-रि" त्युक्तम्॥तस्यायमाशयः॥दयालोरसमर्थस्य दुःखायैवदयालुतेतिन्यायेन सघृण-

त्वेपि प्रतिबंधाद्यसमर्थतया दुःखितस्य फलदानादियावत्कार्येषु कर्मवशंवदस्य दुर्बलतरेश्वरस्यापेक्षयाऽऽवश्यकानि कर्माण्येव लाघवात्स्वीकार्याणि । जडानामपि तेषामौषधादिवत्स्वतः फलजनकत्वोपपत्तेः । दधिक्षीरगोमयवृश्चिकादिन्यायेन जडाजडसर्गस्य ज्वलनहालाहलादिन्यायेन संहारस्यापि ततएव संभवाच्च ॥ अथ कथंचिदीश्वरोरीकारेप्यप्रयोजकप्रायस्यात्यंतपरतंत्रस्य नियोगनिर्बद्धभृत्यवदवश्यंफलमात्रसमर्पकस्य तस्य लक्षणप्रमाणाद्यधिकरणसाधितनिरंकुशकर्तृत्वानुपपत्त्याऽनीशत्वं स्फुटमेव ॥ नहिपराधीनतया यथाकथंचित्कर्तृत्वमात्रादीश्वरत्वसिद्धिः कुलालादावतिप्रसंगात् ॥ किंतु निरंकुशादेव ततइति विस्तीर्णमाकरे ॥ काष्ठानिपचंतीत्यादौ तु विवक्षातःकारकाणि भवंतीतिसिद्धांतात् काष्ठादेः कर्तृत्वं विवक्ष्यतेमात्रं अतस्तथा प्रयोगः ॥ एवमीश्वरेपि लोकानस्टजतेत्यादौवैवक्षिककर्तृत्वांगीकारे काष्ठादेरिव तस्यापि वास्तवकर्तृत्वासिद्ध्या सुतरामीश्वरत्वासिद्धिः ॥ स्वतंत्रः कर्तेत्यनुशासनस्य त्वयमर्थः स्वः आत्मा तंत्रं प्रधानं यस्य स स्वतंत्रः अन्यानधीनव्यापारः कर्ता स्यादिति ॥ अतएव हरिणा " धातूपात्तक्रिये नित्यं कारके कर्तृतेष्यतइति सामान्यतोऽभिधाय प्राधान्यतः शक्तिलाभात्प्राग्भावापादनादपि । तदधीनप्रवृत्तित्वात्प्रवृत्तानां निवर्तनात् । अदृष्टत्वात्प्रतिनिधेः प्रविवेके च दर्शनात् आरादप्युपकारत्वात्स्वातंत्र्यं कर्तुरिष्यत" इति तदेव समर्थितम् ॥ अस्यार्थं त्वित्थं वर्णयंति ॥ इतरव्यापारात् प्रागपि प्राधान्येनात्मशक्तेः कर्तृव्यापारस्य सत्त्वात् ॥ तथाच इतरव्यापारानधीनव्यापारवत्त्वादित्यर्थः तथाकारकांतरेभ्यःप्राग्भावस्य तस्मिन्नेव भाष्यादावापादनात् दंडादिरूपकरणादीनां प्रवृत्तेः कर्त्रधीनत्वात् तेषांनिवृत्तेरपि तथात्वात् छेदनादौ दात्रादेः कुठारादिवत्कर्तुः प्रतिनिधेरदर्शनात् प्रविवेके आस्ते शेते इत्यादौ कारकांतराप्रयोगेपि तस्य प्रयोगात् कर्तृरहितानां करणादीनां च क्वाप्यप्रयोगात् आरात् साक्षाद्धातूपात्तफलजनकव्यापाराश्रयत्वाच्च कर्तुः स्वातंत्र्यमिष्यते ॥ उक्तः कारिकार्थः कारकइतिसूत्रे कैयटेपि सूचितः ॥ किंच स्वतंत्रसूत्रे भाष्ये विताने तंत्रशब्दमाशंक्य " अस्तिप्राधान्ये वर्तते तद्यथा स्वतंत्रोसौ ब्राह्मणइत्युच्यते स्वप्रधानइति गम्यते तद्यःप्राधान्येवर्तते तंत्रशब्दस्तस्येदं ग्रहणम् "इत्युक्तम् ॥ अत्रकैयटः "स्वशब्दआत्मवाची स्वआत्मातंत्रं प्रधानं यस्य सस्वतंत्र उच्यते " इत्याह ॥ किंचानेककारकनिर्वर्त्यायामपि क्रियायां यथा कर्तुरेवप्राधान्यं तथा कारकइतिसूत्रे भाष्ये प्रपंचितम् ॥ तथाहि महासंज्ञाकरणात्कारकशब्दस्य करोतीतिव्युत्पत्त्यान्वर्थसंज्ञात्वं । विभक्तिव्यत्ययात्सप्तमीस्थाने प्रथमां अग्रिमाणां ध्रुवादीनां संज्ञित्वं चाश्रित्य ध्रुवमपायइत्यादौ योगविभागेन कारकसंज्ञाविधानात् कारकस्य सतोऽपादानादिसंज्ञाविधानाच्चोभयसंज्ञासमावेशं बोधयित्वा सर्वापेक्षयाकर्तुरेव प्राधान्यमुच्यते " किं पुनःप्रधानम् कर्ता कथंपुनर्ज्ञायतेकर्ताप्रधानमिति यत्सर्वेषु साधनेषु संनिहितेषु कर्ता

प्रवर्त्तयिता भवति " इति ॥ एवंच फलदानादौ कर्माद्यत्यंतसापेक्षस्य स्वतः सर्वथा निष्क्रियस्योपाधिमात्रमूलकक्रियस्यास्वातंत्र्येणाकर्तृत्वाद्भवतोऽनुशासनविरोधोव-स्तुतः स्यादेव । यत्तु स्वातंत्र्येण विवक्षितोऽर्थइतिवृत्तौ व्याचक्षते तत्तु अवांतर-क्रियाविशेषसंबंधस्य करणादिकारकमात्रे सत्त्वात् कर्तुर्देवदत्तादेः प्रधानस्याप्रयो-गे करणादिकमपि ज्वलनधारणादिस्वव्यापारे स्वातंत्र्येण विवक्ष्यमाणं काष्ठा-नि पक्ष्यन्ति स्थालीपचतीत्यादौकर्तृतया प्रयुज्यत इत्यभिप्रायेण ॥ अतएव हरिणा "निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके । व्यापारभेदापेक्षायां करणत्वादिसंभव" इत्युक्तम् ॥ कारकसूत्रेच महाभाष्ये " कोसौ प्रतिकारकं क्रियाभेदः पचादीनाम् अ-धिश्रयणोदकासेचनतंडुलावपनैधोपकर्षणक्रियाःप्रधानस्य कर्तुः पाकः । संभवन-क्रियां धारणक्रियांच कुर्वती स्थाली पचतीत्युच्यते तत्र तदा पचिर्वर्तते ज्वलनक्रियां कुर्वंति काष्ठानि पचंतीत्युच्यन्ते तत्रतदापचिर्वर्तते " इत्याद्युक्तम् ॥ अत्रसंभवनं ग्र-हणमिति कैयटः ॥ अग्रेच स्वातंत्र्यपारतंत्र्ययोः पर्यायेण सर्वत्रविवक्षासंभवात् संभव-नादौ स्थाल्यादेः स्वातंत्र्यस्य सार्वदिकत्वाच्च कर्तुरधिकरणादितोनकोपि विशेषःस्या-दित्याशंकावारणाय प्रक्षालनपरिवर्तनादौ स्थाल्यादेः पारतंत्र्यमुक्तंोच्यते " ननुच भोः कर्तृस्थेपि यत्ने कथ्यमाने स्थाली संभवनक्रियां धारणक्रियां च करोति तत्रासौ स्वतंत्रा क्वेदानीं परतंत्रा स्यात् ॥एवंतर्हि प्रधानेन समवाये स्थाली परतंत्रा व्यवायेस्व-तंत्रा. तद्यथा अमात्यानां राज्ञासहसमवाये पारतंत्र्यं व्यवाये स्वातंत्र्यं किंपुनः प्रधा-नम् कर्ता " इत्यादि ॥ एवंच ब्रह्मणोऽस्वतंत्रस्यापि स्वातंत्र्यविवक्षामात्रेण काष्ठ-स्थाल्यादिवत्कर्तृत्वमितिचेत्तदतिरिक्तस्तस्य प्रवर्तननिवर्तनसमर्थः प्राधान्येन ततः-प्राग्लब्धात्मशक्तिस्तत्प्रविवेकेपि कांचित्क्रियां कर्तुंशक्तः सर्वथास्वतंत्रोदेवदत्ता-दिवत्कश्चित्कर्ताऽवश्यंकल्प्यः । तत्कल्पनेचसुतरां सिद्धं तस्यानीश्वरत्वम् ॥ किंच मनोरमाशेखरादिषु प्रधानीभूतधात्वर्थाश्रयत्वम् शबादिकर्तृप्रत्ययसमभिव्याहारे तदाश्रयत्वं वा कर्तृत्वमिति स्वीकारात् भाष्येचान्वर्थसंज्ञानुरोधात्कारकांतरस्यैव वैवक्षिककर्तृतायास्तत्रापि करणाधिकरणयोरेव पर्यायास्तस्यादर्शितत्वात्प्रकृते-विवक्षया कर्तृत्वस्य कल्पने ब्रह्मणः काष्ठादिवद्धात्वर्थक्रियाचकाचित्साक्षात्तस्मिन्वाच्यैव॥संभवनादावपि पचेः शक्तिर्भा-भवनादिवद्धात्वर्थक्रियाचकाचित्साक्षात्तस्मिन्वाच्यैव॥संभवनादावपि पचेः शक्तिर्भा-ष्यकृतोक्तेतिसापि क्रिया धात्वर्थोस्त्येव ॥ एवंसति तावतापि स्वाभिमतनिष्क्रियत्व-स्य भंगेऽनीशत्वप्रसंगे चाधिकेऽनुप्रविष्टे शास्त्रसिद्धं स्वातंत्र्यमेव तस्य स्वीकर्तव्यं-नतूपाधिगुणजीवकर्मादिपारतंत्र्यमित्येव कमनीयम् ॥ एतदेवाभिप्रेत्योक्तं श्रीमदा-चार्यचरणैस्तत्वदीपे ॥ कर्तास्वतंत्रएवस्यात्सगुणत्वे विरुध्यतइति उपादानादिगोच-रेत्यादिकर्तृत्वमपि नत्वन्मते शक्यवचनम्। सहकारितया स्वीक्रियमाणयोःकालकर्म-णोरधिष्ठाने भ्रमकल्पितत्वेनाभ्रांतभगवज्ज्ञानागोचरत्वात् लक्षणेउपादानादीत्यादि पदेन सहकारिणोप्यवश्यसंग्राह्यत्वात् मायावृत्तिविशेषात्मकत्वेन तदेकनिष्ठयोश्चिकी-

षांकरणयोरपि निर्विशेषे ब्रह्मण्यभावाच्च । सहकारिस्वीकारे स्वाभीष्टाभिन्ननिमित्तो-पादानत्वरूपकारणताबाधाच्च ॥ अनीश्वरत्ववारणाय तादृशकारणतासमर्थनायच स-हकारिणोपीश्वरजन्यत्वे तदिच्छयासहकारित्वे तदभिन्नत्वे च स्वीक्रियमाणे वैष-म्यनैर्घृण्ये इच्छायाः प्रथमतरकारणत्वंच वेतालावलंबनन्यायेन भूयः प्राप्नुवंति ॥

कर्ताशास्त्रार्थवत्वादित्यधिकरणस्थसूत्राणां तद्विषयवाक्यानां च न स्वतन्त्रस्याकर्तृत्वंवाऽस्वतन्त्रस्य कर्तृत्वमितिविचारे तात्प-र्यम् ॥ किन्तु प्रकृतेः क्रियमाणानि गुणैःकर्माणिसर्वशः॥ अ-हंकारविमूढात्माकर्ताहमितिमन्यत इतिवाक्यात्प्रकृतकर्तृत्वं जी-वस्य न वेतिसन्देहे जीवएव कर्ता ॥ कुतः ॥ शास्त्रार्थवत्त्वात् ॥ शास्त्रस्य अर्थवत्त्वं शास्त्रार्थवत्त्वं तस्माच्छास्त्रस्यफलवत्त्वादिति यावत् ॥ " कारीर्यावृष्टिकामोयजेत ॥ ज्योतिष्टोमेनस्वर्गकामोय जेते " त्यादिभिर्वेदैरभ्युदयनिःश्रेयसफलार्थं सर्वाणि कर्माणि वि-हितानि । यदि जीवः कर्ता नेष्यते तदा स्वर्गकामादिपदानि फलाधिकारिशून्यानि कुप्यन्ति तत्तच्छास्त्रवैयर्थ्यमेवोपादयेयुः॥ नहि तादृशकामवत्त्वं ब्रह्मणः संभवति ॥ तस्याप्तकामत्वेन-तत्फलानुपयोगात् जडस्यच कामासंभवादतः सन्दिग्धे कर्तृत्वे बहूनामनुग्रहस्य न्याय्यत्वात्तत्तत्फलकामिनां जीवानामेव कर्तृत्वमित्यर्थः ॥ तस्मात्स्वातन्त्र्यविवक्षामतएवेत्यादिना परामृ श्य कर्ताशास्त्रार्थवत्त्वादित्यधिकरणस्थानि बहूनि वाक्यानि सङ्गतानीत्यादि वदंस्तदधिकरणस्थसंशयपूर्वपक्षाद्यनभिज्ञोनु पादेयवचनएव ॥ इच्छासहकारित्वेनकर्तृत्वानुपपत्तिकथनं-तु न युज्यते इच्छायाः कर्तृत्वोपपादकत्वात् ॥ यस्तु तत्रहे तूपन्यासः ( नह्यभेदवादिनस्तेइच्छाकर्मणो रभेदे वैलक्षण्यंयेने च्छासमवधाने स्वातन्त्र्य ) मित्यादिना कृतः सोप्यविचारि तरमणीयः ॥ कार्याणां कारणात्मनाऽवैलक्षण्येपितद्रूपेण

वैलक्षण्यं वर्ततएव ॥ नहिघटशरावादीनां मृदात्मनाऽभेदेपि घटत्वशरावत्वादिनापि परस्परमभेदः ॥ किञ्चत्वन्मते पिखड्गकार्यं व्रणादिकं दुग्धेन कुतोन संभवति तत्राप्यभेदवादित्वात् ॥ खड्गदुग्धयोश्च मायिकत्वेन पार्थिवत्वेन ब्रह्मकल्पितत्वेन चाविशेषात् . नहितयोरभेदे वैलक्षण्यं वर्णयितुं शक्यम् येन खड्गेन व्रणादिकं भवेत् दुग्धेन च न भवेत् ॥ तद्रूपेण वैलक्षण्यं चेदत्रापि तत्कथं नस्यात् ॥

## टीका

सहस्राक्षे अतएवकर्ताशास्त्रार्थवत्वादित्यादिश्लोकटीकोक्तंप्रत्युक्तमित्यंतं भागंदूषयंति ॥ कर्ताशास्त्रार्थवत्वादित्यधिकरणस्थेत्यादिना अत्रापि तत्कथंनस्यादित्यंतेन ॥ अभ्युदयेति ॥ वृष्ट्याद्यैहिकमभ्युदयः कारीर्यादिफलं ॥ स्वर्गपदवाच्यात्मसुखादि निःश्रेयसं ॥ अथवास्वर्गादिरप्यामुष्मिकोऽभ्युदयःसकामानां॥ निष्कामानांतुतान्येवकर्माणिमोक्षफलकानि॥कुप्यंतीति॥इदंशत्रन्तम्॥अत्रायं भावः॥वस्तुतस्त्वीश्वरगतमेव कर्तृत्वं विस्फुलिंगवत्तदंशेऽतिरोहितचित्कतया ज्ञानेच्छाकृतियोग्ये जीवेप्यनुवर्तते पृथ्वीनिष्ठोगंधइव पार्थिवेषु ॥ एवं सत्यपि जडस्य प्रकृतिबुध्यादेरेव कर्तृत्वं नतु ब्रह्मांशस्यापि जीवस्येति तावकानिवभ्रांतान्सांख्यान्व्युदसितुं परमाचार्योजीवस्यैव विद्ध्यादिबोधितकर्मकर्तृत्वं (अ. २ पा. ३ सू. ३३) "कर्ताशास्त्रार्थवत्वा" दित्यधिकरणेन निर्णीतवान् ॥ लौकिकनिखिलवस्तुजातापेक्षया जीवस्यैव स्वतंत्रत्वाद्बुद्ध्यादेश्चपरतंत्रत्वादेवमेव युक्तमितितदाशयः॥ जीवस्य स्वतंत्रत्वंतु हस्तदंडादिव्यापारस्य तदिच्छाप्रयत्नसाध्यत्वदर्शनात्स्फुटमेव ॥ अनंतरं जीवस्यापि स्वतएव कर्तृत्वमीशप्रेरणयावेतिसंशये स्वतएवेतिपूर्वपक्षे अ० २ पा० ३ सू० ४१

---

## सहस्राक्ष.

* अतएव कर्ताशास्त्रार्थवत्त्वादित्यधिकरणस्थानि जीवस्य कर्तृत्वप्रतिपादकानि बहूनि सूत्राणि तेषांविषयवाक्यानिच संगतानि ॥ अन्यथा सापेक्षतरस्य जीवस्य सुतरांकर्तृत्वाऽभावे तानि नसंगच्छेरन् ॥ अन्यथाच त्वन्मतेऽपीच्छायाः सहकारित्वेनेश्वरस्य कर्तृत्वं नोपपद्येत ॥ नह्यभेदवादिनस्ते इच्छाकर्मणोरभेदे वैलक्षण्यं वर्णयितुं शक्यं येनेच्छासमवधानेनास्वतन्त्रता कर्मसमवधानेत्वस्वतन्त्रता स्यात् ॥ एतेन यत्र कर्मानुसारेण फलदातृत्वमुक्तं तत्राऽपि कर्मकारयितृत्वमीश्वरस्यैव ॥ तथाचाहश्रुतिः ॥ एषह्येवसाधुकर्मकारयतितमित्याद्या ॥ एतदनुरोधेनें साधुकर्मकारी साधुर्भवतीति श्रुतावपि भगवत्प्रेरणयासाधुकर्मकर्तृत्वं बोध्यमितिवैषम्यनैर्घृण्ये इतिश्लोकटीकोक्तं प्रत्युक्तम् ॥

"परात्तुतच्छ्रुते" रित्यधिकरणं तत्प्रेरणयैवेतिसिद्धांतयति ॥ एवं भगवत्प्रयोज्यत्वेपीतरापेक्षया स्वतंत्रत्वात्तद्गतकर्तृत्वस्यैवात्रानुवर्तनाच्च नप्रकृते कर्ताशास्त्रार्थत्वात्यधिकरणविरोधगंधोपि ॥ नहिपृथिव्याएव वास्तवगंधवत्वमिति तंदशपुष्पादेर्गंधवत्वमसंगतं भवति ॥ नचैवमीश्वरे सातिशयं स्वातन्त्र्यं शक्योक्तिकं ॥ ईश्वरांतराभावात् अभिन्ननिमित्तोपादानवादभंगाच्चेति किं चर्वितचर्वणेन ॥ तस्मात्कर्मणां कार्यविशेषसहकारित्वमपि तथेच्छयैव । अतोनेच्छायास्तज्जन्यत्वं नापि वैषम्यादिनिस्तारः ॥ इच्छायास्तु साक्षाद्ब्रह्मधर्मत्वात् तद्धर्माणां तदभिन्नतायाः प्रकाशाश्रयाद्यधिकरणसिद्धत्वात् इच्छारूपेणतदाकाररूपेणवाविर्भवनेपीतरनिरपेक्षतया स्वातंत्र्यानपायाच्च तत्सहकारे नदोषः ॥ पापपुण्यकर्मापूर्वाणितु नसाक्षाद्ब्रह्मधर्माः । "नतस्य कार्यं करणं चविद्यते । अनश्नन्न्यो अभिचाकशीति । नसाधुना कर्मणा भूयान्भवति नोएवासाधुनाकनीयान्" इति श्वेताश्वतरमुंडककौषीतकिब्राह्मणादिषु श्रवणात् । अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः। शरीरस्थोपि कौंतेय न करोति नलिप्यते इत्यादि स्मरणाच्च॥अत एवसूत्रकृता "अ०१ पा०२ सू०८ "संभोगप्राप्तिरितिचेन्नवैशेष्या" दिति जीववत्फलसाधने निषिद्धे । सम्यगभिनिवेशेनभोगः संभोगः सम्यग्भोगोयस्मात् सोपि संभोगस्तयोः प्राप्तिरितिव्याख्यानात् । किंतु तानि जीवनिष्ठान्येव । "तयोरन्यःपिप्पलंस्वाद्वत्ती" त्यादिश्रुतिभ्यः ॥ किंच जीवेष्वपि तत्साक्षात्कारवतां नैष्कर्म्यं "एतंहवावनतपति किमहंसाधुनाकरवं किमहंपापमकरवमिति"। यथा पुष्करपलाशआपोनश्लिष्यंतएवमेवंविदिपापंकर्म नश्लिष्यते" इत्यानंदवल्ल्युपकोसलविद्यादिषु श्रूयते॥ बुद्धियुक्तोजहातीह उभे सुकृतदुष्कृते (स्कंध २ अ १ श्लो ७) प्रायेणमुनयोराजन्निवृत्ताविधिषेधतइतिगीताभागवतादिषु स्मर्यतेच ॥ तर्हि परमात्मनस्तथात्वं कैमुतिकसिद्धम् ॥ एवमिच्छाकर्मापूर्वाणां साक्षाद्ब्रह्मधर्मत्वजीवधर्मत्वादिना वैलक्षण्यात् कर्मापूर्वाणां नेच्छावत्प्रकाशाश्रयादिन्यायेनाभेदोनित्यत्वं वा शक्यं वक्तुमतस्त्वद्रीत्या जीवेच्छाप्रयत्नमात्रजन्यकर्मसहकारे पारतंत्र्यं स्फुटमेव ॥ नच तद्धारणायेच्छा तदाकारवत्कर्मरूपेणापि स्वयमेव भवनमिति तवसुवचं । तथा सति कस्य चित्पापरूपेण भूत्वा तस्मै दुःखं कस्यचि त्सुकृतरूपेण भूत्वा तस्मै सुखं चार्पयतितस्मिन्वैषम्यादेरनुच्छेदात् ॥ तस्मादिच्छापक्षएव न पारतंत्र्यम् । लोकेपि यथेच्छं कार्यं कुर्वन्स्वतंत्रएवोच्यते । अहिफेनादिनेतरेणोद्बोध्यशक्तिस्सहकारिसमवधानमंतरेणाशक्यकार्यस्तु परतंत्रः ॥ एतावता अतएवकर्ताशास्त्रार्थवत्वादित्यादि स्वतंत्रतास्यादित्यंतं व्युदस्तम्॥ एतेनैव यन्मार्तंडटीकायां यत्रतुकर्मानुसारेणफलभोक्तृत्वमित्यादि कर्तृत्वंबोध्यमित्यंतमुक्तमिह किंचित्पाठविपर्यासेनानूदितं तत्समर्थितं ज्ञेयम् । कर्मणां फलहेतुताया ईश्वरमात्रस्य सर्वहेतुतायास्तस्यैव कर्मकारयितृतायाश्च बोधिकानां श्रुतीनामेवमेव सामंजस्येनैकवाक्यत्वसिद्धेः ॥ स्मृतावपि बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।

सुखंदुःखं भवोभावो भयंचाभयमेव च । अहिंसासमतातुष्टिस्तपोदानंयशोयशः । भवं-तिभावाभूतानांमत्तएवपृथग्विधाइति क्षमासत्यादीनां साधनानां सुखादीनां फलानां च स्वमात्रहेतुकत्वमुच्यते ॥ अतएव सूत्रकारोपि कर्मकारणतावादं ( अ०३पा०२ सू०४०)"धर्मंजैमिनिरतएवे" तिसूत्रेणानूद्य निराकरोति (सू०४१)"पूर्वंतु बादरायणोहे तुव्यपदेशा"दिति ॥ बादरायणआचार्यस्तु पूर्वं पूर्वोक्तमीश्वरमेव कारणं मन्यते । तु शब्दः कर्मादेः कारणताव्यावर्तकः ॥ कुतः ॥ हेतुव्यपदेशात् श्रुतिषु एषउएवेत्यादौ तस्यैव सर्वहेतुत्वेन कथनादित्यर्थः ॥

किञ्च भवन्मते वैषम्यनैर्घृण्यरूपं दोषद्वयं दुरुद्धरं कस्यचित्सुखं कस्यचिद्दुःखं च ददतःस्वयमेव तद्धेतुभूतकर्म कारयतःकुतोनस्यात् ॥ अस्मन्मते च तादृशदूषणद्वयं न संभवति ॥ तथाहि ब्रह्म-स्वयंरमणेच्छयैवोच्चनीचादिभावेन जातम् ॥ " तदात्मानं स्वय-मकुरुत । सच्चत्यच्चाभवत् । यथोर्णनाभिः सृजते गृह्णते च यथापृथिव्यामोषधयःसंभवंति यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीहविश्वमि " त्यादिश्रुतेः॥ अतःस्वाभिन्नत्वान्नवैषम्यनैर्घृण्ये ॥ नन्वेवमपिजीवानां ब्रह्माभिन्नानां सुखं दुःखं चे-श्वरेच्छयैव भवतीतिभवन्मतं तत्र च कर्मणां वैयर्थ्यं स्यात् तत्प्रवृत्तिरपिकस्यचिन्नस्यात् कृतहानिरकृताभ्यागमरूपदूषणद्वयम-पिस्यादितिचेन्न॥कर्मापेक्षोहि भगवान्सुखं दुःखं च जीवानां तत्तत्कृतसुकृतदुष्कृतानुसारेणैव ददातीत्यतोनकृतहान्यादिरूपं दू-षणम्॥नच"एषह्येवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्निनी-षतेएषउएवाऽसाधुकर्मकारयतितंयमधोनिनीषते" इतिश्रुत्याकर्मा-पिसएव कारयतीत्यङ्गीकरणीयम् ।तथाच वैषम्यनैर्घृण्यरूपदोष-तादवस्थ्यमितिवाच्यम् ॥ सृष्ट्यादौ भगवान् रमणेच्छया " बहु-स्यांप्रजायेये " त्यादिरूपया क्रीडार्थमेव कृतप्रयत्नस्तत्साधनी-भूता अनेकमर्यादाः कृतवान् यएवं कर्म करिष्यति तस्यैवं फलं भविष्यतितत्तद्विषये तस्य रागद्वेषादिकं भविष्यति पुनस्तत्तत्कर्म करिष्यति पुनस्तस्यसुखं दुःखं वा भविष्यतिती॥ तत्र कर्माणिसुखे

दुःखे च साधारणतयैव भगवतोहेतुत्वं नत्वसाधारणतया॥तत्र मुख्याक्रीडैवान्यत्सर्वमुपसर्जनं॥यथालोकेकश्चिद्राजाक्रीडार्थंस्वयमेव नियमान्कृत्वा क्रीडति तत्रस्वकृतनियमानुसारेणैव योयथा करोति तस्मै तथैव सुखदुःखरूपं फलं ददाति नतावता तस्य वैषम्यं नैर्घृण्यंवा भवति नाप्यनीशत्वम्। तथा प्रकृतेपि तादृशनियमाभावेतु दोषोदुर्वारएव॥अतएव "कृतप्रयत्नापेक्षस्तुविहितप्रतिषिद्धावैयर्थ्यादिभ्य" इतिसूत्रेण वैषम्यनैर्घृण्ययोः परिहारोऽनयैव रीत्या व्यासैः कृतः॥ तत्र ननुवैषम्यनैर्घृण्ययोर्नपरिहारः अनादित्वेन स्वस्यैवकारयितृत्वादितिपूर्वपक्षं तुशब्दोनिवारयति॥जीवकृतप्रयत्नापेक्षोभगवान्सुखंदुःखंचददाति॥प्रयत्नपर्यन्तंजीवकृत्यं अग्रे तस्याशक्यत्वात्स्वयमेव कारयति॥यथा पुत्रं यतमानं बालं पिता पदार्थगुणदोषौवर्णयन्नपि तत्प्रयत्नाभिनिवेशं दृष्ट्वा तथैव कारयति। तत्कथमवगम्यते॥यतस्तैत्तिरीये "अथातोनुप्रश्ना" इत्यादिना अविदुषोविदुषश्च समानैव ब्रह्मप्राप्तिरुतकश्चिद्विशेषइतिप्रश्ने उत्तरत्वेन "सोकामयते"त्यादिनास्वस्यैवबहुभवनेनोच्चनीचरूपेणस्वसृष्टिमुक्त्वा तत्रानुप्रवेशेन स्वस्यैव "सच्चत्यच्चाभव" दित्यादिना अनेकविधं द्वैधीभावं चोक्त्वा सत्यमभवदितिसमाप्तौब्रह्मरूपत्वंनिगमयामास॥तथासति सर्वस्य ब्रह्मरूपत्वेऽविशिष्टेपि मध्ये "सतपोतप्यते" त्यादिना तपोरूपस्यालोचनस्यापिसृष्टौ कारणत्वेन कथनाद्यथाधिकारं तत्तत्फलं तत्तदधिकारश्च नानाविधस्तत्रकारणं तस्यापि कारणं नानाविधः स्वभावइति फलति॥एवंसत्यालोचनानुसारेण प्रयत्नपर्यन्तं जीवकृत्यं तदपेक्षः सन्नग्रे बाह्यकृतावुपकरणबाहुल्यमपेक्षितम् तच्च जीवेन केवलेन संपादयितुमशक्यमतस्तत्संपादनद्वारा स्वयमेव कारयति॥तत्र दृष्टान्तोपि

यथा बालं पुत्रमित्यादिःपूर्वमुक्तएव ॥ एवं च कार्यमात्रं प्रति भगवानेव कारणं ।।तथाच प्रयत्नोत्तरकाले फलदातृत्वाभिव्यापिका या इच्छा आलोचनाकारान्तःपातिनी तामेव श्रुतिरनुवदति "उन्निनीषत्यधोनिनीषती" ति॥अतोगुणदोषकथनपूर्वकं बालेच्छानुरूपेण सामग्रीसंपादके पितरि यथा नदोषः किंतु बालस्वभावेएव।तथा ब्रह्मण्यपि न दोषः किंतु जीवेएव॥ननूक्तदृष्टांतन्यायेनैव कारयतीत्यत्र किं गमकमतआहसूत्रकृत् विहितप्रतिषिद्धावैयर्थ्यादिभ्यइति॥यद्युक्तन्यायं विहाय केवलं जीवकृतकर्मापेक्षः कारयतीत्येवाङ्गीक्रियेत तदा विहितप्रतिषिद्धयोर्यागादिब्राह्मणहननादिरूपयोः कर्मणोर्वैयर्थ्यं स्यात् । पूर्वकर्मणएव प्राधान्ये ततएव सुखादिसिद्धेः ॥ सूत्रस्थादिपदादिदं विहितमिदं निषिद्धमिति बोधकस्य प्रमाणव्यवहारस्य वैयर्थ्यं बोध्यम्॥ अतो विहितप्रतिषिद्धावैयर्थ्यप्रमाणव्यापारावैयर्थ्यप्रामाणिकप्रेक्षावत्कृतप्रमाणानुसरणेभ्योहेतुभ्यइदं ज्ञायते यत्फलदाने कर्मापेक्षःकर्मकारणे प्रयत्नापेक्षःप्रयत्ने कामापेक्षइतिमर्यादा या स्वयंकृता तद्रक्षार्थं वेदं चकार यथा लोके राज्यमर्यादारक्षार्थं नीतिशास्त्रं ॥ तस्मा "ल्लोकवत्तुलीलाकैवल्य" मितिन्यायेन जीवकृतप्रयत्नानुसरणान्न ब्रह्मणि वैषम्यादिगन्धोपि॥नाप्यनीश्वरत्वं।मर्यादामार्गस्य तादृशापेक्षावैशिष्ट्यपूर्वकत्वेन स्वयमेव निर्माणात् ॥ क्वचिच्च स्वतन्त्रत्वान्मर्यादां भिनत्त्यपि॥अतएव तेनाधीतश्रुतिगणा इत्यादिवाक्यैस्तदनपेक्ष्यैव गोकुलस्थेभ्यः फलदानकथनमपि सङ्गच्छते ॥ इदमपि लोकवत्तुलीलाकैवल्यमिति न्यायादेव समाहितं । लोके राज्ञामपि कृपापात्रेषु तथादर्शनात्॥ लोकयुक्त्यनुसारेण समाधानमिदं॥वस्तुतस्तु ब्रह्मणः कर्मापेक्षत्वेपि नास्वातन्त्र्य ॥ किन्त्वलौकिकत्वसंपादकतया भूषणमेव ॥

यतोविरुद्धधर्माश्रयं सर्ववादानवसरं समाभ्यधिकरहितं ब्रह्मवेदे प्रतिपाद्यते औपनिषदंहि ब्रह्म नतु युक्तिसिद्धम् ॥ येन युक्तिविरोधःस्यादतएवोक्तं यत्किञ्चिद्दूषणंत्वत्रदूष्यंचापिहरिःस्वयम् ॥ विरुद्धपक्षाः सर्वेपि सर्वमत्रैवशोभतइति॥एतेन सहकारिसमवधानेत्यारभ्य तथावक्ष्यतइत्यन्तं समाहितं यत्तु तत्रैवोक्तं ( किमिमे जीवास्ततोऽभिन्नाअपि दुःखं जानन्तिनवाआद्ये दोषानपायोदुःखानिरासात् ॥ अन्त्येनुभवविरोधः ॥ किञ्चात्मनि दुःखोत्पादकआत्महादिरिवेश्वरोनिन्द्येतप्रेक्षावद्भि रितितन्नसमीचीनम् ॥ " इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति " रितिसूत्रेणेममेव पूर्वपक्षं कृत्वा " अधिकंतु भेदनिर्देशात् " इतिसूत्रेणस्वयमेव व्यासैः समाहितत्वात् ॥ तत्र तत्सृष्ट्वेति श्रुतौसृष्टावनुप्रवेशः श्रुतः सचानेनेतिश्रुत्या जीवेनेति श्राव्यते तस्यात्मत्वेन कार्यविलक्षणतया ब्रह्मत्वं च बोध्यतेऽतइतरस्यात्मत्वेन व्यपदेशात्सिद्धेतस्य शुद्धब्रह्मत्वे तद्धितं कर्तव्यम् तच्च सर्वानर्थदुःखनिकरहेतुभूतायां सृष्टौ प्रवेशनान्नकरोतीति हिताकरणस्याहितकरणस्य च प्रसक्तिः ॥ लोकविरुद्धं चात्मनोहिताकरणमिति जीवानां ब्रह्माभेदोनयुक्तइति पूर्वपक्षे समाधानमाह " अधिकंतु भेदनिर्देशात् " इति सूत्रेण तत्र तुशब्दः पूर्वपक्षं व्यावर्तयति ॥ तथाच यथैक्यं श्रुत्या बोध्यते तथा ज्ञेयत्वेनानन्दरूपत्वेन च भेदोपि बोध्यतेऽ यं भेदोब्रह्मणआधिक्ये पर्यवस्यत्याधिक्यंचांशित्वात् ॥ पूर्णत्वाच्च पूर्णश्चांशस्य हितमेव नियमेनकरोतीति ननियमः स्वदेहेपि नखनिकृन्तनकेशप्रसाधनादेर्दर्शनात् ॥ अन्यथासर्वेन्द्रियव्यापाराभावप्रसङ्गात् । किन्तु स्वलीलया हितम-

हितं वा यथेष्टं करोतीत्येव लोके दृश्यते॥तथाचेयमाशङ्कैव नसंभवति ॥ यच्चोक्तंजीवदुःखेनब्रह्मणोदुःखित्वंस्यात्तदपि नसंभवति ॥ कार्यकारणयोरभेदेपि कार्यकारणव्यवहारजनकः कश्चिद्भेदोप्यभ्युपगन्तव्यःअन्यथेदं कार्यमिदंकारणमिति व्यवहारोनस्यात् ॥ एवंच नामरूपाभिव्यक्तिदशायां कार्यगताधर्माः कारणेन सन्तीत्यङ्गीकरणीयम् ॥ यथा घटगताजलाहरणादयः पटगताआच्छादकत्त्वादयस्तेमृत्पिण्डादौ न सन्त्येवं जीवस्य चिद्रूपत्वेन ब्रह्माभिन्नत्वेपि तद्गतादुःखादयोनब्रह्मणीतिनकोपि दोषइत्यलंविस्तरेण )

## टीका

सहस्राक्षे सहकारिसमवधानरूपेत्यादि तथावक्ष्यतइत्यंतं भागं निराकुर्वंति ॥ किंच भवन्मतइत्यादिना इत्यलं विस्तरेणेत्यंतेन ॥ तत्र "वैषम्यं नैर्घृण्यमिति दूषणे द्वेपरे स्थिते" इतिमार्तंडकारिकाद्वयसमर्थनार्थं किंचेत्यादि कुतोनस्यादित्यंतम् ॥ स्वमते तद्दूषणोद्धाराय अस्मन्मतेचेत्यादिग्रंथः ॥ अत्रेदं

---

## सहस्राक्ष

* सहकारिसमवधानरहितत्वरूपस्वतन्त्रत्वस्वरूपकर्तृत्वस्येश्वरेसत्त्वे प्रमाणाभावात् ॥ परमेश्वरस्येच्छया साधुकर्म ततउन्नयनमित्यर्थस्य तस्याः श्रुत्याः प्रतीत्या इच्छायाः सर्वत्रहेतुत्वेन कर्म प्रत्यपि हेतुत्वेऽप्यनन्यथासिद्धनियतपूर्ववार्तिनः कर्मणः फलहेतुताया दुर्वारत्वाच्च ॥ ईश्वरस्येच्छाद्वारा तदिच्छायावा वृष्टिन्यायेनहेतुत्वमित्यन्यत्रविस्तरः ॥एवमेव परात्तुतच्छ्रुतेरितिसूत्रं परादीश्वराज्जीवस्य कर्तृत्वमित्यर्थकं लब्धव्यवस्थं बोद्धव्यम् ॥ एतेन वैषम्यनैर्घृण्येइति दूषणेद्वेपरेस्थिते ॥ अनादिकर्मचाश्रित्य समाधानेत्वनीशता ॥ अत्राऽपिशाङ्कराःशैवामाध्वारामानुजादयः ॥ निम्बार्काभास्कराभिक्षुर्येऽन्येतेदोषसंश्रिताःइतिप्रत्युक्तम् ॥ तट्टीकायां दोषशब्देन याऽनीश्वरत्वापत्तिरुक्ता तस्याउद्धृतत्वात् ॥ यत्तु तत्रवैषम्यनैर्घृण्यपरिहारार्थं आत्मसृष्टेर्नवैषम्यं नैर्घृण्यं चाऽपि विद्यते ॥ श्रीमदाचार्यचरणैर्निबन्धइदमीरितम् ॥ श्रीमत्प्रभुवरैर्विद्वन्मण्डनेपिनिरूपितम् ॥ रमणार्थमिदंविश्वमुच्चनीचादिभावतः ॥ आत्मरूपंचकारातोहरिर्यस्माददूषणम् इत्युक्तं ॥ तन्नयुक्तम् ॥ तट्टीकायामात्मसृष्टेरित्येततात्पर्यविषयाऽभेदमात्रस्यैव तादृग्दोषाऽभावे हेतुत्वोक्त्यातावतादोषाऽनुद्धारात् ॥ तथाहि ॥ किमिमे जीवास्ततोऽभिन्नाअपिदुःखंजानन्तिनवा ॥ आद्ये

ज्ञेयम् ॥ यत्तु सहकारिसमवधानेत्यादि बोध्यमित्यंतं तदमूलम् ॥ईश्वरस्य तादृश-
कर्तृत्वे "तदात्मानं स्वयमकुरुते" त्यादि प्रमाणानां जागरूकत्वात् । अत्रात्मान-
मिति तस्यैवोपादानत्वं अकुरुतेति तस्यैव कर्तृत्वं स्वयमिति सहकारिकारणांतरा-
भावश्च बोध्यते । (अ० १ पा० ४ सू० २६) स्पष्टचेद "आत्मकृतेः परिणामा"दिति सूत्रे
शांकरभाष्येपि ॥ अकुरुतेत्यात्मनेपदेन क्रीडार्थमात्मनइति स्मृत्यनुसारात् स्व क्री-
डार्थमेव जगत्करणस्य बोधनेन प्रयोज्यकर्तृत्वमपि प्रतिविधीयते । तथा सदेवसो-
म्येत्यत्राद्वितीयपदेन सहकारिकारणनिराकरणमुपनिषद्भाष्ये शंकराचार्यैर्दर्शि-
तम् ॥ अतएव "एषह्येवसाधुकर्मकारयति" "मत्तएव पृथग्विधा" इत्यादि श्रुतिस्मृ
तिष्वेवकारेण भगवद्व्यतिरिक्तस्य हेतुत्व व्यवच्छिद्यते॥वेदविरुद्धबाह्याबाह्यस्मृतिनिरा
करणपादे चोभयकारणवादोनिरस्तः ॥ भगवान्स्वेच्छया तत्तत्साधनद्वारा तत्तत्फलं
ददातीति सिद्धांतयद्भिरस्माभिः कर्मणां फलहेतुता न प्रत्याख्यायतेऽतः कर्मणः फ-
लहेतुताया दुर्वारत्वोक्तिः सिद्धसाधनम् ॥वस्तुतस्तु नानन्यथासिद्धनियतपूर्ववर्तित्व-
मपि । अनुग्रहविशेषे निःसाधनेभ्यः कामक्रोधादिविरुद्धसाधनवद्भ्यश्च फलदान-
स्यदर्शनात्॥अपाणिपिहितं चैतत् श्रीभागवतप्रभृतिषु"अन्हापृतंनिशि शयानमतिश्र-
मेण लोकं विकुंठमुपनेष्यति गोकुलं स्म।तेनाधीतश्रुतिगणाः।गोप्यः कामाद्भयात्कंसो-
द्वेषाच्चैद्यादयोनृपा" इत्यादौ ॥ वृष्टिन्यायेनापीच्छायाः कर्मादिहेतुत्वांगीकारे तस्याः

---

दोषानपायोदुःखानिरासात् ॥ अन्त्येऽनुभवविरोधः ॥ किञ्चात्मनिदुःखोत्पादकआत्मद्रोहीरि-
वेश्वरोनिन्द्येतप्रेक्षावद्भिः ॥ एतेन भैक्षवमतमुपन्यस्य तन्मायावादिविध्वंसध्वस्तप्रायमित्यस्य
टीकायां भेदवादेवैषम्यादिदोषाभिधानमपि प्रत्युक्तम् ॥ अभेदवादेप्यनिरस्तत्वात् ॥ यच्च
तट्टीकाकारेण विद्वन्मण्डनोक्तं किञ्चिदनूदितम् ॥ कृतप्रयत्नापेक्षस्तुविहितप्रतिषिद्धावैयर्थ्या
दिभ्यः प्रपञ्चेनरमणेच्छयाहिभगवान् क्रीडार्थं कृतविविधमर्यादादिरूपप्रयत्नोजन्मकालादा-
रभ्यमोक्षपर्यन्तंविचारितवान् तत्रहि क्रीडैवमुख्याऽन्यत्सर्वमुपसर्जनीभूतं तथाच तदपेक्षोभ-
गवांस्तदनुसारेणैव कारयति यतोविहितस्य यागादेः प्रतिषिद्धस्य विप्रहननादेरवैयर्थ्यमेवंभवे-
त् ॥ मर्यादाऽभावेतु ईश्वरस्यैव स्वर्गनरकादिदातृत्वेन विधिनिषेधवैयर्थ्यं भवेदिति ॥ तच्च
नसम्यक् ॥ एतादृशसत्यसंकल्पपरमेश्वरसंकल्पस्य दुःखादिप्रयोजकत्वेन परमेश्वरे वैषम्या-
देर्दुष्परिहरत्वात् ॥ किञ्च तवैवतत्सूत्रविरोधः ॥ सापेक्षतायाः सूत्रात्स्पष्टप्रतीतेः ॥ स्वनि-
र्मितजीवकर्मणामिव स्वनिर्मितविचारादेरपेक्षायामपिसापेक्षत्वानपायात् ॥ सूत्रार्थस्तु जीव-
कृतप्रयत्नापेक्षइत्यादिः न्यायानुरोधात् ननुविचारितमर्यादापेक्षइत्यादिः मानाऽभावात् ॥ कि-
ञ्चतथासतिस्वविचारापेक्षइतिवामर्यादापेक्षइतिवास्पष्टंब्रूयात् ॥ एवंवैषम्यनैर्घृण्ये न सापेक्षत्वात्
पत्युरसामञ्जस्यादितिसूत्रद्वयविरोधो ऽपि तन्मतेबोध्यः ॥ प्रपञ्चितश्चायमर्थस्तन्त्रतत्र भग-
वत्पादैरितिनात्राधिकंप्रयत्यते ॥ तादृशकर्मणामिच्छां प्रति हेतुत्वं तु ज्ञानद्वारा तदैक्षतेत्यादि-
श्रुत्याज्ञानस्याऽपिहेतुत्वात् लोकेऽपिकर्मणांतैर्जाततोषादिकस्यभूपादेर्ज्ञानद्वारैवेच्छां प्रति हे-
तुत्वदर्शनाच्च ॥ क्रीडार्थंयथासृष्टिरनुपपन्ना तथावक्ष्यते ॥ ८ ॥

कर्मजन्यत्वं स्वोक्तवरं परित्याज्यं तस्याः कारणांतरजन्यत्वं नित्यत्वं वा वक्तव्यम्। वैषम्यादिकं च तदवस्थम्॥ किंच भगवतोवृष्टिवत् कारणत्वे बीजवत्कारणांतरमपिवाच्यम्। तथा च सति सृष्टेः पूर्वं सजातीयादिभेदशून्यब्रह्मसत्ताबोधकानां सदेवेत्यादीनां व्याकोपोऽनीश्वरत्वापातश्च॥ यदितु "ताआपऐक्षंतबह्व्यः स्याम प्रजायेमहीति ताअन्नमसृजंत तस्माद्यत्रक्कचवर्षतितदेवभूयिष्ठमन्नं भवत्यभ्द्य एवतदध्यन्नाद्यं जायत" इति छंदोगादिश्रुतिभ्यः पार्थिवत्वाज्जलजन्यान्येव बीजानि जलादेव फलान्वितानि यथाभवंति तथा भगवद्धेतुकान्येव कर्मादीनि ततएव फलमर्पयंति कार्यवैचित्र्यंच धान्यवैचित्र्यवदिति भाष्यकारचरणाभिमतं वृष्टिवत्कारणत्वं स्वीक्रियेत तदोंकुर्मः॥ एवंसति निरपराधं "परात्तुतच्छ्रुते" रिति सूत्रमपि नान्यथा नेयम्। "नान्योतोस्तिद्रष्टानान्योतोस्तिश्रोता नान्योतोस्तिमंता नान्योतोस्तिविज्ञाता। सविश्वकृत्सहिविश्वस्यकर्ते" त्यादि श्रुतिभ्यो ब्रह्मगतस्यैव कर्तृत्वस्य जीवे प्रतीतेर्निर्बाधत्वात् तस्यैवोन्निनीषाधोनिनीषाभ्यांसाध्वसाधुकारयितृतायाः श्रवणाच्च॥एतेन"वैषम्यं नैर्घृण्यमिति दूषणद्वेपरेस्थिते"इति मार्तंडकारिकाद्वयं सव्याख्यं समर्थितं वेदितव्यम्॥विपक्षेऽनीश्वरत्वापत्तेर्बहुधोपपादितत्वात्॥ वैषम्यं नैर्घृण्यइतीतिप्रथमपादपाठस्तु मूलपाठं विप्लाव्य इंदूदेतिप्रगृत्यस्यापि प्रकृतिभावाभावादशुद्धिख्यापनाय तेन स्वयं कल्पितः॥ द्वितीयपादे परइति समम्यंतं द्वितीयकारिकायां नैवार्का भास्कराभिक्षुरितिपाठेपि निंबार्काईति लेखस्तु पाठपरिवर्तनादशुद्धपुस्तकोत्पादितभ्रमाद्वा॥ अथ कथंतर्हि सिद्धांते वैषम्यनैर्घृण्ययोः परिहारइतिचेत् अत्राहुस्तत्त्वदीपाख्यप्रकरणे श्रीमदाचार्याः॥ "आत्मसृष्टेर्नवैषम्यनैर्घृण्यंचापि विद्यते"इति॥अयमर्थः॥"तदात्मानंस्वयमकुरुत। सर्वैनैवरेमे। इंततिरोसानी"त्यादि श्रुतिभिः क्रीडार्थमात्मनएव तत्तदंशतिरोभावादुच्चनीचभावेन जगद्रूपेण करणात्सर्वस्य स्वाभिन्नतया न वैषम्यनैर्घृण्ये। नापि चकारपरिगृहीताअन्येदोषाः। लोकेसर्वस्वावयवाभेददर्शी पुरुषः पुरुशर्कराकंटकाकीर्णसरणौ चरणेन चलन् करेण द्रविणमुपार्जयन् मुखेन तल्लब्धमन्नाद्यमुपभुंजानो नहि हस्तपादे द्वेष्यवयवांऽतरउदासीनो मुखे स्निग्धोविषमोयंनिर्घृणोयमिति व्यपदिश्यते। एवं भगवानपि ब्राह्मणक्षत्रियाद्युच्चावचसर्गकर्ताप्यदुष्टः। यथाच लीलया तालं वादयन् वामं पाणिमधः कृत्योच्चीकृतेन दक्षिणेन तं ताडयन्नपि पुमान्नविषमोनिर्घृणोवा। हस्तद्वयेपितुल्याभेददर्शित्वात्॥ तथा विविधां प्रपंचप्रवृत्तिं प्रणयन्नस्मत्प्रभुरपि। "इदं सर्वं यदयमात्मे" त्यादिभिः सर्वात्मकत्वात्। एतदेव वासुदेवः सर्वमिति निर्दोषं हिसमंब्रह्म समोहंसर्वभूतेषु नमेद्वेष्योस्तिनप्रियइत्यादिस्मृतीनाम् (स्कंध०२ अ०१) अहमेवासमेवाग्रेनान्यद्यत्सदसत्परम् स्कंध ११ अ०१३ श्लो०२४) मनसावचसादृष्ट्या गृह्यतेन्यैरपींद्रियैः। अहमेवनमत्तोन्यदितिबुध्यध्वमंजसा ( स्कं १० अ. ३८ श्लो. २२, ) नवास्यकश्चिद्दयितःसुहृत्तमोनचाप्रियोद्वेष्यउपेक्ष्यएववेत्यादिश्रीभागवतवच

सांचैकवाक्यतया पर्यालोचने फलति ॥ त्वदुक्तरीत्या कर्मणा राजवत्प्रीतिद्वेषयो-रंगीकारेत्वेतद्विरोधः स्फुट एव ॥ एवं सूत्रकारोप्यात्मसृष्टेरेव वैषम्यादिपरिहार-मभिप्रेत्य केवलनिमित्तत्ववादिनां सांख्ययोगैकदेशिनैयायिकवैशेषिकपाशुपतकापा-लिककालामुखशैवादीनां मते ईश्वरस्य वैषम्यादिप्रसादसामंजस्यमाह (अ० २ पा० २ सूत्र ३७) "पत्युरसामंजस्या" दिति ॥ अत्र शंकराचार्या अपि "प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधात् अभिध्योपदेशाच्चे" त्यादौ श्रीबादरायणेन समर्थितं परमे-श्वरस्य स्वेच्छयात्मोपादानकानेककार्यैककर्तृत्वपक्षमदुष्टमुक्त्वासूत्राक्षरव्याख्याने किं-पुनरसामंजस्यं हीनमध्यमोत्तमभावेनहि प्राणिभेदान् विदधत ईश्वरस्य रागद्वेषादिदो-षप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत ॥प्राणिकर्मापेक्षितत्वाददोषइति चेन्न ॥कर्मेश्व-रयोः प्रवर्त्यप्रवर्त्तयितृत्वे इतरेतराश्रयदोषप्रसंगात् ॥ अनादित्वादितिचेन्न वर्तमान-कालवदतीतेष्वपि कालेष्वितरेतराश्रयदोषाविशेषादन्धपरंपरापत्तिन्यायादित्याद्याहुः॥ तस्माच्छ्रीमदाचार्योक्तएव वैषम्यादेर्मुख्यः परिहार इति निखिलाम्नायस्मृतिन्यायपु-राणेभ्योनिष्कृष्यते । एवं मलयमपि अनेकधा जन्मादिपरंपरया क्लिश्यमानानां जीवानां तद्विश्रमेण सुखार्थं करोति । यथेदानींत्वीक्षणदामित्यन्यत्र विस्तरात्ततोपि न नैर्घृण्यम् ॥ एतावता तदुपन्यस्ता आत्मसृष्टेरित्यादिमार्तंडकारिकासार्धद्वितयी-समर्थिता ॥ यत्तु तत्रेत्यादिदोषानुद्धारादित्यंता तदुक्तिश्च निरस्ता ॥ यच्च तथाही-त्यादि अनिरस्तत्वादित्यंतमभाषि तदनादरणीयम् ॥ तथाहि ॥ हस्तादिश्रमोपार्जितं मुखेनोपभुज्यते नवा ताल्वादनेऽन्यतरः करोऽन्यतरेणताड्यतेनवा॥ द्वितीये प्रत्यक्ष-विरोधः ॥ आद्ये सोपि विषमोभिलप्यतां मुखेन भुंजानानां शर्करादौ चरणाभ्यां चरतां च।किंच नवैषम्यप्रायश्चित्तमपि स्मर्येत नत्वेवम्।किंच जीवाहि आविद्यकाद्दे-हाद्यहंतागेहादिममतालक्षणसंसारादेव स्वस्मिन्दुःखसंबंधं प्रतियंति " समानेवृक्षे-पुरुषोनिविष्टोनीशयाशोचतिमुह्यमान " इति मुंडकश्रुतेः ॥ अज्ञानेनावृतंज्ञानंतेन-मुह्यंति जंतव इति स्मृतेः॥ यावद्धतोऽस्मिहंतास्मीत्यात्मानंमन्यतेऽस्वदृक् । तावत्तद-भिमान्यज्ञोबाध्यबाधकतामियादिति श्रीभागवतोक्तेश्च । अतएवैकादशस्यत्रयोविंशे भिक्षुः ॥ संसारचक्रपरिवर्तकस्य मनसएव स्वस्मिन्सुखित्वदुःखित्वप्रत्यायकत्व-माह नायंजनोमेसुखदुःखहेतुरित्यादिना ॥ अतएवच संपन्नज्ञानानां योगिनां भगवद्भक्तानां न दुःखित्वप्रत्ययः " मत्वाधीरोहर्षशोकौजहाति महांतंविभु मात्मानंमत्वाधीरोनशोचति तरतिशोकमात्मवित् यस्मिन्सर्वाणिभूतान्यात्मैवाभू द्विजानतः तत्रकोमोहःकःशोकएकत्वमनुप्रपश्यतः अत्मानंचेद्विजानीयादयमस्मीति-पूरुषः किमिच्छन्कस्यकामायशरीरमनुसंज्वरेत् " इति कठमुमविद्येशावास्यबृहदा-रण्यकश्रुतिभ्यः " यस्मिन्स्थितोनदुःखेनगुरुणापिविचाल्यते " इति स्मृतेःषष्ठ-स्कंधे " नारायणपराःसर्वेनकुतश्च नबिभ्यति स्वर्गापवर्गनरकेष्वपितुल्यार्थ-दर्शिनः ॥ देहिनांदेहसंयोगाद्द्वंद्वानीश्वरलीलया । सुखंदुःखं स्मृतिर्जन्मशापोनुग्रह-

एवच । अविवेककृतःपुंसोह्यर्थभेदइवात्मनि गुणदोषविकल्पश्चभिदेवस्र जिवत्कृतइतिश्रीरुद्रोक्तेश्च । अतः स्वस्मिन्दुःखितत्वप्रतीतेराविद्यकत्वाददोषः । अन्यथा अभेदवादिनस्तवापि जीवादुःखजानंतीत्यनुभवाद्ब्रह्मणोदुःखितत्वं प्रसज्येत । तथाच " आनंदरूपममृत " मित्यादिश्रुतिकोपः । नाप्यात्महेवेश्वरोनियः " आदित्यश्चक्षुर्भूत्वाक्षिणीप्राविश " दित्यैतरेयश्रुतेः सूर्यांशभूतचक्षुर्गततिमिरभ्रमरिकादेः सूर्यइव स्वांशभूतानामपि जीवानां दुःखादेः परमात्मन्यसंबंधात् । यथा कठवल्लीषु पंचमवल्ल्यां श्रूयते " सूर्योयथासर्वलोकस्यचक्षुर्नलिप्यतेचाक्षुषैर्बाह्यदोषैः ॥ एकस्तथासर्वभूतांतरात्मानलिप्यतेलोकदुःखेनबाह्यः " समर्थितंचैतच्छ्रीबादरायणाचार्यैः (अ०२ पा०३ सू०४६) "प्रकाशादिवन्नैवंपर" इत्यत्र । अन्यथा जीवोब्रह्मैवकेवलमिति सिद्धांतयतस्तव कर्मसापेक्षतापक्षेपि अबुद्ध्या पापं कृत्वा प्रायश्चित्तीयन्नज्ञइव बुद्ध्या दुःखसाधनं कर्मकृत्वा दुःख्यन्साहसिकइवचाधिकं सांनिद्येत ॥ तस्मादभेदवादएव समाधिः साधीयान् ॥ अतएव षष्ठस्कंधे सप्तदशाध्याये चित्रकेतुना (श्लो० १८) संसारचक्रएतस्मिन्जंतुरज्ञानमोहितः ॥ भ्राम्यन्सुखंचदुःखंच भुंक्तेसर्वत्र सर्वदेत्यादिना स्वस्मिन्सुखदुःखानुभवस्य संसारभ्रममूलकत्वमुक्त्वा एकःसृजति भूतानिभगवानात्ममायया एषांबंधंचमोक्षंचसुखंदुःखंचनिष्कलइति भगवत एव स्वशक्त्या सर्वकर्तृत्वमभिधाय ( स्कं० ६ अ० १७ श्लो० २२ ) नतस्यकश्चिद्दयितःप्रतीपइतिश्लोकद्वयेन अद्वितीयस्य शक्तिविसर्गैर्ण क्रीडतो नदोषइति ध्वनितम् ॥ तथा तत्रैव देहिनांदेहसंयोगाद्द्वंद्वानीश्वरलीलयेत्यादिना सर्वस्य क्रीडाहेतुकत्वमुक्त्वा ( श्लो. ३३ ) नह्यस्यास्तिप्रियःकश्चिन्नाप्रियःस्वःपरोपिवा ॥ आत्मत्वात्सर्वभूतानांसर्वभूतप्रियोहरिरिति श्रीमहादेवेन स्पष्टमात्मसृष्टेरेव वैषम्यादिपरिहारोदर्शितः॥ तथा दशमस्कंधे (अ०४१ मालाकारप्रसंगे श्लो०४७) नहिवांविषमा दृष्टिःसुहृदोर्जगदात्मनोरिति जगदात्मकत्वमवैषम्ये हेतुत्वेनोक्तम् ॥ सप्तमस्कंधे ( अ. ९ श्लो. २७ ) नैषापरावरमतिर्भवतोननुस्याज्जंतोर्यथात्मसुहृदोजगतस्तथापि ॥ एवमभेदवादेन वैषम्यादिसमाधानमन्यत्रापि बहुशोद्रष्टव्यम् ॥ तदेतत्सर्वं मनसि कृत्याह ॥ **अस्मन्मते तादृशदूषणद्वयं न संभवतीत्यादि** ॥ तदात्मानमित्यादि वाक्यद्वयं ब्रह्मवल्लीस्थं यथोर्णनाभिरिति मुंडकस्थम् ॥ यच्च यच्च तद्वीकाकारेणेत्यादिस्पष्टंब्रूयादित्यंतं तद्दुराग्रहजल्पितम् ॥ अत्रानूदितोविद्वन्मंडनलेखस्तु प्राप्तावसरत्वादुत्तरभागएव व्याख्यास्यते॥तत्र तदुक्तानि दूषणानि त्विहैव निराकुर्मः॥ तत्र वैषम्यं तु परिहृतम् । सूत्रात्प्रमर्यादासापेक्षत्वप्रतीतावपि तस्याः स्वकृतत्वान्नपारतंत्र्यम् ॥ नहिलोकेपि मतिमान् राजादिः स्वयं कार्यं पर्यालोच्य स्वपर्यालोचनानुसारेण सर्वं कुर्वन्नस्वतंत्रउच्यते । एवमपारतंत्र्यख्यापनायैव सूत्रे कृतपदम्॥अन्यथा मतद्वयेपि कृतत्वस्यार्थादेव लाभात्तद्ग्रहणमपार्थं स्यात् ॥ स्वेच्छया कर्माण्यपेक्ष्यैव फलदानमिच्छायाः सर्वहेतुत्वादपारतंत्र्यं चास्मत्संमतमेव नतु कर्मणां स्वतं-

न्त्वमिच्छायाश्च तज्जन्यत्वम् ॥ न्यायानुरोधस्त्वस्मत्कृतसूत्रार्थएव । पूर्वाधिकरणे बुद्ध्यादिकं व्यावर्त्य जीवे निर्धारितस्य कर्तृत्वस्येतः पूर्वसूत्रे परहेतुकत्वकथनात्॥ नचास्माकीनार्थे मानाभावः"सतपोतप्यते" त्यादिश्रुतीनां (स्कं१० अ.३३ श्लो.२८) सकथं धर्मसेतूनांकर्तावक्ताभिरक्षिता । त्वत्कृत सेतु परीप्सयेशः (अ. ५८ श्लो. ३७) इत्यादि पुराणवचसांच मानत्वात्॥ भूतेनुशिष्टकांतकृतपदप्रयोगोपि सूत्रेभगवदुद्योगपरिग्रहे सुष्ठु संगच्छते॥ तस्य सृष्ट्यारंभएव जातत्वात्प्रायोजिज्ञासुकर्मणां च सूत्रकारापेक्षयाभावित्वात् ॥ त्वविचारापेक्षइत्याद्यसूत्रयित्वा यथाश्रुतं सूत्रणंत्वर्थांतरसंग्रहाय॥"स्वरितेनाधिकार" इत्यादिवत्॥अन्यथा जीवकृतकर्मापेक्षइति जीवकर्मापेक्षइत्येव वा स्फुटं सूत्रयेत् आंतरधर्मविशेषे प्रसिद्धात्प्रयत्नशब्दात्स्पष्टतया चेष्टारूपकर्मणां बोधानुदयात् ॥ तस्माद्यथाधिकारमुभयार्थावगमनायैव यथाश्रुतपाठोभगवतः॥अर्थद्वयं तु भाष्ये विद्वन्मंडने च स्फुटम्। इह मूलेच संगृह्य दर्शितम् ॥ नचानेकार्थत्वं दोषः॥"सुमेधाअमृतोक्षित" इत्यादि श्रुतिष्वक्षितउक्षितइत्यादिच्छेदेन "जन्माद्यस्ये" त्यादिसूत्रेषु तद्गुणसंविज्ञानातद्गुणसंविज्ञानाद्याश्रयणेन च बह्वर्थसंग्रहस्य शंकराचार्यैरपि दर्शितत्वात् ॥ यच्च वैषम्यनैर्घृण्येनेत्यादि वक्ष्यतइत्यंतं तदपेशलम् तत्र (अ०२ पा०१ सू०३४) "वैषम्यनैर्घृण्येन सापेक्षत्वात्तथाहि दर्शयती" ति सूत्रे कर्मसापेक्षत्वात्तत्परिहारस्तु मीमांसकदुर्दुरूढादिवादिबुद्धिमनुसृत्य पिशाचः पिशाचभाषया बोधनीयइतिन्यायेनोक्तः॥ तेनैव परिहारसंभवे तस्यैव समाधेः सूत्रकाराभिप्रेतत्वे च केवलनिमित्तवादे तदुक्तं "पत्युरसामंजस्य" मसंगतं स्यात् ॥अदृष्टांगीकारिणां वैशेषिकप्रमुखानामपि तत्सापेक्षतयैव समाधिसंभवात् ॥ नचासामंजस्यं त्वयाऽन्यथाव्याख्येयं स्वभाष्यविरोधात् । किंचेह फलार्पणे सापेक्षत्वमात्रमुच्यते न त्विच्छायानित्यत्वं कर्महेतुत्वं फलहेतुत्वं वा प्रत्याख्यायते ॥ नापि सापेक्षतोक्तिः स्वमतेपि बाधिता स्वेच्छयातत्तत्कर्मकारयित्वा तत्तत्फलदानस्य परात्विति फलमतइत्यधिकरणद्वितये निर्णीतत्वात् ॥ अतउत्तरसर्गे फलदित्सया पूर्वकल्पांते यानि कर्माणि सकारयति तानि जीवादिसर्वतिरोभावे ब्रह्मण्येव तिरोभवंति नच भगवतस्तल्लेपः ॥ " नसाधुनाकर्मणाभूयान्भवतिनोएवाऽसाधुनाकनीया" निति कौषीतक्यादिश्रुतेः । " नमां कर्माणि लिंपंति न मे कर्मफले स्पृहे " ति स्मृतेः सृष्टिप्रकरणेपि नचमांतानिकर्माणिनिबध्नंतिधनंजयेतिस्मरणाच्च ॥ तत्तदपूर्वादृष्टादिशब्दवाच्योलेपस्तु जीवधर्मएव ।लेपाभावान्नैष्कर्म्यं भगवतः । अतः "सर्वकर्मे" ति शांडिल्यविद्याश्रुत्या भगवन्निष्ठत्वादेवाविभागदशायामपि अनादित्वं द्वितीयसूत्रेभिहितम् ॥ अथ सर्गेच्छायां स्वांशाञ्जीवादीन् स्वतआविर्भाव्य धर्मसेतूंश्चाविष्कृत्य स्वेच्छया तत्तत्कर्मानुसारेण जीवेभ्यउत्तमाधमशरीरादेर्दानेप्यदोषउपपत्तेः श्रुतिस्मृत्यानुकूल्याच्चेति " उपपद्यतेचापी " तितृतीयसूत्रस्याशयः ॥ सूत्रेपि पूर्वपक्षगर्हायाम् । वस्तुतस्तु तत्कर्मब्रह्माभिन्नं नवा आद्ये दोषस्तदवस्थः॥द्वितीये

द्वैतापत्तिः पूर्वोक्तदोषश्चात उपसंहारे स्वाभिमतं मुख्यसमाधिमाह ( अ० २ पा० १ सू० ३७) " सर्वधर्मोपपत्तेश्चे " ति । तदनन्यत्वाद्यधिकरणैर्निरूपिते सर्वात्मके हिताकरणादिदोषरहिते क्षीरदेवादिवत्सर्वभवनसमर्थशब्दैकवेद्ये विचित्रसर्वशक्त्युपेतरि लीलाशालिनि परमात्मनि स्वेच्छया कर्मकारयितृत्वतत्फलदत्वसमत्वसघृणत्वादयः परस्परविरुद्धतया भासमानाः श्रौताः सर्वेपि धर्मा उपपद्यंत एवातो न वैषम्यादिदोषगंध इत्यर्थः॥तथाचात्मसृष्टेर्न वैषम्यमित्येव फलितम् । तस्मादस्मन्मते वैषम्यसूत्रं न विरुद्धम्॥पत्युरसामंजस्यादित्यस्योपन्यासस्तु तस्यैव प्रतिकूलः॥भावत्कभाष्यादिभाषितं तु भाष्यतत्प्रकाशरश्मिद्वितीयप्रकाशभाष्यविवरणभाष्यप्रदीपादिषु दूषितमशेषमिति किं विशेषतः ॥ " तदैक्षत बहु स्यां प्रजायेयेती " ति श्रुतिस्तु इच्छया स्वस्यैव जडजीवादिबहुरूपेण भवनमुच्चनीचभावं च वक्ति । न तु कर्मविषयकं ज्ञानं ज्ञानद्वारा तेषामिच्छाजनकत्वं वा ॥ तस्मिन्प्रकरणे तद्गंधस्याप्यभावात् उपक्रमे सदेवेतीतरप्रतिषेधाच्च ॥ अथ तदन्नार्थादापादनीयमिति चेत्स्पष्टतद्ग्राहकं मानांतरमेवोदाहर यद्बलात्तदिहापाद्येत ॥ भूपादेरिव कर्मज्ञानद्वारेच्छाकल्पने त्वीश्वरज्ञानस्य नित्यत्वेनातीतानागतवर्तमानसर्वविषयकत्वेन चेच्छापि नित्यैव स्यात् । तथाच घट्टकुटीप्रभातम् श्रुतिपुराणसिद्धं सृष्टेः क्रीडार्थकत्वं तु तदनुपपत्तिदर्शकतावकनवमश्लोकनिरासावसर उपपादयिष्यामः ॥ **मूले यत्किंचिद्दूषणं त्वन्नेति** ॥ इयं कारिका द्वितीयस्कंधनवमाध्याये अहमेवासमेवाग्र इति श्लोकसुबोधिनीस्था एतेन "सर्वधर्मोपपत्तेश्च" इति सूत्राशय उपन्यस्तः ॥ **तन्न समीचीनामित्यादि** द्वितीयस्य प्रथमे पादे तदनन्यत्वाधिकरणेन जगतो ब्रह्मानन्यत्वे साधिते जीवस्यापि तथात्वे जडाद्वैलक्षण्ये च सिद्धे आक्षेपसङ्गत्या (सू०२१ । २२) इतरव्यपदेशादिति द्विसूत्रमधिकरणं प्रवृत्तम्॥तत्राद्यं पूर्वपक्षसूत्रं ।द्वितीयन्तु सिद्धान्तसूत्रम् । तदर्थमाहुः **तत्रेत्यादिना** तैत्तिरीये"तत्सृष्ट्वा तदेवानुप्राविशत्" इति ब्रह्मणोनुप्रवेशः श्रूयते स एव श्वेतकेतुविद्यायां " सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति" इति जीवरूपेण श्राव्यते " सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मना ऽनुप्रविश्य नामरूपे व्याकरोत् " इति च॥ अत्र जीवेनात्मनेति जीवस्य तेजोऽबन्नलक्षणकार्यात् प्रवेशाधिकरणाद्वैलक्षण्येन शुद्धब्रह्मरूपत्वं बोध्यते ॥ परदेवतया तस्यात्मतया निरूपणात्सूत्रे इतरव्यपदेशादित्यस्य इतरस्य जीवस्य आत्मतया व्यपदेशादित्यर्थः ॥ तदाहुः ॥ **इतरस्येति सर्वानर्थेति** अनर्थाः कामा धर्मादयो दुःखानि तज्जन्यानि ॥ **अहितकरणस्य चेति** ॥ सौत्रादिपदेन परिगृहीतमेतत् ॥ हितस्य मोक्षसाधनस्याकरणमहितस्य बंधस्य च करणमिति दोषाः ॥ **ज्ञेयत्वेनेति** ॥ " आत्मा वा अरे द्रष्टव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । तमेवं विद्वानमृत इह भवति। तमेव विदित्वाऽतिमृत्युमेति " इत्यादिषु ज्ञातृज्ञेयभावेन जीवब्रह्मणोर्भेदव्यपदेशः ॥ " सत्यं विज्ञानमानंदं ब्रह्म।आनन्दरूपममृतं य-

द्विभाति । योवै भूमा तत्सुखम् । अन्योंतरआत्मानंदमयः ” इत्यादिषु ब्रह्मणआनंदरूपत्वेन तिरोहितानंदाज्जीवाद्भेदव्यपदेशः ॥ अतएव “ रसंह्येवायं लब्ध्वा नन्दी भवती” ति कर्मकर्तृव्यपदेशः । एवं भेदव्यपदेशात् ब्रह्म अधिकं समुद्रवदंशि । जीवस्तु तरंगवदंशः॥ अतएव आत्मत्वश्रुतावप्यहमिति सर्वकारणास्यांशिनः पृथङ्निर्देशः॥ अनेन जोवेनात्मनेति भिन्नतया इदमा परामृश्यमानस्य जीवरूपस्यांशस्यसः॥ एवंच यस्मिन्काले हिताकरणं तदा ऐच्छिकभेदस्यापि सत्वान्नांशिन्युक्तदोषप्रसक्तिरितिभावः ॥ **पूर्णत्वाच्चेति** ॥ पूर्णमदइतिश्रुतेरितिभावः ॥ **नखनिकृंतनेत्यादि**॥ “ यथासतःपुरुषात्केशलोमानी ” त्यंशांशिभावेपि केशमसाधको न हिताकरणादिनादूष्यते ॥ **सर्वेन्द्रियेति** ॥ करचरणादीनां स्वांशत्वेपि गमनादानादिपरिश्रमेषु तत्तन्नियोजयन्नोक्तदोषास्पदं भवति ॥ तथा परमात्मापि नात्महादिवन्निबः॥ **तदपि न संभवतीत्यादि** ॥ अत्रमानं “ सूर्यो यथासर्वलोकस्य चक्षुः प्रकाशादिवन्नैवंपरः ” इति श्रुतिसूत्रादिरूपं युक्तिश्च प्रागेवादर्शि ॥ कार्यकारणयोरसाधारणधर्मास्तत्तन्मात्रनिष्ठा इत्यादिवैश्वानराद्यधिकरणेषुस्फुटमित्यलम् ॥

अयंच ( कर्मणां स्वाव्यवहितोत्तरक्षणएव फलानुकूलेश्वरेच्छाजनकत्वाभावेनोद्बुद्धानामेव तथात्वंवाच्यमित्यादिकः ) स्वमतदर्शनार्थं भाष्याद्यनुक्तः स्वकपोलकल्पितः प्रलापः सोप्यसङ्गतः ॥ तत्रैवंप्रक्रिया तेन दर्शिता ॥ जीवकर्मणां फलानुकूलेश्वरेच्छां प्रति हेतुत्वं तैरीश्वरेच्छायाजननउद्बुद्धत्वरूपधर्मस्य हेतुत्वं । तत्र चोद्बोधकस्य कालस्य तत्र सःप्रष्टव्यः ॥ तत्तत्कर्मफलं प्रति एकैवेश्वरेच्छाहेतुर्भिन्नावा ॥ नाद्यः युगपत्सर्वकर्मफलोपभोगासंभवात् ॥ तत्स्वीकारे च भाविनांमनूनामिन्द्रादीनां सृष्ट्यादावेवोत्पत्तिः स्यात् ॥ इच्छारूपकारणसत्वात् ॥ द्वितीयेतु तत्तत्फलभेदेनानंतेच्छाकल्पने गौरवम् ॥ तत्तदिच्छापियुगपत्कुतोनोत्पद्यते इत्याक्षेपे तत्तत्कर्मोद्बोधस्य तत्रापि कालस्य हेतुत्वकल्पनेकालस्यैकत्वात्पुनरप्याक्षेपानुद्धारः ॥ कालस्यानेकत्वेतेषां नित्यत्वे पुनर्दोषापत्त्याऽनित्यत्वे तस्योत्पादकनियामकाकांक्षायां पुनर्दोषापत्त्या स्वभावविशेषकस्य नियामकत्वांगीकारे

इच्छांप्रत्येवेश्वरस्वभावस्य हेतुत्वेन श्रुतिसिद्धेनोपपत्तौ किमन यास्वकपोलकल्पितया कुसृष्ट्या॥किंच कर्मणां क्षणिकत्वेनादृष्टस्यच त्वयाऽ स्वीकृतत्वेन कस्योद्बोधःकालेन क्रियतइति वक्तव्यम्॥नचादृष्टकल्पनावादिमतेनेदं । अतएव इयं च कालतः कर्मणामुद्बोधस्य प्रक्रिया अदृष्टकल्पनावादिरीत्या मूले प्रोक्ता इत्युक्तमिति वाच्यम् ॥ तन्मतेप्यदृष्टस्य कुत्र कल्पना । जीवस्य-पारमार्थिकेस्वरूपे व्यावहारिकेवा ॥ नाद्यः पारमार्थिस्वरूपस्य शुद्धब्रह्मरूपत्वेन तत्रादृष्टस्वीकारे निर्धर्मकत्वहानिः ॥ नापि द्वितीयः सृष्टेःपूर्वं व्यावहारिकस्वरूपस्याभावात्तत्स्वीकारे " सदेवसौम्येदमग्रआसी" दित्यादि श्रुतिविरोधः॥भवन्मते सजातीय-विजातीयस्वगतभेदशून्यत्वस्यैव तादृशश्रुत्या प्रतिपादितत्वात्॥ किंचांतःकरणावच्छिन्नस्य तत्प्रतिबिंबितस्य वा व्यावहारिकजीवस्य प्रलयेऽविद्यायां लयस्वीकारेण तादृशस्वसिद्धान्त-विरोधः ॥ नन्वविद्याया आविद्यकस्यजीवस्यच सत्वेपि न सदेवेत्यादिश्रुतिविरोधः ॥ कल्पितस्याधिष्ठानसत्तातिरिक्तसत्ताया अस्वीकारात् ॥ यथा शुक्तौ रजतभ्रमदशायामनिर्वचनीयस्य कल्पितरजतस्य सत्वेपि शुक्तिरेवेदमितिकथनं न विरुध्यते तथा प्रकृतेपीतिचेन्न ॥ एवंसति तादृशश्रुतावग्रइतिकथनं निरर्थकतामापद्येत ॥सृष्टिदशायामपि सर्वस्य त्वन्मते कल्पितत-या तस्याधिष्ठानसत्तातिरिक्तसत्ताया अभावेनानुपपत्त्यभावात्॥ यदपि स्वमतेपीश्वरतोषादेः फलोपधायकत्वलक्षणमौत्कट्यं कालेन क्रियतइत्युक्तं तन्मन्दम् ॥ एतादृशमतस्य प्राभाकराचार्यप्रणीतोपनिषत्सूत्रगीतादिभाष्येष्वनिरूपितत्वात् ॥ किंचात्रेश्वरपदेन शुद्धं ब्रह्मविवक्षितं।पारिभाषिकोमायावच्छिन्नस्तत्प्रति-

विवितोवा विवक्षितः ॥ नप्रथमः तस्मिंस्तोषरोषाद्यंगीकारस्य शुद्धत्वव्याघातकत्वात् ॥ प्रलये मायायाअपि ब्रह्मणि लयस्यांगीकृतत्वेन तद्वृत्तिरूपतोषरोषादेरप्यभावेन कस्यौत्कट्यं कालेन क्रियतइति वक्तव्यम् ॥ अपिच कर्मभिरीश्वरतोषः कालेनतऔत्कट्यं तत्रापि प्रलयपूर्वकालोत्पन्नेच्छाया व्यवहिताया हेतुत्वमिति त्वन्मते कर्मणामेव निरपेक्षाणां व्यवहितानां सूक्ष्मरूपेण स्थितानां वा फलजनकत्वमिति मीमांसकमतापेक्षया किलाघवं प्रत्युत गौरवमेव ॥ नचलाघवाभावेपि जडस्यचेतनं विना कार्यकरणत्वाभावात्तथा कल्प्यतइति वाच्यम् ॥ निर्झरप्रसुतस्य जडस्य जलस्य धान्यवृक्षाद्याप्यायनरूपकार्यजनकत्वस्य दृष्टत्वेन तादृशकल्पनायाअप्रामाणिकत्वात् ॥ एतेन (यद्वा कर्मशब्देन तज्जन्येश्वरतोषादिकमेव गृह्यते) इत्याद्यपि प्रत्युक्तम् ॥ पूर्वोक्तरीत्याऽनुपपत्तेरभावेन लक्षणायां मानाभावात्तादृशतोषादेरप्यसंभवाच्च॥वस्तुतस्तु पूर्वापरविरुद्धत्वादिदं प्रकरणमपार्थकमेव ॥ तथापि यक्षानुरूपोबलिरितिन्यायेन किंचिदुच्यते ॥ वस्तुतस्त्वित्यादिना (कालस्य विशिष्य हेतुत्वकल्पने तादृशसहकार्यभावादेव कालान्तरे फलानतिप्रसक्तौकर्मणांनोद्बोधकापेक्षा ) इत्युक्तम् तत्र कालस्य विशिष्य हेतुत्वं तत्तदुपाध्यवच्छिन्नस्यैव वक्तव्यम् ॥ कालस्यैकत्वादुपाधीनां च रविपरिस्पन्दादीनां पूर्वमभावाद्विशिष्य हेतुत्वमेव न संभवति ॥ कथंचिद्विशिष्य हेतुत्वसंभवेपि तेनैव सकलकार्यसंभवे किमुक्तप्रक्रियया ॥ अस्मन्मतेच कालस्येश्वराभिन्नतया न प्रागुक्तदोषः ॥ नापि कालसहकारित्वेन पारतन्त्र्यम् ॥ मानाभावात् ॥ किंच अव्याहतेच्छावत्त्वं स्वातन्त्र्यं व्याहतिश्चेच्छाविषयसिद्धेरभावः ॥ सचेश्वरस्य नास्ति ॥ ईच्छानुरूपेणसकलपदार्थसिद्धिसत्त्वात् ॥ अतएव लोके स्वच्छन्दचारी स्वतन्त्रइ-



स्युच्यते॥ एतेन स्वनिर्मितविचारादेरपेक्षायामपि सापेक्षत्वं स्यादिति प्रलपितमपास्तमेवंचेत्याद्यपि ॥ यच्च (सर्वस्येश्वराभिन्नत्वे कर्मणां हेतुत्वनिराकरणप्रयासवैफल्यापत्ति) रित्युक्तं तदपि स्वमतमनवलोक्यैव॥तवाप्यद्वैतवादित्वेन सर्वस्यब्रह्माभिन्नतयाऽदृष्टादिनिराकरणप्रयासो विफलएव॥किंच त्वन्मतेसर्वस्य मिथ्यात्वेन परमतस्वमतयोरपि मिथ्यात्वात्तत्वेनज्ञानवतस्तव तत्खंडनमंडनप्रयासोऽपि लोके हास्यकरएव॥कालोस्मिलोकक्षयकृत्प्रवृद्धइत्यत्र स्वस्यैव महाभारतयुद्धव्याजेन लोकनाशकत्वेनकालःकलयतामहमित्यादिनाक्षणादिरूपत्वस्यापि स्वस्मिन्नुक्तत्वेन साक्षाद्वाच्यार्थस्यैव संभवे गौणार्थकल्पनायाअन्याय्यत्वात्॥ किंच सर्वात्मकत्वेन यमाद्यात्मकत्वं तव संमतं चेत्सर्वात्मक्षणाद्यात्मकत्वस्यापि संभवात्तत्र कथं तव द्वेषः ॥ एतेनकालकत्वेनैव रूपोवतीर्णइत्याद्यपि व्याख्यातम् ॥ कल्पितस्याधिष्ठानानतिरिक्तत्वेनाविरोधस्तु पूर्वमेव दूषितः ॥

## टीका

सहस्राक्षे *कर्मणां च स्वाव्यवहितोत्तरक्षणइत्यादि अवधारणाविरोधादित्यंतं भागं निरस्यंति॥अग्रेच कर्मणामेवेत्यादिना पूर्वमेव दूषित इत्यन्तेन॥उद्बोधकस्य कालस्येति॥अत्रापि हेतुत्वमिति सम्बध्यते॥तत्रापि कालस्येति॥इच्छासु हेतुस्त

---

## सहस्राक्ष.

* कर्मणांच स्वाऽव्यवहितोत्तरक्षणएव फलानुकूलेश्वरेच्छाजनकत्वाभावेनोद्बोधनामेवतथात्वं वाच्यं ॥ तदुद्बोधार्थं च कालविशेषोऽपेक्षितः ॥ अतएवकालःकलयतामहमिति भगवदुक्तं कालस्य कलयितृत्वं संगच्छते ॥ यद्यपिचाऽनेनसामान्यैनैव कालस्यहेतुत्वमुक्तं तथाप्यतिप्रसङ्गवारणाय विशिष्यहेतुताकल्पनीया साऽपिकर्मोद्बोधद्वारैव कर्मणामुद्बोधकापेक्षायां तस्याःक्लृप्तहेतुताकेन कालेनैवोपशान्तौकारणान्तरकल्पनस्याऽयोगात् ॥ इयंच कालतः कर्मणामुद्भवस्यप्रक्रिया अदृष्टकल्पनावादिरीत्यामूलेनोक्ता ॥ स्वमतेत्वीश्वरतोषादेः फलोपधायकत्वलक्षणमौत्कट्यं कालेनक्रियते इतिबोध्यम् ॥ यद्वा कर्मशब्देन तज्जन्येश्वरतोषादिकमेवलक्षणयागृह्यते ॥ उद्बोधश्चतादृशमौत्कट्यम् ॥ वस्तुतस्तु कालस्याविशिष्यहेतुत्वकल्प-

त्तत्कर्मोद्बोधः कर्मोद्बोधे च हेतुः कालइति कल्पने इत्यर्थः॥**तेषामिति**॥कालभेदानाम्॥ **तस्येति**॥अनित्यानेकस्वरूपस्य कालस्य कालभेदानां सर्वेषां प्रत्येकमुत्पादकं किञ्चिद्वक्तव्यं तस्यापि नित्यत्वमनित्यत्वं वेत्यादिविकल्पैरनिस्तारइतिभाव. ॥ **एवंसति तादृशश्रुताविति**॥ **शून्यत्वस्येति**॥ एवकारेणाद्वितीयपदेनेतिभावः॥ अत्र व्यावहारिकजीवस्वरूपंकल्पितश्चेत्तत्कल्पकः पारमार्थिकः किमुत व्यावहारिकः ॥ नाद्यः अविद्यारहितस्य शुद्धस्य कल्पकत्वस्यासम्भवात् ॥ भ्रान्तत्वे शुद्धत्वव्याघातापातात् ॥ नद्वितीयः आत्माश्रयापत्तेः ॥ नहि शुक्तौ कल्प्यमानं रजतमेव शुक्तावात्मानं कल्पयति ॥ किञ्चशुद्धस्याप्यविद्यामूलकोजीवभावः सा च जीवेन कल्पिता नतु विशुद्धचैतन्येन अभ्रान्तत्वादित्यन्योन्याश्रयः ॥ तस्याकल्पितत्वे सदेवेत्यादि व्याकोपइत्यादिदूषणान्यग्रेप्यस्माभिर्वक्ष्यमाणान्यनुसन्धेयानि ॥ **गीतादिभाष्येति**॥ आदिपदं विष्णुनामसहस्राहकम् तद्भाष्यस्यापि तैः कृतत्वात् ॥ किञ्चात्रेश्वरे इत्यादिना कृते विकल्पे प्रथमपक्षे दोषमुक्त्वा द्वितीयेपि तमाहुः॥**प्रलये मायायाइत्यादिना** तथाच मायालये तदवच्छिन्नस्तत्र प्रतिबिम्बितोवा नावतिष्ठेत । घटदर्पणयोर्लये घटाकाशदर्पणस्थप्रतिबिम्बाविव ॥ अतः कुतस्तरां मायावृत्तिरूपौरोषतोषौ ॥ **त्वन्मतइति** ॥ इदं किं लाघवं प्रत्युत गौरवमित्यभिप्रेणान्वेति ॥ कर्मणामेवेत्यादिस्तु मीमांसकमतानुवादः ॥ तन्मते च प्रवाहनित्यतास्वीकारात् ॥ तदेकदेशिभिः सहस्रानुबन्धिपरुद्धपुनःप्रवृत्तसोमोद्भवाप्रवाहन्यायेन सृष्टिप्रलययोरप्यूरीकारात् ॥ **लक्षणायामिति** ॥ कर्मपदेन रोषतोषयोर्लक्षणायां ॥ **तादृशतोषादेरिति** ॥ कर्मजन्यताया वृत्तिरूपरोषतोषादेः परस्मिन्नसम्भवात् ॥ **नप्रागुक्तदोषइति** ॥ नहि करचरणादिना गमनादानाद्यनुतिष्ठतस्तत्पारतंत्र्यस्य स्वीकारे किञ्चिन्मानमस्तीति भावः॥एतदिहसंदर्भेज्ञातव्यम् ।यत्तु कर्मणां चेत्यादि कल्पनस्यायोगादित्यंतं तत्तु प्रागेव निरस्तं पुनरधिकं निरस्यामः । तत्र कर्मणामुत्तरक्षणएवेच्छाऽजनकत्वे कारणं

---

नेतादृशसहकार्यभावादेव कालान्तरेफलानतिप्रसक्तौ कर्मणांनोद्बोधकापेक्षा ॥एवंच कालस्याऽपिसहकारित्वात्सुतरांत्वन्मतेस्वतन्त्रतास्यात् ॥ नचकालईश्वरादभिन्नएव अतएव सदेवसोम्येदमग्रआसीदितिश्रुतिःसंगच्छते अन्यथाऽवधारणंनसंगच्छेत कालस्यतदानींसत्वात् अन्यथाऽग्रेपदासंगतेः तथाचकालसत्त्वेऽपिनाऽस्मदभिमतस्वतन्त्रताहानिरितिवाच्यम् ॥ आत्माश्रयप्रसङ्गात् ॥ सर्वस्येश्वराभिन्नत्वेन कर्मणांहेतुत्वनिराकरणप्रयासनैष्फल्यापत्तेश्च ॥ कालोऽस्मिलोकक्षयकृदित्यत्रतु कालशब्देनयमोदानधर्मप्रथमाध्यायोक्तरतत्सहचारीवाकाश्चाविवक्षितोनतुक्षणादिरूपः ॥ लोकक्षयकृदितिविशेषितत्वात् ॥ सर्वाऽऽत्मकस्यतस्ययमाद्यात्मकतायाअविरोधाच्च ॥ एवंकालरूपोऽवतीर्णइत्यत्राऽपिबोध्यम् ॥ एतत्समानाऽर्थत्वलाभात् ॥ कालःकलयतामिति तु विभूतिवर्णनम् अतोमनआदिष्विवतत्राऽपिपरमात्मदृष्टिमात्रविधितात्पर्यकम् ॥ नचैवंकालादेरतिरिक्तत्वे सदेवेत्यवधारणविरोधइतिवाच्यम् ॥ कल्पितस्याऽधिष्ठानाऽनतिरिक्ततयाऽवधारणाऽविरोधात् ॥ ९ ॥

मृग्यं कर्मज्ञानोत्तरं राजादेः फलादित्सायां विलंबादर्शनात्। ईश्वरस्य सर्वज्ञानत्वाच्च॥ नचोद्बोधककालविशेषाभावस्तदिति वाच्यम् । विशेषस्वरूपस्य दुःशकनिर्वक्तृकत्वात् । कालत्वेन कारणत्वे सर्वदोद्बोधप्रसंगाच्च ॥ नाप्युद्बुद्धानामेवेत्यवधारणं संगच्छते । प्रलयपूर्वक्षणे ऽनुद्बुद्धानां तज्जनकत्वोक्तिव्याघातात् ॥ न च सुखदुःखलक्षणफलेच्छां प्रत्येवोद्बुद्धानां हेतुत्वमवधार्यते । नत्विच्छांतरं प्रतीति वाच्यम् । व्यवस्थापकश्रुत्याद्यनुपलंभात् । श्रुतिसिद्धनित्येच्छावादे सर्वोपपत्त्याऽ न्यथा नुपपत्त्यभावाच्च ॥ किं च तथासति "बहुस्यांलोकान्नुसृजा" इत्यादिरूपांसर्गेच्छां प्रत्यनुद्बुद्धानामपि हेतुत्वसिद्ध्या उद्बुद्धाजनकर्मणइच्छोद्भवइति स्वोक्तिविरोधः । सदा सर्गसंभवेन प्रलयोच्छेदश्च । अथ सर्गेच्छायाअपि परंपरया फलानुकूलत्वादुद्बुद्धमात्रजन्यत्वमिति चेत् इयता कालेन कर्माण्युद्बोधयिष्यामीतीच्छायाअपि तथात्वादनुद्बुद्धैर्जननमसंभवि । कश्चायं कर्मसुकालविशेषेणोत्पाद्योधर्मउद्बुद्धत्वमित्युच्यते॥यदिच्छाजनकतावच्छेदकः । न तावत्फलजनकत्वं । इच्छासमवधानं विना फलाजनकत्वेन तज्जननं विनेच्छाऽजनकत्वेन चान्योन्याश्रयात् । नापि फलजननयोग्यत्वं फलसाधनभावबोधकविधिप्रतिषेधवाक्यानुरोधेन योग्यतायाऔत्पत्तिकत्वात्।अयोग्यस्यसाधनत्वाभिलाषायोगात् । नापीच्छाजनकत्वं आत्माश्रयात्। नापितज्जननयोग्यत्वं इच्छानियतपूर्ववृत्तिकफलजननयोग्येष्विच्छाजननयोग्यतायाअपि सार्वदिकत्वात् । नाप्यन्यत् प्रमाणाभावात् । नापिकालविशेषईश्वरेच्छाप्रयत्नासमवहितः स्वयमेव कर्माण्युद्बोधयितुमीष्टे जडत्वात् । जडस्य च चलनमंतरा हेतुत्वायोगादीशः कल्प्यतइति त्वयैव कथनात् । कालःकलयतामिति भगवद्वाक्ये तु कलनमायुर्गणनं नतूद्बोधनं गीताभाष्ये ( "कलयतांकलनंगणनंकुर्वता" ) मिति शंकराचार्यैर्विवरणात्। युक्तं चैतत् कल संख्यानइति भीमसेनोक्तेः । कालस्य कलयितृत्वमपि भगवदिच्छयेत्यन्यत्र विस्तरः । तस्मान्नेदमुद्बोधकत्वे मानं । एतेनैव सापि कर्मोद्बोधद्वारैवेत्यपि निराकृतं अवधारणे मानाभावात् । यदि जडोपीश्वरनिरपेक्षउद्बोधयेत् तर्हि सर्गादिकमपि स्वयमेव कुर्यादिति स्वभाववादापातःसंन्यासिकुचमर्दनन्यायात्। योहिसंन्यासीभूत्वापिकामबुद्धिः स्त्रीकुचौमर्दयेत्सोऽगम्याशतमपि गच्छेत्। विशिष्येतेति प्रयोगाश्चित्यः। हेतुतायाअक्रियात्वेन समानकर्तृकत्वालाभात्समानकर्तृकयोः पूर्वकालइत्यनुशिष्टस्य क्त्वोऽसंभवात् । कल्पनीयेत्यनेन समानकर्तृकत्वविवक्षणे तु विशेष्येति णिजंतात् क्त्वोल्यप् प्रयोक्तव्यः । कश्च स विशेषणरूपोधर्मः येन कालांतरं व्यावर्त्य कालविशेषोवक्तुं शक्येत। सामान्यधर्मवत्त्वे सति तद्व्याप्यावांतरधर्मवत्त्वं हि विशेषत्वं । नहि प्रलये सूर्यगत्यादिकमस्ति "सूर्याचंद्रमसौधातायथापूर्वमकल्पयत्" इति श्रुतेः। येन प्रातःसंगवत्वादयोवसंतत्वादयोवा कालत्वव्याप्यधर्माऽसिद्ध्येयुः॥किं चोद्बोधगतावच्छेदकविशेषत्वनिर्वाहकधर्मोजन्योन वा।[illegible] तस्य सर्वकालवृत्तितयाऽतिप्रसंगतादवस्थ्यम्।आद्ये इच्छाविशिष्टेश्वरजन्योन वा।प्रथमश्चे-

दिच्छायां सर्वनिदानत्वमजन्यतया नित्यत्वं च सिद्धम् ॥ न द्वितीयः कारणांतरस्याप्रसिद्धेः ॥ तस्यापि नित्यत्वे सर्वदा सर्वं कार्यं स्यादित्यतिप्रसंगस्तदवस्थः । अनवस्थत्वेऽनवस्थेत्यादि प्रागेवावादि॥एतेन कालेनोद्बोधककाकांक्षोपशमः प्रत्युक्तः ॥ यत्तु इयंचेत्यादि उद्बोधकापेक्षेत्यंतं तदप्यमंजुलं । सेश्वरादृष्टवादिभिः केवलकालस्य हेतुत्वे कार्ययौगपद्यापातादीश्वरेच्छा नित्यैव सर्वहेतुः स्वीक्रियते कालादिश्च तत्सहकारित्वमुच्यते निरीश्वरैस्तैस्त्वदृष्टादिमात्रेण सर्वं साध्यतेऽतस्त्वदुक्तप्रक्रियोभयविधादृष्टवादिविसंमतैव ॥ यच्च स्वमते राजादिवद्रोषतोषौत्कट्यमभिहितं तदपि ( स्कं. ६ अ० १७ ) नतस्यकश्चिद्दयितःप्रतीपोनज्ञातिबंधुर्नपरोनचस्वः ॥ समस्यसर्वत्रनिरंजनस्यसुखेनरागःकुतएवरोषइत्यादिश्रीभागवतादिवचोविरोधादुपेक्ष्यम् । फलोपधायकत्वं च नियमेन फलजनकत्वं तज्जननयोग्यत्वं वा उभयमपि दूषितचरं । किंच तोषइतरस्य सुखोत्पिपादयिषा रोषश्च दुःखोत्पिपादयिषेति बहवः । तथा च सतीच्छाविशेषयोरोषतोषयोः कर्मपदलक्षितयोरिच्छोद्भावकत्वकथनमसंगतम् । तयोरेव फलदित्सारूपत्वात्॥ किं चास्मिन्कालएव एतत्कर्मजन्यस्य रोषस्य तोषस्य वौत्कट्यं भवत्वित्यत्रापीश्वरेच्छातिरिक्तं किं नियामकं । कालविशेषः स्वभावएव तदिति चेत्स्वभावात्स स्वयमेव फलानि दद्यात् सृष्टिकालइत्यादिव्यपदेशात्सर्गादिकमपि स्वयमेव कुर्यात् कर्माणि वा सर्वं कुर्युः।अतः कृतं प्राकृतवद्रोषतोषवत्त्वेऽप्यशक्यफलदानेन कालकर्माधीनेनेश्वरेण ॥ तद्बोधकश्रुतयस्त्वनुष्ठातुर्जीवस्य जगत्कर्तृत्वादिधर्मैस्तावकतयोपपद्येरन् ॥ अर्थवादानांविधितत्संबंध्यन्यतरस्तुत्यर्थतया विध्येकवाक्यतायाः प्रथमस्य द्वितीयपादे सिद्धेः ॥ ईश्वरं प्रकल्प्य तद्भयप्रदर्शनेन कर्मणि प्रवर्तकतया वा विधिशेषाः स्युः ॥ यथाह भट्टः । इत्याहनास्तिक्यनिराकरिष्णुरात्मास्तितांभाष्यकृदत्रयुक्त्या ॥ दृढत्वमेतद्विषयप्रबोधःप्रयातिवेदांतनिषेवणेनेति ॥ अथ जडस्य चेतनाधीनव्यापारकत्वमाश्रित्येश्वरेच्छायाएव नियामकत्वमुच्येत तर्हि सिद्धमीश्वरेच्छायां कालाद्यजन्यत्वं सर्वनिदानत्वं च । अन्यथा प्रलयोत्तरं स्थितरोषतोषयोरत्यंतांतरायेणौत्कट्यं सृष्टिकाले च स्वल्पांतरायेण तदित्यपि निर्हेतुकमसमंजसं स्यात् । तथा अनंतजीवेषु समकालं सुखदुःखयोर्दर्शनात्तद्धेतुभूतोत्कटानुत्कटानंततोषादीनां युगपदेकाधिकरण्यं लोकविरुद्धमप्यंगीकार्यम् । एवं प्रलयसंनिहितकर्मजनिततोषादिरूपनानेच्छानां सकलप्रलयकालस्थायित्वे प्रागैकालिकीनामपि तासां फलपर्यंतचिरस्थायित्वे च त्रिक्षणावस्थायित्वभंगाज्जीवेच्छातोवैलक्षण्यानपायः तस्मात्सकलश्रुतिसंमतमगुरुभूतं नित्येच्छायाहेतुत्वकथनमेव कमनीयम् ॥ वस्तुतस्त्वित्यादिना तु परित्यक्तपूर्वोप्यदृष्टवादः पुनरुपात्तः ॥ शंकराचार्यैः कर्मणां त्रिक्षणावस्थायित्वस्यांगीकारेण अदृष्टमंतरा कालांतरकरणीयोद्बोधानुपपत्तेः ॥ फलानतिप्रसक्तये कल्प्यमानः सहकारिकालनिष्ठधर्मस्तु नित्योजन्योवेत्यादि विकल्पासहइति दर्शितं प्राक् । यदि चानतिप्र-

संगाय नित्ये काले स्वाभाविकाधर्मविशेषाः क्रमिकाः स्वीक्रियंते तर्हि तान् श्रुत्युक्तायामिच्छायामेव स्वीकुरु । ततश्च नकार्ययौगपद्याद्यतिप्रसंगः । तत्तज्जीवे तत्तत्फलेच्छायावस्तुतोन कर्मजन्यत्वम् "एषउएवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्निनीषती" ति श्रुतौ कर्मणामेव तादृशेच्छाजन्यत्वश्रवणात् ततएवेच्छायाः कर्मतः पूर्ववृत्तित्वनिश्चयात् श्रुतिषु च इतरकारणवादवारणपुरःसरं परमेश्वरस्यैवाभिन्नेच्छाशक्तेरभिन्ननिमित्तोपादानत्वं समर्थ्यते । यथाश्वेताश्वतरे "ब्रह्मवादिनोवदंति किंकारण" मित्यादिना सर्वोत्पत्त्यादिकारणप्रश्नमुक्त्वा "कालःस्वभावोनियतिर्यदृच्छये" त्यृचा कालकर्मादीनां निदानत्वं निराकृत्य "ते ध्यानयोगानुगताअपश्यन्" इत्यादिना ईश्वरस्यैव स्वात्मकस्वाभाविकशक्तेर्निखिलनिदानत्वमुपापादि । एवं श्रीभागवतेपि कालंकर्मस्वभावंचमायेशोमाययास्वया ॥ आत्मन्यदृच्छयाप्राप्तंविबुभूषुरुपाददइति वैविध्येन भवनेच्छायाएव सर्वमूलत्वमुदितम् । श्रुत्यनुसार्येतदर्थविस्तरस्तु तत्वदीपसर्वार्थनिर्णयावरणभंगसुबोधिनीतत्प्रकाशेभ्योवगंतव्यः । तथा चैष प्रक्रियासंक्षेपः भगवान् बहुस्यामितीच्छाकाररूपेण तादृशेछारूपेण वा भवन् स्वस्मिंस्तिरोभावितानां नित्यसर्ववस्तूनां क्रमेणाभिव्यंजनाय स्वात्मकं चेष्टारूपत्वात्क्रियाशक्तिप्रधानमीषत्प्रकटसदंशमात्रं नित्यगतिं लोकव्यवहारोपयोगिकालं प्रथममाविष्करोति । तदवयवांश्च घटीमुहूर्तादीन् क्रमिकान्नियमयति । तैत्तिरीयाणां नारायणप्रपाठके "सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषादधि कलामुहूर्ताःकाष्ठाश्चाहोरात्राश्चसर्वशः अर्धमासामासाऋतवःसंवत्सरश्चकल्पता" मिति श्रवणात् । अष्टमस्कंधपंचमाध्याये (श्लो० ४२) भ्रुवोर्यमःपक्ष्मभवःस्तुकालःप्रसीदतांनःसमहाविभूतिरित्युत्पत्तिस्मरणात् । द्रव्यंवयःकर्मगुणान्विशेषंयद्योगमायाविहितान्वदंतीत्यनुपदमुक्तेश्च । तस्य तिरोहिताभिव्यंजकत्वं तु । सतोभिव्यंजकःकालइत्येकादशस्कंधवाक्यात् । भगवद्रूपत्वं कालोस्मीतिगीतावाक्यात् । चेष्टारूपत्वं योयंकालस्तस्यतेव्यक्तबंधोचेष्टामाहुश्चेष्टतेयेनविश्वं । निमेषादिर्वत्सरांतोमहीयानितिदशमस्कंधतृतीयाध्यायवाक्यात् । एवं नित्यगतित्वादिकमपि गुणव्यतिकराकारोनिर्विशेषोप्रतिष्ठितइत्यादिश्रीभागवतप्रभृतिवचःप्रचयसिद्धं निबंधात्सुबोधिनीतश्च बोद्धव्यम् ॥ अप्रतिष्ठितोनित्यगमनः । क्रमिकेषु तत्तत्कालावयवेषु च यथेच्छं नानाकार्याणि क्रमेण कर्तव्यतया परिच्छिनत्ति ईश्वरेणपरिच्छिन्नंकालेनाव्यक्तमूर्तिनेतिश्रीभागवतोक्तेः ॥ अयमेवालोचनयत्नः श्रुतिषुतपःशब्देन सूत्रे च कृतप्रयत्नशब्देनोच्यते । अतः स्वेच्छया तत्तत्कालएव तत्तत्कार्यं करोतीति न सर्वकार्ययौगपद्यम् । तथा "पुरुषएवेदꣳसर्वंयद्भूतंयच्चभव्यं ॥ तदेवभूतंतदुभव्यमाइद" मित्यादिश्रुतिषु ब्रह्मात्मकत्वान्नित्यानामपि प्रापंचिकवस्तूनां क्रीडोपयोगिनो भावित्वभूतत्वादिव्यवहारास्तत्कृताभिव्यक्तिनिबंधनाएव लोकज्ञापनार्थं च सूर्यगत्यादिना तं परिच्छिनत्ति ॥ ततश्च चिरं क्षिप्रमित्यादिव्यवहाराः एवं (श्लो० १९) सर्गःप्रवर्ततेतावत्पौर्वापर्येणनित्यशः ॥ महान्गुणविसर्गार्थःस्थित्यंतोयावदीक्षणमित्येकादशस्कंधचतुर्विंशाध्या-

यवाक्यात् । यथापर्यालोचनमाप्रलयमखिलं विधायेच्छया प्रलयं कुर्वन् स्वकालश-
क्तिरंहसा सर्वमक्षराख्यस्वरूपे तिरोभाव्यांते व्यवहारगोचरं कालमपि तिरोभावय-
ति । व्यक्तेव्यक्तंकालवेगेनयातेभवानेकःशिष्यतेशेषसंज्ञइत्यादिवचनेभ्यः कालस्या-
प्युत्पत्तिश्रवणाच्च॥द्वितीयस्कंधे (अ० २) नयत्रकालोनिमिषांपरःप्रभुरित्यक्षरावस्थायां
तदभावबोधनाच्च ॥ न चाधुनिकदृष्ट्या कालोत्पत्तिमसंभाव्य तदुत्पत्तिश्रुतिरुपचारे-
णान्यथानेया तस्य स्वातंत्र्येण नित्यत्वे सदेवेत्यादिविरोधात् । एकविज्ञानेन सर्ववि-
ज्ञानप्रतिज्ञाबाधाच्च ॥ लौकिकदृष्टेः प्रबलत्वाश्रयणे त्वाकाशोत्पत्तिश्रुतिरप्यसंभवा
त्तथैवान्यथा नीयेत ॥ सूत्रकारस्तु अविरोधतृतीयपादे ( सू ३ ) " गौण्यसंभवा "
दित्यादिना तत्रोपचारमाशंक्य ( सू० ६ ) " प्रतिज्ञाहानिरव्यतिरेका" दित्यादिना उक्त-
हेतुतएव समाधत्ते। तस्मात्सृष्टीच्छातः पूर्वमाकाशादेरिव कालस्याभावात्तदुक्तप्रक्रिया
बाधितैव॥ न च कालाभावे इच्छातः पूर्वमित्युक्तिरेष व्याहतेतिवाच्यम्। आधुनिकदृ-
ष्टिमनुरुद्ध्य गोधनार्थमेव तथोक्तेः ॥ एतेन यदासिसृक्षति तदासृजतीत्याद्युक्तयोपि
व्याख्याताः॥ अलौकिककालाश्रयाद्वा तथोक्तयउपपद्येरन्। व्याघातस्तु सृष्टीच्छातः
पूर्वं कालोस्तीत्युक्तावपि तुल्यः । एतत्कालाश्रयकालांतराभावात् ॥ किं चेदानींत्वे
पूर्वकालउत्तरकालइत्यादिव्यवहारः किंहेतुकः स्यात् । घटादीनां परापरत्वे हि
तत्तत्कालसंबंधमूलके कालावयवानां तु तथात्वे क्रमनियामकभगवदिच्छामूलके
एव मंतव्ये । अनंगीकारे संहाराव्यवहितप्राक्क्षणइत्यादिस्त्वदुक्तिरपि बाध्येत ॥
अलौकिककालस्तु प्रलयेप्यस्त्येव । अहमेवाक्षयःकालइतिभगवद्वाक्यादक्षयत्वाव-
गतेः ॥ कालःकलयतामित्यायुर्गणनादिलोकव्यवहारोपयोगिकालमुक्त्वा ततः पृथ-
क्कीर्तितोऽयमलौकिकएव । अभ्यासस्य भेदकत्वं तु पूर्वतंत्रे कर्मभेदाध्यायद्वितीयपादे
( सू. २ ) " एकस्यैवंपुनःश्रुतिरविशेषादनर्थकंहिस्या " दित्यधिकरणे मीमांसितम् ॥
अत्राहमेवेत्येवकारेण विभूतित्वं व्यवच्छिद्य साक्षात्स्वरूपत्वं बोध्यते । इत्थं चैनं
कालमाश्रित्य इयता कालेन पुनः प्रपंचमाविर्भावयिष्यामीतीच्छा प्रलयेपि सुवचा ।
एकादशे ( अ० २२ श्लोक १४ ) मयाकालात्मनाधात्रेतिवाक्यात् ( स्कं० ७ अ०
९ श्लो० ३३) तस्यैवतेवपुरिदंनिजकालशक्त्यासंचोदितप्रकृतिकर्मणआत्मगूढमित्या-
द्युक्तेश्चापरिमाणंस्वात्मनैव अचिंत्याखिलशक्तित्वात् । अतस्तादृशेच्छानुरोधादेव
बहुस्यामिति तदाकाराविर्भावः । त्वन्मतेनित्ये काले यथा सृष्ट्यादितत्तत्कार्यानुकू-
लावस्तुस्वभावसिद्धाधर्मविशेषाः सर्वकार्यासांकीर्ण्यहेतवस्तथा नित्यायां भगवच्छ-
क्तित्वादचिंत्यायामिच्छायामेव संभवंतीति नानुपपत्तिः काचित् ॥ यच्च ( एवं च
कालस्येत्यादि अवधारणाविरोधादित्यंतम् ) तद्दुर्बलं । स्वात्मकस्य स्वयमाविष्कृतस्य
स्वेच्छया सहकारितया स्थापने नाऽस्वतंत्रतागंधोपि । " सदेवसोम्येदमग्रआसीदे-
कमेवाद्वितीय " मित्यादिश्रुतिषु तु पक्षद्वयमाकरेषु प्रसिद्धम् । कालस्य सर्वतः पूर्व-

माविर्भावित्वेन सर्वांते तिरोभावित्वेन च वस्तुमात्रे तत्संबंधमव्यभिचरितमनुभवतां जीवानां बोधनायाद्यपदात्कालोपरंजनेनमूलकारणं तत्र निरूप्यते । सर्वत्रगमाचित्यं- चेत्यादौ देशोपरंजनवदित्येकः पक्षः । सदतिरिक्तवस्तुसत्वेऽवधारणंसहकारिप्रतिषेध- काद्वितीयपदं च व्याकुप्येत् । इदानींतनप्रतीत्यनुसरणे तु कालरहितायाइव देशरहि- तायाअपि सत्तायाअप्रसिद्धेराकाशस्यैव मुख्यदेशत्वाच्चासीदितिपदेन सोप्याक्षिप्येत। सर्वत्रगमितिस्मरणाच्च ॥ तथा च सति ( अ० ९ पा. ३ सू. १ ) "नवियदश्रुते" रित्यधिकरणबाधः । एतेन कालोत्पत्तिश्रुतौ भूतइत्यधिकारे विहितलिट्प्रयोगात्का- लाक्षेपशंकाऽपि व्युदस्ता । कार्यमात्रस्याकाशे जनना "दाकाशःसंभूत" इति श्रुतावपि तदाक्षेपस्य दुर्वारत्वात् ॥ अथ सृष्ट्यनंतरमंतरिक्षस्य देशत्वं प्रागुत्पत्तेस्तु ब्रह्मस्वरूपमेव देशइत्युच्येत चेत्सृष्ट्युत्तरमेव कालस्य कार्याश्रयत्वं । पूर्वं तु ब्रह्मै- व कालइत्युक्तिरपि युक्तिमती ॥ इत्थं चाद्यपदार्थः कालोभगवानेवेति निष्क्लेशले- शोद्वितीयः । अयमेव नचेत्यादिना त्वयाऽनूदितः । न चात्राद्यशब्दार्थस्याधारत्वं सतआधेयत्वं च प्रतीयतइति तयोरैकार्थ्यआत्माश्रयः शंक्यः । भगवति तस्यादोष- त्वात् महिम्नि स्वे महीयतइति वाक्यात् अन्यथा तदनिस्ताराच्च ॥ तथा हि काल- स्याधिष्ठानं ब्रह्म उताहो ब्रह्मणोधिष्ठानं सः । आद्ये प्रकृतश्रुतिप्रतीताधाराधेयभाव- विपर्यासोब्रह्मणः स्वातिरिक्ताधाराभावादात्माश्रयश्च तदवस्थः । द्वितीयश्चेत्त्वया वि- धास्यमानस्यावक्षारणविरोधसमाधेर्बाधः।कालस्यापि स्वातंत्र्येणानादित्वे षडस्माक- मनादयइति सिद्धांतभंगः । कालशब्दशक्यतावच्छेदकरूपेण सत्वे पूर्वं सर्वस्याव्याकृ- तत्वं बोधयतः (अ० २ पा० १ सू० १७) "असद्व्यपदेशान्नेतिचेन्नधर्मांतरेणवाक्य- शेषा" दितिसूत्रस्य "असद्वाइद" मित्यादितद्विषयवाक्यानां च पीडाप्रसंगः। विद्य मानस्य तस्य दर्शनावश्यंभावात्सोनुवीक्ष्येत्यदर्शनश्रुतिविरोधः । षडनादित्वसिद्धांत- भंगादिदूषणानि कर्मप्रवाहस्यानादित्वेपि ध्येयानि । ईश्वरभिन्नत्वेनेत्यत्र वीश्वराभि- न्नत्वेनेति स्यात् । सिद्धांते भेदस्यानंगीकरणात्कर्मणां भगवदात्मकत्वं तदिच्छया तत्र तत्र कारणत्वं च न वयं निरस्यामइति आक्षेपप्रयासएव व्यर्थः ॥ कालोस्मी- त्यत्र कालः क्षणादिरूपएव । तस्य भगवद्रूपत्वे प्रमाणबाहुल्यात् । यथा धर्मग्रंथे- ष्वधिकमासदानप्रस्तावे पाद्मे कलाकाष्ठादिरूपेणनिमेषघटिकादिना ॥ योवंचयति- भूतानितस्मैकालात्मनेनमः ॥ यस्यहस्तेगदाचक्रमित्यादि तृतीयस्कंधे षड्विंशाध्याये (श्लो० १७) प्रकृतेर्गुणसाम्यस्यनिर्विशेषस्यमानवि चेष्टायतःसभगवानकालइत्युपल- क्षितः एकादशस्य चतुर्विंशे प्रकृतिर्ह्यस्योपादानमाधारःपुरुषःपरः । सतोभिव्यंजकः कालोब्रह्मतत्त्रितयंत्वहम् ॥ तत्रैव मयाकालात्मनाधात्रेति सप्तमस्कंधाष्टमाध्याये (श्लो० ९) सईश्वरःकालउरुक्रमोसौ तत्रैव नवमाध्याये (श्लो० २२) सत्वंनि- हत्यविजितात्मगुणःस्वधाम्नाकालोवशीकृतविसृज्यविसर्गशक्तिः । (श्लो० २४) नेच्छामितेविलुलितानुरुविक्रमेणकालात्मनोपनयमांनिजभृत्यपार्श्वम् । दशमस्कंधेइं-

ह्रस्तवे ( अ० २७ श्लो० ६ ) पितागुरुस्त्वंजगतामधीशोदुरत्ययःकालउपात्तदंडः । तृतीयस्कंधेपरमाण्वादिलक्षणप्रस्तावे ( अ० ११ श्लो० ३ ) एवंकालोप्यनुमितः सौक्ष्म्येस्थौल्येचसत्तम ॥ संस्थानभुक्त्याभगवानव्यक्तोव्यक्तभुग्विभुः तृतीयस्कंध-स्यैकोनत्रिंशे ( श्लो० ३७ ) रूपभेदास्पदंदिव्यंकालइत्यभिधीयते ( श्लो० ३८ ) सविष्ण्वाख्योऽधियज्ञोसौकालः कलयतांप्रभुः महाभारतीयविष्णुनामसहस्रे क्रतुः सुदर्शनःकालः एवंवचनांतराण्यपि तत्र तत्र प्रसिद्धानि नचैतेषुसर्वेषु कालशब्देन यमादिः परिग्राह्यः उपपत्तिलिंगप्रकरणादिविरोधात् ।अन्यथा कालनिरूपणस्य प्रायेणोच्छेदप्रसंगात् ॥ दुराग्रहे च कालःकलयतामित्यत्रापि त्वदभिमतोयमसहचारी शक्योवक्तुं । मारकत्वेन तस्य सर्वायुःपरिगणकत्वौचित्यात् । इष्टापत्तौ कालस्य कलयितृत्वमित्यादिस्वोक्तिव्याघातः ॥ न च कालोस्मीत्यत्र क्षणादिरूपस्य परिग्रहे लोकक्षयकृदितिविशेषणासंगतिः शंक्या । तृतीयस्कंधस्यैकोनत्रिंशे ( श्लो० ४५ ) सोनंतोंतकरःकालोनादिरादिकृदव्ययः । जनंजनेनजनयन् मारयन्मृत्युनांतकमित्यंतकस्यापि मारकत्वकथनेन मुख्यतया लोकक्षयकृत्त्वस्य तत्रैव सिद्धेः॥ किं च कालोस्मीत्यत्रोपक्रमे द्रष्टुमिच्छामितेरूपमैश्वरं । परमंरूपमैश्वरमितिसाक्षादैश्वर्यं दिव्यचक्षुर्मात्रदृश्यत्वं चोक्तं । उपसंहारकाले रूपंपरंदर्शितमात्मयोगादित्यादिना सर्वतः परत्वं देवानामपि सुदुर्दर्शत्वं वेदयज्ञतपःप्रभृत्यसाध्यदर्शनकत्वं च निरूपितं । यमं तु जंतवोदुष्कृतमपि कृत्वा प्राकृतेनैव चक्षुषा पश्यंतीतिकालशब्देन यमपरिग्रहे तद्विरोधः । तथा वसुरुद्रादित्यब्रह्मेशप्रभृतिसर्वदेवाश्रयत्वानादिमध्यांतत्वशशिसूर्यनेत्रदीप्तहुताशवक्त्ररूपवत्त्वादिबोधकानि पूर्ववाक्यानि गरीयसेब्रह्मणोप्यादिकर्त्रे नत्वत्समोस्त्यभ्यधिकःकुतोन्यः सहस्रबाहोभवविश्वमूर्ते-इत्यादीन्युत्तरवाक्यानि च पीड्येरन् । एवं आख्याहिमेकोभवानितिप्रश्नस्य त्वद्रीत्या यमोस्मीत्युत्तरे सति वायुर्यमोग्निर्वरुणःशशांकःप्रजापतिस्त्वंप्रपितामहश्चेतिसाधारण्येनसार्वात्म्यकथनमसंगतं स्यात् । अतः शंकराचार्यैरपि गीताभाष्ये न तथाख्यातं ।भाष्यव्याख्यातानंदगिरिश्च तत्र "कालःक्रियाशक्त्युपहितःपरमेश्वर" इति व्याचष्ट ॥ दानधर्मप्रथमाध्यायोक्तोयमसहचारी कश्चिदित्युक्तिस्तुभ्रमादेव । तत्रेश्वरस्यैव कालरूपस्य निरूपणात् ॥ तथाहि । तत्र ( श्लो० ५० ) प्रचोदितोहंकालेनपन्नगत्वामचूचुदमिति कालस्य प्रथमतरं प्रतिपादके मृत्युवाक्ये कालेनेश्वरेणेत्येव नीलकंठचतुर्धरोव्याचख्यौ । अग्रे चानुपदं ( श्लो० ५१ ) यथावायुर्जलधरान्विकर्षतिततस्ततः ॥ तद्वज्जलदवत्सर्पकालस्याहंवशानुगः ॥ सात्विकाराजसाश्चैवतामसायेचकेचन ॥ भावाःकालात्मकाःसर्वेप्रवर्ततेहजंतुषु ॥ जंगमाःस्थावराश्चैवदिविवायदिवाभुवि ॥ सर्वेकालात्मकाःसर्पकालात्मकमिदंजगत् । प्रवृत्तयश्चलोकेस्मिंस्तथैवचनिवृत्तयः ॥ तासांविकृतयोयाश्चसर्वंकालात्मकंस्मृतम् । आदित्यश्चंद्रमाविष्णुरापोवायुःशतक्रतुः । अग्निःखंपृथिवीमित्रःपर्जन्योवसवोदितिः । सरितःसागराश्चै-

वभावाभावौचपल्लव ॥ सर्वैकालेनछृज्यंतेन्हियंतेचपुनःपुनरिति । अत्र प्रथमश्लोकः-मृत्युर्धावतिपंचमइत्यादिश्रुतिसिद्धं भगवल्लिंगं । द्वितीये येचैवसात्त्विकाभावाइत्यादि-स्मरणसिद्धं तत् । तृतीयादिषु चाशेषजगदात्मकत्वं जगज्जन्मादिकारणत्वं च समन्व-याध्यायसिद्धं ब्रह्मलिंगमेव । विष्णुश्चात्रसत्वोपाधिः गुणोपाधिब्रह्मविष्णुशिवानां कालात्मकेश्वरनियम्यत्वं तृतीयस्कंधस्यैकोनत्रिंशे गुणाभिमानिनोदेवाइत्यत्र स्फुटं॥ अग्रे च लुब्धकं प्रति ( श्लो० ६७ ) याकाचिद्देवचेष्टास्यात्सर्वाकालप्रचोदिता ॥ पूर्वमेवैतदुक्तंहिमयालुब्धककालतः । तस्माद्भौकालवशावावांनिर्दिष्टकारिणौ । इदमपि मत्तःसर्वंप्रवर्त्तते योयंकालइत्यादिप्रमाणसिद्धं तल्लिंगमेव ॥ अतएवात्रापि चतुर्धरः परमार्थतः परिहारमाह येति ईश्वराधीनोजनः सदसद्वाकुर्वाणो न स्तुत्यो न वा निंद्यइतिभाव इतिव्याख्यातवान् ।अग्रे कर्मानुसारेण फलदातृत्वमपि फलमत-इत्यधिकरणसिद्धम् ब्रह्मलिंगमेव । कर्मपारतंत्र्योक्तिस्तु कृतप्रयत्नापेक्षत्वादिति प्रागे-वावोचाम। अतआनुशासनिकपर्वप्रथमाध्यायः कालोस्मीत्यादौ क्षणादिरूपग्रहणएव साधकः। एतेन कालरूपोवतीर्णः कालात्मनानिवसतायदुदेवगेहे कालरूपोप्यन्वमोदत इत्यादीन्यपि व्याख्यातानि । स्वरीत्या कालोस्मीत्येतत्समानार्थकत्वलाभात्तु कालः कलयतामित्यत्रापित्वेदंप्रसहचारिणं कुतो न कल्पयसि । वस्तुतस्तु अतोस्मि-लोके वेदेचप्रथितः पुरुषोत्तमः॥ कृष्णस्तुभगवान्स्वयं वसुदेवगृहेसाक्षादवतीर्णःपरःपु-मान् ।गूढंपरंब्रह्ममनुष्यलिंगमित्यादिप्रमाणेभ्यःपूर्णपुरुषोत्तमतया प्रतीतमपि श्रीकृष्णं-यमावतारत्वोक्त्याऽवजानन् प्रकृत्या राक्षसोसुरो वाऽसि । अवजानंतिमांमूढाइत्य-त्र राक्षसीमासुरींचैवेतिचरमहेतुकथनात्। तदात्वे यमावतारस्तु विदुरएव भारतभाग-वतादिषु प्रसिद्धः।नापि मुखे चंद्रत्वस्येवारोपेणापरमात्मनि परमात्मत्वस्य दृष्टिः कर्त-व्येति विभूत्यध्यायतात्पर्यं।किं तूपक्रमोपसंहारयोः दिव्याह्यात्मविभूतयः नांतोऽस्ति-ममदिव्यानांविभूतीनामित्यलौकिकत्वकथनात्। याभिर्विभूतिभिर्लोकानिमांस्त्वंव्या-प्यतिष्ठसीतिभगवतएव तत्तद्विभूतिरूपेण सर्वत्र स्थितिवचनात् । ममतेजोंशसंभवमि-तित्वांशत्वोक्तेश्च ॥ विभूतयोहि सर्वधर्माश्रयस्य भगवतआवेशिततत्तद्धर्माविशिष्टांश-रूपाः काश्चित्त्ववताररूपाअपि । अतईश्वरस्य सर्वधर्माश्रयत्वसर्वशक्तित्वसर्वरूपत्व-विज्ञानफलकं तत्र तत्र वास्तवपरमात्मत्वपरिचिंतनमेव तत्तात्पर्यगोचरः । त्वांसदा-परिचिंतयन् चिंत्योसिभगवन्मयेत्युक्तेः ॥ कालस्यातिरिक्तत्वे सदेवेत्यवधारणविरो-धोदुरपनोदः। न च कल्पितस्याधिष्ठानानतिरिक्ततया तदविरोधोवाच्यः।आत्माश्रय-निराकरणे निराकृतत्वात् ।तथा सत्यविद्याकार्यत्वापत्त्या कार्यस्य च कारणाश्रितत्व-नियमेन " तमआसीत्तमसागूढमग्र" इतित्वद्विवक्षितविषयाऽविद्यायाः कालाश्रितत्व-बोधकश्रुतिविरोधात् । अभ्रांतस्येश्वरस्य जीवकल्पितकालादर्शनेन इयता कालेन कर्माण्युद्बोधयिष्यामीत्यादीच्छानुपपत्तेश्च ॥ देवदत्तेन शुक्तिकायां रजते कल्पितेऽपि नहिं शुक्तिरभ्रांतोयज्ञदत्तादिर्वा तेन रजतेन तस्य भूषणभाजनादि निर्माति

निर्भिंसति वा ॥ किं च प्रलये जीवाः स्वाविद्यया अधिष्ठाने पदार्थान् कल्पयितुं प्रभवंति न वा । आद्येघटादियावत्प्रापंचिकवस्तूनि कल्पयेयुरिति प्रलयोच्छेदः । द्वितीये कालमपि न कल्पयेयुरिति प्रकृतश्रुतावग्रपदार्थस्तस्योद्बोधकत्वादिकल्पनं च चिंत्यमेव । कल्पनीयवस्तुषु विभागस्तु नियामकाभावादशक्यवचनः । प्रलये कालमात्रस्य कल्पनं सृष्टौ तु घटादीनामपीत्यत्रेश्वरेच्छायानियामकत्वे तु घट्टकुटीप्रभातं ॥ किं च शुक्तिरजतादिवदधिष्ठाने वस्त्वंतरकल्पनं हि सादृश्यसंस्कारादिसापेक्षं । ब्रह्मणोनिर्धर्मकत्वेन सादृश्यस्य सत्यकालांतरसाक्षात्काराभावेन संस्कारस्य चानुपपत्त्या प्रकृतेकल्पनाऽसंभवः ॥ अविद्यैकवादिकेन जीवेनैव कदाचिद्दुष्कृतस्य कदाचित्सुकृतस्य च कल्पने हेतुर्मृग्यः । ईश्वरेच्छायास्तज्जनकत्वे तस्याः कर्मजन्यतयाऽन्योन्याश्रयात् ॥ तथा प्रलयकाले तैः कर्मणां कल्पनेप्रतिबंधकमप्यन्यदन्वेष्टव्यम् । कल्पनहेतोरविद्याया विद्यमानत्वात् । कल्पने तु प्रलयोच्छेदः ॥ अविद्यायाब्रह्मणि लयस्वीकारे कर्मणामप्यभावात्कैरिच्छा जन्येत ॥ पुनः कल्पनं चोच्छिद्येत ॥ इच्छायाःप्रतिबंधकत्वं तु तव दुर्वचम् ॥ प्रलये त्वया नाशमंगीकृत्य सृष्टिप्राक् क्षणे कर्मभिस्तस्याजननस्यादरात् ॥ अपि च कल्पितानि कर्माणि अभ्रांतस्येश्वरस्य ज्ञानविषयाएव नभवितुमर्हंति ॥ येन रोषतोषौ जनयेयुः ॥ अपि च कालविशेषत्वनिर्वाहकः कालनिष्ठः कादाचित्कोधर्मोपि जीवकल्पितस्त्वया वक्तव्यः ॥ तथा सति तदैव तस्मिंस्तस्य तैः कल्पने कारणं मृग्यम् ॥ कर्मणां तत्कारणत्वेऽन्योन्याश्रयादिप्रसंगात् ॥ किं च सर्वैः कर्मणां परस्परविलक्षणानां कल्पने कालस्य तन्निष्ठधर्मस्य चैकस्यैव सर्वैर्युगपत्कल्पने च किंनियामकं । एतेन कालविशेषः कर्मविशेषकल्पनेहेतुरित्यप्यपास्तम् । उक्तादिदोषानिस्तारात् ॥ एतद्भयात्कालादीनित्यत्वे ब्रह्मातिरिक्तत्वे चावधारणविरोधस्तदवस्थइति दिक् ॥ अस्माकं तु सर्वं ब्रह्मात्मकं प्रलये तत्र लीनं अव्याकृतत्वेन सृष्टौ तु पुनर्व्याकृतत्वेन व्यवहारयोग्यमिति न काप्यनुपपत्तिः ॥

अथैच इन्द्रोमायाभिःपुरुरूपईयते मायांतुप्रकृतिंविद्यादित्यादिश्रुतिभिः संभवाम्यात्ममाययेत्यादिस्मृतिभिर्मायायाजगद्धेतुत्वं निश्चीयत इत्युक्तम् ॥ तत्रोच्यते ॥ तादृशश्रुतीनां यदि त्वदभिमतपारिभाषिकमायावाचकत्वं स्या त्तदा तस्याजगद्धेतुत्वमपिस्यात्तदेव न संभवति ॥ इन्द्रआत्मा मायाभिरिन्द्रियवृत्तिभिःपुरुरूपो बहुरूपईयते प्रतीयतेतत्तदाकारोभूत्वा प्रतीयतइत्यर्थः ॥ मायांतुप्रकृतिंविद्यादित्यत्र भूतसूक्ष्मरूपा प्रकृतिर्वि-

वक्षिता। अतएव सांख्यसिद्धा प्रकृतिरपि न संभवति । संभवा
म्यात्ममायया इत्यत्रापि मायापदेन सामर्थ्यं विवक्षितंनतु सदस-
त्वाभ्यामनिर्वचनीयंभावरूपमज्ञानम् । प्रमाणाभावात् ॥ ननु
तादृशज्ञानास्वीकारेजगतः सत्यत्वमेव स्वीकरणीयं । तत्स्वी
कारेचद्वैतापत्तिरद्वैतश्रुतिव्याकोपश्च स्यात् । तत्स्वीकारेचमा-
यिकस्य मिथ्यात्वेन त्रैकालिकनिषेधप्रतियोगित्वात्सा-
र्वकालिकमद्वैतं श्रुतिसिद्धं संगच्छतइतिचेन्न । जगतः
सत्यत्वं ब्रह्मस्वरूपकारणात्मना सर्वस्य ब्रह्मोपादानकत्त्वेन
ब्रह्माभिन्नत्वात्कुतोद्वैतापत्तिः कथंच श्रुतिविरोधः ॥ " तदा-
त्मानंस्वयमकुरुत " इत्यादिश्रुत्यनुरोधेन ब्रह्मणएवोच्चनीचादि-
भावेनपरिणतत्वान्मायाकल्पने बीजाभावः । ब्रह्मणएव सर्व-
भवनसमर्थत्वात् ॥ ननु मायानंगीकारे बंधस्याविद्याकृतत्वा-
भावेन सत्यत्वे सत्यस्य च ज्ञानानिवर्त्यत्वा " तरति शोकमात्म-
वि " दित्यादि श्रुतिविरोधः ॥ तत्स्वीकारे चाविद्याकृतस्य रजत-
स्य शुक्तिज्ञानान्निवृत्तिदर्शनेन ब्रह्माविद्याकृतस्य तस्य ब्रह्मज्ञा-
नान्निवृत्यङ्गीकारे तादृशश्रुतिसंगतिरितिचेन्न । बन्धस्याविद्या-
कार्यत्वाभावेपि ब्रह्मज्ञानेन तत्कृपया निवृत्तिस्वीकारे श्रुतिवि-
रोधाभावात् ॥ नहि काशीमरणोत्तरशिवदर्शनतत्कृततारकोपदे
शोत्तरमोक्षस्वीकारेपि "काशीमरणान्मुक्ति" रितिश्रुतिविरोध-
स्तवसंमतः ॥ "किंचेंद्रोमायाभिःपुरुरूपईयत " इति मंत्रस्य त्व-
दभिमतरीत्या व्याख्यानेपि मायायाः पुरुरूपत्वज्ञानएव हेतु-
त्वं नतु पुरुरूपभवने " रूपंरूपंप्रतिरूपोबभूवे" त्यत्र मायाभिरि-
त्यनुक्त्वा उत्तरार्धएव तथोक्तेः ॥ युक्तंचैतत् ॥ कारकविभ-
क्तीनां क्रिययान्वयस्योचितत्त्वात् ॥ नहि काष्ठैस्तण्डुलः पच्य-

तइत्यत्र काष्ठकरणकत्वस्य तंडुलेऽन्वयः कस्यचित्संमतस्तण्डुलत्वे वा । येन बहुरूपत्वे मायाकरणकत्वस्यान्वयस्त्वदभिमतः स्यात् ॥ नच पुरुरूपज्ञानस्य मायिकत्वे पुरुरूपत्त्वस्य सुतरां मायिकत्त्वान्ममाभीष्टसिद्धिरिति वाच्यम् । मायिकज्ञानविषयस्य मायिकत्वमेवेतिनियमाभावात् ॥ तादृशनियमस्वीकारे मायिकाखण्डाकारवृत्तिविषयस्य ब्रह्मणोऽपि मायिकत्वेन मिथ्यात्वापत्तिः ॥ नच तादृशवृत्तिविषयस्य परिच्छिन्नत्वेन मिथ्यात्वमिष्टमेवेतिवाच्यम् । तस्यापि मिथ्यात्वे शून्यवादापत्तिः ॥ किंच परिच्छिन्नज्ञानान्मोक्षस्वीकारे घटादिज्ञानान्मोक्षापत्तिः ॥ घटाद्याकारवृत्तिरूपज्ञानस्यापि घटादेः कल्पितत्वेन कल्पितस्यचाविद्यानाश्रयत्वेन घटाद्यवच्छिन्नचैतन्यगताविद्यानाशार्थं तद्विषयकत्वस्यैवांगीकरणीयत्त्वात्तु तस्मान्मायिकज्ञानविषयस्य मायिकत्वमेवेतिनियमोभवन्मतएव दोषावहइति नादरणीयः ॥ यत्तु विवर्तवादे दृष्टेरेव सृष्टित्वान्मायिकविज्ञानविषयस्याऽमायिकत्वासिद्धेः ॥ नहि शुक्तिरजतविज्ञानविषयस्य रजतस्यामायिकत्वमित्युक्तं । दृष्टिसृष्टिवादस्यैव तुच्छत्वात्ततुच्छतरमेव ॥ तथाहि दृष्टेरेव सृष्टित्वादिति वदतादृष्टिर्विज्ञानमेवसृष्टिरित्यभ्युपगतं तन्नसंभवति ॥ दृग्दृश्ययोर्जडचेतनयोस्तमःप्रकाशवद्विरुद्धस्वभावयोरैक्यासंभवादेकस्मिन्कर्मकर्तृभावासंभवेन प्रकाश्यप्रकाशकभावानुपपत्तेश्च ॥ननु दृग्दृश्ययोर्भिन्नसत्ताकत्वं यदि स्यात्तदा विरुद्धस्वभावत्वमपि स्यात्तदेव नोपेयते । दृश्यस्य दृष्टिभेदे प्रमाणाभावात् ॥ अतएव ज्ञानस्वरूपमेवाहुर्जगदेतन्मनीषिणः अर्थस्वरूपं भ्राम्यंतः पश्यंत्यन्ये कुदृष्टयइति स्मृतिरपि संगच्छते । किंतु दृष्टिरेव पूर्वपूर्ववासना-

भिर्घटाद्याकारेण परिणतास्सृष्टिरित्युच्यते। यथा स्वप्ने बाह्यघटादेरभावेपि जाग्रद्वासनाविशिष्टं विज्ञानमेव तत्तदाकारं भवति। तथैव प्रकृतेपीति नानुपपत्तिः। नापि कर्मकर्तृभावविरोधः। स्वप्ने एकस्यैव कर्मकर्तृत्वप्रकाश्यप्रकाशकत्वयोर्दर्शनेन तादृशविरोधे मानाभावात्॥ नच स्वप्नेघटादयः सत्येवेति वाच्यम्। "नतत्ररथानरथयोगा" इत्यादि श्रुतिविरोधापत्तेः॥ अतएव "मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वा" दिति सूत्रमपि संगच्छते ऽन्यथा तद्विरोधोपि स्यादित्यलम्। दृष्टिरेव सृष्टिरित्यत्र दृष्टिर्विज्ञानमित्युक्तम्। तत्र विज्ञानपदेन ब्रह्मरूपं विज्ञानं विवक्षितं। "विज्ञानमानंदंब्रह्मेति श्रुतेः"॥ अथवा बुद्धिर्विवक्षिता "विज्ञानंयज्ञंतनुत" इत्यादि श्रुतेः। ब्रह्मणःसाधनांतरानपेक्षस्यसृष्टिरूपत्वे सृष्टेर्नित्यत्वापत्तिः निवर्त्तकवादहानिश्च। नद्वितीयः बुद्धेः पुरुषभेदेन भिन्नत्वात्कस्य बुद्धिःसृष्टिरूपेत्यत्र विनिगमकंदुर्लभं॥ननु पुरुषभेदेन सृष्टिर्भिन्नैव। यथैकस्यां शुक्तौदशपुरुषाणां रजतभ्रमे जाते पुरुषभेदेन रजतं भिन्नंभिन्नमेवोत्पद्यते नत्वेकमेव। अतएव पुरुषस्याधिष्ठानसाक्षात्कारे जाते तदज्ञाननिवृत्त्या तत्कार्यरजतनिवृत्तावपि द्वितीयपुरुषाज्ञानकल्पितरजतसत्वेन तस्येदं रजतमितिभ्रमोजायते। नच पुरुषस्यापि सृष्ट्यंतर्गतत्वात्तस्यापि कल्पितत्वा द्वितीयपुरुषकल्पितत्वं वाच्यं। तेन यत्रैकएव पुरुषस्तत्र कल्पकाभावात्पुरुषएव नस्यादिति वाच्यं। तत्र तत्पुरुषस्यैव कल्पकत्वात्। नच देहेंद्रियादिसत्वे बुद्धिसत्वे बुद्धेस्तत्तदाकारत्वे देहेंद्रियांतःकरणाविद्यादिसंघातरूपपुरुषस्यैवाभावात्कथं तस्य स्वकल्पकत्वमितिवाच्यं। पूर्वपूर्वकल्पिताविद्योपहितोजीवउत्तरोत्तराविद्यादिकल्पकः। यथा निद्रारू-

पा या ऽविद्या तत्कल्पितोजीवोदिग्देशादिविभागं घटपटादिंच प्रकल्पयति तथैवाधुनापि स्वयं कल्पितःकांश्चिदनादित्वेन कांश्चित्सादित्वेन कल्पयतीति नानुपपत्तिरतएव जीवईशोविशुद्धाचित् तथा जीवेशयोर्भिदा अविद्यातच्चितोर्योगःषडस्माकमनादयइति सिद्धांतोपि संगच्छते । यथा स्वप्ने कल्प्यमानं गोपुरादि किंचित्पूर्वसिद्धत्वेन कल्प्यते किंचित्तदानीमुत्पाद्यत्वेन । एवं जागरेपि किंचित्कल्प्यमानं सादित्वेन कल्प्यते किंचिदन्यथेत्यनेनैव । साद्यनादिविभागोपपत्तेरिति चेन्नैवं । श्रुतिसिद्धस्य वियदादिप्रपंचस्य तत्क्रमस्य च कल्पितत्वकल्पनेमानाभावात् ॥ तस्यापि कल्पितत्वे तस्य कःकल्पकइति वक्तव्यं न कोपि चेत्तर्हि सृष्ट्यादिश्रुतिप्रतिपाद्यस्य वियदादिसृष्टितत्क्रमादेः शशशृंगायमाणतया श्रुतेरालंबनाभावादप्रामाण्यंस्यात् । नच तादृशश्रुतीनां निष्प्रपंचब्रह्मात्मैक्यप्रतिपादनपरत्वेन तात्पर्य्यविषयीभूतार्थस्य सत्यत्वान्नाप्रामाण्यापत्तिरितिवाच्यम् । सृष्ट्यादिवाक्यानां श्रुतार्थपरित्यागाश्रुतार्थतात्पर्य्यकल्पनापेक्षया वियदादिसर्गस्य सत्यत्वमेव युक्तं ॥ नन्वध्यारोपापवादाभ्यां निष्प्रपंचब्रह्मप्रतिपत्त्यर्थमेव श्रुतौ सृष्टिप्रलयोपन्यासौ नतु तत्सत्यत्वतात्पर्य्येण ॥ यथा लोके गगनतत्वबोधनाय प्रवृत्तः कश्चित्प्रथमंनैल्यवैशाल्याद्यध्यारोपेण तं गगनं ग्राहयित्वा पश्चान्नेदंवस्तुतोनैल्यादियुक्तमिति तदपवादेन नीरूपमुदासीनं गगनतत्वमिति बोधयति तथा वेदांताअपीति चेन्न। अत्रिवृत्कृतस्याकाशस्याप्रत्यक्षत्वेन तत्रनीलरूपादेरध्यारोपासंभवात् । त्रिवृत्कृतस्यतु रूपवत्वात्तत्र नीलरूपापवादएव न संभवतीत्युभयथापि दृष्टांतप्र-

दर्शनस्यासंभवात् ॥ किं च श्रुतीनांसृष्ट्यादिषु तात्पर्य्याभावे वियदादिसर्गप्रतिपादकतत्क्रमप्रतिपादकश्रुतीनां परस्परं विरोधपरिहाराय सूत्रकारभाष्यकारयोर्यत्नोपि व्यर्थएवस्यात्। तात्पर्य्याविषयीभूतेर्थे विद्यमानस्यापि विरोधस्याकिंचित्करत्वात्॥ अपिच दृष्टिसृष्टिवादिनोमते ब्रह्मणोपि तदाकारवृत्तिभिन्नत्वं न स्यात्तथासति सर्वविप्लवएव स्यात्॥तस्मात्सर्वशून्यवादपर्यवसायी दृष्टिसृष्टिवादोवेदवादिभिर्नांगीकरणीयइत्यलमप्रकृतविचारेण ॥ इदंरजतमित्यत्रतु शुक्तिकैवरजतमिवप्रतीयते नतुतत्रानिर्वचनीयंभातीतिकिंरजतंप्रतीयते न वा सतएव रजतस्याविर्भावः तेननचेत्यादिपूर्वपक्षोऽसंगतः।वस्तुतश्चान्यदेवमिथ्यारजतं। आविर्भावस्यदूषयिष्यमाणत्वेन सत्कार्य्यवादासंभवादितितु प्रलापमात्रं। आविर्भावेदूषणस्यैवासंभवेन सत्कार्य्यवादस्यापलपितुमशक्यत्वात् ॥ किंचेत्यादिना स्वप्नादेर्मायिकतया तद्ज्ञानेषुमायिकविषयकत्वदर्शनेनेहापि तादृशपुरुरूपविज्ञानस्य मायिकविषयकत्वं स्यात्तत्रापि विषयस्याविर्भावेत्वप्रसिद्धांतइत्युक्तं तन्नसंभवति। यतोमायिकज्ञानविषयत्वनिष्ठसामानाधिकरण्यमात्रेण मायिकत्वमनुमातुंनशक्यते किंतु मायिकत्वसंबंधितावच्छेदकरूपवन्मायिकज्ञानविषयत्वेनैव । एवंचास्मन्मतसिद्धमायिकत्वाभाववतिस्वगृहादौ स्वप्नकालिकस्मृतिरूपमायिकज्ञानविषयत्वसत्वेन व्यभिचारितया तत्संबंधितावच्छेदकरूपवत्त्वाभावविशिष्टेन तेन मायिकत्वस्यानुमानासंभवात् अन्यथा वन्हिधूमयोः पर्वतेसामानाधिकरण्यदर्शनेनायोगोलकेधूमानुमितिर्वन्हिदर्शनेन कुतोनस्यात् । स्वप्ने

सतोविषयस्याविर्भावस्तु नांगीक्रियते येनापसिद्धांतःस्यात्।किं-
तु जीवव्यामोहार्थमीशकर्तृकैव सा सृष्टिः। ईशोहि स्वमाय-
या सृष्टिंकरोति। मायाच सामर्थ्यविशेषो नतुसदसत्त्वाभ्यामनि-
र्वचनीयंभावरूपंपारिभाषिकं। अतएवोक्तंप्रथमस्कंधे अप-
श्यत्पुरुषंपूर्वंमायांचतदपाश्रयां। ययासंमोहितोजीवआत्मानंत्रि-
गुणात्मकंपरोपिमनुतेऽनर्थंतत्कृतंचाभिपद्यतेऽतईश्वरस्य याव्या-
मोहिकाशक्तिः सा माया तयैवबाह्योपादाननिरपेक्षया स्वप्नसृष्टिः
क्रियते।तथाचैंद्रजालिकेन नटेन यथा सामाजिकव्यामोहार्थं
मायासृष्टिःक्रियते तथेश्वरेण जीवव्यामोहरूपकौतुकार्थमेव
स्वप्नसृष्टिः क्रियतइति नतस्याःसत्यत्वं। अतएवोक्तं "माया-
मात्रंतुकार्त्स्न्येनाऽनभिव्यक्तरूपत्वा" दितिव्यासैरपि ॥ एतेन
किंचेत्यादिकःसर्वकारणत्वंनस्यादित्यंतोवृथाऽऽलापोप्यपास्तः॥
पूर्वोक्तमायाकार्यस्य स्वाश्रये तथाविर्भावानभ्युपगमात्॥
यत्तु किंचपारमार्थिकवस्तुविज्ञाने क्लृप्तप्रमाणातिरिक्तसाम-
ग्र्यपेक्षाभावेन तत्रमायानापेक्ष्येतेति। तन्नयुक्तं। तादृशनि-
यमाभावात्। स्वप्नेदेवतादिवाक्यजन्ये भाविपारमार्थिकवस्तुवि-
षयके वर्त्तमानमिथ्यादिविषयके ज्ञाने वा क्लृप्तप्रमाणातिरिक्त-
निद्रादिसामग्र्यपेक्षणेन व्यभिचारात्। एतत्सर्वंपुरुरूपज्ञानस्यटी-
कोक्तंमायिकत्वमभ्युपेत्य॥ वस्तुतस्तु इंद्रोमायाभिरित्यस्य
पूर्वोक्तेर्थेदोषएवनास्ति॥ ब्रह्मपरत्वेतस्यसर्वभवनसमर्थत्वा-
द्विरुद्धधर्म्माश्रयत्वाच्च तन्न विरुध्यते॥ एवंच तस्मादित्यादि-
कंप्रत्युक्तम्॥

## टीका

सहस्राक्षे इंद्रोमायाभिःपुरुरूपइत्यादिं विवर्त्तवादमेव पुष्णातीत्यंतं भागं परिहरंति ॥ **अग्रे च इंद्रोमायाभिरित्यादिना तस्मादित्यादिकं प्रत्युक्तमित्यंतेन ॥ पारिभाषिकेति** ॥ शक्तिग्राहकेषु कोशव्याकरणादिषु मायाशब्दस्य तादृशार्थकतायाअनुपलंभात् । तंत्रांतरेपि तदस्वीकाराच्च ॥ त्वन्मतएव सदसत्त्वाभ्यामनिर्वचनीये वस्तुनि मायाशब्दःपरिभाष्यतइति युक्तं तस्य तथात्वम् ॥ अयं भावः यत्तु इंद्रोमायाभिरित्यादि अनुवर्ततइत्यंतं तदसत् ॥ अत्र हि प्रथमं वाक्यं ऋक्संहितायां चतुर्थाष्टकसप्तमाध्याये ( वर्ग ३३ ऋक् ३ ) तत्र समग्रमंत्रस्तु " रूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणाय ॥ इंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादश " इति अर्थस्तु प्रतिरूपः ॥ सर्वाकारत्वात्सर्वधर्माश्रयत्वात्प्रतिनिधिः ॥ परमात्मा रूपंरूपं अग्निवाय्वादिसर्वरूपाणि स्वयमेव बभूव॥अस्यपरमात्मनस्तत् कार्यात्मना पृथक्पृथग्भूतं रूपं प्रतिचक्षणाय अग्निरेवायंनवायुरित्यादिप्रतिनियतनाम व्यवहाराय ॥ ननु तथापि घटादिषु मृत्त्वमिव कार्यरूपेषु ब्रह्मत्वं सर्वैः कुतोन

---

## सहस्राक्ष

* इन्द्रोमायाभिःपुरुरूपईयते मायांतुप्रकृतिंविद्यादित्यादिश्रुतिभिः सम्भवाम्यात्ममायग्रेत्यादिस्मृतिभिश्च, मायायाअपिजगद्धेतुत्वं निश्चीयतइत्याह ॥ तथेति ॥ श्रुतिस्मृतिगणैरित्यर्थः ॥ ईशानःसृजतीति इच्छोद्भवइति चाऽनुवर्त्तते ॥ यत्तु अत्रैवशाङ्कराःप्राहुर्मायिकंनश्वरंजगत ॥ मायासंबन्धतोब्रह्मकारणंनाऽन्यथैवहि इतिश्लोकेतट्टीकाकारऊचे ॥ रूपंरूपंप्रतिरूपोबभूव यत्तस्यरूपंप्रतिचक्षणाय इन्द्रोमायाभिःपुरुरूपईयतइति मन्त्रान्माया ज्ञानस्यकारणंनतुब्रह्मणोबहुस्वरूपत्वस्य अन्यथापूर्वार्द्धएवमायाभिःपुरुरूपोबभूवेतिवदेदित्युक्तम् ॥ तन्न तथोक्तावपिविधेयभेदेन वाक्यभेदाऽनिवारणाच्छब्दगौरवस्य स्पष्टप्रतिपत्त्यर्थत्वेनाऽदूषणत्वात् ॥ पुरुरूपविज्ञानस्यमायिकत्वे पुरुरूपत्वस्यसुतरांमायिकत्वसिद्धेश्च ॥ विवर्त्तवादेदृष्टैरेवसृष्टित्वात् ॥ मायिकविज्ञानविषयस्यामायिकत्वासिद्धेः ॥ नहिशुक्तिरजतविज्ञानविषयस्य रजतस्यामायिकत्वम् ॥ नच तत्रसतएवरजतस्याऽऽविर्भावः सर्वत्रसर्वसत्त्वस्यसत्कार्यवादेऽभ्युपगमादिति नरजतंमायिकमितिवाच्यम् ॥ आविर्भावस्यदूषयिष्यमाणत्वेनसत्कार्यवादासंभवात् ॥ किञ्च स्वप्रादेर्मायिकतायास्त्वयोक्तत्वेन तज्ज्ञानेषुमायिकेषुमायिकविषयकत्वदर्शनेनेहाऽपितादृशज्ञानस्यमायिकविषयकत्वंस्यात् ॥ तत्राऽपिविषयस्याविर्भावाभ्युपगमेत्वपसिद्धांतः॥किञ्चैवंविज्ञानस्याऽपिस्वाश्रयेसतएवघटादिवदीश्वरेच्छातआविर्भावोपपत्तौ तत्रापिमायिकत्वासिद्ध्यापत्तिः ॥ ईश्वरतदिच्छयोर्ज्ञानाकारणत्वे ईश्वरस्य सर्वकारणत्वंरूपंसर्वात्मकत्वंतदिच्छायाश्चसर्वकारणत्वं नस्यात् ॥ किञ्चपारमार्थिकवस्तुविज्ञानेनैकृतप्रमाणातिरिक्तसामग्र्यपेक्षाभावेन तत्रमायानापेक्ष्येतेतस्मान्निर्विशेषस्यतथाभवनासंभवशङ्कायांतन्निवृत्त्यर्थंवाक्यशेषोबहुरूपज्ञानमेवतथाभवनमितिवदन्विवर्तवादमेवपुष्णाति ॥

प्रतीयतइत्याशंकायामाह इंद्रइति इदि परमैश्वैर्यइत्यतोनमिकंपीत्यादिना रक् । इंद्रः परमेश्वरः मायाभिः तत्तादिंद्रियवृत्त्यात्मना परिणतबुद्धिभिः बहुरूपईयते नानारूपोज्ञायते ॥ तत्र हेतुः हियतः युक्ताः शरीररूपरथवहने कृतयोजनाः अस्य परमात्मनोहरयः हरंतीति हरयः इंद्रियरूपाअश्वाः " इंद्रियाणिहयानाहु " रितिकठश्रुतेः शता शतानि दश सहस्रं तत्तत्प्राणिभेदेनापरिमिताः संति सहस्रमिति वक्तव्ये शतादशेत्युक्तिः । दशेंद्रियरूपाश्वज्ञापनाय बहुवचनांतशतशब्दादेवानंत्यलाभाच्च ॥ देहेंद्रियाभिमानवद्भिः सएव, नानारूपोज्ञायते तन्निवृत्तौ तु सएव सर्वत्रसर्वरूपइति भावः। अत्र मायाशब्देन त्वदभिमेतार्थपरः अप्रसिद्धेः बहुवचनाच्च । किं तु बुद्धिपर्यायः । मायास्याच्छांबरीबुध्योरिति मेदिनीनानार्थयोः स्यान्मायाशांबरीकृपा दंभोबुद्धिश्चेति विश्वहेमचंद्रयोश्चोक्तेः ॥ अतएव सायनमाधवीये ऋक्संहिताभाष्ये एतन्मंत्रविवरणे " मायाभिः ॥ ज्ञाननामैतत् ॥ ज्ञानैः आत्मीयैःसंकल्पैः " इति पूर्वं स्वाभिप्रायेण व्याख्यातम् ॥ त्वदभिमतकल्पमायापरत्वं चापरमततयाऽनंतरं संगृहीतम् ॥ बृहदारण्यकभाष्ये शंकराचार्यैरपि अस्मिन्मंत्रे मायाशब्दस्य प्रज्ञापरत्वं मिथ्याभिमानपरत्वं च विकल्पेन व्याख्यातम् ॥ हरिशब्दश्चेंद्रियपरएव व्याख्यातः॥ततश्चतुर्थचरणस्वारःस्याद्बहुवचनस्वारःस्याच्च । इंद्रियवृत्तिरूपा बुद्धिपरिणामा गृह्यंते ॥ अधिकं तु वक्ष्यते ॥ तस्मान्नास्माद्वाक्यादविद्याख्यमायावशादीशानःसृजतीत्यर्थोलभ्यते ॥ मायांतुप्रकृतिंविद्यादिति तु श्वेताश्वतरीये तुरीयेऽध्यायेऽस्ति ॥ तत्र " यएकोवर्णोबहुधाशक्तियोगात् " इति प्रथममंत्रे एकस्यैवानेकशक्तिकस्य सर्वधर्माश्रयत्वं सर्वकर्तृत्वं संहर्तृत्वं चोक्त्वा " तदेवाग्नि " रिति " त्वंस्त्रीत्वंपुमानसि " इति च मंत्रद्वये सर्वकार्यात्मकत्वं सर्वलिंगकत्वं चोक्त्वा चतुर्थे ततएव विश्वोत्पत्तिमुक्त्वा " अजामेकां " इति पंचमे उत्पत्त्यादिहेतुरजःसत्वतमोरूपां प्रकृतिं चमसवदधिकरणानुरोधात्तेजोबन्नात्मकं कार्यं वा जुषमाणं जीवं तद्विलक्षणं परमात्मानं चोक्त्वा तयोः कथं भेदइत्याकांक्षायां द्वासुपर्णेति समानेवृक्षइति षष्ठसप्तमयोः कार्यदशायामेव जीवांतर्यामिभावेन भेदंजीवस्यैवाविद्यया मोहं सेवितप्रीतपरमात्मदर्शनादेव तन्निवृत्तिं चाभिधाय " ऋचोअक्षरे " इति अष्टमे वेद्यमक्षरं निरूप्य नवमे छंदःप्रभृतीनां परमात्मनः सकाशादेव प्रवृत्तिं मायानियामकस्य तस्यैव स्रष्टृत्वम् " तस्मिंश्चान्योमाययासंनिरुद्ध " इति जीवस्य सम्यङ् निरुद्धत्वं च श्रावयित्वा कोसौ मायापदार्थः कश्च मायानियामकः कश्च तदन्यः संनिरोद्धव्यइत्याकांक्षायां दशमोयं मंत्रः पठ्यते " मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरम् ॥ तस्यावयवभूतैस्तुव्याप्तंसर्वमिदंजगत् " इति ॥ अर्थस्तु ॥ पूर्वोक्तां मायां प्रकृतिंश्रीभागवतादिषु प्रकृतिर्गुणसाम्यं स्यादित्यादिकथनाद्गुणसाम्यरूपां प्रथमतमं सदंशकार्यं विद्यात्॥महांतमीश्वरं परमात्मानं मायिनंमायानियामकं विद्यात् ॥ प्रकृतिर्हि सर्वजडप्रपंचमूलभूतं परमात्मनः प्रथमं कार्यम् ॥ अतोमहाभू-

तादीनां प्रकृतितद्गुद्भवांगीकारेपि ब्रह्मोपादानकत्वं न व्याहन्यते ॥ मृत्पिंडादुत्पन्न-घटादिषु मृदुपादानकत्वमिव ॥ अतएवैकादशस्कंधे प्रकृतिर्ह्यस्योपादानमाधारःपुरुषः परः ॥ सतोऽभिव्यंजकःकालोब्रह्मतत्त्रितयंत्वहं इति भगवतोक्तं ॥ मायाशब्दश्च प्रकृतिपर्यायतयापि पुराणेषु प्रसिद्धः ॥ यथा तृतीयस्कंधे ( अध्या. ५ श्लो० २६ ) कालवृत्त्यातुमायायांगुणमय्यामधोक्षजः ॥ पुरुषेणात्मभूतेनवीर्यमाधत्तवीर्यवान् ॥ इति ॥ एवमन्यत्रापि द्रष्टव्यम् ॥ प्रकृतिपुरुषकालानां ब्रह्मोपादानकत्वं च विष्णुपुराणे प्रथमेंऽशे द्वितीयाध्याये विरुद्धधर्माश्रयत्वादिना परब्रह्मस्वरूपं निरुप्योच्यते ( श्लोक १४ ) तदेवसर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् ॥ तथापुरुषरूपेणकालरूपेणच-स्थितम् ॥ १४ ॥ परस्यब्रह्मणोरूपंपुरुषःप्रथमंद्विज ॥ व्यक्ताव्यक्तेतथैवान्येरूपेका-लस्तथापरम् ॥ १५ प्रधानपुरुषाव्यक्तकालानांपरमंहियत् ॥ पश्यंतिसूरयः सिद्धंत-द्विष्णोःपरमंपदम् ॥ १६ ॥ प्रधानपुरुषव्यक्तकालास्तुप्रविभागशः ॥ रूपाणिस्थिति-सर्गांतव्यक्तिसद्भावहेतवः ॥ १७ ॥ व्यक्तंविष्णुस्तथाव्यक्तंपुरुषःकालएवच ॥ क्रीड-तोबालकस्येवचेष्टांतस्यनिशामय ॥ अव्यक्तंकारणंयत्तत्प्रधानमृषिसत्तमैः ॥ प्रोच्य-तेप्रकृतिःसूक्ष्मानित्यंसदसदात्मकमिति ॥ एवमितरत्रापि पुराणेषु तत्र तत्र प्रसिद्धमेवे-ति ॥ किंबहुना श्रुतिष्वपि " कर्तारमीशंपुरुषंब्रह्मयोनिं " इति मुंडकादिषु प्रकृति-योनित्वं परमात्मनः श्राव्यते ॥ एतेन " अजामेकां " इति पूर्ववाक्ये का साऽजेति शंकापि व्युदस्ता ॥ श्वेतकेतुविद्यैकवाक्यतया लोहितशुक्लकृष्णामित्यत्र तेजोऽब-न्नात्मकत्वादेरपि पंचभूतमूलभूतायां तस्यां तेजोऽबन्नात्मतायाअनपायात् ॥ एतेनै-व सांख्यमतप्रवेशशंकाप्यपास्ता ॥ तैः प्रकृतेः स्वातंत्र्येण नित्यत्वं पुरुषाणां च ब-हुत्वं स्वातंत्र्येण नित्यत्वमभ्युपगच्छद्भिरेवमनंगीकारात् ॥ तस्याः स्वकार्यरूपाया-मायायानियामकस्तु महानीश्वरएव ॥ कस्तर्हि मायया संनिरुद्धइति चेत्तत्राह ॥ तस्यावयवेति तस्य परमेश्वरस्य अवयवभूतैः स्वांशैर्जीवैः ॥ सर्वमिदं परिदृश्य-मानं जगज्जंगमंदेहप्राणेंद्रियांतःकरणादिकं व्याप्तं पूर्णं गुणतोव्याप्तैः ॥ यत्र यत्र सं-घातस्तत्र तत्र जीवइति नियमाद्व्याप्तम् ॥ तथा च प्रकृतिकार्यदेहाद्यभिमानवशा-त्तदंशएव सम्यङ्निरुद्धः ॥ यत्तु तद्भाष्ये " तस्यप्रकृतस्यपरमेश्वरस्यरज्ज्वाद्यधिष्ठाने-षुकल्पितसर्पादिस्थानीयैर्मायिकैःस्वावयवै " रिति व्याख्यातम् । तन्न । कल्पितस-र्पादौ रज्ज्वाद्यवयवतायाअयोगात् ॥ नहि रज्ज्ववयवोनष्टइत्युक्ते तत्र कल्पितः सर्पो-नष्टइति प्रतीयते ॥ किं तु तदेकांशएवेति ॥ इदं " अंशोनानाव्यपदेशात् " इत्या-दिषु सिद्धमतःकिं प्रासंगिकेन ॥ तथा च मायां सदसत्त्वाभ्यामनिर्वचनीयां जगतः प्रकृतिमुपादानंविद्यादित्यर्थमनोरथोऽपास्तः ॥ श्रौतप्रतिज्ञादृष्टांतादिव्याकोपात् ॥ साधितं च ब्रह्मणएव सर्वप्रकृतित्वं परिणामित्वं च श्रीबादरायणाचार्यैः " प्रकृति-श्चप्रतिज्ञादृष्टांतानुपरोधादित्यधिकरणे ॥ तृतीयंतु गीतावाक्यं ॥ अजोपिसन्नव्यया-त्माभूतानामीश्वरोपिसन् ॥ प्रकृतिंस्वामधिष्ठायसंभवाम्यात्ममाययेति ॥ अत्रापि

गुणात्मकं वस्तु न मायाशब्दार्थः ॥ त्वद्वीत्यादेरे प्रकृतिंस्वामित्यनेन पौनरुक्त्यस्यापातात् ॥ अतः स्वाभाविकं तस्य सर्वभवनसामर्थ्यमेव तदर्थः ॥ दशमे विद्ययाऽविद्ययाशक्त्यामाययाचनिषेवितमिति शक्तिर्वोक्तेः ॥ एकादशे मायांवेदितुमिच्छामइति प्रश्नोत्तरयोस्तथैव सिद्धेश्च ॥ अतः स्वां प्रकृतिं अधिष्ठायनित्यसिद्धं स्वस्वभावमपरित्यज्य आत्मनोमायया सर्वभवनसामर्थ्यरूपया शक्त्या मत्स्यकच्छपादिनानारूपः संभवामीति वाक्यार्थः ॥ अथवा आत्मसु जीवेषु माययाऽकृपया सर्वेष्वनुग्रहबुध्या संभवामीत्यर्थः ॥ रामानुजाचार्यास्तु मायाशब्दं ज्ञानपर्यायमाश्रित्य आत्मनः संकल्पेनेति व्याचक्षते ॥ तथापि सर्वभवनसामर्थ्येनेत्यर्थोत्र मुख्यः ॥ अवतारव्यवस्थाबोधकमिदं वाक्यं च प्रपंचमायिकतासाधनस्य गंधमपि नस्पृशति ॥ प्रकारार्थकेन तथेत्यव्ययेन श्रुतिस्मृतिगणपरामर्शोपि नातिरमणीयः ॥ मायावशादिच्छोद्भवस्य बोधकस्तु वाक्याभासोनैकोप्युपपन्यस्तः॥ तदेतदनुसंधायाह॥ तादृशश्रुतीनामित्यादि ॥ वाचकत्वमिति ॥ प्रतिपादकत्वं ॥ तादृशार्थवाचकमायापदघटितत्वमिति भावः ॥नन्वित्यादि ॥प्रपंचमायिकताबोधकप्रत्यक्षश्रुत्यभावेप्यद्वैतश्रुत्यन्यथानुपपत्त्या तदाक्षिप्यतइति शंकाशयः॥समादधते॥जगतःसत्यत्वमित्यादिना॥ इत्यादिश्रुतीति॥आदिपदात् “ बहुस्यांप्रजायेये ” त्यादिसंग्रहः ।तथा च तत्र बहुभवनमुक्त्वा प्रजायेय प्रकृष्टोजायेयेत्युच्चनीचभावस्यापीच्छया विषयीकरणात्सर्वभवनसामर्थ्यादेव विचित्रजगत्संभवेन कार्यवैचित्र्यार्थः पारिभाषिकमायांगीकारोपि प्रत्युक्तः ।स्वाभिन्नविचित्रशक्तिकतया सर्वोपपत्तेः ॥ स्पष्टं चेदम् ( अ० २ पा० १ सू० २८ ) “ आत्मनिचैवंविचित्राश्चहि ” इत्यादि तत्वसूत्रेषु । नाप्यद्वैतश्रुतिविरोधः । अमायिकस्यैव कार्यस्य ततएवाविर्भावस्तत्रैव तिरोभावइति स्वीकारेण समुद्रतरंगवद्भेदानपायात्॥ कार्यसत्यत्वब्रह्माद्वैतयोरुभयोरपि श्रुतिसिद्धत्वेनान्यतरबाधस्यायोगात् ॥ मृद्रूपेषु घटादिषु गंधसत्वेपि पृथिव्येकागंधवतीत्युक्तेरबाधवद्ब्रह्माभिन्ने कार्ये सत्यत्वे सत्यपि अद्वैतश्रुत्यबाधस्य सुवचत्वात् ॥ शिलाकाष्ठवद्भिन्नसत्ताकत्वाऽभावात् ॥ इतिसमाधानाशयः ॥ अतोमायिकत्वपक्षएव “ सर्वंखल्विदंब्रह्म ॥ पुरुषएवेदं सर्वं ” इत्यादिश्रुतिविरोधः ॥ मायिकस्य सर्वस्य ब्रह्मत्वायोगात् ॥ मायायाःकारणत्वानंगीकारे बंधसत्यत्वापत्त्या मोक्षोच्छेदेन शास्त्रवैफल्यापातान्मायावादआक्षिप्यतइत्याशयेन शंकते ॥ ननु माययेति ॥ तरतीति ॥ छांदोग्ये भूमविद्यायामिदं श्रूयते ॥ समादधते ॥ बंधस्याविद्याकार्यत्वेत्यादिना ॥ त्वत्संमतरीतिकाऽविद्याकार्यत्वस्याभावे इत्यर्थः ॥ वस्तुतस्तु बंधः अविद्याशक्तिकार्यं शुक्तिरजतवन्मिथ्यैव ॥ अतएव ब्रह्मज्ञानात्तन्निवृत्तिः ॥ सा चाविद्या न भावरूपाज्ञानम् किं तु भगवच्छक्तिविशेषएवेति न त्वन्मतप्रवेशः ॥ स्पष्टं चेदं निबंधादिषु तच्छक्त्याविद्यया-त्वस्यजीवसंसारउच्यतइत्यादौ ॥ तथापि पिशाचःपिशाचभाषयेतिन्यायादिहोत्तरम् ॥ किंच इंद्रोमायाभिरित्यादि ॥ अयं भावः यच्च अत्रैव शांकराइति

मार्तंडश्लोकटीकास्थं पाठं भित्वा किंचिदनूदितं तत्र टीकाकाराभिमेतपाठस्तु " पुरुरूपईयतइतिमंत्रः मायाज्ञानं मति करणं न तु ब्रह्मणोबहुरूपत्वे " इतिज्ञेयः ॥ तथाच मायाभिरिति करणस्य क्रियान्वयित्वमेव योग्यम् ॥ यदपि तन्नतथेत्यादि अमायिकत्वमित्यन्तं तदपि कुशकाशावलंबनम् ॥ तथाहि मायया बहुभवने विवक्षितेतु पूर्वार्द्धएव माययेति वदेत् ॥ न च तथोक्तावपि विधेयभेदेन वाक्यभेदानिवारणमिति शंक्यम् ॥ मायया भवनस्यैव विधेयत्वात्॥अथ मायायाः करणत्वेन विधानात् " दध्नाजुहोती " त्यादौ दध्यादेरिव विधेयतया वाक्यभेदप्रसंगइति चेन्न ॥ एकहेलया बहूनां विधानस्य वाक्यभेदाप्रसंजकत्वात् ॥ यथा " सोमेनयजेते " त्यत्र सोमलतागुणविशिष्टोयागोविधीयते ॥ यथावा "उद्भिदायजेत पशुकामः "इति पशुरूपफलविशिष्टउद्भिद्यागः ॥ यथाच " यदाग्नेयोष्टाकपालोमावास्यायांचपौर्णमास्यांचाच्युतोभवति " इति द्रव्यदेवताकालादिकंवाक्यांतरेणाप्राप्तमेकहेलया विधीयते ॥ एवं सगुणकर्मोत्पत्तिवाक्यफलगुणवाक्यादिषु बहुविधानं द्रष्टव्यम् ॥ उक्तंत्र ॥ प्राप्तेकर्मणिनानेकोविधातुंशक्यतेगुणः ॥ अप्राप्तेतुविधीयंतेबहवोप्येकयत्नतइति ॥ अतस्तथोक्तौ दोषाभावान्मायया बहुभवनेऽभिप्रेते तथैव वदेत् ॥ वदति तु त्वयं बहुभवनं मायाभिश्च पुरुरूपतया दर्शनम् ॥ अतोद्वैतमत्ययएव मायाजन्यो न तु कार्यमिति मंत्राशयः ॥ पुरोवादवैलक्षण्यस्यावश्यकत्वात् ॥ नापि ,शब्दगौरवस्य स्पष्टप्रतिपत्त्यर्थत्वेनादूषणत्वं वाच्यम् । सर्वत्र तथांगीकारे ( अ० २ पा० २ सू० २ ) " एकस्यैवंपुनः श्रुतिरविशेषादनर्थकंहिस्यात् " इत्यादिपूर्वतंत्राधिकरणविरोधात् ॥ नापि मायिकविज्ञानविषयस्य मायिकत्वमेवेति नियमः शक्यवचनः । उपनेत्रादिनास्थूलोयं ककारइति प्रत्ययस्य स्थौल्यांश भ्रमतया मायिकत्वेपि तद्विषये वर्णे मायिकत्वाभावात् ।प्रसङ्ग तथा नियमस्यांगीकारे मूलोक्तरीत्या ब्रह्मण्यपि मायिकतापाताच्च॥तस्माद्यथा पूर्वोक्तस्थलेस्थौल्यप्रतीतिरेव मिथ्या न तु वर्णः । तथात्र भेदप्रततीति रेव मायिकी न तु कार्यमितिसारः ॥ दृष्टिसृष्टिवादं दूषयंति ॥ **यत्तु वितत्वेत्यादिना** ॥ ज्ञानस्वरूपमेवाहुरितिसत्यार्थत्वेऽस्य ज्ञानस्वरूपं ब्रह्मस्वरूपं ॥ अर्थस्वरूपं नामरूपव्याकरणानुरोधाद्घटादितत्तत्पदवाच्यपरिछिन्नार्थरूपमित्यर्थः ॥ स्पष्टं चेदमाकरे समन्वयाद्यधिकरणेषु ॥ वासनासन्तानवादस्तु विद्वन्मंडने निराकृतइत्युत्तरभागे सम्यक्परिहरिष्यते ॥ स्वमेप्रकाश्यविषयस्तु मायोपादानकऐंद्रजालिकवस्तुवदीश्वरप्रदर्शितोवक्ष्यतेऽतस्तत्र नटादिवदीश्वरस्य प्रकाशकतया कर्मकर्तृभावाविरोधेपि प्रकृते तद्विरोधे सुस्थइति बोध्यम् ॥ समाधाने **विज्ञानं यज्ञमिति** ॥ यद्यप्यस्मिन्ब्रह्मवल्लीवाक्ये विज्ञानशब्दार्थोजीवो नतु बुद्धिः स्पष्टं चेदं ( अ० २ पा० ३ सू० ३६ ) " व्यपदेशाच्चक्रियायांनचेन्निर्देशविपर्ययः " इति सूत्रे तथापि तन्मतानुरोधाद्बुद्धिपरः सइत्याश्रित्यैव मुक्तम् ॥ उपनिषद्भाष्ये तैर्विज्ञानस्यकोशत्वांगीकारात् ॥ अथ बुद्धि-

रैव सृष्टिश्चेत् बुद्धिमंतोजीवा नाना एकएव वा ॥ न द्वितीयः शुकोमुक्तोवयंबद्धाइ-त्यादिव्यवस्थाभंगप्रसंगात् । एकमुक्तितः सर्वमुक्त्यापत्त्या शास्त्रोच्छेदाच्च ॥ आद्य-श्चेत्कस्य बुद्धिः सृष्टिरूपा । अन्यतमस्य चेत्सर्वेषां जगदप्रत्ययः प्रसज्येत ॥ अवि-शेषात्सर्वेषामिति चेत्तत्काले सर्वेषां बुद्धिः परस्परसंगतिमत्येवोत्पद्यतइत्यत्र किंनि यामकम् ॥ यदा देवदत्तः स्वप्ने यज्ञदत्तं स्वनिकटेऽधीयानं कल्पयति तदा यज्ञदत्तो-पि स्वप्ने स्वमध्यापयंतं तं कल्पयेदेवेति नहि नियमोस्ति ॥ तेन स्वप्नदृष्टांतेन पूर्व-पक्षे दृष्टिसृष्टिवादस्य समर्थनं निरस्तं ज्ञेयम् ॥ अध्यारोपापवादादिकं तु पुरस्तान्नि-राकरिष्यते ॥ तं गगनमिति ॥ तं श्रोतृपुरुषं ॥ गतिबुद्ध्योत्यादिनाकर्मत्वम् ॥ गगने नैल्यप्रत्ययस्तुवस्तुस्वभावादित्यावरणभंगादिषु॥अथवा शून्यवद्गाढं व्योमवद्ब्रह्म ताद-शमित्यादिस्थलेषु विस्तरः॥ तथापि तद्भाषयैव तं बोधयंति॥ अत्रिवत्कृतस्येत्या-दिना ॥ त्रिवृत्करणोक्तिस्तु छांदोग्यानुरोधात् ॥ सूत्रकारेत्यादि ॥ द्वितीयस्यतृती-यपादादौ तत्कृतोयत्नइति भावः ॥ वेदवादिभिर्नांगीकरणीयइति ॥ द्वितीयस्य द्वितीये पादे सूत्रकृता अर्धवैनाशिकमतेशिष्टापरिग्रहादनपेक्षणीयत्वमुक्त्वा सर्ववै-नाशिकमतस्यापि सम्यग्दूषिततया तत्राप्यनपेक्षणीयताया बोधनात्तत्रोक्तदूषणाना-मत्राप्यवताराच्चेति भावः ॥ इदं रजतमित्यादि ॥ इदं नैयायिकाभिमतामन्यथा-ख्यातिमनुसृत्योक्तम् ॥ वस्तुतस्त्वन्यख्यातिरेव स्वीक्रियते ॥ इंद्रियसंप्रयोगजनक-क्रियाविषयाद्भिन्नार्थप्रतिपत्तिरूपायाबुद्धिवृत्तेरेव विपर्यासपदार्थत्वात् ॥ अतः तृती-यस्कंधषड्विंशाध्याये (श्लो० ३०) संशयोऽथविपर्यासोनिश्चयःस्मृतिरेवच ॥ स्वाप-इत्युच्यतेबुद्धेर्लक्षणंवृत्तितःपृथक्॥इत्यत्र सुबोधिन्यां "विपर्यासोभिन्नार्थप्रतिपादकः ॥ क्रियाज्ञानयोश्चभिन्नविषयत्वम् ॥ अनेनान्यख्यातिरेवसिद्धांतइत्युक्तम्" इत्याचा र्यचरणाः ॥ क्रिया शुक्त्यादिविषयिका ॥ ज्ञानं रजतादिविषयकमित्यर्थः ॥ अन्यथा ख्यातिपक्षे तु कस्यान्यथात्वम् ॥ विषयस्य ज्ञानस्य वा ॥ नाद्यः देवदत्तस्य विपर्यासे यज्ञदत्तादेरपि तथाप्रतीत्यवश्यंभावापत्तेः ॥ द्वितीयश्चेत् रजताकारं ज्ञानं शुक्तिमालंबतइति वाच्यम् ॥ तादृशज्ञाने रजतत्वंप्रकारतया भासतइति वा ॥ त-था सति शुक्त्यास्वात्मसमर्पणे रजतत्वेन शुक्तिं जानामीत्यनुव्यवसायापत्तिः अ-समर्पणे ज्ञानस्य तदनालंबकत्वम् ॥ भवति तु तत्र रजतमहं जानामीत्येवानुव्य वसायः ॥ अयं च वादः तत्रत्यसुबोधिनीतत्प्रकाशयोः ख्यातिवादादिषु च विस्तरे-ण निराकृतः ॥ नापि बाह्याभिमेतात्मख्यातिः स्वीक्रियते ॥ विज्ञानवादे आत्मनो-बुद्धिरूपत्वात् । ख्यायमानबुद्धिरूपोपि सएवेत्यात्मख्यातिः ॥ तत्र आत्मनस्तथात्वे घटोहमित्यादिप्रत्ययापत्तिरित्यन्यत्र विस्तरः ॥ अस्माकं तु बुद्धेस्तत्वांतरत्वाद्विपर्या-सस्यतद्वृत्तित्वेपि न सा॥ भाट्टास्तु रजतसंस्कारवतएव शुक्तौ तथाप्रत्ययनियमात्तत्र-रजतंस्मर्यते रजतत्वं तु न स्मर्यते । कर्तृगतदोषात् ॥ दोषाश्चान्यचित्तत्वादयः

इत्यख्यातिवादं स्वीकुर्वंति ॥ तथा सति रजतमनुभवामीत्यनुव्यवसायविरोधः ॥ तत्र स्मरामीत्यनुव्यवसायस्यौचित्यात् ॥ तदुपादानार्थप्रवृत्त्यादिविरोधश्च ॥ नहि कश्चिदपि भोज्यं स्मरन्नेव भोक्तुमारभते ॥ प्राभाकरास्तु तत्र ग्रहणस्मरणात्मकं ज्ञानद्वयं मन्यंते ॥ तत्र शुक्तिमनुभवामि रजतंस्मरामीत्यनुव्यवसायद्वयापत्तिः ॥ सर्वत्र विशिष्टज्ञाने विशेषणस्मरणमात्रेण निर्वाहापत्तिश्चेत्यादिरितरत्र प्रपंचः ॥ नाप्यनिर्वचनीयं रजतं विषयनिष्ठाविद्ययाजन्यतइत्यनिर्वचनीयख्यातिः पराभिमता शक्यस्वीकारा ॥ संस्काराभावेपि तत्प्रतीतिप्रसंगात् । संस्कारप्राबल्येऽन्यख्यातिस्तदप्राबल्ये स्मरणं चोपपद्यतइत्यन्यत्र विस्तराच्च ॥ तथा च विषयेंद्रियसंप्रयोगेण प्रथमं सामान्यज्ञाने जाते यदा बुद्धिः सत्वाविष्टा तदा निश्चयः ॥ सत्वात्संजायते ज्ञानं॥प्रवृत्तिंचनिवृत्तिंचकार्याकार्येभयाभयेइतिभगवद्वाक्यात्॥रजसा विष्टया तु संशयः ॥ अयथावत्प्रजानातिबुद्धिःसापार्थराजसीत्युक्तेः ॥ यदा तु तमोगुणाविष्टा तदा मायानुग्रहात्संस्कारप्राबल्याच्च तदनुगुणं पदार्थांतरमंतरोत्पाद्य विषयीकरोति ॥ प्रमादमोहौ तमसोभवतोऽज्ञानमेवचेति सर्वार्थान्विपरीतांश्च बुद्धिःसापार्थतामसीतिचोक्तेः ॥ एतदेव सर्वमभिप्रेत्य अनुमितमंतरा त्वयि विभाति मृषैकरसइत्यत्र सुबोधिन्यां "प्रत्यक्षे तु रजतं न दृश्यते । इंद्रियार्थसन्निकर्षस्य शुक्ति विषयत्वात् ॥ नहि रजतेन सह सन्निकर्षोस्ति । सतोरेव संयोगात् । सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्यतत्प्रत्यक्षमितिप्रत्यक्षलक्षणम् । रजतं तु तदनंतरंबुद्ध्याजन्यते विषयीक्रियते च । तत्र सा बुद्धिरेवकारणं" इति "किंचअंतराविभाति । इंद्रियार्थयोर्मध्ये भाति तन्मृषा" इति चोक्तम् ।द्वितीयस्कंधनवमाध्याये च ऋतेर्थमित्यत्र विषयतायामायाजन्यत्वादिकं निर्णीतम् ॥ अधिकं तु सुबोधिन्यादिभ्यः पुरुषोत्तमचरणलालूभट्टादीनांख्यातिवादख्यातिविवेकादिभ्यश्चावधेयम् ॥ एतदेवोरसिकृत्य **वस्तुतश्चेत्याद्युक्तं**॥एवं च यथा तव इदं रजतमित्यत्र इदमंशोन मिथ्या किं तु रजतमेव॥ तथात्र पुरुरूपईयतइत्यनेन भगवदात्मकेषु रूपेषु नानात्त्वमेव मिथ्या न तु रूपाणीति न कोपि विरोधः ॥ सहस्राक्षे नहि शुक्तीत्याद्युक्तिस्तु परमताज्ञानात् ॥ आविर्भावः सत्कार्यवादश्च सम्यक् समर्थयिष्यते ॥ **तन्न संभवतीत्यादि** ॥ परमात्मनोरूपाणि मायिकानि मायिकज्ञानविषयत्वात्स्वामिकगजादिवदित्यनुमानेन मायिकत्वंसाध्यम्॥ तत्र हेतोः साध्यसामानाधिकरण्यं विवक्षितम् ॥अन्यथा व्याप्यसिद्धेः ॥ तथाच स्वामिकांतर्भावेन उक्तविषयत्वनिष्ठसाध्यसामानाधिकरण्यमात्रेण न तत्सिद्धिः किं तु तेषु मायिकत्वं येन संबंधेन स्वरूपात्मकेन विद्यते तदवच्छेदकं तादृशगजादिवृत्तियद्रूपमुत्तरकाले बाधितत्वतत्तन्नियतोपादानशून्यत्त्वादिलक्षणम् ॥ सामानाधिकरण्येन तद्विशिष्टं यन्मायिकज्ञानविषयत्वं तेनैव तत्सिद्धिः ॥ विशिष्टस्य हेततांगीकारे युक्तिमाहुः ॥ **एवं चेति** ॥ **अन्यथेति** ॥ यत्र क्वचित् दृष्टसामानाधिकरण्यमात्रेण हेतुतायाः स्वीकारे ॥ ननु मायिकज्ञानविषयत्वादित्यत्र ज्ञान-

पदमनुभवमात्रेपरमतान व्यभिचारइति चेन्नैवम् ॥ स्वप्ने देवतादिदर्शने तदानींतनमायिकज्ञानगोचरतां गतानामपि तेषाममायिकतया व्यभिचारानपायात् ॥ न च स्वप्नोपलब्धानामऽस्वप्नादीनामपि मायिकत्वं शंक्यम् ॥ तदुक्तभाविवृत्तांतासंभवस्य तदानीं तदुक्तमंत्रादिवृषाभावस्य च प्रसंगात् ॥ स्वप्ने साक्षात्तद्दर्शनादिबोधकशास्त्रविरोधाच्च ॥ तथाहि महाभारते वनपर्वणि त्रिशततमाध्याये ( श्लो०५ ) द्वादशेसमतिक्रांतेवर्षेप्राप्तेत्रयोदशे ॥ पांडूनांहितकृच्छक्रःकर्णंभिक्षितुमुद्यतः ॥ ५ ॥ अभिप्रायमथोज्ञात्वामहेंद्रस्यविभावसुः ॥ कुंडलार्थंमहाराजसूर्यःकर्णमुपागतः ॥ ६ ॥ महार्हेशयनेवीरंस्पर्ध्यास्तरणसंवृते ॥ शयानमतिविश्वस्तंब्रह्मण्यंसत्यवादिनम् ॥ ७ ॥ स्वप्नांतेनिशिराजेंद्रदर्शयामासरश्मिवान् ॥ कृपयापरयाविष्टःपुत्रस्नेहाच्चभारत ॥ ८ ॥ ब्राह्मणोवेदविद्भूत्वासूर्योयोगार्धिरूपवान् ॥ हितार्थमब्रवीत्कर्णंसांत्वपूर्वमिदंवचः ॥ ९ ॥ इति साक्षात्सूर्यस्य स्वप्ने कर्णेन दर्शनमुक्तम् ॥ अत्र " स्पर्ध्यंविमर्दसहंस्पृहणीयंवा ॥ स्वप्नांतेस्वप्नमध्ये " इति नीलकंठचतुर्धरः ॥ देवानां च योगशक्त्या समाधिकालइव स्वप्नकालेऽप्यंतःप्रवेशादिकमुपपद्यतेऽतो न मायिकत्वशंकापि ॥ एतदेवेह सूर्योयोगार्धिरूपवानित्यनेन स्फुटीकृतम् ॥ अग्रे च ( श्लो० १० ) कर्णमद्वचनंतातशृणुसत्यभृतांवरेत्यादिसूर्यवचनेषु ॥ उपायास्यतिशक्रस्त्वांपांडवानांहितेप्सया ॥ ब्राह्मणच्छद्मनाकर्णकुंडलोपजिहीर्षया ॥ ११ ॥ इत्यादिः पारमार्थिकवृत्तांतः ॥ ( श्लोक०१५ ) तस्मैप्रयाचमानायनदेयेकुंडलेत्वया ॥ इत्यादिना वास्तवं श्रेयः ॥ ( श्लोक०१८ ) यदिदास्यसिकर्णत्वंसहजेकुंडलेशुभे ॥ आयुषः प्रक्षयंगत्वामृत्योर्वशमुपैष्यसि ॥ १८ ॥ कवचेनसमायुक्तःकुंडलाभ्यांचमानद ॥ अवध्यस्त्वंरणेऽरीणामितिविद्धिवचोमम ॥ १९ ॥ अमृतादुत्थितंह्येतदुभयंरत्नसंभवम् ॥ तस्माद्रक्ष्यंत्वयाकर्णजीवितंचेत्प्रियंतव ॥ २० ॥ इति कवचकुंडलयोर्वास्तवं फलं स्वरूपं चाभ्यधायि ॥ ततः कोमामेवं भवानाहेति कर्णप्रश्ने ॥ ( श्लो० २२ ) अहंतातसहस्रांशुःसौहृदात्त्वांनिदर्शये ॥ इतिवक्तास्वस्यदेवत्वमुक्तम् ॥ ततःसूर्यसाक्षात्कारवताकर्णेन ( श्लो० २३ ) श्रेयएवममात्यंतंयस्यमेगोपतिःप्रभुः ॥ प्रवक्ताद्यहितान्वेषोशृणुचेदंवचोमम ॥२३ प्रसादयेत्त्वांवरदमित्यादिना यावदध्यायसमाप्ति स्वस्य दाननिर्बंधे दर्शिते उत्तराध्याये सूर्येण जीवित्वस्यावश्यरक्षित्वमिदं च मयाभक्तत्वात्तुभ्यमुच्यतइति विस्तरेणोक्ते ॥ तत्रैव ( श्लो०९ ) अस्तिचात्रपरंकिंचिदित्यादिना कालेवेत्स्यतितद्भवानित्यंतेन मत्तः कुंत्यामुत्पन्नस्त्वमिति पारमार्थिकवृत्तांते च देवगुह्यतया प्रोक्तेद्युत्तरत्रिशततमाध्याये पुनःकर्णेन निर्बंधेऽनुज्झिते इंद्रादमोघदिव्यशक्तिं गृहीत्वा कुंडलादि देहीति भास्वता भाषितमिति निरूप्य वैशंपायन आह ॥ ( श्लो०१८ ) एवमुक्त्वासहस्रांशुःसहसांतरधीयत ॥ ततःसूर्यायजप्यांतेकर्णःस्वप्नंन्यवेदयत् ॥१८ ॥ यथादृष्टंयथातत्त्वंयथोक्तमुभयोर्निशि ॥ तत्सर्वमानुपूर्व्येणशशंसास्मैवृषस्तदा ॥ तच्छ्रुत्वाभगवान्देवोभानुःस्वर्भानुसूदनः ॥ उवाचतंतथेत्येवकर्णंसूर्यःस्मयन्निव ॥ २० ॥

अत्राप्यंतर्धानोक्त्या साक्षाद्देवत्वं दर्शितम् ॥ जागरितदशायामपि साक्षात्सूर्येण तथे-त्युक्तमिति कथनेन च तद्दृढीकृतम् ॥ अस्मै सूर्याय ॥ वृष: कर्ण: ॥ तथा द्रोणपर्व-णि स्वप्नेऽर्जुनाय शिवेन पुनः पाशुपतास्त्रमुपदिष्टमिति वर्ण्यते तदप्युदाहरिष्यामः ॥ अतोहेतोर्व्यभिचारितया मायिकज्ञानविषयत्वेपि रूपाणां न मायिकत्वम् ॥ देवादि-वत् ॥ एतेन किं च स्वप्नादेरित्यादि अर्पासिद्धांतइत्यंतं निरस्तम् ॥ स्वप्नसृष्टिस्वरूपं निर्णेतुमाहुः ॥ स्वप्ने ऽस्ततोविषयस्येत्यादि ॥ अयं भावः ॥ तृतीयस्य द्वितीय-स्मिन्पादे प्रथमाधिकरणे तत्स्वरूपं विचारितं तत्र ( सूत्र०१ ) " संध्येसृष्टिराहहि " इति प्रथमसूत्रे ज्योतिर्ब्राह्मणस्थां " नतत्ररथानरथयोगानपंथानोभवंत्यथरथान्र-थयोगान्पथः सृजते " इतिश्रुतिमादाय स्वप्नेपि सृष्टेः संभवात् ॥ तस्याः सत्यत्वं पूर्वपक्षविषयोक्ता ज्योतिर्ब्राह्मणे " स्वयंविहृत्यस्वयंनिर्माय " इतिजीवकर्तृकतायाः प्रतीतेस्तां वारयितुमाह ॥ ( सूत्र०२ ) " निर्मातारंचैकेपुत्रादयश्च " इति ॥ एके कठशाखिनः परमात्मानं तत्सृष्टिकर्तारं आमनंति ॥ यथा कठवल्लीषु " यएषसुप्तेषु-जागर्तिकामंकामंपुरुषोनिर्मिमाणः ॥ तदेवशुक्रंतद्ब्रह्मतदेवामृतमुच्यते ॥ तस्मिँल्लो-काःश्रिताःसर्वेतदुनात्येतिकश्चन ॥ एतद्वैतत् " इति॥ कामाश्चात्र काम्यंतइति व्युत्प-त्त्या पुत्रादयो न तु कामनाएव ॥ येयेकामादुर्लभामर्त्यलोके इत्युपक्रमे ततः पूर्वं " शतायुषःपुत्रपौत्रान्वृणीष्वे " ति तेषामेव तथात्वश्रावणात् ॥ तथा च यएषः " स्थाणुमन्येऽनुसंयंति " इति प्राप्यतया उक्तः परमात्मा सएव जीवेषु देहेंद्रियादिषु वा सुप्तेषु स्वप्ने जीवस्य तांस्तान्सर्वान्कामान्निर्मिमाणइति भगवतएव नटवत्तत्कर्तृ-त्वं बोधितम् ॥ यथा नटः सामाजिककामविषयान्सृजते तद्वन्निर्माणस्य कामंका-ममित्यनेन प्रतीतेः ॥ एतेन ज्योतिर्ब्राह्मणेपितस्यैव कर्तृत्वम् ॥ जीवस्य तु तदिच्छ-या गौणं तत् ॥ अन्यथा स्वदुःखजनकं, भयादिकं न सृजेत् ॥ श्रूयते तु तत्रैव भयादिकमपि ॥ भगवांस्तु नटः सर्पवन्हिज्वालादिकमिव कौतुकार्थंतदपिकरोति ॥ दृश्यतेच रत्नावल्यां चतुर्थके राजादीनां भयद्वाराऽग्रेकौतुकार्थमैंद्रजालिकेन राज-गृहेषुवन्हेर्निर्माणम् ॥ कठवल्लीवाक्यंतु निःसंदिग्धं भगवतःकर्तृतां बोधयति ॥ जाग-र्तीतिवचनात् " अन्यत्रधर्मादन्यत्राधर्मात् " इतिब्रह्मप्रकरणात्तदेवशुक्रंतद्ब्रह्मेति-वाक्यशेषात्सर्वलोकाश्रयत्वानतिक्रमणीयत्वालिंगाच्च ॥ एवं भगवत्कृतत्वादपिसत्य-त्वेप्राप्ते सिद्धांतमाह ॥ ( सू०३ ) " मायामात्रंतुकार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् " तुशब्दस्सत्यत्वपूर्वपक्षनिरासार्थः ॥ संध्येसृष्टिर्मायामात्रं ॥ व्यामोहिका भर्गवच्छ-क्तिर्माया ॥ मायांचतदपाश्रयामित्युक्तेः ॥ तयैव जीवस्यसंमोहनोक्तेश्च ॥ तन्मा-त्रम् ॥ तदेकोपादानिका ॥ कुतः कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । देशका-लौविषयसंनिधिः इंद्रियव्यापारः बाधाभावश्चेतिकार्त्स्न्यम् ॥ तेनजगदभिव्यज्यते ॥ स्वाप्निकंतु न तथा ॥ नापि स्वाप्निकघटादिस्वरूपं मृत्कुलालचक्रादिनियत-कारणैरभिव्यज्यते ॥ तस्मात्तथा ॥ अतएव नतत्ररथाइत्यादिना तत्तद्वस्तु-

नोऽसत्त्वंवोच्यते ॥ सृजतइतितु सृष्टिरेवोच्यते नतु सत्ता ॥ यथा छांदोग्यब्रह्मवल्या-
दिषु मनंचसृष्टिमुक्त्वा तत्सत्यतोक्ता । न तथात्र ॥विस्तरस्त्वाकरेष्ववधेयः॥ तथाचा-
त्रद्वितीयसूत्रेतत्सृष्टेरपि भगवत्कर्तृकतायाबोधनात्तत्कृताविच्छापूर्वकतायाःस्वतोला-
भादन्यथासार्वज्ञ्यस्वातंत्र्यादिभंगप्रसंगात् । कामंकाममितिवीप्सयाक्रियाविशेषण-
त्वादरेणच इच्छापूर्वकतायावाक्यतोपि लाभात् । आवृत्त्या णमुलंतत्वादरेपि तल्ला-
भात् ।व्यामोहकनटादिकृतावपीच्छापूर्वकत्वदर्शनाच्च॥ किंचैवमित्यादिःनस्यादित्यतं
प्रलापोपास्तः ॥ मायिकत्वादेव तत्रकारणे सतआविर्भावो नाभ्युपगम्यते ॥ नहि
मायिकघटफलादीनांमृद्वृक्षादिषु पूर्वसत्वं कस्याप्यभिमतम् ॥ नच निर्मातृसूत्रस्यपूर्व-
पक्षसमर्थकत्वान्नैवमितिवाच्यम् ॥ तत्रतत्सृष्टिसत्यतामात्रस्यपूर्वपक्षतयातत्समर्थ-
कतयोक्तस्यापिवास्तवस्य भगवतातत्सृष्टेर्निर्माणस्य तत्त्वाभावात् ॥ अतएव स-
त्यतामात्रमुत्तरत्र निराकृतं नतु निर्माणमपि ॥ अन्यथा तदपि निराकुर्यात् ॥ अतो-
ऽप्रतिषिद्धमनुमतं भवतीतिन्यायात्तत्संमतमेव॥ अन्यथा नविलक्षणत्वादित्यधिकरणे-
अभिमानिव्यपदेशसूत्रस्य पूर्वपक्षस्थत्वात् " मृदब्रवीत् । अपोब्रुवन् " इत्यादौतद्व्य-
पदेशोपिनाद्रियेत ॥ तस्मात्प्रत्यक्षासंदिग्धकठश्रुतिसिद्धंनिर्मातृत्वंनबाधितुंशक्यम् ॥
( अ०१ पा ०३सू०४२ ) " सुषुप्त्युत्क्रांत्योर्भेदेन " इत्यत्रज्योतिर्ब्राह्मणस्यापिसाक्षा-
द्ब्रह्मपरतायाःसिद्धेश्च ॥ तन्नयुक्तमित्यादि ॥ अयमाशयः॥ यत्तु ( किंचपारमा-
र्थिकेत्यादिनापेक्ष्येतेत्यंतं ) तदसत् ॥ व्यभिचारदर्शनेनतादृशनियमस्याशक्यत्वात्॥
पारमार्थिकस्यसूर्यस्यतदुक्तवृत्तस्य च विज्ञानंनिद्रारूपांस्वनाख्यबुद्धिवृत्तिरूपां च
सामग्रीमनपेक्षमाणंप्रागुदाहृतम् ॥ तत्रयुद्धेपराजयःकुंतीमुखात्सूर्यपुत्रताश्रवणंचेत्यादि-
भाविपारमार्थिकवस्तुनः वर्तमानस्येंद्रनिश्चयस्यतत्संनिहितदिव्यशक्तेश्च विज्ञानं-
स्वप्नद्वारैवार्जुनस्यकर्णेन ॥ तथाद्रोणपर्वणिएकोनाशीतितमाध्याये ( श्लो०१ ) ततोर्जु-
नस्यभवनंप्रविश्याप्रतिमंविभुः ॥ स्पृष्ट्वांभःपुंडरीकाक्षःस्थंडिलेशुभलक्षणे ॥ १ ॥ सं-
तस्तारशुभांशय्यांदर्भैर्वैडूर्यसंनिभैः इत्यादिनाउत्तमस्वप्नयोग्यशय्यानिर्माणमर्जुनस्या-
पार्थमुक्त्वा ( श्लो० ५ ) स्मयमानस्तुगोविंदःफाल्गुनंप्रत्यभाषत ॥ ५ ॥ सुप्यतांपार्थ
भद्रंतेकल्याणायव्रजाम्यहम् ॥ इतिस्वापमाज्ञाप्य भगवतिस्वशिबिरंगतवति अशी
तितमाध्याये ( श्लो०१।२ ) कुंतीपुत्रस्तुतंमंत्रंस्मरन्नेवधनंजयः ॥ प्रतिज्ञामात्मनो
रक्षन्मुमोहाचिंत्यविक्रमः ॥ १ ॥ तंतुशोकेनसंतप्तंस्वप्नेकपिवरध्वजं ॥ आससादमहा
तेजाध्यायंतंगरुडध्वजः ॥ २ ॥ इत्यादिना स्वप्नेभगवद्दर्शनं तदाज्ञयापाशुपतमंत्रला-
भार्थं तेन गृहीतदक्षिणभुजस्यार्जुनस्याकाशेगमनं तत्तत्स्थलावलोकनपुरःसरंमहेश्वर-
दर्शनं ततोमंत्रादिलाभश्चाध्यायद्वयेन निरूपितः ॥ एवमन्यत्रापिद्रष्टव्यम् ॥ मूले
निध्यादीत्यादिपदं मंत्रादिसंग्राहकम् ॥ वस्तुतस्तु प्रकृतश्रुतौज्ञानविषयस्यभेदस्य मा-
यिकत्वान्न काऽपि क्षतिः ॥ किंच द्वितीयस्कंधनवमाध्याये ऋतेर्थमित्यत्रसुबोधिनी-
प्रकाशे " शुक्तिरजतादावपिबुद्धिवृत्तेःसत्यायाएवरजतरूपेणांतराख्यानादतएवबु द्धे-

रेव पिधानं नतुशुक्तेः ” इत्युक्तेः ॥ तदाविषयस्यैवप्रूषात्वं नतुज्ञानस्यस्वरूपतस्तत् ॥ अतोज्ञानस्यमायिकत्वंमायिकविषयावगाहित्वादौपचारिकम् ॥ अतोपिनकोपिदोषः ॥ किंचप्रकृतेबहुवचनांतमायाशब्दार्थइंद्रियवृत्तिरूपज्ञानानि ॥ संध्याधिकरणादौभास्कराचार्यादिभिरुदाहृतम् “ मायावयुनमभिख्या ” इतिवैदिकनिघंटुवचनमप्यत्र साधकम् ॥ ऐंद्रियकज्ञानेचेंद्रियवृत्तीनां क्रमत्त्वात्त्वदुक्तरीत्यापिन शंकावकाशः ॥ तदेतदाहुः ॥ वस्तुतस्त्विति ॥ प्रत्युक्तमिति ॥ अयमाशयः ॥ यच्चतस्मादित्यादिपुण्णातीत्यंतंतदेवमायिकज्ञानमूलकम् ॥ पूर्ववाक्यमाप्तेभवने प्रतीतिमात्ररूपतायाः ज्ञानेरूपेषु वा मायायाहेतुतायाश्चविधाने तत्रैव वाक्यभेदप्रसंगात् ॥ प्राप्तेकर्मणिनानेकोविधातुंशक्यतेगुणइतिन्यायात् ॥ अन्यथा “ चित्रयायजेते ” त्यादौ “ पशुनायजेते ” तिप्राप्तपशौ चित्रत्वस्त्रीत्वरूपगुणद्वयं विधीयतइत्यादि स्वीकर्तुं शक्येत ॥ नतु दधिमध्वादिसंसृष्टप्राजापत्यादि ॥ प्रकृतश्रुतौच त्वदभिमतंपारिभाषिकमज्ञानं मायापदेनग्रहीतुमशक्यम् ॥ बहुवचनविरोधात् । शंकराचार्यैरपि प्रज्ञापरतया व्याख्यानाच्च ॥ ग्रहिलतयातद्ग्रहणेकरणतानादरेच कृतेसत्यपि शरैःशातितपत्रइत्यादौ शातनक्रियायामिव एकदेशेपुरुत्वएवान्वयइतिभेदस्यैवाविचकत्वसिद्धिः ॥ वस्तुतस्त्विंद्रियवृत्तयएवात्रमायाशब्दार्थइति असकृदवोचाम ॥ किंचेदंवाक्यंऋग्वेदेपठ्यते तत्र (अष्टक० ४ अध्याय ७ वर्ग३०ऋक्१) “ स्वादुष्किलायंमधुमाँउतायं ” इत्याद्येकात्रिंशदृचेसूक्ते पंचसोमपराऋचउक्त्वा षष्ठीमारभ्येंद्ररूपेण परमात्मानिरूपितः॥ तत्र ( ऋक् ७। ८। “इंद्रप्रणःपुरएतेवपश्यप्रनोनयप्रतरंवस्योअच्छ ॥ भवासुपारोअतिपारयोनोभवासुनीतिरुतवामनीतिः ॥ ७ ॥ उरुंनोलोकमनुनेषिविद्वान्त्स्वर्वज्ज्योतिरभयंस्वस्ति॥ऋष्वातइंद्रस्थविरस्यबाहूउपस्थेयामशरणाबृहंता ॥८” इत्यादिऋग्भिः हेइंद्रपरमेश्वर त्वं पुरएतेव पुरतोगंतेव नोऽस्मान्प्रकर्षेण पश्य ॥ यथा मार्गेयूथाग्रेसरः स्वरक्ष्यान्पश्यति तथा पश्येत्यर्थः ॥ तथावस्योवसीयः ॥ त्वत्सेवानुकूलंश्रेष्ठधनं अच्छ आभिमुख्येन प्रतरं प्रकृष्टतरंनः प्रणय अस्मान् प्रापय ॥ तथासुपारः सुष्ठुपारयिता संसारदुःखेभ्यस्तारयिता भव तथा नः अस्मान् स्तोतॄन् अतिपारयः कामक्रोधादिशत्रून् जन्ममरणादिक्लेशान्वा अतिक्रामय सुनीतिःशोभननयनश्चास्माकंभव॥उतापिच वामनीतिर्वामानां वननीयानां धनानां नेता भव॥यद्वाऽस्मदर्थश्रेष्ठप्रापणो भव ॥ ७ ॥ तथा हे इंद्र परमेश्वर विद्वान् सर्वज्ञः त्वंउरुं विस्तीर्णं लोकं अक्षराख्यं स्वं धाम नोऽस्माननुनेषि अनुगमय ॥ तदेव स्पष्टयति स्वर्वत् ॥ यन्नदुःखेन संभिन्नं नच ग्रस्तमनंतरं ॥ अभिलाषोपपन्नं च तत्सुखं स्वःपदास्पदमित्युक्तलक्षणकसुखविशिष्ट ज्योतिः स्वप्रकाशं अभयं अद्वितीयत्वात् भयरहितं तत्स्वस्तिक्षेमेणानुनेषि अस्माननुगमय ॥ हे इंद्र स्थविरस्य सर्वतो वृद्धस्य ते तव संबंधिनौ ऋष्वादर्शनीयौ बृहंता महांतौ बाहू संबाहुभ्यांधमतीत्यादिश्रुतिप्रसिध्धौ त्व-

दीयौ हस्तौ शरणा रक्षकौ शरणतया उपस्थेयाम ॥ उपतिष्ठेम सेवेमहि ॥ इत्या-
द्यर्थबोधिकाभिः ॥अप्राकृताशेषविशेषशालितयैव निरूपणात्॥निर्विशेषताया अभावा-
त् ॥ निर्विशेषस्य भवनासंभवशंकामुद्भाव्य तत्समाधानार्थं वाक्यशेषइतिकल्पनं
शशस्यशृंगभंगभिया नेत्रनिमीलनमितिकल्पनासगंधम् ॥ अतःपूर्वार्द्धे मायापदमनु-
क्त्वा उत्तरार्धएव तथोक्त्याभेदज्ञानमेव मायाकरणकं ननु भवनमपीत्यध्यवसीयते ॥
उत्तरार्द्धे विवरणरूपतांगीकारे मानाभावाच्च ॥ किंचेदंवाक्यं बृहदारण्यकेऽपि चतु-
र्थप्रपाठके मधुब्राह्मणाख्ये पंचमब्राह्मणे पठ्यते ॥ तत्रोपक्रमोपसंहारौ केचिद-
त्रातिविमलप्रज्ञाइत्यत्रावरणभंगे कृतेर्थमित्यत्रसुबोधिनीप्रकाशेच श्रीपुरुषोत्तमचरणैर्-
विचारितौ ॥ तौयथा "तत्रचमैत्रेयीब्राह्मणोक्तस्यात्मनःपृथिव्यादिषुविद्यमानत्व-
ममृतत्वंब्रह्मत्त्वंसर्वात्मकत्वंचोक्त्वाततःपुरश्चक्रेद्विपदइत्यादिनापुरांकरणंतासुप्रवेशंसर्व-
स्यतत्संभूतत्वंचोवाद ॥ तेनभामेभेदेसर्वसमामोषिततोऽसिसर्वइतिवद्यामिकृतागौणी-
सर्वात्मकताभविष्यतीतिशंकावारणायरूपंरूपमितिमंत्रःपठ्यते ॥ अयंवैहरयोयंवैदश-
चसहस्राणिचबहूनिचानंतानिचेतिविवियतेच ॥ ततोयस्यैवंरूपताअत्रविवृताब्राह्म-
णोपक्रमेचोक्ता ॥ तस्यैवतदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमित्यनेनतत्स्वरूपमुक्त्वा-
ऽयमात्माब्रह्मसर्वानुभूरित्यनुशासनमित्युपसंहृतम् ॥ एवंचात्रविचारेउपक्रमोपसंहा-
रविवरणेषुमायांविनैवात्मनःसर्वरूपत्वाभ्यासात् ॥ स्वरूपकथनेपूर्वत्वादिनिषेधेनप्राप्त-
स्यशून्यवादभ्रमस्यवारणायसर्वानुभूरितिसर्वानुभवकर्तृत्वरूपोपपत्तिकथनाच्च ॥ भ्र-
मरहितस्यात्मनःसर्वभूतरूपताश्रुत्यंतरोक्तस्वेच्छाकृतेवेतिविनिगमनोत्पत्तेरपिमाबाप-
देनेंद्रियवृत्तिरेवतत्रग्राह्या" इति ॥ तस्मान्नानेन विवर्तवादस्य पुष्टिः ॥

पुराणेषुतुप्रपंचस्ययन्मायिकत्ववर्णनंतद्वैराग्यार्थं ॥ दोषदृष्टेर्वैरा-
ग्यहेतुत्वात् ॥ मायिकत्वमपि मायिकसदृशत्वात् ॥ तदपिका-
र्य्यात्मना तिरोभावशालित्वात् ॥ अन्यथा " तदात्मानं स्वयम-
कुरुत " सच्चत्यच्चाभवत् " इत्यादिश्रुतिविरोधःस्यात् ॥ नच-
भूतार्थवादस्यतस्य कथंस्वार्थे तात्पर्याभावइतिवाच्यं ॥ आ-
विर्भावतिरोभावशालित्वएवतात्पर्य्याभ्युपगमात् ॥ एतेन पुरा-
णेषुतुप्रपंचस्येत्यारभ्यवक्तुमुचितमित्यादिकंदत्तोत्तरं ॥

टीका

सहस्राक्षे पुराणेषुतुप्रपंचस्येत्यादिं वक्तुमुचितमित्यंतं भागं निरस्यंति ॥ पुराणेष्वि-

---

सहस्राक्ष

*पुराणेषुतु प्रपञ्चस्यमायिकत्वंबहुशउक्तं तत्तुविदुषांस्तुविदितमितिनास्माभिरुपन्यस्त-
म् ॥ यत्तु मायिकत्वंपुराणेषुवैराग्यार्थमुदीर्यते इतितद्गुरुवाक्यं तत्रोच्यते ॥ कथं भूतार्थ-

त्यादिना ॥ दत्तोत्तरमित्यंतेन ॥ अयंभावः ॥ यथापुराणेषुमायिकत्वमुक्तं त-
थासत्यत्वमपिबहुशउक्तमेव ॥ यथा तृतीयस्कंधे ( अध्याय० १०श्लोक१२ )
विश्वंहिब्रह्मतन्मात्रंसंस्थितंविष्णुमायया ॥ ईश्वरेणपरिच्छिन्नंकालेनाव्यक्तमूर्तिना ॥
यथेदानींतथाचाग्रेपश्चादप्येतदीदृशमिति ॥ अष्टमस्कंधेपि ( अध्याय०६श्लोक१० )
त्वय्यग्रआसीत्त्वयिमध्यआसीत्त्वय्यंतआसीदिदमात्मतंत्रे॥त्वमादिरंतोजगतोस्यमध्यं
घटस्यमृत्स्नेवपरः परस्मात् ॥ इति ॥ दशमेच ( अ० २ श्लो० २८ ) त्वमेकएवा-
स्यसतः प्रसूतिस्त्वंसंनिधानं त्वमनुग्रहश्च ॥ त्वन्माययासंवृतचेतसस्त्वांपश्यंतिना-
नानविपश्चितोये ॥ इति ॥ अत्र अस्येति प्रत्यक्षस्यजगतः सत्त्वमेवोक्त्वा नानात्व-
दर्शनस्यैव मायासंवरणहेतुकत्वमुक्तम् ॥ एकादशेपि ( अ० २४ श्लो० १८ ) प्रकृ-
तिर्ह्यस्योपादानमाधारः पुरुषः परः ॥ सतोऽभिव्यंजकः कालोब्रह्मतत्रितयंत्वहमि-
ति ॥ एवस्थलांतरेष्वपिज्ञेयम् ॥ यथाविष्णुपुराणेप्रथमेंऽशसमाप्त्यध्याये ( अध्या०
२२ श्लो० ५९ ) तदेतदक्षरंनित्यंजगन्मुनिवराखिलम् ॥ आविर्भावतिरोभावजन्म-
नाशविकल्पवदिति ॥ वचनांतराणित्वाविर्भावतिरोभावनिरूपणउदाहरिष्यामः ॥
ननु एवंसति पुराणवचसांपरस्परविरोधपराहतत्वादप्रामाण्यमापद्येतेतिचेन्मैवम् ॥
मायिकत्वबोधकानांतेषां वैराग्यजननतात्पर्यकत्वेन विरोधाभावात्॥नच पौराणत्वा-
विशेषादन्यतरपक्षपातस्याशक्यत्वं शंक्यम् ॥ श्रुतिषु "ऐतदात्म्यमिदंसर्वंतत्सत्यं"
इत्यादिवाक्यशतेनसत्यतायाबोधनेन मायिकत्वस्य मिथ्यात्वस्य च तत्रक्काप्यश्रवणे-
न श्रुतिसंवादिनांत्वार्थेतात्पर्यम् ॥ तदसंवादिनामितरत्रेतिकल्पनस्यैवावश्यकत्वात्॥
अन्यथापूर्वतंत्रेस्मृतिपादे ( सू० ३ ) "विरोधेत्वनपेक्षंस्यादसतिह्यनुमानं" इति-
न्यायादप्रामाण्यापत्तेः ॥ अत्रचायं ममवेदांतचिंतामणौ संग्रहः ॥ दृढाहंतापदेदेहे-
गेहादिममतास्पदम् ॥ यदासत्यंविजानीयान्नविरज्येतकश्चन ॥ वैराग्यार्थमसत्यत्वं-
पुराणेषुक्कचित्कचित् ॥ अभिप्रेत्यतिरोभावंकुत्रचित्संसृतिंतथा ॥ क्रीडामयेप्रभोर-
स्मिन्संयोगविगमास्पदे ॥ तिरोभाविनिनोरागः कर्तव्यः क्षणिकेवृथा ॥ तथाहि ॥
पुराणंहिमित्रसंमितं ॥ यथाहि मित्रं कथमपिबोधयित्वाऽहितवस्तुन्यरुचिमुत्पाद्य
ततोनिवर्तयति तथा तदपि ॥ यथाच मित्रं कदाचिदनर्हस्थलेभुंजानं प्रति
विषंभुंक्ष्वमाऽस्य गृहेभुङ्क्थाइतिब्रूते न तस्यविषभोजने तात्पर्यम् किंतु तत्रभो
ज[illegible]स्यपरित्यागएव ॥ तथाच मायिकत्वंक्कचिद्वैराग्यार्थं क्कचित्तिरोभाव-
म[illegible]प्रेत्य कुत्रचिच्च तन्निष्ठसंसृतिमभिप्रेत्योक्तम् ॥ यदिच केवलव्यामूढो-
दृढाहंताममतास्पदंशरीरदारागारादिकंसत्यत्वात्सार्वदिकंविजानीयात्तर्हियद्वाक्यतोध-

वाद[illegible]स्यतस्यस्वार्थेतात्पर्याभावउच्यते ॥ किञ्च प्रपञ्चस्यवस्तुतोमायिकत्वाभावेत्वदीयसंगत
स्त[illegible]कुशलोनैतैर्वाक्यैर्वैराग्यभाक्स्यादिति परमतस्थपुरुषाणांबोधार्थंतानिवाक्यानीतिवा-
च्य[illegible]॥ नचतेषांमोक्षाधिकारस्त्वत्संमतइतितानिवाक्यानिव्यर्थान्यप्रमाणानिचस्युः तस्माच्छ्रौ-
तव[illegible]र्थोपबृंहकत्वमेवैतेषांवक्तुमुचितम् ॥

मंइतीतरस्थितोनमन्यतेतस्यनिवारणंजनइतिन्यायान्नैव विरज्येत प्रत्युत तदेवाधिकतरमभिनिविशेत ॥ मायिकत्वंविवर्तत्वंस्वप्नाभत्वं वा श्रुत्वातु तत्रविरज्यमानः भगवत्सेवातच्छ्रवाणादौयतमानः सर्वस्यब्रह्मरूपतांश्रुत्वा ब्रह्मणएव तत्तद्रूपत्वात्सर्वंत्रसत्यतांसम्यग्विजानीयात् ॥ असत्येवर्त्मनिस्थित्वाततः सत्यंसमीयतइतिन्यायात् ॥ किंच सत्यस्यापिप्रपंचस्यपराभिध्यानादाविर्भावतिरोभावौतु भवतएव ॥ तथाच सत्यत्यंताभीष्टमपि दारादिकं प्राप्तेतिरोभावकाले क्षणमपि नैवावतिष्ठते ॥ अतस्तिरोभावमभिप्रेत्यापि तथावचनं ॥ यथाराज्ञास्वेच्छयाऽधिकारविशेषेस्थापितं ममैवायंग्रामादिरित्यभिमत्याप्रमाद्यंतंप्रति तन्मित्राणांअयंतवपूर्वंनासीन्नापिपरतःस्यात मध्येपिस्वप्नइवैवायंविभवइतिवचनं ॥ एवंचयथामायिकाआम्रादयोविवर्तारजतादयः स्वप्नसमृद्धयश्चमिथ्यात्वाच्चिरंनानुभूयंते ॥ तथेदमपितिरोभावादित्यल्पकालिकानुभवविषयत्वादिदंमायिकमुच्यते ॥ क्रौर्यादिमत्वात्सिंहोमाणवकइव ॥ तथादेहगेहादिप्रपंचेऽनुभूयमानमहंताममतारूपं स्वप्नमायामनोरथसब्रह्मचारिणंसंसारं मृषाभिप्रेत्य तदाश्रयस्यकायनिकायमुखस्य मायिकतादि प्रतिपाद्यते वैराग्यार्थं ॥ देशवर्तिमनुष्याणांसाहसिकत्वेपि कलिंग स्साहहसिकइतिवत् ॥ अतोवैराग्योत्पादनएव तेषांतात्पर्यं ॥ अतएव यत्रपरित्यागादिप्रतिपादकमवांतरप्रकरणम् ॥ तत्रैवतथोच्यते ॥ तथा एकादशस्कंधेसप्तमाध्याये त्वंतुसर्वंपरित्यज्यस्नेहंस्वजनबंधुष्वित्याद्युपदिशताभगवता विद्धिमायामनोमयमित्याद्युक्तम् ॥ एवं कानिचिदवांतरप्रकरणानि तादृशवचसांमायिकत्वं पुराणेष्वितिकारिकावरण भंगेश्रीपुरुषोत्तमचरणैर्दर्शितानि ॥ तयादिशाऽन्यत्रापिनिर्णेयं ॥ ( तत्तुविदुषांसुविदित ) मितिनिष्ठांतप्रयोगस्तुचिंत्यः ॥ यत्तु ( कथंभूतार्थवादरूपस्यतस्यस्वार्थेतात्पर्याभाव ) इति ॥ तत्स्वग्रंथास्मरणात् ॥ शंकराचार्यैरुपनिषद्भाष्येषु तत्रतत्र " त्रयोहोद्गीथेकुशलाबभूवुः ॥ उशस्तिरहचाक्रायणइभ्यग्रामेप्रद्राणकउवास ॥ भृगुर्वैवारुणिः ,, इत्याद्याख्यायिकानां भूतार्थवादरूपाणां स्वार्थे तात्पर्याभावस्य दर्शितत्वात् ॥ अस्माकंतुविषयतारूपप्रपंचस्यमिथ्यात्वान्न तेषांस्वार्थेतात्पर्याभावोऽपि ॥ स्पष्टं चेदं क्रतेर्थमित्यादिस्थलेषु सुबोधिनीतत्प्रकाशयोः ॥ यच्च ( त्वत्संगतस्त्वद्धाष्ठोकुशलोनैतैर्वाक्यैर्वैराग्यभाक्स्या ) दित्यादि तन्न ॥ सत्यत्वेपि तिरोभावशालित्वात्प्रथमस्कंधादिषु यथाक्रीडोपस्कराणांसंयोगविगमाविह ॥ इच्छयाक्रीडितुः स्यातांतथैवेशेच्छयानृणामित्यस्मादिच्छानधीनसंयोगविगमास्पदत्वाच्चरमत्संगतानां सत्यत्वांजानतामपि सुखेन वैराग्यसिद्धेः ॥ तर्हिवैराग्यार्थमपितथाकथनंकिमर्थमितिचेत् सुदृढसंसारासक्तिसमेधितदुरपोहव्यामोहभाजांमंदाधिकारिणांतथोपदेशमंतरा तदसिद्धेरुचितमेव मित्रवत्तथाकथनमितिदर्शितंप्राक् ॥ अतोनवाक्यानांवैयर्थ्यमप्रामाण्यंवा ॥ तैस्मान्नतेषांश्रुत्युपबृंहकत्वं ॥ श्रुतिषुतदभवात् ॥ एवंपरतानंगीकारे

श्रुतिस्मृतिपुराणानांविरोधोयत्रदृश्यते ॥ तत्रश्रुतिर्बलिष्ठास्याद्द्वयोर्द्वैधेस्मृतिर्वरानलघु-
व्यासस्मरणाद्यवस्थांतरापत्तेः ॥

किंचासतोहेतुत्वादर्शनान्नासतोऽज्ञानस्यजगद्धेतुत्वंसंभवति ॥ नचमायायाअसत्त्वंनांगीक्रियते नासदासीदित्यादिश्रुतेरितिवा-च्यं ॥ नासदासीदितिश्रुतेर्मायायाअसद्विलक्षणत्वप्रतिपादनपर-त्वे मानाभावात् ॥ ननुमायायास्तत्कार्यस्यचशुक्तिरजतस्यसत्य त्वेबाधानुपपत्तिः ॥ नहिसत्यस्यवस्तुतोबाधःसंभवति ॥ त्रिका-लाबाध्यस्यैवसत्यत्वात् असत्यत्त्वेच शशशृंगादिवन्नप्रतीयेत ॥ शुक्तिरजतादिकंचप्रतीयते ॥ शुक्तिसाक्षात्कारेणतदवच्छिन्नचै-तन्यसाक्षात्कारेणबाध्यतेऽतःसदसद्भ्यामनिर्वचनीयमेव एवं मायापि नसद्रूपा नाप्यसद्रूपा किंत्वनिर्वचनीयैवेतिचेन्न॥ यदि शुक्तौरजतमुत्पद्यतइत्यस्मत्संमतंस्यात्तदा तस्यसत्यत्वासत्यत्व-योरसंभवंप्रदर्श्य परिशेषादनिर्वचनीयत्वंसाधयित्वा मायायां-तादृश्यां तेनानिर्वचनीयत्वप्रतिपादनं स्यात्तदेव नसंभवति॥ शु-क्तौरजतोत्पादकसामग्र्यभावेन तदुत्पत्तेरसंभवात्॥ नच सादृ-श्यदर्शनादिसध्रीचीनाऽविद्यातदुत्पादिकेतिवाच्यं ॥ आपणस्थर-जतस्यापि त्वन्मतेऽविद्याजन्यत्वस्वीकारेणास्याप्यविद्याका र्य्यत्वेनाविशेषात्तद्रजतवदस्याप्यर्थक्रियाकारित्वापत्तेः॥नच त-स्यमूलाविद्याकार्य्यत्वं शुक्तिरजतस्य चतूलाविद्याकार्य्यत्वमि-तिविशेषइतिवाच्यं॥ वेदबाह्यायास्तादृशकल्पनायाअनादरणी-यत्वात्स्वप्नस्यापि नार्थक्रियाकारित्वं ॥ ननु यदि स्वप्नस्या-र्थक्रियाकारित्वंनस्वीक्रियते तदा यदाकर्मसुकाम्येषुस्त्रियंस्वप्ने-षुपश्यति समृद्धिंतत्रजानीयात्तस्मिन्स्वप्ननिदर्शनेइत्यादिश्रुति-विरोधइतिचेन्न ॥ तत्रस्वप्नेषुपश्यतिस्वप्ननिदर्शने इतिकथनेन तादृशस्वप्नज्ञानस्यैव समृद्धिहेतुत्वं प्रतीयते ॥ नतुस्वप्नस्य ॥ ज्ञानस्यचसत्यत्वात्तत एवसत्यसमृद्धेःसंभवःइत्थं च नासतःसद्धे-तुत्वं नापि श्रुतिविरोधः

## टीका

सहस्राक्षे यँत्तुअसतइत्यादिं अद्वैतसिद्धौस्थितमित्यंतं भागं दूषयंति ॥ **किंचासतइ-त्यादिना नापिश्रुतिविरोधइत्यंतेन** ॥ अत्रायंभावः ॥ अज्ञानस्यासत्त्वेसज्जगद्धेतु-त्वं न युक्तंश्रुत्यामायायाः सदसद्रूपतायाअसिद्धौ युक्त्यैव तत्सिद्धिमाशंकंते ॥ **नन्वि-ति** ॥ **शुक्तिसाक्षात्कारेणेति** ॥ चैतन्यसाक्षात्कारेसौहेतुः ॥ **तादृश्यांतेनेति** ॥ रजतवत्सबाधायां प्रतीतिविषयं च तेन परिशेषेण अत्रायंभावः अज्ञानस्यासत्वेसज्जा-गद्धेतुत्वंनयुक्तं "॥ कथमसतः सज्जायेत" इतिश्वेतकेतुविद्यायांश्रवणात् ॥ जगत्सत्ता-त्विहसदित्युक्त्यासिध्यति ॥ त्वमेकएवास्यसतः प्रसूतिः । सतोभिव्यंजकः कालइ-त्याद्युपबृंहणाच्च ॥ अज्ञानस्यसदसत्त्वांगीकारेपि नेष्टसिद्धिः ॥ त्वन्मते सदसत्त्वाभ्या-मनिर्वचनीयस्यापिशुक्तिरजतादेरर्थक्रियाकारित्वाभावात् ॥ नहि तेन रजतेन पात्र-भूषणादि शक्यं कर्तुं ॥ तथानाज्ञानादपिकार्यं निष्पद्येत ॥ किंच तस्मिन्नसत्वांशेन अद्वैतस्येव सत्वांशेन द्वैतस्यापि सार्वदिकत्त्वमापद्येत ॥ तथाच स्वमतहानिर्भेदाभेद-वादप्रवेशश्च ॥ नापि ब्रह्मातिरिक्ताऽनाद्यविद्याबोधिका काचिच्छ्रुतिरस्ति ॥ कुतस्तरां तस्याः सदसत्त्वबोधिकासा ॥ नच नासदासीदितिश्रुतिस्तथा शंक्या ॥ तस्याः सृष्टेः पूर्वंस्थूलसूक्ष्मकार्यस्यकारणात्पृथक्सत्त्वनिषेधमात्रपरत्वात् ॥ इदंहि वाक्यं तैत्तिरी-यब्राह्मणे द्वितीयाष्टकेऽष्टमप्रपाठके नवमानुवाकेपठ्यते " नासदासीन्नोसदासीत्तदानीं-नासीद्रजोनोव्योमापरोयत् ॥ किमावरीवः कुहकस्यशर्मन्नंभः किमासीद्गहनंगभीरम्"॥ नमृत्युरमृतंतर्हिन । रात्रियाअन्हआसीत्प्रकेतः । आनीदवातंस्वधयातदेकं । तस्मा-द्धान्यंनपरःकिंचनास । तमआसीत्तमसागूढमग्रेप्रकेतंआनीदवानंस्वधयातदेकंतस्मा-द्धान्यंनपरः किंचनासतम आसीत्तमसागूढमग्रेप्रकेतं सलिलᳪसर्वमाइदम् । अर्थ-स्तु तदानीं सृष्टेः पूर्वं न असत् सूक्ष्मं कार्यं आसीत् ॥ नो सत् स्थूलं कार्यं कारणं वा आसीत् ॥ सदेवेत्यादिश्रुतिभिः जगतः पार्थक्येन स्थित्यभावात् ॥ तदेव प्रपंचयति ॥ नासीद्रजः ॥ प्ररकोरजोगुणोनासीत् ॥ उपलक्षणविधयात्रयोपिगुणा नासन् ॥ अथवा रजःशब्देन तार्किकप्रतिपन्नाभूतचतुष्टयपरमाणवः ॥ खइवरजां-सिवांतीत्यादौतथादर्शनात् ॥ नो व्योम आकाशोपलक्षितसर्वभूतानां निषेधः ॥ भूताकाशस्यैवायंनिषेधो नत्वक्षरस्य ॥ अग्रे " योअस्याध्यक्षः परमेव्योमन् " इतिश्रवणात् ॥ उपलक्षणविधया तार्किकप्रतिपन्नानि आकाशकालदिगात्ममनांसि नासन्निति वा ॥ अपरो यत् योभौतिकप्रपंचः सोपि नासीत् ॥ एवं भूतभौतिके निषिध्य आवरकमायां निषेधति किमावरीवः किं आवृणुयात् ॥ आवरणीयाभावा-त् ॥ कुह कुत्र आश्रये ॥ कस्यशर्मन् कस्यसुखनिमित्तं ॥ कार्याश्रयप्रयोजनाभावात्सानासी-

---

## सहस्राक्ष.

* यत्त्वसतोहेतुत्वदर्शनान्नासतोऽज्ञानस्यकार्यंजगत्सम्भवतीत्याह ॥ तन्नयुक्तम् ॥ अ-ज्ञानस्यासत्त्वानङ्गीकारात् ॥ नासदासीदितिश्रुतेः ॥ सद्विलक्षणस्यतुकूटकार्षापणस्वप्नादेर्हे-तुत्वंदृष्टम् ॥ अतएवमिथ्याभूतस्वप्नहेतुत्वपरा यदाकर्मसुकाम्येषुस्त्रियंस्वप्नेनुपश्यति ॥ समृद्धिं-तत्रजानीयात्तस्मिन्स्वप्ननिदर्शने इतिश्रुतिःसंगता ॥ विस्तरेणचैतदद्वैतसिद्धौस्थितम् ॥

देवेत्यर्थः ॥ अथ तैत्तिरीयसंहिता ( कां० ७ प्र० १अनु० ५ ) "आपोवाइदमग्रेसलिल-
मासीत् " इतिश्रुत्यातदाजलमासीदितिभ्रमः स्यात्तद्वारणायाह ॥ अंभः किमासी-
त् ॥ गहनंप्रवेष्टुमशक्यम् ॥ गभीरं अत्यंतमगाधं अंभः किमासीत् ॥ नैवासीदित्य-
र्थः ॥ नमृत्युः तर्हिप्रलयकालेप्राणिनामभावात् मृत्युर्नासीत् ॥ अमृतंजीवनंनासीत् ॥
जगतस्तदानीमव्याकृतत्वात् ॥ मरणजीवनव्यवहारो नासीत् ॥ राज्याः प्रकेतः चि-
न्हंचंद्रनक्षत्रादिकंनासीत् ॥ अन्हः प्रकेतः चिन्हंसूर्यादिकंनासीत् ॥ कालज्ञापकंकिम-
पिनासीदित्यर्थः ॥ तर्हिकिमासीत्तत्राह ॥ आनीदवातं तत् शास्त्रप्रसिद्धं एकं अद्विती-
यंस्वधयाकार्यमात्रस्यलयशक्त्यास्वस्मिन्कारणेधारणेन अवातंवायुरहितंनिश्चलं आ-
नीत् अचेष्टत ॥ अंतारमणात् ॥ इदमेवविरुद्धधर्माश्रयत्वं श्वासोच्छ्वासादिरूपप्रा-
तंविनाप्राणनस्यचेष्टायाश्चलोकविरुद्धत्वात् ॥ एकपदस्यमुख्यार्थत्त्वशंकांवारयति ॥
तस्माद्धान्यपरः किंचनास ॥ तस्मात् अद्वितीयब्रह्मणः ह स्पष्टं ॥ अन्यत्
भिन्नं ॥ परः परं उत्कृष्टं च ॥ किंचन किमपि ॥ न आस नैवासीत् ॥ एते-
न ब्रह्मातिरिक्ताऽनाद्यविद्यादिकंतदानींप्रतिषिद्धं ॥ तथाच नाऽनया श्रुत्या तस्य-
अनिर्वचनीयत्वसिद्धिः ॥ " किंतदानींतस्मैसहोवाचनसन्नासन्नसदसत् " इतिसौ-
बालश्रुत्या तदानींसदसतोपि निषेधाच्च ॥ अग्रेपि तमआसीदिति तमःशब्देन सर्वा-
च्छादकं ब्रह्मैव पूर्वं तदेकशब्दाभ्यामुक्तं .निरूप्यते ॥ आसमंतात् इदं नामरूपा-
भ्यांव्याकृतं सर्वंजगत् अग्रेसृष्टेः पूर्वं अप्रकेतं अप्रज्ञायमानंसलिलंकारणादविभक्तं
तमसा सर्वाच्छादकेन ब्रह्मणा गूढंतिरोभावितं आसीदिति तदर्थात् ॥ स्पष्टंचेदंसुबो-
धिनीतत्प्रकाशयोर्ग्रंथांतरेषु च ॥ नापिमूलेपूर्वपक्षे उक्तरीत्यारजतदृष्टांतेनानिर्वच-
नीयत्वसिद्धिः ॥ श्रौतदर्शने अश्रौतस्याज्ञानस्यतत्रसदसत्त्वस्यचानादरणीयत्वात् ॥
रजतसपक्षकानुमाने हेत्वभावात् ॥ सपक्षस्यापि पक्षे प्रवेशाच्च ॥ नापि तस्यास्ता-
दृशरजतकारणत्वात्कारणस्य कार्यसजातीयत्वाच्चतत्सिद्धिः॥ तूलविद्यायाएवतत्सि-
द्धिप्रसंगात् ॥ गोमयवृश्चिकादौव्यभिचारदर्शनेनानैकांतिकत्त्वाच्च ॥ किंच शुक्तिर-
जतमपिनासदसत्त्वाभ्यामनिर्वचनीयं ॥ सत्यायाएवबुद्धेः प्रकृतिगुणतमसाविष्टाया-
रजतरूपेणख्यानात्तत्रबौद्धकल्पितमेवसत्त्वं ॥ वस्तुतस्त्वसत्त्वमेवेतिनिर्वचनात् ॥
यत् द्रव्यादिकं कल्प्यते तत्सत्ताविशिष्टमेवकल्प्यते ॥ प्रतिनियतशौक्ल्यादिविशि-
ष्टमिवरजतादिकं ॥ नहिकल्पितेरजतेशौक्ल्यंवास्तवं ॥ तथारजतादौ सर्वत्रसत्ता-
पि न वास्तवी ॥ शशशृंगादेस्तु वाचनिक्येवसत्ता ॥ अतोवचसैव तथाव्यवहारः ॥
अथ शशशृंगादिकमपि स्वप्नेकदाचिद्दृश्यते इतिचेत्तर्हि अत्यंतासतोप्युपलंभाद्दुपल-
ब्ध्यापि नरजतादेरांशिकसत्वसिद्धिः ॥ अज्ञानंरजतकल्पमितिचेत् कीदृक्तत्स्वरूप
कस्यसत्या बुद्धिः किमियगुणाविष्टा तदज्ञानं कल्पयतीति प्रश्नोप्युत्तरणीयः ॥
पिच आपणस्थशुक्त्यधिष्ठानकरजतयोरविद्याकार्यत्वादविशेषः प्रसज्येत ॥ मू-
विद्यातूलाविद्यादिकल्पनंतु तथाबोधकश्रुत्याद्यभावान्निर्मूलम् ॥ अतोऽसतोऽज्ञानस्य-
नहेतुत्वं ॥ नापिकूटकार्षापणवद्धेतुता शंक्या ॥ ताम्रभिन्ननिकृष्टधातुजन्ये ताम्र-

रससेचनादिना ताम्रमयतया प्रतीयमाने कूटकार्षापणे अशीतिगुंजामितताम्ररूप-त्वाभावेपि सत्तायाअनपायात् ॥ नहि आरकुटघटितहाटकवत्प्रतीयमानमपि हेम-मुद्रादिकंशुक्तिरजतादिवदसत्यमितिशक्यंवक्तुम् ॥ तस्मात्सदविलक्षणस्यतस्यार्थक्रि-याकारित्वंयुक्तमेव ॥ अथनटेनमंत्रादिनाकल्पितंतात्कालिकमात्रव्यवहारपात्रंद्रव्यं-दृष्टांतीक्रियेत तथापि तत्रमंत्रादियुक्तिरूपामायासत्या तत्कल्पितंवस्त्वेवासत्यं ॥ त-थात्रमायाकल्पनहेतुः सत्यंमायांतरमापद्येत ॥ वस्तुतस्तु तत्रापिद्रव्यमिदमितिविप-र्यासवृत्तिमतीसत्यामतिरेवसतोव्यवहारस्यकारणं ॥ तत्रमायिकत्वनिश्चयोत्तरंव्यव-हाराभावात् ॥ एवंस्वप्नदृष्टांततोपिनहेतुता ॥ तस्यार्थक्रियाकारित्वेस्वामिकभोजना-दिनातृप्त्याद्यापत्तेः ॥ भयादिकारणंतु सिंहादिज्ञानमेव नतुस्वामिकसिंहादयः ॥ वा-स्तवसिंहादिसन्निधानेपितदज्ञानेभयाद्यनुत्पत्तेः ॥ ज्ञानंचसत्यमित्यदोषः ॥ " यदाक-र्मसुकाम्येषुस्त्रियंस्वप्नेषुपश्यति ॥ समृद्धिंतत्रजानीयात्तस्मिन्स्वप्ननिदर्शने " इतिश्रु-तिरपि "पश्यति निदर्शन" इत्युक्त्याज्ञानमेवसमृद्धिहेतुतयावदति ॥ किंचका-म्यकर्मणामपिफलदाताभगवानेव ॥ फलमतइतिन्यायात् ॥ सएवचस्वप्नसृष्टिनिर्माता ॥ अतः सएवयथायथं तत्तत्प्रदर्शनेन तत्तत्फलंसूचयति ॥ एवमेवाभिप्रेत्य सूत्रितं-भगवता तृतीयस्यद्वितीये ( सू० ४ ) "सूचकश्चहितच्छ्रुतेराचक्षतेचतद्विदः" इति-स्वप्नस्तुनसदसद्रूपः ॥ मायामात्रंत्विति सौत्रमात्रपदविरोधात् ॥ श्रुतौ स्त्रियंस्वप्नेषु-पश्यती त्यपपाठोपन्यासस्तु पुस्तकप्रत्ययेनाध्ययनात् ॥ उक्तसूत्रे स्वद्भाष्येपिस्वप्ने-ष्वित्येवपाठः ॥ यत्रचच्छांदोग्येसप्तमप्रपाठकेप्राणविवादाद्ये ( खं० २ ) इदंवाक्यंप-श्यतेतत्रापितथैवपाठः ॥ विस्तरेण चैतदद्वैतसिद्धिनिरासे प्रस्थानरत्नाकरे प्रका-शादिषु च निर्णीतम् ॥

किंच "सन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाःकथ-मसतःसज्जायेत तत्सत्यं यदिदंकिंच तत्सत्यमित्याचक्षते"इत्यादि-श्रुतिशतैरपि सतएवजगद्धेतुत्वं प्रतीयते नासतः अतोब्रह्मणएव जगद्धेतुत्वं नमायायाः श्रुतिविरोधापत्तेःनचसतोजगद्भ्रमाधि-ष्ठानतया सन्मूलत्वं जगतः संभवत्येवेतिवाच्यं । यथा " सोम्यै-केनमृत्पिंडेनसर्वंमृण्मयंविज्ञातंस्या " दित्यादिदृष्टांतानुरोधेन घटशरावादिकं प्रति मृत्तिकायाः सुवर्णस्य कटकादिकं प्रति यथोपादानकारणत्वं तथैव कार्यजातं प्रति ब्रह्मणउपादा-नकारणत्वस्यनिश्चयेन सन्मूलाइत्यत्रापि मूलपदेन तादृशो-पादानस्यैव ग्राह्यतया भ्रमाधिष्ठानस्य च लोके लोका-नुसारिणस्तवमतेप्युपादानत्वासंभवेन तादृशश्रुतिविरोधोदुर्वार-

एव॥नहिरज्जुसर्पस्य रज्ज्ववच्छिन्नंचैतन्यंरज्जुर्वा उपादानं किंत्व-
विद्यैवातोमायामूलाःसोम्येमाःप्रजाइतिब्रूयान्नतुसन्मूलाइति ॥
किंच मायायाजगद्धेतुत्वे “कथमसतःसज्जायेत” इतिश्रुतिविरो-
धापत्तिः। ननुतादृशश्रुतेःसत्वेनाप्रतीयमानात्सत्वेनप्रतीयमानंक-
थंजायेतेत्यर्थकत्वेन शून्यवादनिराकरणपरत्वम् ॥नतुमायावाद-
निराकरणपरत्वं मायायाःसत्वेनप्रतीयमानत्वादितिचेन्न ॥ श-
ब्दयानादृशार्थस्यासत्सत्पदाभ्यामलाभेनवेदेनिर्मूललक्षणाकल्प-
नस्याप्रामाणिकत्वात् ॥ अतएव वाचारंभणादिपदानांवागालं-
बनाद्यर्थकत्वं नसंभवति ॥ लक्षणापत्तेः। यत्तु ( वस्तुतस्तुएक-
आहुरसदेवेदमग्रआसीत्ततोवैसदजायते त्युपक्रम्य प्रवृत्तेयंश्रु-
तिरसद्धेतुकसत्कार्यवादंखण्डयतीतिभाति ॥ तथाच तद्वादप्रा-
प्तसत्कार्य्यानुवादेन कारणासत्त्वनिराकरणेतस्यास्तात्पर्य्यान्न-
तद्विरोधः ) इत्याद्युक्तं तदपिनकिंचित् ॥ मायायाःसद्भिन्नत्वेना-
सत्त्वस्यदुरपोहतया मायावादस्याप्यसद्धेतुकसत्कार्य्यवादतया
तन्निराकरणपरत्वाभावस्य वक्तुमशक्यत्वात् ॥ किंच त्वन्मते-
जगतःसद्विलक्षणत्वेनासत्त्वा दसत्यमप्रतिष्ठं ते जगदाहुरनी-
श्वर मितिभगवद्वाक्यमपि त्वन्मतनिंदापरमिति प्रतिभाति ॥
नचास्माभिर्जगतोऽसद्विलक्षणत्वस्यापि स्वीकारात्कथमस्मन्निं-
दापरत्वंभगवद्वाक्यस्येतिवाच्यम् ॥सद्विलक्षणत्वासद्विलक्षणत्व-
योःसद्भिन्नत्वासद्भिन्नत्वरूपयोरेकत्रसमावेशोनसंभवति॥परस्प-
रविरुद्धत्वात् ॥

## टीका

सहस्राक्षे यत्तु षष्ठेत्यादिसत्प्रतिष्ठत्वमस्तिइत्यंतं भागं परिहरंति ॥ किंच सन्मू-

---

## सहस्राक्ष.

* यत्तु षष्ठश्लोकव्याख्यायांतट्टीकाकारेण सन्मूलाःसोम्येमाःप्रजाःसदायतनाःसत्प्रतिष्ठाः

**लाइत्यादिना परस्परविरुद्धत्वादित्यनेन** ॥ अयमर्थः ॥ छांदोग्यस्याष्टमा-
ध्यायेष्टमखंडे " सन्मूलाःसोम्येमाःसर्वाःप्रजा ,, इति वाक्यं पठ्यते ॥ सर्वाइतिपद-
रहितपाठोपन्यासस्तु अशुद्धपुस्तकोपलंभात् स्वयं च गुरुमुखादधीतत्वाभावात् ॥
अतोपिसद्ब्रह्मैवप्रपंचस्यकारणं नतुत्वदभिमतमसत्सदसद्वा अज्ञानं ॥ यत्तु सन्मू-
लाइत्यादेःसतोजगद्भ्रमाधिष्ठानत्वेन नानुपपत्तिरितितदकिंचित्करं ॥ अधिष्ठानेभ्रम-
विषयस्य मूलत्वायतनत्वादेरभावात् ॥ बुध्यैवांतरातस्यकल्पनेन बुद्धेरेवतत्रमूल-
त्वात् ॥ शुक्तेरजतायतनत्वेएकेनयदातत्ररजतंकल्प्येत तदासर्वोपितत्ररजतमेव-
नियमेन पश्येत् नतुपश्यति अतोन सा तदायतनं ॥ रजतंकल्पयित्वाकार्यांतरप-
रतंत्रत्वात्स्पर्शाद्यकृत्वा गतस्याधिष्ठानासंनिधानेपि रजतबुद्ध्यनिवृत्तेश्च ॥ अतएव-
नतद्रजतंशुक्तौलीयते शुक्तिनाशोत्तरमपि यदाकस्यचिदाप्तस्यमुखात्त्वयासाशुक्ति-
रेव दृष्टा नरजतमितिशृणोति तदैवतन्निवृत्तेः ॥ तस्माद्बुद्धिरेवरजतस्यमूलादिकं ॥
शुक्तेस्तु सादृश्यद्वारासंस्कारोद्बोधकतयैवोपयोगः ॥ किंच तत्र एकविज्ञानेन सर्व-
विज्ञानप्रतिज्ञाश्रूयते ॥ नहिसाऽधिष्ठानत्वे उपपद्यते ॥ रज्जुविज्ञानेन तदधिष्ठान-
कानां सर्वेषां यष्टिमालाव्यालादीनां विज्ञानस्यादर्शनात् ॥ प्रत्युत तद्विज्ञानेन य-
ष्ट्यादिविज्ञानस्य नाशएव दृश्यते ॥ तथाऽत्र सद्विज्ञानेन सर्वविज्ञानं नश्येन्नतु
सर्वविज्ञातं स्यात् ॥ अपिच तत्र ,, यथासोम्यैकेनमृत्पिंडेनसर्वंमृण्मयंविज्ञातंस्यात् ॥
यथासोम्यैकेनलोहमणिनासर्वंलोहमयंविज्ञातंस्यात् ,, इत्यादिना घटकटकादिकं
प्रति परिणाम्युपादानमेव मृत्सुवर्णादिकं दृष्टांतीक्रियते ॥ अतो ब्रह्मणोपि परिणा-
म्युपादानत्वमेव सन्मूलाइत्यादिनोच्यतइति निश्चीयते ॥ अन्यथा रज्जुभुजंगाद्येव
दृष्टांतीक्रियेत ॥ अन्यच्च भुजंगादिकं प्रति तज्जातीयशुक्रशोणितादेरेवोपादानत्वा-
दधिष्ठानस्योपादानत्वमेव नसंभवति ॥ अन्यथा घटादिर्निर्मातुकामेन मृदादिक-
मिव रजतादिकामेन शुक्त्याद्येवोपादीयेत नतु तत्खन्याद्यन्विष्येत ॥ नापिभुजंगा-

---

कथमसतः सज्जायेत तत्सत्यं यदिदंकिंचि तत्सत्यमित्याचक्षते इत्यादिश्रुतीरुपन्यस्य असत्-
त्यत्वेनज्ञानंत्वासुराणामेव ॥ तथाचगीतायाम् ॥ असत्यमप्रतिष्ठन्तेजगदाहुरनीश्वरमित्युक्तं ॥
तत्र सन्मूलाइत्यादेःसतोजगद्भ्रमाधिष्ठानत्वेननानुपपत्तिः ॥ प्रकृतिमात्रहेतुत्ववादेऽपितस्यभ्रमा-
ऽधिष्ठानताऽऽश्रीयतएवेतिनदोषः ॥ कथमसतः सज्जायेतेत्यस्यास्तु सत्त्वेनाऽप्रतीयमानात्सत्त्वे-
नप्रतीयमानंकथंजायेतेत्यर्थः ॥ अन्यथा वाचारम्भणंविकारोनामधेयमितिविरुध्येत ॥
वस्तुतस्तु एकआहुरसदेवसोम्येदमग्रआसीत्ततोवैसदजायतेत्युपक्रम्यप्रवृत्तयेयंश्रुतिरसद्धेतुकस-
त्कार्यवादंखण्डयतीतिभाति ॥ तथाचतद्वादप्राप्तसत्कार्यानुवादेनकारणासत्त्वनिराकरणेतस्या-
स्तात्पर्यान्नतद्विरोधः ॥ सदितित्वधिष्ठानाभेदमारोप्यस्याह ॥ जगतः सद्विलक्षणत्वस्वीकारे-
प्यसद्विलक्षणत्वस्याऽपिस्वीकारान्नभगवद्वाक्यमस्मन्मतनिन्दापरं किन्तुशून्यवादनिन्दापरम् ॥
अतएवाप्रतिष्ठमित्युक्तम् ॥ अस्मन्मतेतु जगतःप्रतिष्ठत्वमस्ति ॥

दे:पूर्वकाले रज्वादावभेदेन स्थितिःसंभवति ॥ अतस्तथासति तत्र " सदेवसो-
म्येदमग्रआसीत् " इति न वदेत् ॥ अथभ्रमात्पूर्वरज्जुरेवासीन्नभुजंगमइतिचेत्तर्हि
सदेवसोम्याग्रआसीदित्येव वदेत् ॥ अपरं च तत्र ( खंड८ ) " यत्रैतत्पुरुषोशि-
शिषतिनाम " इत्युपक्रम्येदं पठ्यते " तत्रैतच्छुंगमुत्पतितंसोम्यविजानीहिनेदममू
लंभविष्यतीति ॥ ३ ॥ तस्यक्कमूलंस्यादन्यत्रान्नादेवमेवखलुसोम्यान्नेनशुंगेनापोमूल-
मन्विच्छाद्भिःसोम्यशुंगेनतेजोमूलमन्विच्छतेजसासोम्यशुंगेनसन्मूलमन्विच्छ सन्मूलाः-
सोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाः " इति ॥ अर्थस्तु एतच्छरीरंशुंगवटक-
णिकायाअंकुरइव कार्यमुद्भूतं ॥ इदं शरीररूपंकार्यं न अमूलं निष्कारणं स्यात् ॥
तर्हि तस्यक्कमूलमितिप्रश्ने अन्नादन्यत्रक्कमूलंस्यात्किंतु अन्नमेवास्यमूलं ॥ एवमे-
वान्नरूपेणशुंगेनकार्येण अब्रूपंमूलंकारणं अन्विच्छ ॥ अब्रूपेणकार्ये तेजोरूपं-
कारणं तेजोरूपेणचकार्येण ब्रह्मरूपंकारणमिति ॥ अत्र च शरीरान्नजलानामन्न
जलतेजांसिपरिणामिकारणान्येव नत्वधिष्ठानानि ॥ अतोब्रह्मापि तादृशकारणमेव-
वक्तव्यम् ॥ नच तेषामप्यधिष्ठानत्वं वाच्यं ॥ प्रत्यक्षविरोधात् ॥ अन्नादिज्ञाने शरी-
रादिनाशप्रसंगात् ॥ अधिष्ठाने कल्पितंवस्तु इतरकल्पनस्याधिष्ठानं तदपीतरकल्प-
नस्याधिष्ठानमितिकल्पनायाः सुतरामशक्यत्वाच्च ॥ नहिरज्जौकल्पितेभुजंगे यष्टेः-
कल्पना तस्यांच मालायाःसेतिपरंपरा क्वापिदृष्टचरी ॥ सन्मूलाइत्यत्रमूलशब्दस्या-
धिष्ठानपरत्वादरेतुपूर्वमपि तत्परत्वं स्यात् ॥ तत्रपरिणामिपरत्वेऽत्रापितथात्वमेव-
सिध्येत् ॥ शुंगंच बीजस्योपादेयमेव नतुविवर्तः ॥ अतः शुंगत्वकथनादपि त्वद-
भिमतार्थस्यबाधः ॥ अन्यथाक्लिष्टकल्पनापेक्षया माया मूला इत्याद्येव स्पष्टंब्रूयात् ॥
मूलेरज्ववच्छिन्नचैतन्यमित्यादितु तन्मतमनुरुध्यतंप्रत्युक्तम् ॥ यश्च " कथमसतः
सज्जायेते " तिश्रुतेःसत्वेनाप्रतीयमानात्सत्वेनप्रतीयमानंकथंजायेतेत्यर्थउक्तः ॥ सो-
ऽशक्यएव ॥ तथासति " सदेवसोम्ये " त्यत्रापिसच्छब्दः तादृशार्थकः कुतोन-
स्यात् ॥ नचेष्टापत्तिः ॥ स्वभाष्यविरोधात् ॥ ॐतत्सदितिनिर्देशइतिगीताविरो-
धाच्च ॥ किंच मायायाःसत्त्वासत्त्वाभ्यामुभयथापि प्रतीतेर्जगतोपि तथाप्रतीतेश्च-
त्वयावाच्यतया त्वन्मते सत्त्वेनाप्रतीयमानात्सत्त्वेनप्रतीयमानं सत्त्वेनप्रतीयमानात्स-
त्त्वेनाप्रतीयमानंच जायतएवेति कथंजायेतेत्याक्षेपोऽसंगतः ॥ अत्रत्यमेव सच्छ-
ब्दमाश्रित्य सूत्रकृता ( अ० २ पा० १ सू० १२ ) " सत्त्वाच्चावरस्य " इतिप्रपंच-
स्य सत्वमेव निर्णीतम् ॥ अन्यथा सत्त्वेन प्रतीयमानत्वादित्येवासंदिग्धं सूत्रयेत् ॥
सूत्रस्यसंदेहवारणार्थत्वात् ॥ सर्वत्रतथार्थदुराग्रहे " सदेवे " त्यादावपि बलात्त-
त्प्रसक्तिः ॥ अतःशक्यार्थस्याबाधात्सूत्रादिना तथैवतात्पर्यस्यनिश्चयाच्च निर्मूल-
लक्षणा नादरणीया ॥ नाशोत्पत्तिप्रत्यक्षंत्वाविर्भावतिरोभावविषयं ॥ श्रौतदर्शने-
श्रुतेःप्रत्यक्षादितोबलीयस्त्वात् ॥ अन्यथाऽर्धवैनाशिकप्रक्रियाऽऽपद्येत नतु त्वद-
भिमतसिद्धिः ॥ वाचारंभणश्रुतिविरोधस्तु तवैव नतु ममेत्यनुपदंस्फुटीभविष्यति ॥

यच्च वस्तुतस्त्वेकइत्याहुरित्यादि तदसत् ॥ तत्र ( अ० ८ खं० २ ) "सदेवसोम्ये-
दमग्रआसीदेकमेवाद्वितीयम् ॥ तद्धैकआहुरसदेवेदमग्रआसीदेकमेवाद्वितीयं ॥ तस्माद-
सतःसज्जायत ॥ कुतस्तुखलुसोम्येव ंस्यादितिहोवाचकथमसतःसज्जायेतेति ॥ सत्त्वेव-
सोम्येदमग्रआसीत्" इतिपठ्यते ॥ संक्षेपतोऽर्थस्तु ॥ इदंपरिदृश्यमानंजगत् अग्रे सृ-
ष्टेःपूर्वं सदेव आसीत् ॥ एवकारोसत्त्वादिपक्षव्यवच्छेदार्थः ॥ एकमेवाद्वितीयं ॥ सजा-
तीयादिभेदशून्यं ॥ तत्रह तस्मिन्कारणरूपेवस्तुनिविषये एकेअन्ये आसुराः आहुः ॥ इ-
दंप्रतीयमानमग्रे असदेव आसीत् ॥ तस्मादसद्रूपाद्वस्तुनः सत् जगदजायत अडभावश्छां-
दसः ॥ तन्मतंखंडयति ॥ तत्रासत्पदेनाभावमात्रंविवक्ष्यते ॥ सत्त्वेन प्रतीयमानमसद्व-
स्तु वा ॥ नाद्यः ॥ तथासति कुतस्तुखलुसोम्येवं स्यात् ॥ एवंविचित्रंजगत् कुतउत्प-
द्येत ॥ अभावस्यैकत्वात् ॥ अभावमात्रस्यकारणत्वायोगाच्च ॥ निरधिकरणकाभावा-
प्रसिद्धेश्च ॥ नद्वितीयः ॥ तथासति कथमसतःसज्जायेत ॥ असद्वस्तुतः वास्तवं सत्
कथंजायेत नहिस्वाप्निकमृदः पारमार्थिकघटोभवति ॥ तस्मात्सत्त्वेवसोम्येदमग्रआसी-
देकमेवाद्वितीयम् ॥ तुशब्दःपूर्वपक्षव्यावर्तकः ॥ इदमग्रे सदेवासीदितिनिश्चयः॥ यदिका-
र्यस्य सत्त्वमेवेतिनाभिप्रेयात् किंतु कारणस्यासत्त्वनिराकरणमेवाभिप्रेयात्॥तदा सदेव-
सोम्येदं सत्त्वेवसोम्येदमितिपुनःपुनरिदंपदंनवदेत् ॥ किंचात्रपरमतानुवादेपि एकमेवाद्वि-
तीयमितिसंख्यादि निर्दिश्यते॥अत्यंतासति च तन्निर्देशोनघटते अतस्तन्निर्देशात्प्रातीति-
कंसत्त्वमसदित्युक्त्याऽसत्त्वंच स्पष्टमत्रगम्यतएवेति त्वदभिमतं सत्त्वासत्त्वाभ्यामनिर्व-
चनीयंकारणमप्यनूद्यात्रनिरस्तं भवति ॥ नत्वत्यंतासदेवकारणम् ॥ किंच कारणासत्त्वे-
न्निखंडयिषितेपि कंठरवोक्तंकार्यसत्त्वं श्रुत्यभिप्रेतं न वा ॥ नद्वितीयः सत्पदोपादानान-
र्थक्यप्रसंगात्॥ उपात्तस्यापिपरित्यागेहेतोरभावात्॥नचारोप्यस्याधिष्ठानाभेदंसदितिपद
माहेतिवाच्यम् ॥ तथासति सदेवेत्यादावपि तथार्थमाश्रित्य मायैवगृह्यताम् तन्नगृह्यते
चेत्प्रकरणैक्यातात्पर्यग्राहकाभावाच्चात्रापिनगृह्यताम् ॥ किंचकार्यस्यमायिकत्वे तेजः
प्रभृतीनामीक्षणमपि नसंगच्छेत ॥ श्रूयतेतु तत्रतत् ॥ "तत्तेजऐक्षत ता आपऐक्षंत" इति॥
नहिरज्जौकल्पितः सर्पोहंदशेयमित्यादीक्षते ॥ ब्रह्मणस्तत्तद्रूपेणपरिणतस्यत्वीक्षणं संभ-
वति ॥ नचेदमीक्षणंगौणंकल्प्यम् ॥ तदैक्षतेत्यत्रापिगौणतापत्तेः ॥ नचेष्टापत्तिः ॥ ई-
क्षत्यधिकरणविरोधात् ॥ गौणश्चेन्नेत्यादिगुणसूत्रैस्तस्याःप्रतिषेधाच्च ॥ "ऐतदात्म्य-
मिदंसर्वंतत्सत्य" मितिकार्यसत्तातत्राभ्यस्यतइति नसत्पदार्थःक्लेशादन्यथाकल्प्यः ॥
एतत्सकलानुरोधादाद्यश्चेद्गुडजिह्विका ॥ एवममायिकत्वेसत्येवाभ्रांतेश्वरेक्षणीयत्वम् ॥
तत्प्रवेष्टव्यत्वं च तेजःप्रभृतीनां संगच्छेत ॥ नहि गंधर्वनगरं कश्चिदपि प्रवेष्टुमीष्टे
प्रविश्य च किंचित्कर्तुम् ॥ श्रूयतेतु तत्तत्र ॥ "सेयंदेवतैक्षतहंताहमिमास्तिस्रोदेवता
अनेनजीवेनात्मनाऽनुप्रविश्य नामरूपेव्याकरवाणीति ॥ तासांत्रिवृतं त्रिवृतमेकैकांकर-
वाणीति" इत्यादि ॥ किंच जगद्ब्रह्मणोर्जडचेतनतयाविलक्षणत्वात् कार्यकारणभावानु-

पपत्तिमाशंक्यसूत्रकारोद्वितीयस्यप्रथमे ( सू० ६ ) "दृश्यते" त्वितिसमाधत्ते ॥ यदि सदसत्त्वाभ्यामनिर्वचनीयामाया कारणं तादृशंजगच्च कार्यस्यात्तर्हि व्यर्थेएव शंकासमाधाने स्याताम् ॥ अग्रेच ( सू० ७ ) "असदितिचेन्नप्रतिषेधमात्रत्वात्" इतिकारणस्यासत्त्वंनिराकरोति ॥ असदेवेदमित्यनुवादस्यप्रतिषेधार्थतामेववक्ति ॥ यदिमायाकारणं स्यात्तर्हिव्यर्थोयंनिरासप्रयासः ॥ नचतस्याःसदसत्त्वान्नव्यर्थइतिवाच्यम् ॥ अनुवादे एकत्वसंख्यादियोगिनएवासतः कारणताबोधनेनसत्त्वेनप्रतीयमानमसदिति सुखेन लाभात् ॥ वस्तुतस्तु जगतोमायिकत्वम् तस्याः सदसद्रूपत्वम् कार्यस्य च तथात्वं क्वापि सूत्रकृतानोक्तम् प्रत्युतासत्त्वंनिराकृतमेव ॥ सत्वमेव च समर्थितम् ॥ अतोनिर्मूलं तत्कल्पनम् ॥ यदितथास्यात्सर्वसंदेहवारणायैवप्रवृत्तआचार्यः कथंस्पष्टंनब्रूयात् ॥ असत्यमप्रतिष्ठंतइतिभगवद्वाक्यंत्वसत्यंवदतस्तवापि निंदांकरोत्येव ॥ नचासत्यपदमत्यंतासत्परम् ॥ मयातुप्रातीतिकसत्तायाअगीकारान्नमन्मतस्यनिंदापरंतत् किंतु बाह्यमतस्यैवेतिवाच्यम् ॥ प्रतीतेः स्वीकारेणप्रातीतिकसत्तायाबाह्यमतेप्यनपायात् ॥ किंचैवं सति यत्रपुराणेषुवैराग्यार्थंपुरुदुःखदुःखत्वादिकथनपुरःसरमिदंजगदसत्स्वरूपमित्युच्यते ॥ तत्राप्यसत्पदस्य तथात्वमाश्रित्य बाह्यमतस्य पुराणसंमतत्वं कुतोनब्रूषे ॥ केवलमसदितिकथनेपि स्वाभिमतार्थपरतां च कुतःकल्पयसि ॥ यदि च तादृशपुराणस्थलेष्वसदसत्यादिपदानां त्वदभिमतार्थकता स्वीक्रियते तर्ह्यत्रापि स्वीक्रियताम् ॥ नचाप्रतिष्ठत्वस्यास्वीकारादत्र चतथाकथनान्नेदंमन्मतपरमितिवाच्यम् ॥ तत्रतेआसुराः जगदसत्यमाहुः ॥ अप्रतिष्ठमाहुः ॥ अनीश्वरमाहुरितियोजनायाः प्रतीत्याऽन्यथासमाप्तपुनरात्तिप्रसक्त्या च अन्यतमकथनेप्यासुरत्वस्यसिद्धेः ॥ अन्यथाकार्यदशायां तत्सत्तांगीकारेण देहादेरसद्विलक्षणत्वं भूतचतुष्टयस्य नित्यत्वं तत्र देहादेः प्रतिष्ठां च स्वीकृत्य अनीश्वरत्वमात्रं वदंतश्चार्वाकाः कथंचित्सत्तादिकं वदंतोबौद्धभेदाश्च नासुराः स्युः ॥ किंच न सत्प्रतिष्ठत्वमपि त्वन्मते शक्यवचनम् ॥ बौद्धरजतादेः शुक्त्यादौ लयस्य प्राङ्निराकृतत्वात् ॥ एवमसत्याप्रतिष्ठपदयोरिदानीं त्वयोच्यमानार्थकतायाः असंभवादेव शंकराचार्यैः "असत्यंयथावयमनृतप्रायास्तथाइदंजगतत्सर्वं असत्यं अप्रतिष्ठंच ॥ नास्तिधर्माधर्मौप्रतिष्ठा ॥ अतः अप्रतिष्ठ" मितिव्याख्यातम् ॥ मधुसूदनसरस्वतीश्रीधरस्वामिप्रभृतिभिश्च असत्यपदं नास्ति सत्यं वेदादिकं प्रमाणमत्रेति विवृतम् ॥ अप्रतिष्ठपदं च तथैव व्याख्यातम् ॥ अतस्त्वदुक्तिर्भाष्यादिसर्वग्रंथविरुद्धा ॥ वस्तुतस्तु तथार्थोपि न संभवति ॥ तथासत्यप्रमाणमधर्ममिति अवेदमनदृष्टंतइतिवा स्पष्टं वदेत् ॥ सत्यशब्दस्य वेदादौ प्रतिष्ठाशब्दस्य धर्माधर्मयोश्च नियतशक्तेरभावान्न तथाव्याख्यानं सर्वैरादर्तुं शक्यम् ॥ यथाश्रुतार्थेपि तन्मते सर्वप्रपंचस्य मिथ्यात्वे तदंतर्गतवेदधर्माधर्माणामपि मिथ्यात्वस्य स्वतः प्राप्तेश्च ॥ अतएव तथावादिनस्तव तथार्थेप्यनिस्तारः ॥ ईश्वरस्यापि मायिकत्वांगीकाराच्च ॥ किंच वाक्यस्य स्वमतपरतावारणाय कल्प्यमानं जगतः सद्विलक्षणत्वे

सत्यसद्विलक्षणत्वमपि न शक्यं वक्तुम् ॥ असच्छब्दप्रवृत्तेः स्वमतिवर्त्तादिषु प्रसिद्ध-त्वेन विवर्त्ततया ऽभिमते जगत्यसद्विलक्षणतायाअशक्यवचनत्वात् ॥ प्रतियोगिताव-च्छेदकानुयोगितावच्छेदकयोरैक्यानुपपत्त्या सद्भेदासद्भेदयोरेकत्र समावेशायोगाच्च ॥

नचजगतःसत्यत्वे "वाचारंभणंविकारोनामधेय" मित्यादिश्रु-तिविरोधः तस्य जगन्मिथ्यात्वप्रतिपादनपरत्वात् ॥ विकारो-घटादिर्वागालंबनमात्रंयतोनामधेयं विकारः नतुनामातिरेकेण विकारोस्तीतिमृत्तिकैव सत्यं घटादिर्मिथ्यैवेति यथा तथापरम-कारणं ब्रह्मैव सत्यं तद्भिन्नंकार्यजातं मिथ्यैवेत्यभिप्रायादिति-वाच्यम् ॥ जगतोमिथ्यात्वे एकविज्ञानेन सर्वविज्ञानं यत्प्रति-ज्ञातं तन्नसिद्ध्येत् सत्यज्ञानेन मिथ्याज्ञानस्यासंभवात् ॥ अपि-च कारणत्वबोधकश्रुतीनांसर्वस्यात्मत्वब्रह्मत्वबोधकश्रुतीनां चानुरोधेन कार्यस्य कारणानन्यत्वेसिद्धे "ऐतदात्म्यमिदंसर्वं-तत्सत्य" मित्यत्राप्यणिमपरिचायनार्थस्यसर्वस्यैव सन्निहितत-यातत्पदेन परामर्शात्तस्यैव सत्यत्वं विधीयते ॥ सर्वगतमेवचैक-त्वमनूद्यतइतिमंतव्यम् ॥ अन्यथा सआत्मासत्यमित्येवं पठे-त् ॥ ( नच नानात्वदर्शननिंदया तस्य मिथ्यात्वसिद्धिरितिवा-च्यम् ) तस्याश्चक्षुषश्चक्षुरित्यादिनाब्रह्मस्वरूपमुपक्रम्य पठि-तत्वेन ब्रह्मस्वरूपइंद्रियादिमत्तया जीवदेहवन्नानात्वस्यैव मि-थ्यात्वंसिध्यति ॥ नकार्यनानात्वस्येति ॥ नचानादिकालप्रवृत्ता ऽविद्यावशाद्भेदप्रतिभासइति वाच्यम् ॥ अस्यभेदस्य ब्रह्मेच्छ-या प्रतिभाससंभवेऽविद्याकल्पितत्वकल्पने प्रमाणाभावात् ॥ तादृशभेदस्याप्यविद्याकल्पितत्वे ब्रह्मणोपि जीवतौल्यापत्तेः ॥ तस्माद्वाचारंभणश्रुतीनां न जगन्मिथ्यात्वप्रतिपादनपरत्वम् ॥

यत्तु ननु योविकारः पृथुबुध्नोदरादिः सवाचारंभणः वाचिक-
क्रियात्मकोनतुकारणाद्यक्तिभेदापादकः यथा सुप्तउत्थिते उ-
पविष्टे च पुरुषे इत्यादिनाऽस्मन्मतमनूद्य नतु कारणादित्यर्थ-
स्य लक्षणां विनावाचारंभणशब्देनाबोधात् नामधेयपदस्य
कारणस्यैव नामधेयमित्यर्थोपि नाध्याहारमंतरासंगतइत्यादि-
दोषापादनं तदपि परमतस्वमताज्ञानपूर्वकमेव ॥ वाचारंभण-
मित्यस्यास्मन्मतेऽयमर्थः योविकारः सवाचारंभणं यदारभ्यते
तदारंभणं कृत्यल्युटोबहुलमिति कर्मणिल्युट् वागारब्धमि-
त्यर्थः ॥ नामधेयं कारणस्यैव नामधेयम् ॥ इदंत्वर्थलब्धम् ॥
कारणस्यैव नत्वेकेन मृत्पिंडेनेत्यादिना प्रकृतत्वात्कारणमेव
तत्तदर्थक्रियासिद्ध्यर्थंतेनतेन नाम्ना व्यवह्रियतइतिकारणादभि-
न्नं कार्यं नतु स्वेनरूपेण कारणाद्भिन्नं तदाह मृत्तिकेत्येव सत्य-
मिति ॥ अत्र कारणादभिन्नमित्यादिना त्वभिप्रायवर्णनं नतु
पदार्थवर्णनम् ॥ येनलक्षणांविनेत्यादिदोषः स्यात्तादृशार्थो-
पिलक्षणांविना नसंभवतीति यद्युच्यते तदाभवन्मतेपि तदन-
न्यत्वमारंभणशब्दादिभ्यइति सूत्रभाष्ये " यथासोम्यैकेनमृ-
त्पिंडेनसर्वंमृण्मयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंमृत्ति-
केत्येवसत्य " मित्यस्यव्याख्याने " यतोवाचारंभणंविकारो-
नामधेयं वाचैवकेवलमस्तीत्यारभ्यते विकारोघटः शराव-
उदंचनं चेति ॥ नतु वस्तुवृत्ते न विकारोनाम कश्चिदस्ति
नामधेयमात्रंह्येतदनृत " मिति व्याख्यानेपि वाचैव केव-
लमारभ्यतइत्यर्थस्य वाचारंभणमित्यत्रैवकाराभावेन लक्ष-
णामध्याहारं वा विना असंभवात् ॥ एवं नतु वस्तुवृत्ते न वि-

कारोनामकश्चिदस्तीत्यर्थोपिलक्षणादिकं विना न संभवतीति॥ तत्र तात्पर्यवर्णनंचेत्तुल्यमत्रापि ॥ यच्च ( कारणमेवहीत्यादित्वसंगतमेव मृदोघटइतिकथनेनजलाहरणासिद्धे)रित्युक्तम् तदभिप्रायाज्ञानात् ॥ तत्र कारणमेवहि तत्तदर्थक्रियानिष्पत्त्यर्थे घटशरावादिनाम्ना व्यवह्रियतइत्युक्तम् ॥ एवंच प्रामाणिकैः केवलेमृत्पिंडे घटइति व्यवहारोनक्रियते ॥ येन जलाहरणसिद्धिः स्यात् दोषदूषितस्य कस्य चिद्व्यवहारस्तु नार्थक्रियाकारकः शुक्तौ रजतव्यवहारवत् ॥ प्रामाणिकानां व्यवहारस्त्ववस्थाविशेषएव भवति तदार्थक्रियापि भवत्येवेति न कोपि दोषः ॥ अवस्थाविशेषस्यैवकार्यत्वात् अन्यतरस्यान्यतरं प्रति हेतुत्वकथनमप्यसंगतमेव ॥ कार्यस्य मिथ्यात्वेनामधेयपदेतिपदयोर्वैयर्थ्यं दुरुद्धरमेव ॥ वाचारंभणंविकारोमृत्तिकैवसत्यमित्यनेनैवार्थसिद्धेः ॥ यदप्यनन्यत्वशब्दार्थस्तु अन्यत्वाभावोनतुतादात्म्यम् ॥ प्रमाणाभावादित्याद्युक्तं तदप्यन्यत्वशब्दार्थाज्ञानात् ॥ अन्यत्वंहिभेदः सच तादात्म्यावच्छिन्नप्रतियोगिताकाभावस्तदभावश्चतादात्म्यरूपएव भेदाभावस्य प्रतियोगितावच्छेदकरूपत्वात् ॥ अत्यंताभावाभावस्यच प्रतियोगिरूपत्वात् अतएवसंयोगिभेदाभावः संयोगस्वरूपएवेतिकथनमपि तार्किकाणांसंगच्छते संगच्छते च प्रतियोगितावच्छेदकेनान्योन्याभावस्य प्रतियोगिना सह चात्यंताभावस्य विरोधः ॥ इदं च सिद्धांतलक्षणेभेदाव्याप्यवृत्तित्वप्रसंगे "तद्धर्मावच्छिन्नभिन्नभेदस्य तद्धर्ममात्रपर्यवसायितया कपिसंयोगिभिन्नभेदात्मनः कपिसंयोगस्य मूलवृत्तित्वविरोधः नहि घटभिन्नभेदोघटत्वा-

दतिरिच्यते अवश्यक्लृप्तघटत्वेनैवोपपत्तावतिरिक्तकल्पनायां -प्रमाणाभावात् ॥ अन्यथासर्वत्राभावस्याभावोतिरिक्तएवक-ल्प्येते,, त्यादिना दीधितिकारैःस्पष्टमेवोक्तम् ॥ नच तैस्तद्धर्मा-वच्छिन्ने भिन्नभेदएव तद्धर्मस्वरूपउक्तोनतु तद्धर्मावच्छिन्न-भेदात्यंताभावइति कथं तादात्म्यावच्छिन्नभेदात्यंताभावस्य तादात्म्यरूपत्वमिति वाच्यं धर्मिभेदस्य धर्मात्यंताभावानतिरि-क्तत्वात्समनियताभावानामैक्यात्तादात्म्यावच्छिन्नभिन्नभेद -स्तादात्म्यावच्छिन्नभेदात्यंताभावएव सच तादात्म्यरूपएवेत्य-वश्यक्लृप्तेन तेनैवोपपत्तावतिरिक्तकल्पने गौरवस्यैव बाधक-त्वादिति ( ननुतादात्म्यं प्रमाणाभावा )दित्यसंगतमेव लाघव-रूपप्रमाणस्यसत्वात् ( सचकार्यस्यमिथ्यात्वा ) दित्यप्यसंगत-म् ॥ कार्यस्य मिथ्यात्वे तत्र सदन्यत्वाभावोनसंभवति ॥ मि-थ्यासदित्यप्रतीतेः ॥ मिथ्या सन्नेतिप्रतीतेश्च ॥ मिथ्यात्वे तु-कार्यस्य सदन्यत्वमेव नत्वन्यत्वाभावइति तदनन्यत्वमारं-भण शब्दादिभ्यइति सूत्रविरोधोदुरुद्धरएव ॥ तस्मात्कार्यस्य-सत्यत्वमेव ॥ भेदादीनामप्यस्मन्मतेनासत्वमिति ( कार्य-स्यासत्वेपि कारणस्य सत्वं तु त्वन्मते भेदादेरसत्वेपित-त्कारणस्य यथा सत्वं तथा बोध्य ) मिति दृष्टांतप्रदर्श-नमप्यसंगतमेव ॥ यश्च ( किंचत्वानन्यावयवविन्यासान्य-तद्विन्यासांतरानन्यस्ये ) त्यादि प्रलापः सत्वस्मन्मताज्ञानकृ-तत्वादुपेक्ष्यतः तादृग्विन्यासानां कल्पितत्वेः प्रमाणाभावाच्च

## टिका

सहस्राक्षे तद्वाक्यस्येत्यादि भेदाभावइतिबोध्यमित्यंतं भागं निराकुर्वंति ॥ नचज

**गतइत्यादिना ॥ प्रमाणाभेवाख्यतेन ॥ जगतोमिथ्यात्वइत्यादि** ॥ अयं भावः ॥ तन्मिथ्यात्वे वाचारंभणश्रुतेस्तात्पर्यमित्यशक्यकल्पनम् ॥ तथासति उपक्रमं "उततमादेशमप्राक्षो येनाश्रुतंश्रुतंभवत्यमतंमतमविज्ञातंविज्ञातमिति " इति एकश्रवणमननविज्ञानैः सर्वस्य श्रवणमननविज्ञानानि सिध्यंतीति प्रतिज्ञा विरुध्येत ॥ सत्यवस्तुज्ञानेन मिथ्यावस्तुज्ञानस्यायोगात् ॥ नहि रज्जुज्ञाने सर्पमालादयः सर्वे ज्ञाता भवंति॥प्रत्युत तज्ज्ञाने सर्पादिज्ञानं नश्यत्येवेति विवर्तवादे एकविज्ञानेन सर्वस्याप्यविज्ञानमेवापद्यते॥ब्रह्मज्ञानोत्तरं त्वन्मते प्रपंचस्य विलयात् ॥ तदाप्यविलये कदापि न विलयः स्यात् ॥ यदा च सर्वं ज्ञायते तदा नैकज्ञानम् ॥ अतः प्रतिज्ञाविरोधस्त्वन्मते सुस्थः ॥ अपिच "तस्माद्वाएतस्मादात्मन आकाशः संभूतः ॥ यतोवाइमानि भूतानि" इत्यादिकारणत्वबोधकश्रुतीना " मिदंसर्वंयदयमात्मा ॥ सर्वंतंपरादाद्योन्यत्रा ऽऽत्मनःसर्वंवेद ॥ सर्वंखल्विदंब्रह्मतज्जलान् ॥ तदात्मान ५ स्वयमकुरुत " इत्यादीनामात्मत्वब्रह्मत्वबोधकश्रुतीनां चानुरोधेन कार्यस्यकारणानन्यत्वमेव सिध्यति ॥ मिथ्यात्वे तु ताः पीड्येरन् ॥ मिथ्यासत्यवस्तुनोरैक्यायोगात् ॥ किंच तत्रैव " सयएषोणिमैतदात्म्यमिद ५ सर्वंतत्सत्य " मितिसन्निहितंकार्यं तच्छब्देन परामृश्य तस्यसत्यत्वमसंदिग्धं श्राव्यते ॥ वाचारंभणवाक्यार्थस्त्वनुपदं वक्ष्यते॥ बृहदारण्यके नानात्वदर्शनस्यनिंदात् जीवब्रह्मणिदेहेंद्रियादिविभागदर्शनस्यैव नतु कार्यदर्शनस्य ॥ वामदेवादिनांब्रह्मविदां कार्यदर्शनश्रवणात् ॥ मिथ्यात्वे च ब्रह्मणः

---

## सहस्राक्ष.

तद्वाक्यस्यजगत्सत्यत्वपरत्वेतु वाचारम्भणश्रुतिविरोधः ॥ ननु योविकारःपृथुबुध्नोदरादिःसवाचारम्भणःवाचिकक्रियात्मकोनतुकारणाद्व्यक्तिभेदापादकः ॥ यथासुप्तउत्थितउपविष्टेच पुरुषेऽवयवविन्यासभेदोनपुरुषभेदोऽतोनामधेयं कारणस्यैवनामधेयं कारणमेवहितत्तदर्थक्रियानिष्पत्यर्थं घटशरावादिनाम्नाऽऽहूयतइतिकारणादभिन्नंकार्यंतदा मृत्तिकेत्येवसत्यम् ॥ अन्यथा कार्याभावेन ब्रह्म कस्य कारणंस्यात् ॥ कारणत्वाभावेकारणत्ववादिकायतोवाइत्यादिकाःश्रुतयोविरुद्ध्येरन्॥ यदिविकारोवाङ्मात्रतात्पर्यभिप्रेयाद्वाचारम्भणंविकारोमृत्तिकैवसत्यमितिवदेत्॥ तावतैवकार्यस्यमिथ्यात्वसिद्धेः ॥ वदतितु नामधेयपदेतिपदाभ्यांघटितम् ॥ तेनकारणादभिन्नकार्यमितितात्पर्यादुक्तएवार्थः ॥ किञ्च वाचारम्भणमितिवाक्यमुपक्रम्याऽग्रे कथमसतःसज्जायेतेतिसदेवसौम्येदमग्रआसीदिति पठितम् ॥ अतएव सूत्रकारइमामेवश्रुतिं विषयीकृत्य तदनन्यत्वमारम्भणशब्दादिभ्यइत्यवदत् ॥ अर्थस्तुवाचारम्भणमित्यादिशब्देभ्यस्तदनन्यत्वंकारणानन्यत्वंकारणादभिन्नत्वंबोध्यतइति ॥ अत्रादिपदेनेतिपदं नामधेयपदं सदेवेत्यादिवाक्यानि गृह्यन्तेइतिचेन्न ॥ नतुकारणादित्यर्थस्यलक्षणांविनावाचारम्भणशब्देनाऽबोधात् ॥ नामधेयपदस्यकारणस्यैवनामधेयमित्यर्थोऽपिनाऽध्याहारमन्तरासंगतः ॥ कारणमेवहीत्या-दित्व-

कारणत्वमपि न स्यात् ॥ ब्रह्मणा अविद्ययैव कार्यंकल्पितमितिकथने तु जीवतौल्य-
मज्ञत्वापादकं प्रसज्येत ॥ विस्तरेण चेदं सर्वमुपादयिष्यते ॥ यच्च (श्लो० ४१) पूर्वावस्था
तुमृद्रूपाघटावस्थाततोऽभवत् ॥ घटोपिमृत्तिकारूपोलयेपश्चाच्चमृत्तिकेतिमार्तंडकारिकाटी
कास्थंलेखं यथाकथंचिन्ननुयोविकारइत्यादिनाऽनूद्य नतुकारणादित्यादिपदद्वयवैयर्थ्य
मित्यन्तं प्रकृतश्रुतिवाक्यार्थविषयकमुक्तं तदसत् ॥ तत्रहि एकविज्ञानेनसर्वविज्ञानप्र-
तिज्ञोत्तरं "कथंनुभगवःसआदेशोभवती" तिश्वेतकेतुनापृष्टे "यथासोम्यैकेनमृत्पिण्डेन-
सर्वं मृण्मयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यम् ॥ यथासोम्यैकेन-
लोहमणिनासर्वंलोहमयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंलोहमित्येवसत्यम् ॥ य-
थासोम्यैकेननखनिकृन्तनेन सर्वंकार्ष्णायसंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंकृ-
ष्णायसमित्येवसत्यंएवंसोम्यसआदेशोभवतीति" इत्युद्दालकआह ॥ अत्रएकविज्ञाने-
नसर्वविज्ञानं कथंस्यादितिशंकावारणाय दृष्टांतमुखेन प्रवृत्तेनिरूपणे जगन्मिथ्यात्वं वि-
वर्तवादश्च नैव घटते ॥उक्तदिशाप्रत्युतप्रतिज्ञायाभंगप्रसंगात् ॥विवर्तदृष्टांतानामस्पर्शात् ॥
परिणामिदृष्टांतानामेवोपादानाच्च ॥ अत्र च कारणस्य साकारत्वद्योतनायैव पिंडमण्या-
दिशब्दग्रहणम् ॥ अन्यथा एकयामृदेत्याद्येव वदेत् ॥ तथाचायंवाक्यार्थः हेसोम्य
यथा एकेनकेवलेनमृत्पिण्डेन अर्थाद्विज्ञातेनसता सर्वमशेषं मृण्मयं मृत्कार्यं विज्ञातं
स्यात् ॥ घटाद्यवस्थायां मृत्पिण्डविशेषत्वानपायात् ॥ तदेवोपपादयति ॥ वा चारंभण-
मिति ॥ आरभ्यतइत्यारंभणं मुखनासिकावचनइत्यादिवद्बाहुलकात्कर्मणिल्युट् ॥ यो-
विकारःकार्यावस्थायां पृथुबुध्नोदरत्वादिदर्शनमूलककारणत्वप्रतिषेधरूपःस्वरूपच्या-
वः सवाचारंभणं वाचैवारभ्यते नतु वस्तुतः ॥ तद्यथा शुद्धिकामेनमृदमानयेत्युक्ते नि-
योज्येन घटादावानीते घटोयं नमृत्तिकेति प्रतिषिध्यते ॥ सप्रतिषेधोवाङ्मात्रारब्धोन
वास्तवः ॥ तथात्र घटोयं नब्रह्मेति लौकिकार्थकामकृतःप्रतिषेधोपि ॥ नचात्रवि-
कारशब्देनकार्यंशंक्यम् ॥ तस्य त्वन्मते नामरूपमात्रस्वरूपत्वात् ॥विकारशब्देनैवोभ-
योर्लाभे नामधेयपदवैयर्थ्यप्रसंगात् ॥ कार्यस्य वाङ्मात्रारब्धत्वे मृदिघटइत्यादिप्रयोग-
मात्रेण घटादिदर्शनं जलानयनादिसिद्धिश्चापद्येत ॥अथ कस्यायंविकारोवागारब्धइत्या-
कांक्षायां मृत्पिडेनेतिपूर्वोक्तस्य कारणस्यैवेत्येव निश्चीयते नतु वस्त्वंतरस्येति ॥
एवं चविकारपदइव नामधेयपदेपि तस्यैव संबंधितयाऽन्वयोऽर्थादेव प्रतीयतेऽतोना-
ध्याहारादिक्लेशः ॥ नच नामधेयमपि वाचारब्धमित्यर्थः संभवति ॥ वाचोनामधेया-
नतिरिक्तत्वात् ॥ तस्मात्तेनतेन नियतविन्यासविशेषेण स्थितस्य मृत्पिण्डस्यैव घटश-
रावादिनामधेयमित्यर्थः ॥ तथाहि मृत्पिंडे सर्वाकृतिसमावेशः ॥ काष्ठपाषाणादिवत् ॥
इदं चतुरीयश्लोकखंडन उपपादयिष्यामः ॥ पृथुबुध्नोदरादियत्तद्विन्यासविशेषेण स्थि-
तावपितस्य मृत्पिडत्वं नैवापैति। अन्यथा शरीरादिषु पिंडव्यवहारानुपपत्तेः ॥ तथाच
रूपनामव्याकरणावसरे येनयेन विन्यासेन स्थितःपिंडस्तत्तदर्थक्रियासिद्ध्यर्थं तेन-

तेन नाम्ना व्यवह्रियतइतिकारणादभिन्नमेव कार्यं नतु स्वेन रूपेण कारणाद्भिन्नं त-
दाह मृत्तिकेत्येव सत्यमिति ॥ अत्र सत्यमिति न मृत्तिकायाविशेषणमितिशब्देनव्य-
वधानात् क्लीबनिर्देशाच्च ॥ किंतु सर्वं मृण्मयमितिपूर्वोक्तस्यैव विशेषणम् ॥ अन्यथा
मृत्तिकैव सत्येत्येव वदेत् ॥ इतिशब्दोत्र हेतौप्रकारे वा ॥ तथाच सर्वंमृत्तिकामृदभि-
न्नमितिहेतोरेव सत्यं ॥ कारणरूपेणैव सत्यमितिवार्थः ॥ नतु मिथ्या ॥ वाचारंभण-
त्वेन खपुष्पतुल्यतया सर्वथा कार्यस्याभावे ब्रह्म कस्य कारणं भवेत् ॥ तदभावेच
यतोवेत्यादिबहुश्रुतिव्याकोपः ॥ प्राचां "नतुकारणाद्व्यक्तिभेदापादक" इत्यादि क-
थनं तु तात्पर्यवर्णनमेव ॥ अतोनलक्षणादिप्रसंगः ॥ अन्यथा तदनन्यत्वसूत्रभाष्य-
स्थत्वंत्संमतव्याख्यानेपि मुलोक्तदिशा तत्प्रसंगः ॥ "नामधेयमात्रंह्येतदनृतं" इत्या-
देर्मात्रपदाद्यध्याहारमनृतादौ नामधेयादिपदस्यलक्षणांचांतरेणाश्रयितुमशक्यत्वात् ॥
यत्तु मृदोघटइतिकथनेन जलाहरणासिद्धेरित्युक्तं तत्तु स्वपादेकुठारपातनम् ॥ त्व-
द्व्याख्याने कार्यमात्रस्य वाचैवारभ्यमाणतया तवैवतद्दोषप्रसक्तेः ॥ मम तु रूपना-
मव्याकरणानुरोधेन व्यवहारस्यांगीकाराददोषः प्राग्दर्शितः ॥ यथा सुप्तउत्थितउपवि-
ष्टेवापुरुषे तथातथाप्रतीतावपि न पुरुषभेदः ॥ परं सुप्तादिशब्दैर्व्यवहारस्तु यदा तादृशा-
वयवविन्यासस्तदैव ॥ तथात्र मृदोभेदाभावेपि तत्र घटादिशब्दप्रयोगस्तत्तद्विन्यासोप-
लंभनकालएव ॥ अन्यथा व्याकरणबाधापत्तेः ॥ नाप्यन्यतरस्यान्यतरंप्रति हेतुत्वं
संगच्छते ॥ मानाभावात् ॥ वाचारंभणत्वोक्त्यैव नामधेयमात्रतायाः सिद्ध्या पुनस्त-
त्पदवैयर्थ्यानुच्छेदात् ॥ नापीतिशब्दस्य पूर्वयोजना श्रुत्यभिप्रेता ॥ तथासतीतिमृ-
त्तिकैवसत्यमितिपठेत ॥ पठतित्वेवम् ॥ अतउक्तएवार्थः ॥ प्रसह्य योजने पिबदुग्धं-
विषंहित्वेत्यादावपि विषंपिबेत्यर्थोनशक्योवारयितुम् ॥ किंच तथाकल्पनेपि नामधे-

---

## सहस्राक्ष.

संगतमेव मृदोघटइतिकथनेनजलाहरणासिद्धेः ॥ तस्माद्वाचारम्भणंविकारइत्यत्रान्यतरस्यान्यतरं-
प्रतिहेतुत्वम् ॥ इतिशब्दस्यपूर्वत्रान्वयेनइतिमृत्तिकैवेतिव्याख्येयम् ॥ अतोनपदद्वयवैयर्थ्यम् ॥
सूत्रआदिपदेनैतदात्म्यमिदंसर्वमित्यादिकारणाभेदबोधकं नेहनानास्तीत्यादिचगृह्यते ॥ अनन्य
त्वशब्दार्थस्तुअन्यत्वाभावोनतुतादात्म्यम् ॥ प्रमाणाभावात् ॥ सचकार्यस्य मिथ्यात्वात् ॥ अतए-
वारम्भणंशब्दादिभ्यइत्युक्तं नतुसच्छब्दादिभ्यइति ॥ कार्यस्याऽसत्त्वेऽपिकारणस्यसत्त्वंतुत्वन्मते-
भेदादेरसत्त्वेपितत्कारणस्ययथासत्त्वंतथाबोध्यम् ॥ किञ्च स्वानन्यावयवविन्यासान्यतद्विन्यासा-
न्तरानन्यस्यस्वतोऽनन्यतायाअयुक्तत्वेनावयवविन्यासभेदोनपुरुषभेदइत्यप्यसंगतम् ॥ अतस्तत्रा-
पितादृग्विन्यासानांकल्पितत्वेनैवपुरुषभेदाभावइतिबोध्यम् ॥

येतिपदयोर्वैयर्थ्यं दुरुद्धरमेव ॥ वाचारंभणंविकारोमृत्तिकैव सत्यमित्येतावतैव ब्रह्म-
सत्यंजगन्मिथ्येतिबोधसंभवात् ॥ एकादशस्कंधेपि एतच्छ्रुत्यर्थोजगतःकालत्रयेपि ब्र-
ह्माभेदरूपोदर्शितः ॥ यस्तुयस्यादिरंतश्चसवैमध्यंचतस्यतत् ॥ विकारो व्यवहारार्थं
यथातैजसपार्थिवाइति ॥ नहिबौद्धसर्पस्यमध्ये प्रतीतिसमये आद्यंतयोर्वा रज्ज्वभेदः
संभवति ॥ अतोविकारोन्यथाव्यपदेशोविविधव्यवहारप्रयोजनकएव ॥ अत्रच पा-
र्थिवपदेन मृत्पिंडस्य तैजसपदेन लोहमणिनखनिकृंतनयोश्च समर्पणेन प्रकृतश्रुत्यर्थ-
निरूपणं निर्णीयते ॥ अष्टमस्कंधेपि ( अ०६ श्लो०१० ) त्वय्यग्र आसीत्त्वयि म-
ध्यआसीत्त्वय्यंतआसीदिदमात्मतंत्रे ॥ त्वमादिरंतोजगतोऽस्यमध्यंघटस्यमृत्स्नेवपरः-
परस्मादिति ॥ प्रकृतश्रुत्यभिप्रायकथने कालत्रयेऽप्यबाध्यत्वंकारणाभेदश्चोक्तः ॥
अथकार्यक्रियाणामपिकारणाधीनतयानिमित्ततामपितस्यैव दर्शयितुंच नखनिकृंत-
नवाक्यं ॥ लोहशब्दश्चात्रसुवर्णादिपरः ॥ सर्वंचतैजसंलोहमित्यमरोक्तेः ॥ शैलीदारुमयी
लौहीत्यादौ तथाप्रयोगाच्च ॥ लोहवाक्यार्थश्चैकादशेस्कंधेदर्शितः ॥ ( अ०२८ श्लो०
१९ ) यथासुवर्णसुकृतंपुरस्तात्पश्चाच्चसर्वस्यहिरण्मयस्य ॥ मध्येतदेवव्यवहार्यमाणं-
नानापदेशैरहमस्यतद्वत् ॥ द्वादशेपि ( अ० ४ श्लो० ३० ) यथाहिरण्यंबहुधासमी-
यतेनृभिःक्रियाभिर्व्यवहारवर्त्मसु ॥ एवंवचोभिर्भगवानधोक्षजोव्याख्यायतेलौकिक-
वैदिकैर्जनैः ॥ एवमुपबृंहणेनापि कारणस्यैव तत्तन्नामधेयमित्यर्थोद्रढितोवेदितव्यः ॥
तस्मादस्य वाक्यस्यजगतोब्रह्मानन्यत्वएव तात्पर्यं नतुमिथ्यात्वे ॥ अतएव
निर्णीतवान् सूत्रकारः ( अ. २ पा. १ सू. १४ ) "तदनन्यत्वमारंभणशब्दा-
दिभ्यः" इत्यादिना ॥ अर्थस्तु । कारणानन्यत्वम् ॥ नतुमिथ्यात्वमारंभणश-
ब्दादिभ्यःप्रतीयते ॥ अत्रादिपदेन नामधेयपदमितिशब्दः सदेवेत्यादिवाक्यानि च
गृह्यंते ॥ एकप्रकरणस्थत्वात् ॥ तेनैतदात्म्यवाक्यस्य संग्रहः संमतएव ॥ नेहना-
नेत्यादेस्तु न संग्रहः ॥ शाखांतरस्थत्वेनात्र तदुपस्थापकाभावात् ॥ हेतुसाध्ययोर्वै-
यधिकरण्यप्रसंगाच्च ॥ इदं चाधिकरणं "प्रकृतिश्च" इत्यधिकरणोक्तं समर्थयितुं
प्रवृत्तम् ॥ तत्र प्रतिज्ञादृष्टांतबलादभिन्ननिमित्तोपादानत्वं साधितम् ॥ दृष्टांतवाक्य-
शेषेच मिथ्यात्वप्रतीतौ तन्नसिध्येतदःश्रुतिविप्रतिषेधं विषयीकृत्य सोस्तीतिपूर्वप-
क्षे नास्तीत्यनेन साध्यते ॥ तत्रारंभणशब्दादिभ्यइत्येव वक्तुमुचितम् ॥ नतु स-
च्छब्दादिभ्यइति ॥ प्रथमोपस्थितत्वात् ॥ विकारस्य वाङ्मात्रारब्धतायास्ततएवसि-
द्ध्यातेन कार्ये कारणानन्यतायानिश्चयाच्च ॥ अन्यत्तत्प्रकरणस्थत्वादिपदेन सं-
गृहीतम् ॥ कंठरवेण सच्छब्दो हेतूकृतः ॥ "सत्वाच्चावरस्य" इति ॥ एतेन
( अतएवारंभणशब्दादिभ्यइत्युक्तंनतुसच्छब्दादिभ्यइति ) इति प्रत्युक्तम् ॥ यत्तु
( अनन्यत्वशब्दार्थस्तुअन्यत्वाभावोनतुतादात्म्यम् ॥ प्रमाणाभावात् ॥ सचकार्य-
स्यमिथ्यात्वात् ) इति तदुपहसनीयम् ॥ ऐतदात्म्यमिदंसर्वमिति तादात्म्यग्राहकप्र-

माणस्य त्वयमेवादिपदेन संग्रहात् ॥ मिथ्यात्वसाधनाय सौत्रशब्दोभेदाभावपरः साधनीयस्तत्र मिथ्यात्वस्यैव हेतुतयोक्तिः कौशलख्यापिका ॥ नचानन्यत्वशब्दार्थः सशक्यवचनः ॥ ( सू० १५ । १६ ) "भावेचोपलब्धेः ॥ सत्त्वाच्चावरस्य" इत्यग्रिमसूत्रद्वयविरोधात् ॥ तादात्म्यएव तौहेतू संगच्छेते नतुकारणमात्रसत्यत्वे ॥ अत्रचावरस्य कार्यस्य सत्त्वं कंठरवेणोच्यते ॥ कारणस्यैवसत्यत्वे तत्पीड्येत ॥ तथाऽभिप्रायेसतिच मिथ्यात्वमारंभणशब्दादिभ्यइत्येव सूत्रयेत् ॥ विकारशब्दस्यकार्यपरतादरात् ॥ नचतर्हिसत्यत्वमारंभणशब्दादिभ्य इत्यपिकुतोनसूत्रितमितिशंक्यम् ॥ सिद्धांतरीत्यास्वरूपप्रच्युतिरूपविकारस्यवागारब्धतया कार्यस्य कारणानन्यत्वएवारंभणशब्दस्य हेतुतौचित्यात् ॥ अग्रेकंठरवेणावरस्य सत्त्वकथनाच्च ॥ एतेनैव तदनन्यत्वसूत्रे ( भेदव्यासेधएव क्रियते नत्वभेदोबोध्यत ) इतिभामतीकाराद्युक्तिः प्रत्युक्ता श्रौतप्रतिज्ञादृष्टांतयोरुपरोधात् ॥ प्रतिषिद्धे भेदेऽभेदएवपर्यवसानाच्च ॥ राहोःशिरइत्यादौ 'यन्नामधेयमात्रत्वमुक्तं तत्राप्यभेद एव सिध्यति ॥ अभिलापमात्रत्वेखपुष्पवत्कदापिराहुर्नोपलभ्येत ॥ रज्जुसर्पमृगतृष्णादौव्यासेधमात्रंतुतस्यावस्तुत्वात् ॥ उत्तरक्षणे बाधात् ॥ नचात्रतथा ॥ बाधाभावात् ॥ ब्रह्मविदामपिशुकवामदेवादीनांप्रपंचप्रतीतेः ॥ "तद्धैतत्पश्यन्नृषिर्वामदेवःप्रतिपेदेहंमनुरभवंसूर्यश्चेति" इति ॥ मिथ्यात्वेतुमन्वादिप्रतीतिस्तस्यनस्यात् ॥ सूत्रआदिशब्दपरिगृहीतवाक्येभ्योपि तादात्म्यस्यैव सिद्धिर्दृश्यते ॥ तथाहि तत्र प्रतिज्ञानिर्वाहाय दृष्टांतत्रयमुक्त्वा "एवंसोम्यसआदेशोभवति" इत्युक्तेऽपि दृष्टांते कार्यकारणयोः प्रत्यक्षत्वाद्दार्ष्टांतिके कारणस्यकारणताप्रकारस्यचाप्रत्यक्षत्वात् ॥ "भगवांस्त्वेवमेब्रवीतु" इतिश्वेतकेतुनापृष्टे उद्दालकः "तथासौम्य" इतितत्कथनं प्रतिज्ञाय "सदेवसोम्येदमग्रआसीत्" इत्यादिना निरूपितवान् ॥ तत्र "सज्जायते" तिस्पष्टतयाकार्यस्यसत्यत्वंवक्ति ॥ मिथ्यात्वेत्विदंशब्दसच्छब्दौपीड्येयाताम् ॥ असद्वादनिरासप्रयासश्च वृथास्यात् ॥ मिथ्यासत्ययोरैक्यानुपपत्त्या "बहुस्यांप्रजायेये" तीक्षणमपि न घटेत ॥ तेजःप्रभृतिसृष्टिरपि न संगच्छेत ॥ नहि द्रष्टा स्थाणुत्वेन गृहीतोवा पुरुषः स्थाणुरहंभवेयमितीक्षयातथाभवति स्थाणुंसृजतिवा ॥ अग्रे च तेजसोऽपामद्भ्योऽन्नस्य च संभवे "शोचतिस्वेदतेवापुरुषः" इत्यादिना युक्तिरुच्यते ॥ नह्यश्रुप्रस्वेदोवा तेजसोविवर्तः ॥ अन्नंवा वृष्ट्यादिजलस्य ॥ अन्यथाऽधिष्ठानज्ञाने बाध्येत "सेयंदेवतैक्षत" इत्यादिनोक्तमीक्षणमनुप्रवेशोव्याकरणंचनघटेताभ्रांतत्वात् ॥ गंधर्वनगरादौप्रवेशायोगात् ॥ त्रिवृत्करणमपि तथा ॥ नहि रज्जौकल्पितः सर्पस्त्रिवृत्कर्तुंशक्यः ॥ यदपि "यदग्नेरोहितंरूपंतेजसस्तद्रूपंयच्छुक्लंतदपांयत्कृष्णंतदन्नस्यापागादग्नेरग्नित्वंवाचारंभणंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यं" इत्यादि तस्यायमर्थः ॥ लौकिकबुद्ध्याह्यग्निरग्नित्वेनरूपेण स्वतंत्रएव प्रतीयते ॥ ननु तेजोऽब-

न्तताद्यात्म्येन ॥ तार्किकादयश्च लौकिकाः पृथिव्यप्तेजःप्रभृतीनि स्वतंत्रद्रव्याण्ये-
वाभिमन्यंते तद्वारणायेदमुच्यते ॥ तत्रयदग्नेः कार्यविशेषस्य संबंधिरोहितं रूपं त-
त्तेजसएव रूपं नतु कारणगुणारब्धंरूपांतरमधिष्ठानेकल्पितंवाकार्यनिष्ठम् ॥ यच्छु-
क्लं रूपं तदप्यपामेव ॥ यत्कृष्णं रूपं तदपि पृथिव्याएव ॥ एवंसत्यग्नेः सकाशा-
दग्नित्वं लौकिकबुद्ध्या निश्चितं परिच्छिन्नत्वं स्वतंत्रद्रव्यत्वमपागात् ॥ वाचारंभ-
णंविकारोऽग्निरयंनतेजोऽबन्नमितिस्वरूपप्रच्यावोवाङ्मात्रारब्धः ॥ वस्तुतः पूर्वोक्तते
जोऽबन्नानामेव ॥ अग्निरुल्मुकंदीपइत्यादिनामधेयं नत्वतिरिक्तमग्न्यादिकम् ॥ तदाह-
त्रीणि रूपाणीत्येवसत्यमिति ॥ इतिहेतोस्तैजोऽबन्नत्वेन प्रकारेण वाऽग्न्यादिकं सत्यं नतु
स्वतंत्रद्रव्यत्वेनेत्यर्थः ॥ सत्यमितितु न रूपाणां विशेषणम् ॥ वचनविरोधात् ॥ नामरू-
पमात्रे मिथ्यात्वमभिमन्यमानस्य तव तु रूपाणामपि सत्यत्वं बाधकमेव ॥ अनेनादि-
त्यचंद्रमोविद्युद्वाक्यानिव्याख्यातानि ॥ एवं "अन्नमशितंत्रेधाविधीयते" इत्यादिना ते-
जोबन्नेष्वेकैकस्य शरीरे त्रेधा विभागोमथ्यमानदधिवत्सूक्ष्मांशस्योर्ध्वगमनं तस्य नव
नीतवद्भागादिभावश्च कथ्यमानः परिणामवादमेव स्फुटयति नतुविवर्तवादम् ॥ नहिपुरी-
षमांसादिकमप्यन्नादेर्विवर्तः ॥ अग्रेऽद्भिः प्राणशक्तेर्वर्धनमन्नेन मनःशक्तेर्वर्धनं तया
ऋग्वेदादेःप्रतिभानं तदुपक्षये तदप्रतिभानं तत्राग्न्यंगारदृष्टांतश्च सर्वस्य विवर्तत्वादरे
नोपपद्येत ॥ अग्रे च नवकृत्वउपदेशे "अशनापिपासेमेसोम्यविजानीहि" इत्यादिना
ते निरूपिते ॥ अत्र क्षुत्पिपासयोर्जलतेजःकार्यत्वेऽपि गोनायादिदृष्टांतेनाशितनेतृत्वा-
दपामेव नामाशनायेति ॥ उदकनेतृत्वात्तेजसएव नाम उदन्येतीत्युक्तम् "यत्रैतत्पुरु-
षोशिशिषतिनामापएवतदशितंनयंतेतद्यथागोनायोऽश्वनायः पुरुषनायइत्येवंतदपआच
क्षतेऽशनायेति" ॥ तथा "यत्रैतत्पुरुषःपिपासतिनामतेजएवतत्पीतंनयतेतद्यथागोनायो-
ऽश्वनायःपुरुषनायइत्येतत्तेजआचष्टउदन्येति" इति ॥ एतेनापि कारणस्यैव तत्तन्ना-
मधेयमिति स्फुटं दर्शितम् ॥ "तत्रैतच्छुंगमुत्पतितंसोम्यविजानीहिनेदममूलंभविष्यती-
ति" इति शुंगमूलभावः सन्मूलकत्वादिकं च विवर्त्तवादबाधकमेवेत्युक्तं प्राक् ॥ "वा-
ङ्मनसिसंपद्यते" इत्यादिक्रमेण प्रतिसंक्रमोप्यविकृतपरिणामएव संगच्छते ॥ " सय-
एषो ऽणिमैतदात्म्यमिदंसर्वंतत्सत्यं" इत्यत्रापीदमानिर्दिष्टस्य परिदृश्यमानस्य सर्व-
स्य जगतोब्रह्मात्मकत्वमुक्तम् ॥ नह्यलीकस्य तत्तादात्म्यं संभवति ॥ तत्पदेनापि अ-
णिमपरिचायनार्थस्य सर्वस्यैव सन्निहिततया परामर्शात्तस्यैव सत्यत्वं विधीयते ॥ स-
र्वगतमेव चैकत्वमनूद्यते ॥ अन्यथा सआत्मा ससत्यइत्येव पठेत् ॥ अग्रेपि मधुनदी-
वृक्षन्यग्रोधाणुधानादिदृष्टांताः सत्कार्यवादं परिणामवादं चैवावगमयंति नमिथ्यावाद-
मितिविस्तरभयाद्विरम्यते ॥ नापि " नेहनानास्तिकिंचन " इतिवाक्यं जगन्मिथ्यात्वं
साधयितुमीष्टे ॥ अत्र इहेत्यनेन जगत्परामृश्यते ब्रह्म वा ॥ आद्ये जगति नानात्वस्यै-
व निषेधः सिद्धोनतुजगतः ॥ नहिभूतलेघटोनास्तीत्युक्तेभूतलस्याप्यभावोगम्यते ॥

द्वितीयेतुपुरुषादिषु देहेंद्रियादिनानात्वमिव " यदेकमव्यक्तमनंतरूप " मित्यनंतरूपे विश्वतश्चक्षुष्ट्वविश्वतोमुखत्वादिमत्यपिब्रह्मणिननानात्वमित्येवार्थः ॥ इदंचवाक्यं कठवल्ल्यां बृहदारण्यकेचपठ्यते ॥ तत्रप्रकरणविचारेह्ययमेवार्थइति तृतीयस्य द्वितीयेस्पष्टमाकरे ॥ सूत्रे अनन्यत्वशब्देन तादात्म्यस्यैव परिग्रहेशिरोमणिभट्टाचार्यादितार्किकोक्तां युक्तिमप्याहुः ॥ तदप्यनन्यत्वेत्यादिना ॥ तदनन्यत्वसूत्रे भेदव्यासेधएव क्रियतइतिवाचस्पत्यादीनां व्याख्यानं तत्रत्यभाष्यप्रकाशशास्त्रार्थविवरणभंगयोरपि विस्तरेण निराकृतम् ॥ लाघवरूपेति ॥ इदं युक्तिरूपम् ॥ "तदात्मान ँ स्वयमकुरुत ॥ ऐतदात्म्यमिद ँ सर्वम्" ॥ इत्यादिश्रुतिरूपमपि तादात्म्ये प्रमाणं बोध्यम् ॥ अतोऽन्यत्वाभावपक्षएव प्रमाणाभावोज्ञेयः ॥ यत्वेतदाशंकावारणाय ( सचकार्यस्यमिथ्यात्वात् )इत्युक्तम् ॥ तत्र " सदेवसोम्य" इत्यादितत्सूत्रविषयवाक्यविरोधं स्मारयंति ॥ कार्यस्यामिथ्यात्वइत्यादीना ॥ अतोमिथ्यात्वएव मानाभावान्मानविरोधाच्च ॥ तेन हेतुनाऽन्यत्वाभावः प्रमाणाभावोवा न वक्तुं शक्यः ॥ मिथ्यात्वसिद्धौ सौत्रानन्यत्वशब्दस्यार्थनिश्चयस्तन्निश्चये च सूत्रप्रामाण्याच्छ्रुतौ कार्यमिथ्यात्वस्य सिद्धिरितीतरेतराश्रयाच्च ॥ किंचेह भवद्भाष्यस्थे " तस्मात्कारणात्परमार्थतोऽनन्यत्वंव्यतिरेकेणाभावः कार्यस्यगम्यते " इतिव्याख्यानेपि व्यतिरेकेणाभावोक्त्या तादात्म्यमेवापतति । अन्यथा खपुष्पादेरिवाभावमात्रं वक्तव्यम् ॥ एवं " तयोःकार्यकारणयोरनन्यत्वमवगम्यते,, इतिव्याख्यानेपि तयोरिति सप्तमी षष्ठी वा आद्ये खपुष्पसगंधस्याधिकरणत्वानुपपत्त्या द्विवचनानुपपत्त्याच कार्यस्यापि सत्त्वमापद्यते ॥ द्वितीये शुद्धाद्वैतपदे षष्ठीतत्पुरुषपक्षे स्वाक्षिप्ताशेषदोषप्रसंगादन्यत्वाभावासिद्धिर्द्विवचनान्यथानुपपत्त्यादिना सुतरां तादात्म्यसिद्धिश्च ॥ अतस्तथाशयेकार्यं मिथ्यात्वमारंभणशब्दादिभ्यइत्येव कारणमात्रसत्वं तेभ्यइत्येव वा वदेत् ॥ एवमुक्त्या तु तादात्म्यमेव फलति ॥ भावेचेत्यादिपुरस्त्यसूत्राणामपि तथैवसति संगतेश्चेतिदिक् ॥ यत्तु ( अतएवारम्भणशब्दादिभ्यइत्युक्तंनतु सच्छब्दादिभ्यइति ) इत्यवादि तच्छ्रुतौ पौर्वापर्याननुसंधानात् ॥ तत्रारंभणवाक्यमेव सदेवेत्यादिवाक्यतः प्रथममितिप्रथमस्यागानौचित्यात् दृष्टांततः प्रतिज्ञातोपपादकतयाऽऽवश्यकत्वाच्च युक्तं तद्ग्रहणम् ॥ आदिशब्देनच सदेवेत्यादिकमपि संगृहीतमेव ॥ अग्रिमसूत्रेषु भावेसत्युपलब्धिमवरस्य सत्त्वंच कंठरवेण वदता तानि वाक्यानि स्मारितानीतिकिमाम्रेडितेन ॥ भेदादीनामिति ॥ अयंभावः ॥ यच्च कार्यस्यासत्त्वे इत्यादितदप्यभिप्रायाज्ञानात् ॥ सर्वस्यैव कार्यस्य वाङ्मात्रारब्धत्वे कार्यात्यंताभावाद्ब्रह्म कस्य कारणं भवेदित्यस्माकमाक्षेपः ॥ तत्र कारणत्वनिर्वाहककार्यसत्त्वस्वीकारिणोऽस्मान्प्रति भेदादिदृष्टांतेन तत्साधनमयुक्तमेव ॥ बहुत्वरूपभेदस्यास्मन्मते जतुघृतयोर्द्रवत्ववद्ब्रह्मणोधर्मत्वान्नतस्यासत्त्वम् ॥ अथ ब्रह्मप्रतियोगिकभेदः संसारादिश्चात्रगृ-

ह्मतइतिचेन्मायिकाश्वादिवत्तस्यासत्त्वेपि ऐंद्रजालिकशक्तिवन्मायायाःसत्यत्वाद् ब्रह्म-णश्च कर्तृत्वात्तेन तया तस्य प्रदर्शनं संभवति न तथात्वन्मते ॥ किंच तत्प्रतिब्रह्मणो-निमित्तमात्रत्वं जगत्प्रतितूपादानत्वमपि ॥ अतो "यतोवाइमानि ॥ तदात्मानं ॥ प्रकृति-श्च" इत्यादीनां न मन्मते व्याकोपः तव तु सर्वस्यासत्त्वात्तद्याकोपोदुरुद्धरः ॥ स्वान-न्येत्यादि तु प्रलापमात्रम् ॥ शरीरे स्वानन्यकरभिन्नचरणभेदस्य समुद्राभिन्नैकतरंग-तोऽन्यस्मिन्नपि तरंगे समुद्राभेदस्यच दर्शनेन परस्परभिन्नयोरपि विन्यासयोः पुरुषा-भिन्नतायाः पुरुषभेदानाधायकतायाश्च सुयुक्तत्वात् ॥ अतएवपरमाचार्यस्याऽहिकुंड-लादिदृष्टांताः संगच्छंते ॥ अन्यथा ते बाध्येरन् ॥ विन्यासानां कल्पितत्वं तु सत्यवि-न्यासांतराभावसादृश्याभावादिभिरशक्यवचनम्॥किंच विजनेसुषुप्तिगतस्यपुंसोविन्या-सस्यकः कल्पकः॥तस्य निद्रापराभूतत्वादितस्यचाभावात्॥तदा विन्यासस्याभावे तु निद्राकालिकस्यतस्यानुमितिरबाधिता नोपपद्येत॥उत्तरकालेऽनुमितिस्तु परिम्लानंपी-नस्तनजघनसंगादुभयस्तनोर्मध्यस्यांतः परिमिलनमप्राप्यसरसम ॥ इदंव्यस्तन्यासं-शिथिलितभुजाक्षेपवशतः कृशांग्याः संतापंवदतिनलिनीपत्रशयनमिति रत्नावल्यादिषु वर्णिता लोके च प्रसिद्धा ॥

किंच जगतोमायिकत्वे मायिकस्वप्नवैधर्म्यप्रतिपादकस्य "वैध-र्म्याच्चनस्वप्नादिव" दितिसूत्रस्य विरोधः ॥ ननु "नाभावउपलब्धे-"रित्यनेनसर्वथा बाह्यार्थासत्त्वमभ्युपगच्छतो विज्ञानवादिनोमत-स्यखंडनमुपक्रम्य स्वप्नादिष्वंतरेणाप्यर्थं वासनानिमित्तस्य वै-चित्र्यस्ययथाभ्युपगमस्तथाजागरेपि वासनानिमित्तमेववैचि-त्र्यं- नत्वर्थनिमित्तमित्यभावोबाह्यार्थस्येतितदभ्युपगतंस्वप्नेस-र्वथार्थशून्यत्वमभ्युपगम्यजागरितप्रत्ययेषु तदभावं वैधर्म्यादि-त्यादिनावैधर्म्यंचजागरिते बाधाभावःस्वप्नेबाधःएवंच स्वप्ने यथाऽर्थशून्यत्वमाश्रीयतेतथाजागरितेनाश्रयितुंशक्यमितिसू-त्रकारेण विज्ञानवादिनोबौद्धमतस्यैव खंडनं कृतं नास्मन्मत-स्यास्मन्मते तु स्वप्नस्याविद्यादशायामेव बाधोजगतस्त्वविद्याद-शायांन बाधइति वैधर्म्यसत्वान्नसूत्रविरोधइतिचेन्न ॥ विज्ञा-

नवादिमताद्भवन्मते विशेषाभावात् तन्मते विरोधसत्वे भव-
न्मते विरोधोनेतिवक्तुं नशक्यते ॥ यथा विज्ञानवादिभिः सर्व-
स्य विज्ञानस्वरूपत्वं बाह्यार्थाभावः स्वीक्रियते तदुक्तंतैः ॥-
बुद्धिस्वरूपमेकंहिवस्त्वस्तिपरमार्थतः ॥ प्रतिभासस्यनानात्वा-
न्नचैकत्वंविहन्यते ॥ परिव्राड्कामुकशुनामेकस्यांप्रमदातनौ ॥
कुणपःकामिनीभक्ष्यमितितिस्रोविकल्पनाः ॥ तथाप्येकैवसा
बालाबुद्धितत्वंपरंहिन इति॥ एवमेव भवद्भिरपिदृष्टिसृष्टि वादि-
भिर्दृष्टिपदप्रतिपाद्यविज्ञानव्यतिरिक्तासृष्टिर्नस्वीक्रियते ॥ य-
थातैःस्वप्नदृष्टांतेनबाह्यार्थासत्वंप्रतिपाद्यतेतथा चानुमानंतन्मते॥
स्तंभादिप्रत्ययाः स्वात्मांशमेव बाह्यतया ऽध्यवस्यंतोमिथ्याभू-
ताः प्रत्ययत्वात् स्वप्नप्रत्ययवत् शुक्तिरजतप्रत्ययवच्च ॥ स्वप्ने
यथा बाह्यार्थाभावाद्देशांतरवर्तिनां स्वशिरश्छेदादीनां च दर्श-
नादवश्यं विज्ञानमेव तत्तदाकारेण भासते ॥ तथा जाग्रज्जना-
नामपि विज्ञानग्राहित्वं मिथ्यात्वं चेति ॥ तथैव भवन्मते स्व-
प्नदृष्टांतेन जाग्रत्पदार्थानां मिथ्यात्वं साध्यते उक्तंच गौडपा-
दैः ॥ यथास्वप्नेद्वयाभासंस्पंदतेमाययामनः ॥ तथाजाग्रद्द्वया-
भासंस्पंदतेमायया मनः ॥ अद्वयंच द्वयाभासंमनःस्वप्नेनसंश-
यः ॥ अद्वयंचद्वयाभासंतथाजाग्रन्नसंशयइति ॥ एवंच स्वप्न-
साधर्म्येणसर्वप्रपंच मिथ्यात्वमभ्युपगच्छतां भवतांमतेपिप्रपंचे
स्वप्नेवैधर्म्याभावाद् "वैधर्म्याच्चनस्वप्नादिव"दितिसूत्रविरोधःक-
थं न स्यात् ॥ नचाविद्यादशायामेव स्वप्नस्यबाधोस्माभिः स्वी-
क्रियते प्रपंचस्य तु ज्ञानेनाविद्यानिवृत्तावेवेतिवैधर्म्यसत्वात्कु-
तोऽस्मन्मते सूत्रविरोधइतिवाच्यम् ॥ स्वप्नदृष्टांतेन स्वप्नसाध-

र्म्यात्प्रपंचस्यासत्वमभ्युपगच्छतांमतखंडनायेदं सूत्रं प्रवृत्तं तत्र सूत्रकारस्यायमाशयः यादृशसाधर्म्येण ज्ञाननिवर्त्यत्वबाधितत्वमायाकार्यत्वादिना प्रपंचस्यासत्वं साध्यतेतत्साधर्म्यं न प्रपंचस्य ॥ किंतु वैधर्म्यमेव प्रपंचे ज्ञानानिवर्त्यत्वसत्यत्वाऽमायिकत्वादीनां सत्वात् ॥ तादृशवैधर्म्यस्यचत्वयाऽनभ्युपगमात्कथं न विरोधः ॥ अविद्यादशायामबाधमात्रेण वैधर्म्यं न संभवति ॥ अन्यथा त्वन्मतसिद्धषोडशावस्थांतर्गतस्वप्नस्वप्नावस्थादृष्टगजादीनां स्वप्नजाग्रदवस्थायां बाधात्तदवस्थादृष्टानां चाबाधात्तत्रापि वैधर्म्यसत्वात्तेषामपि मिथ्यात्वं न स्यात् किंच नस्वप्नादिवदित्यंशेन यथा स्वप्नस्य मिथ्यात्वमसत्यत्वं वा तथा प्रपंचस्य नेत्युच्यते त्वन्मते च प्रपंचस्य मिथ्यात्वात्तादृशांशविरोधोपि ॥ नचाविद्यादशायां सत्वान्न तादृशांशविरोधः ॥ अविद्यादशायां सत्वाभ्युपगमे त्रैकालिकनिषेधप्रतियोगित्वं स्वाश्रयत्वेनाभिमतनिष्ठात्यंताभावप्रतियोगित्वमित्यादीनां त्वयाऽभ्युपगतानां तत्रासत्वेन मिथ्यात्वानुपपत्तेः ॥ अंशिनः स्वांशगात्यंताभावस्य प्रतियोगिनः ॥ अंशित्वादितरांशीवद्विर्गेवेवगुणादिष्विति चित्सुखोक्तिविरोधश्च ॥ किंच मिथ्यात्वासत्वयोर्वास्तवभेदाभावान्नामांतरस्य च भेदासाधकत्वात्तवाप्यसद्वादित्वमेव दृष्टिसृष्टिवादित्वेन विज्ञानवादित्वमपि ॥ नचात्यंतासत्वे प्रतीत्यनुपपत्तिरितिवाच्यं॥ असद्वादिभिरत्यंतासतामेव स्वाप्नपदार्थानां तत्साधर्म्येण जाग्रत्पदार्थानां च प्रतीतेरभ्युपगमात् यत्तु ( स्वाप्नप्रत्ययैः सर्वथा सादृश्यस्यानिषेधात् अन्यथा सर्वस्य कथंचित्सर्वसदृशत्वे-

हंतादिप्रपंचस्य भेदादेरासुरव्यामोहायासत्यस्यैव प्रतीयमानत-
याऽभ्युपगतस्य प्रभासलीलादेश्वत्वन्मतेपिमायिकत्वेन च तवा-
पि तद्विरोधोदुर्वारःस्या ) दित्याद्युक्तं तदपि न सम्यक् ॥ स्वा-
मपदार्थैः सर्वथासादृश्यस्यानिषेधेपि मिथ्यात्वमायिकत्वादीनां
जाग्रत्प्रपंचे त्वयांगीकृतानां निषेधेन सूत्रविरोधस्यानुद्धारात् ॥
यत्किंचिद्वैधर्म्यमादाय सादृश्यनिषेधे चंद्रसदृशेपि मुखे नै-
जसत्वकलंकित्वादिवैधर्म्यान्नचंद्रवदित्यादिव्यवहारापत्तेः ॥अ-
स्मन्मते च प्रपंचस्य सत्यत्वेन मिथ्यात्वमायिकत्वादीनामन-
भ्युपगमेन स्वमतुल्यत्वाभावान्न सूत्रविरोधः ॥ अहंतादिप्रपं-
चस्य आसुरव्यामोहनादिलीलानांच मायिकत्वेऽपि तेषां
सूत्रस्थादिपदेन संगृहीतानां स्वमतुल्यानांप्रपंचे वैधर्म्यसंभ-
वेन नकोपि दोषः पदमादधाति ॥ अन्यथाऽदिपदस्य वैय-
र्थ्यापत्तेः ॥ त्वन्मतेपि शुक्तिरजतादीनामादिपदेन ग्रहणमव-
श्यंकर्त्तव्यम् अन्यथातेष्वविद्यादशायां बाधितेषु स्वमवैध-
र्म्यासत्वेनाविद्यादशायामित्याद्युक्तावपि सूत्रविरोधोद्धारो न
स्यात् ॥ किंच प्रपंचस्य मायिकत्वे मोक्षसाधनेषु श्रवण-
मननादिषु प्रवृत्तिर्नस्यात् एकजीववादस्यैव तत्सिद्धांतसं-
मततया तद्भिन्नानां स्वमजीववज्जीवाभासत्वेन वामदेवशु-
कादीनामपिस्वमदृष्टमुक्ततुल्यत्वेन गुरुशिष्यशास्त्रादीनामपि
स्वमतुल्यत्वात्कस्यचिदपि पुरुषस्य मम मुक्तिर्भविष्यतीति-
विश्वासासंभवश्च स्यादित्ययमेवार्थः सूत्रस्थचकारेण व्यासै
र्दर्शितः ॥ अतोविज्ञानवादिनस्ततुल्यस्य तव च मतखंडनायेदं

सूत्रं प्रवृत्तं ॥ एतेन ( उक्ताशयेन विज्ञानवादिनं प्रति सूत्रस्य प्रवृत्तत्वा ) दिति प्रत्युक्तं ॥

## टीका

सहस्राक्षे यच्च मायिकतयोभयसंमतेत्यादि सूत्रस्यप्रवृत्तत्वादित्यंतं भागं परिहरंति ॥ किन्चजगतामायिकत्वइत्यादिना ॥ प्रवृत्तत्वादिति प्रत्युक्तमित्यंतेन ॥ विज्ञानवादमायावादयोः कथमविशेषइत्यतस्तमुपपादयंति॥ यथाविज्ञानवादिभिरित्यादिना ॥ अत्रप्राञ्चः ॥ शमथविपश्यनायुगनद्धवाहीमार्गोयोग इतितेषांयोगलक्षणंशमथःसम्यग्विरुच्यते ॥ विपश्यनासम्यग्दर्शनम् ॥ यथायुगनद्धौबलीवर्दौवहतस्तथायोमार्गः सम्यग्दर्शनवाहीसयोगस्तेनाचरतीतियोगाचारउच्यते ॥ इतितेषांसम्यग्दर्शनंचसर्वंबाह्यार्थशून्यंविज्ञानं सर्वंक्षणिकं सर्वंनिरात्मकमिति ॥ एतच्चभास्करभाष्येऽपिस्फुटम् ॥ अत्रसर्वक्षणिकत्वंविज्ञानस्कंधस्यक्षणिकत्वात् ॥ निरात्मकत्वमालयविज्ञानातिरिक्तात्माभावात् ॥ बाह्यार्थशून्यत्वंतु विज्ञानस्यैवसाकारत्वात् ॥ प्रत्यक्षत्वाच्च ॥ तथाहि सर्वंविज्ञानमेव ॥ यत्साकारंयत्प्रत्यक्षंतद्विज्ञानमेव ॥ नीलंपीतमित्याद्याकारकंहि विज्ञानमेवप्रकाशते ॥ दृष्टिप्रत्यक्षंचत-

---

## सहस्राक्ष.

यच्च मायिकतयोभयसंमतस्वप्नवैधर्म्यप्रतिपादकस्य वैधर्म्याच्चनस्वप्नादिवदितिसूत्रस्यविरोधमुक्तवांस्तच्चनसम्यक् । तथाहि नाभावउपलब्धेरित्यनेनसर्वथाबाह्यार्थासत्त्वमभ्युपगच्छतोविज्ञानवादिनोमतस्य खण्डनमुपक्रम्य स्वप्नादिष्वन्तरेणाऽप्यर्थंवासनानिमित्तस्यवैचित्र्यस्योभाभ्याम्भ्युपगम्यमानत्वात् ॥ अन्तरेणतुवासनामर्थनिमित्तस्यज्ञानवैचित्र्यस्य मयाऽनभ्युपगतत्वात् ॥ अभावोबाह्यार्थस्येतितदभ्युपगतंस्वप्नेसर्वथार्थशून्यत्वमभ्युपगम्य जागरितप्रत्ययेषुतदभावंवैधर्म्याच्चेत्यनेनाह ॥ एवंच यथास्वप्नेऽर्थशून्यत्वमाश्रीयते तथाजागरितेनाश्रयितुंशक्यम् ॥ वैधर्म्यात् ॥ वैधर्म्यंचजागरितेबाधाभावःस्वप्नेबाधः ॥ अस्मद्रीत्यातु अविद्यादशायामेवस्वप्नस्यबाधइतरस्यतुनेतिबोध्यम् ॥ एवञ्च कथंतद्विरोधः ॥ स्वाप्नप्रत्ययैःसर्वथासादृश्यस्याऽनिषेधात् ॥ अन्यथा सर्वस्यकथंचित्सर्वसदृशत्वेनअहंतादिप्रपञ्चस्यभेदादेराहुरव्यामोहायासत्यस्यैवप्रतीयमानतयाऽभ्युपगतस्यप्रभासलीलादेश्च त्वन्मतेऽपिमायिकत्वेनच तवापितद्विरोधोदुर्वारःस्यत् ॥ अहत्वादिषुव्यभिचारेणसूत्रासंगतिश्च ॥ एतेन मोक्षसाधनेप्रवृत्त्यनुपपत्तेश्चेतितत्सूत्रस्थचकारस्यतात्पर्यवर्णयतष्टीकाकारस्योक्तिःप्रत्युक्ता ॥ उक्ताशयेनविज्ञानवादिनंप्रतिसूत्रस्यप्रवृत्तत्वात्

त् प्रदीपवत् प्रकाशकत्वात् ॥ यन्मते ज्ञानमप्रत्यक्षंतस्यस्वपरोत्पन्नज्ञानयोरवि-
शेषआपद्येत ॥ अस्तितुविशेषः ॥ स्वोत्पन्नज्ञानेनप्रवृत्तिर्निवृत्तिर्वाभवतीति ॥ अत-
एकमेवविज्ञानंग्राह्यग्राहकसंवित्तिभेदेनप्रत्यक्षंप्रकाशते ॥ यथोक्तंविप्रभिक्षुणा ॥ अ-
प्रत्यक्षोपलंभस्यनार्थदृष्टिःप्रसिद्ध्यति ॥ अविभागोपिबुद्ध्यात्माविपर्यासितदर्शनैः ॥
ग्राह्यग्राहकसंवित्तिभेदवानिवलक्ष्यते इति ॥ अर्थदृष्टिःप्रवृत्तिनिवृत्तिलक्षणव्यवहारः
बुद्धिरेवात्माविभागरहितोपिभ्रांतदर्शनैर्हेतुभिर्ग्राह्यादिभेदवानिवभासतइत्यर्थः ॥ तत्र-
ग्राह्याकारःप्रमेयं ग्राहकाकारःप्रमाणं स्वसंवित्तिःफलं इतित्रयमेकस्मिन्नेवविज्ञाने-
ऽवकल्पते ॥ नचैवंत्रिधाप्रकाशनेपिनानात्वं प्रमदातनुवदुपपत्तेः ॥ किंच सहोप-
लंभनियमान्नभेदोनीलतद्धियोः ॥ यदैवनीलज्ञानं तदैवनीलमुपलभ्यतेतस्मादभिन्न-
मित्यर्थः ॥ इतश्चानुमानाद्बाह्यार्थाभावः ॥ बाह्यप्रत्ययोमिथ्या ॥ प्रत्ययत्वात् स्वप्नप्रत्य-
यवदिति ॥ इत्याद्याहुः ॥ तदेतत्संगृह्णानास्तत्स्वरूपमाहुः ॥ **बुद्धिस्वरूपमिति**
सर्ववस्तुपरमार्थतः बुद्धिस्वरूपंविज्ञानात्मकं अतएवैकं नचप्रत्ययस्यनानात्वादेकत्व-
स्यविघातः॥ यथाएकस्मिन्नपिस्त्रीशरीरेविरक्तनांशव इति कामुकानांकामिनीति श्वा-
दिमांसाशिनांभक्ष्यमिति पृथग्विकल्पनाः ॥ एवंविकल्पनानानात्वेपियथा सा बाला
त्वेकैव तथाऽस्माकंबुद्धिरिति तदाशयः॥ **एवमेवेत्यादि** ॥ दृष्टिसृष्टिवादोभवतामद्वैतसि
द्ध्यादिषुप्रपंचितः ॥ तत्रदृष्टिश्चज्ञानमेव ॥ नतुचाक्षुषज्ञानमात्रम् ॥ "त्यदादिषुदृशोनालो
चन,, इत्यादौपश्यतेर्ज्ञानसामान्यार्थकतायाअपि सिद्धेः ॥ अन्यथादृष्टिसृष्टिवादे वायोः
अंधैरंधकाराभिभूतैश्चहस्तपरामर्शादिनैवोपलभ्यमानवस्तूनांचमिथ्यात्वंनस्यात् ॥ त-
स्माद्विज्ञानमेवबाह्यार्थोदृष्टिरेव बाह्यार्थइत्यनर्थांतरम् ॥ ज्ञानस्वरूपमेवाहुर्जगदेतन्मनी-
षिणः ॥ अर्थस्वरूपंभ्राम्यंतःपश्यंत्यन्येकुदृष्टयइत्याद्युदाहरन्तोज्ञानातिरिक्तबाह्यार्था-
भावमेवत्वदीयामन्यन्ते ॥ ज्ञानस्यैवग्राह्यादित्रिपुटीरूपभेदवत्त्वमिवेति ॥ **स्तंभा-
दिप्रत्ययाइति** ॥ जागरितप्रत्ययाइतिभावः ॥ अत्रेदंबोध्यम् ॥ स्वाप्नप्रत्ययाहि त-
न्मते आलयविज्ञानरूपस्यात्मनएव अंशान्बाह्यार्थतयाऽध्यवस्यंति इदंगृहमयंगजइ-
ति ॥ नहितदानींपारमार्थिकाबाह्यार्थाःसंति अतिदूरवर्तिदेशांतरवर्तिनामप्यनुभवा-
त् ॥ कदाचिदप्यननुभूतानांस्वशिरश्छेदमनुष्योड्डानादीनांचानुभवात् ॥ अतोविज्ञान
स्यैवतत्तदाकारस्यतदाबाह्यार्थतयाऽध्यवसायात्तेप्रत्ययामिथ्याभूताएव ॥ अतस्तेषु-
प्रत्ययत्वेनस्वात्मांशानांबाह्यार्थतयाऽध्यवसायिमिथ्याभूतत्वेन च व्याप्तिमादायजाग-
रितप्रत्ययेष्वपिप्रत्ययत्वेन हेतुना तथात्वं साध्यते ॥ तन्मतखंडनंतु ( अ०२ पा०२
सू०२८ ) "नाभावउपलब्धे" इत्यधिकरणेद्रष्टव्यम् ॥ तद्वत्स्वमादिदृष्टांतेनैव भवन्मते-
पिमिथ्यात्वं साधितमित्यत्रशंकराचार्यपरमगुरुसंमतिमाहुः ॥ **उक्तंचेति** ॥ मांडूक्यो-
परिगौडवार्तिकेष्वद्वैतप्रकरणे ( कारिका २९।३० ) उक्त मित्यर्थः ॥ **यथास्वप्नइ-
ति** ॥ एतदर्थंतुतद्भाष्येशंकराचार्याः ॥ " कथंपुनः सतोमाययैव जन्मेत्युच्यते ॥

यथा रज्ज्वां विकल्पितः सर्पोरज्जुरूपेणावेक्ष्यमाणः सन् एवं मनःपरमार्थविज्ञप्त्या-
त्मरूपेणावेक्ष्यमाणं सत् ग्राह्यग्राहकरूपेण द्वयाभासं स्पंदते स्वप्ने मायया रज्ज्वा-
मिव सर्पः तथा तद्वदेव जाग्रज्जागरिते स्पंदतेमाययामनः स्पंदतइवेत्यर्थः" इति
व्याचक्षते ॥ तत्रैतदग्रे (कारिका३१) मनोदृश्यमिदंद्वैतंयत्किंचित्सचराचरम् ॥
मनसोह्यमनीभावेद्वैतंनैवोपलभ्यतइति दृष्टिसृष्टिवादः तथा (का० ३३) अकल्प-
कमजंज्ञानंज्ञेयाभिन्नंप्रचक्षतइत्यात्मनोज्ञानमात्ररूपत्वं चोक्तम् ॥ अत्रापि शंकरा-
चार्याः "रज्जुसर्पवद्विकल्पनारूपंद्वैतरूपेणमनएवयुक्तम् ॥ तत्रकिंप्रमाणमित्यन्वय-
व्यतिरेकलक्षणमनुमानमाह ॥ कथंतेनहिमनसाविकल्प्यमानेनदृश्यंमनोदृश्यमिदंद्वैतं-
सर्वंमनइतिप्रतिज्ञा ॥ तद्भावेभावात्तदभावेऽभावात् ॥ मनसोह्यमनीभावेनिरुद्धेविवे-
कदर्शनाभ्यासवैराग्याभ्यांरज्ज्वामिवसर्पेलयंगतेवासुषुप्तेद्वैतंनैवोपलभ्यतइत्यभावात्सि-
द्धंद्वैतस्यासत्वमित्यर्थः" इत्याहुः ॥ अतस्तवापि मते सूत्रविरोधस्तदवस्थः ॥
उभयसंमतोवासनासन्तानोपि (अ०२पा०२सू०३०) "नभावोऽनुपलब्धेः" इतिसू-
त्रेण निराकृतइति किं प्रासंगिकेन ज्ञाननिवर्त्यत्वेत्यादि ॥ अत्रज्ञाननिवर्त्यत्वंसौत्रा-
दिपदपरिगृहीतशुक्तिरजतादौ स्पष्टं स्वप्ने कदाचित्स्वप्नोयमिति ज्ञानेपि कंचित्कालं
तदनिवृत्तिदर्शनात् ॥ बाधितत्वं तु स्वप्नेपि जागरणोत्तरं स्वाप्नगजाद्यनुपलंभात् ॥ मा-
यिकत्वं तु विवर्ते स्वप्ने ऐंद्रजालिकवस्तुनि च तुल्यं सूत्रआदिपदेन विवर्तैन्द्रजालि-
कादीनां संग्रहः ॥ ज्ञानानिवर्त्यत्वेत्यादि ॥ "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे ॥
तस्यसर्वेषुलोकेषुकामचारोभवति ॥ कामान्नीकामरूप्यनुसंचरन्एतत्सामगायन्नास्ते ॥
हावु ३ अहमन्नं ३ ॥ यस्तुसर्वाणिभूतान्यात्मन्येवानुपश्यति ॥ सर्वभूतेषुचात्मानंत-
तोनविजुगुप्सते ॥ यस्मिन्सर्वाणिभूतान्यात्मैवाभूद्विजानतः ॥ तत्रकोमोहः कःशोक-
एकत्वमनुपश्यतः" इतिबृहदारण्यकच्छांदोग्यतैत्तिरीयेशावास्यादिषु ज्ञानिनामपि
प्रपंचदर्शितायाः श्रावणाज्ज्ञानानिवर्त्यत्वं ॥ प्रपंचस्य ज्ञाननिवर्त्यत्वे ज्ञानिनः शिष्या-
द्यनुपलब्ध्या प्रवचनासंभवात् अज्ञानिनश्चानुपसत्तव्यत्वात् मुंडकादिषु ब्रह्मनिष्ठस्यैव
तद्विज्ञानार्थमभिगम्यत्वश्रावणाच्च मोक्षमार्गोच्छेदः ॥ तस्य सत्यत्वंतु "यदिदंकिंच
तत्सत्यमित्याचक्षते" इत्यादिश्रुतिभ्यः ॥ ततएवामायिकत्वं ॥ "तदात्मात्मानं-
स्वयमकुरुत ॥ सहैतावानास ॥ सर्वंखल्विदंब्रह्म ॥ पुरुषएवेदंसर्वं ॥ इदंसर्वंयदयमा-
त्मा" इत्यादिश्रुतिभ्यश्च ॥ आदिपदेनोभयत्र यथायथंनिरुपादानकत्वब्रह्मोपादान-
कत्वादयः ॥ एवं चाविद्यानाशोत्तरमपि प्रपंचस्याबाधात्तत्कल्पना प्रत्युक्ता ज्ञेया ॥
**षोडशावस्थेत्यादि** ॥ अद्यत्वेविद्यमानावेदांतादर्शकारादयस्तुतिस्रएवपरस्पर-
मिश्रणान्नवावस्थासमचाज्ञानभूमिकाइतिवदंतः संकलनयाषोडशताः दर्शयंतियथा
हुः ॥ (श्लो० ९५।९६।९७) जाग्रज्जाग्रत्तथाजाग्रत्स्वप्नजाग्रत्सुषुप्तिके। एवंत्रैविध्य-
मापन्नं जाग्रदुक्तंमनीषिभिः ॥ स्वप्नजाग्रत्तथास्वप्नस्वप्नस्स्वप्नसुषुप्तिके । स्वप्नत्रयंसमा-

ख्यातमेवंवेदीतपारगैः ॥ सुप्तिजाग्रत्तथासुप्तिःसुप्तिसुप्तिसुषुप्तिके । त्रैविध्यंहिगतेत्येवं भेदात्सुप्तिस्तथैवचेति ॥ तथा ( श्लोकः १८९ ) बीजजाग्रत्तथाजाग्रन्महाजाग्र त्तथैवच । जाग्रत्स्वप्नस्तथास्वप्नः स्वप्नजाग्रत्सुषुप्तिके ॥ एवंभेदात्समाख्याताः सप्ताऽज्ञानस्यभूमयइति ॥ व्याचक्षतेचतएव "प्रमाज्ञानं जाग्रज्जाग्रत् शुक्तिरजतादिभ्रमो जाग्रत्स्वप्नः । जाग्रदवस्थायां श्रमादिनास्तब्धीभावः जाग्रत्सुषुप्तिः । स्वप्नमित्रादिप्राप्तिः स्वप्नजाग्रत् । स्वप्नेपि स्वप्नो मया दृष्ट इतिबुद्धिः स्वप्नस्वप्नः । जाग्रद्दशायां वक्तुमशक्यं यत्किंचित्स्वप्नेनुभूयतेतत्स्वप्नसुषुप्तिः । सुषुप्त्यवस्थायां सात्विकीयासुखाकारावृत्तिः ( यदनंतरंप्रबुद्धस्य सुखमहमस्वाप्समितिपरामर्शः ) सासुषुप्तिजाग्रत् तत्रैवयाराजसीवृत्तिः ( यदनन्तरन्दुःखमहमस्वाप्समिति प्रबुद्धस्यपरामर्शः सासुषुप्तिस्वप्नः । तत्रैवयातामसीवृत्तिः ) यदनंतरंगाढं मूढोहमस्वाप्समितिपरामर्शः सासुषुप्तिसुषुप्ति" रिति ॥ प्राञ्चस्तुस्वप्नेस्वप्नांतरं स्वप्नस्वप्नः । स्वप्नएवस्वप्नाज्जागरणंस्वप्नजाग्रत् "स्वप्नेजागरणंयथे" त्यादिपुराणप्रसिद्धेरितिवास्तवंविवर्णयंति बीजजाग्रदादयश्चेत्थमन्यत्रलक्षिताः कुसूलेसंस्थितंबीजं तत्रसर्वोयथाद्रुमः। तथायत्रस्थितंविश्वंनतु व्यक्तिमुपागतम् । बीजरूपंस्थितं जाग्रद्बीजजाग्रत्तदुच्यते । संसारप्रथमावस्थामहामोहःसएवहि । तदेवाज्ञानमित्युक्तंयत्स्वबोधेनलीयते । कुसूलेसंस्थितंबीजं क्षेत्रेनिक्षिप्यतेयदा । अंकुरोन्मुखतांयातिसावस्थाजाग्रदुच्यते । इदमेवमहत्तत्वमितिसांख्यैर्निरूप्यते । ईक्षणंचेतिवेदान्तैः सामान्याहंकृतिस्तथा । आनंदमयकोशश्चतत्साक्षीत्वीश्वरःस्मृतः । विशेषाहंकृतिः सूक्ष्मांकुरवद्व्यावहारिकी । महाजाग्रद्बुधैः प्रोक्ता व्यष्ट्यवस्थात्रयेतुसा । जाग्रत्स्वप्नसुषुप्त्याख्येवस्थाजाग्रदितिस्मृता । जाग्रदेवयदाजीवो मनोराज्यंकरोतिहि । जाग्रतः स्वप्नइवयत्स जाग्रत्स्वप्नउच्यते । लोकप्रसिद्धोयः स्वप्नः सस्वप्नइतिकथ्यते । जातेपिजागरेजंतोः ,स्वप्नदृष्टार्थभासनम् । प्रत्यक्षमिवसंस्कारास्त्वप्नजाग्रत्तदुच्यते । षडवस्थापरित्यागेसुषुप्तिःसप्तमीमतेति ॥ केनचित्प्रकारभेदेनविलक्षणाअप्यवस्थाविशेषाः विद्यारण्यचित्सुखादिभिर्दर्शितास्तुप्रकृतेतत्तद्ग्रंथेभ्यएवावगंस्यंतइति प्रासंगिकवस्तुविस्तराद्विरम्यते ॥ स्वप्नेपि स्वप्नांतरं स्वप्नस्वप्नः नादृशस्वप्नविरामे पूर्वस्वप्नएव जागरणं स्वप्नजाग्रदवस्था ॥ तदवस्थेति ॥ स्वप्नजाग्रदवस्था ॥ तथाच भवन्मते स्वप्नजाग्रदवस्थास्थपदार्थानां यथा स्वप्नस्वप्नापेक्षया चिराद्बाधस्तथा प्रपंचस्य सर्वस्वप्नापेक्षयाऽतिचिरादपि सइति साधर्म्यस्यसिध्द्या चिरकालावस्थानोत्तरमपि बाधोजगतोन स्वप्नादितोवैधर्म्याऽपादकः ॥ देवालयादौद्वारस्तंभादिजटितशुक्तिशकलेषु कस्यचिद्बहुदिनावधिरजतबुद्धेरनुवर्तनेऽपि उत्तरक्षण एव बाधितरजताद्वैधर्म्यं चिरकालानुवृत्तमिथ्यारजते न शक्यं वक्तुम् ॥ यथा कथंचिद्वैधर्म्यस्य तु सर्वत्रैव संभवेन तत्रापि वैधर्म्याग्रहे सति साधर्म्यव्यवहार एवोच्छिद्येत ॥ तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव सादृश्यपदार्थत्वात् ॥

भूयःपदेन यत्किंचिद्वैधर्म्यंसर्वत्र सुलभं मूलेपिविवक्ष्यते ॥ अतोज्ञाननिवर्त्यत्वबाध्यत्व मायिकत्वादि भूयोधर्माणां प्रपंचे स्वप्नादौ चांगीकारात्साधर्म्यस्यैव सिध्यासूत्रविरोधस्तदवस्थः ॥ **किंच न स्वप्नेत्यादिमिथ्यात्वम्** ॥ सदसत्वाभ्यामनिर्वचनीयत्वम् ॥ **असत्यत्वं** ॥ सन्मात्रभिन्नत्वं ॥ इदं तन्मतमेवानुसृत्योक्तम् ॥ वस्तुतस्त्वसत्यंमिथ्येत्यनर्थांतरम् ॥ **त्रैकालिकनिषेधप्रतियोगित्वमिति** ॥ मिथ्यालक्षणमद्वैतसिद्ध्यादिषुस्पष्टं ॥ **स्वाश्रयत्वेनेत्यादि** ॥ इदंमपिलक्षणंचित्सुखेन ( परिच्छेद१कारिका११ ) सर्वेषामपिभावानांस्वाश्रयत्वेनसम्मते ॥ प्रतियोगित्वमत्यन्ताभावंप्रतिमृषात्मतेतीति संगृहीतं ॥ तत्रैव "घटपटादीनांभावानांस्वाश्रयत्वेनाभिमतास्तंत्वादयोयेतन्निष्ठात्यन्ताभावप्रतियोगितैवतेषांमिथ्यात्वं नहितेषामन्यत्रसत्तासंभवति तत्रापिचेत्सानस्यात् तदागलेपादुकन्यायेनमृषात्वमेवपर्यवस्येत्" इतिव्याख्यातमपि ॥ **तत्रासत्वेनेति** ॥ प्रापंचिकघटादिषुप्रागुक्तलक्षणासत्वेन ॥ अविद्यादशायांतेषां सत्वांगीकारेवर्तमानकालिकप्रतिषेधाप्रतियोगित्वस्यापत्यास्वाश्रयभूताविद्यानिष्ठात्यन्ताभावाप्रतियोगित्वस्यापत्याच तेषुलक्षणासत्वमितिभावः ॥ **अंशिनइति** ॥ चित्सुखकृतप्रत्यक्तत्वप्रदीपिकायां प्रथमपरिच्छेदेप्रागुक्तामिमेयं ( १२ ) कारिका ॥ विवृताचतत्रैव "विमतंपटःएततन्तुनिष्ठात्यन्ताभावप्रतियोगीअवयवित्वात् पटान्तरवत् एवमेतद्गुणकर्मजात्यादयोऽपि एतत्तन्तुनिष्ठाभावप्रतियोगिनः तद्रूपत्वात् इतरतत्तद्रूपवदिति एवमादिप्रयोगास्सर्वत्रोहनीयाः" इति ॥ एवंचांशिनः पटादयः स्वांशाःतंत्वादयः एततन्तुषुपटोनास्तीति प्रतीतिसाक्षिकात्यन्ताभावस्यपटादयः प्रतियोगिनइत्यर्थः ॥ अविद्यादशायांसत्वांगीकारेतद्विरोधःस्पष्टएव ॥ एतदनुरोधेनप्रतीतिकालेपिपदार्थात्यन्ताभावस्वीकारेतुसाधर्म्यंगलेपादुकावदापतितं॥वस्तुतस्तुतवतूलाविद्याकार्यस्यस्वप्नादेस्तन्निवृत्यानिर्वृत्तिर्मूलाविद्याकार्यस्य प्रपंचस्य च तन्निवृत्यानिवृत्तिरिति स्वप्नादिजाग्रत्प्रपंचयोः स्वसाक्षात्कारणाविद्यास्थित्यधीनस्थितिकत्वेनतन्निवृत्तिनिवर्त्यत्वेनचसाधर्म्यमबाधमतःसुस्थः सूत्रविरोधः यत्किञ्चिद्वैधर्म्यं तुसर्वथासजायतांयेऽवपि घटादिषुप्रतिव्यक्ति शक्यंवक्तुमिति किन्तेन ॥ **नामांतरस्येति** ॥ घटःकुंभइत्यादिपर्यायरूपस्य ॥ नहि घटात्कुंभोभिन्नोभवति ॥ **निषेधेनेति** सूत्रकृतानिषेधेन ॥ **अनुद्धारादिति** ॥ त्वन्मतइतिशेषः ॥ **अहंतादेरिति** ॥ इदमत्रत्वद्दयम् ॥ सहस्राक्षे अहंतादेरपि प्रपंचत्वमस्मत्संमतमिव दर्शयित्वासूत्रविरोधोदत्तः ॥ वयं तु मिथ्यापदार्थानां प्रपंचत्वमेव न वदामः ॥ नहि जाग्रदवस्थायामनुभवमात्रेण प्रपंचत्वं शक्यं वक्तुम् ॥ शुक्तिरजतगंधर्वनगरैंद्रजालिकादिषु तत्प्रसंगात् ॥ नचेष्टापत्तिः ॥ सूत्र आदिपदेन परिगृहीतेभ्यस्तेभ्योपि वैधर्म्यस्य प्रपंचे बोधनात् ॥ तेषांप्रपंचांतःपातित्वे तदनुपपत्तेः ॥ आदिपदेन तेषां संग्रहस्तु त-

वापि संमतः ॥ शंकराचार्यैः " एवंमायादिष्वपियथायथंबाधः " इति व्याख्यानात् ॥ अतः शुक्तिरजतादिवत्संसारप्रभामल्लीलादेरपि सूत्रआदिपदेन संग्रहः ॥ मिथ्यात्वाविशेषात् ॥ तेन संसारादिवैधर्म्यमपि प्रपंचेऽभीष्टमेवास्माकं ॥ अतोन सूत्रविरोधः ॥ नापि सूत्रासंगतिः अहंतादौ स्वमसाधर्म्यस्येष्टत्वात् ॥ एतेनैव ( अहंतादिषु व्यभिचारेण सूत्रासंगतिश्चे ) त्यादितदुक्तिरपास्तेत्याहुः ॥ नक्कोपीति ॥ पद्ममादधातीति ॥ असन्मते चरणमादधाति ॥ लेशतोपि नापद्यतइत्यर्थः ॥ अन्यथेति ॥ जाग्रदवस्थायामनुभूयमानानां शुक्तिरजतसंसारादीनांप्रपंचत्वं स्वीकृत्य अत्रापरिग्रहे ॥ सूत्रस्थचकारपरिगृहीतंतस्य मोक्षे प्रवृत्तिव्याघातइत्यर्थं समर्थयितुमाहुः ॥ किंचंप्रपंचस्येत्यादि ॥ मतद्वयेऽपि बाह्यप्रपंचस्य मिथ्यात्वाद्विज्ञानवादिनोमायावादिनश्च मोक्षसाधनेषु प्रवृत्तिर्न स्यात् ॥ प्रवृत्तेर्गुरुशास्त्रादिबाह्यार्थतंत्रत्वात् ॥ बाह्यार्थानां चासत्वादितिभावः ॥

एवं च सर्वप्रपंचःकारणात्मना सत्यएवेतिसिद्धम् ॥ किंच अस्तिभातिप्रियंरूपंनामचेत्यंशपंचकंआद्यत्रयंब्रह्मरूपंमायारूपंद्वयंपरमिति यन्नामरूपयोर्मायिकत्वमुक्तं तदसंगतं ॥ अस्तिभातिप्रियरूपाणां ब्रह्मत्वेन कथितानामपि मायिकत्वापत्तेः ॥ नामरूपयोर्यथा कल्पितसामानाधिकरण्येन प्रतीतिः घटादिसत्वे सत्वं तदभावेऽभावस्तथैवास्तिभात्यादीनामपि सामानाधिकरण्येन भानात्तेषां मायिकत्वं नास्तीति वक्तुमशक्यत्वात् ॥ नच तेषां ब्रह्मस्वरूपत्वान्नमायिकत्वमिति वाच्यं ॥ " तदात्मानँस्वयमकुरुत॥बहुस्यांप्रजायेय नामरूपेव्याकरवाणी" त्यादिश्रुत्यानामरूपयोरपि ब्रह्मस्वरूपत्वात् तस्मादस्तिभातिप्रियंरूपंनामचेत्यंशपंचकमित्याद्यसंगतमेव ॥ नामरूपयोर्मायिकत्वे प्रमाणाभावात् ॥ पंचानामपि ब्रह्मरूपत्वात् ॥ "नामरूपाद्विमुक्त" इत्यादिश्रुतिस्तु विदुषोब्रह्मणि लयावस्थायां पृथङ्नामरूपाभावं प्रतिपादयति नतु नामरूपयोर्मिथ्यात्वम् ॥

## टीका

सहस्राक्षे एवंचेत्यादि श्रुतिः संगतेत्यंतं भागं दूषयंति ॥ एवंचसर्वइत्यादिना ॥ नतुनामरूपयोर्मिथ्यात्वमित्यंतेन ॥ सत्यएवेतिसिद्धमिति ॥ " एतदात्म्य-मिदं ५ सर्वंतत्सत्यं " इत्यादिश्रुतिभिः (अ०२ पा०१सू० १६) " सत्त्वाच्चावरस्य " (सू० १८) " युक्तेः शब्दांतराच्च " इत्यादिसूत्रैश्च सिद्धं ॥ यदि सूत्रकारो-ऽस्य मायामात्रतामभिप्रैष्यत्तर्हि मायामात्रं त्वित्यनेन संध्यसृष्टेरिव अस्यापि त-थात्वं स्पष्टमेवाऽसाधयिष्यत् ॥ साधयति तु अस्य तदनन्यत्वं सत्त्वं असद्व्यपदे-शस्य चाव्याकृतत्वपरत्वं स्वमसृष्टेरेव च मायामात्रत्वं ॥ अतः सत्कार्यवादएव सू-त्रकाराभिप्रेतः ॥ अत्र " असदकरणादुपादानग्रहणात्सर्वसंभवाभावाच्छक्तस्य श-क्यकरणात्कारणभावाच्च सत्कार्यं " इत्यादयः सांख्याद्युक्तायुक्तयोऽप्यनुसंधेयाः किंचास्तिभातीत्यादि ॥ अयंभावः॥ यत्तु (एतयोर्मायारूपत्वस्य दर्शितत्वा) दि-त्युक्तं तत्तु पूर्वंनामरूपयोर्मायिकत्वस्य क्वापितेनोपपादनस्यादर्शनात्तुच्छम् ॥ किंच तयोर्मायिकत्वं युक्तिसिद्धमित्युच्यते श्रुतिसिद्धमिति वा ॥ नाद्यः या या युक्तिर्घटनि-ष्ठनामरूपयोस्तथात्वसाधिकोच्येत सा सा तन्निष्ठास्तित्वादीनामपि तथात्वं साधयेदे-वेति "आद्यंत्रयंब्रह्मरूपं" इत्यभ्युपगमविरोधः ॥ तयोरप्यस्तित्वादिकं प्रतीयतइति तयोरप्यंशत्रयं सत्यमंशद्वयं मिथ्यैतिस्वीकारेऽनवस्था ॥ "नामैवैनंनजहाति ॥ यदेज-तिजगतियच्चचेष्टतिनाम्नोभागोऽयं" इत्यादिकंश्रौतमानमप्यत्रानुसंधेयम् ॥ युक्त्यनु-कूलत्वात् युधिष्ठिरादिनामभिरद्यापि व्यवहारात् ॥ सर्वथामिथ्यात्वे तन्नामोच्चारण-पूर्वकश्राद्धादिव्यवहारोच्छेदप्रसंगाच्च ॥ न द्वितीयः ॥ तयोः सत्यतायाएव श्रुति-सिद्धत्वात् ॥ बृहदारण्यके तृतीयाध्यायेऽत्यब्राह्मणे " त्रयंवाइदंनामरूपकर्मते-षांनाम्नांवागित्येतदेषामुक्थमतोहिसर्वाणिनामान्युत्तिष्ठंत्येतदेषा ५ सामैतद्धिसर्वैर्ना-

---

## सहस्राक्ष.

एवंच सर्वंनामरूपात्मकंजगन्मायिकमितिसिद्धम् ॥ एतेन अस्तिभातिप्रियंरूपंनामचेत्यं-शपञ्चकम् ॥ आद्यंत्रयंब्रह्मरूपंमायारूपंद्वयंपरमिति यन्नामरूपयोर्मायिकत्वमुक्तं तदसहमाने न जगद्रूपं द्वयं परमिति पाठस्य कथंचित्स्वसंमतत्वप्रतिपादनायनामरूपविभेदेनजगत्क्रीडतियो-थतइति स्वगुरुसंमतिमुपन्यस्येश्वरस्य नामरूपयोः प्रकाशकत्वे कर्तृत्वान्नामरूपयोरीश्वररूपत्वं यदुक्तं तदपि निरस्तम् ॥ एतयोर्मायारूपत्वस्य दर्शितत्वात् ॥ अन्यथा पञ्चानामपि ब्रह्मरू-पत्वेन त्रयाणां विशिष्य तद्रूपत्वकथनं न संगच्छेत ॥ अतएव विद्वान्नामरूपाद्विमुक्तइ तिश्रुतिः संगता ॥

मभिः सममेतदेषांब्रह्मैतद्धिसर्वाणिनामानिबिभर्त्ति ॥ अथरूपाणांचक्षुरित्येतदेषामु क्थमतोहिसर्वाणिरूपाण्युत्तिष्ठंत्येतदेषा ९ सामैतद्धिसर्वैरूपैःसममेतदेषांब्रह्मैतद्धिसर्वाणिरूपाणिबिभर्त्ति ॥ अथकर्मणामात्मेत्येतदेषामुक्थमतोहिसर्वाणिकर्माण्युत्तिष्ठंत्येतदेषा ९ सामैतद्धिसर्वैःकर्मभिःसममेतदेषां ब्रह्मैतद्धिसर्वाणिकर्माणिबिभर्त्ति ॥ तदेतत्त्रयं सदेकमयमात्मात्मोएकः सन्नेतत्त्रयं तदेतदमृतं सत्येनच्छन्नं प्राणोवाअमृतं नामरूपेसत्यंताभ्यामयंप्राणश्छन्नः" इति श्रूयते ॥ अर्थस्तुतत्रैवाध्याये चतुर्थब्राह्मणेपूर्वं "आत्मैवेद मग्रआसीत्" इति सर्वस्यात्मरूपत्वं प्रतिज्ञाय अग्रे सृष्टेः पूर्वमव्याकृतस्य जगतोनामरूपाभ्यां व्याकरणमुक्तं तदेतत्प्रपंचयितुमिदमुच्यते ॥ तत्र इदं परिदृश्यमानं वै निश्चयेन त्रयमेव किं तत् त्रयं तदाह नाम रूपं कर्म इति॥ तेषां नामादीनां मध्ये नाम्नां व्याकृतानां घटपटादिशब्दानां वागित्येतत् वागिंद्रियं समष्टिरूपा भगवतोवाग्वा एषां उक्थमुपादानकारणं हि यतः अतोवाचः सकाशादेव सर्वाणि नामानि उत्तिष्ठंति अनुभवयोग्यानि भवंति ॥ एतत् वागित्येतत् एषां विशेषभूतानां नाम्नां साम समत्वात्सर्वेषां सामान्यं ॥ तदेव विवृणोति ॥ हि यतः एतत् सर्वैर्नामभिः समं मृदिव घटादिभिः ॥ एतत् एषां नाम्नां ब्रह्म आधारभूतं ॥ तदेवाह एतत् हि यतः सर्वाणि नामानि बिभर्ति धारयति पुष्णाति च ॥ अथ रूपाणां रोहितपीतादीनां व्याकृतानां चक्षुरित्येतत् चक्षुरिंद्रियं तत्समष्टिभूतं त्वष्ट्राख्यं भगवच्चक्षुर्वा उक्थं उपादानकारणं इत्यादिपूर्ववत् ॥ "त्वष्टारश्रूपाणिविकुर्वंतं विपश्चिं ॥ त्वष्टारूपाणामधिपतिः" इत्यादिश्रुत्यंतरात् ॥ अथ कर्मणां नानाचेष्टारूपाणां आत्मेत्येतत् शरीरं समष्टिभूतं विराड्रूपंवा ॥ उक्थं उपादानकारणमित्यादिपूर्ववत् ॥ तदेतत् पूर्वोक्तं नामरूपं कर्मेति त्रयं त्रिधादृश्यमानं सत् एकं ब्रह्मरूपत्वात् घटकुंडिकाशरावामृदिव ॥ तदेवाह ॥ अयमात्मेति ॥ नामरूपकर्मण्यात्मा ब्रह्मैव ॥ आत्मशब्दः परब्रह्मपरः ॥ एतेन "आत्मैवेदमग्रआसीत्" इति दृढीकृतं ॥ ननु वागाद्युपादानकानामेषां कथमात्मत्वमतआह ॥ आत्मा उ एकः सन् पूर्वोक्तरमणेच्छया एतत्त्रयं वागादित्रयरूपोपिसएव ॥ प्रगृह्यत्वान्नसंधिः ॥ त्रिधाकरणस्य फलमाह ॥ तदेतदमृतंसत्येनछन्नं ॥ अमृतं अखंडमानंदरूपं स्वस्वरूपं सत्येन अमिथ्याभूतेन कार्येणाच्छादितं ॥ तदेतत्स्फुटीकरोति ॥ "प्राणोवाअमृतं नामरूपे सत्यं" इतिप्राणः सर्वक्रियाशक्तिः सर्वजीवनहेतुः परमात्मा अनुगमाद्यधिकरणेबोधितः ॥ ताभ्यामयं प्राणश्छन्नः ॥ ताभ्यां व्याकृताभ्यां नामरूपाभ्यां अयं प्राणः परमात्मा निहितः ॥ सर्वनामासर्वरूपः सर्वात्मकः सन्नपि क्रीडेच्छया तत्तद्रूपे तत्तन्नाम नियमनाद्रूपाणां नाम्नां च भेदादिदानीं परस्परानतिप्रसक्तपरिच्छिन्नतत्तन्नामरूपाः पृथक्पृथक्पदार्था इवानुभूयंते न तु सर्वरूपः परमात्मा ॥

अतः स्वव्याकृतसत्यनामरूपाभ्यामेवायं पिहितः ॥ अतएव नानाव्यवहाराः ॥ एत-देव तद्याकरणस्य फलं ॥ व्याकरणप्रकारस्तूच्यते ॥ तत्र वस्तुतः स्वाभाविकसर्वा-कारसर्वरूपः सः ॥ "यदेकमव्यक्तमनं तरूपं विश्वं पुराणं तमसः परस्तात् ॥ विश्व-तश्चक्षुरुतविश्वतोमुखः ॥ सहस्रशीर्षापुरुषः ॥ समोमशकेन समोनागेन ॥ सर्वतः पा-णिपादांतं" इत्यादिश्रुतिस्मृतिभ्यः ॥ क्वचिद्रूपस्य निषेधस्तु लोकइव व्याकरणात्प-रिच्छिन्नमात्रस्यैव "नसंदृशेतिष्ठतिरूपमस्ये" तिबृहन्नारायणश्रुतेः ॥ अतएव अनंत-रूपस्य तमसः परस्तादिति प्रकृतितः परत्वमुक्तं ॥ अधिकं च साकारवादे वक्ष्यते एवं नामानि सर्वाण्यपि तस्यैव वाचकानि ॥ "ॐमित्येतदक्षरमिदंसर्वं तस्योपव्या-ख्यानं नामानिसर्वाणियमाविशंति" इत्यादि श्रुतिभ्यः ॥ सर्वेषां तदधीनत्वात्तत्तच्छ-ब्दाभिधेयता ॥ अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिरित्यादि महाकौर्मादि स्मृतिभ्यश्च ॥ "अनामाऽगोत्रः" इत्यादौ क्वचिन्निषेधस्तु लोकइव व्याकृतस्य परिच्छिन्नमात्रस्य नाम्नएव गोत्रादिसाहचर्यात् ॥ एवं "स सर्वनामास च सर्व-रूपः" इत्यादीनि श्रीभागवतवाक्यान्यप्यनुसंधेयानि ॥ नमोस्त्वनंताय सहस्रमू-र्तये सहस्रनाम्ने पुरुषायशाश्वते इत्यादीनिच ॥ अत्र सहस्रशब्दो ऽसंख्यपरः एवं स्वयमेव वस्तुतः सर्वरूपः सर्वनामा सन्नपि यदा क्रीडार्थमात्मनइ दं जगत्सिसृक्षति तदा नामरूपविभागमंतरा घटोऽयं पटोऽयमित्यादिनानाव्यवहा-राणामसंभवात् ॥ सदंशादाविष्कृतपंचमहाभूतांशेभ्यस्तत्तदेकैकं स्वीयं रूपं पृथक्पृ-थगाविष्कृत्य तत्र तत्रत्वनामसमुदायात्तत्तन्नामानि वेदाख्यस्वस्वरूपानुरोधेन नि-यमयति ॥ अतएवेदानीं नामरूपयोः परिच्छेदोदृश्यते ॥ कंबुग्रीवादिमदेव घटस्य रूपं घटः कलशइत्यादीनि परिगणितान्येव नामानि इति ॥ इदमेव नामरूपयो-र्व्याकरणं ॥ अतएव च श्वेतकेतुविद्यायां "सेयंदेवतैक्षत" इत्यादिना "नामरूपेव्याकरवाणि" इतीच्छा ततः "नामरूपेव्याकरोत्" इतिव्याकरणं चाम्नायते ॥ यदि नामरूपे विवर्तात्मके स्याताम् तर्ह्यभ्रांतस्येश्वरस्येक्ष-णगोचरौ न भवेताम् नचात्र "अनेनजीवेनात्मनानुप्रविश्ये" तिश्रवणान्नाम-रूपेजीवकल्पिते एवेतिशंक्यं इमामेवाशंकामपाकर्तुंप्रवृत्ते ( अ०२ पा०४ सू०२० ) "संज्ञामूर्तिक्लृप्तिस्तुत्रिवृत्कुर्वतउपदेशात्" इत्यधिकरणेपरमात्मनैवतेव्याकृते इति सूत्रकृताव्यवस्थापनात् सूत्रार्थस्तुसंज्ञामूर्त्योः नामरूपयोः क्लृप्तिः निर्माणंत्रिवृत्कुर्व-तः तेजोबन्नानिप्रविश्यैकैकमितरसंगतंकुर्वतः परमात्मनएव ॥ नतुजीवस्यत्रिवृत्कर णात्पूर्वं शरीराद्यनिष्पत्यातत्प्रवृत्तेरेवायोगादित्याशयः॥ कुतएतत् उपदेशात् उपसमी-पेतस्मिन्नेववाक्ये त्रिवृत्करणस्यनिरूपणादितिज्ञेयः ॥ तुर्जीवकर्तृकत्वशंकानिरासा-र्थः ॥ भवद्भाष्येपीदं सूत्रमेवंपरमेव ॥ यदितुनामरूपेजीवाविद्याकल्पितेअभविष्य-तांनतर्हिसूत्रकार एवंव्यवस्थापयिष्यत् ॥ अतोनतयोर्मिथ्यात्वंश्रुत्यादिसम्मत ॥

व्याकरणमकारश्च बृहदारण्यके तृतीयेऽध्याये पुरुषविधब्राह्मणाख्ये चतुर्थब्राह्मणे ( खंड ७ ) " तद्धेदंतर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेवव्याक्रियतासौ नामायमिदंरूपइति तदिदमप्येतर्हिनामरूपाभ्यामेवव्याक्रियतेऽसौनामायमिदंरूपइतिसएषइहप्रविष्टः " इत्यादिषु श्रूयते ॥ एवं छांदोग्यबृहदारण्यकादिषु नामरूपव्याकरणं सृष्ट्यारंभे परमात्मनैव कृतमिति स्पष्टतया श्रावणादनन्यगतिलभ्यं तु तयोः परमात्मेक्षणगोचरत्वं तदा वस्त्वंतराभावात्परमात्माभिन्नत्वं सर्वेषां तेषां स्वभावतस्तदीयत्वं च ननु यदिनामरूपे न जीवकल्पिते किंत्वीश्वरेणैवस्वीयेतत्तद्रूपेतानि तानिनामानि स्वरूपवेदानुसारात्संकेतितानि तर्हिजीवानां कथंतत्संकेतग्रहइति चे न् ॥ परमात्मनः सकाशात्प्रथमोत्पन्नेनब्रह्मणासंकेतोगृहीतस्ततोऽन्यैःपरंपरयेति जानीहि ॥ जीवकल्पितत्वेतु तेषामनेकत्वादेकेनयस्मिन् रूपेगजइतिसंकेत्येततस्मिन्नेवजीवांतरेणाश्वइतीनिमहत्येवाव्यवस्थास्यात् ॥ जीवैकत्वेतु बंधमोक्षादिव्यवस्थाभंगः ॥ कल्पितत्वपक्षे संकेतग्राहकपरंपरादिकिंचनापेक्ष्येत भ्रमेवृध्धोपदेशापेक्षाभावात् ॥ संस्कारजनकयोः प्रतीयमानातिरिक्तसत्यनामरूपयोर्ब्रह्मणि तत्सादृश्यस्य च स्वन्मतेव कुमशक्यत्वादपि न कल्पनोपपत्तिरितिदिक् ॥ परमेश्वरः स्वयंव्याकृत्य ब्रह्माणं संकेतं ग्राहितवानित्यत्र मानंतु पुरुषसूक्ते " वेदाह मेतं पुरुषंमहांतं ॥ आदि त्यवर्णं तमसस्तुपारे । सर्वा रूपाणिविचित्यधीरः । नामानि कृत्वाभिवदन्यदाऽऽस्ते । धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान् प्रदिशश्चतस्रः " अर्थस्तु ॥ अहंब्रह्मा एतंपूर्वोक्तं महांतं पूज्यंव्यापकंच पुरुषंपरमेश्वरं वेदजानामि ॥ कीदृशं आदित्यवर्णंनिरतिशयप्रकाशस्वभावं ॥ ननु वेद्यत्वात्सधर्मकत्वाच्च प्रकृत्यवच्छिन्नः स्यादितिशंकानिरासार्थमाह ॥ तमसस्तुपारे ॥ तुः शंकानिरासे ॥ प्रकृतेः परतोवर्तमानं ॥ तादृशस्य वेदनेकारणमाह ॥ सर्वाणीति ॥ यत् यस्मात् यः परमात्मेतिवा सर्वाणिरूपाणिविचित्य सृष्टिकाले पृथक्कृत्य धीरोऽनुद्विग्नः पूर्वसर्गानुसंधायीतियावत् ॥ तेषांनामानिकृत्वा संकेत्य अभिवदन् मां सर्वतः शिक्षयन् आस्ते ॥ तस्मात्तंवा अहंवेदेत्यन्वयः ॥ तेनस्वेच्छयैवमज्ज्ञानगोचरःसोभूदितिभावः ॥ एवं धाताब्रह्मा पुरस्तात्सृष्ट्यारंभकाले यंनामरूपव्याकर्तारंपरमात्मानं उदाजहार ॥ तत्रशक्रः ग्रहणशक्तिमान् इंद्रः प्रविद्वान् श्रोता प्रदिशः आधिदैविक्योदिग्देवताश्चतस्रश्चश्रोत्र्यः ॥ इति ॥ अत्रापि तमसःपारे वर्तमानस्य रूपनामविभाजकत्वकथने तयोर्मायिकत्वशंका निराकृता ॥ एवं ब्रह्मणएवनामरूपप्रादुर्भावः प्रथममुंडकाद्यखंडेश्रूयते " तस्मादेतद्ब्रह्मनामरूपमन्नंचजायते " इति ॥ एवं नामरूपयोः सत्यत्वादेव तर्कपादे ( सू. ५ ) " औत्पत्तिकस्तु शब्दस्यार्थेन संबंधोऽव्यतिरेकश्चार्थेनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् " इत्यधिकरणे जैमिनिना शब्दार्थसंबंधस्यनित्यत्वं निर्णीतं॥ महाभाष्यकृता च पस्पशाह्निके " सिद्धेशब्दार्थसंबंधे " इतिवार्तिके " सिद्धेशब्दे

अर्थेसंबंधेचेति " इत्यादि विवृण्वता सिद्धशब्दस्य नित्यपर्यायतां च दर्शयता ना-मार्थतत्संबंधानां त्रयाणामपि नित्यत्वं स्वीकृतम् ॥ शब्दानामपि नित्यत्वं तत्रैव जैमिनिना ( सू. ६ ) " कर्मैकेतत्रदर्शनात " इत्यादिषट्सूत्र्याक्षिप्य ( सू. १२ ) " समंतुतत्रदर्शनम् " इत्यादिभिः " लिंगदर्शनाच्चे " त्यंतैर्द्वादशभिः सूत्रैर्युक्तीः " वा-चाऽविरूपनित्यया " इत्यादिप्रमाणं चाश्रित्य सम्यक्समर्थितम् ॥ उत्तरतंत्रेपि ( अ. १ पा. ३ सू २८ ) " शब्दइतिचेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्यां " इत्यादा-वेतत्सुष्टु प्रपंचितं ॥ तेन प्रचोदितायेनपुरासरस्वतीवितन्वताऽजस्यसतींस्मृतिंहृदि ॥ स्वलक्षणाप्रादुरभूत्किलास्यत इतिवेदरूपशब्दस्य ब्रह्माभिन्नत्वबोधकानि श्री-भागवतादिवाक्यानि ( अंश. १ अ. २२ ) काव्यालापाश्रये के चिद्गीतकान्य-खिलानिच ॥ शब्दमूर्तिधरस्यैतेविष्णोरंशामहात्मनइत्यादीनि लौकिकशब्दाना-मपि तद्रूपत्वप्रतिपादकानि विष्णुपुराणप्रथमांशादिवचनानि चानुकूलानि ॥ रूपनित्यत्वं चाधिकं साधयिष्यते ॥ एवं नाम्नः अमायिकत्वान्नित्यत्वाद्भग-वद्रूपत्वादेव नारायणप्रपाठके " यदेजतिजगतियच्चचेष्टतिनाम्नोभागोऽयं नाम्ने-स्वाहा " इति श्रूयते ॥ तस्मान्नामरूपयोर्मायिकत्वकल्पनं नामरूपे सत्यमिति पूर्वोक्तादिश्रुतिशतबाधितमेव ॥ यच्च ( पंचानामपि ब्रह्मरूपत्वेने ) त्यादि तदकिं-चित्करम् ॥ अस्माकं तद्वचनस्वीकारे निर्बधाभावात् ॥ जगद्रूपेण परिणतस्य स-च्चिदानंदरूपस्यैवास्तिभातिप्रियात्मनाप्रतीतिर्नामरूपयोस्तु परिच्छेदमात्रेण कार्य-त्वमिति त्रयाणां विशिष्य तद्रूपत्वकथनस्यापि कथंचित्संभवाच्च ॥ याऽपि " वि-द्वान्नामरूपाद्विमुक्तः " इति श्रुतिर्दर्शिता । साऽपि न तयोर्मिथ्यात्वदर्शिका ॥ इदं हि वाक्यं तृतीयमुंडके द्वितीयखंडे पठ्यते " यथानद्यः स्यंदमानाः समुद्रेऽस्तं-गच्छंतिनामरूपेविहाय ॥ तथाविद्वान्नामरूपाद्विमुक्तः परात्परंपुरुषमुपैतिदिव्यम् " इति ॥ अत्रोक्तरीतिकव्याकरणदशापरिछिन्नादमुक्तदशायां स्वदेहमात्रनियतात् ना-मरूपाद् विमुक्तइति तत्रार्थः अतएव नामरूपादित्येकवचनं ॥ नामविशेषविशिष्टा-द्रूपाच्छरीरादिति वा ॥ समुद्रेप्रविष्टायानद्यानहि रूपं नश्यति ॥ किंतु समुद्रएवांत-र्भवति आधारस्य तत्रैवास्तंगतत्वात् ॥ अंतर्भूतत्वादेव पृथक्रूपानुपलब्ध्यातेन नाम्ना तदा व्यवहारः ॥ किंतु समुद्रइत्येव सः ॥ एवमत्रापि ब्रह्मभूतस्य स्वदेहमात्र नियतपरिच्छिन्ननामरूपत्यागात्सर्वरूपत्वं सर्वनामत्वं च सिध्यति ॥ अतएव तत्र " निरंजनः परमंसाम्यमुपैति " इति पूर्वमुक्तं ॥ नत्वनया श्रुत्या तयोर्मिथ्यात्वं बो-ध्यते॥ मिथ्यात्वे ततोविमुक्तिरपि न वक्तुं युक्ता ॥ नहि शशशृंगाद्गंधर्वनगराद्वा कोऽपि मुच्यते ॥

यत्तु ( अत्रहेश्यतावच्छेदककालावच्छिन्नत्वस्यौत्सर्गिकस्य वि-

विधेये भाननिर्वाहाय ज्ञानसमकालमेव मुक्ति ) रित्युक्तं तन्न साधीयः ॥ यथा द्रव्यं गुणवदित्यादौ द्रव्यत्वसमकालिकत्वं गुणे भासते तथाऽत्र भानासंभवात् ॥ तथाहि ज्ञानपदेन ब्रह्मात्मकं ज्ञानं विवक्षितमखंडाकारवृत्तिरूपं वा ॥ नाद्यः तादृशज्ञानस्याधुनापि सत्वेन मुक्तेश्चासत्वेन ज्ञानसमकालत्वस्य मुक्तावसंभवात् ॥ तादृशज्ञानस्य नित्यत्वाच्छ्रवणाद्यसाध्यत्वेन तदर्थं प्रवृत्त्यनुपपत्तेश्च ॥ न द्वितीयः अखंडाकारवृत्तेः स्वल्पकालावस्थायित्वेन मुक्तेश्च स्वरूपावाप्तिरूपाया नित्यत्वेन ज्ञानोत्तरयावत्कालावस्थायित्वेन वा तत्समकालत्वासंभवात्किंच ज्ञानसमकालमेव मोक्षस्वीकारे जीवन्मुक्त्यभावः स्यात् अज्ञानस्य ज्ञानेन नाशे उपादाननाशाद्देहादीनामपि नाशात् नचापरोक्षज्ञानकल्पपरोक्षज्ञानवत्येव जीवन्मुक्तिव्यवहारइति वाच्यं तत्प्रतिपादकश्रुत्याद्यभावेन तादृशज्ञानसत्वे प्रमाणाभावात् अपरोक्षकल्पमित्यनेनापरोक्षन्यूनत्वविवक्षणे शास्त्राच्छाब्दज्ञानवतामपि तादृशज्ञानसत्वेन जीवन्मुक्तिप्रसंगः एतेनाज्ञानसंबंधिन्याआवरणशक्तेरेव विद्ययाविरोधइत्यादिकमप्यपास्तं ज्ञानस्याज्ञानविरोधित्वेन तन्नाशे तदीयशक्तेः सत्वस्य वक्तुमशक्यत्वात् नहि वन्हिनाशे वन्हिशक्तिरस्तीति कस्यापि संमतं वस्तुतस्तु पारिभाषिकतादृशाज्ञानएव मानाभावेन तस्यशक्तिद्वयकल्पनं तेन जीवन्मुक्तिव्यवस्थापनं च दूरापास्तं ॥ त्वदुक्तपक्षाणां "तस्यतावदेवचिरंयावन्नविमोक्ष्येऽथसंपत्स्ये ॥ अनारब्धकार्य्येएवतुपूर्वेतदवधेः ॥ भोगेनत्वितरेक्षपयित्वासंपद्यतेइत्यादिश्रुतिसूत्राभ्यामप्रतीतेः इत्यादिश्रुति-

सूत्रादिसिद्धा ) इतिकथनमसगतं ॥ नहि तादृशश्रुतौ विक्षेपा-
वरणयोः प्रतिपादकं पदमस्ति येन तादृशश्रुतिसिद्धत्वं तस्य
स्यात् ॥ सूत्रयोस्त्वयमर्थः ॥ ननु देहस्य कर्मजन्यत्वात्तन्नाशे
तन्नाशस्यावश्यकत्वाद्ब्रह्मविदः प्रवचनानुपपत्तिरेवंसति ब्रह्म-
जिज्ञासोर्गुरूपसत्त्यादिसाधनासंभव "आचार्य्यवान्पुरुषोवेद"
तिश्रुतेस्तदभावेनज्ञानमार्गोच्छेदेन मुक्त्युच्छेदप्रसंगइत्याशंक्य
समाधत्ते॥ "अन्नारब्धकार्य्यैएवतुपूर्वेतदवधे"पूर्वे पूर्वसूत्राभ्यां-
ज्ञाननाश्यत्वेन ये प्रोक्ते पापपुण्येते नाशेषेकिंत्वनारब्धं भोगा-
यतनरूपं कार्य्यं याभ्यां ते एवेत्यर्थः ॥ नन्वितरनिरपेक्षं
ज्ञानं स्वशक्त्यैवाग्निरेधइव कर्म्माणि दहतीति पूर्वमुक्तं तथा
सत्यशेषमेव तद्दहतीति वक्तुं युक्तं ॥ नतुसशेषं शक्तेरविशिष्टत्वा-
त् ॥ नच कर्मनाशेऽपि संस्कारवशात्कुलालचक्रभ्रमिवत्तद्वा-
सनावशाद्देहादिसत्तया प्रवचनाद्युपपत्तिरिति वाच्यं ॥ ज्ञान
स्य सर्वतोबलवत्वात्सवासनस्य तस्य नाशनात् ॥ नहि म-
हाशिलानिपाते चक्रभ्रमिरनुवर्त्तितुंशक्नोतीत्याशंक्यारब्धका-
र्य्याऽदहने हेतुमाह ॥ तदवधेः ॥ तज्ज्ञानेनारब्धकार्य्यादहनं
यत् तदखिलकारणकारणत्वेनाखिलस्य पूर्वावधिरूपभगव-
दिच्छालक्षणाद्धेतोरित्यर्थः यत्र तस्यापि दहनेच्छा तत्र तथै-
वेति निगूढाशयः ॥ अतएवाग्रेतथावक्ष्यते ॥ "अतोन्यापिह्ये-
केषामुभयो" रितिसूत्रेण तस्यार्थस्तु एकेषां पुष्टिमार्गीयाणां
भक्तानामुभयोः प्रारब्धाप्रारब्धयोर्भोगं विनैव नाशोभवति ॥
कुतएतत्तत्राह ॥ अतःश्रुतेः कर्मणोज्ञाननाश्यत्वनिरूपिकाया
ब्रह्मविदएवप्रवचनादिनिरूपणेनतदनाश्यप्रारब्धाख्यकर्माक्षेपक

श्रुतेश्चान्यापि श्रुतिः पठ्यते ॥ "तस्यपुत्रादायमुपयंतिसुहृदः साधुकृत्यांद्विषंतःपापकृत्या"मिति ॥ ज्ञानभोगाभ्यां कर्मनाशनिरूपकश्रुत्यास्याःश्रुतेर्विरोधपरिहारायावश्यंविषयभेदोवाच्यः सच मर्यादापुष्टिभेदरूपएवेति ॥ मर्य्यादामार्गेतु मणिमंत्रादिप्रतिबद्धशक्तेरग्नेरिव ज्ञानस्याप्यदाहकत्वे न काचिद्धानिरिति सर्वमनवद्यं ॥ अतएव श्रीभागवते "मृगदारकाभासेनस्वारब्धकर्मणायोगारंभणतोविभ्रंशित" इति "उपभोगेनकर्मारब्धंव्यपनयन्नि"ति च भरतं प्रति वचनं गीयते इतिसंक्षेपः ॥ द्वितीयसूत्रं "भोगेनत्वितरेक्षपयित्वासंपद्यते इतिअस्यार्थः ॥ इतरे अथे प्राप्यालौकिकदेहाद्भिन्ने स्थूललिंगशरीरे क्षपयित्वा दूरीकृत्य अथ भगवल्लीलोपयोगिदेहप्राप्त्यनंतरं भोगेन संपद्यते "सोऽश्नुतेसर्वान्कामान्सह ब्रह्मणाविपश्चिते" तिश्रुत्युक्तेन भोगेन संपद्यतेइत्यर्थः ॥ श्रुत्यर्थस्त्वानंदमयाधिकरणे निरूपितः ॥ अलौकिकत्वं विनोक्तदेहं विनाचोक्तफलप्राप्तेर्व्यवच्छेदकस्तुशब्दः ॥ एवंच तादृशश्रुतिसूत्राभ्यामविद्यायास्तःच्छक्त्योरावरणविक्षेपरूपयोरप्रतीतेस्तदर्थाज्ञानमूलकएव (इत्यादिपक्षाश्रुतिसूत्रादिसिद्धा) इत्यादिकः प्रलापः ॥ यदपि यथा कश्चित् क्षत्रियादिरित्यादिदृष्टांतेन (ज्ञानिनोऽदृष्टाभावेपि स्वादृष्टैरेव जीवन्मुक्तशरीरस्थितिः शिष्यादिभिरेव कल्प्यते) त्याद्युक्तं तदपि दृष्टांतवैषम्यान्न संभवति क्षत्रियस्य काश्यां मरणं लोकैर्दृष्टं लोकांतरे च विमानादिवत्पत्यादिदेहोऽपि पत्यनुगमनफलप्रतिपादकैस्तत्तत्स्मृतिवाक्यैरभ्युपगंतव्यः ॥ अत्र तु गुरोर्मरणस्यादृष्टत्वाच्छि-

ष्यस्य तादृशफलोत्पादकादृष्टजनककर्मबोधकस्यन्याद्यभावा- द्वैषम्यं किंच गुरोः शिष्यादृष्टेनैव यदि शरीरादिकं स्या- त्तदा पत्न्या पुण्यक्षये पत्न्यादीनामिव शिष्यनाशे गुरोरपि नाशापत्तिः यदि च शिष्यकल्पितगुर्वादीनां नाशस्वीकारा- दिष्टापत्तिरित्युच्यते तदा दृष्टिसृष्टिवादएवाभ्युपगतः स च पूर्वमेव खण्डितइति काशीमृतस्यादृष्टाद्यभावे काशीमरणान्मु- क्तिरित्यादिका श्रुतिरेव प्रमाणं जीवन्मुक्तादृष्टाभावे तु न किमपि प्रमाणं प्रत्युत भवन्मतएव "तस्यतावदेवचिर" मि- त्यादिका प्रारब्धकर्मसत्त्वप्रतिपादिका श्रुतिर्विरुद्ध्यते तस्मा- दन्येत्वित्यादिकोग्रंथोसंगतएव अधिकं तूत्तरभागे षष्ठखंड- खंडनाभासखंडने वक्ष्यते ॥

## टीका

सहस्राक्षी अत्रचोद्देश्यतेत्यादि खंडनेवक्ष्यतइत्यंतं भागं परिहरंति । यत्त अत्रचो- द्देश्यतेत्यादिना ॥ खंडनेवक्ष्यतइत्यंतेन ॥ "तथाविद्वान्नामरूपाद्विमुक्तः" इ- त्यत्रविद्वानित्युद्दिश्य विमुक्तिर्विधेयाइति तस्याशयः । तत्रविद्वत्पदोक्तोद्देश्यतावच्छे- दकं ज्ञानम् ॥ तदेतद्विकल्प्य दूषितं ॥ तथाहीत्यादिना ॥ साधनानर्थक्याभावा- याहुः ॥ ज्ञानोत्तरेति ॥ वस्तुतस्तु तत्र ब्रह्मविदः अक्षरप्रवेशेन स्वदेहवर्तिप- रिच्छिन्ननामरूपाद्विमुक्तस्याक्षरपरदिव्यपुरुषोपायनमेव विधीयते ॥ नतु विमुक्त- पदं विधायकं वाक्यभेदप्रसंगात् ॥ देहादीनामपीति ॥ आदिशब्दात्प्राणेंद्रि- यांतःकरणानि ॥ अपिशब्दाज्जीवस्यापि नाशः ॥ तन्मतेहि अविद्यावच्छिन्नं अ- विद्यायां प्रतिबिंबितं वा चैतन्यं जीवः ॥ ज्ञानेन विद्यानाशे तन्नाशएव ॥ नहि घटनाशे घटाकाशपदार्थोदर्पणनाशे तदधिकरणकप्रतिबिंबो वाऽवतिष्ठते ॥ जीव- नाशे च देहादेः स्पंदनमपि न स्यात् अविद्यानाशे तदेकमूलकदेहादिकमपि न- श्येत ॥ तथाच जीवन्मुक्तिः सुतरां नोपपद्येत ॥ तत्प्रतिपादकेत्यादि ॥ श्रु- तिषु हि "ब्रह्मवेदब्रह्मैवभवति" इत्यवधारणपूर्वकंब्रह्मज्ञस्य सर्वथाब्रह्मभावउच्य- ते ॥ इदं ज्ञानमपरोक्षकल्पमपरोक्षंवा नाद्यः तेनैवसर्वथाब्रह्मभावेऽन्यस्य वैयर्थ्याप-

त्ते ॥ नद्वितीयः जीवन्मुक्ते तदभावेन तस्य ब्रह्मभावानुपपत्तेः ॥ तथाच वक्ष्यमाण-
श्रुतीनां ब्रह्मभूतः प्रसन्नात्मेत्यादिस्मृतीनां जडभरतादिषु साक्षाद्ब्रह्मभूतत्वं वदतां पु-
राणानां च विरोधः ॥ किंच "नतस्यदेवाश्चनाहूत्याईशते" इत्यादिकं जीवन्मुक्त-
परं परंमुक्तपरं वा नाद्यः तस्यापरोक्षज्ञानाभावेन ब्रह्मभावालब्ध्या "आत्माह्येषां स
सभवति" इति सर्वेषामात्मत्वस्यतत्रासंगतेः तद्विनाऽभूत्यभावस्या संभवात् ॥ नद्वि-
तीयः देवादिभिस्तस्यविघातानामसंभवेन निषेधवैयर्थ्यप्रसंगात् ॥ एवं स्मृतावपि
न शोचति न कांक्षतीत्यादिकं जीवन्मुक्तिलिंगं ॥ अतइदं जीवन्मुक्तपरमेव अतएव
तत्र वामदेवनामग्रहणं ॥ नच सर्वेषामनात्मन्यपि स्वस्मिन्सर्वात्मत्वग्रह एव शास्त्र-
दृष्टिरितिवाच्यं ॥ भ्रांतत्वेन मुक्तत्वानुपपत्तेः आवरणशक्तेरप्यापत्तेश्च ॥ एवं "तमे-
वं विद्वानमृतइह भवति" इत्यपि जीवन्मुक्तपरं इह पदस्वारस्यात् ॥ तद्वेदनस्याप-
रोक्षत्वाभावे नान्यः पंथाइत्यपरोक्षस्य मोक्षहेतुताप्रतिषेधप्रसंगः ॥ नापि जीवन्मुक्त-
स्यापरोक्षकल्पमेव ज्ञानमितिबोधिका काचिच्छ्रुतिःस्मृतिर्वाऽस्ति यद्बलात्तथाद्रियते ॥
किंच किंचेदमपरोक्षकल्पत्वं नाम ईषतन्न्यूनत्वमितिचेत् सांसारिकवदेव सर्वमपि
मायिकं जगत्पश्यतस्तद्वदेव कर्माणि लोकसंग्रहार्थमप्यनुतिष्ठतो गार्हस्थ्यव्यवहा-

---

## सहस्राक्ष.

अत्रचोदेश्यतावच्छेदककालावच्छिन्नत्वस्यौत्सर्गिकस्य विधेये भाननिर्वाहाय ज्ञानसमका-
लमेव मुक्तिरिति केचित् ॥ एतेन प्रपञ्चस्याऽज्ञानकार्यत्वे ज्ञानेनाऽज्ञाननाशे तत्कार्यस्य देहादे-
रस्थित्या जीवन्मुक्त्यनुपपत्तिरित्यपास्तम् ॥ अपरोक्षकल्पपरोक्षज्ञानवत्येव जीवन्मुक्तव्यवहार-
स्य शास्त्रीयस्योपपत्तेः ॥ अज्ञानसंबन्धिन्या आवरणशक्तेरेव विद्ययाविरोधः ॥ विक्षेपशक्तेस्तु
प्रारब्धनाशसहकृतया तया ॥ आवरणनाशाच्चजीवन्मुक्तइत्यादयोऽपिपक्षास्तस्यतावदेवचिरंया-
वन्नविमोक्ष्येऽथसंपत्स्ये अनारब्धकार्येएवतुपूर्वेतदवधेः भोगेनत्वितरेक्षपयित्वाऽथसंपद्यते इत्या-
दिश्रुतिसूत्रादिसिद्धाः सिद्धान्तलेशादिषु सोपपत्तिकादर्शितास्ते तु विस्तरदिदृक्षुभिस्ततएव द्रष्ट-
व्याः ॥ अन्येतु ज्ञानिनोऽदृष्टाभावेऽपि स्वादृष्टैरेव जीवन्मुक्तशरीरादिस्थितिः शिष्यादिभिरेवक-
ल्पिता यथाकश्चित्क्षत्रियादिः काश्यां मृतस्तत्पत्नीतु ग्रामान्तरे तत्पादुकादिकमादायाऽनुगमनं
कृतवती तत्र तस्यायथाशास्त्रं फलोपभोगार्थंस्वादृष्टेनैव पतिदेहादिकल्पना पत्युस्त्वदृष्टंनास्त्येव
मुक्तत्वात् अत्रहि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनाऽसावमृतीभूत्वा मोक्षी-
भवतीतिश्रुतेः ॥ एवंजीवन्मुक्ताऽदृष्टाऽभावेऽपि परेषामदृष्टैरेव तद्देहादिकल्पनेत्याहुः ॥ अधिकमुत्त-
रभागे षष्ठखण्डखण्डने वक्ष्यते ॥

रानपि सतिसम्भवे समाचरतस्तस्य ज्ञानमपरोक्षात्कथमीषदेव न्यूनं ॥ अतिन्यून-
मपीषन्न्यूनतया विवक्ष्यतइतिचेच्छास्त्रीयशाब्दज्ञानवत्यपि जीवन्मुक्ततामसंगः ॥
किंच ज्ञानस्याज्ञानविरुद्धत्वात्तन्निवर्तकत्वाच्च जीवन्मुक्तस्यापि ब्रह्मज्ञानं स्ववि-
रुद्धाज्ञानं निवर्तयेदेव ॥ नहि तेजस्युद्भूते तत्रैव तमः स्थातुमीष्टे ॥ अतएवाभियु-
क्तोक्तिः सामानाधिकरण्यं हितेजस्तिमिरयोः कुतइति ॥ नच तमसस्तेजोऽभाव-
रूपत्वादज्ञानस्य च भावरूपत्वांगीकारेण ज्ञानाभावरूपत्वाभावाद्दृष्टांतवैषम्यमिति-
शंक्यं व्यवहारे भट्टनयमेवानुसरद्भिः शंकराचार्यैस्तमसि द्रव्यांतरतायाएव स्वीकारे-
ण तद्वैषम्याभावात् ॥ नन्वपरोक्षमेव तन्निवर्तकं नत्वपरोक्षकल्पमिति न विरोध-
इतिचेन्न तत्र मानाभावस्योक्तत्वेन अपरोक्षकल्पस्य कल्पनासंभवात् ॥ किंच किं
तत्र तज्ज्ञाने साक्षादपरोक्षतासिद्धिप्रतिबंधकं येन तत्कल्पत्वं ॥ अविद्यैव तथेतिचे
त्तत्र तत्साहचर्यानुपपत्तिरुक्ता ॥ कंचित्कालं ब्रह्मज्ञानेन सहाविद्यायाः स्थित्यं-
गीकारे कदापि तत्साहचर्यं न निवर्तेत निवर्तकसाधनाभावात् ॥ जीवन्मुक्तस्यापि
साधनांगीकारे सुष्ठुसमर्थितं तस्य मुक्तत्वं ॥ किंच जीवन्मुक्त्यनंतरमपि कस्यचि-
दविद्याचिरकालं कस्यचिदल्पकालं च नियामकमंतरापि स्थित्वा ततः साधनंवि-
नैव स्वयं निवर्ततइत्यसंगततरं ॥ सद्भिरपि साधनैः संपूर्णैरप्यविद्यायाअनिवृत्त्या वि-
नैव तैरनियतकाले तन्निवृत्त्या च तेषामसाधनत्वापातात् श्रवणादेरपूर्वद्वारा फलजन-
कत्वस्यानंगीकारात्मुक्त्यासहा पूर्वस्थितेरशक्यवचनत्वाच्च ॥ नच प्रारब्धं तस्याब-
ह्वल्पकालस्थितिनियामकं कल्प्यंतस्याप्यविद्याकार्यत्वेनान्योन्याश्रयात् ॥ एतेन वि-
क्षेपशक्तिमात्रमवशिष्यतइत्यपि निरस्तं । अविद्यावश्यनाशकं ज्ञानं तत्कार्यप्रारब्धेन-
सह तद्विक्षेपशक्तिमपि तत्क्षणादेव नाशयेत् ॥ अन्यथा कदापि न नश्येतां ॥
आवरणशक्तिसहितं तिमिरं स्वावश्यनाश्यं नाशयन्प्रकाशस्तदुपादानककार्यांतरं
तच्छक्त्यंतरं वा नैवावशेषयति ॥ विवर्तरूपायाविक्षेपशक्तेः प्रारब्धस्य च ब्रह्म-
ज्ञानोत्तरं स्थितिर्न तव सुवचा रज्जुज्ञाने सर्पज्ञानस्येव ॥ वस्तुतस्तु त्वत्संमतपा-
रिभाषिकाज्ञानकल्पनमेव निर्मूलं । क्व तर्हि शक्तेस्तस्याः शक्त्यंतरद्वयादिसंभवः ॥
"तस्यतावदेवचिर" मितिवाक्यं तु छांदोग्येअष्टमे ( खंड १४ ) "यथासोम्यपु-
रुषं गंधारेभ्योऽभिनद्धाक्षमानीयतंततोऽतिजने विसृजेत्सयथा तत्रप्राङ्वा उदङ्वाऽध-
राङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षोविसृष्टः ॥ १ ॥ तस्ययथाभिनहनं-
प्रमुच्यप्रब्रूयादेतांदिशं गन्धारा एतां दिशं व्रजेतिसग्रामाद्ग्रामंपृच्छन्पंडितोमेधावी
गंधारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषोवेद तस्यतावदेवचिरंयावन्नविमोक्ष्येऽथ-
संपत्स्यइति" इति पठ्यते ॥ अत्र आचार्यवान्पुरुषइहवेदेतिइहशब्दस्वारस्याज्जी
वन्मुक्तिस्तवापि संमता ॥ साचाभिनहनस्थानीयाविद्यानाशादेवेति सिध्यति ॥
नत्वविद्यायाः शक्तिद्वयं तत्रावरणशक्तिमात्रनाशात्सेत्यादि ॥ अन्यथा तस्य ता-

वदेव चिरं यावद्विक्षेपशक्तिरित्येव वदेत् ॥ अतस्त्वदुक्तव्यवस्थायां नेयं श्रुतिः प्रमाणं ॥ किंतु प्रारब्धभोगायतननाशोत्तरं तस्य परमुक्त्यवश्यंभावमात्रे ॥ किंच "यावच्छरीरान्नविमोक्ष्यते तावदेवतस्यचिरं अथसंपत्स्यतएवे" ति तावकोपनिषद्भाष्यादिसंमतेऽर्थेपुरुषव्यत्ययाश्रयणम् इतिशब्दवैयर्थ्यं च ॥ गंधारपुरुषदृष्टांते च तदंशालाभादृष्टांतकथनोत्तरमनुपदमेवं कथनासंगतिश्च ॥ वस्तुतस्तु तस्य जीवन्मुक्तस्य तावदेव चिरं तावानेव विलंबः यावत् इति न भवति अहं संघाताद्विमोक्ष्ये यथा पुनर्नापद्येय तथा मोक्ष्ये अथ प्राकृतसंघातविमोचनानंतरं च ब्रह्मसंपत्स्ये ॥ यदैवमिच्छेत्तदैव परमुक्तिं लभेत इत्यक्लिष्टस्तदर्थः प्रतिभाति ॥ तादृशस्यलोकानुग्रहाद्यर्थं स्वेच्छातंत्रं शरीरधारणमिति भावः ॥ उत्तमपुरुषेतिशब्दावप्येमेवन पीड्येताम् ॥ अत्र चाचार्यवतोवेदनं ब्रह्मभावसंपादकमपरोक्षं गंधारसमीपसंपत्तिसमं एवंशब्देन तस्याः परामर्शात् ॥ अग्रे संपत्तिस्तु प्रवेशरूपा "ब्रह्मैवसन्ब्रह्माप्येती"तिश्रवणात् ब्रह्मभूतं प्रकृत्य विशतेतदनंतरमितिस्मरणाच्च ॥ अतोदृष्टांतेऽपि स्वमूलदेशसमीपं गतस्य तत्र प्रवेशः स्वेच्छाधीनः ॥ तद्बाह्यभूमिका यावद्दिदृक्षेत तावत्स्थित्वा प्रविशेत् ॥ तथाऽत्र वैमानिकभूमिकादिदृक्षायामपि तावत्संघातस्यात्यागइतिदृष्टांतस्यापि संगतिः ॥ तदेतत्सर्वमनुसंधायाहुः ॥ **नहितादृशश्रुतावितिं** ॥ यच्चतेन सूत्रद्वयमुपन्यस्तं तदर्थोमूले विशदीकृतः **सूत्रयोरुत्त्वयमर्थइत्यादिना** ॥ अत्र **ननुदेहस्थेत्यादिः अग्रेतथावक्ष्यतइत्यंतः** अनारब्धेति प्रकृतसूत्रभाष्यस्थएव ग्रंथः व्याख्यायमानार्थे प्रामाणिकतानिश्चायनायाक्षरशोऽनूदितः ॥ एवं **एकेषांपुष्टिमार्गीयाणामित्यादिः विषयभेदोवाच्यइत्यंतो** ग्रंथोपि ( अ० ४ पा० १ सू० १७ ) "अतोऽन्यापिह्येकेषामुभयोः" इतिसूत्रस्य भाष्यादेव संगृहीतः **मणिमंत्रेत्यादिकंवचनेगीयतइत्यंतं**तुपुनरनारब्धसूत्रभाष्यात्प्रकृतानुकूलं संगृहीतम् ॥ अत्रतन्नाशइत्यादितंतुनाशे पटनाशवदारंभककर्मणामपि नाशे देहनाशस्येत्यर्थः ॥ **एवंसतीति** ॥ ब्रह्मनिष्ठस्य देहाभावे सति तद्विज्ञानार्थमित्यादिविहितसाधनासंभवः ॥ **तदभावेनेति** ॥ अब्रह्मनिष्ठस्याचार्यत्वायोगादाचार्याभावेन- ॥**पूर्वसूत्राभ्यामिति** ॥ तदधिगमसूत्रेण इतरस्येत्यतिदेशसूत्रेणच **नाशेषेइति** ॥ प्रारब्धादिभेदेनत्रिविधे अपि नेत्यर्थः ॥ **तेएवेति** ॥ संचितक्रियमाणे एव नश्यतः ॥ **सौत्रंहेतुमवतारयंति** ॥ **नन्विति**अग्रे**तथेति** ॥ उत्तराधिकरणे अन्ये तु सौत्रहेतुं प्रारब्धस्यशरीरपातावधित्वश्रुतेरिति व्याचक्षते ॥ तैरपि प्रारब्धमात्रानाशे हेतुर्भगवदिच्छैववाच्याऽतःसैवाऽत्र दर्शिता ॥ **एकेषामित्यादि** ॥ एकेमुख्यान्यकेत्वलाइतिकोशान्मुख्यानां ॥ **निरूपिकायाइति** ॥ "क्षीयंतेचास्यकर्माणी"त्यादिरूपायामुंडकादिश्रुतेरित्यर्थः ॥ **तदनाश्येति** ॥ भोगानाश्येत्यर्थः ॥ ज्ञानानाश्येतिवा **श्रुतेश्चेति** ॥ "प्रोवाचतांतत्वतोब्रह्मविद्या" मित्यादेः ॥ पूर्वश्रुतिरियंचेति भेदप्रतियोगिन्यौ ॥ **त-**

**स्यपुत्राइति** ॥ इयंश्रुतिःशाख्यायनिनामस्ति ॥ अत्र सूत्रेऽन्येउभयोरित्यनेन जैमिनिव्यासयोरिति अन्येतिपदेन काम्यसाधुकृत्येति च व्याचक्षते ॥ तत्र जैमिनेः पूर्वकाप्यनुक्तत्वादाचार्यद्वयपरामर्शः ॥ " यदासर्वेप्रमुच्यंत " इतिकामक्षयएव ज्ञानोदयश्रवणात् नशोचतिनकांक्षतीतिस्मरणाच्च ब्रह्मविदोपि लौकिककामांगीकारश्चिंत्यः ॥ **मृगदारकाभासेनेत्यादि** ॥ इदं पंचमस्कंधेऽष्टमाध्यायेत्रयोविंशंगद्यम्॥ **उपभोगेनेत्यादि** ॥ इदं तत्रदशमाध्यायेचतुर्दशंगद्यम् ॥ उपभोगस्तु राजयानवहनादिः ॥ **भरतंप्रतीति** ॥ भरतंलक्षीकृत्य ॥ **इतरेइत्यादिस्तुशब्दइत्यंतो** ग्रंथोपि ( अ०४ पा०१ सू० १९ ) " भोगेनत्वितरे " इतिसूत्रभाष्यस्थएव ॥ एवंप्रतिपादनंतु ब्रह्मवल्ल्यां " उताविद्वानमुंलोकंप्रेत्य " इत्यादिनाऽनुप्रश्नोपन्यासपूर्वकं " अस्माल्लोकात्प्रेत्य " इत्यादिनादेहद्वयक्षपणोत्तरमेवानंदमयोपसंक्रांतिः ॥ " यतोवाच " इत्यादिना " आत्मानंस्पृणुत „ इत्यंतेन भोगस्य च श्रावणादितिध्येयम् ॥ इह " इतरेआरब्धकार्येपुण्यपापे उपभोगेन क्षपयित्वा ब्रह्मसंपद्यते " इति परेषां व्याख्यानमपि वर्णकभेदादस्माकं संमतमेव ॥ स्पष्टंचेदं प्रकाशे ॥ किंच जीवन्मुक्तस्याप्यग्निहोत्रादिकं नित्यं तत्रैव ( अ०४ पा०१ सू०१६ ) " अग्निहोत्रादितुतत्कार्यायैवतद्दर्शनात् „ इतिसूत्रे निर्णीयते ॥ लोकप्रवर्तनार्थं तस्यकर्मकरणबोधकानि च वाक्यानि संति शतशः ॥ अतइमान्येव श्रुतिस्मृतिसूत्राणि जीवन्मुक्तस्यापि वास्तवप्रारब्धभोगं तदेकाधीनां शरीरस्थितिं कर्मानुष्ठानं च ग्राहयंति ॥ " तस्मैसविद्वानुपसन्नायसम्यक् " इत्यादिमुंडकादिवाक्यानितादृशस्यप्रवचनंविदधानानि च प्रपंचस्यामायिकत्वमेव गमयंति ॥ यदि प्रारब्धशरीरशिष्यादिकं मायिकं स्यात् तर्हि जीवन्मुक्तस्य तत्संबंधस्तत्प्रतीतिश्च श्रुतिसूत्रादिभिर्निर्णीता न घटेतइत्यनुकूलतर्कात्॥ तस्मादस्माकमेव तान्यनुगुणानि यच्चअन्ये तु ज्ञातिनोऽदृष्टाभावेऽपीत्याद्युक्तं तदपि न युक्तं उदासीनानां तच्छरीरदर्शनाद्यभावप्रसक्तेः ॥ तेषां दर्शनाद्यदृष्टवशात्तथेतिचेन्न परादृष्टमात्रेण परशरीरोत्पत्तौ शुक्रशोणितादिनियतकारणजन्यत्वव्यभिचारः विज्ञानवादापत्तिः शून्यवादांतरापत्तिः कथंचित्समाधाने शून्यवादेऽपि तत्सिध्या ( अ० २ पा० २सू० २७ ) " उदासीनानामपिचैवंसिद्धि " रित्यादि सूत्रबाधः कृषीवलकुलालतंतुवायाद्यदृष्टमात्रेण धान्यघटपटादीनां तद्भाष्योक्ता प्रतीतिः परकल्पितनिरात्मकशरीरैः सर्वव्यापाराणामनुष्ठानेऽमुक्तदशायामपि शरीरातिरिक्तात्मसाधनप्रयासवैयर्थ्यं शिष्याद्यदृष्टकल्पितस्य शुकादिशरीरस्य परीक्षिदादि मरणक्षणएव नाशदर्शनप्रसंगश्च स्यात् ॥ श्रूयते तु तदुत्तरमपि तच्छरीरस्य प्रवचनादिरहितस्यापि स्थितिः ॥ किंच वसिष्ठजनकादीनाममुक्तदशायां स्वाविद्याकल्पितं शरीरंतु ज्ञानसमकालमेव नष्टं शिष्याद्यदृष्टकल्पितं तु शरीरांतरमेवेति मंतव्यं ॥ नहि रज्जौ देवदत्तेन यः सर्पः कल्पितः सएव यज्ञदत्तेनापि कल्प्यतइति शक्यवचनं ॥ तथासति

पतिव्रताग्रगण्यानामरुंधत्यादीनां स्वपरिणेत्रतिरिक्तजीवशून्यशरीरसंगे पातिव्रत्य-हानिर्महानेवानर्थः स्यात् ॥ तत्पातिव्रत्यबोधकः श्रुतिपुराणादिविरोधश्च ॥ क्ष-त्रियादिश्चजीवन्मुक्तस्य प्रवचनानुपयोगाच्छरीरं नैवावतिष्ठेत ॥ एवंचजनकादीति हासबाधः ॥ अरुन्धत्याः पातिव्रत्याभावे स्वाहायास्तदनुकरणाशक्तिबोधिकेतिहा सबाधश्च ॥ जीवन्मुक्तस्त्रीणां परिणेतृदेहमरणेन सौभाग्यचिह्नत्यागापत्तिश्च ॥ कि-ञ्चकाश्यां मृतस्यपूर्वदेहनाशो बहुलोकप्रत्यक्षनिश्चितः ॥ न तथाजीवन्मुक्तस्य पूर्वदे-हनाशेऽबाधितप्रत्यक्षादिकमस्ति ॥ एवमनुगतायाः परलोकेपत्यासह भोगाभा-वेतत्रयथा ( स्कन्ध० ७ अ० ११ श्लो० २९ ) पत्याश्रीरिवमोदतइत्यादि स्मृति-व्याकोपस्तथात्र जीवन्मुक्तशरीरानुपलब्धौन कस्यापि वचनस्यव्याकोपोऽस्तियद्-बलात्तथाक्षिप्येत ॥ अतोमहदेवदृष्टान्तदार्ष्टांतिकयोर्वैषम्यं ॥ दार्ष्टान्तिके परकल्पित-त्वादरे प्रत्युतपूर्वोक्तादिश्रुतिसूत्राणां व्याकोपः ॥ तदेतदखिलमुरसिकृत्याहुः । **दृष्टां-तवैषम्यान्नसंभवतीत्यादि** ॥ वस्तुतस्तु काश्यांमृतस्यापि त्वरितमेव न मोक्षः ॥ तत्र मरणान्मोक्षप्रतिपादकेष्वेव पुराणभागेषु पापिनां पापानुरूपजन्मांतराणि त्रिंशद्वर्ष सहस्रांताकालभैरवयातनाकाम्यपुण्यवतांतदनुगुणमवांतरजननं तत्फलभोगोमुक्तावव-पि पूर्वंशिवलोकप्राप्तिः शिवसारूप्यं तत्सायुज्यादिकं च प्रतिपाद्यतएवेति तत्र मृ-तानां सर्वेषां मोक्षांगीकारपक्षेऽपि मरणमात्रंतु मुक्त्यवश्यंभावसाधकं शुष्यति-शयमेव जनयति ॥ मोक्षस्तु ज्ञानैकसाध्यतया तारकोपदेशादेव तदुपदेशश्च मरणक्षणएवेति न नियमः ॥ अपरेत्त्वधिकारिविशेषाणामेव तारकोपदेशोमोक्षश्च ॥ सर्वेषांतु तत्र मरणान्नरकप्राप्त्यभावउत्तमलोकप्राप्तिश्चेत्येव नाविमुक्तमृतः कश्चिन्न-रकंप्रतिपद्यते । ईश्वरानुगृहीताहिसर्वेयांतिपरांगतिमितिलैंगात् । सर्वेषां मो-क्षावश्यंभावे नरकाप्राप्तेरर्थसिद्धतया, तन्निषेधायोगादित्याहुः ॥ अतोमतद्वये-ऽपिपतिव्रतायाअनुगमनफलभोगपर्यंतं पत्युरुत्तमलोके तदनुरूपशरीरेणावस्था-नं संभवत्येव ॥ बृहत्पराशरादिभिः केकीवपतितोरगमित्यादावनुगता भर्त्तुः पुण्याभावेऽपि तत्पुण्यफलभोगावश्यंभावस्य स्मरणात् ॥ अतोबौद्धमतापादकम-दृष्टमात्रान्निरात्मकसव्यापारशरीरकल्पनं निर्मूलं नैवादरणीयं ॥ तथाहि सन-त्कुमारसंहितादिषु काशीमरणफलमुपक्रम्य । अन्यत्रभुक्त्वापि समस्तपापंपुण्यंचप-श्चात्तृणगुल्मकादौ जातःक्रमाद्ब्राह्मणतामुपेत्य तदुक्त मार्गैरपिमुक्तिमेतीतिपापस्य पुण्यस्य च फलभोगोमुक्तेः प्राग् श्रूयते ॥ पापानियेकुर्युरिहाविमुक्ते कथंहितान्मो-चयसिप्रसीदेति पार्वतीप्रश्नोत्तरं चैतत्कथ्यते ॥ यत्तु केचित् काश्यांयः पापकार्यन्य-त्र म्रियते तद्विषयकमिदमिति ॥ तन्न ॥ महातीर्थक्षेत्रकृतशतकोटिलेपसदृशदुरितव-तोब्राह्मणजन्मपूर्वकमोक्षप्राप्तिनियमकथनस्यायोगात् ॥ पाद्मे अन्यश्चश्रूयतां दोषः क्षेत्रस्य वरवर्णिनि अविमुक्तेऽणुमात्रंयत्तदघंमेरुतांव्रजेदिति कांचनमालिनीं प्रति रा-

क्षसवचने दोषाधिक्यबोधनात् ॥ तत्रैवानुपदं नधर्मस्तु मयातत्रसंचितस्तत्रजन्म-
नि । ततोबहुतिथेकालेमृतस्तत्रैवशोभने । अविमुक्तप्रभावेननचाहंनरकंगतइतिनर-
कप्राप्तिनिषेधेऽपि कंठरवेणात्र बहुजन्मांतरकथनं तत्र मरणक्षणएव सर्वस्य न
मोक्षनियमइति गमयति ॥ एतेन अविमुक्तेमृतः कश्चिन्नरकं नैतिकिल्बिषी । ममा-
नुग्रहमासाद्यगच्छत्येवपरांगतिमिति काशीखंडादयोव्याख्याताः ॥ गरुडपुराणे वारा-
णस्यांमृतोयोवैपातकेषुरतःसदा । योनिंप्रविश्यपैशाचीं वर्षाणामयुतत्रयम् पुनरेवचत-
त्रैवज्ञानमुत्पद्यतेततः मोक्षंगमिष्यतेसोपिगुह्यमेतन्नराधिपेति काशीखंडेच ममैवमा-
यया‌ऽमूलभेदवादपरायणाः ममभक्तिमकुर्वाणायेविश्वेशंद्विषंतिवै विद्विषोममतेज्ञेयाः
पिशाचपदगामिनः पैशाचींयोनिमास्थायकालभैरवशासनात् त्रिंशद्वर्षसहस्राणिउ-
षित्वादुःखसागरे विश्वेशानुग्रहादेवपुनर्मोक्षमवाप्नुयुरिति मात्स्ये कृत्वापापसहस्रा-
णिपिशाचत्ववरंनृणां अपिशक्रसमंराज्यंनतुकाशींपुरींविनेति सनत्कुमारसंहि-
तायामपि पापिनः पिशाचत्वमुक्त्वा तदनंतरं तारकोपदेशान्मुक्तिरुच्यते ॥ भव-
प्रसादेनकृतोपदेशःपिशाचयोनेरपिमुक्तिमेतीति ॥ पद्मपुराणेतु काश्यां कृतबहुदुष्कृ-
तस्य तत्रैव मृतस्य कस्यचिद्बहुजन्मोत्तरं रक्षोभूतस्य कांचनमालिनी दत्तमाघ-
स्नानजपुण्येन देवजन्मापि वर्ण्यते अविमुक्तकृतंपापंवज्रलेपाभवेद्दृढम् वज्रलेपेन
पापेनतेनमेजन्मराक्षसं रौद्रंक्रूरतरंपापंसंभूतंहिमपर्वते द्विजातोगृध्रयोनौप्राग्तिर्य्यग्-
योन्हिःसरीसृपः एकवारमुलूकश्चविड्वराहस्ततःपरम् इदंतुदशमंजन्मराक्षसंह्यत्रभामिनि
अतीतानिसहस्राणिवर्षाणांपंचसप्ततिः ददौ सामाघजंपुण्यंतस्मैवृद्धायरक्षसे इत्या-
दि ॥ अनंतरं ॥ तदैवप्राप्तपुण्यस्तांसमुत्क्राराक्षसींतनुम् संभूतोदेवतारूपस्तेजोभास्वर
विग्रहइतिच॥ नचेदंप्रयागे माघस्नानस्तावकमिति वाच्यम् मृतमुक्तिवचसामपि स्ताव
कत्वप्रसंगात् ॥ ईदृशपाद्मादिवचांस्युत्कटपापकृद्विषयाणि उक्तचरगारुडकाशीखंडादि
वचांसि चानुत्कटपापकृद्विषयाणीति मृतमुक्तिप्रकाशिकाकारादयोबहवः ब्रह्मवैवर्ते च
काशींप्रतिशिवः पापंकृत्वाक्षेत्रमध्येमृतायेतेषां मुक्तिर्यातनांते भवेद्धि ॥ धर्मः काश्यां-
शुद्धिहेतुः प्रदिष्टःपापंपुनर्मलदुःखादिमूलं ॥ तस्मात्प्रतिज्ञाममसिद्धरूपामुक्तिर्भवत्ये
वमलावसानेपाद्मे च बलिं प्रति सनत्कुमारः वाराणस्यांनिवसतिरपवर्गफलप्रदा ॥
द्वित्राणांत्रपवित्राणांकल्पतेसत्वरंबले ॥ तथाचविष्णोर्विमुक्तेसंवासःकर्मनिर्मूलनक्षमः
द्वित्राणांहिपवित्राणांनिर्वाणायोपजायते इति अतस्तत्र मरणं तु शुद्धिमात्रजनकं
मोक्षस्तु सत्यधिकारे तारकोपदेशादेव ॥ अतएव वार्त्तिककारः सुरेश्वराचार्यः
पृथूदकादौमरणं तदप्यत्यंतशुद्धिकृदितिशुद्धिमेव फलमाह ॥ अत्रादि पदात्काशी
प्रयागादिसंग्रह इति त्रिस्थलीसेत्वादयः ॥ तथा च पाद्मे वाराणसीस्थतीर्थानामंबु
प्राशस्ततः परम् ॥ अंतःकरणसंशुद्धिमाप्नुयाद्विजितेंद्रियः तथा तादृशस्यात्रदैत्येंद्र-
शरीरत्यागमात्रतः अपवर्गोभवत्येव तदन्यस्यविलंबतः तथा पुमांसंक्षीणकलुषंशंक-

करस्तारकंवचः श्रावयामासविधिवत्संपाद्याधिकारिबुध इति निष्पापस्योपदेशउक्तः मात्स्येच अविमुक्तेन्वंतकालेभक्तानामीश्वरःस्वयम् कर्मभिःप्रेर्यमाणानांकर्णजापंप्रयच्छति ईश्वरप्रेरितायांतिदुष्पापमकृतात्मभिरितिभगवत्कृपयासत्कर्मशालिनां भक्तानां कृतात्मनामेवोपदेशोदर्शितः ॥ एतेन प्रायोपवेशाधिकारोपक्रमे वाराणस्यांविपन्नस्तुप्रत्याख्यातभिषक्क्रियः प्रणवंतारकंब्रूतेनान्यथाकस्यचित्क्वचिदिति काशीखंडस्थौ अविमुक्तेऽप्रियेद्यस्तुप्रत्याख्यातभिषक्क्रियः काष्ठपाषाणभूतस्तुजान्हवीजलमध्यगः अविमुक्तेमृतस्यास्यकर्णमूलंगतोहरः प्रणवंतारकंब्रूतेनान्यथाकस्यचित्क्वचिदितिब्रह्मपुराणस्थौ चोपदेशस्य विधिनिषेधौ व्यवस्थयाव्याख्यातौ ज्ञेयौ ॥ ब्राह्मे अनेक जन्मसंसिद्धान्वर्जयित्वाम हामुनीन् ॥ नान्येषांमरणंतत्रयच्छंत्यन्येविभीषणादितिवचनमपि भगवत्कृपापात्राणामेवसद्योमुक्तिलक्षणफलोपधायकमरणं तत्रबोधयति तत्प्रसादादेवानेकजन्मसंसिद्धमहामुनित्वसंभवात् ॥ प्रत्यहं तत्राप्यनेकजंतुमरणसंभवेन सर्वेषांतेषां तादृशतायादौर्लभ्याच्च ॥ वचनार्थस्तु अन्येशिवदूताविभीषणाद्भयोत्पादनाद्धेतोस्तादृशव्यतिरिक्तानां तत्रमरणं नयच्छंतीति बोध्यः ॥ गारुडेपि अशनंवसनंवासः काश्यांयेषामनागतः । कीकटेनसमाकाशीसत्यंसत्यंखगेश्वर । विष्णोर्विमुक्तेसंवासः कर्मनिर्मूलनक्षमः । द्वित्राणांहिपवित्राणांनिर्वाणायोपजायतइति ॥ तदेतत्सर्वमनुसंधायोक्तंशास्त्रार्थनिबंधे श्रीमदाचार्यचरणैः ( कारिका ५१ ) तीर्थादावपियामुक्तिः कदाचित्कस्यचिद्भवेत् । कृष्णप्रसादयुक्तस्यनान्यस्येतिविनिश्चयइति ॥ किंच येषांतत्रमरणान्मुक्तिस्तेषामपि तदैव कैवल्यमेवेतिननियमः ॥ किंतु प्रथमत शिवसालोक्यं ततस्तत्सारूप्यं ततस्तत्सायुज्यं ततः शिवानुग्रहेण कैवल्यमित्येकंमतं ॥ तत्रमरणेप्यधिकारभेदाद्व्यवस्थितं शिवसालोक्यादिकमित्यपरं । तथापि तत्र मरणान्मुक्तानां सार्वदिकीकैवल्यात्प्राग्बहुकालपर्यंता वाशिवलोकप्राप्तिस्तु सर्वेषांशिवसरूपतापुरः सरास्त्येवतथाहि ब्राह्मे कीटाःपतंगामशकाश्चमत्स्याजलेस्थलेवाविचरंतिमर्त्याः । मंडूककूर्माःक्रमयापिकाश्यांत्यक्त्वाशरीरंशिवमाप्नुवंति । अनेनैवविशेषेणतांप्रशंसंतितार्त्त्विकाःसाक्षाद्वाराणसीमुक्त्यैविष्णुभक्तिस्तथाविधेति ॥ काशीखंडे ब्राह्मणाःक्षत्रियावैश्याःशूद्रायेवर्णसंस्थिताः । स्त्रियोम्लेच्छाश्चयेचान्येसंकीर्णाःपापयोनयः । कीटाःपिपीलकाश्चैवयेचान्येमृगपक्षिणः । कालेननिधनंप्राप्ताअविमुक्तेवरानने । चंद्रार्धमौलयस्त्र्यक्षामहावृषभवाहनाः । शैवेममपुरेदेविजायंतेतत्रमानवाः । येभक्तावरदंदेवमविमुक्तंपरंपदं॥तेविशंतिमहादेवमाज्याहुतिरिवानलं । अकामोवासकामोवातिर्यग्योनिगतोपिवा । अविमुक्तेत्यजन्प्राणान्ममलोकेमहीयते । गृहस्थाश्चैवयतयस्तस्मिंस्तीर्थउपासकाः ॥ एकदंडास्त्रिदंडाश्चहंसव्रतधराश्चये । कर्मभेदेनतेषांतुसर्वेषामास्थितोह्यहं । विभजामिमहास्थानंयत्तन्मोक्षप्रदंशुभमिति ॥ तत्रव दंडपाणिमति शिवः अमर्त्यभूषंकुरुकाशिवासिनंगलेसुनीलमु-

जगेंद्रभूषणं । भालेसुनेत्रंकटिकृत्तिवाससंवामेक्षणालक्षितवामभागं । मौलौलसत्पिंगकपर्दभारंविभूतिसंलालितपुण्यविग्रहं । अहोहिमांशोकलयालसच्छयंत्र्येंद्रलीलांचितमंदगामिनं । आनीयभक्तान्क्षणतोपिदूरतोमद्भक्तमुक्तिःपतितागलेते ॥ इति ॥ मात्स्येपि नतेषांपनरावृत्तिःकल्पकोटिशतरपि । अविमुक्तेनगृह्णंतेभवेनविभुनात्स्वयं । तथाच सयातिपरमस्थानंयत्रगत्वानशोचति । जन्ममुक्तंजरामुक्तंपरंयातिशिवालयं । अपुनर्मरणांहिंसागतिर्मोक्षस्यकांक्षिणामिति । वायुपुराणेपराच्छिवपरार्ध्वश्रीकंठेननिरीक्षिताः । नाधोयांतिपुनर्देविसंसारेदुःखसंप्लवे ॥ इति ॥ एवंचैवमादिवचनेषुशिवलोकस्य सत्यलोकोपरितनपरशिवालयाख्यतल्लोकस्थवायथाधिकारंप्राप्तिस्त्रिस्थलीसेत्वादिभिर्निर्णीता ॥ एवंसति पतिलोकमवाप्नोतीत्यनुगतायाः पतिलोकप्राप्तिस्मरणात् ( स्कं०७ अ११ श्लो०२९ ) यापातिहरिभावेनभजेच्छ्रीरिवतत्परा । हर्यात्मनाहरेर्लोकेपत्याश्रीरिवमोदतइत्यादिफलश्रवणेपि हरिहरयोरभेदेन मथुरादिमृतेन हर्यात्मना विष्णुलोके श्रीरिव काश्यादिमृतेन हरात्मनाशिवलोके गौरीव तेनैव स्वभर्त्रा सह मोदतइति युक्तमेव ॥ वामेक्षणालक्षितवामभागमित्यादिवचनानुग्रहात् बहुषु स्मृतिपुराणेषु धर्मविशेषतोपि विष्णुशिवलोकप्राप्तिस्मरणेन तत्रापि तत्संभवात् ॥ पतिव्रतायाविष्णुशिवलोकप्राप्तिबोधकवचसां धर्मशास्त्रेषु स्पष्टत्वाच्च ॥ अतोन तस्याअदृष्टमात्रेण निरात्मकपतिशरीरकल्पना कल्प्या ॥ केषांचिन्मते क्रमेलकशूद्रोपाख्यानाद्यवलंबादयोनिजैः कालभैरवेच्छाजन्यशरीरैर्यातनाभोगवत्पुण्यभोगस्य संभवाच्च ॥ केचित्तु शिवलोकप्राप्तिरूपां मुक्तिमपि पापभोगादिव इहैव पुण्यभोगादप्यनंतरं मन्यंते ॥ काशीखंडादिषु स्वयंदेहविनाशस्यप्राप्तेकालेमहामतिः उत्तमानामुयाल्लोकान्नात्मघातीभवेत्क्वचिदित्यादिस्मरणात् ॥ ब्राह्मे तत्रस्थितस्यजंतोर्हिभोगमोक्षप्रदःशिवः ॥ अधितिष्ठतिजंतूनांमुक्तिक्षेत्रमिदं परमिति पूर्वं भोगप्रदानकथनात् पाद्मेपि मुनीन्प्रति भृगुणा तत्तद्भोगप्रापणायैवदेहाअयोनिजाभैरवेच्छाविधाना इति उभयभोगानुकूलशरीराणां निरूपणाच्च ॥ किंच त्वदुक्तदेशीयमप्युदाहरणं शिवपुराणे तद्यथा कस्यचिल्लुब्धकस्य काश्यामोंकारेश्वरसंनिधौ मरणोत्तरं तत्पत्न्यऽनुगमने कृते तादृशपुण्यविशेषात्तस्यैव सपत्नीकस्य राजजन्मततोमोक्षश्च निरूपितः ॥ मुनिरपि तं प्रति तत्पूर्वकथां वर्णयन्नाह कालेनगच्छताचैववाराणस्यांतटेशुभे ॥ पंचत्वंगतवांस्तत्रदेवदेवस्यसंनिधौ अग्नौप्रविष्टासुश्रोणीप्रतिगृह्यकलेवरं ॥ तेनधर्मेणराजेंद्रइयंव्युष्टिरुपागता भवानवैलुब्धकोजातःसपत्नीकोनरेश्वर इत्यादि ॥ व्युष्टिरुदयः लुब्धकोभवान् सपत्नीको नरेश्वरोजात इत्यन्वयः एवंच पत्युः काशीमरणेप्यनुगतायास्तत्पत्न्यास्तेनैव स्वभर्त्रासह पुण्यफलभोगः कामनापुण्ययोस्तारतम्यादत्रलोके लोकांतरेवेत्येव त्रिस्थलीसेत्वादिषु सिध्यति ॥ ननु शिवपुराणे पत्न्याअनुगमनमपि काश्यामेव प्रतीयतेऽतोमदुक्तोदाहर-

द्वैधम्यमिति च दुभयोस्तत्रमृतत्वेऽप्येवंव्यवस्थायाः प्रमाणसिद्धत्वे सति पतिमात्रस्य तत्र मरणे तादृशव्यवस्थांगीकारः कैमुतिकसिद्धः ॥ साक्षान्मोक्षविलंबस्याविशेषात् ॥ किंच तत्र मृतस्य कैवल्यप्राप्त्यंगीकारेऽपि सालोक्याद्यनंतरमेवेति चिरात्सावर्ण्यते यथापाद्मे चतुर्धाविततेक्षेत्रेसर्वत्र भगवांच्छिवः । व्याचष्टेतारकंवाक्यंब्रह्मात्मैक्यप्रबोधनं ॥ तथापितत्रसामर्थ्यात्तत्रतत्रमृतस्यहि ॥ भोगपूर्वापवर्गादिजीवन्मुक्तिदशेवसा अंतर्गेहेविपन्नस्तुसाक्षाच्छिवमवाप्नुयात् । तथाचतुर्विधेपिक्षेत्रेस्मिन्प्रमीतोगर्भयातनाः नैवाप्नोतिमुनिश्रेष्ठाविशेषोयंब्रवीमिवः ॥ काश्यांमृतस्तुसालोक्यंसाक्षात्प्राप्नोतिसत्तमाः । ततःसरूपतांयातिततःसांनिध्यमश्नुते । ततोब्रह्मैकतांयातिनपरावर्ततेपुनः । वाराणस्यांमृतोजंतुःसाक्षात्सारूप्यमश्नुते ॥ ततःसान्निध्यमायातिततोब्रह्मैकतामियात्॥ अविमुक्तेविपन्नस्तुसाक्षात्सान्निध्यमाप्नुयात् । ततश्चिदानंदमयेब्रह्मण्येवविलीयते । सलोकतांचसारूप्यंसांनिध्यंचातिसत्तमाः । कल्पंकल्पमवाप्नोतिततोब्रह्मात्मकोभवेत् । तथा आदेहपातनाद्येतुक्षेत्रंसेवंतिमानवाः । तेमृताहंसयानेनदिव्यंयांत्यकुतोभयमित्यादिवचांसि तु सालोक्यविषयाणि ॥ इमानि च सर्वाण्यपि वचांसि त्रिस्थलीसेतुमृतमुक्तिप्रकाशिकादिषु प्रसिद्धान्यत्रोदाहृतानि ॥ अत्रापि भोगपूर्वापवर्गादीत्युक्तयासर्वेष्वपिपक्षेष्वपवर्गात्पूर्वं तादृशावश्यकभोगोस्त्येव ॥ ननुतत्रमरणदुत्तरमपि भोगसत्वे कोविशेषस्तस्येत्याशंक्याह ॥ जीवन्मुक्तिदशेवसेति । यथा जीवन्मुक्तस्य प्रारब्धभोगे सत्यपि परमुक्तयावश्यंभावोस्ति तथाऽस्योक्तचरभोगेपि मुक्त्यवश्यंभावइत्येषविशेषइतिभावः ॥ एवंच तत्रमृतस्य लुब्धकवदिहलोके जन्मनि शिवसालोक्यादौवासिद्धेपि तेनैवं पत्या सह स्वसाधुकृत्याफलभोगः सत्याःसत्यामनुगमनमृत्यामिति तदुक्तमदृष्टमात्रेण बौद्धकल्पं निरात्मकशरीरकल्पनं हेयमेव ॥ तदुदाहृतश्रुतिरपिप्रागुक्तव्यवस्थयाव्याख्याता ज्ञेया ॥ अमृतोभूत्वे त्यनेन जीवन्मुक्तवत्तादृशभोगस्य सालोक्यादेर्वा संभवोत्तरमेव मोक्षोभवतीतिश्रावणात् ॥ अत्रामृतिशब्दस्य निश्चितमुक्तियोग्यपरत्वसिद्धेः ॥ अन्यथा पौनरुक्त्यापातात् ॥ एतद्विषयेधिकं त्वावरणभगर्वविभागसंभवेतीर्थादावित्यत्र वक्ष्यामि ॥ इह मूलस्थमुतरंतु नखच्छेद्ये किं कुठारप्रहारेणेतिन्यायाद्बोध्यं ॥ अतोजगन्मायिकत्वे जीवन्मुक्तस्यशरीराद्यभावमसक्त्यातद्बोधकशास्त्रव्याकोपात् प्रवचनाद्यनुपपत्यामोक्षसंप्रदायोच्छेदप्रसंगाच्च । प्रपंचस्यामायिकत्वमेवसिध्यति ॥ अधिकं तूत्तरभागे तावकषष्ठ खंडखंडनाभासखंडनावसरे वक्ष्यामः ॥

किं च प्रपंचस्य मायिकत्वमभ्युपगच्छता त्वया शुक्तिरूप्यवदध्यस्तत्वं वाच्यं तच्च यथा आपणस्थरजतंदृष्टवतस्त-

जन्यसंस्कारेण रजतगतचाकचक्यादिसाधारणधर्मस्य शु-क्तौ दर्शनेन च शुक्त्यज्ञानसहकृतेन शुक्तौ रजताध्यासउत्पा-द्यते ॥ तथाऽत्र प्रपंचस्य कुत्रचिदप्यदृष्टत्वात्तज्जन्यसंस्का-राद्यभावादधिष्ठाने च ब्रह्मणि निर्द्धर्मके प्रपंचगतासाधारण-धर्मादीनामभावादर्थात्पूर्वं कर्त्तुरप्यभावादध्यासोन संभवति ॥ किंचायमध्यासः कस्येति वक्तव्यं जीवस्य ब्रह्मणोवा ना-द्यः जीवस्यापि त्वन्मतेऽध्यासमध्यपातित्वात् शुक्तिरजतद्र-ष्टृपुरुषवदध्यासात्पूर्वमसत्वात् नापि द्वितीयः ब्रह्मणोभ्रांतत्वा-पत्तेः ॥ किंच प्रपंचस्य मिथ्यात्वे किं प्रमाणं न तावत्प्र-त्यक्षं नेदं रजतमितिवन्नायंप्रपंचइतिबाधस्याभावात् ननु प्रपंचोमिथ्या दृश्यत्वाच्छुक्तिरूप्यवदित्यनुमानं प्रमाणमिति-चेन्न दृश्यत्वस्य ब्रह्मण्यपि सत्वेन तत्रमिथ्यात्वाभावेन हे-तोरनैकांतिकत्वात् ब्रह्मणोऽदृश्यत्वे च "भिद्यतेहृदयग्रंथिश्छि-द्यंतेसर्वसंशयाःक्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे यदापश्यः-पश्यतेरुक्मवर्ण" मित्यादिश्रुतिविरोधः ॥ किंच विश्वं यदि-कल्पितं स्यात्तदा साधिष्ठानं स्यान्नचैवं सामान्यतोज्ञातत्वे-सत्यज्ञातविशेषवत्वस्याधिष्ठानत्वप्रयोजकस्य निर्विशेषे निः-सामान्ये च ब्रह्मण्यसंभवात् ॥ नच कल्पितसामान्यविशे-षवत्वस्य ब्रह्मण्यपि सत्वेन तस्याधिष्ठानत्वे बाधकाभावइ-तिवाच्यं ॥ सामान्यविशेषकल्पनायाअपि साधिष्ठानत्वेन तत्रापि कल्पितसामान्यविशेषोपादानेऽनवस्थापत्तिरित्यलं वि-स्तरेण एतेन एवंचेत्यादिकमपास्तं ॥ किंच शुक्तौ रजतसा-दृश्यस्य रजते शुक्तिसादृश्यस्य च सत्वाद्रजतात्मना शु-

क्तिर्भासते ॥ एवं ब्रह्मणोघटपटात्मनावभासेपि परस्प-
रसादृश्यं स्वीक्रियते चेत्तदा ब्रह्मण्यपि साकारत्वं जड-
त्वं च स्यात् ॥ विजातीयेऽसदृशे च नाध्यासः ॥ अन्य-
था शुक्तौ घटस्य रज्जौ गजस्य चाध्यासः स्यात् ॥ न-
चाध्यासे सादृश्यं साक्षान्न प्रयोजकं किंतु संस्कारोद्बोध-
कत्वेनैव ॥ संस्कारोद्बोधश्च सादृश्यादन्येनापि संभवतीति
सादृश्याभावेपि न काचिदनुपपत्तिरिति वाच्यं अदृष्टादिना-
संस्कारोद्बोधेऽपि भ्रमोविसदृशे न संभवति ॥ रज्ज्वादिषु घ-
टादिभ्रमस्यादृष्टत्वात्सादृश्यज्ञानमवश्यक्लृप्तमेव सादृश्यं विना
ऽदृष्टादिसत्वेपि भ्रमस्यासंभवात् ॥ स्वमस्मरणजनकसंस्का-
रोद्बोधस्यादृष्टादिना संभवेऽपि भ्रमजनकसंस्कारस्य सादृश्य-
ज्ञानं विनाऽसंभवेनादृष्टेनदृष्टस्यान्यथासिद्धेः कर्त्तुमशक्यत्वा-
त्॥ अन्यथा कार्य्यमात्रस्यादृष्टेनैवोत्पत्तौदृष्टकारणानां दंडादी-
नामन्यथासिद्धत्वं स्यात् कार्य्यमात्रेऽदृष्टस्य हेतुत्वात् ॥ न-
नु रज्जौ घटाश्वादीनामध्यासे तत्तत्संस्कारोद्बोधाभावादेव न
संभवति सति तदध्यासे तत्सादृश्यज्ञानस्य हेतुत्वं न संभवती-
तिचेन्न मंदांधकारे रज्जुज्ञाने घटाश्वादीनां संस्कारोद्बोधेऽपि त-
द्भ्रमस्यादृष्टत्वान्नसंस्कारोद्बोधमात्रं भ्रमे हेतुः॥किं तु सादृश्यसं-
दर्शनजन्यसंस्कारोद्बोधएवेतिकथं सादृश्यज्ञानस्य न हेतुत्वं ॥
नच सादृश्यज्ञानस्य भ्रमहेतुत्वे रज्जौ भुजंगदंडभूछिद्रमालाज-
लधाराद्यध्यासोयुगपदेव कथंन जायेत तत्तत्सादृश्यज्ञानस्य पृथ-
कृतदध्यासानुरोधेन सत्वादिति वाच्यं॥ पृथक्कृतत्तदध्यासे तत्त-
त्सादृश्यज्ञानसत्वेऽपि युगपत्सादृश्यज्ञानस्यासत्वात्॥ नच तत्सा-

दृश्यस्य सत्वमात्रं तत्तत्सादृश्यज्ञाने हेतुः किंतु तत्तत्सादृश्यप्रतियोग्युपस्थितिरपि तथाच यादृशप्रतियोग्युपस्थितिस्तत्प्रकारकोभ्रमउत्पद्यतेयुगपत्प्रतियोग्युपस्थितौ च सर्पत्वधारात्वमालात्वादीनामेकत्र ज्ञानं निश्चयरूपं न संभवति ॥ विरुद्धधर्माणामेकत्र सत्वे विरोधएव न स्यात् ॥ तस्मात्कथंचिद्युगपदुपस्थितावपि युगपत्तत्तद्धर्मोनैवापद्यते भ्रमस्यनिश्चयरूपत्वात् ॥ अतस्तादृशज्ञानं संशयरूपमेव जायते तत्रेष्टापत्तिरेव ॥ अन्यथा संस्कारस्य हेतुत्वेन पृथक्तदध्यासानुरोधेनादृष्टस्योद्बोधकस्य सत्वेन युगपदध्यासस्त्वन्मतेऽपि कुतोन स्यात् संस्कारोद्बोधकस्य सत्वात् तस्माद्ब्रह्मणःसाकारत्वापत्तिर्दुर्वारैव ॥ नच पूर्वपूर्वाध्यासजन्यसादृश्यस्यब्रह्मण्यंगीकारे साकारतापत्तेरभावः श्रुतिविरुद्धतादृशकल्पनायाआप्रामाणिकत्वात् ॥

## टीका

सहस्राक्षे एतेनैवभैक्षवमतमित्यादि साकारतापत्तेरभावाच्चेत्यंतं भागं निरस्यंति॥ किंचप्रपंचस्येत्यादिना अप्रमाणिकत्वादित्यंतेन ॥ अयंभावः ॥ मार्तंडे मायोपाधिककर्तृत्वंभैक्षवे दृश्यतेतुयत् ॥ तन्मायित्वादध्वंसेनध्वस्तमायंविशेषतइतिकारिकायाः शकलंपाठभेदेनोपन्यस्ययत् तदेव ध्वस्तमित्युक्तं । तदप्येतावता ध्वस्तमेव ॥ यच्च ( अध्यासितुर्वास्तवत्वमध्यास्यस्याऽन्यत्र वास्तवत्वं वा नाध्यासे प्रयोजकं प्रमाणाभावाद्गौरवाच्चे ) त्युक्तं । तत्प्रलापमात्रं ॥ प्रपंचे विवर्तत्वं साधयितुंत्वया शुक्तिरजतरज्जुभुजंगादिकमेव लोकप्रसिद्धं विवर्तजातंदृष्टांतीक्रियते ॥ तत्र सर्वत्रायंनियमः रजतादिद्रष्टा तदतिरिक्तोदेवदत्तादिवद्वास्तवएवापेक्षितइति॥ क्वापि निर्द्रष्टृकभ्रमस्यादर्शनात् ॥ प्रकृते च द्रष्टुर्जीवस्यापि कल्पितत्वेन शुक्तिरजतसमानयोगक्षेमत्वात् अवास्तवस्य तस्य न भ्रमः संभवति ॥ नहि शुक्तिरजतमेव शुक्तावात्मानं कल्पयति आत्माश्रयप्रसंगात् ॥ नापि स्थाणौकल्पितःपुरुषः क्वापि भ्राम्यति ॥ नच वास्तवस्य ब्रह्मणस्तद्द्रष्टृत्वं कल्प्यं भ्रांतत्वापत्तेर्ज्ञानघनस्य च भ्र-

मायोगात् ॥ तस्य मायासंबंधतोभ्रमइतिचेत् सापिकल्पिता न वा ॥ द्वितीये कदापि नोच्छिद्येत ॥ आद्ये सा केन कल्पिता शुद्धब्रह्मणएव तत्कल्पकत्वे तत्संबंधे च सत्यऽनिर्मोक्षप्रसंगः । मोक्षोत्तरमपि तत्संभवे प्रतिबंधकाभावात् ॥ मायोपहितस्य कल्पकत्वेत्वात्माश्रयादयः ॥ अतोरजतादिभिन्नदेवदत्तादिवद्वास्तवस्यान्यस्याध्यासितुरभावान्न भ्रमउपपद्यते ॥ किंच हट्टादौ सत्यं रजतं नरेंद्रकरंडकादौ सत्यं भुजंगमं च दृष्ट्वा वृद्धव्यवहारात्तत्र तत्र तत्तच्छब्दसंकेतं गृहीतवंतः समुत्पन्नतत्संस्काराएव शुक्तिरज्वादौ तमसा तत्तत्कल्पयंति ॥ अनुत्पन्नसंस्कारा बालादयस्तु तिमिरभरे चरणेन रज्जुशतमतिक्रामंतोऽप्येकमहिमपि नहि कल्पयंति ॥ तथा प्रकृते परिदृश्यमानादतिरिक्तं सत्यं जगत्काप्यनुभूतं स्यात् तदा तज्जन्यसंस्कारादिदमनृतं कल्प्येत तदेवनास्तीति संस्काराभावान्न भ्रमः ॥ तदंगीकारे त्वंते रंडाविवाहइति न्यायादिदमेव सत्यं स्वीक्रियतां ॥ संस्काराभावेऽपि भ्रमस्य असतोपि संस्कारजनकतायावा प्रसह्य स्वीकारे तु क्वचिदिदंशशशृगमिदंखपुष्पमित्यादिभ्रमोऽप्यापद्येत ॥ किंच शुक्तौ रजतस्यैव रज्जौ भुजंगस्यैव भ्रमे विपर्ययाभावे च हेत्वपेक्षायां तत्तत्सादृश्यमेव तत्वेन सिध्यति ॥ तच्च भ्रमे साक्षादपि हेतुर्नतु संस्कारोद्बोधनमात्रद्वारा ॥ अन्यथा शुक्तिदर्शनकालेबुद्धौ तमः संबंधे गजइतिशब्दादिना तत्संस्कारस्योद्बोधे च तत्र गजभ्रमोदुर्वारएव स्यात् ॥ प्रकृतेचजगद्ब्रह्मणोः सादृश्याभावान्न भ्रमः॥सादृश्ये तु ब्रह्मणि साकारत्वजडत्वाद्यापत्तिः योवा द्वयोः साधारणोधर्मः स परस्य निर्विशेषतां बाधेतैव ॥ एवं अध्यासितुर्वास्त-

---

## सहस्राक्ष

एतेनैव भैक्षवमतमुपन्यस्य यदुक्तं तन्मायावादिविध्वंसध्वस्तप्रायमिति तदेवध्वस्तम् ॥माया हेतुवादस्य निवारयितुमशक्यत्वात् ॥ अध्यासितुर्वास्तवत्वमध्यास्यस्याऽन्यत्रवास्तवत्वंवानाध्यासे प्रयोजकं प्रमाणाभावाद्गौरवाच्च ॥ एवञ्च जीवस्योपाधेरवास्तवत्वेऽपि संसारस्यान्यत्राऽवास्तवत्वेऽपिच माययाऽध्यस्तत्वरूपस्य मायिकत्वस्य नानुपपत्तिः ॥ नच ब्रह्मणोघटपटाद्यात्मना भासे ब्रह्मणस्तत्सदृशत्वापत्तौ साकारता स्यात् नहि रज्जौ हयाऽऽकाराऽऽभासः किन्तु सर्पाऽऽकाराऽऽभासएवेतिवाच्यम्॥ अध्यासे सादृश्यस्य साक्षादप्रयोजकत्वात् ॥ संस्कारोद्बोधद्वारा हि सतत्रप्रयोजकः संस्कारोद्बोधस्य तु न सादृश्यज्ञानमेव कारणं किन्त्वदृष्टाद्यपि रज्जावश्वाऽध्यासाऽभावस्तु केनाऽपि हेतुना तत्संस्काराऽनुद्बोधात् ॥ अन्यथा भुजगदण्डभूच्छिद्रमालाजलधाराद्यध्यासोयुगपद्रज्जौ स्यात् ॥ पृथक्तदध्यासदर्शनेन• सादृश्यस्याऽप्रत्याख्येयत्वात् ॥ पुर्वपूर्वाऽध्यासजन्यसादृश्यस्य ब्रह्मण्यङ्गीकारे साकारतापत्तेरभावाच्च ॥

वत्वमित्याद्यादरे प्रमाणं सर्वत्र भ्रमस्थलेषु तत्तदन्वयव्यतिरेकदर्शनमेवातो न तदभावः ॥ प्रामाणिकं गौरवं च न दोषाय ॥ अन्यथा घटं प्रति कुलालादीनां बहूनां हेतुत्वं गौरवभयान्न स्वीकार्यं एतेनैव ( एव च जीवस्योपाधे ) रित्यादिकं निरस्तं स तत्र प्रयोजक इति पुंस्त्वं तु चिंत्यं ॥ अत्राध्यासः सादृश्ये प्रयोजकोन विवक्षितः किंतु तदेव तत्र तथेतियच्च ( संस्कारोद्बोधस्य तु न सादृश्यज्ञानमेव कारणं किंत्वदृष्टाद्यपी ) त्यादि वदतां प्रकृते सादृश्याभावेऽप्यदृष्टादिद्वारा संस्कारोद्बोधाद्भ्रम इति समाहितं तदसंगततरं रज्वदर्शनकालेऽदृष्टद्वारा शब्दादिद्वारा वा संस्कारस्योद्बोधे प्रतिबंधकाभावेन तत्र ह्याकाराभासस्य दुर्निरोधत्वात् ॥ किंच जगद्भ्रम संस्कारोद्बोधकतयोच्यमानमदृष्टमपि कल्पितं न वा आद्ये ब्रह्मणि विचित्रतत्तददृष्टसादृश्यस्य दृष्टरितत्तत्संस्काराणामदृष्टेतरतदुद्बोधकस्य चाभावाद्दोषस्तदवस्थः ॥ द्वितीये तु द्वैतापातादपसिद्धांतः ॥ इतरत्तु सर्वं मूलएव विशदीकृतमिति किमाम्रेडितेन ॥ **बाधस्याभावादिति** ॥ शुक्तौ रजतमिति ज्ञानं नेदं रजतं शुक्तिरियमित्यभ्रांतवचनश्रवणसमकालमेव निवर्तते प्रकृतेतुसर्वं खल्विदं ब्रह्म तत्वमस्यादिवाक्यश्रवणेऽपि प्रपंचप्रतीतिर्ननिवर्तते यदि भ्रमः स्यात्तर्हि पूर्ववन्निवर्तेत ॥ नचाविद्यासत्वं यावत्तावत्तदनिवृत्तिरुचितेति वाच्यं ॥ तस्याअपि कल्पितत्वेनाविद्यामृषेति श्रवणमात्रादेव तन्निवृत्तेरप्यावश्यकत्वात् ॥ साधनैरेव तन्निवृत्तौतान्यपि तत्समानयोगक्षेमाणि ॥ नचजीवन्मुक्तौ प्रपंचबाधःशंक्यः तदानीमपि तस्य प्रपंचप्रतीतेरुक्तचरश्रुत्यादिभिर्बोधनात् उक्तदिशातद्दशायाएव तवासिद्धेश्च ॥ अतोबाधाभावान्न भ्रमत्वम् ॥ **भिद्यतेहृदयग्रंथि रित्यादि** इदं मुंडकवाक्यं यदापश्य इत्यपि तद्वाक्यं ॥ आदिपदेन " दृश्यतेत्वग्र्यया बुध्या ॥ कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ जुष्टंयदापश्यत्यन्यमीशं ॥ ज्ञानप्रसादेनविशुद्धसत्वस्ततस्तुतंपश्यतेनिष्कलंध्यायमानः " इत्यादीनि कठमुंडकादिवाक्यानि तलवकारोपनिषत्तृतीयखंडादिकं नतुमांशक्यसेद्रष्टुमनेनैवस्वचक्षुषा ॥ दिव्यंददामितेचक्षुः पश्यमेयोगमैश्वरम् । ज्ञातुंद्रष्टुंचतत्वेन ( अ०३ पा०२ सू०२४ ) " अपिसंराधनेप्रत्यक्षानुमानाभ्यां " तृतीयस्कंधेपश्यंतितेमेरुचिराण्यंबसंत इत्यादिस्मृतिसूत्रपुराणवाक्यानि च संगृह्यंते ॥ नचैषां ज्ञेयतापरत्वमेव नतु चाक्षुषादिपरत्त्वमिति वाच्यं ॥ आवृत्तचक्षुः दिव्यंददामितेचक्षु रित्यादिविरोधात् ज्ञातुंद्रष्टुमितिपृथङ्निर्देशात् तलवकारादौस्पष्टं स्पर्शादेः श्रावणाच्च ॥ **भ्रमस्यनिश्चयरूपत्वादिति** ॥ एककोटिकज्ञानस्य निश्चयशब्दार्थत्वं तार्किकपरिभाषामाश्रित्येदमुक्तं तेषांभ्रमप्रमाभेदेन निश्चयस्य द्वैविध्यात् ॥ अतः संशयोऽथविपर्यासइत्यस्य न विरोधः ॥ **नचपूर्वेत्यादि** ॥ संस्काराणामपि कल्पितत्त्वेन तत्कल्पनहेतुः संस्कारांतरंब्रह्मणि तत्तत्सादृश्यं च नैवास्तीति तत्कल्पनस्यासंभवे

कुतस्तरां ततः प्रपंचकल्पना नापि तादृशसंस्कारपरंपरावशादेव जीवेन ब्रह्मणा वा जगत्कल्पितमिति बोधिका काचिदपि श्रुतिरस्ति यद्बलात्तथाश्रीयेतेति समाधेरभावः ( अ०२ पा०२ सू० ३० ) "नभावोऽनुपलब्धेः"इत्यादिना सूत्रकृतोपपादितस्य वासनासंतानपक्षे दूषणभरस्यात्राप्यापत्त्या तथांऽगीकारे तत्सूत्रविरोधोबाह्यमतप्रवेशश्च स्यात् ॥ संस्कारपरंपराकल्पनानिर्वाहायापि ब्रह्मणि सादृश्यसाकारत्वादिरापत्त्या च भक्षितेऽपि लशुनेनशांतोव्याधिरित्यलम् ॥

नन्वविद्यायाअनादित्वादध्यासोऽप्यनादिरेव अविद्याया-अनादित्वं च "नासदासीन्नोसदासीत्किंतुतम" इतिश्रुति सिद्धं लाघवादनादिसंसारकारणसिद्धावन्यकल्पनायायोगादितिचेन्न मायायाअनादित्वे " सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयं आत्मावाइदमेकएवाग्रआसीन्नान्यत्किंचनमिष " दित्यादिश्रुतिविरोधः ॥ " नासदासी " दित्यादिश्रुतेश्च स्थूलसूक्ष्माभावबोधकत्वं नत्वविद्याबोधकत्वं ॥ नच श्रुत्यंतर्गततमः शब्देनाविद्याप्रतीयतइति वाच्यं ॥ तमःशब्दस्याप्यभावबोधकत्वात् प्रकृष्टमहत्वोद्भूतानभिभूतरूपवत्तेजोऽभावएव तमःशब्दोलोकेप्रसिद्धोनत्वविद्यायामपि॥ वस्तुनोऽत्र ब्रह्मैवतमः॥एतेन पूर्वपूर्ववासनानामुत्तरोत्तराध्यासं प्रतिहेतुत्वोक्तिः प्रत्युक्ता ॥ अध्यासस्यानादित्वे मानाभावात् ॥ बालस्यापि स्तन्यपाने प्रवृत्तिर्नानाऽऽदिकर्मप्रवाहजन्या किंतु"परात्तुतच्छ्रुते" रितिसूत्रानुसारेणेश्वराधीनैव ॥ यथा जडस्य कर्मणः फलदातृत्वं न तथैव प्रवर्त्तकत्वमपि न संभवति ॥ प्रवर्त्तना हि प्रेरणा सा च चेतनधर्मएव नतु जडधर्मः ॥ एवं च ( बालस्य स्तन्यपाने प्रवृत्तिदर्शनेन पूर्वसंस्कारसिद्धौ संस्कारप्रवाहस्यानादित्वेन संसारस्यानादित्वसिद्धि ) रित्यसंगतं ॥ संस्कारस्य

स्मृतिं प्रति हेतुत्वेन प्रवृत्तौ संस्कारस्य कर्मणोवाहेतुत्ववि-
वक्षणे च पूर्वोक्तएव दोषः ॥ किंच प्रवृत्तिं प्रति न सं-
स्कारस्य नापि कर्मणोवा हेतुत्वं वैदिकानां मते ईश्वरस्य
नैयायिकानां मते तु चिकीर्षादीनामेव हेतुत्वात् ॥ उक्तंच तैः
चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा उपादानस्यचाऽध्यक्षं-
प्रवृत्तौजनकंभवेत् ॥ तथाचाविद्यायाअनादित्वासिद्धौ बंधो-
ऽस्याऽविद्ययाऽनादिरितिस्मृतिरपि बंधस्य चिरंतनत्वंबोधयति-
"अक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवती"तिश्रुतिवत् ॥ किं-
च भवन्मतेऽविद्ययेति तृतीया हेतौ करणे वा नाद्यः ॥
दंडेन घटइत्यत्र यथा दंडेघटोत्पादकत्वरूपं हेतुत्वं तथाऽ-
त्रापि चेद्बंधस्यानादित्वकथनं व्याहतं उत्पत्तिमतोऽनादित्वा-
संभवात् ॥ द्वितीयोपि न क्रियाभावात् कारकविभक्तीनां
क्रियान्वयित्वनियमात् ॥ नहि क्रियाविनिर्मुक्तं वाक्यमस्तीति
भाष्यप्रामाण्यात् ॥ गोपेन गावइत्यादिवदुपपत्ते रितिसमाधान-
मप्यसंगतं तादृशवाक्यस्यैवाभावात्॥ नच तिष्ठतीत्यध्याहारोपि
संभवति स्थितेरप्यनादित्वात्तत्रापि तस्य करणत्वासंभवात्
करणत्वस्य कारणत्वघटितत्वात् ॥ तस्माद्बंधस्यानादित्वेऽविद्य-
येतितृतीयान्वयोबाधितएवस्यादतस्तदन्वयानुपपत्तिरूपबीजेन
लक्षणा कर्त्तव्या ॥ सा च चिरकालिकत्वे एव तथाच ( सा-
दित्वं तु बंधस्य नांगीकर्त्तुं युक्तं अस्यां स्मृतावनादिशब्दार्थ-
त्यागेबीजाभावादिति यदुक्तं तदसंगतं तत्रान्वयानुपपत्तिरूप-
बीजस्य दर्शितत्वात् प्रवाहानादित्वेन संसारोनादिरितिप्रयो
गस्तुसंसारपदस्य प्रवाहे लक्षणां अनादिपदस्यापि स्वसजाती-

यध्वंसव्याप्यप्रागभावप्रतियोगित्वे लक्षणां विना दुर्घटतयां न शक्तिसाधकः ॥ तस्मादनादिशब्दोगौण एव देवेष्वमरशब्द- वत् ॥ ननु देवेष्वमरपदस्य मुख्यत्वे "तद्यथेहकर्मचितोलोकः क्षीयतएवमेवामुत्र पुण्यचितोलोकः क्षीयत" इत्यादिश्रुतिविरो- धात्तस्यौपचारिकत्वमस्तुसंसारेऽनादिशब्दस्य मुख्यार्थत्वे तु न कश्चिद्विरोधइतिचेन्न तत्रापि "आत्मावाइदमेकएवाग्रआसी- न्नान्यत्किंचनमिष"दित्यादिश्रुतिविरोधस्य सत्वात् ॥ नच सं- सारस्य सादित्वे "धातायथापूर्वमकल्पय"दितिश्रुतेः ऋषीणां- नामधेयानियाश्चवेदेषुदृष्टयः शर्वर्य्यंतेप्रसूतानांतान्येवैभ्योद- दात्यजइत्यादिस्मृतेश्च विरोधोदुर्वारइतिवाच्यं ॥ तादृशवाक्या- नांशर्वर्य्यंतधातृपदपर्य्यालोचनयादैनंदिनसृष्टिविषयकत्वेनाना- दित्वासाधकत्वात्. नापि "समाननामरूपत्वाच्चावृत्तावप्यवि- रोधोदर्शनात्स्मृतेश्चे"तिसूत्रविरोधः ॥ सच सृष्टिप्रलययोरस्वीका- रएव संभवति ॥ नह्यस्मन्मते सृष्टिप्रलययोरस्वीकारः परंतु प्रथ मतः सृष्टिरीश्वरस्य रमणेच्छयैव "लोकवत्तुलीलाकैवल्य"मि- तिन्यायात्॥ सृष्टिप्रलयौत्वाविर्भावतिरोभावरूपौ ॥सूत्रार्थस्तु॥ नन्वस्य प्रपंचस्यानुकारित्वेन वाच्यत्वेन वा स्वीक्रियमाणत्वे सृष्टिप्रलययोर्विद्यमानत्वादनित्यसंयोगः प्राप्नोति तत्राह ॥ स- माननामरूपत्वादावृत्तावपीति ॥ आवृत्तावपि समुद्रे जलप्रक्षे- पवत् पुनरुपादाने तदेवेतिनिश्चयाभावेपि नामरूपयोस्तुल्यत्वा- दन्यस्य भेदकस्याभावान्नानित्यसंयोगः ॥ कुतः ॥ दर्शनात् ॥ दृश्यतेहि तथा वेदपितृमातृस्त्रीभर्तृशरीरगंगाप्रवाहादिषु ॥ तदे- वेतिव्यवहारस्य सिद्धत्वादिति ॥ न च संसारस्य सादित्वे कृत-

नाशाकृताभ्यागमादिदोष इति वाच्यं ॥ ईश्वरेच्छयेश्वरसका-
शाच्युच्चरितैर्जीवैः कर्माणि क्रियंते तत्तत्कर्मफलमपीश्वरकृत-
मर्यादया तस्य तस्य जीवस्य भवत्येवेति दोषाभावः ॥ नहि
जीवानामनित्यत्वं येन कृतनाशः स्यात् नहि कर्मणैव फलं
किंत्वीश्वरेच्छयापि नातोऽकृताभ्यागमः फलाकस्मिकत्वप-
र्य्यायः ॥ यस्तु तथाचेत्यादिना प्रेक्षावतोमोक्षार्थं प्रवृत्त्यभावा-
पादनरूपोमोक्षमार्गोच्छेदरूपश्चदोषआपादितः सोऽपि त्वन्मत
एव संभवति ॥ सर्वं स्वमतुल्यं स्वस्वरूपमपि स्वमकल्पितजीव-
समं जानतः मोक्षं मोक्षसाधनं गुरुं वेदं च मिथ्यात्वेन जानतो
वामदेवशुकादीनामपि मुक्तिर्न जातेति मम मुक्तिः कुतोभव-
ष्यतीति मुक्तिप्रत्याशाशून्यस्य कथं मोक्षमार्गे प्रवृत्तिरिति मु-
क्तिमार्गोच्छेदस्त्वन्मते ॥ अस्मन्मते च यस्य बंधनसामर्थ्यं त-
स्यैव मोचनसामर्थ्यं दृष्टं च राजनि यथा राज्ञा बद्धोराजान-
मेवाश्रयते राजकृपया मुच्यतेच एवमेवेश्वरकृपया मुच्यते
पुनश्च सुखी भवति " सोश्नुतेसर्वान्कामान्सह ब्रह्मणाविपश्चिते"
तिश्रुतेरिति नमुक्तिमार्गोच्छेदः॥ किंच संसारस्यानादित्वेत्वन्मते
तस्यमिथ्यात्वंनस्यात् त्रैकालिकनिषेधप्रतियोगित्वाभावात् ॥
आदावंतेचयन्नास्तिवर्त्तमानेपित त्तथा वितथैःसदृशात्सेनेवित-
थाइवलक्षिताइतिगौडपादकारिकाविरोधश्च किंच त्वन्मते यद्ग-
त्वाननिवर्त्तंतेतद्धामपरमंममेतिस्मृतेः अनावृत्तिःशब्दादितिसू-
त्रस्यच विरोध स्यात् जीवस्य पारमार्थिकं स्वरूपं ब्रह्मैवेति
तस्य गमनासंभवात् तस्य व्यापकत्वात् व्यावहारिकं त्वौपा
धिकं तस्य चोपाधिनाशेन नाशात्प्राप्तिरेव न संभवति ॥

प्राप्तेरसंभवेन निवृत्तिशंकाया असंभवादसंगतिः ॥ एवं सूत्रेपि संदेहासंभवादित्यलं ॥

सहस्राक्षे साचेयंमायेत्यादि उत्पन्नत्वादित्यलमित्यंतं भागं खंडयंति ॥ **नन्वविद्याया इत्यादिना ॥ संदेहासंभवादित्यलमित्यंतेन** ॥ अयमाशयः ॥ यदि मायाऽपिब्रह्मवदनादिः स्यात् तदा ऐतरेयोपनिषदि "आत्मावाइदमेकएवाग्रआसीन्नान्यत्किंचनमिषत् " तैत्तिरीये " नासदासीन्नोसदासी "दित्यादि । तथा " ब्रह्मव-

## सहस्राक्ष.

साचेयं मायाऽनादिः ॥ नासदासीन्नोसदासीत्किंतुतमः इतिश्रुतेः ॥ लाघवाच्च अनादिसंसारकारणतासिद्धौ तस्याः सादितायावक्तुमशक्यत्वाच्च॥ पूर्वपूर्ववासनानामुत्तरोत्तराध्यासंप्र ति पूर्वपूर्वकर्मणामुत्तरोत्तरजन्म प्रतिच हेतुत्वात् बालस्य स्तन्यपाने प्रवृत्तिदर्शनेन पूर्वसंस्कारसिद्धौ संस्कारप्रवाहस्य कल्पनीयत्वाच्च संसारस्याऽनादितासिद्धिः ॥ अतएव बन्धोऽस्याऽविद्ययाऽनादिरितिस्मृतिः संगता ॥ नच बन्धस्याऽनादित्वेऽविद्ययेति तृतीयाऽनुपपत्तिरिति वाच्यम् ॥ गोपेन गावइत्यादिवदुपपत्तेः ॥ नच तत्र जीवन्तीत्यादिपदाध्याहारइतिवाच्यम् ॥ इहाऽपि तिष्ठतीत्यध्याहारस्य सुलभत्वात् ॥ अतएव भागवते तृतीयस्कन्धे विश्वंवैब्रह्मतन्मात्रंसंस्थितंविष्णुमायया इत्यत्र संस्थितमित्युक्तम् ॥ सादित्वंतु बन्धस्य नाङ्गीकर्तुं युक्तम् ॥ अस्यां स्मृतौ अनादिशब्दार्थस्य त्यागे बीजाभावात् ॥ प्रवाहाऽनादौतु संसारोऽनादिरित्यादौ नैयायिकादीनां सर्वेषां प्रचुरः प्रयोग इति तत्राऽनादिशब्दस्य शक्तिरेव निरूढलक्षणावा ॥ देवेषु त्वमरशब्दस्य रूढिरेव ॥ योगासंभवे तस्याः सर्वसम्मतत्वात् ॥ तस्य देवेष्वौपचारिकत्वेपि यथा तत्र तद्यथेहकर्मचितोलोकइत्यादिश्रुतिरनुग्राहिकाऽस्ति तथाऽत्र किञ्चिदनुग्राहकं नोपलभ्यते इति नेहाऽऽमरशब्दवदुपचरितार्थता ॥ प्रत्युत तथात्वे धातायथापूर्वमकल्पयदितिश्रुतेः ऋषीणांनामधेयानियाश्चवेदेषुदृष्टयः शर्वर्यन्तेप्रसूतानांतान्येवेभ्योददात्यजः इत्यादिस्मृतीनां समाननामरूपत्वाच्चाऽऽवृतावविरोधोदर्शनात्स्मृतेश्चेतिसूत्रस्य च विरोधः स्यात् ॥ सूत्रार्थादिकमुत्तरभागे एकोनचत्वारिंशखण्डखण्डने स्फुटीभविष्यति ॥ बन्धस्य सादित्वेऽकृताऽभ्यागमादिदोषप्रसङ्गश्चस्यात् ॥ तयाच यथापूर्वं विनाकारणान्तरमीश्वरोमां संसारान्धकूपेऽक्षिपत्तथा पुनरपि क्षेप्स्यतीति विचारयन्नकोपि प्रेक्षावान्मोक्षार्थं यतेतेति मोक्षमार्गएवोच्छिद्येत ॥ संसाराऽनादित्वबोधकवाक्येष्विव नसपुनरावर्तते यद्गत्वाननिवर्त्तन्ते अनावृत्तिःशब्दादित्यादिष्वपि कुतर्कप्रवृत्तेरप्रतिबन्धात् ॥ प्रत्युत मोक्षस्य नाशे जन्यस्य नाशइति नियमोऽनुकूलः स्यात् लयरूपस्य तस्योत्पन्नत्वादित्यलम् ॥

नंब्रह्मसवृक्षआसीत्”इत्यादि ॥ पुरुषविधब्राह्मणे “ आत्मैवेदमग्रआसीत्पुरुषविधःसोऽनुवीक्ष्यनान्यदात्मनोपश्यत् छांदोग्ये “ सदेवसौम्येदमग्रआसीदेकमेवादितीयं ” गोपथब्राह्मणे “ ब्रह्महवाइदमग्रआसीत् । स्वयंत्वेकमेवतदैक्षत महद्वयक्षं तदेकमेवास्मि हंताहंमदेवमन्मात्रं द्वितीयंदेवंनिर्ममइति ” एवमाद्याऋग्यजुः सामाथर्वश्रुतयोबाध्येरन् ॥ तासु हि सृष्टेः प्राक् ब्रह्मणएव सत्ताऽवधार्यते । वस्त्वंतरसत्ता च निषिध्यते ॥ यदि च भावरूपा माया तदा स्यात्तर्हि सर्वज्ञोऽप्यात्माऽनुवीक्ष्यापि तां कुतोन पश्येत् ॥ एकमेवाद्वितीयमितित्रिविधभेदनिषेधश्च कथं संगच्छेत ॥ कथंच “ एकमेवास्मिहंताहंमदेव मन्मात्रं” इति सर्वज्ञस्येक्षणं च घटेत ॥ एतेन ऐतरेयेमिषतोनिषेधादचेतनस्यान्यस्य स्थितिर्न विरुद्धेति द्वैतिनां कल्पनाऽप्यपास्ता ॥ वस्त्वंतरसत्वे पुरुषविधब्राह्मणादौ त्वान्याभावाद्भयाभावोरमणाभावोरमणार्थं द्वितीयेच्छा तस्यैवैतावद्रूपेण भवनं चाम्नायमानं तदानीं वस्त्वंतरसत्वे जगतस्तदुपादानकत्वे च विरुध्येतैव ॥ तेन यश्च “नासदासीन्नोसदासीत्किंतुतमः ” इति विलक्षणएव श्रुतिपाठउपन्यस्तः । सचोपहासार्थं मूले पूर्वपक्षे तथैव संगृहीतः ॥ वस्तुतस्तु नासदासीदितिमंत्रद्वयार्थः प्रागेव समर्थितः ॥ तत्र च “ किमावरीवः कुहकस्यशर्मन् ” इत्यावरणशक्तिकमायादेस्तदा सत्ता स्पष्टमेव प्रतिषिद्धा ॥ स्वधयेति स्वेनैव जगतोधारणं तस्यैकत्वं चोक्त्वा “ तस्माद्धान्यंनपरः किंचनास ” इति स्पष्टमेव तदन्यस्य प्रतिषेधोदर्शितः ॥ अतः “ तम आसीत्तमसागूढमग्रेप्रकेतं सलिलंसर्वमाइदं ॥ तुच्छेनाभ्वपिहितंयदासीत्तमसर्तस्तन्महिनाजायतैकं ” इत्यग्रिममंत्रेऽपि तमःशब्देन न सा । पूर्वमेव प्रतिषिद्धत्वादन्यप्रतिषेधविरोधाच्च ॥ किंतु आनीदवातमित्यादिनातच्छब्देन यदुक्तं तत्स्वरूपमेवात्रोच्यते । तत्र पूर्वं रात्रिदिवसप्रकेतसूर्यनक्षत्रादिनिषेधात्सर्वस्य सुप्तवत्तत्रैव लीनत्वात्सर्वाच्छदकत्वाच्चेह तमःशब्देन ब्रह्मैव ॥ इदं च द्वितीयस्कंधनवमाध्याये अहमेवासमेवाग्रइत्यत्र सुबोधिन्यां स्फुटं ॥ तमःशब्दस्य सांख्यपरिभाषया वस्त्वंतरपरत्वे (अ.२ पा.१ सूत्रं २) “इतरेषांचानुपलब्धेः”इति सूत्रं विरुध्येत ॥ तथाच तदा तमः सर्वाच्छादकं ब्रह्मैवासीत् आसमंतात् इदं इदानीं नामरूपाभ्यां व्याकृतं जगत् अग्रे सृष्टेःपूर्वं अप्रकेतं अप्रज्ञायमानं सलिलं कारणेन अविभक्तं तमसा पूर्वोक्तरूपेण ब्रह्मणा गूढम् आच्छादितं तिरोभावितमितियावत् आसीदित्यर्थः ॥ “ यथा तमःपदार्थानावृणोतीति एवं इदमपि ब्रह्म तत्त्वमावृणोतीतितमःशब्देन व्यवहारः ” इतिविद्यारण्यस्वामिनाव्याख्यानेऽपि लक्षणयैव मायापरत्वं दर्शितं ॥ मम तु ब्रह्मणः सर्वशब्दवाच्यत्वान्नलक्षणापीतिपूर्वापरानुरोधादिदमेवादरणीयं ॥ ननु पूर्वजगतोऽभावे ब्रह्मणा तस्य गहनं कथं संगच्छतइतिचेत्पूर्वसृष्टिप्रलयेतोदनेनसर्वंतिरोभावितमित्याश-

येनाह ॥तुच्छेनेत्यादि॥ अत्र तुच्छशब्देन प्रलयकर्तृ ब्रह्म ॥ अतएव महोपनिषदि "एषह्ये-
वशून्यएषह्येवतुच्छएषह्येवाभावएषह्येवाव्यक्तोऽदृश्योऽचिन्त्योनिर्गुणश्चेति" ॥ महाकौ-
र्मेपि ॥ शमूनंकुरुतेविष्णुरदृश्यःसनूपरःस्वयं । तस्माच्छून्यमितिप्रोक्तस्तोदनात्तुच्छमुच्य-
ते । नैषभावयितुंयोग्यःकेनचित्पुरुषोत्तमः । अतोऽभाववदंत्येनंनाश्यत्वान्नाशइत्यपि ।
सर्वेषांतदधीनत्वात्तत्तच्छब्दाऽभिधेयता । अन्येषांव्यवहारार्थमिष्यतेव्यवहर्तृभिरिति ॥
तथाच आसमंताद्भवति उत्पद्यते इत्याभु जगत् तुच्छेन प्रलयरूपतोदनकृता पूर्वो-
क्ततमसा अपिहितं आच्छादितं तिरोभावितं यत् आसीत् तत् तमसः पूर्वोक्तात्
ब्रह्मणःसकाशादेव महिना महत्वेन पटवद्विस्तारेण अजायत प्रादुरभवत् तच्च
नानादृश्यमानमपि वस्तुतोब्रह्मणएव तत्तद्रूपत्वादेकत्वमित्यर्थः॥यत्तु तत्त्वज्ञाननिवर्त्य
त्वात्तुच्छशब्देन मायेति तद्व्याख्यानं ॥ तन्न ॥ शुक्तिरजतवत्तुच्छेनाच्छादनस्यायोगा-
त् । तादृशरजते भाजनभूषणादेरिव तस्यां जगतउपादानत्वस्यासंभवेन ततोजननस्या-
योगात् व्याख्याने मृद्घटबीजवृक्षदृष्टांतकथनपूर्वकं स्वयमुक्तस्य सत्कार्यवादस्य-
बाधाच्च ॥ किंच साध्युपहितेन कल्पिता शुद्धेन वा आद्येन्योन्याश्रयोद्वितीये
शुद्धत्वबाधइत्याद्युक्तवक्ष्यमाणदूषणग्रस्तत्वान्न तस्यास्तुच्छत्वं शक्यवचनं अग्रे-
ऽपि "कामस्तदग्रेसमवर्तताधि" इत्यादिना इच्छापूर्वकसर्गादिकथनात्तमः
शब्दार्थोब्रह्मैव ॥ अन्यथात्वीक्षत्याद्यधिकरणानां "कामाच्चनानुमानापेक्षा" इ-
त्यादिगुणसूत्राणां च विरोधः ॥ पुनरग्रेऽपि "कि ँ स्विद्वनं कउसवृक्षआसीत्
यतोद्यावापृथिवीनिष्टतक्षुः ॥ मनीषिणोमनसापृच्छतेदुतत् यदध्यतिष्ठद्भुवनानिधारय
न् ॥ ब्रह्मवन ब्रह्मसवृक्षआसीत् यतोद्यावापृथिवीनिष्टतक्षुः ॥ मनीषिणोमनसाविब्र-
वीमिवः ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इति पठ्यते ॥ अत्र यथाकाष्ठोपादा-
नकं जुहूस्रुवादिकं बहुवृक्षसमुदायरूपवनस्यैकदेशवृक्षस्यांशभूतं तत्रैवस्थितं तक्ष-
णात्तत्एवाभिव्यज्यते तथा इदं जगदपि विभागादेवाविर्भूतं वनसमपुरुषोत्तमैकां-
शस्याक्षरब्रह्मणोंऽशभूतं तत्रैव स्थितं तदिच्छयाऽभिव्यज्यतइति ज्ञापनायसृष्टि-
हेतुभूतवनादिकं जगतोऽधिष्ठातारं धारयितारं च पृष्ट्वा ब्रह्मणएव वनत्वं वृक्षत्वं
धारणपूर्वकमधिष्ठातृत्वं चोत्तरित्तं ॥ यदि तमः शब्देन ब्रह्मनाभिप्रैष्यत् किंतु मू-
लाज्ञानएव मृद्घठबीजवृक्षादिन्यायेन जगदवस्थानमभिप्रैष्यत् तदा ब्रह्मवनमित्या-
दिनैवावक्ष्यत् ।किंतु मायावनं तमोवनं तमः सवृक्षआसीदित्याद्येवावदिष्यत् ॥ त-
स्मादपि तमोऽत्र ब्रह्मैव ॥ एतेनैव ( अ० १ श्लो० ५ ) आसीदिदंतमोभूतमप्रज्ञातम-
लक्षणं ॥ अप्रतर्क्यमविज्ञेयं प्रसुप्तमिवसर्वत इति मनुवचनमपि व्याख्यातं अग्रे अनु-
पदं ( श्लो०६।७ ) ततःस्वयंभूर्भगवानव्यक्तोव्यंजयन्निदं ॥ महाभूतादिवृत्तौजाः प्रादु-
रासीत्तमोनुदः ॥ योसावतींद्रियग्राह्यः सूक्ष्मोऽव्यक्तःसनातनः ॥ सर्वभूतमयोचिंत्यः
सएवस्वयमुद्बभौ सोभिध्यायशरीरात्स्वात्सिसृक्षुर्विविधाःप्रजाइति तस्यैव पूर्वमव्य

कत्त्वस्य सूक्ष्मकारणत्त्वस्य सर्वव्यंजकत्त्वस्य सर्वभूतात्मकत्त्वस्य स्वयमेव जगद्रूपेण भवनस्य अभिध्यानपूर्वकं स्वरूपतएव विविधप्रजासर्जनस्य च कथनेन तत्रापि तथैव तमःशब्दार्थस्य प्रतीतेः ॥ अन्यथा "आत्मैवेदं । सदेवसौम्येदं" इत्यादिश्रुतिशतविरोधादप्रमाणं स्यात् पूर्वतंत्रे ( अ १ पा० ३ सू० ३ ) विरोधेत्वनपेक्षमिति न्यायात् ॥ तमोनुदइतितु स्वतेजसा यानुपुरापवृत्तमइति सप्तमस्कंधाद्युक्तं प्रलयांधकारापनोदनमेव ॥ नचायं स्वयंभूर्ब्रह्मा शंक्यः ॥ अथैंऽडोत्पत्त्यनंतरं ( श्लो० ९ ) तस्मिन्नंडेस्वयंब्रह्मासर्वलोकपितामहइतिपृथक्कथनात् ॥ जीवकल्पितस्य तुच्छस्य तु ब्रह्मणा प्रेरणमप्यशक्यवचनं ॥ एतदेवाभिप्रेत्य समाकर्षसूत्रआकरे "तमआसीदित्यनभिव्यक्तं" कर्मपक्षेऽपि ब्रह्मत्वप्रक्षतं तत्पक्षस्य गौणत्वज्ञापनाय तत्र प्रकाशे कर्माण्युच्यतइत्यपि शब्दः प्रयुक्तः ॥ एवमेव सुबोधिनीतत्प्रकाशाभ्यामैकार्थ्यं पूर्वोक्तानादरे तमःशब्दस्यांधकार एव प्रसिद्धत्वात् लौकिकतर्कादिदर्शनेषु तस्य तेजोऽभावरूपत्वांगीकारात् केवललोकानुरोधे तादृगभावएव तदा रात्रिदिनचिह्नसूर्यचंद्रादिविरहात्सिध्येन्नतु त्वदभीष्टमित्याशयेन वक्रोत्तरमुक्तं मूले ॥ **अभावबोधकत्वादित्यादि** अतएव लोकइत्युक्तं ॥ सिद्धांतस्तु प्रागुक्तएव तमेवाहुः ॥ **वस्तुनोत्रब्रह्मैव तमइति** ॥ यच्च लाघवाच्चानादिसंसारकारणतेत्यादि तदसंबद्धं संसारस्य कार्यत्वेऽनादित्वायोगात् कार्यनियतपूर्ववृत्तेरेव कारणत्वात् ॥ अविद्योत्तरकालिकतया तत्कार्ये तस्मिन् चिरंतनत्वमेवानादित्वमितिचेत्सिद्धमस्मदभीष्टम् ॥ नापि लाघवं श्रुतिष्ववश्यकृप्तमायाईश्वरेच्छायाएव सर्वकारणत्वे संभवत्यविद्यारूपकारणांतरस्वीकारे गौरवात् ॥ तस्याः सादित्वं तु माययामेविनिर्मिते इति वचनबलाच्छक्यमेव वक्तुमिति वक्ष्यते ॥ यच्च ( पूर्वपूर्ववासनानामुत्तरोत्तराध्यासं प्रति पूर्वपूर्वकर्मणामुत्तरोत्तरजन्म प्रति च हेतुत्वात् बालस्य स्तन्यपाने प्रवृत्तिदर्शनेन पूर्वसंस्कारसिद्धौ संस्कारप्रवाहस्य कल्पनीयत्वाच्च संसारस्याऽनादितासिद्धिः ) इत्युक्तं तदप्यसत् अध्यासरूपतया शुक्तौ रजतस्येवार्थानामभावे वासनानामेवासिद्ध्या ताभिरध्यासस्यासंभावात् ॥ अतएव सूत्रकारः ( अ० २ पा० २ सू० ३० ) "नभावोऽनुपलब्धेः" इत्याह ॥ अत्रशंकराचार्याः "नभावोवासनानामुपपद्यते त्वत्पक्षेऽनुपलब्धेर्बाह्यानामर्थानां ॥ अर्थोपलब्धिनिमित्ताहि प्रत्यर्थं नानारूपावासनाभवंति" इत्यादि व्याचक्षते तत्र नानार्थाभावेवासनानां वैचित्र्याभावः ॥ अनादित्वेऽप्यंधपरंपरावदनवस्था ॥ वासनाभिर्विनाऽप्यर्थोपलब्धिरर्थेविना वासनानुत्पत्तिरित्यन्वयव्यतिरेकावर्थसद्भावमेव प्रतिष्ठापयतः ॥ किंच वासनाहि संस्कारविशेषा न निराश्रया अवतिष्ठंते नच शुद्धं ब्रह्म तदाश्रयः शुद्धत्वात् ॥ नाप्युपहितं घटादेरिवोपाधेरपि कल्पनं वासनयैव वक्तव्यमिति तस्यास्तदाश्रयत्वेऽन्योन्याश्रयात् इत्यादि भावत्कभाष्यकारोक्तदिशैव द्रष्टव्यं ॥ एवं तत्रैव पूर्वंवैनाशिकमतेषूक्तानि दूषणांतराण्यनुसंधेयानि ॥ नापि पूर्वपूर्वक

र्मणामेवोत्तरोत्तरजन्म प्रति स्वानंत्र्येण हेतुत्वं । एषत्येव । मत्तःसर्वंप्रवर्तते । भवंतिभावाभूतानांमत्तएवपृथग्विधाः । “ परात्तुतच्छ्रुतेः । पूर्वंतुबादरायणोहेतुव्यपदेशात् ” इत्यादिश्रुतिस्मृतिन्यायशतैः कर्माण्यपि प्रति उत्तरजन्मादिरूपतत्फलानि प्रति च तत्तदिच्छाविशिष्टब्रह्मणएव हेतुतायाबोधनात् ॥ अतएव कर्मणां तदिच्छयैव जन्मादिकरत्वं स्मर्यते ( स्कं० १० अ० ४७ श्लो० ६८ ) कर्मभिर्भ्राम्यमाणानांयत्रक्कापीश्वरेच्छयेत्यादिषु ॥ किंचेदमपि हेतुत्वं सृष्ट्युत्तरमेवेति प्रपंचितं प्राक् । बालस्य स्तन्यपाने प्रवृत्तिः संस्कारादित्यपि सृष्ट्युत्तरमेव । नतु पूर्वसृष्टिसंस्कारात् ॥ अतएव चतुर्मुखस्य मरीचिसनकादितत्पुत्राणां च सृष्ट्यारंभे न स्तन्यपाने प्रवृत्तिः ॥ किंच सृष्ट्युत्तरमपि भगवदिच्छयैवतादृशसंस्कारोद्बोधात्प्रवृत्तिः । अन्यथा कायिकपापफलस्थावरजन्मसु कूर्मादिचरजन्मसु च स्तन्यपानाभावात्संस्कारनाशेऽनंतरं मनुष्यादि जन्मस्वपि तन्न स्यात् ॥ किंच संस्कारप्रवाहमनादिं ततः संसारं चानादिं वदन् पूर्वमीमांसकैकदेशिमतमेव प्रविश । अलमध्यासादिकल्पनागौरवेण । तन्मतखंडनयुक्तिभिस्त्विदमपि खंड्येत ॥ संस्कारप्रवाहश्च कस्येतिनिश्चेयं ॥ संसारानादित्वेस देवेत्यादिव्याकोपः सृष्टिप्रलयाभावात्तद्बोधकश्रुतिव्याकोपः प्रयोजनाभावान्निरीश्वरत्वापत्तिश्चेत्यादिध्येयं ॥ तदेतदनुसंधायाहुः **एतेनेत्यादि** ॥ उक्तंचतैरिति इयं कारिकाविश्वनाथपंचाननस्य कारिकावलौ गुणव्यवस्थायां ( श्लो० १५० ) अस्ति ॥ इदंकृतिसाध्यमिष्टसाधनंचेतिज्ञानंतथामतिः ॥ चकारोदंडादिनिमित्तसमुच्चायकः ॥ अध्यक्षं प्रत्यक्षं ॥ यदपि ( अतएव बंधोस्याविद्ययानादिरितिस्मृतिः संगते )त्युक्तं तदपि पूर्वापरानवलोकनात् ॥ यत्र ह्येकादशस्कंधे एकादशाध्याये इदमस्ति तत्र ( श्लो० ३ ) विद्याविद्येममतनूविद्ध्युद्धवशरीरिणां । बंधमोक्षकरीआद्ये माय यामेविनिर्मितेइति विद्याविद्ययोः स्वशक्त्या विनिर्मितत्वं आदौ भवत्वं बंधादेस्तत्कृतत्वेन स्पष्टमेव सादित्वं चोक्त्वा उभयोरुभयकारणत्वं जडांतर्यामिणोर्बंधादिकं च निराकर्तुमुच्यते ( श्लो. ४ ) एकस्यैव ममांशस्य जीवस्यैव महामते बंधोस्याविद्ययाऽनादिर्विद्ययाचतथेतरइति एवं च सत्यत्रानादिशब्दोऽनादिरयमस्माकं विवाहे वेणुपात्रोपवेशनव्यवहारइत्यादिवच्चिरंतनार्थकएव ॥ तदेतदाहुः ॥ **तथाचेत्यादिना अक्षय्यमिति** ॥ आत्मसुखातिरिक्तफलपरत्वपक्षं पराभिमतमनुरुध्येदमुक्तं ॥ **हेतौकरणेवेति** ॥ हेतुत्वं च कारणत्वं तच्च कार्यनियतपूर्ववृत्तित्वं तथा च बंधस्यसादित्वमयत्नलब्धं हेतौ त्र्यादिसाधारणत्वं निर्व्यापारसाधारणत्वं च करणाद्भेदकमंगीकृत्य क्रमेण तदुभयप्रदर्शनार्थं प्राचां दंडेन घटः पुण्येन दृष्टोहरिरित्याद्युदाहरणेषु दंडपुण्यादीनां घटदर्शनादितः प्राक्कालिकत्वमस्त्येव ॥ तथात्र बंधस्याक्रियात्वे क्रियात्वे वाऽऽद्रियमाणेऽपि तस्यास्ततः प्राक्तनत्वं स्यादेव ॥ करणत्वपक्षेऽपि कारणत्वानपायात् क्रियायाःफल-

निष्पत्तिर्यद्व्यपारादनंतरं । यदाविवक्ष्यतेयत्रतदातत्कारणंस्मृतमितिहर्युक्तेर्बाणेनहत-इत्यादौ प्राणत्यागादेर्बाणादिव्यापारोत्तरकालिकत्ववदुत्तरकालिकत्वस्यानपायात्सादित्वं ॥ इतरत्तु मूले विशदतया निराकृतं ॥ विश्वंहीतितृतीयस्कंधवाक्यंतु विश्वं-ब्रह्माभिन्नमेव तच्छक्त्या तत्रैव सम्यक्स्थितं ब्रह्मरूपत्वादेव प्रलयेऽप्यबाधितं सत्यमित्यर्थकं यथेदानींतथाचाग्रेपश्चादप्येतदीदृशमितिपुरतःकथनात् ॥ अमरशब्द-स्यौपचारिकत्वे "यथेहकर्मचित" इतिमुंडकादिवाक्यवत् "आत्मावाइदं संदेवे"-त्यादिकमत्रानुग्राहक ॥ किंच गीतायां सर्वस्यचाहंहृदिसंनिविष्टोमत्तःस्मृतिर्ज्ञानम-पोहनंचेति ज्ञानापोहनरूपस्य बन्धस्य स्वहेतुकत्वं सादित्वं च दर्शितं ॥ सर्वभूता-नुसंमोहंसर्वेयांतिपरतपेत्यादौ सर्गकालिकत्वं च स्फुटमुक्त ॥ अतएव सूत्र कारोऽपि (अ० ३ पा० २ सू० ५) "पराभिध्यानात्तुतिरोहितंततोह्यस्यबंधविपर्ययौ" इ-तिपराभिध्याननिदानकमेव बंधमाहउत्तरसूत्रे देहयोगहेतुकंवा । नत्वविद्यामात्र मूलकमनादितं ॥ अतएवमादिस्पष्टप्रमाणशतानुरोधादपि तत्रत्योऽनादिशब्दउ-क्तार्थकएव ज्ञेयः ॥ याचधातायथेतिश्रुतिः ऋषीणामितिस्मृतिश्चोक्ता सातु सृ-ष्ट्युत्तरं ब्रह्मदिनरूपकल्पस्यांते प्रलये तावत्यां तद्रात्रौ व्यतीतायां द्वितीयक-ल्पादौ पुनःसृष्टिविषयिका ॥ धातृपदस्वारस्यात् ॥ अतएव "दिवंचपृथिवींचांत-रिक्षमथोसुव"रितित्रिलोकीसर्गएवोक्तः उक्तकल्पांते तन्मात्रलयात् ॥ स्मृतौ चात-एव शर्वर्यंतइत्युक्तं ब्रह्मदेवपर्यायोजशब्दश्च ॥ महाप्रलयोत्तरमपि ब्रह्माभिन्नं ब्र-ह्मपरिणामत्वाद्ब्रह्मणि तिरोहितं तु जगन्नित्यं स्वीक्रियतएव तथात्वमपि स्वीकु-र्याश्चेदिष्टमेव अविद्यायास्तत्कृतबंधस्य चानादित्वंतु नेमे श्रुतिस्मृती लेशतोऽपि बा-धयतः ॥ **सृष्टिप्रलयास्वीकारएवेति** अविद्यां तत्कृतसंसारं चानादिं वदतस्त-वैव तद्विरोधः सृष्टिप्रलययोरसंभवात् अविद्योपहितेन किंचित्कालंसृष्टेः कल्पने प्रलयकाले साविद्यस्यापि तूष्णीमवस्थाने च हेतोरभावात् हेत्वंतराणामपि क-ल्पितत्वाविशेषेण तदकल्पने हेत्वभावादनवस्थानाच्च ॥ ननु ब्रह्मरूपस्यैवास्य त-दिच्छया ततएव पुनः पुनराविर्भावतिरोभावरूपामावृत्तिं स्वीकुर्वतामस्माकं मते तद्विरोधः प्रत्युत शुक्तौ दशकृत्वोरजतभ्रमे तस्यैव रजतस्य मुहुरावृत्तिर्जातेत्यं-गीकारस्यकेनाप्यकृत्वात् ॥ तत्सत्यस्यैवावृत्तिसंभवेन आवृत्तिबोधकस्यास्य सूत्रस्य विवर्तवादबाधकतया तवैव सुतरांतद्विरोधइतिभावः ॥ **न्यायादिति** ॥ द्वितीय-स्य प्रथमे प्रयोजनाभावाज्जगन्निर्माणाभावं भगवतआशंक्य समाहितं (सू० ३३) "लोकवत्तुलीलाकैवल्यमिति" यथा लोके प्रयोजनाभावेऽपि राजादीनां मृ-गयादिप्रवृत्तयोलीलारूपादृश्यंते तथेयमपीश्वरस्य ॥ सा च प्रयोजनांतरशून्यामो-क्षदाचेतितदर्थः ॥ अधिकंतु नवमश्लोकखंडने वक्ष्यते ॥ **अनुकारित्वेनेति** (अ० १ पा० ३ सू० २८) "शब्दइतिचेन्नातःप्रभवात्" इत्यादिसूत्रद्वये वैदिकप्रपंच-स्याधिदैविकतया कर्मणि लौकिकजुहूस्रुवादिष्वाविर्भावशालीतया च भिन्नत्वं तत-

एव वेदस्य नित्यत्वं चोक्तं ॥ तत्र भिन्नत्वपक्षे लौकिकशब्दवदैदिकशब्दा-
द्यनुकारित्वेन अस्यैव ब्रह्मरूपस्य वेदबोध्यत्व ंगीकारे वाच्यत्वेन वेत्य-
र्थः ॥ **अनित्यसंयोगइति** ॥ प्रतिपादकोवेदोनित्यः उक्तरीत्योभयथापि
प्रतिपाद्यालौकिकाः पदार्थाअनित्यास्तैर्वेदस्य संयोगः ॥ **जलप्रक्षेपवदिति** ॥
समम्यर्थे वतिः अयमत्राशयः ॥ पूर्वसृष्टौयोब्रह्मा सएवोत्तरसृष्टौ ब्रह्मेति न
नियमः स्वधर्मनिष्ठःशतजन्मभिःपुमान्विरिंचितामेतीत्यादितद्भावप्राप्तिबोधकवचोधा-
कोपात् ॥ एवमवांतरप्रलयोत्तरमपि ये पूर्वकल्पइंद्रास्तएव चतुर्दश जीवाःपुन-
रिंद्राभवंतीति न नियमः । तेषामश्वमेधशतापूर्वस्य भोगेनोपक्षयात् अन्यस्य
तच्छतानुष्ठातुः फलाभावप्रसंगाच्च ॥ तेन सृष्टिभेदेन जीवांतरस्य ब्रह्मेंद्रादिभावेऽपि
नामरूपयोः समानत्वाद्ब्रह्मेंद्रादिप्रतिपादकवेदवाक्येषु न कोपि विरोधः । समुद्रे तज्ज-
लस्य प्रक्षेपोत्तरं पुनरुद्धरणे तस्यैव जलस्य जलांतरस्य वाऽऽगमनेपि समुद्रजल-
भेदश्छेदकमित्यादिवाक्यस्य न विरोधः ॥ नन्वेवंसति नित्यत्वंगतमितिचेन्न । नहि-
पूर्वप्रक्षिप्तजलस्य नाशोजलांतरस्य तदोत्पत्तिश्च तत्रास्ति । तथात्रापि सर्वस्य ब्रह्मा-
त्मकत्वेन सृष्टिभेदे तदिच्छया ( अ०२ पा०१ सू०१३ ) भोक्त्रापत्तेरितिन्यायेन वि-
पर्ययेऽपि नानित्यत्वं नापि द्वैतं ॥ यदि च वृक्षपक्षिप्रवेशनिर्गमन्यायेनैव सृष्टिप्रलयौ-
स्वीक्रियेतां तर्हि वृक्षात्पक्षिणइव ब्रह्मणः पदार्थाभिन्नाएव वस्तुतः स्युरिति ॥ सू-
त्रे स्मृतिपदेन प्रजासृजयथापूर्वयाश्चमग्न्यनुशेरतइत्यादिवाक्यानि ऋषीणांपूर्वचरित-
स्मरणंच गृह्यतइतिबोध्यं ॥ आस्तांचैतत् तथापि नानेनसूत्रेण बंधस्याविद्याया वा
अनादित्वंसिध्यति नापि विवर्तभावः ॥ यच्च बंधस्यसादित्वेऽकृताभ्यागमादिदोषप्र-
संगश्च स्यादित्याद्युक्तं तत्राहुः ॥ **नचसादित्वइत्यादि** ॥ **त्वन्मतइत्यादिशु-**
द्धमपि मामकारणादेवानादिरविद्या या बद्धवती सा अग्रेऽपि कुतोन बध्नीयात्
बंधनस्वभावत्वात् जीवांतराणांबद्धत्वेन सर्वथातन्नाशस्याभावात् मुक्तजीवस्य
प्रदेशविशेषरूपत्वाभावाच्चेत्यादिशंकयाऽपि तन्मतएव मोक्षोच्छेदः ॥ ईश्वरस्तु
सत्यप्रतिज्ञः सत्यसंकल्पः श्रुतौ गीतादौ च मुक्तौ पुनःपाताभावं प्रतिज्ञातवानि-
ति न पुनर्बंधशंका ॥ नहि लौकिकोपि राजादी राजधर्मनिष्ठः सत्यवादी
स्वकृतनियमं स्ववाचं वाऽतिवर्तते । किंपुनःसत्यवेदवाक्सत्यसंकल्पःसर्वश-
क्तिःकृपालुरीश्वरइत्यभिसंधिः ॥ **आदावंतेचेति** ॥ इयंगौडपादीयवैतथ्यप्रक-
रणस्था ( ६ ) कारिका ॥ यत् आदावंतेचनास्ति तदेव मध्येपि नास्तीति वि-
तथं । संसारस्याविद्यायाश्च ब्रह्मवदादौ सत्त्वे तु नवैतथ्यसिद्धिरित्यनादितापक्षे
तद्विरोधः ॥ अत्र तृतीयपादे ह्येतेइत्यत्रसंतइतिक्वचित्पुस्तकेपाठः ॥ यश्च "नच-
पुनरावर्तते" इत्यादौकुतर्कप्रवृत्तेरप्रतिबंधउक्तः स सर्वो नादरणीयः उक्तयुक्तेः ।
किंच तादृशश्रुतिषुनशासंदेहवारणार्थमेव ( अ० ४ पा० ४ सू० २२ ) "अनावृत्तिः

शब्दा" दितियथापरमाचार्यस्याधिकरणं । नहितथासंसारस्याविद्यायाश्चत्वन्मात्रों-त्प्रेक्षितस्यानादित्वस्य कंठरवेण साधकमेकमप्यधिकरणमस्ति । येन तत्रप्रत्याख्या नेतद्वदत्रापि कुतर्कः प्रवर्तेत ॥ बह्व्यःश्रोपनिपदोऽनावृत्तिमभ्यस्यंति बहूनां चानुग्रहएव न्याय्यः । न तथा तदनादितायाहकं किंचिदपि श्रुतिवाक्यं ॥ यश्चजन्यस्यनाशइतिनियमः सोऽप्यनित्यवादिमात्राभ्युपगमरूपोनानित्यवादिनंपीडयितुमीष्टे ॥ नापि मोक्षस्यजन्यत्वं आगंतुकान्यथारूपत्यागपूर्वकस्वरूपव्यवस्थितिरूपत्वात् मुक्तिर्हित्वान्यथारूपंस्वरूपेणव्यवस्थितिरितितल्लक्षणात् । अन्यथा तवैवस्वपादे कुठारप्रहारआपद्येत ॥ किंचतवैवेदशवाक्यविरोधोनत्वस्माकमित्याहुः ॥ किंचत्वन्मतइत्यादिना ॥ सिद्धांतेतु व्युच्चरितस्याणोरुत्क्रांतिगत्यागतिमतो जीवस्य प्रीतिः संभवत्येवेतिकर्मिणोब्रह्मलोकतइव पुनरावृत्तिशंकायामनावृत्तिनिश्चायकानीमानीतिनिरवद्यं ॥

यच्च मायायाः सांतत्वे श्रुतिस्मृतिप्रदर्शनंतदपि पारिभाषिकमायायास्तादृशश्रुत्यादिप्रतिपाद्यत्वएव संगच्छतेनतदेव न संभवति ॥ तथाहि"विद्वान्नामरूपाद्विमुक्त"इतिश्रुतिर्विदुषोब्रह्मणि लीनस्य पृथक्तया नामरूपे नोपलभ्येते इति प्रतिपादयति नतु मायामपि"यथानद्यःस्यंदमानाः समुद्रेस्तंगच्छंतिनामरूपेविहाये" तिश्रुतेः ॥ तरत्यविद्यामित्यादिस्मृतिस्थमायापदं त्वीश्वरस्यव्यामोहिका या शक्तिस्तां प्रतिपादयतिसा च न सांता अतएव तरतीत्युक्तं नाशयतीति नोक्तं ॥ सा शक्तिरीश्वरे हृदि निविष्टे तत्कृपया भक्तं न मोहयतीति नदींतरतीत्यनेन नदींनाशयतीति बोधः कस्यापि न जायत इति कथं तादृशस्मृत्या मायायाः सांतत्वनिश्चयः ॥ विभेदजनकेऽज्ञानइत्यादिस्मृतिरपि"पराभिध्यानात्तुतिरोहितंततोह्यस्यबंधविपर्ययौ"वितिसूत्रेण यद्व्यासैः प्रदर्शितं जीवस्येश्वरविषयकज्ञानतिरोभावाद्देहादिष्वहंबुद्धिरूपमन्यदपि विपरीतज्ञानं तदेव वास्तवज्ञानाभावादज्ञानशब्देन प्रतिपादयति न तु मायारूपं ॥

मायायाएकत्वेन तस्याअत्यंतनाशे एकमुक्तौ सर्वमुक्तिप्रसंगः ॥ किंच मायायाअनादित्वस्वीकारे तस्याः सांतत्वकथनमयुक्तं अनादेर्भावस्य नाशादर्शनात् ॥ नच भावत्वं निरूपयितुमशक्यमिति वाच्यं अस्तीतिप्रतीत्यर्हत्वरूपस्य निरूपणस्य संभवात् तत्रापि दोषोद्भावने सांतत्वस्यापि निरूपयितुमशक्यत्वात् अविद्यायाः सांतत्वमपि न स्यात् ॥ किं तावत्सांतत्वं ध्वंसप्रतियोगित्वमिति चेत् ध्वंसत्वं प्रागभावप्रतियोग्यभावत्वं प्रागभावत्वं च ध्वंसप्रतियोग्यभावत्वमित्यन्योन्याश्रयः ॥ एवमभावत्वप्रतियोगित्वादीनामप्यनिर्वचनीयत्वात्तद्घटितस्य सांतत्वस्य सुतरामनिर्वचनीयत्वंध्वंसत्वादीनामखंडोपाधिरूपता चेद्भावत्वेन किमपराद्धं ॥ तमसोभावरूपत्वेन दृष्टांतासिद्ध्या भावाऽभावातिगाऽविद्येत्याद्यसंगतं ॥ यदिचेत्यादिप्रलापस्त्वप्रकृततयोपेक्षणीयः मायानाशेऽपि तिरोभावानंगीकारादिति कथनमसंगतं नाशस्य तिरोभावानतिरेकात् ॥ नचसतोऽसत्वं नाशः सतः पूर्ववज्ज्ञानाभावस्तिरोभावइति वाच्यं सतोऽसत्वासंभवात् । घटादीनां सत्वं त्वया न स्वीक्रियते । मायायास्त्वन्मते सद्विलक्षणत्वात्तस्यानाशानुपपत्तेः ॥ किंच घटोनश्यति ननाश नष्टः नंक्ष्यति इत्यत्राख्यातार्थवर्त्तमानत्वभूतत्वभविष्यत्वादीनामन्वयः। कुत्रेति वक्तव्यं । घटे वा ध्वंसे वा ध्वंसोत्पत्तौ वा नाद्यः घटस्यासत्वात्तत्र वर्त्तमानत्वादिकालान्वयासंभवात् नापि द्वितीयः नाशस्य विद्यमानत्वेन नष्टः ननाशेत्यादिप्रयोगानुपपत्तेर्भूतत्वपरोक्षभूतत्वयोस्तत्राभवात् न तृतीयः घटोनष्टो नश्यतीत्यादावुत्पत्तिवाचकपदाभावात् स-

मभिव्याहृतपदोपस्थापितएव पदार्थान्वयनियमेनान्वयासंभ-
वात् ॥ तस्मान्नाशस्तिरोभाव एव सच घटस्य सत्वात्तत्र सं-
भवत्येव ॥ किंच मायायाअनादित्वे " एकमेवाद्वितीयं ॥ आ-
त्मावाइदमेकएवाग्रआसी" दितिश्रुतिविरोधः ॥ सादित्वेतुज-
न्यत्वं वाच्यं यज्जन्यं तत्सकारणकमितिव्याप्तेस्तत्कारणं ब्रह्मैव
वक्तव्यं तच्च कारणत्वं ब्रह्मणि वास्तवमेवाभ्युपगंतव्यं न तु क-
ल्पितं मायायाः पूर्वमभावेन मायिकत्वापरपर्य्यायकल्पित-
त्वस्यतत्र वक्तुमशक्यत्वात् ॥ तथाच ब्रह्मणि निर्द्धर्मकत्वमभ्यु-
पगतं त्यक्तं स्यात् । संसारस्यानादित्वं च न स्यात् ॥ प्रागभा-
वस्य त्वन्मते अभावादृष्टांतासंभवेनानादिसांतत्वमपि कल्पयि-
तुं न शक्यते ॥ तस्माज्जगत्कारणीभूतं पारिभाषिकं भावरूप-
मज्ञानं न संभवति श्रुतिन्यायविरोधोद्धारस्य कथमप्यसंभवा-
त् ॥ मायापदवाच्याभगवच्छक्तिरेव सा च भगवदभिन्ना श-
क्तिशक्तिमतोरभेदात् ॥ अयमेवार्थः शुद्धाद्वैतमार्त्तंडकारैः ॥
किंचजन्यात्वजन्यावामायाद्योजनकोहिकइत्यादिकारिका
भिःप्रदर्शितः ॥

## टीका

सहस्राक्षे सांताचेयमित्यादिं निरस्तत्वाच्चेत्यंतं भागं परिहरंति ॥ **यच्चमायाया इत्यादिनाकारिकाभिःप्रदर्शितइत्यंतेन** ॥ अयमर्थः ॥ यानितत्सांतत्वसाधना यवाक्यान्युक्तानि तत्र तथाविद्वानितिमुंडकवाक्यं यथानद्यइतिपूर्वार्द्धविशिष्टं व्याख्यातं प्राक् ॥ नहि तत्र तदभिमताज्ञानस्य तत्सांतत्वस्य वा गंधोऽप्यस्ति ॥ यच्चतरत्यविद्यांविततामितिवाक्यं । इदंभीष्मस्तवराजस्थमितिकेचित् ॥ वस्तुतस्तुशांतिपर्वांतर्गतराजधर्मपर्वणि भीष्मस्तवराजाख्ये सप्तचत्वारिंशाध्याये इदं नोपलभ्यते ॥ सति समूलत्वे । तत्र अविद्यामायेतिपृथक्शब्दद्वयोपादानान्मलिनसत्वांशुद्धसत्वांचोभे

अपिनाशयतीति त्वया वाच्यं ॥ शुद्धसत्वायानाशेचत्हृदिनिवेशनस्याप्यसंभवः कत-
केरेणुवत्सांतायाविद्यायाअप्यसंभवइति वाक्यार्थस्य तव बाधः अविद्याख्यांतामिति
व्याख्याय शुद्धसत्वायाअनाशस्य कथने.तु मलिनसत्वायाएव सांतत्वसिद्धिः ॥
किंचाविद्याशब्दस्य तावकेष्वीशावास्यभाष्यादिषु कर्मपर्यायताकथनात् त्वयाप्यु-
त्तरत्र कर्मपरतायावक्ष्यमाणत्वाच्चात्राप्यविद्यांकर्माणितरतीतिकुतोन प्राप्नुयात् । क-
र्मभिस्त्यज्यतेयोगीत्यादिस्मरणांतराच्च ॥ तथाच भावरूपाज्ञानस्य नेदंसांततासमर्प-
कं ॥ सिद्धांते तु विद्ययाऽविद्ययाशक्त्यामाययाचनिषेवितमितिशक्त्योर्भेदनिर्देशा-
च्छात्रार्थाविरणभंगेवनवृक्षवत्समष्टिव्यष्टिरूपतया व्युत्पदितामविद्यांगुणमयींमायां च
हृदिभगवन्निवेशनेन तरति । विलज्जमानयायस्यस्थातुमीक्षापथेऽमुयेत्याद्युक्तेः ।
आत्मभिदाबाधात्मनेनमइत्यर्थः ॥ एतेनैव दैवीह्येषागुणमयीममामायादुरत्यया ॥ मा-

---

## सहस्राक्ष.

सान्ताचेयंमाया ॥ विद्वान्नामरूपाद्विमुक्तइतिश्रुतेः ॥ तरत्यविद्यांविततांहृदियस्मिन्निवे-
शिते ॥ योगीमायामभेयायतस्मैविद्यात्मनेनमः ॥ मायामेतांतरन्तिते ॥ विभेदजनकेऽज्ञानेनाशमा-
त्यन्तिकंगते इत्यादिस्मृतिभ्यश्च ॥ नचयदनादितदनन्तमितिव्याप्तिः संगता ॥ प्रागभावेव्यभिचा-
रात् ॥ घटादेराविर्भावस्यैवस्वीकारेऽपि भेदस्योत्पत्तिस्वीकारेण तवाऽपि तत्प्रागभावप्रत्याख्यान-
स्याशक्यत्वात् ॥ नचानादिर्भावोऽनन्तइतिवाच्यम् ॥ भावत्वस्य निरूपयितुमशक्यत्वात् ॥ अ-
स्तीतिप्रतीत्यर्हत्वस्याऽभावेऽपि सत्त्वात् ॥ आभावभिन्नोभावइतितु अन्योन्याश्रयग्रस्तम् ॥ अ-
भावस्य भावनिरूपणाधीननिरूपणत्वात् ॥ अधिकन्तुखण्डनादिभ्योज्ञेयम् ॥ किञ्चाऽविद्याया
अभाववैलक्षण्येनैव भावव्यवहारोऽस्माकं नतु त्वदभिमतभावरूपत्वेन ॥ तदाहुर्भावाभावातिगा-
विद्यातत्वेदृष्टान्तितंतमइत्यादि ॥ यदिचाऽनादिपदार्थानाम्भेदस्य सादिता नयुक्ता सादिस्तु न-
कोऽपिपदार्थइत्युच्यते तर्हि सर्वमनन्तमित्येव त्वया वाच्यं ॥ यत्तच्छब्दयोरव्यावर्तकत्वात् ॥
नचतथाऽपि वक्तुं युक्तमुक्तश्रुत्यादिविरोधात् ॥ आविर्भावतिरोभावावेवाद्यंन्ततयाविवक्षिताविति-
चेन्न ॥ मायायानाशोऽपि तिरोभावानङ्गीकारेण तान्यथमविरोधानवतारात् ॥ सतःपूर्ववज्ज्ञा-
नाऽभावस्यैव तिरोभावपदार्थत्वात् ॥ अन्यथा नाश्यत्वेनाऽभिमतोभेदोऽपि तिरोभवतीति त्वयो-
च्येत ॥ नैयामिकाद्यैश्च कूर्मस्याङ्गानितिरोभवन्तीतिवद्घटादयस्तिरोभवन्तीतिप्रयुज्येत ॥ एतेन
किञ्चजन्यात्वजन्यावामायाऽऽद्येजनकोहिकः ॥ अन्याभावात्तुब्रह्मैवंसविशेषत्वमागतम् ॥ द्वि-
तीयेत्वद्वैतभङ्गःकदाचित्त्वंत्वसङ्गतम् ॥ आत्मैवेदमग्रआसीदित्यादि श्रुतिबाधतः ॥ अनादित्वे-
तुसान्तत्वमितिपक्षोऽप्यसंङ्गतः ॥ अनादित्वमनन्तत्वंमायायाइतिनिश्चयः इतिप्रत्युक्तम् ॥ अना-
दिसान्तत्वपक्षे श्रुतिन्याययोर्विरोधस्योद्धृतत्वात् ॥ अनन्तत्वस्योक्तरीत्यनिरस्तत्वाच्च ॥

मेवयेप्रपद्यंतेमायामेतांतरंतिते इतिगीतासप्तमाध्यायवाक्यमपि व्याख्यातं । यथा दु-
ष्कृतिनोमाययाऽपहृतज्ञाना भवंति नतथा भगवन्मात्रप्रपन्नाइतितदाशयात् नदीतरण-
वन्नाशासिद्धेः ॥ अन्यथादुष्कृतिनामपि ज्ञानंनापहरेत् नहि सा प्रतिजीवं भिन्ना
शक्या वक्तुं तव जीवभावस्य तत्कृतत्वेन जीवस्य तद्भेदकत्वायोगात् ॥ विभेदज-
नकेऽज्ञानइतिवाक्येतु सत्यार्थत्वे ( अ०३ पा०२ सू०५ ) " पराभिध्यानात्तुतिरोहि-
तंततोह्यस्यबंधविपर्ययौ" वित्यत्र सूत्रकृता भगवतो भगशब्दवाच्यषड्गुणेष्वैश्वर्यादीनां
चतुर्णांतिरोभवाद्बंधोज्ञानवैराग्ययोस्तिरोभावाद्विपर्ययश्च दर्शितः॥ तत्रापि ज्ञानतिरो-
भावादहंत्वं वैराग्यतिरोभावान्ममत्वं च प्रतीयते ततएव च विशिष्टोभेदोनानात्वं प्रा-
तीतिकं जन्यतेऽतोविभेदजनकाज्ञानपदेन बंधोविपर्ययोवोच्यते ॥ तदात्यंतिकना-
शादेव च मुक्तिःसंभवति ॥ अतोऽविद्याया अनादिसांतत्वं न श्रौतं नापिस्मार्तं त्वद-
भिमतरीतिकभावरूपाज्ञानस्य कंठरवेण ग्राहकंनैकमपि वचनंप्रस्थानत्रयेऽस्ति ॥
किंचानादिभावत्वे सांतत्वमपि न स्यादनादिभावस्यानंतत्वनियमात् ॥ वस्तुतस्तु
भावपदमपि त्वादृशांतार्किकाणां च तोषार्थं अस्मन्मतेऽभावानंगीकारेण व्यावर्त्या
लाभाद्यदनादि तदनंतमित्येव नियमः ॥ स्पष्टंचेदंमार्तंडादिषु प्रागभावादयोनांगी-
कार्या आभ्यां यतोखिलमित्यादौ ॥ तेनास्माकं न प्रागभावे व्यभिचारः ॥ नच भेद-
प्रागभावस्त्वयापि वाच्यइति वाच्यं बंहुत्वरूपभेदस्य जतुघृतद्रवत्ववद्भगवद्धर्म-
त्वेन नित्यतया तस्य प्रागभावासंभवात् द्वैतस्यभ्रमत्वेन असतस्तस्योत्पत्त्यनंगी-
कारेण प्रागभावासंभवात् ॥ नहि रज्जौ सर्पस्याप्युत्पत्तिरस्तिनियतकारणव्यभि-
चारापातान्नासतोविद्यतेभावइति वाक्यविरोधाच्च यच्चभावत्वंनिरूपयितुमशक्यमि-
त्युक्तं तदप्यशक्यमेवेत्याहुः ॥ अस्तीतीत्यादि ॥ अभावे स्वातंत्र्येणास्तित्वप्रती-
तिस्तु भ्रमः तस्याधिकरणानतिरिक्तत्वात् भूतलादेश्च भावत्वात् ॥ अतोस्तीतिप्र-
मितिविषयत्वंतत्त्वं स्यात् ॥ खंडनोक्तयुक्तिभिरभावस्यखंडनेऽभावप्रतियोगिकवैलक्ष-
ण्यस्याशक्यनिरूपणतया तवाविद्यायां भावव्यवहारोऽप्यशक्यः ॥ एवं भावत्व-
स्य तथात्वे भावातिगत्वमप्यशक्यमिति भावाभावातिगेत्यपि न वक्तुं शक्यं ॥ **तम-
सोभावरूपत्वेनेति** ॥ अत्रोभयथापि पदच्छेदोविवक्षितः तथाच व्यवहारे भट्टन-
यानुसारिणस्तव तमसः केवलभावत्वात्तार्किकादिमते केवलाभावत्वात्तद्दृष्टांतोऽ-
संगतः ॥ सिद्धांते तमसोमायिकत्वेऽपि मायिकभावत्वं । तथाभ्युपगमे मन्मतप्रवेशः ॥
तेजसितमसइवब्रह्मण्यविद्यास्थिते विरोधश्चनच ॥ यदनादितदनंतमितिनियमेय-
त्तच्छब्दावव्यावर्तकावितिशंक्यं । अनादिशब्देन आविर्भूतत्वे सति पूर्वकालिकति-
रोभावरहितस्य अनंतशब्देन तत्वेसत्युत्तरकालिकतद्रहितस्य च विवक्षणात् अ-
त्यतुच्छव्यावर्तनार्थं सत्यंतं तथाच पूर्वंतिरोहितस्येदानीमाविर्हितस्यग्रेतिरोभाविनो-
घटादेर्व्यावर्त्यत्वात् ॥ अतआहुः ॥ **प्रलापस्त्विति** तदेतदक्षयंनित्यंजगन्मुनिव-
राखिलं ॥ आविर्भावतिरोभावजन्मनाशविकल्पवदित्यादिभिर्विष्णुपुराणप्रथमांशचर-

माध्यायादिवचनैराविर्भावतिरोभावाभ्यांतादृशविकल्पवदित्याद्यर्थकैः जनीप्रादुर्भावेणशअदर्शने इतिधात्वर्थविचारेण च वस्तुगत्याविर्भावतिरोभावावेव जन्मनाशावितिसाधयितुं तदुक्तं नाशतिरोभावभेदं परिहरंति ॥ **नाशस्येत्यादिना** ॥ **असत्वासंभवादिति** ॥ नाभावोविद्यतेसतइतिवाक्यविरोधादितिभावः ॥ **नाशानुपपत्तेरिति** ॥ मायायाःसत्वासत्वाभ्यामनिर्वचनीयत्वस्वीकारादसत्वेन नाशस्यसंभवइवसत्वेन तस्यानुपपत्तिः स्यादेव । नश्वरत्वनित्यत्वे उभे वायुगपत्प्रसज्येयातां इतिभावः ॥ यत्तु अन्यथा नाशत्वेनाभिमतोभेदइत्याद्युक्तं । तदसत् । द्वैतेप्रातीतिकत्वेनोत्पत्तेरिव नाशस्याप्युपचारात् प्रतियोगिनोसत्वात् सत्वेनाशायोगात् ॥ उपनेत्रधारणेवर्णेषु स्थौल्यस्य प्रत्ययेतदधारणेतेषु तदप्रत्येसत्यपि तद्धारणावसरे तेषु तदुत्पद्यते तत्परित्यागेनश्यतीति नहि केनाप्यंगीक्रियते ॥ यच्च कूर्मस्यांगानीत्याद्युक्तं तन्निरासितुं घटादेर्नाशं व्यवहरतोऽपि गलेपादुकान्यायेन तिरोभावं स्वीकारयंति ॥ **किंचघटइत्यादिना** ॥ **भूतत्वेति** ॥ क्तप्रत्ययाद्यर्थोभूतत्वं लिडर्थः परोक्षभूतत्वं ॥ **नियमेनेति** ॥ पतंजलिप्रभृतयोह्युच्चारितएवशब्दःप्रत्यायकोनानुच्चारितइति मन्यंतेऽतस्तथानियमः । कथमनुच्यमानंगंस्यतइत्युक्तेः ॥ स्मृतस्यचशाब्दबोधेभानाभावःसर्वसंमतः । किंच तथासतिघटोनष्टइत्यादौ घटादेरभेदान्वयोपि न स्यात् ॥ नाशस्योत्पत्तिरपि प्रागभावध्वंसपरंपरयाऽनवस्थापादिका न शक्या वक्तुमितिदिक् ॥ किंच जन्यात्वजन्यावित्यादिमार्तंडकारिकात्रयमनेयंसमर्थयंते ॥ **किंचमायायाइत्यादिना** ॥ कारिकास्थमनादित्वमनंतत्त्वमितिद्रढयंति ॥ **साचभगवदभिन्नेति** ॥ तथाचभगवतोऽनंतत्वात्साप्यनंतैव ॥ अतएव “ पराऽस्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाच ”इत्याद्याःपरत्वस्वाभाविकत्वादिनिरूपिकाः श्वेताश्वतरादिश्रुतयोऽनाकुलाः ॥ आत्मैवेदमित्यादिविरोधं तु पूर्वकाप्यनुद्धृत्य व्यामोहयितुं उधृतत्वंतस्योक्तवानितिसद्भिरनुपादेयवचनः ॥

ननु मायायाभगवतोऽभिन्नत्वंनसंभवति विकल्पासहत्वात् ॥ किमिदमभिन्नत्वंतादात्म्यंभेदाभावोवा ॥ नाद्यः । आधाराधेयभावानुपपत्तेः ॥ सत्तादात्म्यनिषेधकनोसदासीदितिश्रुतिविरोधश्च । मायायाविनाशित्वेनब्रह्मणोविनाशित्वापत्तिश्च। मायायास्तिरोभावस्वीकारेचब्रह्मणोपितिरोभावप्रसंगः॥ भेदाभावपक्षस्त्वस्मद्रीत्यासंभवति शुक्तिकायांकल्पितरजतभेदाभाववद्

ह्मणिमिथ्याभूतमायाभेदाभावस्योचितत्वादितिचेन्न॥मायाभग-वद्भिन्नैव। अभिन्नत्वंचभेदाभावः सोपिशक्तिशक्तिमतोर्भेद-स्यादृष्टत्वादात्मैवेदंसर्वमित्यादिश्रुत्याचनिश्चीयते नतुत्वदुक्तरि-त्या दृष्टांतस्यैवासंभवात् कल्पितरजतभेदाभावंशुक्तौस्वीकुर्व-ताकल्पितेतिविशेषणंकुत्राभिमतं रजतेवातद्भेदेवा आद्ये रजतस्य कल्पितत्वेपितद्भेदस्याकल्पितत्वाच्छुक्तौतदभावासत्वेनतत्सत्व-कथनमसंगतं॥ किंच शुक्तौरजतभेदासत्वेरजतस्येवशुक्तेरपिक-ल्पितत्वापत्याऽधिष्ठानज्ञानेनरजतस्येवशुक्तेरपिबाधः स्यात्॥ नद्वितीयः। रजतवत्तद्भेदस्यापिकल्पितत्वे नेदंरजतमितिबाध-स्यापिभ्रमत्वापत्तिः। अऽबाधितार्थविषयकत्वाद्रजताभिन्ना-शुक्तिरितिप्रतीतेःप्रमात्वापत्तिश्च स्यात्॥ तादात्म्यपक्षोपिनिर्दु-ष्टः तादात्म्यंचस्ववृत्त्यसाधारणोधर्मः सचमायाशक्तिरूपः ब्र-ह्माभिन्नेऽसत्वात्॥ आधाराधेयभावस्त्वऽभावस्याधिकरणात्म-कत्वेपिभवन्मतेयथासंभवतितथैवास्मन्मतेशक्तिशक्तिमतोरप्यु-पपद्यते॥ द्वितीयदोषस्तु मायाया अविनाशित्वानंगीकारेणैवनिर-स्तः॥ श्रुतिविरोधोपिनास्मन्मते भगवच्छक्तेरसत्वानंगीकारा-त्॥ किंतुत्वन्मतएवविरोधः संभवति मायायाःसद्विलक्षणत्व-स्वीकारेणासत्वस्यदुर्वारत्वात्॥ मायायास्तिरोभावेपिब्रह्मण-स्तिरोभावोनसंभवति घटतिरोभावेपिमृदस्तिरोभावासंभवात्॥ अतएव शक्तिशक्तिमतोर्भेदाभेदोयःसनबाधकइत्यादिशुद्धाद्वै-तमार्तंडोक्तमपिसंगच्छते॥ अतएव "प्रकाशाश्रयवद्वातेजस-त्वा" दितिसूत्रेअरूपवदेहितत्प्रधानत्वा" दितिसूत्रेचब्रह्मधर्म्मा-णांब्रह्मत्वंप्रतिपादयताव्यासेन मायायाअपिब्रह्मत्वंप्रतिपादितं॥

एतेन जडत्वे इष्टापत्तिर्भेदाभेदस्याबाधकत्वायोगइत्याद्युद्भावनं निरस्तं ॥ यथाचैतत् तथैतयोःसूत्रयोर्व्याख्यानेस्फुटीभविष्य ति ॥ तत्सर्वंचतुर्थश्लोकखंडनावसरेवक्ष्यते ॥

## टीका

सहस्राक्षे यत् मायासंबंधेत्यादि वर्णयिष्यामइत्यंतं भागंनिराकुर्वंति ॥ **ननु मायायाइत्यादिना । खंडनावसरेवक्ष्यतइत्यंतेन** ॥ अत्र पूर्वपक्षे कथंचित्तादात्म्यंसर्वथावेतिविकल्पस्य निस्सारत्वाल्लोकेद्विविधतादात्म्यस्य क्वाप्यभ्युपगमाभावात् तादात्म्यभेदाभावोवेत्येवविकल्पोऽनूदितः ॥ कथंचित्तादात्म्यं च नैवांगीक्रियतइति तत्र भेदो नचैवास्तीत्युक्तेर्नविरोधः ॥ समादधते ॥ **माया भगवद्भिन्नेत्यादिना** ॥ अत्रभेदाभावपक्षोमुख्यः । तादात्म्यपक्षस्तु मध्यमाधिकारिबोधनाय । ततो मुख्यत्वाद्भेदाभावएवादावुच्यते ॥ शक्तिशक्तिमतोर्भेदोलोके न दृष्टः ॥ नहि वन्हेर्दाहकताशक्तिः पुरुषात्तद्वस्त्रमिव

---

## सहस्राक्ष.

यत्तु मायासंबन्धरहितमितिश्लोकटीकायामस्याभगवतोऽभिन्नत्वमुक्तम् ॥ तत्रब्रूमः ॥ किमिदमभिन्नत्वं तादात्म्यं भेदाभावोवा ॥ आद्येऽपि कथंचित् सर्वथावा ॥ मतावद्याद्यः ॥ तत्रभेदोनचैवेत्यादित्वत्सिद्धान्तविरोधात् ॥ न द्वितीयः ॥ शक्तिः शक्तिमानिति व्यवहारलोपप्रसङ्गात् ॥ सत्तादात्म्यनिषधकनोसदासीदितिश्रुतिविरोधाच्च ॥ मायायाविनाशित्वस्योक्तत्वेन तदभिन्नस्य ब्रह्मणोविनाशित्वापत्तेश्च विभेदजनकेज्ञानेनाशमात्यन्तिकंगते इत्यत्राऽत्यन्तनाशेन तिरोभावग्रहणे प्रमाणाभावाच्च ॥ मायायान तिरोभावोक्तिसम्भवः किञ्चैवमप्यनिस्तारोब्रह्मणोऽपि तिरोभावप्रसङ्गात् ॥ भेदाभावपक्षस्त्विष्टएव ॥ शुक्तिकायां कल्पितरजतभेदाऽभावसत्त्वात् ब्रह्मणि मिथ्याभूतमायाभेदाऽभावस्योचितत्वात् ॥ एतेन शक्तिशक्तिमतोर्भेदाभेदोऽयःसनबाधकः ॥ तत्रभेदोनचैवास्तिशक्तेर्ब्रह्मत्वनिश्चयात् ॥ भिन्नत्वेतुजडत्वंस्यादिति ॥ धर्मधर्मिविचारेऽपिज्ञेयमेवंविचक्षणैः ॥ प्रकाशाऽऽश्रयदृष्टान्तेऽप्यभेदोवोप्यतेकिल ॥ अरूपवत्सूत्रवाक्येधर्माणामपिब्रह्मता ॥ निरूपितामभुवरैःश्रीविद्वन्मण्डनेस्फुटम् इ तमत्युक्तम् ॥ भेदस्यासंमतत्वे भेदाभेदस्याबाधकत्वायोगात् ॥ उत्तरार्द्धेनविरोधाच्च जडतायाइष्टत्वाच्च ॥ अतएव किन्तुतमइतिश्रुत्युक्तंसंगच्छते ॥ प्रकाशाश्रयवद्वाऽरूपवदेवेत्यनयोः सूत्रयोस्तु तात्पर्यं चतुर्थश्लोकव्याख्यायां वर्णयिष्यामः ॥

वन्हितःपृथक्कर्तुं शक्यते । नापि वन्हिस्वरूपातिरिक्तंतत्स्वरूपं किंचि-
दुपलभ्यतेयश्चोत्तेजकसमवधानमण्यादिसमवधानयोस्तदाविर्भावतिरोभावाभ्यां शक्ते
र्भेदोदर्श्यते सोपि तत्तच्छक्तिपदाभिधेयं वन्ह्यादेर्दाहाद्यनुकूलस्वरूपविशेषं बोधयितुमेव
नतु वन्हित्वाद्यवच्छिन्नप्रतियोगिताकभेदवत्पदार्थान्साधयितुं॥तार्किकास्तु शक्तिसा
दृश्यादेः पदार्थान्तरत्वमरोचयंतउत्तेजकाभावविशिष्टमण्यभावविशिष्टवन्ह्यादिकमेव
दाहादिकं प्रति कारणं मन्यंते । शक्तिवादिनस्तु गौरवमनादृत्य पूर्वबोधनायभेदमुप-
पाद्यवस्तुतस्तत्तत्कार्यानुकूलं तत्तत्स्वरूपविशेषमेव प्रदर्शयंति ॥ एवंवेदेऽपि "यःस-
र्वज्ञःसर्वशक्तिः ॥ पराऽस्यशक्तिः" इत्यादौभेदप्रदर्शनंजिज्ञासुबोधनायैव । वस्तुतस्तु
राहोःशिरइत्यादिवदभेदः ॥ वन्हितस्तच्छक्तेर्भेददुराग्रहे धर्माणामप्यत्यंतभेदाऽऽप-
त्यातार्किकनयवदात्मधर्मोज्ञानमानंदश्चात्मातिरिक्तएवेत्यापद्येत ॥ एतदेवानुसंधाय
मार्तंडेभेदोयोबोधनायसइत्युक्तं ॥ ब्रह्मशक्तयस्तु वस्तुतःसर्वथाब्रह्माभिन्नाएव "इदं-
सर्वंयदयमात्मा पुरुषएवेदंसर्वं" इत्यादिश्रुतिभ्यः "मनसैवेदमाप्तव्यंनेहनानास्तिकिं-
चने" त्यादिश्रुतिभ्यश्च "सर्वकामःसर्वगंधइति ॥ सर्वशक्ति" रित्येवमादिषु ब्र-
ह्मधर्माणांतच्छक्तीनांचभेदेनैवनिर्देशेऽपि इह ब्रह्मणि किंचन शक्तिधर्मादिकं नाना-
ब्रह्मभिन्नं नास्तीतितदर्थः ॥ अग्रेच "मृत्योःसमृत्युंगच्छति यइहनानेवपश्यति"
इतिब्रह्मणितच्छक्त्यादिकंब्रह्मभिन्नंपश्यतोदुष्कलंश्रूयते ॥अभिन्नत्वादेव बलंबलवतां-
चाहं धर्माविरुद्धोभूतेषुकामोस्मि पुण्योगंधःपृथिव्यांचेत्यादिभगवद्वाक्यंबलंचशक्तिः॥
विशेषतस्त्वयमर्थश्चतुर्थश्लोकखंडने वक्ष्यते ॥ किंच पूर्वं त्वयाविशेषतआदृतेकौ-
र्मएव पूर्वखंडे द्वादशाध्याये सिद्धांतरीत्यैव सकलंशक्तिस्वरूपं तस्याःशक्तिमदभेदा-
दिकं च विस्तरेणप्रतिपाद्यते ॥ तद्यथा ॥ तत्रारंभएव शक्तिस्वरूपमुपक्रम्य शिवा-
सर्वगतानंतागुणातीतातुनिष्कला एकानेकविभागस्था ज्ञानरूपातिलालसा एवंना-
नाविभागस्थेतिक्वचित्पाठः ॥ अनन्यानिष्कलेतत्वेसंस्थितातस्यतेजसास्वाभावि-
कीचतन्मूलाप्रभा भानोरिवामला एकामाहेश्वरीशक्तिरनेकोपाधियोगतः पराव-
रेणरूपेण क्रीडते तस्य सन्निधौ सेयंकरोतिसकलंतस्याः कार्यमिदंजगत् नकार्यं-
नापिकरणमीश्वरस्येति सूरयः चतस्रःशक्तयोदिव्याः स्वरूपत्वे न संस्थिताः
अधिष्ठानवशात्तस्याः शृणुध्वंमुनिपुंगवाः शांतिर्विद्याप्रतिष्ठाचनिवृत्तिश्चेतिताःस्मृताः
चतुर्व्यूहस्ततोदेवः प्रोच्यतेपरमेश्वरः अनया परयादेवः स्वात्मानंदंसमश्नुते चतुर्ष्वं-
पिचभेदेषु चतुर्मूर्तिर्महेश्वरः अस्यास्त्वनादिसंसिद्धमैश्वर्यमतुलंमहदित्याद्युक्त्वा
( श्लो० १५ ) प्रोच्यतेभगवान्कालोहरिःप्राणोमहेश्वरः तत्रसर्वमिदंप्रोतमो-
तचैवाखिलंजगदित्यादिना एकस्यैव परमेश्वरस्यनानाशब्दवाच्यतां काल-
स्वरूपत्वं सवका रणतां च निर्णीय ( श्लो० १९ ) तस्यसर्वजग-
त्सूतिः शक्तिर्मायेतिविश्रुता तयेदंभ्रामये दीशोमायावीपुरुषोत्तमः सैषामाया-
त्मिकाशक्तिः सर्वाकारासनातनी विश्वरूपंमहेशस्य सर्वदासंप्रकाशयेत् अ-

न्याश्चशक्तयोमुख्यास्तस्यदेवस्यनिर्मिताः ज्ञानशक्तिःक्रियाशक्तिःप्राणशक्तिरिति-त्रयं सर्वासामेवशक्तीनां शक्तिमंतोविनिर्मिताः माययैवाथविप्रेंद्राःसाचाना-दिरनश्वरा सर्वशक्त्यात्मिकामायादुर्निवारादुरत्यया मायावीसर्वशक्तीशः कालः कालकरः प्रभुः करोतिकालःसकलं संहरेत् कालएवहि कालः स्थापयते विश्वं-कालाधीनमिदं जगदित्यादि कथयित्वा ( श्लो० २७ ) एकाशक्तिः शिवैकोपि शक्तिमानुच्यते शिवः शक्तयः शक्तिमंतोन्ये सर्वशक्तिसमुद्भवाः शक्तिशक्तिमतोर्भे-दं वदंतिपरमार्थतः अभेदंचानुपश्यंति योगिनस्तत्त्वचिंतकाः शक्तयोगिरिजादेवशा-क्ति मन्तोथशंकरः विशेषः कथ्यतेचायं पुराणेब्रह्मवादिभिः भोग्याविश्वेश्वरीदेवी महेश्वरपतिव्रता प्रोच्यते भगवान् भोक्ताकपर्दीनीललोहितः मंताविश्वेश्वरोदेवः शंकरोमन्मथांतकः प्रोच्यते मतिरीशानी मंतव्याचविचारतः इत्येतदखिलंविप्राः श-क्तिशक्तसमुद्भवं प्रोच्यतेसर्ववेदेषु मुनिभिस्तत्त्वदर्शिभिरित्युक्तम्॥ अत्र "पराऽस्यश-क्तिर्विविधैवश्रूयते स्वाभाविकीज्ञान बलक्रियाच " इतिश्वेताश्वतरश्रुते रर्थोविस्त-रेणोपबृंहितः॥ "नतस्यकार्यंकरणं च विद्यते" इतितत्पूर्वार्द्धस्यार्थोपि न कार्यंना-पिकारणमित्यादिनाविस्तारितः॥ अग्रेचमायायाः स्वाभाविकत्वादकल्पितत्वं स्फु-टतयाऽनाद्यनंतत्वात्सन्मात्ररूपत्वं च बोधयित्वा लोकेया याःशक्तयस्तास्ताःसर्वाअ-पिपरमेश्वरशक्त्यंशभूताः येयेचशक्तिमंतस्तेतेसर्वेपिपरमेश्वरांशभूताएव इतिदर्शयि-त्वा भानुतत्प्रभयोस्तेजस्त्वेनैवशक्तिशक्तिमतोरभेदोवर्णितः शक्तिमतोर्भेदमित्यादिना॥ अर्थस्तु शक्तिशक्तिमतोर्भेदंवदंति वाग्व्यवहारएवैतयोर्भेदइतिभावः योगिनस्तु परमार्थ-तस्तयोरभेदमेवसिद्धमनुपश्यंति चोऽवधारणे यतस्तेतत्त्वचिंतकाअभ्रांताः इतिज्ञे-यः॥ पुरतश्चाभेदेपि नित्यलीलानिर्वाहकं शक्तिशक्तिमतोर्भोग्यभोक्तृभावादिकं व्याख्यातं॥ नचैदंशैवतत्त्वमेवेतिभ्रमितव्यं पुराणेषुतैस्तै विष्णुशिवादिशब्दैस्तैस्तैः स्वरूपैश्चपरमेश्वरएववर्णितइतिसिद्धांतात्॥ "एकंसद्विप्राबहुधावदंति" इत्यादिश्रुति-भ्यः। योयोयांयांतनुंभक्तः येप्यन्यदेवताभक्ताः इत्यादिस्मृतिभ्यः॥ सर्वदेवनम-स्कारः त्वामेवान्येशिवोक्तेनमार्गेणशिवरूपिणमित्यादिपुराणवचोभ्यश्च॥ अतएवेह हरिः प्राणोमहेश्वरः मायावीपुरुषोत्तमइत्याद्युच्यते॥ अग्रेपि ( श्लोक ४८ ) मांवि-द्धिपरमांशक्तिंमहेश्वरसमाश्रयाम् अनन्यामव्ययामेकांयांपश्यंतिमुमुक्षवः अहंवैसर्व-भूतानांमात्मासर्वांतराशिवेत्यादिना तथैवशक्तिस्वरूपमभिहितं॥ एकांशक्तिमदभिन्नां-पश्यंतीत्यर्थः॥ हिमवदुक्तनामसहस्रेच तथैवतत्प्रपंचितं॥ ततःपरमपि ( श्लो० २०६ वदंतिकेचित्त्वामेवप्रकृतिंप्रकृतेः परामितिप्रकृतिरूपतां ( श्लो० २०७ ) अविद्या निय-तिर्माया कलाद्याःशतशोऽभवन्नितिनानारूपतांचोक्त्वा ( श्लो० २०८ ) त्वंहिसापर-माशक्तिरनंतापरमेष्ठिनी सर्वभेदविनिर्मुक्तासर्वभेदाश्रयाश्रया त्वामधिष्ठाययोगेशिम-हादेवोमहेश्वरः प्रधानाद्यंजगत्सर्वंकरोतिविकरोतिच त्वामेवसंगतोदेवः स्वात्मानंदं

समश्नुते त्वमेवपरमानंदस्त्वमेवानंददायिनी त्वमक्षरंपरंव्योममहज्ज्योतिर्निरंजनं शिवंसर्वगतंसूक्ष्मंपरंब्रह्मसनातनमित्यादिना तदेवसिद्धांतितम् ॥ अत्रापि सर्वभेदविनिर्मुक्तेत्यभेदः सर्वभेदाश्रयाश्रयेतिघटादिषुभूगंधस्येवभेदाश्रयेषुकार्येषु परशक्तेरेवांशतोऽनुवर्तनंचनिर्णीयते ॥ एवंश्रुतिस्मृतिपुराणेषुतयोरभेदादिकंसिद्धमेव ॥ वचनांतराणिचातिविस्तरभयान्नलिख्यंते ॥ तदेतत्सर्वमनुसंधायोक्तंकारिकासुतत्रभेदोनचैवास्तीति ॥ तत्र ब्रह्मणिभेदः स्वशक्तिधर्मादिप्रतियोगिकइत्यर्थः ॥ एवं स्वाभिमतंभेदाभावं साधयित्वा तदभिमतं तं दूषयंति ॥ नतुत्वदुक्तेति ॥ अत्रभेदाभावेस्वीक्रियमाणे तदनन्यत्वसूत्रविवेचनावसरे दर्शितचरदिशातयोरभेदएव सिध्यतीति ब्रह्माभिन्नायास्तस्याः कल्पितत्वमशक्यकल्पनं ॥ दृष्टांत उक्तदूषणानि च दार्ष्टांतिके ज्ञेयानि ॥ तद्यथा कल्पितमायाभेदाभावो ब्रह्मणीति चेत्कल्पितत्वं मायायाविशेषणं तद्भेदस्य वा ॥ आद्येभेदस्याकल्पितस्य ब्रह्मणिसत्वात्तदभावकथनव्याघातः कल्पितमायाभेदाभावे च ब्रह्मणोऽपि कल्पितत्वप्रसंगो जडत्वप्रसंगश्च तथाच ज्ञानेन माययासह ब्रह्मणोऽपिबाधः ॥ द्वितीयेब्रह्म न जडमायेतिमायाबाधग्रहस्य रजततुल्यभेदावगाहितयाभ्रमत्वमापद्येत जडमायाऽभिन्नं ब्रह्मेतिज्ञानस्याबाधितार्थविषयकत्वात्प्रमात्वं च प्रसज्येत तथाच सतिश्रुतिस्मृतिसूत्रपुराणसंमतं ब्रह्मतच्छक्त्यभेदमेव प्रमितंस्वीकुरु ॥ किंच मायायाः कल्पितत्वे पूर्वोक्तमनादित्वं न घटेतयत्कल्पितं तत्सादीति व्याप्तेःशुक्तिरजतादौ गृहीतत्वात् ॥ किंचकल्पितत्वे कल्पनसाधनमिंद्रियादिकं बुद्धिमात्रं वापेक्षितं ॥ विपर्यासस्यबुद्धिवृत्तित्वात् ॥ संशयोथविपर्यासइति तृतीयस्कंधवाक्यात् ॥ तच्चत्वन्मते मायिकमित्यन्योन्याश्रयः ॥ नापिकल्पकः कश्चिदुपपद्यते ॥ ब्रह्मणस्तत्वेभ्रांतत्वस्य जीवस्यतत्वेन्योन्याश्रयस्य चापत्तेः प्रागुक्तत्वात् ॥ मध्यमाधिकारिबोधार्थकं तादात्म्यपक्षमपि साधयंतस्तदुक्त दोषानुद्धरंति॥**तादात्म्यपक्षइति** ॥ असत्त्वादित्यसाधारणधर्मत्वेहेतुः ॥ अभावस्याधिकरणात्मकत्वेपि तव मायाभेदाभाववद्ब्रह्म प्रपंचभेदाभाववद्ब्रह्मेत्यादिव्यवहारवत् शक्तिःशक्तिमानिति व्यवहारस्तद्वदेवाधाराधेयभावव्यवहारश्च तादात्म्येपि न विलुप्येत ॥ अभावस्य भिन्नत्वेतु नित्यद्वैतापत्तिः ॥ पूर्वमविद्यायाअनंतरंतद्ध्वंसस्य च सत्वात् ॥ एतेन शक्तिःशक्तिमानितिव्यवहारलोपप्रसंगादिति प्रत्युक्तम् ॥ किंतु तवैव तल्लोपप्रसंगः ॥ तत्रकल्पितायास्तच्छक्तित्वायोगात् ॥ नहिवन्हौदाहशक्तिरारोप्यते ॥ रज्जौसर्पकल्पनेपिनदंशशक्तेरज्जुशक्तित्वंविद्वद्भिःस्वीक्रियते ॥ ब्रह्मशक्तित्वमपिकल्पितमितिचेद्वस्तुतःकस्यशक्तिः सा मायाब्रह्मशक्तितया कल्प्यतइति निर्धार्यताम् ॥ यच्च ( सत्तादात्म्यनिषेधकनोसदासीदितिश्रुतिविरोधा ) दित्युक्तं तत्रासमस्तपदांतरव्यवहितनिषेधकपदस्यसमासोऽसंगतः ॥ श्रुतिस्तु सृष्टेःप्राक्स्थूलसूक्ष्मयोर्ब्रह्मातिरिक्ततयासत्तामेवनिषेधति नतुमायायाःसत्तादात्म्यमसत्तादात्म्यंवा ॥ तस्याश्चश्रुचिमायावाचकप-

दाभावात् ॥ त्वदुदाहृतविलक्षणपाठेपि किंतुना व्यवहितस्यतमसःपूर्ववाक्येऽन्वयासं-
भवात् ॥ किंच तत्रसत्पदेन ब्रह्मणःपरिग्रहेतदाब्रह्मणोप्यभावप्रसंगः ॥ अपरिग्रहे-
शक्तेर्ब्रह्मतादात्म्येस्वीक्रियमाणेऽस्याः श्रुतेःकाप्रसक्तिः ॥ यच्च मायायाविनाशि
त्वस्येत्यादि तत्तु भगवच्छक्तेर्विनाशानंगीकारादेवनिरस्तंअन्यथा "अनुच्छित्तिधर्मे"
त्यादिश्रुतीनांसाचानादिरनश्वरेत्यादिस्फुटतरकौर्मादिस्मृतीनांचविरोधापातात् ॥ वि
भेदजनकइतिवाक्यंतु व्याख्यातम् ॥ यच्च ब्रह्मणोपितिरोभावप्रसंगादितितन्न भगव-
च्छक्त्याप्रत्यायितस्याहंताममतारूपसंसारस्यैवनिवृत्तेर्भगवच्छक्तेस्तुननाशोनापि-
तिरोभावइतिसिद्धांतात् ॥ यथैंद्रजालिकेप्रसन्नेतद्दर्शितोभयजनकःसिंहसमुद्रादिरेव-
निवर्तते नतुतस्यशक्तिः ॥ अथतिरोभावस्वीकारेपिनदोषः ॥ मृद्घटयोस्तादात्म्येपि
घटतिरोभावेमृदस्तिरोभावात् ॥ नाप्यूर्मिकूर्मचरणादितिरोभावेऊर्मिमालिकूर्मादिस्तिरो
धत्ते ॥ तवमामत्यांगुणानांद्रव्यात्मकत्वप्रपंचनेऽपितत्तद्गुणानांनाशेतिरोभावेवानतद्द्र-
व्यंनश्यतितिरोभवतिवा ॥ अधिकंतुचतुर्थश्लोकखंडनादौभाभावसरं ॥ तदेतदखिलम-
भिसंधायाहुः ॥ **आधाराधेयभावास्त्वित्यादिना** ॥ एतेन शक्तिशक्तिमतो-
रित्यादिमार्तंडकारिकाःसमर्थिताः । यत्तुभेदस्यासंमतत्वइत्यादितत्तु तदर्थानव-
बोधात् ॥ तथाहिभेदाभेदपक्षोमतभेदेनद्विविधः ॥ भेदोवास्तवः अभेद-
स्त्वारोपितइत्येकः । यथानिंबार्कानां ॥ भेदआरोपितोऽभेदस्तुवास्तवएवेतीतरः ॥
तत्रप्रकृते द्वितीयभेदाभेदस्यैवशुद्धाद्वैताबाधकत्वमिष्यतेभेदस्यारोपितत्वात् अभेद-
स्यैववास्तवत्वाच्च ॥ तदेवोपपादयितुंकारिकासूच्यते तत्रभेदइत्यादि ॥ ब्रह्म-
णिस्वशक्तिधर्मादिप्रतियोगिकभेदोनैवास्तिसर्वधर्माश्रयत्वप्रतिपादकाद्वैतप्रतिपादकश्रु-
त्योस्तथैवाविरोधसिद्धेः ॥ उक्तादिप्रमाणैर्ब्रह्मशक्तेर्ब्रह्मत्वस्यनिश्चयाच्च ॥ अतए-
वपराऔपरिछिक्यस्यशक्तिर्विविधैवेत्यत्रपरत्वमुच्यते शक्तिरित्येकत्वंप्रदर्श्यतस्याए-
ववैविध्यंचावधार्यते ब्रह्मणएकत्वात् ॥ लोकदृष्ट्यातुशक्तयःपरस्परभिन्नाइवभवे-
युः ॥ यदिचब्रह्मशक्तिस्ततोभिन्नास्यात्तर्हिजडत्वंतस्याआपद्येत तथाचाक्रूरादी-
नांचेतनमूर्तिमच्छक्त्यादिनिषेवितभगवद्दर्शनंनोपपद्येत श्रौतंपरत्वंचबाध्येत ॥
नचजीवशक्तितउत्कृष्टत्वमेवपरत्वमिहकल्प्यं अश्रौतत्वात् श्रुतिषुब्रह्मविदाप्नो-
तिपरमित्यादौ परशब्दस्यब्रह्मणिसुप्रसिद्धत्वात् जीवेनैवकल्पितनयाऽभिप्रेय-
माणायांतस्यांजीवशक्तितउत्कर्षस्यवक्तुमशक्यत्वाच्च ॥ श्रौतंस्वाभाविकीतिकथ-
नंतुपीड्यैतैव ॥ अनउक्तं भिन्नत्वेतुजडत्वंस्यादिति ॥ एतेनजडतायाइष्टत्वाच्चे-
तिप्रत्युक्तंउक्तचरकौर्मादिविरोधाच्च ॥ यश्चपराऽस्येत्यादौभेदःसंबोधनाय ॥ लो-
कानुरोधिनोजिज्ञासोर्बोधसौकर्यार्थं राहोःशिरः आनंदंब्रह्मणः यस्यज्ञानमयंतपइ-
त्यादिवदारोपितएवेत्यर्थः ॥ एवं अनेनप्रकारेण धर्मिधर्मविचारेऽपिज्ञेयं ॥ ब्रह्म-
णितद्धर्मभेदोनैवास्ति नेहनानास्तीत्यादिनातेषांब्रह्मत्वनिश्चयात् भिन्नत्वेतु तज्ज्ञा-

नादीनांजडत्वापातोनित्यत्वादद्वैतश्रुतिव्याघातश्च तस्य भासेत्यादौ भेदस्तुसूर्यादिदृष्टां-तेन बोधनायैवेतिभावः ॥ अतोवास्तवभेदस्यासंमतत्वेऽपिभेदाभेदस्याबाधकत्व-मबाधितं नाप्युत्तरार्द्धविरोधः ॥ किंतुतमइत्यादिकल्पनंतुमत्युक्तंप्राक् भेदाभेदांगी-कारेप्रयोजनंतु मध्यमाधिकारिबोधरूपंतत्रैव तत्रोत्तमामध्यमाश्चकनिष्ठाद्यधिकारिणः-तेषांप्रतीतिप्रथमस्कंधेतुश्रीहुताशनैः इदंहिविश्वमित्यत्रसूबोधिन्यांनिरूपितेत्यादि-ना प्रतीतित्रयंनिहृप्य अतोहिमध्यमःपक्षःशुद्धाद्वैतानुरोधतः बोधायबहुसंदर्भेगो-स्वामिपुरुषोत्तमैः श्रीमदाचार्यचरणैर्यत्रकुत्रापिदर्शितइत्युक्तमेवेतिसकलमनाकुलं प्र-काशाश्रयसूत्रमरूपवत्सूत्रंचपुरस्ताद्व्याख्यास्यामः ॥

यस्तु मायाचाविद्याचस्वयमेवभवतीत्यादिनामायाविद्ययोर-भेदउक्तःसोपि नसंभवति मायायाभगवच्छक्तिरूपत्वात् ॥ अविद्याचजीवनिष्ठादेहादावहंबुद्धिहेतुर्ज्ञानशक्तितिरोभावरू-पा ॥ ( इयंचमायाविद्याशब्देनव्यवह्रियत ) इतिवदताचमा-याविद्याशब्दयोःपर्य्यायत्वमुक्तं तच्चत्वन्मतेपिनसंभवति जीवे-श्वरयोस्त्वन्मतउपाधिकृतएवभेदःसचोपाध्यैक्ये न संभवति मायाविद्ययोरैक्येजीवस्यसर्वज्ञत्वमीश्वरस्याल्पज्ञत्वमपिस्यात्॥ एवंचमायायाअसिद्धौजगतोमायिकत्वंनसंभवति।किंतुवास्तव-त्वमेव ॥ तत्कारणत्वमपिब्रह्मणिनास्तिमायिकंकिंतुवास्तवं ॥ अतएवोक्तं उत्पत्तिस्थितिनाशानांजगतःकर्तृवैबृहत् वेदेनबो-धितंतद्धिनान्यथाभवितुंक्षमं नहिश्रुतिविरोधोस्तिकल्पोपिन विरुध्यते सर्वभ.वसमर्थत्वादचिंत्यैश्वर्य्यवद्ध्रुत् ॥ जगत्कर्तृ-त्वमीश्वरस्यवेदेनबोध्यते ॥ नचतदारोपितमितिशक्यवचनं नि-रंकुशस्यतस्यान्यत्रासिद्धतायास्स्वयमेववक्ष्यमाणत्वात् किंच वेदःपरमाप्तः अक्षरमात्रमपिमिथ्यानवदति ॥ यदिकापिवदेत् स्वर्गकामोयजेतेत्यादिविध्यंशेस्वरूपलक्षणाद्यंशेचाविश्वसनीयः स्यात्।ततश्चसन्मार्गमात्रमुच्छिद्येत ॥ अतोयद्यथावदतित-

त्तथेतिमंतव्यं । तेनकर्तृत्वंवेदोक्तत्वाद्वास्तवमेवसिध्यति ॥ नचकर्तृत्वांगीकारेस्वरूपलक्षणविरोधोयेनतदनुरोधादवास्तवं-कल्प्येत । तस्मादुक्तसत्वादिधर्मवत्कर्तृत्वस्याप्युपपत्तिः ॥ नचब्रह्मयावद्धर्मरहितमितिवक्तुंशक्यं । स्वरूपलक्षणविरोधात् तत्रब्रह्मणिसत्यत्वादीनांस्वीकृतत्वात् ॥ नच तेषामसत्यजडसांतत्वव्यावृत्त्यर्थत्वमेवेतिवाच्यं सत्यत्वादिनाब्रह्मणोऽप्रतीत्यापत्तेः तत्तद्वेदधर्मित्वसिद्ध्याचघटकुटीप्रभातन्यायआपद्येत ॥ ननुलक्षणद्वयस्यैकपरत्वेसर्वासुश्रुतिष्वेकमेवब्रह्मप्रतिपाद्यंतदा अस्थुलादिवाक्येष्वपितदेवनिरूप्यतइतिनिर्मकत्वंबलादापमितमितिचेन्न ॥ नह्यस्थूलादिवाक्यैरलौकिकधर्माःप्रतिषिध्यंते किंतुलोकप्रतीताएव ॥ प्रतीतमेवप्रतिषिध्यतेनाप्रतीतं प्रसंजयितुमशक्यत्वेन प्रतिषेधानर्हत्वात् ॥ नापिश्रुतिप्रतीताः तुल्यबलत्वात् ॥ यद्युक्तासत्यत्वादयोपिधर्मालौकिकत्वेनादृतास्तदालौकिकश्रुतिप्रतीतसाधारण्येनसर्वनिषेधेब्रह्माज्ञानेमवप्रसज्येत तथाचस्वरूपलक्षणमपिव्यर्थंस्यात् ॥ यदिचलौकिकत्वेपिश्रौतत्वेन कारणगतंसत्यत्वंप्रषिध्यतइत्युच्यते तदाधर्मसंकोचस्यावश्यकत्वेन कर्तृत्वमपितथास्तुतस्यापिश्रौतत्वात् ॥ ननुसत्वस्यलौकिकत्वेपिव्यावहारिकस्यैवितस्य लौकिकत्वं पारमार्थिकंत्वलौकिकमेवेतितन्ननिषिध्यतइतिचेत् कर्तृत्वमपिलौकिकमेवनिषिध्यते अनेकभूतभौतिकदेवतिर्यङ्मनुष्यानेकलोकाद्भुतरचनायुक्तब्रह्मांडकोटिरूपस्यप्रपंचस्यमनसाप्याकलयितुमशक्यरचनस्यानायासेनोत्पत्तिस्थितिभंगकरणंनलौकिकमतस्तदपिननिषिध्यतइत्येवांगीकरणी-

यं ॥ नचाऽगत्यासत्यत्वंनथास्तु कर्तृत्वंत्वारोपितमेवेतिवाच्यं तस्याप्यारोपितस्यवक्तुशक्यत्वेनागतेरभावात्तस्माद्ब्रह्मणिवेदबोधितंकर्तृत्वंवास्तवमेव ॥ ब्रह्मणःसकलविरुद्धधर्माश्रयत्वस्य-वेदबोधितत्वात्कर्तृत्वेपिनिर्विकारत्वंसंभवत्येव ॥ वास्तवकर्तृत्वमपियत्रनर्निर्विकारत्वासंगत्वयोर्हानिकरं मायिकंतत्करिष्य-तिशंकादूरतएवापास्ता ॥ अतएव तदुत्तरंयदुक्तंमायया सिंहादिभूतस्यैंद्रजालिकस्येत्यादि तदप्यस्मदसंमतत्वादुपेक्ष्यं ॥ मायायाएवासंभवेनसंसारस्यमायिकत्वाऽसंभवात्किंनपश्यसि-संसारमित्याद्यसंगतमेव ॥

## टीका

सहस्राक्षे इयंचमायेत्यादिपरस्यलक्षणमिदमितीत्यंतं भागं निरस्यंति यस्तु मायाचाविद्येत्यादिना सारमित्याद्यसंगतमेवेत्यंतेन ॥ अत्रेदज्ञेयं ॥ यत्तु "मायाचाविद्याचस्वयमेव भवती" तिनृसिंहोत्तरतापनीयनवमखंडवाक्यमुक्तं तत्तुब्र-ह्मैवस्वयमितरानपेक्षगुणमयमायारूपंचाविद्यारूपंचभवतीत्यर्थकं ॥ अतइदमपि मा-यायाब्रह्माभिन्नत्वेप्रमाणं मायैवाविद्याभवतीत्यर्थेतु चकारद्वयवैयर्थ्यंस्यात् ॥ अत-एव तत्रोपसहारे "क्वैषानुज्ञैति एषएवात्मेतिहोवाच" इतितस्याअप्यात्मारूपत्व मेवश्रावितम् ॥ कैषेतिपाठेविध्युद्धवशरीरिणां बधमोक्षकरीआद्येमाययामेविनिर्मिते इत्येकादशेमायायाःकार्यद्वयस्मरणान्मायैवाविद्याभवतीत्यर्थादरेऽपि मायायाभगव-द्रूपत्वंनिर्बाधमेवोक्तश्रुतेस्तस्मैमायात्मनेनमइतिस्मृतेश्च प्रकाशाश्रयन्यायेनशक्तिश-क्तिमतोरभेदाच्च ॥ शक्तितातु "देवात्मशक्तिंस्वगुणैर्निगूढां" इत्यादि बहुतरश्वेता-श्वतरप्रभृतिश्रुतिषुप्रकृततापनीयखंडेचाम्नातैव मुंडके "कर्तारमीशंपुरुषंब्रह्मयोनिं" एकादशस्यचतुर्विंशाध्याये द्विधासमभवद्बृहत् एवमादिश्रुतिपुराणेषुचगुणमयमायायाः स्पष्टंब्रह्मपरिणामताबोध्यते ॥ सामायायाःकार्यरूपाऽविद्याचजीवस्यैवोपाधिर्नतुब्रह्म णितत्संबंधः शरीरिणांबंधमोक्षकरी इति स्मरणात् तत्रैवएकस्यैवममांशस्य-जीवस्यैवमहाते बंधोस्याऽविद्ययाऽनादिरित्यवधारणस्मरणाच्च ॥ प्रकृतेऽपि "ना-विद्यानुभवात्मनिस्वप्रकाशेसर्वसाक्षिण्यविक्रियेऽद्वये" इतिब्रह्मणिसाप्रतिषिध्यते ॥

पूर्वमपि तत्र " अस्यव्यंजिकानित्यनिवृत्ते " तिपरमात्मनः सकाशात्तस्यानित्यमेव-
निवृत्तत्वंश्राव्यते ॥ स्मृतावपिप्रथमएवकारोजडांतर्य मिरूपांशान्तरयोर्द्वितीयोब्रह्मण-
श्चनद्योगंव्यवच्छिनत्ति ॥ तेन ( अविद्याख्यमायावशादिच्छोद्भवोहेतुकत्वं-
बोच्च ) इत्युक्तिःप्रत्युक्ता ॥ तत्रहिखंडे विषयतारूपस्यांतरासर्गस्यैवाविद्याहेतुकत्वं
बोध्यते ननुभगवत्परिणामस्यवास्तवप्रपंचस्य ॥ तस्यतुप्रत्युतभगवद्योनिकत्वं
सत्यत्वंचतत्रापिनिरूप्यतएव ॥ वास्तवप्रपंचाद्विषयतारूपजगतोऽन्यत्वंमायिक
त्वंचश्रीमदाचार्यचरणैःसुबोधिन्यां कर्नेर्थंयत्प्रतीयेत अनुमितमंतरात्वयिविभातिमृषै-
करसे इत्यादिस्थलेप्रपंचितं । प्रकृतखंडेह्यारंभजीवस्यैवोंकारवाच्यात्मत्वेनोपदेशे-
देवैःप्रार्थितःप्रजापतिस्तथेतिचोक्त्वा " उपद्रष्टानुमंतैषआत्मासिंहश्चिद्रूपएवे " त्यहं-
मत्ययवेद्यस्यात्मनःपरमात्मत्वंचिद्रूपत्वंचप्रतिज्ञायक्रमादुभयत्राविकारत्वंसर्वत्रोपल-
ब्धृत्वंचहेतुतयोक्त्वा " नह्यस्तिद्वैतसिद्धिरात्मैवसिद्धोऽद्वितीयोमाययाह्यन्यदिव "
इति अंतरासर्गरूपंद्वैतमेवप्रतिषिध्यतस्यैवमायाहेतुकत्वंचाभिधायकथमेतदित्याकां-
क्षायामात्मनःपरत्वंद्वैतस्यसर्वस्याविद्यारूपत्वंचप्रतिज्ञायतत्साधयितुं " तथाहिप्राज्ञ-
इतिसुषुप्तिकालेसकलद्वैतविलयंबोधयित्वा " सैषाविद्याजगत्सर्व " मित्यादिना

---

## सहस्राक्ष.

इयंच मायाऽविद्याशब्देनाऽपिव्यवह्रियते मायाचाविद्याचस्वयमेवभवति तरत्यविद्यांवित-
तांहृदियस्मिन्निवेशिते इत्यादिश्रुतिस्मृतिभ्यस्तदेतदाहाविद्याख्यमायेति ॥ एवं सर्वस्य नामरू-
पात्मकस्य जगतोमायिकत्वसिध्या तदन्तःपातितद्धेतुत्वस्य च तथात्वऽमित्याह ॥ हेतुत्वंचे-
ति ॥ ननु ब्रह्मणोमाययाऽपि हेतुत्वेनिर्विकारत्वाऽसङ्गत्वयोर्हानिरितिचेन्न ॥ मायया सिंहादि-
भूतस्यैन्द्रजालिकस्य विकाराद्यनुपलब्धेः ॥ ऐन्द्रजालिकोवस्तुतोविकारादिमानितिचेदास्ताम् ॥
एतावता हिं न विकारित्वादि तत्रप्रयोजकं गौरवान्मानाभावाच्च ॥ सिंहादिप्रकारकभानमात्रेत
त्रेतिचेन्न वयं ब्रह्मणोवस्तुतस्तथाभावं स्वीकुर्मः किन्तु तथाप्रतीतिमात्रं विवर्त्तवादाऽङ्गीकारा
त् ॥ अतएव मायया बहुरूपज्ञानमेव श्रुतिराह इन्द्रोमायाभिःपुरुरूपईयतइति ॥ कारकस्य क्रि-
याऽन्वनियामात् ॥ कारकविभक्तेरितरविभक्तितउचितत्वाच्च ॥ तस्मात्प्रातीतिकस्य जगतइव त-
द्धेतुत्वस्याऽपि मायिकस्य तत्रसम्भवान्नकाप्यनुपपत्तिः॥ अतएवाऽक्षमाभवतःकेयंसाधकत्वप्रक-
ल्पनं ॥ किंनपश्यसिसंसारंतत्रैवाऽज्ञानकल्पितमित्यभियुक्तोक्तं सगच्छते ॥ एवंच ब्रह्मणस्तट-
स्थलक्षणं सिद्धमित्याह ॥ परस्यलक्षणमिदमिति ॥

" चैतन्यदीमे " त्यंतेनसुषुप्त्यादौबाधाद्गमनशीलस्यसर्वस्यभेदप्रपंचस्याविद्यकत्वमुप पादितवान् ॥ सुषुप्तौहिबुद्धिपरिकल्पितोभेदप्रत्ययएवलीयते नतुघटादयःप्रापंचिकाः पदार्थाः । उत्थानोत्तरंतथैवगृहादेःप्रतीयमानत्वात् नचस्वापकालेनष्टाउत्थानकाले- पुनरुत्पन्नास्तइतिवाच्यं प्रत्यभिज्ञाविरोधात् तस्याःसाजात्यनिबंधनत्वकल्पनेमाना- भावोऽनंतवस्तुकल्पनागौरवंच ॥ विजनकुल्यादौसुप्तेनस्वापात्पूर्वस्थापितदीपपात्रे- तैलवर्त्यादिक्षयस्यस्वापविरामोत्तरमनुभवात्पूर्वं प्रवर्तितघटिकायंत्रादौ यथोचितंलो- ह्कंटकपरिभ्रमघंटाभिघातादेः स्वापविरामोत्तरमनुभवाच्चत एव पदार्थानतुतेसुषुप्तौ- नष्टाइति निश्चीयते ॥ उत्पादकाभावाच्चगृहादेः पुनरुत्पत्तिरशक्यवचना ॥ बुध्यैवो- त्पत्तिसंभवेप्रथमंनिर्माणेऽपिनकोपि कार्वादीनपेक्षेत ॥ किंचैवंसति सुषुप्तावप्रत्यया- दुत्थानावसरेशरीरमप्यन्यदेव बुध्याकल्प्यतइति वाच्यं तथाच दांपत्यपितृपुत्रभा- वादिहान्यामहाने वोपप्लवएवं सतिबौद्धमतप्रवेशश्चेत्यलम् ॥ अतोयः सुषुप्तौभेदप्र- त्ययोलीयतेतस्यैवाविद्यकत्वमिहोच्यत इति सिद्धम् ॥ अतएवतत्रापेऽनुपदं "त- स्मादात्मनएवंत्रैविध्यं सर्वत्रयोनित्वमपी" त्यादिनाब्रह्मणएवतत्तद्रूपत्वं योनिपदेन- सर्वोपादानत्वं च श्राव्यते ॥ ननुवास्तवप्रपंचात्कोतिरिक्तोसौ विषयतासर्गइति चेदु च्यतेघटोहिब्रह्मरूपत्वाद्वस्तुतः सर्वधर्माश्रयएव तथापि तत्रयस्तावन्मात्राकारताव- न्मात्रधर्मकत्वरूपः परिच्छेदोद्वैतापरपर्यायो ऽनुभूयते सजीवगताविद्ययैव द्रष्टुर्विष- यस्यचांतराजन्यते ॥ सएवमिथ्या ॥ पौराणानिमिथ्यात्ववचांस्यपितद्विषयाण्येवेतिसं- क्षेपः ॥ एवं च जडजीवरूपस्य कार्यजातस्यामायिकत्वबोधनायैव " सर्वंसर्वमयंस- र्वेजीवाःसर्वमयाः सर्वावस्थासुतथाप्यल्पाः " इत्याम्नायते ॥ अल्पाअणुत्वात् अ- ग्रेच " सवाएषभूतानींद्रियाणि " इत्यादिनावास्तवप्रपंचस्यसृष्टिं तत्रप्रवेशं चोक्त्वा- मूढवद्व्यवहरणमेव मायामात्रहेतुकमुक्तं मायिकत्वे स्वात्मनः सृष्टिप्रवेशौनघटेयातां ॥ सर्वस्यब्रह्मात्मकत्वादेत्र " तस्मादद्वयएवायमात्मे " तिप्रतिज्ञायसन्मात्रत्वादीनि द्वा- दशतत्त्वरूपलक्षणानि तस्याभिधाय " सत्तामात्रंहीदंसर्वं सदेवपुरस्तात् ॥ सिद्धंहिब्र- ह्मनह्यत्रकिंचनानुभूयते " इतिसर्वस्यकंठरवेणसत्यत्वं ब्रह्मरूपत्वं मुक्तिदशायांतद- तिरिक्ततयाकस्यचिदपि अनुभवाभावं च निरूप्यतदानापूर्ववत्परिच्छेदानुभवः कु- तोनेत्याकांक्षायां हेतुभूताऽविद्याऽभावादित्याशयेन " नाविद्यानुभवात्मनी " त्या- द्युक्त्वासर्वभूतेषुचात्मानं सर्वभूतानिचात्मनि ईक्षतेयोगयुक्तात्मेतिदर्शयितुं " पश्यते ह्यपिसन्मात्रमसदन्यत्सत्यंहीत्थं पुरस्तात् " इत्याद्याम्नातम् ॥ अर्थस्तु ब्रह्मभावे- सति इहशारीरेपिसन्मात्रंसर्वंघटादिप्रपंचंपश्यत यच्च असत् अविद्याहेतुकमसत्यं- प्रागुक्तं तत्सन्मात्रप्रपंचादन्यदेवान्तरासर्गरूपमित्यादिर्ज्ञेयः ॥ अग्रेच सृष्टिकालेचिदा- नंदतिरोभावात्सन्मात्रस्यापि जडप्रपंचस्यतदानीमानंदचिद्घनत्वं इदानींतिरोहितानं- दतयासच्चिन्मात्रस्याः जीवस्यतदानंदाविर्भावात्सुखरूपत्वं चेत्यादिकंविस्तरेणनिरू-

पितमितितसर्वंततएवावधेयम् ॥ तथा " नहीदंसर्वंकदाचित्"इति इदंकार्यजातंसर्वंक-
दाचिन्नअपितु सर्वदेत्यप्युक्तम् ॥ यच्चसहस्राक्षकृतावाक्यमुपन्यस्तंतत्तु "सैषावटबी
जसामान्यवदनेकवटशक्तिरेकैव तद्यथा वटबीजसामान्यमेकमनेकान्स्वाव्यतिरिक्ता-
न्वटान्सबीजानुत्पाद्यतत्रतत्रचसम्पूर्णंसंतिष्ठति एवमेवैषामायास्वाव्यतिरिक्तानिप-
रिपूर्णानिक्षेत्राणिदर्शयित्वाजीवेशावाभासेनकरोति माया चाविद्याचस्वयमेवभव
ती " तिश्रूयते ॥ अर्थस्तु ॥ सर्वोपादानत्वादत्रवटबीजस्थानापन्नंब्रह्मैव बीजं-
मांसर्वभूतानांविद्धिपार्थसनातनमितिस्मरणात् ॥ छांदोग्याष्टमाध्याये " न्यग्रो-
धफलमतआहरे " तिखंडेवटधानागिमदृष्टांतेनब्रह्मणोवटदृष्टांतेनप्रपंचस्यचरूपष्टत-
यानिरूपणात् ॥ तथाच वटबीजसामान्यंयथावटबीजस्यासाधारणधर्मस्तदेकवृ-
त्ति ॥ तथा मायाब्रह्मणःस्वाभाविकीशक्तिस्तन्मात्रवृत्तिः ॥ यथाचकार्येषुवटे-
ष्वनेकेष्वनुवर्तमानमपिबीजसामान्यंवस्तुतएकमेव तथेयंक्षेत्रेषुव्यष्ट्याविद्यात्मना-
नानारूपाप्येकैव ॥ तदेतदुक्तमेकैवेत्यंतेन ॥ दार्ष्टांतिकेवटशब्दोदेहादिरूपक्षेत्रपरः
तद्वत्प्ररूपरत्वादल्पफलत्वादुभयसुपर्णस्थित्याधारत्वाच्च ॥ दृष्टांतेदुरूहांशंस्पष्टीकृ
त्यविवक्षितांशेनदार्ष्टांतिकेयोजयति तद्यथेति अव्यतिरेकोऽत्राविनाभावएवनत्व
भेदः वटेषुकेवलसामान्यरूपतायाअभावात् ॥ एकस्मादपिबीजात्साक्षात्परंपराभ्या
मनेकेवटाउत्पद्यंतएवेतिनानेकत्वोक्तिविरोधः ॥ क्षेत्रशब्दश्चेहदेहेंद्रियप्राणांतःकरण
परः गीतात्रयोदशाध्यायेतथानिरूपणात् ॥ नतुशरीरमात्रपरः. अतएवदृष्टांतेऽनेकत्व-
वद्दार्ष्टांतिकेपरिपूर्णत्वमुक्तं तत्तदध्यासरूपेणसर्वत्राविद्यासंबंधात्क्षेत्रेष्वस्याअव्यतिरे-
कः ॥ उत्पादनस्थानापन्नंचात्रतथाप्रदर्शनं अध्यासानामवास्तवत्वात् ॥ जीवेशौचे-
हकार्यरूपौ करोतीत्युक्तेः ॥ तत्रजीवाः " त्रयःप्राजापत्याः त्रिविधाजीवसंगास्तु "
इतिबृहदारण्यकपंचरात्रादिश्रुतिस्मृत्युक्ताःसत्त्वाद्युपहिताभगवदंशाः ॥ ईशाश्चांतर्या-
मिणः ॥ जीववत्क्षेत्रांतस्थत्वप्रतीतेः ॥ जात्यभिप्रायमुभयोरेकत्वं ॥ द्वावीशानी-
शौज्ञाज्ञौ " इत्यादिश्रुत्यंतरप्रसिद्धाविमौअत्रापि " अभिमंताजीवोनियंतेश्वरः "
इत्युक्तौ ॥ दृष्टांतेसंपूर्णसंस्थितेःस्थानापन्नंजीवांतर्यामिणोराभासेनकरणंत्वस्याद्वि-
धाभवनंच ॥ यथाजलंत्वस्मिन्प्रविष्टचंद्रतेजोंशमेवचंद्राभासंकरोतितथेयमपित्वावि-
नाभूतक्षेत्रेषुगुणेषुचप्रविष्टंब्रह्मांशंब्रह्माभासंकरोति ॥ आभासद्वैविध्यसिद्ध्यर्थंचस्वयं-
द्विधाभवतितत्र " तदेवानुप्राविशत् गामाविश्यचभूतानि " इत्यादिष्वंतर्यामिब्रा-
ह्मणेचप्रसिद्धेसमष्टिरूपेमायाख्यासा । नाहंप्रकाशः सर्वस्ययोगमायासमावृतः
मायाजवनिकाछन्नमित्याद्युक्तेः ॥ व्यष्टिरूपेनियंतरीश्वरेतर्यामिण्यपिसा ई-
श्वरः सर्वभूतानांहृद्देशेर्जुनतिष्ठति भ्रामयन्सर्वभूतानियंत्रारूढानिमाययेतिमायाव-
त्त्वस्मरणात् ॥ ब्रह्मांडशरीरेसमष्टिरूपे हिरण्यगर्भेत्वविद्या तत्रैव " सर्वाहंमानीहि-
रण्यगर्भ " इत्यभिमानश्रावणात् ॥ व्यष्टिरूपेऽभिमंतरि सात्त्विकादिभेदभिन्नेकार्यंजी-

वेपिपंचपत्रांसा कठमुंडकादिषु " अविद्यायामंतरेवर्तमानाः ॥ अनीशयाशोचतिमुह्य मानः " इत्यादिश्रावणात् ॥ इत्थमत्रतस्याद्विधाभावकथनस्याशयःप्रतिभाति ॥ एवमस्याद्विधाभूत्वाव्यष्टिसमष्टिक्षेत्रेषुसर्वत्रावस्थानादृष्टांतउक्तातत्रतत्रसंपूर्णतयासंस्थितिःसंगच्छते ॥ मायायाअपिव्यष्टिसमष्टिभावादेव " स्वयंगुणभिन्नांकुरेष्वपिगुणभिन्ना सर्वत्रे " त्युक्तम् गुणैर्भेदवतीत्यर्थः ॥ यथाचव्यष्टिरूपाणांजीवानांसात्विकत्वादिनात्रैविध्यं तथा समष्टिरूपस्याप्येकैकगुणाभिमानिब्रह्माद्यात्मनात्रैविध्यम् अतएव " हिरण्यगर्भस्त्रिरूपईश्वरवत् व्यक्तचैतन्यःसर्वगोही " त्यभिहितम् ॥ तत्रमायागुणानामावरकत्त्वमात्रमभिप्रेत्य " ब्रह्मविष्णुशिवरूपिणीचैतन्यदीपा " इत्युच्यते रूपाणितु ब्रह्मादयस्त्रिविधजीवादिकंचवस्तुतःपरमात्मनएवेत्यतः पठ्यते " तस्मादात्मनएवत्रैविध्यंसर्वत्रयोनित्वमपी " ति " तद्विष्णुरीशानोब्रह्मान्यदपिसर्वंसर्वगंसर्व " मितिच इत्थंब्रह्मरूपत्वेसत्यपि प्रपंचे यज्जडत्वंमोहात्मकत्वं संख्याकृतमानंत्यंमिथ्यात्वं च प्रतीयते तदस्याःसर्वत्राऽविनाभावादेव ॥ अतएव " तदेतज्जडंमोहात्मकमनंतं तुच्छमिदंरूपमस्ये " तिविषयतासर्गस्यपृथग्रूपंनिरूप्यते " अस्यव्यंजिके " त्यादिना जडत्वादेः प्रत्यायिकाचसैवोच्यते जडत्वादिप्रत्यायनसामर्थ्ये हेतवश्चक्रमेण " सैषा चित्राद्दुढाबव्हंकुरात्स्वयंगुणभिन्ने " तिविशेषणैर्ज्ञाप्यंते ॥ " क्षेत्राणिदर्शयित्वाजावेशावाभासेनकरोती " त्युक्त्याजलदर्पणादिवदाभासाधारत्वं क्षेत्राणामेवायाति नतु पराभिमतरीत्याकेवलमायाऽविद्ययोः ॥ " भूतेभूतेव्यवस्थितः । देवःक्षेत्रेष्वेवमजोयमात्मा " इतिप्रतिबिंबताबोधकश्रुत्यंतरेपितथैवसिध्यति ॥ पराभिमतप्रतिबिंबवादस्त्वष्टमश्लोकखंडनावसरेविस्तरेणनिराकरिष्यते ॥ क्षेत्राणिदर्शयित्वाऽऽभासकरणस्यकथनेनजीवेशभावप्राक्कालिकेऽस्मिन्दर्शनेद्रष्टृत्वंपरस्यैवशुद्धस्यसिध्यति तच्चक्षेत्राणाममायिकत्वएवघटते । तेषांविवर्तरूपत्वेत्वप्रंतेश्वरदर्शनगोचरतानस्यात् ॥ तस्माद्ब्रह्मकार्यजडजीवयोर्ब्रह्मात्मकत्वमेवाभिप्रेत्यतत्र " तदेतत्सत्यमात्मात्रह्मैवब्रह्मात्मैव अत्रहोवनविचिकित्स्यमित्यों सत्यम् " इत्यादिबहुतरमाम्नातम् ॥ साकल्येनैतत्खंडस्यार्थस्तुश्रीपुरुषोत्तमचरणैर्नृसिंहोत्तरतापनीयदीपिकायां ( अ० २ पा० १ सू० ६ ) " दृश्यतेतिव " तिसूत्रे भाष्यप्रकाशेचनिर्णीतइतिततोज्ञेयः ॥ मयाप्यस्मत्संमतवास्तवतद्याख्यानदार्ढ्यायाधिकंवक्तव्यंतद्दीपिकाप्रकाशेवक्ष्यते ॥ तस्मादिदमपिवाक्यंनत्वदिष्टव्यवस्थासाधकम् ॥ मायाविद्याशब्दयोःपरस्परपर्यायत्वेतुजीवेशयोरुपाधिभेदस्यासिध्याजीवेशविभागासिद्धिस्तथाचजीवेशावाभासेनेत्यव्यवहितपूर्वोक्तिविरोधोजीवईशोविशुद्धाचिदितिसिद्धांतभंगश्च ॥ अविद्याख्यमायावशादितिपंचम्यंतंच इच्छोद्भवइत्यत्रहेतुत्वंचेत्यत्रचहेतुबोधकमुपन्यस्तमिति ईश्वरोपाधेरव्यविद्यात्वंवदतस्तवाल्पज्ञत्वसर्वज्ञत्वयोर्विपर्ययश्चदुर्वारःस्यात् ॥ यच्च तरत्यविद्यामितिवाक्यं तत्तुसतिसमूलत्वेप्रागुक्तार्थकमेव ॥ अत्रेश्वरोपाधेस्तरणेत्वद्गीत्याद्दिनिवे-

श्वानमप्यशक्यंध्यानविषयस्वरूपस्यापिमायिकत्वांगीकारात् ॥ यच्च ( एवंसर्वस्यनामरूपात्मकस्यजगतोमायिकत्वसिध्यात्तदन्तःपातितद्धेतुत्वस्यचतथात्व-मित्याहहेतुत्वंचेती ) त्युक्तं । तत्तुप्रपंचस्यामायिकतायाब्रह्मरूपतायाश्चसमर्थिततयावास्तवत्वेनतदंतःपातितद्धेतुत्वमपिवास्तवमेवसित्ध्यति नतुमायिकमित्युपेक्ष्यं ॥ वस्तुतस्तुप्रपंचहेतुत्वस्यब्रह्मधर्मत्वात्तदतिरिक्तेनदभावाच्चतस्यप्रपंचांतःपातित्वोक्तिरपिदुर्बलच्छलनफलिकैव ॥ तदाहुः ॥ **एवंचमायायाइत्यादिना** ॥ अथ जन्माद्यधिकरणभाष्येप्रपंचितं जगत्कर्तृत्वरूपब्रह्मलक्षणस्यवास्तवत्वं मायिकत्वनिरासं च दिङ्मात्रेणदर्शयितुं तत्रोक्तयुक्तीरनुवदंति ॥ **अतएवोक्तमित्यादिना** ॥ इदंकारिकाद्वयमपितत्रत्यं ॥ अत्रजन्मादिसूत्रे अस्येतिपदस्यार्थोजगतइति ॥ जन्मादिपदस्यार्थउत्पत्त्यादिः ॥ यतइति पंचम्यार्थः कर्त्रेति ॥ तत्रयच्छब्दाक्षिप्तस्यतदित्यस्यविशेष्यंब्रह्मेत्येव पूर्वसूत्रबलात्सिध्यतीति तत्रानुषज्यमानब्रह्मपदस्यार्थोबृहदिति ॥ शास्त्रयोनित्वादित्यंशस्यार्थमाहुः ॥ **वेदेनेति** ॥ हियतः तत् कर्तृत्वं वेदेन बोधितं अतः अन्यथा औपचारिकंभवितुंनक्षमं तस्यवास्तवत्वेसत्येव-यतोवाइत्यादितद्बोधकश्रुतीनां विरोधोनस्यात् कर्ताकारयिताहरिरित्यादिकल्पस्मृतिविरोधोपिनस्यात् ॥ किंच स्वरूपलक्षणकार्यलक्षणश्रुत्योस्तदनुकूलस्मृत्योश्च विरोधलेशोपिनास्ति येनैकत्रोपचारः कल्प्येतेतिवक्ष्यते ॥ अविरोधेहेतुः यतोब्रह्मसर्वभवनसमर्थत्वादचिंत्यशक्तिकमिति ॥ अतोऽकर्त्रपिकर्तृ ॥ एतदेवयथाभाष्ये प्रकाशेचयथाविभक्तंतथाअनुवदंति **जगत्कर्तृत्वमित्यादिना वेदेनेति** “यतोवाइमानिभूतानिजायंते ॥ तस्माद्वाएतस्मादात्मनआकाशः संभूतः ॥ इदंसर्वमसृजत सईक्षतलोकान्नुसृजाइतिसइमांल्लोकानसृजत ॥ तत्तेजोसृजत ॥ कर्तारमीशंपुरुषंब्रह्मयोनिं ” इत्यादिभृगुवल्लिब्रह्मवल्ल्यैतरेयच्छांदोग्यमुंडकादिवाक्यरूपेण ॥ **नचेत्यादि** ॥ एकत्रसदेवान्यत्रारोप्यते ॥ यथा चंद्रसिंहादौवस्तुतः सदेवचंद्रत्वसिंहत्वादिकं मुखमाणवकादौ नहिक्वाप्यसतआरोपः संभवति । अन्यथाखपुष्पाद्यपिक्वचिदारोप्येत ॥ प्रकृताधिकरणे च निरंकुशजगत्कर्तृत्वेन शास्त्रप्रतिपाद्यत्वं ब्रह्मणोलक्षणं दर्शितं । तत्र धर्मादावतिप्रसंगवारणायतृतीयांतं । प्रकृत्यादौ तद्वारणायोत्तरदलं “प्रजापतिरकामयतप्रजाःसृजेयेति ” इत्यादिशास्त्रप्रतिपादितकर्तृताकप्रजापत्यादौतद्वारणाय निरंकुशेति । तेषामवांतरकर्तृत्वात् “हिरण्यगर्भः समवर्तताग्रे ॥ योब्रह्माणंविदधातिपूर्वं ” इतिजन्यत्वश्रवणात् ॥ अतइदं ब्रह्मातिरिक्ते क्वाप्यसिद्धंब्रह्मण्यारोपितमिति कथं शक्यंवक्तुं ॥ **स्वयमेवेति** ॥ ईक्षत्यधिकरणादौ शंकराचार्यैरपीयमर्थः ॥ अत्रापिकिंचिद्वक्ष्यते ॥ **सन्मार्गमात्रमिति** ॥ पूर्वकांडार्थेचोदनाप्रमाणकेधर्मे उत्तरकांडार्थेज्ञाने चाविश्वासापत्याकांक्षद्भ्यसिद्धाःसर्वेपिमार्गाउच्छिद्येरन् ॥ **अवास्तवमिति** ॥ कर्तृत्वमितिशेषः ॥ तत्रे-

तित्वरूपलक्षणे ॥ **तेषामिति** ॥ सत्यंज्ञानमनंतंब्रह्मेत्युक्तानां ॥ **सत्यत्वादिने-** **ति** ॥ ब्रह्मणिसत्यत्वाद्यप्रत्यये ॥ "असन्नेवसभवतिइत्यसत्त्वापत्तिः ॥ **तत्तद्भेदेति** ॥ असत्यजडसांतप्रतियोगिकैर्भेदैर्धर्मित्वसित्व्या ॥ प्रागुक्तेशिरोमणिसिद्धांतलक्षणग्रंथे- तद्धर्मावच्छिन्नभिन्नभेदस्यतद्धर्मतायाः कथनादपिसत्यादिभिन्नभेदाः सत्यत्वा- दिरूपाएवफलंतीतितद्रीत्यापिघट्टकुटीप्रभातं ॥ एषन्यायस्तु यथाकस्यचित् व्या- पारिणोराजग्राह्यांशमदित्समानस्यतद्ग्रहणार्थंघट्टेस्थापितकुटीस्थान्राजपुरुषान्वंचयि- त्वारात्रावेवमार्गांतरेणाऽऽगमिषतोमार्गभ्रमनात् बहुपर्यट्य पुनस्तत्रैवागतस्यप्रभातं- भवेदिति ॥ तथात्रापिसधर्मत्वापत्तिभियाऽव्यावृत्तिपरत्वादरणेपिपुनस्तदेवापन्नं ॥ यथाकथंचिद्भेदस्यैकेनैवसिद्ध्यापदत्रयोपादानेव्यर्थंपौनरुक्त्यमपिध्येयं ॥ **कर्तृ- त्वमपिलौकिकमिति** ॥ कुलालादौदृष्टमुपादानकारणकालादिपरतंत्रंकर्तृत्वं- लौकिकं ॥ किंच यथाकारणगतमेवसत्यत्वादिकंकार्यैं अस्तिभातिप्रियात्मना- समन्वयात्सिद्धांतेपिप्रतीयते तथाकर्तृत्वमपिब्रह्मगतमेवांशतोलोकेऽनुवर्तते। वन्ह्यादि- गतमौष्ण्यंविस्फुलिंगादाविव ॥ अतएव"कर्ताशास्त्रार्थवत्वा"दित्यादिनाजीवस्यकर्तृ- त्वंसाधयित्वा "परात्तुतच्छ्रुते" रितिसिद्धांतितंव्यासपादैरित्यन्यत्रविस्तरः ॥ **अ- नेकेत्यादि** ॥ तैत्तिरीये "आकाशःसंभूत" इत्यादिर्भूतसृष्टिः । ओषध्यादिर्भौति- कसृष्टिः । छांदोग्ये "इमास्तिस्रोदेवता" इतिकथनाद्देवसृष्टिः ॥ बृहन्नारायणभाव- वृत्तसूक्तादौ "सब्रह्मसशिवःसहरिःसेंद्रः ॥ अर्वाग्देवाअस्यविसर्जनाय" इत्यादाव- पिसा ॥ पुरुषविधब्राह्मणेऐतरेयेचतिर्यङ्मनुष्यादिसृष्टिः ॥ तत्रांभःप्रभृतिलोकसृ- ष्टिः ॥ जन्मादिसूत्रस्थस्यअस्येतिपदस्यार्थोयं एतादृशकर्तृत्वबोधनायैवाचार्येणा- स्येत्युक्तं ॥ **मनसेत्यादि** भाववृत्तसूक्ते "कोअद्धावेदकइहप्रवोचत्कुतआजाताकु- तइयंविसृष्टिः" इतिश्रावणात्तथेत्यर्थः ॥ **अनायासेनेति** पुरुषविधब्राह्मणे रमणा- र्थताकथनात् प्रथमस्कंधादावपि सविश्वंलीलयैवेदं सृजत्यवतिहंत्यज इत्यादिकथ- नाच्चतथा **उत्पत्तीति** जन्मादिपदस्यार्थोयं कारणमिति तुपंचम्याःफलितार्थः। तत्रा- पिमूलं "यतोवाइमानि" इत्यादिकंस्पष्टमेव ॥ **वस्तुशक्यत्वेनेति** ॥ अन्यत्रवा- स्तवस्यतादृशकर्तृत्वस्याभावात् जडायांप्रकृतौपरतंत्रेषुजीवेषुजगत्कारणत्वासंभव- स्यतत्रतत्राधिकरणेषुसूत्रकृतैवदर्शितत्वाच्चकर्तृत्वमन्यगत्या वास्तवंमंतव्यं। यदित्व- न्यत्राविद्यमानमपि ब्रह्मणितदारोपितमिति प्रसह्योच्येत तर्हितत्रसत्यत्वादिकमपिअस- द्वैलक्षण्यादिकमपिचारोपितमेवतद्वदितिवक्तुंशक्यमतस्तत्रापिनाऽगतिरितिभावः ॥ **वे- दबोधितत्वादिति** "अपाणिपादोजवनोग्रहीता ॥ अणोरणीयान्महतोमहीयान् ॥ आसीनोदूरंव्रजतिशयानोयातिसर्वतः। आनेजदेकंमनसोजवीयः । तदेजतितन्नैजतित- द्दूरेतद्वंतिकेअन्यदेवतद्विदितादथोअविदितादधि" इत्यादिश्वेताश्वतरतैत्तिरीयकठे- शावास्यतलवकारादिश्रुतिभिर्बोधितत्वात् ॥ **निरविकारत्वमिति** ॥ (अ०२ पा०२

सू०२७ ) " उभयव्यपदेशात्त्वहिकुंडलवत् " इत्यादिन्यायानुरोधात्तथा ॥ नहिस्वंकुं-
डलाकारंकुर्वन्नपिदर्वीकरोविकारीतिव्यपदिश्यते ॥ अपास्तेति ॥ तदुक्तरीतिकपूर्व-
पक्षस्यायुक्तत्वमुक्तं किंतुशुद्धस्यैवाविद्यासंबंधेनजीवाभावाविद्याख्यमायाकल्पक-
त्वाच्चविकारित्वदुद्धरमेव ॥ यच्चोत्तरं ( माययासिंहादिभूतस्येत्यादि ) तदप्यसत्
ऐंद्रजालिकोहिस्वनिष्ठयावास्तव्यमाययासिंहादिभावंदर्शयति नतुद्रष्टृगतोपाधिवशात्तथा
दृश्यते, अन्यथा तैरन्येपिसिंहादयएवदृश्येरन् ॥ तत्रापिवास्तवाभ्यांतस्यतथाप्रदर्शने-
च्छाप्रयत्नाभ्यामेवतथा अन्यथासर्वदासतथैवप्रतीयेत ॥ वास्तवतद्रूपायज्ञानेच्छाप्र-
यत्नवत्त्वादेवतत्रकर्तृत्वंयुक्तं॥साकरस्यैवचतस्यासिंहादिसाकारपपदार्थांतरभावः॥तथा
प्रकृतेब्रह्मणिवास्तव्यामायाशक्तेरभावात् तस्याद्रष्टृमात्रकल्पितत्वात् तस्यवास्तवे-
च्छाप्रयत्नाभावात् सर्वथानिर्विशेषत्वाच्च नतद्वत्कर्तृत्वस्योपपत्तिः ॥ एतेनमानाभावा-
दिकंनिरस्तंतादृशप्रत्यक्षस्यैवमानत्वात् ॥ यच्च ( सिंहादिप्रकारक ) मित्यादि तत्तु
कर्तृत्वादिबोधकश्रुतिशतविप्लावकमेव ॥ नहिशुक्तौकस्य चिद्रजतप्रत्ययेतदाशुक्तेः
रजतकर्तृत्वशक्यवचनं अन्यस्यतत्रतदप्रतीतेः देवदत्तनाहंरजततयाप्रतीयेयेतीच्छायाः
शुक्तावसंभवाच्च इंद्रोमायाभिरितिवाक्यंतु व्याख्यातंप्राक् ॥ कारकस्येत्यादिकथनं-
त्वसन्मतप्रवेशरूपमेव कर्तृत्वस्यवास्तवत्वादेवयतोवाइत्यादिकार्यलक्षणंब्रह्मणः ॥
आरोपितत्वेतटस्थलक्षणमपितन्नसिध्येत् नहिरजतत्वंशुक्तेर्लक्षणंभवितुमर्हतितदे-
तत्सर्वंसुगममित्युपेक्षंते ॥ अत एवतदुत्तरमित्यादिना॥

यत्तुशुद्धेउपादानत्वंनास्तिकिंतर्हिशबलेशबलगतंचोपादान-
त्वंतदनुगतस्यशुद्धस्यलक्षणंशाखेवचंद्रस्यमायैववोपादानंतद्गतं-
चोपादनत्वंतदधिष्ठानस्यलक्षणमितितदसत्॥ शुद्धब्रह्मणएवउपा-
दानत्वंव्यासैस्तत्तुसमन्वयादितिसूत्रेणवर्णितं ॥ तत्रयस्यब्रह्मणो-
जिज्ञासाप्रतिपादितातत्किंसमवायि नि मित्तं कर्तृवाकथमेवंसं
देहः यावतायतोवाइमानिभूतानिजायतइत्यादिनानिःसंदेहंश्रू
यते ॥ एवंहिसः ॥ ननुतत्रपंचमीश्रूयतेयतइतिपंचम्यास्तसिःपं
चमीच हेतौहेतुत्वंनिमित्तएवदंडादौप्रायःप्रसिद्धं ॥ अतोनिमि-
त्तमात्रंब्रह्मउपादानवाचकपदाभावात्कल्पनायांप्रमाणाभावात्-

एवंप्राप्तआह "तत्तुसमन्वयात्"दिति ॥ तुशब्दःपूर्वपक्षव्यावृत्त्यर्थः तत्ब्रह्मैवसमवायिकारणं कुतःसमन्वयात् सम्यगनुवृत्तत्वात् ॥ अस्तिभातिप्रियत्वेनसच्चिदानंदरूपेणान्वयात् जडजीवांतर्यामिष्वेकैकांशस्यप्राकट्यं ॥ अन्यांशस्यतिरोभावःभगवदिच्छाया-एवसर्वत्रनियामकत्वात् ॥ अलीकत्वप्रतीतेःसर्वत्रासत्वान्नालीकत्वंपटादिष्वनुगतमतोनमायायाउपादानत्वसंभवःब्रह्मणः समवायित्वे "तदात्मानंस्वयमकुरुत" इत्यादिश्रुतिरनुगृहीताभवति नचशाखाचंद्रन्यायोप्यत्रसंभवति ॥ यथाचंद्रंदिदर्शयिषुःशाखांदर्शयित्वापुनस्तांत्याजयित्वातदग्रस्थचंद्रंपश्येतिवदति तथात्रापिभृगुपित्रायदियतोवाइमानिभूतानीत्यादिनाजगत्कारणंजिज्ञास्यमुक्त्वापुनरन्यदुक्तंस्यात्तदात्वदुक्तन्यायोत्रप्रवर्त्तेत ॥ तस्माज्जगत्कारणंशुद्धमेवजिज्ञास्यंनतुशबलंपरिभाषितं ॥ एवंशाखाचंद्रन्यायस्यात्रासंभवात्त्वन्मतेनिर्गुणब्रह्मजिज्ञासांप्रतिज्ञायसगुणब्रह्मणोमाययालक्षणकथनेव्यासस्यप्रतिज्ञाहान्युपक्रमविरोधरूपदोषौस्यातामेव ॥ तस्माज्जन्माद्यस्ययतइतिसूत्रं निर्गुणब्रह्मणःकारणत्वंवदतीतित्वयापिस्वीकरणीयं॥शुद्धस्यकारणत्वेचतदैक्षत बहुस्यांप्रजायेयेतिश्रुतौतत्पदेनशुद्धस्यैवपरामर्शःकर्त्तव्यस्तस्यबहुभावउत्पत्तिश्चयदिस्वीक्रियते तदाशुद्धत्वहानिरित्युभयतःपाशारज्जुस्तवस्यात्॥नचमाययाबहुभावः । नस्मिन्प्रपाठकेमायावाचकपदाभात् ऐंद्रजालिकदृष्टांतस्यापितत्राभावात् ॥ किंतुमृत्सुवर्णादिदृष्टांतएवतत्रश्रुतः सचशुद्धस्यकारणस्यकार्यरूपत्वस्वीकारएवानुकूलः ॥ नहिमृत्सुवर्णादीनांमाययाघटकुंडलादिरूपता येनब्रह्मणोमायय‍ाजगद्रूप-

तायांदृष्टांतता स्यात् ॥ एतेनअत्रेत्यादिकंसर्वमपास्तं ॥ तच्छ-ब्देनसत्पदार्थस्यशुद्धस्यपरामर्शईक्षणंमुख्यमेवेतिनुनसंभवति - शुद्धईक्षणकर्तृत्वस्यत्वयानंगीकारत्वात् ॥ नह्यैंद्रजालिकत्व-च्छुद्धेप्यंतःकरणादिरस्तियेनतद्द्वत्रापीक्षणंमुख्यंस्यात् ॥ किं-तुतदप्यौपचारिकमेव तथा "चसेयंदेवतैक्षतहताहमिमास्तिस्रो-देवता अनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणी"तिवा-क्येपि ( सेयंदेवतैक्षताहंआत्मनाइतिशब्दार्थामुख्याएव ) त्य-सगतं ॥ किंचशबलस्यजगत्कारणत्वेतस्यमुख्यत्वाभावाद्गौण-स्यैवजगत्कारणत्वमुक्तंस्यात्तथा च "गौणश्चेन्नात्मशब्दा" दि-तिसूत्रविरोधः ॥ तस्यार्थस्तु ईक्षत्यादिगुणयुक्तःपरमात्मामा-यासंबंधयुक्तोगौणोजगत्कारणमितिचेन्नतथात्वंवक्तुंशक्यते ॥ कुतः आत्मशब्दात् " आत्मावाइदमेकएवाग्रआसी " दित्युपक्रम्य " सऐक्षत " इत्युक्तेः ॥ आत्मशब्दःपुनःसर्वे-षुवेदांतेषुनिर्गुणब्रह्मवाचकत्वेनैवसिद्धःतस्यैवजगत्कर्तृत्वंश्रुति-राह स्वातंत्र्याभावेनसगुणस्यकर्तृत्वमेवनसंभवतिवेदाश्चप्र-माणभूतास्ततसर्वभवनसामर्थ्यंमेवश्रुतिबललभ्यमंगीकर्त्तव्यं ॥ अस्तिभातिप्रियत्वादयोधर्मायथाब्रह्मगतास्तथाकर्तृत्वमपिलो-केप्रतीयते ॥ तस्मादात्मशब्दप्रयोगाद्गुणातीतमेवकर्तृ ॥ किंच सोकमयतेत्युपक्रम्यतदात्मानंस्वयमकुरुतयदाह्येवैषएत-स्मिन्नदृश्येऽनात्म्येऽनिरुक्तेनिलयनेऽभयंप्रतिष्ठांविंदतेअथसो-भयंगतोभवतीतिप्रापंचिकधर्मरहितेब्रह्मणिएतस्मिञ्जगत्कर्तरि-परिनिष्ठितोमुक्तोभवतीत्यर्थः ॥ तत्रयदिजगत्कर्तागौणःस्या-त्तदातन्निष्ठस्यसंसारएवस्यात्नमोक्षः ॥ अतस्तन्निष्ठस्यमो

क्षोपदेशा ” दितिसूत्रविरोधःस्त्वन्मतेस्यात् ॥ किंचयदिशा-
स्त्वाचंद्रन्यायेनगौणंकर्तृत्वादिधर्मविशिष्टंप्रदर्शयित्वावेदांते-
र्निर्गुणब्रह्मबोधनीयंस्यात्तदाजगत्कर्त्ताहेयत्वेनोपदिश्येत ॥
सच हेयत्वेननोपदिश्यतेऽतोनिर्गुणएवजगत्कर्त्ता ॥ एवंच-
मायोपहितस्यकारणत्वेसूत्रत्रयविरोधःस्यात् ॥ नचतादृशसू-
त्रत्रयंप्रकृतेःकारणत्ववादिनांसांख्यानामेवखंडनपरं नास्मन्म-
तखंडनपरमितिवाच्यंमायिकस्यकारणत्वंवदतस्तवमतेऽपि औ
पाधिकधर्माणामुपाधिवृत्तित्वनियमेन मायायाःकारणत्वं-
पर्य्यवस्यतीतितत्खंडने नास्माकंविरोधइत्यस्यवक्तुमशक्यत्वात्
मायाप्रकृतिशब्दानांपरस्परपर्य्यायत्वात् यत्तुमायाकारणत्वबो-
धिकानांबलेनकेवलेश्वरकारणत्वबोधिकानांश्रुतीनां जन्मादिसू
त्रस्यचौपचारिकत्वं ॥ यथात्वन्मतेऽक्षरब्रह्मणःकारणत्वेनपुरुषो
त्तममुपक्रम्यकारणत्ववादिनीनांनत्रौपचारिकत्वंपुरुषोत्तमजि
ज्ञासांप्रतिज्ञाय पठितस्यजन्माद्यस्ययतइतिसूत्रस्यापितथात्व-
मित्युक्तंतत्तुच्छं ॥ ईश्वरकारणत्वबोधकश्रुतीनामुपक्रमोपसं-
हारादिषड्विधतात्पर्य्यनिश्चायकलिंगसहकृतानामौपचारिक-
त्वकल्पनापेक्षयामायाकारणत्वबोधिकायाःकस्याश्चिच्छ्रुतेरौ-
पचारिकत्वकल्पनेलाघवात् ॥ यथात्वन्मतइत्यादिनादृष्टांत
स्त्वत्स्मन्मतानभिज्ञतांद्योतयतिधृष्टत्वंच ॥ नह्यस्मन्मतेनिर्गुणब्रह्म-
वत्पुरुषोत्तमस्याकारणत्वंनिर्द्धर्मिकत्वंवाकुत्रचिदपिसिद्धांति-
तं नापिजन्मादिसूत्रस्यश्रुतीनांवाऔपचारिकत्वं ॥ तस्मा-
त्परमतमज्ञात्वाखंडनंकुर्व्वन्भ्रतारकएवासिअग्रेचयत्तुटीकायां
( प्रकृतिगतंकर्तृत्व ) मित्यारभ्यतन्नसम्यगित्यंतेनशुद्धाद्वैतमा-

त्तैंडटीकाकृदुक्तंकिंचिदनूद्यतथाव्याख्यानेहिजगज्जन्माद्याश्रय-
स्यशास्त्रोक्तकारणत्वेनहेतुनाकर्तृत्वमनेनसूत्रेणसाध्यते तथाच-
पूर्वपक्षिणाभृगुर्वैवारुणिरित्यत्रापिब्रह्मणिप्रकृतिस्थंगौणमेवकर्तृ-
त्वमनूद्यतइतिचेदुक्तंतर्हिजगज्जन्मादिकंप्रकृतेरन्यत्रास्थापयित्वा
प्रवृत्तेनानेनसूत्रेणप्रकृतिगतमेवकर्तृत्वंसाध्यतइत्यापततिजीवे
शावाभासेनकरोतिमायांतुप्रकृतिंविद्यादित्यादिशास्त्रैःप्रकृतौका-
रणत्वस्योक्तत्वात्प्रकृतिनिष्ठकर्तृत्वस्यबोधनेचजीवेशावितिश्रुतिरु-
पष्टंभिकास्यात् सिद्धसाधनंचैवंव्याख्यानेस्यात्प्रकृतिगतकर्तृत्वं
स्यपूर्वपक्षिणास्वीकृतत्वात् तथाचसुव्याख्याताब्रह्मजिज्ञासा-
प्रतिज्ञोपपत्तिरित्यादिनाहासःकृतःसोप्यस्मत्सिद्धांतानभिज्ञतयै-
व ॥ पूर्वाधिकरणेवेदार्थभूतब्रह्मणोजिज्ञासाधिकृते तिकथंजि-
ज्ञास्यमितिप्रकारविशेषाकांक्षायांसमन्वयाविरोधाभ्यांतद्वक्त-
व्यं तद्बोधकमपिमंसूत्रं ॥ तत्रकिंलक्षणंकिंप्रमाणकंब्रह्मेति-
जिज्ञासायांलक्षणप्रमाणात्मकंप्रकारद्वयमाह " जन्माद्यस्यय-
तःशास्त्रयोनित्वा " दिति ॥ तत्रजन्माद्यस्ययतइत्यंशेनलक्ष-
णं शास्त्रयोनित्वादित्यंशेनप्रमाणं ॥ अत्रसर्वेपियोगविभागेन
शास्त्रयोनित्वादितिसूत्रंभिन्नमभ्युपगच्छंति तन्नयुक्तं ॥ अ-
ग्रिमसूत्रेषुतत्तुसमन्वयादीक्षतेर्नाशब्दमित्यादिषुसाध्यहेतुनिर्दे-
शपूर्वकमेवाधिकरणरचनस्यदर्शनेनात्रापितथैवयुक्तत्वात् ॥
येतुजन्माद्यधिकरणंशास्त्रयोनित्वाधिकरणंचभिन्नमिच्छंतिते-
षांमतेप्रथमस्यहेतुशून्यत्वाद्द्वितीयस्यचसाध्यशून्यत्वात्साकां-
क्षतयातिक्लिष्टत्वेनतद्विवक्षितप्रमेयासाधकत्वंबोध्यं तत्र " सत्य-
ज्ञानमनंतंब्रह्म ॥ निष्कलंनिष्क्रियंशांतंनिरवद्यंनिरंजन " मि-

त्यादिश्रुत्याब्रह्मणःसर्वधर्मराहित्यप्रतिपादनात्कर्तृत्वस्याप्यभा-
वःप्रतीयतेयतोवाइमानिभूतानीत्यादिश्रुत्याकर्तृत्त्वंप्रतिपाद्यते ॥
तत्रसंदेहः ब्रह्मकर्तृआहोस्विदकर्तृ इतितत्रायंपूर्वपक्षः ॥ " शे-
षलक्षणेकर्मफलार्थत्वा " दित्यनेनोपलक्षणविधयाज्ञानस्या-
पिफलशेषत्वेसिद्धेप्राधान्यंफलस्यैवेतितत्संबंधाद्ब्रह्मविदाप्नोति-
परमिति वाक्यमेवप्रधानं नतुकार्य्यलक्षणंतथा ॥ अतएवत-
त्रऋचापिविदतंयदितस्यप्राधान्यंनस्यात्किमितिविद्गुणयात्त-
थासतिज्ञानंफलार्थं फलंचफलवाक्योक्तपरत्वज्ञानादतःपर-
त्वज्ञानार्थंकर्तृत्वंपरविवरणतयोक्तं ॥ स्वरूपलक्षणेप्रापंच-
कधर्मराहित्यप्रतीतेर्ब्रह्मणकर्तृत्त्वस्याशक्यवचनत्वात् तस्मा-
द्वाएतस्मादित्यादिनायःकर्तृत्वमुक्तंतज्ज्ञेयात्फलरूपंपरंपृथक्कृ-
त्यतंविवरीतुमुक्तं ॥ तत्स्वरूपजिज्ञासायांसर्वांतरत्वकथनपू-
र्वकमानंदइतिस्वरूपमुक्तं ॥ अन्यथातन्निरूपणमसंगतंस्या
त् ॥ सर्वांतरत्वंचतस्यपरत्वनिर्वाहकतयोक्तं ॥ " सर्वं-
वैतेऽन्नमाप्नुवंति-येन्नंब्रह्मोपासत " इत्यादिनाअन्नब्रह्माद्यु-
पासनाफलं " अस्तिब्रह्मेतिचेद्वेदसंतमेनंततोविदुरित्यादिनानु-
वाकचतुष्टयेनकथितस्यसर्वभयाभावरूपप्रधानफलस्यशेषत
यासर्वोत्कृष्टत्वज्ञापनायोक्तमितिकर्तृत्वंपरस्मिन्यद्यपिसिध्य
तितथापिस्वरूपलक्षणविरोधात्पूर्वकांडोक्तप्रजापतिगतस्यप्रकृ
तिगतस्यवाकर्तृत्वस्यारोपेणानुवादोपिसंभवतीतिभृगुप्रपाठके-
पिफलाश्रवणेनामुख्यत्वात्तत्राप्येवंनेतव्यं तथाचनकर्तृत्वंब्रह्म-
लक्षणमिति ॥ सिद्धांतस्तुस्यादन्यगतकर्तृत्वारोपानुवादःका-
र्य्यलक्षणे यदिस्वरूपलक्षणंविरुद्ध्येत तदेवतुन ॥ विवरण-

र्द्धिपरस्यतृतीयांतेनब्रह्मपदेनैवविवृतत्वात् ॥ नचतत्रवेदहिरण्यग-
र्भब्राह्मणजातिजीवाअर्थत्वेनग्रहीतुंशक्याः ॥ परपदविवरणत्वा
त्सांतत्वादिनाब्रह्मापेक्षयोत्कर्षस्यतेष्वशक्यवचनत्वात् ॥ परश-
ब्दस्यान्यार्थकत्वोपगमेपिविवरणोक्तब्रह्मशब्दानुरोधादेतएवपर-
त्वेनग्राह्यास्तत्वाभिस्तुकर्मणापीतिसाधनांतरेणज्ञानेनकोवाविशे-
षःस्यात् ॥ अतउत्कृष्टार्थकत्वमादरणीयं ॥ उत्कृष्टंचकिमित्य-
पेक्षायां विवरणानुरोधाद्ब्रह्मांतरंकल्प्यं तच्चाप्रसिद्धं स्वरूपल-
क्षणहीनंच ॥ नचप्रकृतिः सांख्यमतेपिज्ञानात्मकपुरुषापेक्षया-
तस्याहीनत्वात्परार्थत्वाच्च अश्रौतत्वस्यवक्ष्यमाणत्वाच्च अतो-
ब्रह्मापेक्षयान्यस्यपरत्वेनवक्तुमशक्यत्वादुक्तलक्षणविशिष्टस्यैवब्र
ह्मणःकर्तृत्वंवेदेनबोध्यते ॥ नचतदारोपितमितिशक्यंवक्तुं ॥ निरं
कुशस्यतस्यान्यत्रासिद्धतायाअनुपदमेववक्ष्यमाणत्वात् ॥ ननु-
लक्षणद्वयस्यैकपरत्वेसर्वासुश्रुतिष्वेकमेवब्रह्मप्रतिपाद्यंतदाअस्थू-
लादिवाक्येष्वपितदेवनिरूप्यतइतिनिर्द्धर्मकत्वसिद्धौकर्तृत्वस्या-
पिनिषेधइतिचेन्न ॥ अस्थूलादिवाक्येलोकप्रतीताएवप्रतिषिध्यंते
नाप्रतीताः नापिश्रुतिप्रतीताः तस्माल्लौकिककर्तृत्वनिषेधेपिजग-
त्कर्तृत्वस्यनिषेधोनसंभवत्येव श्रुतिप्रतिपादितत्वात् तस्माद्ब्रह्मणए-
वकर्तृत्वमितिसिद्धांतः॥तत्रप्रमाणमाह शास्त्रयोनित्वादित्यंशेन॥-
शास्त्रेयोनिःशास्त्रयोनिःअत्रसप्तम्यावैषयिकमधिकरणत्वंबोध्यते
विषयत्वंचप्रतिपाद्यत्वं एवंचशास्त्रप्रतिपाद्यकारणत्वादित्यर्थः ॥
एतेन ( किंचोक्तशब्दाध्याहारेऽसामर्थ्यप्रसंगाच्छास्त्रशब्दस्यतदु-
क्तेलक्षणावाच्या तथाचविग्रहोऽनुपपन्न) इतिप्रलपितमपास्तं॥
शास्तिराजवदाज्ञापयति एवंचतद्विरोधेऽपराधीपिबोधितः॥नन्व-

त्रोत्तरकांडार्थएवविचार्य्यतइतिशास्त्रशब्दस्यकुतःप्रयोगइतिचे-
न्न॥पूर्वकांडस्थवाक्यानामपिब्रह्मपरत्वमेवेत्यभिप्रायेणशास्त्रश-
ब्दप्रयोगः॥ ननुजन्मादिसूत्रस्थेनयतइतिपदेनैवनिस्मरणात्शास्त्र
प्रमाणकत्वसिद्धौशास्त्रयोनित्वांशोव्यर्थइतिचेन्न यतइत्यस्यहेतु-
कोटिप्रवेशेजन्माद्यस्येतिभागस्यप्रपंचवृत्तांतपरतयाब्रह्मलक्षण-
त्वायोगेनासंगतिप्रसंगात्॥नचलक्षणेप्रविष्टस्यैवयतःशब्दस्यतच्छ्रु-
तिस्मारकत्वमितिवाच्यं॥ श्रुतिस्थितस्याभूतानीतिपदस्यबहुवच-
नांतत्वेनतद्विरुद्धतापत्तेर्वाक्यांतरासंग्रहापत्तेश्चेति तस्माच्छास्त्र-
योनित्वादितिवक्तव्यमेव॥ मतांतरवज्जन्मनोनविकारत्वं किं-
त्वाविर्भावतिरोभावावेव नचप्रकृतिगतकर्तृत्वस्यानुवादोपिसंभ-
वति पूर्वपक्षिमतसिद्धस्यप्रधानस्यशास्त्राप्रतिपाद्यत्वेनतत्कर्तृ-
त्वस्यदूरपराहतत्वात्॥ तस्माच्छास्त्रोक्तकर्तृत्वंब्रह्मणोन्यत्रनसं-
भवति अतएव सिद्धसाधनादि वदन्ननभिज्ञएव यदपि (शौं-
डादिषुयोनिशब्दस्यपाठाभावेन सप्तमीतियोगविभागस्यभा-
ष्यानारूढत्वेनशास्त्रेयोनिरितिविग्रहेसहसुपेतिसमासोवाच्यः स-
चागतिकगति) रितितन्न॥ यदिशौंण्डादिगणपठितशब्दैरेवसप्त
मीसमासःसर्वत्रस्यात्तदायंदोषः॥ दृश्यतेत्वन्यशब्दैरपि अतए-
व तुल्यास्यप्रयत्नंसवर्णमितिसूत्रभाष्ये "अथवापूर्वस्तत्पुरुष-
स्ततोबहुव्रीहिःतुल्य आस्ये तुल्यास्यः तुल्यास्यः प्रयत्न एषामि
ति अथवापरस्तत्पुरुषस्ततोबहुव्रीहिः आस्येप्रयत्नआस्यप्रयत्नः
तुल्यआस्यप्रयत्नएषामित्युक्तं॥ एवंचतुल्यप्रयत्नादिशब्दानां-
शौंडादिषुपाठाभावात्सप्तमीतियोगविभागेनैवसमासस्तत्रभाष्य-
काराभिप्रेतइतिगम्यते एवमत्रापिसमासो भाष्यविरोधाभावात्॥

किंचत्वन्मतेजन्मादिसूत्रस्यभिन्नत्वेनहेतुशून्यत्वंशास्त्रयोनित्वा-
दित्यस्यचसाध्यशून्यत्वेनातिक्लिष्टतयाऽभिमतासाधकत्वं ब्रह्म-
सूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैरितिभगवद्वाक्यात्सूत्रेषुहेतुमत्व-
स्यावश्यमपेक्षितत्वे जन्माद्यस्येतिसूत्रेतदभावे भगवद्वाक्यविरोध
श्चस्यात् ॥ ननु"उत्क्रांतिगत्यागतीना" मितिसूत्रेहेत्वदर्शनेनसूत्रे-
षुहेतुबोधकपदघटितत्वमेवेतिनियमोनसंभवतिब्रह्मसूत्रपदैश्चैवेति-
भगवद्वाक्येहेतुपदंकारणपरंप्रयोजनपरंवासूत्राणांकारणानितुवि
षयवाक्यानिसंत्येवेतिचेन्न" उत्क्रांतिगत्यागतीना,,मितिसूत्रेहेतु-
वाचकपदाभावेपि "स्रोतएवेति"पूर्वस्मिन्सूत्रे अतएवेतिपदसत्वा-
त्तस्मादतएवेतिहेतुवाचकपदमनुवर्त्यतेऽन्यथासूत्रस्यैकषष्ठ्यंतप-
दरूपत्वात्तस्यसंबंधस्यकाप्यप्रतीतेरनन्वयएवस्यात् ॥ तथाच -
अतःश्रुतितएवोत्क्रांतिगत्यागतीनांजीवेश्रवणाद्यथायोग्यंजीव-
स्यपरिमाणमंगीकर्त्तव्यमित्यर्थः ॥ सूत्रयोजनातुजीवात्माउ-
त्क्रांतिगत्यागतिसंबंधी ॥ अतएवतद्बोधकश्रुतितएव श्रुतिस्तु"स
यदास्माच्छरीरादुत्क्रामतिसहैवैतै" सर्वैरुत्क्रामतिये केचास्मा-
ल्लोकात्प्रयांतिचंद्रमसमेवतेसर्वेगच्छंति ॥ तस्माल्लोकात्पुनरेत्य-
स्मैलोकायकर्मण"इति ॥ तादृशसूत्राणांहेतुर्राहितत्वंहेतुपदस्य-
चकारणपरत्वंयदुक्तं तदपिनसंगच्छते ॥ हेतुमच्छब्दस्यसकारण-
कत्वार्थकतयाजन्यैरितिलभ्यते ॥ सूत्राणांजन्यत्वस्यब्रह्मनि-
श्चयेऽहेतुत्वात्तादृशविशेषणस्यवैयर्थ्यापत्तेः॥ नहिजन्येनैवनि-
श्चयोननित्येनेतिनियमोस्ति येनजन्यपदंनित्यव्यावृत्यर्थत्वेन-
सार्थकंस्यात् ॥ जन्यशब्दस्वीकर्तॄनयेब्रह्मसूत्रपदैरित्यनेनैवज-
न्यत्वलाभेपुनर्गानन्थिरर्थकमिति ॥ अस्मन्मतेहेतुपदंहेतुत्वन-

तिपादकपंचम्यंतपरं हेतुत्वंचज्ञापकज्ञानविषयत्वं ज्ञापकत्वं-
निश्चयजनकत्वं तथाचनिश्चयजनकज्ञानविषयप्रतिपादकप-
दघटितैर्ब्रह्मसूत्रैरित्यर्थोलभ्यते ॥ एवंचनिश्चायकपदघटितत्व-
स्यनिश्चयजनकत्वार्थमुपयोगात्तद्विशेषणसार्थक्यं एतेनहेतु-
मद्भिरित्येतस्येत्यादिकंसर्वमपास्तं ॥ तस्माज्जन्माद्यस्ययतइति-
नपृथक्सूत्रं किंतुजन्माद्यस्ययतश्शास्त्रयोनित्वादित्येकमेव ॥
नचोक्तपदाध्याहारकल्पनेगौरवमितिवाच्यं सप्तम्याविषयत्वार्थ
कत्वेनपरिहृतत्वात्॥यदपि (तत्तुसमन्वयादित्यत्रान्वयादित्यस्य-
सम्यगनुवृत्तत्वादनारोपितागन्तुकरूपेणान्वयादितितद्व्याख्यानै-
तादृगर्थेलक्षणामानमन्वेष्य) मित्युक्तंतदपिसमन्वयशब्दस्यसम्य
गन्वयबोधकत्वंनसंभवतीत्यभिप्रायेणवा ऽनारोपितानागंतुक-
रूपेणान्वयइतिव्याख्यानंनसंभवतीत्यभिप्रायेणवा नाद्यः उप-
सर्गसमभिव्याहृतधातोरनेकार्थबोधकत्वस्यसर्वसंमतत्वात् ॥ अ
तएवोक्तं उपसर्गेणधात्वर्थोबलादन्यत्रनीयतइत्यादि ॥ नापि-
द्वितीयः सम्यक्त्वविवरणरूपत्वात् ॥ अन्यथात्वन्मतेपिसर्वेषां-
वेदांतवाक्यानांतात्पर्येणास्मिन्नर्थेऽन्वयादितिव्याख्यानमपि-
मानाभावान्नस्यात् ॥ किंच त्वन्मतेशास्त्रयोनित्वपूर्वपक्षनिरा-
सार्थंतत्तुसन्वयादितिसूत्रं तच्चनसंभवति ॥ सर्वस्यवेदस्यब्र-
ह्मण्यन्वयासंभवात् पूर्वकांडस्यक्रियार्थत्वादेकशास्त्रानुरोधा-
दुत्तरकांडस्यपूर्वशेषताकुतोनस्यात् ॥ नचवैपरीत्यशंकनीयं ॥
सिद्धेब्रह्मणिसाध्यार्थानांवाक्यानामन्वयायोगात् ॥ नचप्रा
पकत्वेनान्वयः तत्तद्वाक्यगतफलोक्तिबाधाप्रसंगात् अस्तुवा-
कथंचित्समन्वयस्तथापिप्रतिपादानीयत्वेसाध्यःसः नहिसंदि

ग्धस्यहेतुत्वंसंभवतिसिद्धस्यैवहेतुत्वात् ॥ किंचसमन्वय-
स्यासिद्धत्वेग्रिमसूत्राणांवैयर्थ्यंस्यात् ॥ तस्मात्त्वन्मतेतादृशसू-
त्रमसंगतमेव ॥

## टीका

**सहस्राक्षे** प्रकारांतरमाहेत्यादिप्रसंगागतेनेत्यंतंभागंदूषयंतियत्तु**शुद्धेउपादा-
नत्वमित्यादिनासूत्रमसंगतमेवेत्यंतेन** ॥ अयंभावःयत्तुशुद्धेउपादानत्वंनास्ति-
किंतर्हिशबलेइत्याद्युक्तंतत्तुप्रसिद्धसुशंकराचार्यैरपिव्याख्याताखिलशावास्यादिदशोप-
निषत्सु भगवद्गीतायांसमग्रायांचतुर्लक्षग्र्यांचैकत्रापिशबलब्रह्मणोकथनात्तत्परशबलशा-
ब्दस्याप्यनुच्चारणाच्चतस्यैवनिर्मूलतयासकलंनिर्मूलं ॥ यदिचतत्रतत्स्यात्तर्ह्येकामपि-
तदर्थकशबलशब्दघटितांत्वदाचार्यादिव्याख्यातप्रसिद्धोपनिषत्स्थांश्रुतिभगवद्वाक्यंवा-
प्रदर्शय ॥ यदिचव्यासस्यतथासिद्धांतःस्यात्तर्हिसर्वसंदेहवारणायप्रवृत्तोभगवान्-
कथंनैकमपितद्बोधकंसूत्रंप्रणयेत् ॥ तस्मात्केवलकपोलकल्पितएवायंशबलवादः ॥
किंचशबलेऽपित्वद्रीत्याब्रह्मांशस्योपादानत्वायोगात् उपाधावेवांततस्तद्वाच्यमतएवमा-
यैववोपादानमितित्वयैवावधारितं ॥ तथाचतदेवस्पष्टमुच्यतां ॥ अलमसंदिग्ध-
ब्रह्मकारणताबोधकश्रुतिषुश्रद्धावतांप्रतारणायशबलाख्यब्रह्मविशेषस्योपादानत्वमि-
तिप्रवादेन ॥ नापिशुद्धस्यतत्रानुगतत्वंसंभवति उपाधेस्तुच्छत्वात् ॥ नहि-

---

## सहस्राक्ष.

प्रकारान्तरमाह ॥ शाखेन्दुवदिति ॥ शुद्धे उपादानत्वं नास्ति किंतर्हि शबलेशबलगतं चो-
पादानत्वंतदनुगतस्य शुद्धस्य लक्षणं शाखेव चन्द्रस्य ॥ मायैववोपादनं तद्गतं चोपादानत्वं त-
दधिष्ठानस्य लक्षणम् ॥ एतेन निर्गुणब्रह्मजिज्ञासां प्रतिज्ञाय सगुणब्रह्मणोमायायावा लक्षणक-
थने व्यासस्य प्रतिज्ञाहान्युपक्रमविरोधौ स्यातामिति जन्माद्यस्येतिसूत्रंनिर्गुणलक्षणपरतया व्या-
ख्येयं तथाच तद्विरोधइत्यपास्तं ॥ शाखाचन्द्रवन्निर्गुणतटस्थलक्षणताया एवस्वीकारात् ॥ अ-
त्र शुद्धकारणत्वपक्षे तदैक्षतबहुस्यांप्रजायेयेत्यत्र प्रकृतः सत्पदार्थः परामृश्यते तस्य बहुभावो-
मायया नहि मायारूपसहकारिसमवधानऐन्द्रजालिकस्य तथाभावोगौणोद्वैतापादकोवा ॥ शबलका-
रणत्वपक्षेऽपि ऐन्द्रजालिकपरतच्छब्दघटिते सऐक्षतसिंहोभवेयमिति वाक्यइव तच्छब्देन सत्पदा-
र्थस्यैव परामर्शईक्षणंच मुख्यमेव नतु ताआपऐक्षन्तेतिवद्गौणं ॥ एवंमायामात्रहेतुत्वपक्षेऽपि स-
त्पदार्थस्यैव तच्छब्दवाच्यत्वमीक्षणंच तेचमुख्ये एव परन्तु सेनाऽभिप्रायेण यथा राज्ञोयोत्स्ये इ-
तिवाक्यमौपचारिकं तथामायाभिप्रायेण बहुस्यामित्यौपचारिकम् ॥ सेयंद्वैविध्येक्षतहन्ताहमिमास्तिः

कल्पितरजतेशुक्तिरनुगताभवति ॥ अन्यथातऽऽदात्म्यतयासर्वस्यतत्ररजतप्रत्यया-वश्यंभावापातात् ॥ नापिगंधर्वनगरंकोपिप्रवेष्टुमीष्टे ॥ अतोऽननुगततयाशुद्धस्यतत्त-टस्थलक्षणंभवितुंनार्हतिशास्त्राचंद्रदृष्टांतस्तुनिराकरिष्यते ॥ यच्चमायैववोपादानमि-त्यादितत्तुच्छंस।जगदुपादानमितिबोधिकायाएकस्याअपिप्रसिद्धोपनिषत्श्रुतेर्भगवद्वा-क्यस्मृतेश्चानुपलंभात्भगवतासूत्रकृताचैतावत्स्वधिकरणेषुनैकमपितत् मायायाजगदु-पादानत्वसाधकंप्रणायि ॥ यदितथासोभिप्रैष्यत्कथंनप्राणेष्यजीवेचराचरभावभावि-त्वात्तद्व्यपदेशस्येवभाक्तत्वंचब्रह्मण्युपादानत्व।विव्यपदेशस्यकंठरवेणकथंनावक्ष्यत् ॥ वक्तितुतत्रतत्रमायायाः कारणत्वादिनिषेधमेव ॥ तद्यथा त्वद्वीत्याप्रथमस्यप्रथमे-सू. ५ "ईक्षतेर्नाशब्द" मितिप्रकृतेः कारणत्वंनिरस्तं । आनंदमयाधिकरणेपि "कामाच्चनानुमानापेक्षे" तिजडायास्तस्याः कामासंभवात्तन्निरस्तं ॥ तेन "सोका-मयत॥आनंदाध्येव" इत्यादौब्रह्मणएवकारणता ॥ यच्चमुंडके "तथाऽक्षरा"दित्याद्यु-क्तं तत्रापिब्रह्मण एवकारणतेतितस्यद्वितीये सू० २२ "विशेषणभेदव्यपदेशाभ्यां-चनेतरौ" इतितस्यास्तदपास्तं ॥ यदिचसासर्वोपादानंस्यात् द्युभ्वाद्यायतनत्वं तस्या-एवस्यात् । वस्तुतस्तुतृतीयेब्रह्मणएवतथात्वंसाधयित्वा सू० ३ "नानुमानमतच्छ-ब्दात्" इत्यादिनाप्रकृते स्तन्निराकृतं ॥ यच्चसर्वभूताद्याश्रयोक्षरंवेदेषुतत्रतत्रपठ्यते

---

सोदेवताअनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीतिवाक्येऽपि सेयंदेवतैक्षताहंआत्मनाश-ब्दार्थामुख्याएव ॥ जिवाऽभेदोऽपि मुख्यः नामरूपव्याकरणमेवशुद्धऔपचारिकमिति गौणश्चेन्ना त्मशब्दात् तन्निष्ठस्यमोक्षोपदेशात् हेयत्वावचनाच्चेतिसूत्रत्रयस्य विरोधोनास्माकं किन्तुसांख्य-मतखण्डनपरमेवतत्॥ तन्मतईश्वराभावेनोक्तरीत्या योजनायाअसम्भवात् ॥ मायाकारणत्वपरबहु-वाक्यबलेनेश्वरहेतुत्ववादिनीनां श्रुतीनां जन्मादिसूत्रस्यच केवलमौपचारिकत्वम् ॥ यथात्वन्म-तेअक्षरब्रह्मणोहेतुत्वेन पुरुषोत्तममुपक्रम्य कारणत्ववादिनीनां तत्रौपचारिकत्वमिति पुरुषोत्तम-जिज्ञासां प्रतिज्ञाय पठितस्य जन्माद्यस्ययतइत्यस्याऽपि तथात्वम् ॥ १२ ॥ यत्तु टीकायां प्र-कृतिगतं कर्तृत्वं ब्रह्मण्यारोप्यते ॥ एवं भृगुर्वैवारुणिरित्यत्राऽपि गौणमेवकर्तृत्वमनूद्यतइति पूर्व-पक्षेऽस्माकंमतं न्यस्य जन्माद्यस्ययतःशास्त्रयोनित्वात् इतिसूत्रमेकं कृत्वावतारितं ॥ अस्य प्रत्य-क्षस्य जगतोजन्मादिजन्मस्थितिलया यतस्तत्कर्तृ कुतः शास्त्रयोनित्वात् शास्त्रे योनिः शास्त्रयो-निःस्तस्य भावः शास्त्रयोनित्वं तस्माच्छास्त्रोक्तकारणत्वादित्यर्थइतिव्याचख्यौ॥ तन्नसम्यक् ॥ तथाव्याख्याने हि जगज्जन्माद्याश्रयस्य शास्त्रोक्तकारणत्वेन हेतुनाकर्तृत्वमात्रमनेन सूत्रेण सा-ध्यते ॥ तथाच पूर्वपक्षिणा भृगुर्वैवारुणिरित्यत्राऽपि ब्रह्मणि प्रकृतिस्थं गौणमेव कर्तृत्वमनू-द्यतेइतिचेदुक्तं तर्हिजगज्जन्मादिकं प्रकृतेरन्यत्रास्थापयित्वा प्रवृत्तेनाऽनेन सूत्रेण प्रकृताववेक-र्तृत्वमपि साध्यते इत्यापतति ॥ जीवेशावाभासेनकरोति मायांतुप्रकृतिंविद्यादिन्द्रोमाया-भिःपुरुरूपईयतइत्यादिशास्त्रैः प्रकृतौ कारणत्वस्योक्तत्वात् प्रकृतिनिष्ठकर्तृत्वस्य बोधने च जीवेशावितिश्रुतिरुपष्टंभिकास्यात् ॥ सिद्धसाधनं चैवंव्याख्याने स्यात्कर्तृत्वस्यपूर्वपक्षिणा

तदपिसाचेत्स्या त्स्यात्तस्यास्तत्वं । तदपिवारयितुमाकाशांतधारणमेवहेतूकृत्य ब्रह्मै-
वाक्षरमितिसमर्थितं सू० १० “ अक्षरमंबरांतधृतेः ” इत्यादिना ॥ यदिचतथाभिप्रे-
तंस्यात्तर्हितत्साधकानीवप्रतीयमानान्यक्षरवाक्यानिनैवंनिर्णीयेरन् तदनुगतब्रह्मसंबं-
धादुपचारतः प्रशासनस्याप्युपपत्तेः निर्विशेषवादिनात्वयाततोप्युपचारस्यैववाच्यत्वा-
त् ॥ दहराधिकरणेचासकृत्त्वद्वादोप्यपाकृतः ॥ अव्यक्तकारणताबोधकवाक्यानामपि-
मायापरतानिरासायकठवाक्येष्वव्यक्तमपिब्रह्मैवेतितुरीयआनुमानिकाधिकरणेस्थाप-
यित्वा “अजामेकां लोहितशुक्लकृष्णां” इतितत्साधकाभासस्याप्यन्यथानिर्णयःसू०८
“चमसवदविशेषा”दित्यादिनाप्रदर्शितइतिदिक्॥एवमप्रेपितत्रतत्रस्पष्टमेवेदमित्यलंसक-
लब्रह्ममीमांसाविलेखनप्रयासेन ॥ किंतुश्रुतिषुतत्रतत्रशुद्धब्रह्मणएवोपादानत्वमाम्नायते
“ सहैतावानास ॥ तदात्मानꣳस्वयमकुरुत ” इत्यादौ ॥ नतत्रशबलस्यमायायावानाभा-
व्यस्ति ॥ स्मृतिषुचअहंसर्वस्यप्रभवः ॥ वासुदेवःसर्वमिति । एकांशेनस्थितोजगत् ।
अव्यक्ताद्व्यक्तयःसर्वाः । कूटस्थोक्षरउच्यते । एवमादिषुतदेवोच्यते । मायायास्तुव्या-
मोहकत्वमात्रंतत्र नतुजगदुपादानत्वादि ॥ सूत्रेष्वप्यारंभएवजिज्ञास्यंब्रह्मकिंलक्ष-
णकंकिंप्रमाणकंचेत्याकांक्षायां “ जन्माद्यस्ययतःशास्त्रयोनित्वात् ” इत्युक्त्वाकिंजग-
तोनिमित्तमात्रंतदुतोपादानमपितदेवेतिसंशयेनिमित्तमात्रमितिपूर्वपक्षउपादानमपितदे-
वेतिसमर्थयितुमुक्तं “ तत्तुसमन्वयात् ” इति ॥ अधिकरणांतराण्यपिवक्ष्यामःकिंच-

---

स्वीकृतत्वात् ॥ तथाच सुव्याख्याता ब्रह्मजिज्ञासाप्रतिज्ञोपपत्तिः ॥ तस्माद्ब्रह्मजिज्ञासां प्रतिज्ञाय
ब्रह्मलक्षणमात्रमनेनोक्तवान् इतियुक्तं ॥ यथा पूर्वकाण्डेऽथातोधर्मजिज्ञासेतिधर्मजिज्ञासां प्रतिज्ञा-
य चोदनालक्षणोऽर्थोधर्मइत्यनेन धर्मलक्षणमात्रमुक्तं तद्वत् ॥ ब्रह्मपदस्य तत्रविशेषणत्वेऽपि प-
टोलपत्रंपित्तघ्नंमूलंतस्यविरेचनमित्यादिष्विव बुद्ध्यासन्निकृष्टत्वाद्यच्छब्दापेक्षिततच्छब्देन युक्तः
परामर्शः ॥ कर्तृपदाध्याहारस्त्वत्यन्तासन्निकर्षादयुक्तः ॥ किञ्च शौण्डादिषु योनिशब्दस्य पाठा-
वेन सप्तमीतियोगविभागस्य भाष्यानारूढत्वेन शास्त्रेयोनिरिति विग्रहे सहसुपेतिसमासोवाच्यः स-
चागतिकगतिः॥ किञ्चोक्तशब्दाऽध्याहारेऽसामर्थ्यप्रसङ्गाच्छास्त्रशब्दस्य तदुक्ते लक्षणा वाच्या त-
थाच विग्रहोऽनुपपन्नः॥ उत्क्रान्तिगत्यागतीनामित्यादिषु हेत्वदर्शनेन सूत्रेषु हेतुबोधिपदघटित-
त्वनियमोनयुक्तः ॥ ब्रह्मसूत्रपदैश्चैव हेतुमद्भिरित्यत्र हेतुपदं कारणपरं प्रयोजनपरंवा ॥ सूत्राणां
कारणानितु विषयवाक्यानि ॥ किञ्चात्र हेतुमद्भिरित्येतद्ब्रह्मसूत्रपदैरित्यस्य पदान्तप्रकृतिकसु-
बन्तस्य विशेषणमिति प्रतिपदं हेतोः पञ्चम्यन्तस्य कल्पनायां प्रयासस्तेस्यान्नचसा सम्भवति
अस्माकंतु नकाप्यनुपपत्तिः ॥ यद्धेतुकत्वं वाक्यस्य तद्धेतुकतायाः पदेपि सत्त्वात् ॥ एतेन हे-
तुरहितत्वाज्जन्माद्यस्ययतः इति न पृथक्सूत्रं किन्तु शास्त्रयोनित्वादित्यनेन मिलितमेवंच त-
त्राऽपि साध्यलाभइत्यपास्तम् ॥ एवंच शास्त्रयोनित्वादितिसूत्रमपि साध्याध्याहारेण योज्यम् ॥
एवं तत्तुसमन्वयादित्यत्र समन्वयादित्यस्य सम्यगनुवृत्तत्वात् ॥ अनारोपिताऽनागन्तुकरूपेणा-
ऽन्वयादिति तद्व्याख्याने तादृगर्थे लक्षणायां मानमन्वेष्यम् ॥ इत्यलम्प्रसङ्गागतेन ॥ १२ ॥

कल्पितायामायायाउपादानत्वमप्यशक्यं ॥ नहिकल्पितरजतंभूषणभाजनाद्युपादानं भवति ॥ ब्रह्मभिन्नकल्पकस्यसंस्कारसादृश्ययोश्चाभावात्तत्कल्पनस्यैवासिध्याब्रह्मणोऽधिष्ठानत्वमप्यशक्यंवक्तुं सर्वथानिर्विशेषत्वाच्च ॥ नापिरज्जावविद्यमानंकल्पितभुजंगएवभासमानंतीव्रविषत्वमंत्रनियम्यत्वादिकंतदधिष्ठानस्यरज्जोःकथंचिदपिलक्षणंभवतियावल्लक्षणज्ञानंलक्ष्यस्याधिष्ठानस्याज्ञानात् अधिष्ठानज्ञानेसतिलक्षणस्यैवनाशाच्च ॥ एतेनतद्गतंचोपादानत्वंतदधिष्ठानस्यलक्षणमितिनिरस्तं ॥ तदेतदभिसंधायाहुः **तदसदित्यादिनाशुद्धेति** सूत्रयोःशबलपरतायाः सूत्राक्षरैरलाभात्शबलबोधकपदाभावात्शंकराचार्यैःश्रुतत्वाच्चेत्यंतैकादशसूत्र्याः निर्गुणब्रह्मपरत्वंततउत्तरस्यग्रंथस्य सगुणपरत्वमितिस्वयमेव भाष्येविभागाच्चशुद्धस्यैवतदिति । सिध्यति विभागानंगीकारेपिजिज्ञासितस्यशुद्धस्यैवउपास्यत्वंतत्वंचस्यात् ॥ **श्रुयतइति** असंकुचितंकारणत्वमितिशेषः ॥ तेनसमवाय्यादित्रिविधमपितदेवास्त्वितिभावः ॥ **यतइतीति** इदं तस्माद्वाएतस्मादात्मनइत्यादेरुपलक्षणं ॥ **हेतावति** "विभाषागुणेऽस्त्रिया" मित्यत्रविभाषेतियोविभागादगुणेपिहेतौ पंचमी ॥ **उपादानवाचकेति** यतोवाइत्यादिवाक्येष्वितिशेषः ॥ **तद्ब्रह्मैवेति** तत्प्रसिद्धं अनुभूतंवासमवायिकारणं ब्रह्मैवेत्यन्वयः ॥ सम्यगन्वयरूपहेतुबलात् ॥ तच्छब्दस्योक्तएवार्थः प्रतीयते ॥ किंचपूर्वसूत्रेजन्मादिहेतुत्वमुक्तं तत्रादिपदोपात्तस्थितिप्रलयाभिसंवेशानां केवलनिमित्तत्वेसत्यसंभवः कुलालदंडादौ तथाऽदर्शनात् अतः पूर्वसूत्रएवासंकुचितकारणत्वं विवक्षितमतोपिसएवतच्छब्दार्थः ॥ नचैवंपूर्वेणगतार्थंताशंक्या भाष्यस्थपूर्वपक्षउक्तदोषाणामनपायेनघटादौ मृदाद्यन्वयस्यैव जगतिब्रह्मान्वयस्याऽननुभवे स्थित्यादिवाक्यउपचारशंकाऽनपगमेन च सामान्यविशेषभावसंगत्यापुनः समवायित्वदृढीकरणस्यावश्यकत्वात् ॥ **सम्यगनुवृत्तत्वादित्यादि** इमांभाष्यपांक्तिंप्रकाशकाराः "ननुसम्यगनुवृत्तत्वमनारोपितानागंतुकरूपेणसर्वलक्षीकृत्यवर्तमानत्वं तज्जगतिब्रह्मणःकथं नहिजगतिब्रह्मणोऽनारोपिताऽनागंतुकेनब्रह्मत्वेनरूपेणान्वयोवगम्यते । यथापटेतंतोर्घटेमृदइत्याकांक्षायां तदाहुः । **अस्तीत्यादि** ॥ तेषुतेषुवस्तुषुतत्तत्पुरुषप्रतीतिविषयेणास्तित्वादिधर्मेणावगम्यमानात्सदादिरूपेणान्वयात् । योहियदन्वितः सस्विस्मिस्तद्विषयांप्रतीतिमाधत्ते यथाघटादिः पृथिवीत्यादिप्रतीतिः तथात्रसर्वमस्तीत्यादिप्रतीतिजनकत्वात्सदाद्यन्वितं ततश्चसदाद्यात्मकं॥ सच्चिदानंदात्मकंचब्रह्मेतितेनरूपेणब्रह्मान्वयोवगम्यतएवेत्यर्थः" इतिव्याचक्षते ॥ ब्रह्मत्वंच "सत्यंज्ञानमनंतंब्रह्मसत्यं विज्ञानमानंदंब्रह्मसच्चिदानंदरूपायकृष्णायाक्लिष्टकर्मणे" इत्यादिश्रुतिभ्यः सच्चिदानंदत्वमेव ॥ अतस्तेनरूपेणान्वयसित्ध्यातदेवसमवायिकारणंसिद्धं ॥ सूत्रेऽयमेव समन्वयशब्दार्थोव्यासाभिप्रेतइतिज्ञायते तेनैवजन्माद्यस्ययतोन्वयादितरतश्चार्थेष्वभिज्ञः स्वराडितिश्रीभागवतारंभश्लोकेस्वद्वितीयसूत्रांशमनूद्य अन्वयादितिस्पष्टं समवायिकारणताबोधनात् तत्रैवाग्रे अ-

न्वयव्यतिरेकाभ्यांयत्स्यात्सर्वत्रसर्वदेत्यादौमुहुरन्वयस्यापिकथनात् समन्वयेनव्य-
तिरेकतश्चेतिस्फुटमुक्तंर्थकसमन्वयशब्दस्यत्वयमुपादानाच्च ॥ अतस्तस्यसूत्रेपिसए
वार्थःव्यतिरेकोपिसूत्रेण्वीक्षत्यानंदमयाद्यधिकरणेषुतन्निष्ठमोक्षोपदेशतद्धेतुव्यपदेशा-
दिना इतरस्यतन्निषेधेनचसिद्धएव ॥ जडेत्यादि जडेसदंशस्य जीवेचिदंशस्य अ-
न्तर्यामिण्यानंदांशस्य च प्राकट्यंप्राधान्येनानुभवः ॥ वस्तुतस्तुसर्वत्रत्रयाणाम-
प्यंशानांतारतम्येनान्वयः ॥ अत्रविस्तरस्तुभाष्यनिबंधतत्तद्व्याख्यानादिषुध्येयः ॥
सुगमप्रक्रियातुशुद्धाद्वैतमार्तंडेमदीयवेदांतचिंतामणेस्तृतीयप्रकरणेचज्ञेया ॥ तत्तदंश-
मात्रस्यतत्रप्राकट्येमानंतुनृसिंहोत्तरतापनीयनवमखंडादावववधेयम् ॥ अत्रापि त-
त्किंसमवायिनिमित्तं कर्तृवेत्यारभ्यएतदवधि समन्वयसूत्रभाष्यमेवकिंचिदक्षरशो-
र्थतश्चानूदितम् ॥ एवमग्रेप्यस्मिन्खंडेजन्मादिसूत्रभाष्यंतत्रत्यप्रकाशश्चयथोचितमे-
कीकृत्याक्षरशोर्थतश्चाऽनुवदिष्यतेऽतःसर्वमस्माकमाकरसिद्धमेवोच्यते नतुसहस्रा
क्षकारवतत्त्वभाष्याद्युल्लंघ्यस्वकपोलकल्पितमितिध्येयम् ॥ किंचयदिमायैवजगदु-
पादानंस्यात्तर्हिसर्वत्रमायात्वमलीकत्वनियमेनप्रतीयेत ॥ नत्वेवंप्रतीयते नापिप्र
माविषयेषुप्रापंचिकघटादिषुत्वदतिरिक्तास्तार्किकादयोप्यलीकत्वंमन्यंते ॥ अतोन-
सातथेत्याहुःअलीकत्वेति ॥ सूत्रकृतातत्रतत्रनिराकृतत्वादपिनतथा ॥ निरा-
करणंतुदिङ्मात्रेणदर्शितं ॥ नचेदंसर्वंसांख्यमात्रपरमितिवाच्यं तुल्ययुक्त्या-
तवापिनिरासस्यानपायात् ॥ तर्कपादेप्यर्द्धवैनाशिकवैनाशिकयोःप्रक्रियानिरा-
करणेन आधुनिकविलक्षणार्धवैनाशिकानांजैन्याद्यर्वाचीनवैनाशिकानांचतुल्य-
युक्त्यानिराकरणंयथासर्वसंमतंतथात्रापि ॥ मायांतुप्रकृतिंविद्यादित्यादिवाक्यैःप्र-
कृतिमायाशब्दयोःपर्यायत्वाच्च ॥ अन्यथासांख्यंनिराकृत्यब्रह्मणएवकारणतांन-
स्थापयेत्अग्रेचत्वत्संमतत्वरूपांमायांस्फुटमुपपाद्य तस्यास्तथात्वंसाधयेत् ॥ नत्वेवं-
दृश्यते । अतस्तवापितत्तदधिकरणतोनिरासोनवारयितुंशक्यः ॥ किंचतथासिद्धांते-
सतिप्रकृतिकारणवादवारणेकोऽयंभगवतोनिर्बंधः ॥ किंतुपुरुषानेकत्वमात्रंनिराका-
र्यंप्रकृतेश्चालीकत्वमेवसाधनीयं ॥ प्रकृतेरेवोपादानत्वमनादेरपितस्यामुक्तपुरुषेसंसर्गा-
भावःपुरुषस्यप्रकृतिविकृतिभिन्नत्वंनिर्लेपत्वंचेत्यादिकंतुप्रायेणतुल्यमेव ॥ स्थापयतितु-
तत्रतत्रप्रकृतिंनिरस्यपरस्यैवसर्वविधकारणतांमायायाश्चनामापिप्रपंचोत्पत्तिविचारे नो
च्चारयति ततोनिश्चीयते नमायावादगंधोऽपिश्रीव्यासाशयगोचरइति ॥ तदात्मा-
नमिति ॥ ब्रह्मवल्यां "तदात्मानꣳस्वयमकुरुततस्मात्तत्सुकृतमुच्यतइति" इतिप-
ठ्यते ॥ आदिपदात् "सद्वितीयमैच्छत्सहैतावानास । ससर्वमभवत् ॥ सच्चत्य-
च्चाभवत् ॥ सर्वंखल्विदंब्रह्मतज्जलान्" इत्याद्याःशतशोज्ञेयाः ॥ अतोब्रह्मैवोपाद-
नांनतुमाया एषुक्वाप्यनुल्लेखात् ॥ एवंसूत्रेषु ( अ०१ पा०४ सू०२३ ) "प्रकृतिश्च-
प्रतिज्ञादृष्टांतानुपरोधात् ।" ( अ०२ पा०१ सू०२३ ) " अस्मादिवच्चतदनुपप-

त्तिः ” इत्यादीनिद्रष्टव्यानि ॥ विस्तरभयादिहनप्रपंच्यते ॥ तदुक्तंशाखाचं-
द्रदृष्टांतंदूषयंति । **नचशाखेत्यादिना** अयंभावःएकत्रवास्तवमेवपरत्रावास्तवम-
पिलक्षणंभवति ॥ शाखाहिवृक्षस्यवास्तवंज्ञापकंसाचंद्रमसआगंतुकंतद्भवति ॥ का-
रणत्वंतुकुत्रापिनवास्तवमितिब्रह्मणआरोपितलक्षणमपिशाखावत्कथंस्यात् ॥ किंच-
चंद्रंदिदृक्षमाणंप्रतिस्वयंचद्रंदृष्टवतापूर्वंचंद्रएवांगुल्यानिर्दिश्यते ॥ ततोप्यदर्शनेशाखाप्र-
दर्श्यते नतुचंद्रदर्शनार्थंनियमेनशाखाप्रदर्शनमावश्यकमितिसिद्ध्यति ॥ अत्रतुयतो-
वाइतिलक्षणंशाखास्थानीयं ॥ तच्च “ भृगुर्वैवारुणिः । वरुणंपितरमुपससार । अ-
धीहिभगवोब्रह्मेति ” इतिभृगुणाब्रह्मस्वरूपेपृष्टेतत्पित्रावरुणेन “ यतोवाइमानिभूता-
निजायंते । येनजातानिजीवंतियत्प्रयंत्यभिसंविशंतितद्विजिज्ञासस्वतद्ब्रह्मेति ” इत्ये-
वोक्तं नतुप्रथमतोब्रह्मस्वरूपंत्वद्धीत्यावास्तवंकिंचिदुक्तं ॥ एवंसर्ववेदांतनिर्णयार्थंप्र-
वृत्तेनसूत्रकारेणापिब्रह्मजिज्ञासांप्रतिज्ञायजन्माद्यस्ययतइत्येवासंदिग्धमुक्तं ॥ नाप्य-
ग्रेगत्वातत्त्यक्तं ॥ किंतुयत्रयत्रश्रुतिषुतत्संदिग्धंतंतंभागंनिर्णीयतत्सुदृढीकृतं ॥ नहिक-
र्तृत्वादिनिषेधकमेकमप्यधिकरणमस्ति ॥ शाखात्वग्रेगत्वात्याज्यतएव ॥ प्रद-
र्श्यतेचशुद्धचंद्रः ॥ **भृगुपित्रेत्यादि** ॥ अत्रतुवरुणेनउपसन्नंस्वपुत्रंप्रतियतोवाइ-
त्येवोक्तं ॥ तेनचान्नादिषुलौकिकेषुविभूतिरूपेषुवाब्रह्मत्वेनज्ञातेषुभूयोभूयःपित्रातप-
एवोपदिष्टं ॥ उत्तमाधिकारिणस्तस्यापरितोषात् [illegible]ःपुनरुपसत्तिश्चदर्शिता ॥ सिद्धेत-
पःपरिपाके “ आनंदोब्रह्मेतिव्यजानात् । [illegible]नंदोह्येवखल्विमानिभूतानिजायंते ”
इत्यादिनातल्लक्षणकएवानंदरूपेब्रह्मणिज्ञातेतत्वतःपरितोषात्नपुनरुपसत्तिः ॥ अप्रता-
रकेणवरुणेनचनाकिंचिदन्यदुपदिष्टं ॥ किंतुवेदेन “ सैषाभार्गवीवारुणीविद्यापरमेव्यो-
मन्प्रतिष्ठिता ” इत्यादिनाविद्यायाउपसंहारःब्रह्मधामस्थत्वंतत्फलानिचदर्शितानि ॥
यदिचंद्रवदन्यत्स्यात् इदंचशाखावद्धेयंतर्हिपरमोत्तमस्यभृगोर्नतन्मात्रलक्षणकब्रह्मज्ञा-
नमुपपद्येत ॥ तदनुपदेशेवरुणस्यप्रतारकत्वंचस्यात् । उपसंहारश्चनघटेत विद्यात्वं-
परमव्योमप्रतिष्ठितत्वंचतादृशसंवादस्यनसंगच्छेत ॥ एवंमुंडकश्वेतकेतुविद्यादिषुविद्यां-
तरेष्वपिज्ञेयं ॥ शाखावत् अग्रेगत्वापिकर्तृत्वस्यहेयत्वाभावादेव सूत्रकारस्तस्य
वेदेक्वापि हेयत्वस्यानाम्नानंवक्ति “ हेयत्वावचनाच्चेति ” अतोनकर्तृत्वेकथं-
चिदपिशाखाचंद्रन्यायावतारः ॥ अतएवत्वन्मतेव्यासस्यप्रतिज्ञाहान्युपक्रमविरोधाव-
पिस्युस्थौतथाहि अथातोब्रह्मजिज्ञासेत्यत्रकिंसगुणस्यजिज्ञासाप्रतिज्ञायतआहोस्वि-
न्निर्गुणस्य ॥ नाद्यः । निर्गुणस्यतत्वसूत्रासंमतत्वापत्याऽनादरणीयत्वप्रसंगात्
ब्रह्मणोज्ञातुमिच्छाकर्तव्येतित्वन्मतेर्थांगीकारेण सगुणपरत्वेसर्ववेदतत्वनिर्णयार्थं-
प्रवृत्तस्य सर्ववेदव्यासकर्तुर्वेदव्यासस्यापिनिर्गुणज्ञानमनिष्टमित्यवैदिकंनिर्मूलंस्या-
त् ॥ अग्रेत्वदभिमतेनिर्गुणनिरूपणे अप्रतिज्ञातनिरूपणंचाऽपद्येत ॥ द्वि-
तीयश्चेन्निर्गुणजिज्ञासांप्रतिज्ञायप्रमायायाव्यवहितसगुणलक्षणमेववदतस्तस्यप्रतिज्ञाहा-

न्युपक्रमविरोधौस्यातामेव ॥ नचशाखाचंद्रवन्निर्गुणतटस्थलक्षणताऽस्यस्वीकर्तुंशक्या ॥ तन्यायनिरासात् तथाव्यासाशयेगमकाभावात् अनुपदंकथनेनसाक्षाल्लक्षणतायाएवप्रतीतेः ॥ अन्यथापूर्वतंत्रे "चोदनालक्षणोर्थोधर्मः" इतिलक्षणमपि शाखाचंद्रवदारोपितमितिशक्येतवक्तुं ॥ नहीदंकस्यापिसंमतमतस्तद्वदिदमपि अनारोपितलक्षणमेवसिध्यति ॥ किंचतथासतिब्रह्मजिज्ञासांप्रतिज्ञायव्यासः। द्वेब्रह्मणीसगुणंनिर्गुणंच तत्रजन्माद्यस्ययतस्तत्सगुणंमायैववा तदधिष्ठानंतु निर्गुणं पूर्वपरस्यतटस्थलक्षणं शाखाचद्रवत् इत्येवक्रमेणसूत्रयत् ॥ नतुकिंचिदपितथावदत्यतस्तादृशप्रक्रियाकल्पनं सर्वथाव्यासानभिमतंनिर्मूलमेव ॥ **शुद्धत्वहानिरिति** ॥ त्वदभिमतशुद्धत्वस्यसेत्यर्थः ॥ **श्रुतइति** ॥ "यथासोम्यैकनमृत्पिंडेन एकेनलोहमणिना" इत्यादिनाश्रुतः ॥ **सर्वमपास्तमिति** ॥ किंच ऐंद्रजालिकस्य सिंहादिभावः केवलमायिकोनतुस्वरूपतोमृद्घटादिवत्सिंहादिभावोऽतोगौणतातत्रास्त्येव बद्धदृष्टीनांतथाप्रतीतरेवस्वीकारात् ॥ एतेनसहकारित्वकथनमप्यपास्तं ॥ द्वैतापत्तिरपितत्रास्त्येव ऐंद्रजालिकस्यमायायांतस्यशक्तित्वेंगीक्रियमाणेऽपिशक्तिशक्तिमतोर्भेदस्यत्वयोक्तत्वात् ॥ पदार्थांतरत्वेसुतरांसा ॥ तद्दर्शितवस्तूनांमिथ्यात्वेऽपितस्यावास्तवत्वात् ॥ शबलकारणत्वपक्षेतस्यैवपरामर्शोयोग्यः। अन्यथातस्मिन्कारणताकथनस्यैवव्याघातापातात् ॥ "ताआपऐक्षंत" इत्यादावपितद्रूपेणपरिणतस्यब्रह्मणएवेक्षणमतोनगौणं । प्रथमस्यतेजोवाक्यस्यात्रानुपादानेबीजंचिंत्यं ॥ यच्च मायामात्रेत्यादि । तदत्यंतंतुच्छं ईक्षणंब्रह्मकर्तृकंमुख्यंचेतिस्वीकारेमात्रपदविरोधात् ॥ शुद्धस्यसविशेषत्वापत्तेश्च ॥ एवंसत्तच्छब्दवाच्यत्वेपिमुख्येतदापत्तिः केवललक्ष्यत्वभंगस्त्वद्रीत्यायतोवाचइत्यादिविरोधश्चद्रष्टव्यः ॥ सेनाभिप्रायेणराज्ञोयोत्स्यइतिवाक्यंतु गौणमेव । किंतुस्वयंयुद्धाभिप्रायेणवाक्यमेव मुख्यमतस्तद्दृष्टांतेनेक्षणेपुनरुपचारदार्ढ्याद्घट्टकुटीप्रभातं । ईक्षणाकारेउत्तमपुरुषप्रयोगस्यगौणत्वेईक्षणस्यसुतरांतत्सिद्धेः शुद्धेंतःकरणादेरभावाच्च ॥ तदाहुः **नसंभवतीत्यादिना** ॥ सेयंदेवतेत्यत्रतेषांशब्दानांमुख्यत्वेमायांविनाजीवभावः कार्यतयापरिणामश्चास्मदिष्टःसिध्येदित्याद्यूह्यं ॥ नामरूपव्याकरणंचनगौणमन्यथानेकश्रुतीनां ( अ० २ पा० ४ सू० २० ) संज्ञामूर्तिक्लृप्तिस्त्वित्यधिकरणस्यचव्याकोपादित्युक्तंप्राक् ॥ श्रुतिषुतुल्यतयाश्रावणेपिस्वेच्छयाकस्यचिदंशस्यमुख्यत्वंकस्यचिद्गौणत्वमितिकल्पनंतुश्रुतिविप्लावनमेव ॥ परेणविपर्ययश्चापादयितुंविनिगमनाविरहाच्छक्यः ॥ अतोवेदेयथाश्रूयते तथैवसर्वंमुख्यंमंतव्यं ॥ तन्मते ( अ०१ पा०१ सू०५ ) गौणश्चेन्नेत्यादिसूत्रत्रयविरोधंपुनरापादयितुमाहुः । **किंचशबलस्येत्यादि** शबलपदंकेवलमायायाअप्युपलक्षणं ॥ ( अ०१ पा०१ सू ६ "तन्निष्ठस्यमोक्षोपदेशा" दितिसूत्रस्यार्थमाहुः **किंचसोकामयतेत्यादिना** ॥ यदाह्येवैषइतिब्रह्मवल्लीश्रुतौसमन्यंतेनैतदापूर्वोक्तो-

बहुभवनप्रकृष्टजननकामनापूर्वकतपःशब्दवाच्यपर्यालोचनपूर्वकसर्वसृष्टिकर्त्रैवपरामृश्यतेसान्निध्यात् ॥ एतस्मिञ्जगत्कर्तरिअदृश्येऽलौकिकेंद्रियागोचरेअनात्म्ये आत्मभिन्नशरीररहितेअनिरुक्तेतत्सृष्टैरस्माभिर्निर्वक्तुमशक्ये अनिलयनेनिरधिष्ठानेयोभयाभावंप्रकृष्टस्थितिंनित्यनिराबाधतारूपांविंदते अथतन्निष्ठतासिध्यनंतरमेवससाधकः अभयंमोक्षंगतोभवतीतितदर्थः ॥ अत्रादृश्यादिपदैर्जगत्कर्तुरेवप्रापंचिकधर्मराहित्यंनिरधिष्ठानत्वादविवर्तत्वंचोक्तं ॥ **संसारएवेति** ॥ यदिमायासंवलितनिष्ठस्यापिमोक्षःस्यात्तर्हिस्त्रीपुत्रादिनिष्ठस्यापिस्यादेवेत्यलंसाधनैरितिभावः । जगत्कर्तृनिष्ठस्यमोक्षोपदेशात्तुन स मायासंवलितोगौणःकिंतुशुद्धएवानौपचारिकइतिनिष्कर्षः ॥ ( अ०१ पा०१ सू० ८ ) “ हेयत्वावचनाच्चे ” तिसूत्रस्यार्थमाहुः **किंचशास्त्रेत्यादिना** ॥ **उपदिश्येतेति** पुत्रेषणादिवदितिभावः । अन्यत्सर्वंप्रायेणोत्तानार्थं ॥ भाष्याद्यनुवादरूपंच ॥ यत्तुतन्मतईश्वराभावेनेत्यादि । तत्प्रकृतानुपयोगि । त्वद्योजनयापिसूत्रविरोधानपायात् । एकेश्वरसाधनार्थेषुसूत्रेषुतुल्यबहुपुरुषवादेदूषणानामनुपन्यासात् । द्वितीयस्यतृतीयपादसमाप्तावेवतन्निरासाच्च ॥ **औपाधिकेत्यादि** ॥ घटगतमुत्क्षेपणापक्षेपणादिकंपरिच्छेदादिकंचघटवत्त्वैव नत्वाकाशवर्तीतिभावः ॥ **पर्यायत्वादिति** ॥ “ मायांतुप्रकृतिंविद्या ” दितिश्रुतेरित्याशयः ॥ शब्दानामितिबहुवचनंतुप्रधानादिशब्दांतरसंग्रहाय ॥ मायावाचकानांप्रकृतिवाचकानांचतेषांशक्ततावच्छेदकभेदेपिशक्यतावच्छेदकैक्यंध्येयं उक्तश्रुतेः ॥ **षड्विधेति** ॥ तानितु उपक्रमोपसंहारावभ्यासोपूर्वताफलं ॥ अर्थवादोपपत्तीचलिंगतात्पर्यनिर्णयइत्युक्तानि ॥ लिंगंज्ञापकं ॥ **कस्याश्चिदिति** ॥ इंद्रोमायाभिरित्याद्यामायाकारणतावाक्याभासाद्वित्राएव ॥ ईश्वरकारणतावाक्यानितु तत्रतत्रवेदेशतशएवसंतीतिलिंगाभावेपिबहुनामनुग्रहस्यैवन्याय्यत्वाद्वित्रेष्वेवोपचारकल्पनालघीयसी किंपुनस्तेषांलिंगादिसहकृतत्वेवक्तव्यं ॥ वाक्याभासाश्चोपक्रमादिप्रदर्शनपुरःसरंव्याख्याताःप्राक् ॥ यच्च जन्मादिसूत्रस्योपचारिकत्वकथनं तत्तु शास्त्रविप्लावनमेव ॥ श्रुतिषूपचारा नुपचारनिर्णयार्थंहिसूत्रप्रादुर्भावनं ॥ तत्रापिव्याख्यातृभिःस्वेच्छयोपचारानुपचारयोःकल्प्यत्वे कंतंत्रथाकंठगडुभूतैःसूत्रैः ॥ असंदिग्धानवहेल्यानवद्यमेवचसूत्रकारःकुतोनसूवितवानअल्पाक्षरमसंदिग्धंसारवद्विश्वतोमुखं ॥ अस्तोभमनवद्यंचसूत्रंसूत्रविदोविदुरितितल्लक्षणात् ॥ तथाकल्पनेतु तत्रतत्रसूत्रत्वमेवव्याहन्येत ॥ **नद्यस्मिन्ननंतइत्यादि** ॥ अयमाशयःजिज्ञासासूत्रपुरुषोत्तमविचारारंभएवप्रतिज्ञातः ॥ पुरुषोत्तमस्यापिलीलासर्गेपितिसाक्षात्कारणता । निबंधादिषुएवंकदाचिद्भगवान्साक्षात्सर्वंकरोत्यजइतिसृष्टिक्रमे कदाचित्सर्वमात्मैवेत्यादिस्थलेत्वोक्ता ॥ दहरविद्याबृहदारण्यकादिषुस्फुटाचसा ॥ यद्यपिक्षरसृष्टिंप्रति अक्षरस्यकारणता “ तथाक्षरात्संभवतीहवि-

त्र ” नित्य इतिमुंडकादिश्रुतिभिः अव्यक्तादीनिभूतानि ॥ अव्यक्ताद्यक्तयःसर्वाः ॥
कूटस्थोक्षरउच्यते ॥ इत्यादिस्मृतिभिश्चसिद्ध्यति तथापि ‘ ब्रह्मपुच्छंप्रतिष्ठे ”त्यादिश्रु
तिभिः त्वमक्षरंपरमंवेदितव्यंत्वमक्षरंसदसत्तत्परंयत् । इत्यादिस्मृतिभिश्चाक्षरस्यपुरुषो
त्तमांशत्वात्पृथिव्यंशमृद्राशिमृत्पिंडादिहेतुकघटादिकंप्रति पृथिव्याइवक्षरंप्रत्यपिपुरुषो-
त्तमस्यकारणतानापैति॥ अतोजन्माद्यस्ययतइत्यपिपुरुषोत्तमस्यैवानौपचारिकंलक्षणं॥
अतएवभगवंतोभाष्यकारास्तत्रसूत्रेसमासभेदेनपुष्ट्यादिसर्वसृष्टिप्रकारान्संगृह्णंति॥ अ-
तएवच सूत्रकाराक्षरशब्दस्यापितत्रैवप्रवृत्तिंप्रथमस्यतृतीये ॥ सू० १० “अक्षरमंबरा-
तधृतेः ” इत्यधिकरणे साधयति ॥ अक्षरस्यांशत्वादेव (अ०३ पा०३ सू०३३ ) “अ-
क्षरधियांत्वि ”त्यादौनिरूपणेऽपि नाप्रतिज्ञातनिरूपणं ॥ नहिश्रीरामवर्णनार्थप्रवृत्तेरा
मायणे तच्चरणादिवर्णनेपि तत्राप्यप्रतिज्ञातनिरूपणंकोपिमनुते । तस्मादस्माकंसूत्रेषुन
प्रतिज्ञाहान्युपक्रमविरोधदोषगंधोपि ॥ नापिपुरुषोत्तमकारणतावाक्येषूपचारक्लेशोपि ॥
नहिवदनेनवदतिकराभ्यामाचरतिचरणाभ्यां चरतिपुरुषे एकैकांशएवसाक्रियेति
तत्र वदत्याचरतिचरतिप्रयोगाऔपचारिकाः कस्याप्यभिमताः ॥ यस्तु जन्माद्य-
स्येत्यादिसूत्रैर्व्यासपादैर्निरूपितमिति मार्तंडकारिकाव्याख्यास्थं सूत्रार्थमनूद्यतन्नस-
म्यगित्यादिरत्यन्तासंनिकर्षादयुक्तइत्यंतःप्रलापःकृतः ॥ सोप्यस्मन्मताज्ञानादकांडतांड-
वरूपः॥ नहिजगज्जन्माद्याश्रयस्यशास्त्रोक्तकारणत्वहेतुनाकर्तृत्वमात्रमत्रसाध्यतइत्य-
स्माकमभिप्रायः ॥ नापिकर्तृपदाध्याहारोविवक्षितः किंतुजन्माद्यस्ययतइतिसूत्रां
शस्यैवफलितार्थकथनं कर्तृ इतिभाष्यादौ ॥ ब्रह्मणिजगज्जन्मादिकारणत्वम-
नेनसाध्यते ॥ सूत्रे अस्येत्यनेनजगतइति लभ्यतेजनिकर्तुःप्रकृतिरित्यपा-
दानतामाश्रित्यप्रवृत्तयोः श्रुतिसूत्रयोर्यतइति पंचम्याचकारणत्वं ॥ जन्मादि-
पदंतुसौत्रमेवातोनासौत्रमत्रकिंचित् ॥ तच्चकारणत्वं सांख्यैः कार्येश्वरवादि-
भिः सेश्वरैश्चपातंजलैस्तत्रनांगीक्रियते किंतुप्रकृतावेवतदुच्यतेब्रह्मकारणताबो-
धकश्रुतिषुचोपचारः कल्प्यतेऽतस्तन्मतानुरोधाद्ब्रह्मनजगज्जन्मादिकारणं वाक्या-
नितु गौणकर्तृत्वाभिप्रायाणीतिपूर्वः पक्षः तेनतदंशेप्रायेणसमानयोगक्षेमत्वात्त्र-
यमतमप्यर्थादेवसंगृहीतंभवति ॥ सूत्रकृता तु ब्रह्मण्येवनिरंकुशकारणतांसिद्धांतयता-
सांख्यादिभिः सहतदपिअयत्नादपाकृतं॥ यत्तु ( तर्हिजगज्जन्मादिकंप्रकृतेरन्यत्रास्था-
पयित्वाप्रवृत्तेनानेनसूत्रेणप्रकृतावेवकर्तृत्वमपिसाध्यतेइत्यापनती ) तितन्नसकलवा-
क्यसमन्वयप्रतिपादकेसमग्रेध्यायएकत्रापिमायापदस्यतद्वाचकपदांतरस्यवागंधस्या-
प्यभावेनप्रकृतौकर्तृत्वसाधनस्यकथंचिदपिवक्तुमशक्यत्वात् ॥ अन्यथाजन्माद्यस्यय-
तःसाप्रकृतिरितिवदेत् ॥ परामृश्यतेतु यच्छब्दोपस्थापिततच्छब्देनपूर्वसूत्रोक्तंब्रह्मै
व ॥ इष्टंचेदंतत्रापीत्थमेव ॥ निरूपणारबहुतरशास्त्रेषुतथाकथनात् ब्रह्मण्येवनि-

रंकुशकारणत्वेस्थापितेशास्त्रविरोधादेवप्रकृतौ तन्निरासस्यार्थिकत्वाच्च ॥ "जी-
वेशावाभासेनकरोति" इतिवाक्याभासस्तु पूर्वपक्षोपष्टंभकोभविष्यत्येव ॥ त्रयो-
पिवाक्याभासाः भाष्याख्याताः व्याख्यास्यतेचयथोपयोगं चतुर्थाष्टमश्लोकखंड-
नादौ ॥ नचात्रसूत्रेते विषयवाक्यतयासूत्रयितुरभिप्रेताः तत्रतद्गमकाभावात् ॥
ब्रह्मणएवतदापरामर्शाद्विपक्षउक्तदोषाच्च ॥ किंतु यतोवाइत्यादीनिब्रह्ममात्रकारण-
तावाक्यान्येव ॥ अतएवश्रुतिघटकंयतइतिपदंतदुपस्थापनायोपात्तं ॥ तत्रजायं-
तइतिजनिधातुप्रयोगादत्रापितद्धातुनिष्पन्नंजन्मपदंचोक्तं ॥ तेनादिपदेनश्रुत्युक्तंजीव-
नादिकमेवसंगृह्यते ॥ अस्येत्येकवचनंतु "इद ँ सर्वमसृजत ॥ सदेवसोम्येदमग्र-
आसीत् आत्मावाइदमेकएवाग्रआसीत् ॥ सर्वंखल्विदंब्रह्म ॥ पुरुषएवेद ँ सर्वं ॥
यस्मिन्निद ँ संचविचैतिसर्वं ॥ सलिल ँ सर्वमाइदं ॥ योअस्याध्यक्षः ॥" इत्यादे-
रेकवचनांतेदमाजगन्निर्दिशतः श्रुतिशतस्यसंग्रहाय ॥ शास्त्रयोनित्वादितिसामान्यतः
शास्त्रपदंद्वयोरपिकांडयोः संग्रहाय ॥ तेननासदासीदित्यादीनांप्रजापतिरकामयतेत्या-
दीनांचसाक्षात्परंपरयावायथायथंतत्रैवसमन्वयोदर्शितः ॥ योनिपदंतु "कर्त्तारमीशं-
पुरुषंब्रह्मयोनिं ॥ मम योनिरप्स्वंतः समुद्रे" इत्यादिवाक्यांतरस्मारणाय ॥ अत्रप्रकृ-
तेरपियोनिः सएवेतिकथनाद्यतोस्यजन्मादितद्ब्रह्मैव नतुसेतिप्रकृतेः कर्तृत्वादिक-
मनेनैवनिरस्तंभवति ॥ अयंचास्माकंपूर्वोत्तरपक्षयोर्विशेषः पूर्वपक्षेप्रकृतिपदाभिधेय-
मायायामेवमुख्यंकर्तृत्वादिकं ॥ ब्रह्मणित्वारोपितमात्रंतत् ॥ अतो "भुवःप्रभवः"
इतिवाविभाषेतियोगविभागाद्वापंचमी ॥ सिद्धांतेतु ब्रह्मण्येवमुख्यंनिरंकुशंतत नतु-
प्रकृतौ ॥ नापिश्रुतिषूपचारगंधः अतउक्तशास्त्रात्पंचमी ॥ तत्रशास्त्रयोनित्वमपि-
गमकं समन्वयसूत्रंच ॥ अतोनसिद्धसाधनं नाप्युपहासावकाशः ॥ ब्रह्मविचा-
रप्रतिज्ञोत्तरंलक्षणप्रमाणबोधकमिदमधिकरणमिति तु वयमेववदामः ॥ पूर्व-
तंत्रतौल्यंत्वस्मन्मतएव नतुत्वन्मतइतिवक्ष्यते ॥ पूर्वसमस्तपदेपिब्रह्मणएवपरामर्श-
स्तुपटोलपत्रमितिवद्दशैतेराजमातंगास्तस्यैवामीतुरंगमाइत्यादिवच्चयुक्तएव ॥ यतो-
स्यजन्मादितदित्यंशस्यैवफलितार्थोभाष्यादौकर्तृइतिप्रागुक्तंअतोनास्माकमत्रकर्तृपदा-
ध्याहारः ॥ किंतुतवैवशास्त्रयोनित्वादितिपृथगधिकरणेसुतरामसंगतःसः ॥ तत्रत्व-
न्मतेशास्त्रयोनित्वादित्यत्र । नकर्तृब्रह्मवेदस्यकिंवाकर्तृनकर्तृतत् । विरूपनित्ययावाचे-
त्येवंनित्यत्वकीर्तनात् । कर्तृनिःश्वसिताद्युक्तेनित्यत्वंपूर्वसाम्यतः । सर्वावभासिवे-
दस्यकर्तृत्वात्सर्वविद्भवेदितिव्याख्यानात् ॥ किंचब्रह्मणोऽकर्तृत्वे आचार्यस्याभिप्रेते-
जन्माद्यस्ययतइत्यनुक्त्वा अकर्तृतदिति अधिष्ठानंतदित्येववालक्षयेत् नतुयथाश्रुतं॥
तदेतत्सर्वमनुसंधायाहुः **सोप्यस्मदित्यादिना** ॥ **वेदार्थभूतेति** । अथातोब्रह्म-
जिज्ञासेत्यत्र वेदस्तत्वंतपोब्रह्मेतिकोशाद्ब्रह्मपदंवेदोपस्थापकंपरमात्मपरंच ॥ जिज्ञा-
सापदंविचारपरं ॥ अजिज्ञासितमन्द्धर्मोगुरुंमुनिमुपाव्रजेदित्येकादशस्कंधादौतथाप्रयो-

गदर्शनात् शास्त्रेऽस्मिन्मीमांसेतिप्रसिद्धेश्च ॥ मीमांसतिश्च विचारेप्रसिद्धः मानेर्जिज्ञासायामितिहि सन्नत्रापिजिज्ञासाविचारएवज्ञानेच्छापरत्वेमानेर्ज्ञानार्थकतयैवसिद्धौमानवधदानशान्भ्यइतिसनो विधानमेवव्यर्थंस्यात् ( स्कंध७ ) मीमांसमानस्यसमुत्थितोयतइत्यादिषुमीमांसतेः प्रचुरतरप्रयोगेष्वपिविचारएवार्थः संगच्छतेननुज्ञानेच्छेत्यलंप्रासंगिकेन॥ अथशब्दश्चारंभार्थकः योगसूत्रव्यासभाष्यमहाभाष्यादिषु"अथयोगानुशासनं॥ अथशब्दानुशासनं " इत्यादौतथादर्शनात् ॥ अधिकारआरंभइत्यनर्थांतरं ॥ अतःशब्दोहेत्वर्थः ॥ यस्मात्कर्मादिभ्यो ब्रह्मज्ञानमेवपुरुषार्थसाधकमतस्तज्ज्ञानायवेदार्थब्रह्मणोवेदानुकूलोविचारोऽधिक्रियतइतिसूत्रार्थः। सचविचारःप्रथमेऽध्यायेसर्वेषांवेदांतवाक्यानांब्रह्मण्येवसमन्वयस्यद्वितीयस्मिन्नध्यायेबाह्यस्मृतिनिरासपूर्वकंश्रुतीनांपरस्परविरोधस्यतृतीयस्मिन्साधनानांतुरीयेफलानांचप्रतिपादनेनदर्शितः ॥ अयंचसर्वोपिविचारःपूर्वंलक्षणप्रमाणज्ञानमंतरानशक्यइतिब्रह्मणोलक्षणप्रमाणबोधकंद्वितीयाधिकरणं ॥ **प्रमाणमिति**॥ सूत्रेशास्तीतिशास्त्रंवेदइतिव्याख्यानादशेषोवेदएवब्रह्मणिप्रमाणमितिभावः ॥ तथाच यथापूर्वतंत्रे अथातोधर्मजिज्ञासेतिधर्मविचारंप्रतिज्ञाय मानाधीनामेयसिद्धिर्मानसिद्धिश्चलक्षणादित्युक्त्या धर्मस्यलक्षणप्रमाणाकांक्षायांचोदनालक्षणोर्थोधर्मइतिद्वितीयाधिकरणंप्रणीतं ॥ तेनत्रिधिगम्यार्थत्वंलक्षणंचोदनैवमानंचेत्येकेनैवाधिकरणेनसिध्यति तथात्राप्यस्मन्मते ॥ येषां तु भिन्नंशास्त्रयोर्नित्वाधिकरणं तेषांनैतत्तौल्यं ॥ किंचनेदमितरलक्षणंधर्मआरोप्यते नापिइदंसूत्रमौपचारिकं एवमेवोत्तरतंत्रेप्यस्तु ॥ येषांतु शबलगतंमायागतंवालक्षणंपरस्मिन्नारोप्यतइतिसूत्रंचौपचारिकमितिमतंतेषांनतत्तौल्यगंधोपि ॥ अत्रप्रकाशस्थंगयेणानुवदंति ॥ **अत्रसर्वोपियोगविभागेनेत्यादिना** ॥ योगःसूत्रंतद्विभागेनेत्यर्थः **शेषलक्षण-इति** पूर्वतंत्रतृतीयाध्याये( पा०१सू०१ ) " अथातःशेषलक्षणं " इतितत्कथनंप्रतिज्ञाय ( सू०२ ) " शेषःपरार्थत्वात् " इतियोत्यंतंपरार्थःसशेषइतिलक्षयित्वा ( सू०३ ) " द्रव्यगुणसंस्कारेषुबादरिः ,, इतिद्रव्यादीनामेवशेषत्वं नयागफलपुरुषाणामितिबादरिमतमुक्त्वा ( सू०४ ।५।६ ) " कर्माण्यपिजैमिनिःफलार्थत्वात् " फलंचपुरुषार्थत्वात् ,, " पुरुषश्चकर्मार्थत्वात् " इतियागादीनामपितत्त्वंसमर्थितं॥ अत्रकर्माणीतिज्ञानस्याप्युपलक्षणं कांडार्थत्वाविशेषात् अपिनावातत्संग्रहः ॥ अतोज्ञानस्यापिफलशेषत्वंफलस्यचप्राधान्यं ॥ तदेतदार्थिकमाहुः **कर्मेत्यादिना** ॥ **तत्संबंधादित्यादि**॥अयमत्रनिष्कर्षः ॥ ब्रह्मविदाप्नोतिपरमितिवाक्यं ब्रह्मविदक्षरवित्परं अक्षरादुत्तमं पुरुषोत्तममाप्नोतीत्यर्थकं परप्राप्तिलक्षणप्रधानफलसंबंधात्प्रधानं तस्माद्वाएतस्मा दात्मनइतिकार्यलक्षणंतुफलसंबंधाभावान्नप्रधानं ॥ यतश्चोक्तवाक्यंप्रधानमतएव फलकथंभावाकांक्षोपशमनायसत्यंज्ञानमित्यृचाविवृतं ॥ अन्यथातन्मात्रस्यविवरणमप्रयोजनकंस्यात्। परमाप्तिरूपंफलंचपरापरभावपुरस्सराक्षरपुरुषोत्तम-

ज्ञानादेव ॥ अतआवश्यकपरत्वज्ञानार्थंतस्माद्वाइत्यादिनासवभूतभौतिककर्तृतयापर-
त्वंविवृतं ॥ अनिरूपणेसत्यंज्ञानमित्यत्रप्रपञ्चविलक्षणधर्माणामेवप्रतीत्याब्रह्मणिकर्तृ-
त्वंनप्रतीयेतअत " आकाशःसंभूत " इत्यादिनायत्कर्तृत्वमुक्तंतत विवरणीचकमार्थं-
कब्रह्मपदनिर्दिष्टाज्ज्ञेयादक्षरात्परपदाभिधेयंलीलाभोक्तारंपुरुषोत्तमंतृतीयान्तब्रह्मपद
निर्दिष्टंपृथक्कृत्यनस्यपरत्वंविवेक्तुमुक्तं भूतभौतिकसर्गरूपकार्यनिर्देशेऽपिपरस्यस्वरूप
जिज्ञासायां अन्नमयादिभ्यस्सर्वेभ्यःआन्तरत्वकथनपूर्वकंआनन्दाकारलक्षणंतदुक्त-
मिति। अन्यथेति ॥ आनंदमयस्यपरत्वाभावेतस्यसर्वांतेनिरूपणंकर्तृत्वादिनानिरूपणं
चासंगतंस्यात्॥ सर्वंवतेऽन्नमित्यादि ॥ अन्नब्रह्मोपासनेसर्वान्नप्राप्तिःफलं ॥ प्राण-
ब्रह्मोपासनेसंपूर्णायुःप्राप्तिः ॥ मनोब्रह्मोपासनेकालकृतभयाभावः ॥ विज्ञानब्रह्मोपास-
नेशरीरएवपाप्महानपूर्वकंसर्वकामाशनंज्ञेयं ॥ सत्वेत्यादि ॥ ब्रह्मास्तिज्ञानेनसद्भावः
" रसंह्येवायंलब्धानंदीभवती " त्यादिना " अथसोभयंगतोभवति " इत्यादिना-
च " आनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चनेति " इत्यंतेनतत्तत्फलंचप्रधानं ॥ तेषांच-
शेषभूतानिपूर्वोक्तफलानि ॥ शिष्टंस्पष्टं । भृगुप्रपाठकइति इदमत्रत्वदयं प्रकृता-
धिकरणस्ययतोवाइमानीतिमुख्यं विषयवाक्यं सौत्रेणयतःपदेनजन्मादिपदेन च-
तस्यैवोपस्थापनात् भृगुवल्ल्यांविस्पष्टतयासंशयपूर्वपक्षयोरुत्थानाभावेऽपितस्या ब्र-
ह्मवल्ल्याश्चैकविषयकत्वस्यासन्दिग्धतयादर्शितचरदिशा ब्रह्मवल्ल्यामुत्तिष्ठमानं सं-
शयादिकंतत्रापि प्रसज्यत एवेतिब्रह्मवल्लीमवलंब्यविस्पष्टतयातस्योत्थापनं ॥ भू-
तभौतिककर्तृत्वमारोप्यमाणमपि पराभिमतरीत्यापरिचायकंभविष्यतिशाखाचन्द्रव-
दितिपूर्वपक्षाशयः ॥ सिद्धांततुमुख्यंनिरंकुशंकर्तृत्वंसेत्स्यतीतिनतदुक्तसिद्धसा-
धनादेः प्रसंगः ॥ तदेवतुनेति ॥ नहिसत्यंज्ञानमित्यत्रकर्तृत्वंनिषिध्यते
येनविरोधःस्यात् ॥ नचतत्रानुक्तत्वादेवलक्ष्येतदभावःशंक्यः । आनंदस्यापिस्पष्टंक-
थनाभावेनतस्याप्यभावप्रसंगात् ॥ अथाग्रिमवाक्यांतरैकवाक्यतयाऽनंदस्यलाभइति-
चेत्कर्तृत्वस्याप्यस्तु ॥ किंच विवरणीचमत्युतपरस्यतृतीयांतब्रह्मपदेनविवृतस्यकर्तृ-
त्वंकामाशनेसहभावश्रावणात्प्रत्याय्यते ॥ तत्रेति ॥ तृतीयांतब्रह्मपदे ॥ ब्रह्मापेक्ष-
येति॥ वेद्यब्रह्मापेक्षया नचप्रकृतिरिति तृतीयांतब्रह्मपदेनसापिनग्रहीतुंशक्या व-
क्ष्यमाणत्वाच्चेति ॥ अग्रिमसूत्रेषुसूत्रकृतेतिभावः । तत्रप्रमाणमित्यादिति ॥
यत्तु ( किंचशौंडेत्यादि अनुपपन्न ) इत्यंतं तदसत् ॥ नह्युक्तशब्दस्याध्याहारो-
ऽस्माकंसंमतोयेनासामर्थ्यंनापिलक्षणा । यतोविग्रहानुपपत्तिःस्यात् ॥ किंतु-
विषयत्वं शास्त्रइति सप्तम्यर्थः शास्त्रविषयोयोनिरित्यर्थः विषयत्वंचेहप्रतिपाद्यत्वं-
व्यापकादिभेदेनाधिकरणत्रैविध्यंचसंहितायामितिसूत्रेमहाभाष्ये " अधिकरणंना-
मात्रप्रकारं व्यापकमौपश्लेषिकंवैषयिकमिति " इतिदर्शितम् ॥ शास्त्रस्यचार्थप्रति-
पाद्यतासंबंधएवयुक्तः तथाच " वेदेधर्मःस्मृतौधर्म " इत्यादिवत्प्रकृतेऽप्यर्थोबोध्यः ॥

" वेदधर्ममनुव्रताः स्मृतिधर्मैकनिष्ठाना " इत्यादिवच्चसमासः ॥ नचयोनेरक्रि-
यात्वादधिकरणतानुपपत्तिःशंक्या गुरुर्वचस्यर्जुनोऽयंकीर्तौभीष्मःशरासने ॥ अक्ष-
शंकुचयोःकुशंवलग्ने गतौगजोबलेसिंहः इत्यादिप्रयोगदर्शनात् अतईदृशस्थले " प-
रंपरासंबंधस्यापिक्रियान्वयित्वरूपकारकत्वघटकताशास्त्रप्रामाण्यात् " इतिवदंतिभूष-
णव्याख्याकारादयः ॥ अन्यथा अक्षशौंडइत्यादिकमप्यसामर्थ्यान्नोपपद्येत शौं-
डादेरक्रियात्वात् ॥ अक्षेष्वित्यादिकमपिवैषयिकमेवाधिकरणं व्याप्यपश्लेषयोरसं-
भवात् ॥ कैयटस्तूक्तसूत्रे " खेशकुनयः गुरौत्रसति " इत्यपिवैषयिकाधिकरणमुदा-
हरति ॥ आस्तामेतत् ॥ प्रकृतेशास्त्रस्यविषयतानिरूपकाधारत्वमेवसंभवति इ-
तरयोरयोगात् ॥ तेनवेदधर्मइत्यादिवद्विवक्षितार्थसिद्धिर्निर्बाधा तदेतदनुसंधायप्र-
काशकारैरुक्तमाहुः ॥ अत्रतत्सप्तम्येत्यादिना ॥ समासदोषंपरिहरिष्यं-
ति ॥ वक्तव्यमेवेति ॥ यतइतिनिर्देशस्यश्रुतिस्मारकत्वेपि उच्चारितएवशब्दः
प्रत्यायकोनानुच्चारितइतिन्यायेन वाक्यार्थबोधेस्मृतमात्रस्यहेतुत्वासंभवात्सर्वत्रि-
धसृष्टिबोधकवाक्यराशेरसंग्रहप्रसंगाच्चवक्तव्यमेव ॥ एवमकथनेलक्षणमात्राकांक्षो-
पशमइतिपूर्वतंत्रवल्लक्षणप्रमाणोभयाकांक्षायाअप्रशमाच्च तथावक्तव्यमेव ॥ स-
मासदोषंपरिहरंति ॥ यद्विशौंडादिगणेति ॥ अतोयोगविभागोनसंमतइतिन-
व्यानामेवाग्रहः प्राचीनग्रंथेषुतुबहुस्थलेषुतदादरोदृश्यते ॥ यथास्वरप्रक्रियायां
( अ० ६ पा० २ सू० १६२ ) " बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः-
क्रियागणने " इतिसूत्रे इदंप्रथमंयस्यसइदंप्रथमइत्याद्युदाहृत्य " बहुव्रीहौ-
किम् अनेनप्रथमः इदंप्रथमः तृतीयेतियोगविभागात्समासः " इत्युक्तम् ॥
सूत्रेबहुव्रीहिपदमपियोगविभागंज्ञापयति असतिबाधकेप्रमाणानांसामान्येपक्षपा-
तात् एवमुत्तरत्रापितत्तत्पदंज्ञापकंज्ञेयं ॥ आत्मनेपदंपरस्मैपदमित्यादावपियोगवि-
भागादेवसमासः । अलुक्प्रकरणे ( अ० ६ पा० ३ सू० ७ ) " वैयाकरणाख्यायांच
तुर्थ्याः " इतिसूत्रे आत्मनेपदं आत्मनेभाषेत्युदाहृत्यचतुर्थीतियोगविभागात्समा-
सउक्तः ॥ एवंतत्रैवप्रकरणे आत्मनापंचमइत्यत्रतृतीयासमासः अविकटेउरणइतिसप्तमी-
समासश्चस्पष्टंयोगविभागादेवदर्शितस्तद्व्याख्यातृभिः ॥ किंचतत्रप्रकरणेसूत्रवार्तिकक-
ण्ठाभ्याम् ( अ० ६ पा० ३ सू० ११ ) " मध्याद्गुरौ " मध्येगुरुः " गुरावन्ताच्च " अंते-
गुरुः ( अ० ३ पा०६ सू०१८ ) " शयवासवासिष्वकालात् " खेशयः खशयः ग्रामे-
वासः ग्रामवासः ग्रामेवासी ग्रामवासी " हलदन्ताधिकारेगोरुपसंख्यानम् " ग-
विष्ठिरः एवमादिष्वलुग्विधीयते ॥ नहिगुर्वादयः शब्दाः शौंडादिषुपठ्यंते ॥ एवमा-
दिष्वलुग्विधानाद्योगविभागः सूत्रकाराद्यभिमतोज्ञायते ॥ किंचात्रैवप्रकरणे ( अ० ६
पा० ३ सू० १० ) " कारनाम्निचप्राचांहलादौ " इतिसूत्रेभाष्ये " अविकटेउरणो-
दातव्यः अविकटोरणः " इतिप्रत्युदाहृतम् ॥ अवीनांसंघातोऽविकटः संघातेक-

रच् ॥ एकैकस्मिन्संघाते मेषएकैकोराज्ञेकरत्वेनदेयः सोऽविकटोरणःकरविशेषः ॥ "हलदन्तात्सप्तम्याः संज्ञायाम्" इतिपूर्वसूत्रादिहसंज्ञापदमननुवर्त्यप्राप्तविभाषा- पक्षे यद्यप्राप्ते समासोविधेयः प्राप्तेपुनःसतिसंज्ञायामित्येवसमासः सिद्धः नैषदोषः एतदेवज्ञापयति भवत्यत्रसमासइति यदयंकारनाम्निःसप्तम्याअलु- कंशास्ति" इतिभाष्यकृतायोगविभागानुमितिर्बोधिता ॥ अत्रकैयटोपि "एतदेवेति समासमंतरेणलुक्प्रसंगाभावादलुग्विधानादत्रसमासोनुमीयतइत्यर्थः ॥ अत्रहलादि- ग्रहणादजादिनिवृत्त्यर्थादजादावपिसमासानुमानम्" इत्याह ॥ इहपुनः प्राप्तवि- भाषास्थापनेप्यनयादिशोत्तरत्रयोगविभागादेवसमासः ॥ नहिमध्येगुरुस्वशयग्रामवा- सादयोपिसंज्ञाः ॥ नचसूत्रोद्दिष्टशब्दैरेवसमासइतिभ्राम्यम् ॥ कारनाम्नीत्याद्यु- क्त्याऽन्यैः सहापिसमासस्यज्ञापनात् । अन्यथातद्व्यावर्तकंस्यात् । घकालतनेषुका- लनाम्नइति कालशब्दोप्यशौंडादिरेव तेनापि योगविभागादेव समासः ॥ नचा- लुकस्थलएवैतेसमासाः शंक्याः ॥ अकालादित्युक्त्याऽन्यात्रापिवसंतवासः शरद्वा- सीत्यादिसमाससिद्धेः ॥ "अपोयोनियन्मतिषुचोपसंख्यानम्" इतिभाष्यस्थंवार्ति- कंचापः सप्तम्यायोनिशब्देमतिशब्देचालुकंविदधदन्यैरपिसप्तम्यंतैस्तयोः समास- मसंदिग्धंज्ञापयति असतिबाधकेप्रमाणानांसामान्येपक्षपातात् ॥ तेनशास्त्रयोनिः शा- स्त्रयोनिरित्यादिसिद्धम् ॥ मतुष्वितिपाठमतेपिपूर्वमक्षतम् प्रतिपाद्यत्वंचात्रार्थलभ्यम् आत्मनापंचमइत्यादौकृतत्वादिवत् ॥ तथाच ( अ० ६ पा० ३ सू० ६ ) "आत्म- नश्चे" तिसूत्रेभाष्यम् "अथवायुक्तएवात्रतृतीयार्थः आत्मनाकृतंतस्यतद्येनासौ- पंचमः" इति ॥ अत्रकैयटोपि "आत्मनाकृतमिति । वृत्तिविषयेप्रतीयमानाकरो- तिक्रिया कारकत्वनिमित्तंभवति । हेतौवातृतीयाकार्या । अथवादध्योदनादौउपसे- कादिवत् । करोतिक्रियायाअंतर्भावात् करोतेरप्रयोगः । आत्मनापंचमइत्युक्तेआ- त्मनाऽस्यकृतंपंचमत्वमितिसंप्रत्ययात्" इत्याह ॥ एवमिहापिशास्त्रयोनिरितिविग्रह- वाक्येप्रतिपादितइतिगम्यतएव ॥ यदितु पात्रेसमितादेराकृतिगणत्वात्तत्रास्यपाठः स्वीक्रियेत तदात् ( अ० २ पा० १ सू० ४८ ) "पात्रे समितादयश्चे" त्ये- वसमासः सिद्धः तेषु कूपकच्छपः उदपानमंडूक इत्यादिवत् ॥ तत्रस्थितिक्रिये- वात्र प्रतिपादनक्रियाऽऽप्यार्थिकीवृत्तिगम्यास्यादितिदिक् ॥ एतेने किञ्चोक्त- शब्देत्यादि अनुपपन्नइत्यंतमपिनिरस्तम् ॥ इहशास्त्रयोनिरित्येवार्थेव्यासस्यता- त्पर्यनिर्णायकंतुजन्माद्यधिकरणस्यप्रपंचनरूपेचरमेप्रकृतिश्चेत्यधिकरणे ( अ० १ पा० ४ सू० २७ ) "योनिश्चहिगीयते" इतितदीयमेवसूत्रम् ॥ तेनाध्यायस्योपक्रमोपसं- हारयोरैकार्थ्यंसिद्धमित्यपिध्येयम् ॥ तदेतत्सर्वमनुसंधायाहुः **दृश्यतेत्वित्या- दि** ॥ योगविभागेभाष्यसंमतिमनुमापयितुमाहुः ॥ **अतएवेति** ॥ इहभा- ष्योक्तसमासद्वयेयद्यपितुल्यआस्येतुल्यास्यइतिप्रथमसमासस्तुकैयटेन " मयूर-

ध्वंसकादित्वात्सप्तम्यन्तोत्तरपदस्तत्पुरुषः " इतिव्याख्यातस्तथापि आस्येप्रयत्नइति-
समासस्तुशौंडादिषु प्रयत्नशब्दस्यापाठात्सप्तमीतियोगविभागैकशरणइतियोगविभागो
भाष्यसंमतएव नतुतदनारूढइतिभावः ॥ यत्तुउत्क्रांतोत्यादियोज्यमित्यंततदप्यबोध-
विलसितं ॥ ऋषिभिर्बहुधागीतंछंदोभिर्विविधैःपृथक्ब्रह्मसूत्रपदैश्चैवहेतुमद्भिर्विनि-
श्चितैः इतिभगवद्वाक्यात् ब्रह्मसूत्राधिकरणानांहेतुमत्तानियमेनजन्माद्यधिकरणस्या-
पिशास्त्रयोनित्वरूपहेतुमत्तएवादरणीयत्वात् अन्यथाभगवद्वाक्यविरोधापातात् ॥
नचोत्क्रांत्यादिसूत्रेषुव्यभिचारः शंक्यः ज्ञोतएवेतिपूर्वसूत्रादतएवेत्यस्यश्रुतिभ्यएवं-
त्यर्थकस्यतत्रानुवृत्यातदभावात् अन्यथाषष्ठ्यंतैकपदमात्रस्यसूत्रस्यअबोधकत्वप्र-
संगात् त्वद्भाष्येपि " उत्क्रांतिगत्यागतीनांश्रवणात् "इतिव्याख्यानस्य अनुवृत्यैवो-
पपत्तेश्च ॥ अतःशब्दस्यश्रुतिभ्यइत्यर्थस्तु " नात्माऽश्रुतेर्नित्यत्वाच्चताभ्य" इतिपूर्वसूत्रा
नुरोधात् ॥ वस्तुतस्तु " मांत्रवर्णिकमेवचगीयते । अस्मिन्नस्यचतद्योगंशास्ति " इ-
त्यादीनिप्रथमतराणित्रयंहेतुरूपाणित्तवाक्यार्थसाधकहेत्वंतरशून्यानिविहाय उत्क्रां-
तिसूत्रपर्यंतमनुधावनं ब्रह्ममीमांसासांप्रदायिकाभ्यासाभावात् ॥ ननुतर्हितत्रापि-
व्यभिचारस्तदवस्थइतिचेन्न गुणसूत्राणांतेषामेवाधिकरणत्वस्याभावात् ॥ भगवद्वा-
क्येहिपदशब्दोऽधिकरणपरः वाक्यपर्यायत्वात्स्थानपर्यायत्वाद्वा । पदंशब्देचवा-
क्येचव्यवसायापदेशयोः पादपच्चिन्हयोःस्थानत्राणयोरंकवस्तुनोरितिविश्वोक्तेः । प-
द्यतेज्ञायतेतत्वमेभिरितिव्युत्पत्तेर्वा ॥ सिद्धांतस्तुविषयादिपंचांगैरधिकरणैरेवज्ञातुंश-
क्यः ॥ अतोमांत्रवर्णिकादिसूत्राणियद्घटकानितेषामानंदमयाद्यधिकरणानांबहुहेतुघ-
टितत्वान्नव्यभिचारः ॥ एवमुत्क्रांत्यद्यधिकरणमपिदशसूत्रंजीवाणुत्वप्रतिपादकंबहुहे-
तुघटितमेव॥एतेन(प्रतिपदंहेतोः पंचम्यंतस्यकल्पनाया)मित्यादिनिरस्तं॥ सूत्रघटकसु-
प्तिङंतान्यतरपदानांतु विषयवाक्यवत्त्वादसंभवाधिकरणानामेवतथात्वात्तवैवप्रयासः
( यद्धेतुकत्वंवाक्यस्यतद्धेतुकतायाःपदेपिसत्व ) मितितुदूष्यपक्षेपिशक्यवचनं ॥
किंचहेतुपदंकारणपरंप्रयोजनपरंवेतिव्याख्यानेभगवद्वाक्येहेतुमत्पदंव्यर्थंस्यात् ॥
प्रयोजनमनुद्दिश्येतिन्यायेनप्रयोजनवत्तायाः स्वतोलाभात् । अन्यथाविनिश्चितत्व
व्याघातापातात् विषयवाक्येषुकारणत्वव्यवहारस्यक्वाप्यदर्शनाच्च ॥ अतएवशं-
कराचार्यमधुसूदनसरस्वत्यादिभिरिहहेतुपदंतथानव्याख्यातंकिंतुयुक्तिपरमेव ॥ किं-
चशंकराचार्यैरत्रसूत्रपदेनसूचकानिपदपदेनज्ञानसाधनानिचवेदवाक्यान्येव गृह्यंतइति-
स्वग्रंथानदृष्ट्वैवसम्यग्व्याख्यानकौशलं स्वप्रथमश्लोकोक्तादिशास्वस्मिन्शमत्वापा-
दकं प्रकाशयतिभवान् ॥ युक्तंतुप्रागुक्तमेव व्याख्यानं नतुतावकक्ल-
प्तं क्लिष्टत्वाच्छीघ्रोपस्थितिकत्वाभावात् । द्वंद्वप्रयोगेप्रयोजनाभावाच्च ॥ अ-
तोहेतुरहितत्वाज्जन्मादिसूत्रं नपृथगितियुक्तमेव नतुभगवद्वाक्यविरोधेपिपृथक्-
सूत्रं कृत्वासाध्याध्याहारक्लेशः ॥ नच जन्मादिसूत्रेपिजिज्ञासासूत्रादतइत्य

नुवर्तनाददोषःशंक्यः अव्याख्यानात् यादृशार्थकोतश्शब्दस्तत्रत्वद्भाष्यादौव्या-ख्यातस्तादृशार्थकस्यात्रासंगतेश्च ॥ तदेतदनुसंधायाहुः ॥ **किन्त्वत्वन्मतइत्या-दिना** ॥ उत्क्रांतिसूत्रार्थादिकंतुसप्तमश्लोकखंडनेप्रपंचयिष्यामः ॥ श्रुतिस्त्विति-जात्यभिप्रायमेकवचनंतथाचश्रुतिश्चेति भगवद्वाक्येविनिश्चितपदंसूत्रपदानांविशेष-णंछंदसांविशेषणंवा ॥ तथाच " वेदांतविज्ञानंसुनिश्चितार्थाः " इतिश्रुत्यावेदार्थनि-श्चयंप्रतिवेदांतविज्ञानस्यकारणतायाबोधनात् ब्रह्मसूत्रपदैःकरणैर्विशेषतोनिश्चितैश्छं-दोभिरितितत्रार्थः ॥ आद्यपक्षेपिविनिश्चिततत्वमसंदिग्धत्वंनिश्चयजनकत्वमितिया-वत् ॥ अतएवतत्रशंकराचार्यैरपि " विनिश्चतैःनसंशयरूपैःनिश्चितप्रत्ययोत्पादकैरि-त्यर्थः „ इतिव्याख्यातंतस्माद्युक्तमुक्तंमूले ॥ यच्च ( एवंतत्तुसमन्वयादित्यादिअ-न्वेष्य ) मित्यंतमुक्तंतदप्यविचारात् ॥ नह्यस्माभिस्तत्रलक्षणांगीक्रियते ॥ तादृशा-र्थेव्यासस्यैवसमन्वयशब्दप्रयोगस्तुसमन्वयेनव्यतिरेकतश्चेत्यादौदृश्यतएव ॥ तत्र-मानंच अन्वयादितरतइत्यादिनागक्तं अतआप्तव्यवहारात्समन्वयशब्दस्यतादृशार्थे शक्तिरेव ॥ अन्वयशब्दोपितादृशार्थेपंचभूतपरान्वयादिप्रतिपादनस्थलेषुबहुवारंव्या सपादैःप्रयुज्यतएव ॥ एतदुरसिकृत्य यतदुक्तंविकल्प्यदूषयंतितदपिसमन्वयइत्यादि-ना ॥ **शास्त्रयोनित्वपूर्वपक्षेति** ॥ अत्रपूर्वपक्षसिद्धांतयोर्द्वयोरसंगतिर्भाष्यप्रकाशा-दिषुचव्युत्यादिता ॥ **सर्वस्येत्यादि** ॥ इदमत्रज्ञेयं वेदेक्रियाशक्तिः क्रियारूपी-भगवान्पूर्वकांडार्थोज्ञानशक्तिर्ज्ञानरूपःसउत्तरकांडार्थइतिसर्वस्यापिवेदस्यवस्तुतोब्र-ह्मण्येवसमन्वयस्तयोःपरस्परोपकारकभावश्चेष्ट एव तथापितैः सर्ववेदस्यक्रियापरत्वं ब्रह्मणोप्युपासनाविधिशेषत्वमित्यादिपूर्वपक्षमुपन्यस्य सिद्धांतेब्रह्मणिसमन्वयस्तस्य-विधिशेषत्वाभावःपूर्वकांडार्थस्यकथंचिदुत्तरांगत्वंचदर्शितं ॥ अत्रपरोक्तरीत्याउत्तर-स्यैवपूर्वांगत्वंकुतोनस्यात् इत्याशयेनायंदोषः ॥ **ऐकशास्त्र्येति** ॥ " संहतमेत-च्छारीरकंजैमिनीयेनषोडशलक्षणेन " इतिबौधायनोक्तेः पूर्वोत्तरमीमांसयोरैकशास्त्र्यं तेनतद्विषययोः कांडयोरपिएकवेदस्यविभागत्वात्तदितिभावः ॥ **प्रापकत्वेनेति** ॥ तत्तत्कर्मफलदातृत्वेनतथाचयेषांफलसमर्पकंब्रह्म तादृशकर्मप्रतिपादकत्वात्पूर्वकां-डस्यब्रह्मण्यन्वयः ॥ **तत्तद्वाक्येति** ॥ " सएवैनंभूतिंगमयति " इत्यादौवाय्वादितए-वतत्तत्फलाभिकथनात्तद्वाधप्रसंगइतिभावः ॥ अथ **प्रापकत्वेनेति** कर्मणांचित्तशु-द्धिद्वाराब्रह्मप्रापकत्त्वेन तथाचब्रह्मफलककर्मप्रतिपाकत्वात्तस्यतत्रान्वयः ॥ **तत्त-द्वाक्येति** वायव्यश्वेतालभनादेर्भूत्यादिकमेवफलंसन्निहितवाक्यादवगम्यते नतुचि त्तशुद्धिर्ब्रह्मावाप्तिर्वा ॥ ननुतदुक्तपूर्वपक्षसिद्धांतयोरसंगतावपिप्रकारांतरेणतत्र-सर्वसमन्वयस्यसंमतत्वात्सूत्रेसोर्थः कुतोनाद्रियतइत्यतआहुः **अस्तुवेति** ॥ **अ-ग्रिमेति** ॥ समग्रप्रथमाध्यायस्येतिभावः नचप्रथमाध्यायस्यसमन्वयार्थकत्वा त्तस्यतदर्थकताबोधकस्तथासूत्रार्थआवश्यकइतिवाच्यं । द्वितीयाद्यध्यायेषुआर-

भेअविरोधसाधनादिप्रघटितस्यतत्तदर्थकताबोधकसूत्रस्याभावेन अत्रैवतादृशसू त्रावश्यकतायावक्तुमशक्यत्वात् तेष्वविरोधादिप्रतिपादनादेवतदर्थकतायाःसुखेन-सिद्धेः ॥ तत्संमतत्वसंमतसूत्रार्थयोरधिकंदूषणंभूषणंचभाष्यादेरेवावगंतव्यं ॥

मूलेप्यत्रद्वितीयतृतीयाधिकरणयोर्भाष्यंतत्प्रकाशंचैकीकृत्यतत्पंक्तयः प्रायोऽक्ष-रशः काश्चिदर्थतश्चानूदिताइतिध्येयम् ॥

इयंचमायेत्यादिकःप्रलापस्तुमायानिरासेनैवनिरस्तः सतिकु-ड्येचित्रमितिन्यायात्तथापिकिंचिदुच्यतेयक्षानुरोधीहिर्बलिरि-तिन्यायात् ॥ शुद्धचैतन्येमायातिष्ठतीतिपक्षस्तुनसंभवति मा-यायास्तमोरूपत्वेनचैतन्यस्यप्रकाशरूपत्वेनतमःप्रकाशयोर्विरु-द्धस्वभावत्वेनाऽऽधाराधेयभावासंभवात् ॥ नहिसूर्य्यांधकार-योर्वन्हिशैत्ययोर्वाऽऽधाराधेयभावःसंभवति ॥ किंचअविद्या-श्रयत्वेब्रह्मणोल्पज्ञत्वापत्तिः॥ नचाविद्यायास्तमोरूपत्वेनतमसः-स्वाश्रयविषयकज्ञानप्रतिबंधकत्वेपितन्निष्ठज्ञानप्रतिबंधकत्वाद-र्शनेन नाज्ञत्वसंपादकत्व ( मतएवतमस्थाजनाःप्रकाशस्थानूप-श्यंती ) मितिवाच्यं ॥ यथातमसिस्थितःपुरुषस्तमसिस्थितानूघ-टपटादीन्नपश्यतितथाऽविद्यावद्ब्रह्मविद्याकार्य्यंजगन्नजानीया-देवनहिजगत्प्रकाशस्थंयेनाविद्याश्रयेण ब्रह्मणाज्ञातंभवेत् ॥ तथाचब्रह्मण्यज्ञत्वंदुर्वारमेव अस्मन्मतेच मायाभिधाब्रह्मणः-शक्तिरेवेतिनकोपिदोषःयेचत्वन्मतपक्षपातिनोऽविद्यायाब्रह्मनि-ष्ठत्वस्वीकारेऽल्पज्ञत्वादीन्दोषानूपश्यंतोजीवेतांस्वीकुर्वंति॥ तन्म-तेनुपरास्यशक्तिर्विविधैवश्रूयते ॥ मायांनुप्रकृतिंविद्यान्मायि-नंतुमहेश्वरमित्यादिवाक्यविरोधः ॥ किंचतमसःस्वाश्रयावर-कत्वदर्शनेनाऽविद्यायाजीवावरकत्वाज्जीवज्ञानंब्रह्मणोनस्यादि-तिब्रह्मणोज्ञत्वापत्तिःतमःस्थेनप्रकाशस्थस्याज्ञानाज्जीवस्यब्रह्मवि-

स्त्वंस्यात्तथासतितस्यैवानायांसेनमोक्षसिद्धौसाधनवैयर्थ्यंस्यात्॥ किंचजीवाश्रिताऽविद्येतिस्वीकर्तॄनयेजीवत्वमविद्यारूपोपाधिकृतंस्वतःसिद्धंवा॥ आद्ये या उपाधिरूपाऽविद्या साविशेषणीभूताऽविद्यातोऽभिन्नाभिन्नावा ॥ आद्ये आत्माश्रयः स्वावच्छिन्नेस्वस्यवृत्तित्वात् द्वितीयेसापिजीवेवक्तव्याऽजीवत्वंचोपाधिकृतं सचविशेषणीभूताविद्याचेदन्योन्याश्रयः अन्याचेच्चक्रकानवस्थेस्यातां ॥ स्वतःसिद्धत्वस्वीकारेत्वपसिद्धांतःद्वैतापत्तिश्चेत्यलमप्रकृतविचारेण॥

## टीका

सहस्राक्षेइयंचमायेत्यादिंअज्ञानेपिब्रह्मणोनाज्ञत्वमित्यंतंभागंदूषयंति ॥ **इयंचमायेत्यादिकइत्यादिना॥अप्रकृतविचारेणेत्येतेनमायानिरासेनेति** तदभिमतरीतिकतन्निरासेन॥**तन्निष्ठेति**॥त्वाश्रयमनुष्यादिनिष्ठेत्यर्थः॥**घटपटादीनिति**॥ नहितमःस्थःस्वशरीरमपिपश्यत्यतइदमात्मनोप्युपलक्षणं ॥**अविद्यावदिति**॥तद्विशिष्टंतदाश्रयइतियावत् **प्रकाशस्थमिति**॥ मायोपादानकत्वात्प्रकाशस्थानीयविशुद्धचित्स्थंनभवतीत्याशयः॥तथाचतमस्थदेवदत्तेनतत्स्थघटादिरिवस्वशरीरमिवचप्रपंचआत्माविद्याश्रयब्रह्मणानैवज्ञायेतेतिनिगर्वः **दुर्वारमिति**॥ मायायास्तुच्छत्वांगीकारात् ब्रह्मातिरिक्तचेतनानंगीकाराच्च ब्रह्मणैवत्वस्मिन्रजतादिवन्मायाध्यस्तेत्यापत्त्यापिसुतरांदुर्वारं ननुत्वन्मतेप्यविद्याश्रयत्वेनब्रह्मणोऽज्ञत्वप्रसंगइतिचेन्नाविद्ययाऽविद्ययाशक्त्यामायया

---

## सहस्राक्ष.

इयंच माया शुद्धचैतन्ये तिष्ठतीतिबहवः॥नचाऽविद्याश्रयत्वेऽज्ञत्वापत्तिरितिवाच्यम् ॥ अविद्यायास्तमःसदृशत्वेन तमसःस्वाश्रयविषयकज्ञानप्रतिबन्धकत्वेऽपि तन्निष्ठज्ञानप्रतिन्बधकत्वस्याऽदर्शनेन मायायामपि तथाकल्पनात् ॥ अतएव तमःस्थाजनाः प्रकाशस्थान्पश्यन्ति ॥ अन्यथा त्वन्मतेऽप्यविद्याश्रयत्वेन ब्रह्मणोऽज्ञत्वप्रसङ्गात् ॥ तस्याअविद्यायालौकिकाऽज्ञानवैलक्षण्ये तु अविद्यापदस्य तत्रपरिभाषात्वमेवस्यात् ॥ अविद्या जीवे तिष्ठतीत्येके ॥ यत्तुजीवोऽज्ञानस्वरूपत्वान्नाज्ञानाश्रयइत्याह ॥ तत्त्वनङ्गीकारपराहतम् ॥ अस्मिन्पक्षेऽज्ञानस्य तिमिराख्यरोगवत्स्वाश्रयमात्रदोषत्वं नतु विषयावरकत्वम् ॥ अतोब्रह्मणोनाज्ञत्वम् अभेदस्य वास्तवत्वेऽप्यवास्तवभेदस्याऽपि सत्त्वेन जीवस्याऽज्ञानेऽपि ब्रह्मणोनाज्ञत्वम् ॥

चनिर्षेवितमित्यादिवचनैस्तस्यास्तच्छक्तित्वेनतदिच्छयापरेषामेवाज्ञतायास्तयासंपा-दनस्य औचित्यात् ॥ परेचत्वेच्छयाभेदंप्रापिताअणवोंशाएवनहिवन्हिशक्तिर्व-न्हिमेवदहति हिमशक्तिर्हिममेववाजाड्येन पीडयति अतएवोक्तं नाग्नेर्हितापोन-हिमस्य तत्स्यादिति ॥ क्वचिज्जीवेकथंचित्व्यभिचारेपिसर्वज्ञेसर्वशक्तौस्वतंत्रेज्ञान-घनेब्रह्मणिनस्वशक्त्याऽज्ञत्वसंभवः ॥ अतएवोक्तं एकस्यैवममांशस्येतिनमेमोक्षोनबं-धनमितिच ॥ नचतवापिशक्तित्वांगीकारान्निस्तारः सविशेषत्वभयाच्छक्तितया-अशक्यवचनत्वात् ॥ तदेतदाहुः नकोपिदोषइति॥ यत्तु ( अविद्यायालौकिकाज्ञा-नवैलक्षण्येत्वविद्यापदस्यतत्रपरिभाषात्वमेवेति ,) तन्न तस्याःशक्तितयालौकिकाज्ञान-स्यतत्कार्यतयाच तस्यांतद्वैलक्षण्यस्यावश्याभ्युपेयत्वात् ॥ अन्यथानाशनादिशक्तिः शस्त्रादिषुनष्टंशस्त्रमित्यादिव्यवहारोदुर्वारःस्यात् ॥ अतस्तस्यामेवाज्ञानत्वकल्पनानिर्मू-लैव ॥ येचेत्यादि ॥ अविद्यावच्छिन्नंचैतन्यंजीवः तत्रावच्छेदकतयाविशेषणीभूता ऽविद्या आधेयाऽविद्यैवचेदात्माश्रयः भिन्नाचेत्साशुद्धचैतन्यएवस्थितेत्युक्तदोषाः साप्यविद्योपाहितएवस्थितेतिचेदुपाधिभूता प्रथमाचेत्तर्ह्यन्योन्याश्रयः भिन्नाचेत्त-त्राप्युक्तविकल्पः । आद्येचक्रकापत्तिर्द्वितीयेऽनवस्था । किंच विशुद्धचितोजीवत्वा-नंगीकाराज्जीवभावस्यैवाविद्याजन्यत्वांगीकाराच्चांततोजीवस्याज्ञानरूपत्वमेवापद्यते । अतएवमुक्तौ जीवभावस्यनिवृत्तिः । एतेनयत्तुजीवइत्यादिनिरस्तं ॥ यत्तुअभेदस्ये-त्यादितन्नविस्फुलिंगवद्व्युच्चरणेनैच्छिकभेदांगीकारएव विस्फुलिंगस्यजलेनिर्वापणे-वन्हेरनिर्वापणवच्चक्षुराद्यंशस्यतिमिरादिसंबंधेपिसूर्यादेस्तदसंबंधवच्चपरमेश्वरस्याज्ञ-त्वंनापद्येत । त्वन्मतेतुशुद्धस्यैवाविद्यासंबंधेन जीवभावात्तदापत्तिर्दुर्वारा । अवा-स्तवभेदस्याज्ञानमूलकस्यसत्वमपिब्रह्मण्येववाच्यं तथाचापन्नमेवतत्राज्ञानं ॥ य-द्यवास्तवभेदोत्तरमज्ञानसंबधः स्यात्तदातदापत्तिर्नस्यात् ॥ अज्ञानकृतमवास्तवभेदं-वदतस्तवतुननिस्तारः ॥

मायागतत्वमास्तां परस्यसर्गेऽभिधाश्रुतेर्नाऽस्मिन् ॥ क्षणकारणमखिलमिदं व-दतोबौद्धमपंचउचितस्ते. इतितृतीयश्लोकखंडनं ॥

अथेचइदानींसाकारंसर्वशक्त्येकंसर्वज्ञं सर्वकर्तृचसच्चिदानंदरू-पंहिब्रह्मतस्मादिदंजगदितिशुद्धाद्वैतमार्त्तंडस्थश्लोकेतट्टीकायां-चदोषोद्भावनंतेनकृतंतदपिपरमताज्ञानमूलकं॥ब्रह्मणःसाकारत्व-स्यआनंदमात्रकरपादमुखोदरादिरितिपंचरात्रे परमात्मानंपर-मानंदविग्रहमितियाज्ञवल्क्यस्मृतौ सहस्रशीर्षापुरुषःसहस्राक्षः-

सहस्रपादित्यादिश्रुतिषुचप्रसिद्धत्वात् ॥ नच " नतस्यकार्यं-करणंचविद्यत „ इतिश्रुतिविरोधइतिवाच्यं तस्येतिषष्ठ्याभेदो-निरूप्यते तथाचजीववत्स्वरूपातिरिक्तंतत्संबंधिज्ञानक्रियादि-षुकरणमिंद्रियंनास्ति ॥ अथवानित्यत्वादाकारस्यतद्धेतुभूतं-करणंक्रियासापिनास्ति ॥ अतएव " नतत्समश्चाभ्यधिक " इति ॥ एतेनैव " अप्राणोह्यमनाःशुभ्र " इत्यस्यापिविरोधः-परिहृतः ॥ तथाच ब्रह्मप्रकरणेनिरूपितआकारोब्रह्माभिन्न-एव ॥ नचाकारनिरूपकाणांब्रह्मपरिचायनार्थत्वात्तेषांब्रह्मभि-न्नकराद्याकारनिरूपकत्वान्नप्राधान्येनब्रह्मप्रतिपादकत्वमिति-विरोधइतिवाच्यं ॥ " सयथासैंधवघनोऽनंतरोऽबाह्यःकृत्स्नोरस-घनएवैवंवाअरेयमात्माऽनंतरोबाऽह्यःकृत्स्नःप्रज्ञानघनएवे " ति-श्रुतौबाह्याभ्यंतरभेदराहित्यबोधनेनज्ञानाकारत्वस्यैवप्रसिद्धत्वा-त्॥ आकारभूतकरादिराहित्येनकेवलज्ञानात्मकतायांबाह्याभ्यं-तरप्रतीतिराहित्येनतन्निषेधानुपपत्तिः अकृत्स्नादिराहित्येनकृत्स्न-घनपदयोर्वैयर्थ्यापत्तिश्च ॥ अतःकेवलसच्चिदानंदात्मकब्रह्मा-भिन्नकरचरणाद्याकारांगीकारे नकस्यापिविरोधः ॥ एवंचाका-रस्यमायिकत्वंवदन्ननभिज्ञएव ॥ जगद्धेतुत्वस्यवास्तवस्यपूर्वंप्र-तिपादितत्वाद्यथाजगद्धेतुत्वमितिदृष्टांतोसिद्धः ॥ नचाकारस्य-सत्यत्वेमायाह्येषामयासृष्टायन्मांपश्यसिनारद सर्वभूतगुणैर्युक्तं-नैवमांज्ञातुमर्हसीतिस्मृतिविरोधइतिवाच्यं ॥ तस्याअयमर्थःय-न्मांसर्वभूतगुणैर्युक्तंपश्यसिएषामायामयासृष्टामांचिदानंदं एवं-नज्ञातुंद्रष्टुमर्हसि तस्यकृपैकवेद्यत्वात् ॥ " यमेवैषवृणुतेतेनल-भ्यस्तस्यैषआत्मावृणुतेतनूंस्वा " मितिवरणहेतुकतनूविवरणस्य-

श्रुत्यंतरेश्रावणात् ॥ अतएवा " ऽविज्ञातंविजानतांविज्ञानमवि-
जानता " मित्यप्युक्तं करचरणादिविशिष्टतयाजानतां अवि-
ज्ञातं तद्भिन्नतयाजानतांविज्ञातमित्यर्थः ॥

## टीका

अथपरोक्तंएवंमायिकमितिचतुर्थश्लोकं इदानींसाकारमित्यादिना ज्ञेयब्रह्मणितत्प्रसक्ति
रित्यंतेनव्याख्यानेनसहितं अग्रेइदानींसाकारमित्यादिनातदुक्तमितिसूत्रेव्यासपा-
दैरितीत्यंतेनपरिहरिष्यंतः प्रथमं इदानीमित्यादिकं स्मृतेश्चेत्यर्थइत्यंतं भागंनिराकुर्वंति।
अग्रेचेत्यादिना जानतां विज्ञातमित्यर्थ इत्यंतेन ॥ अत्रेदंबोध्यं स.का[illegible]त्वसा-
धिकास्तत्रस्मृतिश्रुतयइहारोहक्रमेणदर्शिताः ॥ तत्रपंचरात्रेनिर्दोषपूर्णगुणविग्रहआत्मतं
त्रोनिश्चेतनात्मकशरीरगुणैश्चहीनः । आनंदमात्रकरपादमुखोदरादिः सर्वत्रचस्वगतभेद-
विवर्जितात्मेतिवाक्येस्पष्टमेवतत्समर्थितं॥ तत्रलोकवद्दोषरहिताःपूर्णाःसाम्यातिशयरहि

---

## सहस्राक्ष

एवंमायिकमस्य पादकरकंवाक्यात्कमात्रत्वगीरानन्दस्य कृतेर्यतोनहि मुखं संस्थानव-
द्दृश्यते ॥ अंगाभावगिरः सुवर्णवदयंस्यात्ते विकारी मते धेनुर्नं प्रकृतिर्मतान्तरपरे सूत्रे निपाता-
दितः ॥ ४ ॥ इदानीं साकारंसर्वशक्त्येकंसर्वज्ञंसर्वकर्तृच ॥ सच्चिदानन्दरूपंहिब्रह्मतस्मादिदंज-
गदिति श्लोकोक्तमाकारासहितस्य सच्चिदानन्दरूपत्वं तथा तट्टीकोक्तं विश्वतश्चक्षुरुतविश्व-
तोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ संबाहुभ्यांधमतिसंपतत्रैर्द्यावाभूमीजनयन्देवएकः इत्या-
दिश्रुतिभिःसाकारं ब्रह्मप्रतिपाद्यते ॥ श्रुतस्यचक्षुरादिकमिन्द्रियान्तरस्योपलक्षणं ॥ बाहुभ्या-
मितिद्विवचनेन ब्रह्मणोद्विभुजत्वं श्रुतिसिद्धं चतुर्भुजत्वं तु स्मृतिप्रसिद्धम् ॥ सर्वकामःसर्वगन्धः
सर्वगन्धःसर्वरसः इतिछान्दोग्ये रसोवैसइति तैत्तिरीये सहस्रशीर्षापुरुषःसहस्राक्षः सहस्रपात्
इति पुरुषसूक्ते साकारत्वमुक्तम् ॥ अग्रेततोविराडजायतेतिकथनान्नायं विराट्पुरुषः ॥ सर्व-
तःपाणिपादान्तंसर्वतोऽक्षिशिरोमुखमिति गीतायाम् ॥ आनन्दमात्रकरपादमुखोदरादीति नार-
दपञ्चरात्रे अथवापरमात्मानंपरमानन्दंविग्रहमिति याज्ञवल्क्यस्मृतौ इति निरस्यति ॥ एवं-
मायिकमिति ॥ यथा जगद्धेतुत्वं तथेत्यर्थः ॥ कंशिरः पादकरकमित्याकारमात्रस्योपलक्ष-
णम् ॥ वाक्यादिति ॥ इन्द्रोमायाभिरितिश्रुतेः मायाह्येषामयासृष्टायन्मांपश्यसिनारद सर्व-
भूतगुणैर्युक्तंनैवंमांज्ञातुमर्हसि इतिस्मृतेश्चेत्यर्थः ॥

ताः॥अर्थादलौकिकाःगुणाःशांतिज्ञानादयएवविग्रहःस्वरूपं यस्य॥ एतेनगुणगुणिनोर-
भेदः ॥ विग्रहपदात् "तदेजतितन्नैजती" त्याद्युक्तद्धर्मेषुलोकदृष्ट्याविरोधोभातीत्य-
पिदर्शितं ॥ गुणानधीनत्वायाऽऽहआत्मतंत्रइति ॥ लोकवत्स्वभिन्नजडशरीरेंद्रियव्या-
वर्तनायाऽह निश्चेतनेति ॥ निश्चेतनाप्रकृतिः प्राकृतैःशरीरैः गुणैरिंद्रियैश्चात्तद्धर्मैश्च
हीनःतर्हिकीदृशआकारइत्याकांक्षायामाहआनंदमात्रेतियद्यपिसच्चिदानंदविग्रहस्तथा-
प्याकारसमर्पकोब्रह्मवादेआनंदएवेतिमात्रपदं ॥ तेनसुवर्णप्रतिमावत्करचरणादा-
वविशेषः ॥ आदिपदंचक्षुरादिसर्वसंग्राहकं करचरणादिविभागात्प्राप्तंस्वगतभेदंवार-
यतिसर्वत्रचेति सर्वत्रसर्वेषुप्रदेशेषु ॥ तथाचैकैकावयवेसर्वावयवरूपतासर्वत्रश्रवणदर्श-
नादिकार्यंचसिध्यति ॥ त्रिविधभेदविवर्जितात्मेतिपाठेसर्वंद्वैतंनिवृत्तंतत्रेदमप्यक्षतं ॥
याज्ञवल्क्यवाक्यंतुयाज्ञवल्क्यगीतेतिप्रसिद्धेगार्गींप्रतियाज्ञवल्क्येनोक्तेद्वादशाध्यायसं-
मितेयोगशास्त्रेनवमेऽध्यायेऽस्ति तत्रध्यानमुपक्रम्य ( श्लो० २ ) ध्यानमात्मस्व-
रूपस्यवेदनंमनसाखल्वित्यादिनातल्लक्षणादिकमुक्त्वा ( श्लो० ५ ) एकंज्योतिर्मयं-
शुद्धंसर्वगंव्योमवद्दृढम् अव्यक्तमचलंनित्यमित्यादिना ( श्लो० ९ ) ब्रह्मब्रह्मयो-
हंस्यामितितद्वेदनंभवेदित्यंतेनाक्षरध्यानपक्षमुक्त्वापुरुषोत्तमध्यानपक्षमाह अथवाप-
रमात्मानंपरमानंदविग्रहं गुरूपदेशाद्विज्ञायपुरुषंकृष्णपिंगलं ब्रह्मब्रह्मपुरेचास्मिन्द-
हराख्येखमध्यमे अभ्यासात्संप्रपश्यंतिसंतःसंसारभेषजमित्यादिना ( श्लो० १७ )
प्रभाभिर्भासयद्रूपंपरितः पुरुषोत्तममित्यंतेन ॥ एवंचात्रपरमानंदविग्रहपदस्यपरमः-
अगणितःआनंदःविग्रहःस्वरूपंयस्येत्येवार्थः ॥ एतेनतत्रैवाष्टमाध्यायस्थं( श्लो० २८ )
प्रणवस्यतुनादांतेपरमानंदविग्रहमितिवाक्यमपिव्याख्यातप्रायम् सहस्रशीर्षेतिपुरुष-
सूक्तवाक्येसहस्रशब्दोऽसंख्यपरः ॥ ब्रह्मणःसाकारताबोधकवाक्यानि ऋग्यजुःसा-
माथर्वसु " इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ विष्णोःकर्माणिपश्यत ॥ विश्वत-
श्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ संबाहुभ्यांधमतिसंपतत्रैर्द्यावा-
भूमीजनयन्देवएकः ॥ विश्वतोहस्तः संबाहुभ्यांनमति द्यावापृथिविइतितैत्तिरीयाः ॥
सहस्रशीर्षंदेवंविश्वाक्षंविश्वशंभुवं विश्वंनारायणंदेवमक्षरंपरमंपदंविश्वतःपरमांनि-
त्यंविश्वंनारायणंहरिं । नसंदृशेतिष्ठतिरूपमस्य ॥ सर्वाननशिरोग्रीवंतलवकारोप-
निषदस्तृतीयखंडेब्रह्मणोहविजयेदेवाअमहीयंतेत्यादिः आनंदरूपममृतंयद्विभाति ।
अग्निर्मूर्द्धाचक्षुषीचंद्रसूर्यौ " इत्यादीनिसहस्रशउपलभ्यंतएवेतिकिंबहुना ॥ विशे
षतश्चायमर्थंउत्तरभागेसेत्स्यति ॥ **नतस्येति** ॥ " नतस्यकार्यंकरणंचविद्यते
नतत्समश्चाभ्यधिकश्चदृश्यते ॥ परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबल-
क्रियाच " इतिश्वेताश्वतरवाक्यं ॥ अत्रकरणनिषेधोमूलोक्तरीतिकः एवं-
कार्यनिषेधोपितस्येतिषष्ठ्याकुलालवद्भिन्नकार्यपरः अथवा ण्यतआवश्यकार्थ-
कत्वांगीकाराज्जीववत्फलोद्देश्यककर्तव्यपरः नमेपार्थास्तिकर्तव्यमितिस्मरणात् ॥

ननुतत्रापिसर्वथाकार्याभावः वर्तएवचकर्मणीत्युक्तेः ॥ तथापिनसर्वथातदभावः बहुश्रुतिविरोधात् उत्तरार्धेऽत्रैवक्रियोक्तेश्च ॥ ज्ञानबलक्रियाशक्तिमत्त्वादेवननिर्धर्मकत्वं ॥ **जीववदिति** ॥ यथाजीवस्याणुमात्रस्वरूपादतिरिक्तानींद्रियाणि तथात्रनास्ति स्वस्यपरविविधशक्त्यैवज्ञानक्रियादेः कथनात् ॥ **अप्राणइति** "दिव्योह्यमूर्तः पुरुषः सबाह्याभ्यंतरोह्यजः ॥ अप्राणोह्यमनाः शुभ्रोह्यक्षरात्परतः परः" इतिमुंडकवाक्ये अतिरिक्तप्राणमनसोर्निषेधः "मनसोमनोयत् ॥ सउप्राणस्यप्राणः ॥ प्राणन्नेवप्राणोभवति ॥ मनसोरेतः प्रथमंयदासीत् ॥ चंद्रमामनसोजातः" इतितलवकारबृहदारण्यकैभाववृत्तसूक्तपुरुषसूक्तादिश्रुतिभ्यः ॥ अमूर्तइत्यपिपरिच्छिन्नमूर्तेः सः दिव्यपुरुषत्वोक्तेः । बाह्याभ्यंतरत्वस्यतत्साहित्यस्यवाकथनाच्च ॥ अतएवननिर्धर्मकत्वं अक्षरात्परत्वशुभ्रत्वयोः श्रवणाच्च ॥ **सयथेत्यादि** अत्रघनपदात्संघातः तेनसाकारत्वं अनंतराबाह्यकृत्स्नत्वकथनाच्च ॥ इदंबृहदारण्यकेषष्ठाध्यायेपुनःपठ्यमानेमैत्रेयीब्राह्मणेऽस्ति ॥ खंड्यमानश्लोके एवंपदं अतीतश्लोके यथातस्यहेतुत्वंमायिकंसाधितं तथेदमपीत्यर्थकं व्यर्थमित्याहुः ॥ **जगद्धेतुत्वस्येति** इंद्रोमायाभिरितितुप्राग्व्याख्यातं ॥ मायाश्चतत्रभेदज्ञानएवकरणतयाऽनुयंति ननुरूपेषुहेतुतयाकारकस्यक्रियान्वयौचित्यात् ॥ त्वदभिमतामायैकैवेतिबहुवचनविरोधश्च ॥ मायाह्येषेति इदंमहाभारतेशांतिपर्वणिमोक्षधर्मेषुचत्वारिंशदधिकत्रिशततमाध्याय (श्लोकः४५ नारदंप्रतिनारायणस्यवाक्यमस्तिअस्यार्थंतृतीयाध्यायद्वितीयपादमकाशावरणभंगसहस्तादिषुश्रीपुरुषोत्तमपादैर्दर्शितंसंगृह्णंतिः**यादिति भूतगुणे** शब्दादिभिराकाशादिगुणैः॥ सर्वेमत्ताभाविकाएवगुणाइतिभावः ॥अथवाभूतैः शरीरघटकैराकाशादिभिः । गुणैरिंद्रियैश्च ॥ स्वरूपानतिरिक्तमेवममशरीरेंद्रियादिकमितिभावः । निश्चितनात्मकशरीरगुणहीनत्वोक्तेः ॥ अतश्चक्षुःसामर्थ्यात्सर्वैर्भूतैरिंद्रियैश्चयुक्ततयादर्शनंमायिकमेव ॥ वास्तवदर्शनंतदिच्छयैव "तमक्रतुंपश्यतिवीतशोकोधातुः प्रसादान्महिमानमीशं" इतिनारायणश्रुतेः ॥ अत्रमानांतरमाहुः **यमेवैषइति** कठमुंडकयोः "नायमात्माप्रवचनेनलभ्योनमेधयानबहुनाश्रुतेन" इति साधनांतरलभ्यत्वंनिषिध्य यंजीवं एषपरमात्मावृणुते स्वीयत्वेनांगीकरोति तेनजीवेनलभ्यः तस्यजीवस्यैवएषपरमात्मात्वांतनूंवृणुते आनंदमात्रकरपादमुखोदरादिस्वरूपंसाक्षात्कारविषयीकरोतितिकथ्यते ॥ तनूपदात्साकारता॥**अविज्ञातमिति** ॥ इदंकेनोपनिषद्द्वितीयखंडस्थंवाक्यं **करेत्यादि** एवंविधसाकारत्वंतत्रैव तलवकारोपनिषदध्याये तृतीयतुरीयखंडयोः पर्यालोचनेस्फुटीभवति ॥ अतोवाक्ये विजानतां ध्यानेप्रादुर्भाविवादृश्यमानपरिच्छिन्नतयैवप्राकृतवत्करादिविशिष्टतयैवचानुभवतांब्रह्मस्वरूपंतावन्मात्रत्वाभावादविज्ञातं उक्तरीतिकमविजानतांतुविज्ञातमित्यर्थः एतस्यैवफलितार्थः **तदभिन्नतयेत्यादिः** ॥ अथमायाह्येषेतिवाक्यस्य-

प्रकरणपर्यालोचनेऽप्यस्मत्संमतएवार्थः सिध्यति नतु पराभिमतइति निश्चायनाय-तत्पूर्वापरसंदर्भश्चिन्त्यते शान्तिपर्वणिमोक्षधर्मेषु एकोनचत्वारिंशदधिकत्रिशततमाध्यायारंभे ( श्लो० १ ) प्राप्यश्वेतंमहाद्वीपं नारदोभगवानृषिरित्यादिनानारदस्य तत्रगमनंतत्रत्यभगवद्भक्तानां दर्शनपूजने भगवदिक्षातत्रतपःपूर्वकजपप्रारंभश्च ( श्लो० ३ ) स्तोत्रंजगौसविश्वायनिर्गुणायगुणात्मनइत्यंतेननिरूप्यते अत्रपृथिव्यादितत्त्वातिरिक्तगंधादिगुणराहित्यं । त्रिगुणाभिन्नत्वंचपदद्वयेनोक्तमितितादृशस्यैवद्रष्टव्यतास्तुतिश्चसिध्यति ॥ अग्रे " नमस्तेदेवदेवेश निष्क्रिय निर्गुणे " त्यादि " भक्तोहंत्वांदिदृक्षुरेकांतदर्शनायनमोनम " इत्यंतंकिंचिदनून्यद्विशतनामघटितम् नारदकृतंस्तोत्रमनूदितं ॥ अत्राप्येकांतभक्तिर्दर्शनहेतुः फलंतिनतुमाया ॥ अतएवस्तोत्रान्तेभक्तवत्सलेतिविशेषणम् ॥ उत्तराध्यायारंभेपि ( अ० ३४० श्लो. १ ) एवंस्तुतः सभगवान् गुह्यैस्तथ्यैश्चनामभिः । तं मुनिंदर्शयामासनारदंविश्वरूपधृगित्यत्रस्तुतिजन्यप्रसादएवदर्शनहेतुस्सिध्यति । नाम्नांतथ्यत्वंत्वनारोपितानागंतुकार्थ प्रतिपादकत्वं । नहिरज्जौभुजंगोयमितिजपारुणेस्फटिकेवारुणोयमित्यभिलापस्तथ्योभवति । स्तोत्रेच ( अध्याय ३३९ नाम ११ । १२ । १८ ) " त्रिगुणप्रधानसदसद्व्यक्ताव्यक्ते " तिपरस्यैवत्रिगुणप्रकृतिरूपेणसर्वप्रपंचरूपेणचपरिणतत्वंदर्शितं । अतएव ( नाम ३५ । ३६ ) " पूर्वनिवास । गुह्य " तिमहाप्रलयेपिजगदाधारत्वमज्ञेयत्वंचोक्ता ( नाम ४६ ) " संज्ञासंज्ञे " ति नामरूपव्याकर्तृत्वं ( ना० ५२ ) "वशवर्तिन् " इतिसर्ववशित्वं ( ना० ५४ ) " अपरिमित " इत्यादिना ( ना० ६७ ) " पाञ्चरात्रिक " इत्यंतेनानंतरूपत्वं शासनीयत्वं शासितृत्वं सर्वकर्म तत्साधनवेदकालकर्त्रादित्वं तद्भोक्तृत्वं नारदपंचरात्रप्रतिपाद्यत्वं चसंगृहीतं ( ना० ७० । ७१ ) " मानसिकनामनामिक " इतिशुद्धमनसासेव्यत्वं " समानसीनआत्माजनाना " मित्यादिश्रुतिभ्यःनाम्निनाम्निविदितत्वं " नामानिसर्वाणियमाविशंती " तिर्मुंडकश्रुतेः । अग्रे ( ना०७२ ) " परस्वामिन् " इत्यादिभिस्सर्वस्वामित्वसर्वशास्त्रवेद्यत्वतत्तच्छास्त्रधर्मादिरूपत्वसर्वरूपत्वाग्निवेदसामगानादिरूपत्वसर्वकर्तृत्वसर्वभोक्तृत्वमाहात्म्यरूपशरीरत्वादयोबहवोभगवद्धर्मानिरूपितास्तथ्यास्तेनमायिकाभवितुमर्हन्तिमध्ये ( नाम०१८४ ) " महामायाधरे " तितुमायाशक्तिकत्वंनतुकल्पितमायोपाधिकत्वंकल्पितायाअभ्रांते न धारणस्यायोगात् । उत्तराध्याये ( श्लो ० २ ) किंचिच्चंद्राद्विशुध्धात्मेत्यादिनाविविधालौकिकरूपाश्रयत्वं ( श्लो ० ६ ) एतान्बहुविधानवर्णान्रूपैर्बिभ्रत्सनातनः सहस्रनयनःश्रीमाञ्छतशीर्षःसहस्रपादितिसर्वरूपविशिष्टस्यसनातनत्वञ्चोक्तं ( श्लो ० ११ ) देवानामादिरव्ययइतित्त्वरूपस्याव्ययत्वं ततोनारदंप्रतिभगद्वचनेषुच ( श्लो ० १२ ) एकतश्चद्वितश्चैवत्रितश्चैवमहर्षयः इमंदेशमनुप्रामाममदर्शनलालसाः ॥ नचमांतेददृशिरेनचद्रक्ष्यतिकश्चन ऋते-

सैकांतिकश्रेष्ठत्त्वंचैवैकांतिकोत्तम ॥ इतितपस्विनामपिरूपादर्शनमेकांतभक्तानामे॰
वतद्दर्शनंचवदतिनचैतन्मायिकंसंभवतितस्यसर्वसुलभतयातपस्विनामदर्शनायोगात्॰
एकांतभक्तेर्धर्मविशेषफलकत्वापाताच्चतथा ( श्लो ० १५ ) प्रसन्नोहन्तवाद्येदविश्व॰
मूर्तिरिहाव्ययइत्यपिस्वरूपस्यामायिकत्वमेवोक्तंतथात्वेतद्दर्शनस्यसर्ववरापेक्षयोत्तम॰
फलत्वंनोपपद्येत दृश्यतेतुवरंवृणीष्वेत्याज्ञमस्यनारदस्य (श्लो ० १६ । १७ ) अथ॰
मेतपसोदेवयमस्यनियमस्यच सद्यःफलमवाप्तंवैदृष्टोयद्भगवान्मया वरएषममात्यं॰
तंदृष्टस्त्वंयत्सनातनः भगवन्विश्वकृत्सिंहस्सर्वमूर्तिर्महान्प्रभुरितिवचनेतस्यतथात्वं ॥
अग्रे ( श्लो ० १९ ) इमेह्यनींद्रियाहारामद्भक्ताश्चंद्रवर्चसइत्यादिनाश्वेतद्वीपस्थैकतां॰
भक्तानांनिरंतरंतादृशस्वरूपभजनंतत्रैवांतेप्रवेशश्चोक्तस्तदपिवास्तवत्वेसत्येवसंगच्छ॰
ते अग्रे ( श्लो० २१ ) नदृश्यश्चक्षुषायोसौनस्पृश्यःस्पर्शनेनचेत्यादिनेंद्रिय॰
सामर्थ्येणाग्राह्यत्वंनिर्गुणनिष्कलत्वादिकंचपरतत्वस्योक्तातस्यैवज्ञानमात्रेणदृश्यत्वंत॰
स्मिन्नेवस्वरूपेमुक्तानांप्रवेशश्चाभिधीयते ( श्लो ० २४ । २५ ) द्विर्द्वादशेभ्यस्तत्वेभ्यः
ख्यातोयः पंचविंशकः पुरुषोनिष्क्रियश्चैवज्ञानदृश्यश्चकथ्यते यंप्रविश्यभवंतीहमु॰
क्तावैद्विजसत्तमाः सवासुदेवोविज्ञेयःपरमात्मासनातनइति अतोनमायिकत्वं ॥ त॰
तस्तस्यमहात्म्यंगुणभोक्तक्षेत्रज्ञाख्यसंकर्षणस्वरूपं मनोरूपप्रद्युम्नस्वरूपमहंकारा॰
ख्यानिरुद्धस्वरूपंचनिरूप्योच्यते ( श्लो ४२ ) मत्तःसर्वसंभवतिजगत्स्थावरजंगमं
अक्षरंचक्षरंचैवसच्चासच्चैवनारद ( ४३) मांप्रविश्यभवन्तीहमुक्ताभक्तास्तुयेममअहंहि॰
पुरुषोज्ञेयोनिष्क्रियःपंचविंशकः (४४) निर्गुणोनिष्कलश्चैवनिर्द्वंद्वोनिष्परिग्रहः एतत्त्व॰
यानविज्ञेयं रूपवानितिदृश्यते (४५) इच्छन्मुहूर्तान्नश्येयमीशोहंजगतोगुरुः मायाह्ये॰
ष.मयासृष्टायन्मांपश्यसिनारद (४६) सर्वभूतगुणैर्युक्तंनैवंमांज्ञातुमर्हसि मयैतत्कथितं॰
सम्यक्तवमूर्तिचतुष्टयं (४७)अहंहिजीवसंज्ञातोमयिजीवस्समाहितः नैवंतेबुद्धिरत्राभूद्॰
दृष्टोजीवोमयेतिवै(४८)अहंसर्वत्रगोब्रह्मन्भूतग्रामांतरात्मकः। भूतग्रामशरीरेषुनश्यत्सु॰
ननशाम्यहं। सिद्धाहितेमहाभागा नराह्येकांतिनो भवन् तमोरजोभ्यांनिर्मुक्ताः प्रवेक्ष्यं॰
तिचमांमुनेइति ॥ अत्रक्षराक्षरयोःस्थूलसूक्ष्मयोश्चदर्शितत्स्वरूपोपादेयत्वंतस्मिन्नूरूपेप्र॰
वेशएवमोक्षः सचप्रवेशोभक्तिसाध्यः तस्यैवरूपस्यनिर्गुणत्वादिकंचबोध्यते ॥ एतत्त्व॰
येत्यादि ॥ रूपवतोदर्शननियमादयंविग्रहोरूपवानितिहेतोरेवदृश्यतइत्येतत्त्वयानज्ञे॰
यं किंतुस्वेच्छयैवाहंदर्शनविषयीभवामि । अतएवयदैवाहंदर्शनाभावमिच्छेयंतदैवाद॰
र्शनंगच्छेयं यतोहंसर्वेश्वरइत्यर्थः ॥ ब्रह्मतुरूपरूपंनतुरूपवदित्यहरूपवत्सूत्रेविस्तरः ॥
ननुभौतिकतुल्यंविग्रहंतत्रशब्दस्पर्शरूपादीन्भूतगुणाँश्चप्रत्यक्षीकुर्वन्नहंकथमभौतिक॰
त्वमवधारयेयमितिचेत्तत्राह ॥ मायेति ॥ हेनारदयत्मांभूतगुणैः शब्दादिभिर्युक्तंभूतैः
पृथिव्यादिभिर्गुणैरिंद्रियैर्वायुक्तंजीववत्सेंद्रियभौतिकविग्रहंपश्यसि एषाहिनिश्चयेनम॰

यासृष्टामायावस्तुतस्तुमां एवंजीववत्स्वातिरिक्तभौतिकशरीरेंद्रियादिरुक्तंज्ञातुनार्हसि-
मयिजीववदतिरिक्तभौतिकविग्रहादिज्ञानमेवमायिकमानंदमात्रकरपादमुखोदरादित्वा-
दितिभावः ॥ स्वातिरिक्तशरीरन्तुजीवस्यैवभवतितच्चभौतिकमेवअतएवप्राक् ( श्लो०
३३ ) पृथिवीवायुराकाशइत्यादि ( श्लो० ३५ ) उत्पन्नएवभवतिशरीरंचेष्टयन्प्रभुः ।
नविनाधातुसंघातंशरीरंभवतिकचित। नचजीवंविनाब्रह्मन्वायवश्चेष्टयंत्युतेत्यंतमवादि।
किंचपरमतेजीवकल्पितामाया । अभ्रान्तेनेश्वरेणतुविवर्तरूपासानशक्यारुष्टमित्यन्य-
त्रविस्तरः ॥ जीवजडादिसर्वप्रपंचस्यचतुर्मूर्तिमदकोपादेयताप्रागेवनिर्णीतेतिसर्वोपा-
दानेमत्स्वरूपेभौतिकत्वादिप्रतीतिरेवाप्रमेत्याशयेनप्रागुक्तंस्मारयति ॥ मयैतदिति ॥ ए-
वंदर्शितस्वरूपेजडत्वशंकांनिरस्य तर्हिदेहदेहिविभागाभावात्समष्टिजीवरूपमेवसकलं-
योगबलेनदर्शितंस्यादित्याशंकांनिरस्यति ॥ अहंहीति ॥ ममैवांशरूपेणजीवभूततया-
जीवत्वेनसम्यग्ज्ञानतोजीवइतिसंज्ञावानप्यहमेव ॥ जीवसंघातइतिपाठेजीवोपयोगि-
संघातइदानींदृश्यमानविग्रहकरणादिरूपोहमेवनतुजीवस्यैवस्वादतिरिक्तमथमंममवि-
ग्रहादिकमितिभावः ॥ किंचजीवपदार्थोमयिसम्यगाहितस्तेषामपिमयिसैंधवखिल्यो-
दकन्यायेनलयात् मैत्रेयीब्राह्मणादौतथाश्रावणात् " तत्रचैवापियंती " तिमुंडकश्रु-
तेश्च ॥ अथवाजीवोमयिसमाधिमानभवति । अनेकसाधनसिद्धस्यदुर्लभसमाधिमा-
त्रपात्रमदोमद्रूपंकथमेवभौतिकंमायिकंवाभवेदितिभावः ॥ नापितज्जीवमात्रंभवि-
तुमर्हतिकर्मकर्तृभावविरोधात् ॥ हियतएवमतोमैवमिति ॥ अडार्षः कचि-
त्त्वमितिपाठः ॥ एतस्मिन्रूपेयच्चभिमंतव्यंचेष्टाद्याश्रयभूतंविग्रहादिकमभिमंताप्रेरक-
श्चातिरिक्तौनस्यातांतर्हिकेवलस्समष्टिजीवएवमयादृष्टःस्यादित्येवंबुद्धिरत्रसंप्रतिदृश्यमा-
नमत्स्वरूपेनवमाभूत् ॥ किन्तुसच्चिदानंदविग्रहात्मकएवाहमितिजानीहीतिभावः॥माभू-
दित्यनेनभगवत्स्वरूपेकदाचिदपितथादुर्बुद्धेरुदयाभावरूपोवरोप्येकांतभक्तायदत्तोज्ञेयः
इहनीलकंठचतुर्धरस्यव्याख्यानमपिप्रायेणसर्वमनुकूलंनः ॥ स्वरूपस्यजडजीवरूपत्वा-
भावस्तस्मात्सर्वस्योत्पत्यादिकं हेतुमुक्त्वाजगतस्थितिकालेपि स्वस्यसर्वत्रजडजीवेषु-
स्थितत्वं सर्वान्तर्यामित्वं च हेत्वंतरमाह अहंसर्वत्रगइति॥ भूतग्रामांतरात्मकः भूता-
निपृथिव्यादीनिजीवाश्च ।उभयत्रभूतशब्दप्रवृत्तेरुपनिषत्सुपुराणभागेषुचदर्शनात्। एषां-
ग्रामस्यसमूहस्यान्तर्यामीसर्वत्रगः । तत्तत्कार्यनिर्वाहायतत्रतत्रसर्वत्रस्थितः ।
काण्वानांबृहदारण्यके पंचमाध्यायेसप्तमब्राह्मणे " यःपृथिव्यांतिष्ठन् । पृथिव्याअंत-
रोयं पृथिवीनवेदयस्यपृथिवीशरीरंयः पृथिवीमंतरोयमयत्येषतआत्मान्तर्याम्यमृतः ।
योप्सुतिष्ठन्नद्भ्योन्तर " । इत्यादिनापृथिव्यबग्निवाय्वाकाशादिजडेषु काण्वपा-
ठे " योविज्ञानेतिष्ठन् । विज्ञानादंतरइतिमाध्यंदिनपाठे " य आत्मनितिष्ठन्नात्मनो-
न्तर " इतिजीवेषुचसर्वत्रस्थितेरंतरत्वस्यनियमनस्यचश्रवणात् ॥ " येनैषभूत-
स्तिष्ठत्यंतरात्मा ॥ ग्रामाविश्यचभूतानि ॥ योलोकत्रयमाविश्य " त्यादिश्रुतिस्मृति-

वुचस्फुटमेतत् ॥ अनेनश्लोकार्धेनांतर्यामिब्राह्मणार्थः संगृहीतः । तथाच सृष्टिद-
शायां जडाजडेषुसर्वत्रस्थितस्यतत्स्पर्शरहितस्यतन्नियामकस्यस्वरूपस्यभौतिकत्वा-
दिशंकादुरापास्ता ब्रह्मन्निति संबोधनं वेदार्थस्मारणार्थं प्रलयकालेपिविशेषं पूर्व-
त्रहेतुमाह । भूतग्रामेति ॥ " यस्यपृथिवीशरीरं । यस्यापःशरीरं । यस्य-
विज्ञानंशरीरं । यस्यात्माशरीर " मित्यादिश्रुतिभ्योजडजीवसमूहरूपाणियानि-
शरीराणि शरणधर्माण्यायतनानितेषुकालपारवश्यान्नश्यत्सुतिरोभवत्स्वप्यहंत्वयादृ-
श्यमानःकालतंत्रतिरोभावभाङ्नभवामीत्यर्थः । एवं सतिदृश्यमानरूपस्यकभौ-
तिकत्वादिशंकावकाशः मोक्षाधारत्वादपिनमद्रूपस्यभौतिकत्वादिकं शक्यंवक्तु-
मित्यभिप्रेत्याऽह ॥ सिद्धाइति ॥ अस्यैवरूपस्यानन्यभक्त्यासिद्धत्वादिकमं-
ते दृश्यमानरूपएवप्रवेशलक्षणोमोक्षश्चभवति । अतोप्यत्रभौतिकत्वादिदर्शनमेव
मायिकंविग्रहस्तुशुद्धसच्चिदानंदलक्षणएवोपपद्यतइतिभावः । एतेन " यतोवाइमानि-
भूतानी " तिश्रुत्युक्तजन्मस्थितिप्रलयाभिनिवेशेभगवद्विग्रहस्यालौकिकममायिकत्वं
च साधितंज्ञेयं ॥ अग्रेचभक्तिसिध्यर्थं स्वरूपस्यैवबहुतरं माहात्म्यमुच्यते विग्रहं
विनाललाटपार्श्वाद्यनुपपत्तेः ॥ तत्रललाटाद्रुद्रोद्भवादिकं स्वरूपएवसर्वेषां देवा-
नांसाधनानांफलानांनिरतिशयाष्टविधैश्वर्यादीनांचावस्थानंस्वस्यैवब्रह्मादिसर्वपितृत्वं-
तन्मर्यादाकरत्वंनिवृत्तिप्रियत्वंसांख्ययोगप्रतिपाद्यत्वंस्वतएवमुहुःसर्गप्रलयौतयोः सू-
र्योदयास्तमयवदाविर्भावतिरोभावरूपत्वंस्वस्यवराहाद्यवतारानितरच्चबहुतरंनिरूपय-
न्नवतारसामयिकवपुषामपिपंचभूतजन्यत्वादिकंनिवार्यनित्यतामेवबोधयितुंप्रादुर्भाव-
वतांमुहुराह (श्लो०६५ )प्रादुर्भावगतश्चाहंसुरकार्येषुनित्यदेति । तथा ( श्लो०९० )
प्रादुर्भावः कंसहेतोर्मथुरायांभविष्यतीतितथा ( श्लो०१०६ ) अतिक्रांताः पुराणे-
षुश्रुतास्तेयदिवाक्वचित् । अतिक्रांताश्चबहवःप्रादुर्भावाममोत्तमाः । लोककार्याणि-
कृत्वाचपुनस्स्वांप्रकृतिंगता इतिस्वांप्रकृतिंदृश्यमानंमूलरूपं ॥ अंते ( श्लो० १०७ ) न-
ह्येतद्ब्रह्मणाप्राप्तमीदृशंममदर्शनं ॥ यत्त्वयाप्राप्तमद्येहएकांतगतबुद्धिनेत्युपसंहारवा-
क्येपिविशेषानुग्रहलभ्यदर्शनममायिकमेवनिश्चीयते एकांतभक्तस्यमोहनायोगात् ॥
अमायिकत्वादेवभीष्मोपितद्रूपस्यान्तर्धानमेवाह ( श्लो० ११० ) एतावदुक्त्वावचनं-
तत्रैवांतर्दधेपुनः नारदोपिमहातेजाः प्राप्यानुग्रहमीप्सितं ॥ नरनारायणौद्रष्टुंबदर्या-
श्रममाद्रवदिति ॥मायिकत्वेत्वदर्शनकालेरूपमेवनावतिष्ठेतेतिकृतस्यांतर्धानकथा ॥ त-
स्मान्मायाह्येषेतिवाक्यस्यार्थःप्रकाशाद्युक्तएवसंदर्भप्रकाशाद्युक्तइत्यलंप्रसक्तानुप्रसक्त्या ॥

वेदेलक्षणाया अयुक्तत्वादानंदरूपमित्यस्यानंदजनकत्वकथनम-
संगतं ॥ आनंदमात्रकरपादमितिपंचरात्रस्थमात्रपदस्यपूर्वोप-

स्थितावधारणार्थत्यागेस्वार्थांद्यर्थकल्पनेमानाभावात्॥कोशस्यो-
भयत्रतुल्यत्वात्पूर्वोपस्थितत्यागेचकपालाधिकरणविरोधः ॥
यत्तुविग्रहःसंग्रामेप्रविभागेचदेहविस्तारयोपीतित्रिकांडशेषात्पर-
मानंदस्यप्रविभागोविस्तारो वायस्मादितियाज्ञवल्क्यवाक्यार्थ-
इति तन्न समानविभक्तिकप्रथमांतपदयोःकर्मधारयसंभवेव्य-
धिकरणबहुव्रीहिकल्पनस्यान्याय्यत्वात्॥ "अनेकमन्यपदार्थ"
इतिसूत्रविरोधाच्च अनेकस्यप्रथमांतस्यान्यार्थेवर्त्तमानस्यतेनसमा-
सविधानात्॥अन्यथाऽऽनंदस्यरूपत्वबोधकश्रुतीनामपिकल्पन-
याऽन्यार्थत्वसंभवेनाऽऽनंदरूपताऽपित्वदभिमतानसिद्ध्येदिति॥अ-
तएवानंदमयोभ्यासादितिसूत्रेव्यासैरप्यानंदविग्रहएवदर्शितोऽ-
न्यथा आनंदोभ्यासादित्येवकुतस्तैर्नोक्तं सूत्रार्थस्त्वणुभाष्येवि-
स्तरेणोक्तस्ततोऽवगंतव्यः ॥ ग्रंथगौरवभयान्नोपन्यस्तः ॥
विग्रहपदेनात्रनशरीरं किंत्वाकारएवतेनपरमानंदविग्रहमित्य-
स्यपरमानंदाकारमित्यर्थः ॥ ननुविग्रहपदस्यशरीरार्थकत-
याशरीरमेवब्रह्मणःकुतोनांगीक्रियतइतिचेत्सत्यं ॥ यच्छरीरमु-
च्यतेतन्नित्यमनित्यंवा ॥ नाद्यः अद्वैतश्रुतिविरोधात् ॥ किंचपु-
रुषविधब्राह्मणोक्तायाः " सोनुवीक्ष्यनान्यदात्मनोऽपश्य " दि-
त्यनुवीक्षायाविरोधःस्यात् ॥ द्वितीयेतच्छुद्धसत्वात्मकंवा प्रा-
कृतंवा मायिकंवाऽ गीकार्य्यं ॥ तत्रकर्म्मपेक्षायांब्रह्मणएवकर्तृ-
त्वंवाच्यं ॥ तत्रानपेक्षयासर्वकर्तुर्ब्रह्मणःकावाऽनुपपत्तिर्येनस्व-
स्यापिशरीरंकल्पयेत् ॥ अतोमूलभूतस्यनशरीरं ॥ किंतुस्वरूप-
मेवतदाकारं॥ "प्राणन्नेवप्राणोवदन्नेववागि" तिवच्छरीरकार्य्यं-
कुर्वन् लीलयाव्यामोहनार्थंशरीरवद्भासयेत ॥ नटवत ॥ अतो-

यादृशंवेदेन प्रतिपादितंतादृशंब्रह्मैव ॥ येषांपुनर्मोक्षानधिकार-
स्तेषांतच्छरीरवद्भासतइतिनिश्चयः ॥

## टीका

सहस्राक्षे आनंदरूपेत्यादिं नोपन्यस्तइत्यंतंभागंपरिहरंति वेदेलक्षणायाइ-
त्यादिना इतिनिश्चयइत्यंतेन ॥ अयंभावः यत्तु ( तत्करादिष्वानंदरूपतोक्तिरानं-
दजननादौपचारिकी ) त्युक्तं तन्न ॥ तथासत्यप्यानंदमात्रत्वगिरोऽनुपपत्तेः ॥ किंच-
वेदस्य तात्पर्यानुपपत्तेःकल्पनेमानाभावात् प्रत्युत तत्रैवतात्पर्यस्यतृतीयद्वितीयपाद-
विचारितरीत्यानिश्चयात् सर्वशक्तिमत्यलौकिकेब्रह्मणिशक्यार्थबाधस्याप्यभावात् ल-
क्षणाबीजाभावेन वेदेतत्कल्पनमनुचितं ॥ नचसुखस्यसंस्थानवत्वादर्शनात्प्रत्यक्षवि-
रोधस्तद्बीजंशंक्यं लौकिकप्रत्यक्षेणश्रुतेःप्रामाण्यस्यबाधितुमशक्यत्वात् ॥ अन्यथा
तार्किकादिदर्शितदिशाज्ञानंसुखंचलोकेऽन्यस्यधर्मरूपमेवदृष्टं नतुस्वतंत्रमितिब्रह्मणो-
ऽप्यन्यधर्मरूपत्वापत्त्यास्वातंत्र्येणज्ञानानंदरूपत्वंनसिध्येत् ॥ " सत्यंविज्ञानमानंदंब्र-
ह्म ॥ प्रज्ञानंब्रह्म ॥ योवैभूमातत्सुखं " इत्यादिकंचज्ञानसुखजनकत्वादौपचारिकमे-
वस्वीकुरु ॥ लोकेज्ञानसुखयोरुत्पत्तिविनाशशालितायादृष्टतयाब्रह्मणस्तदात्मकत्वेत-
त्रापितथात्वापातात् ॥ अथश्रुतिसिद्धं सत्यज्ञानानंदानंतत्वंब्रह्मणिनबाधितुंशक्यं
अलौकिकत्वाच्चन कुकल्पनावसरइतिचेद्वानंदमूर्तित्वमपिप्रमाणसिद्धंयथाश्रुतमेवमंत-
व्यम् ॥ तथाहि छांदोग्येनवमप्रपाठके " योवैभूमातत्सुख " मितिब्रह्मणःसुखा

---

## सहस्राक्ष.

आनन्दरूपतोक्तिरानन्दजननादौपचारिकीत्याहाऽऽनन्दस्येति ॥ इदमुपलक्षणम् रज्जुमात्रे स-
र्पइतिवदधिष्ठानाऽभेदेनाऽपि तथाव्यपदेशोपपत्तेः ॥ किञ्च मात्रंत्ववधृतौस्वार्थेकात्स्न्र्येमात्रापरि-
च्छेदे अक्षरावयवेद्रव्येमानेऽल्पेकर्णभूषणे कालेवृत्तेचेति हेमचन्द्रोक्त्या आनन्दोमात्रं स्वार्थोप-
स्या मात्राऽल्पोयस्येतिवा नारदपञ्चरात्रवाक्यार्थः॥ अथविग्रहः संग्रामेप्रविभागेचदेहविस्तारयो-
रपीति त्रिकाण्डशेषात्परमानन्दस्य विग्रहःप्रविभागोविस्तारोवा यस्मादिति याज्ञवल्क्यवाक्यार्थः॥
एतेन आनन्दमयोऽभ्यासादितिसूत्रमानन्दमयं हस्तादिकं ब्रह्मणआहेति तट्टीकाकारभ्रमःप्रत्युक्तः
हस्तादिपदानुपादानात् सूत्रार्थस्तु आनन्दमयपर्याये पठ्यमानब्रह्मशब्दोब्रह्मबोधीत्यादिर्भाष्याद-
लौकिकोवादिविवादेन शास्त्रार्थविस्तरादिहनोपन्यस्तः

त्मकत्वमुक्तानुपदंदशमेपूर्वदहरविद्यायांइंद्रप्रजापतिसंवादेच " एषआत्मापऽहतपा-
प्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासःसत्यकामःसत्यसंकल्प " इतिवाक्ये-
जरामृत्युशोकजिघत्सापिपासानांशरीरधर्मत्वेनप्रसिद्धानांनिषेधेनतद्रहितशरीरंसिध्य-
ति । मुंडकेच द्वितीयमुंडकद्वितीयखंडे " तद्विज्ञानेनपरिपश्यंतिधीराआनंदरूप-
ममृतंयद्विभाति " इतिश्रावणात्नृसिंहोत्तरतापनीयेच " आनंदरूपःसर्वाधिष्ठानः
सन्मात्र " इतिकथनादप्यानंदाकारस्यैवसिद्धिः ॥ अत्ररूपशब्दोमूर्तिपरएव " न-
संदृशेतिष्ठतिरूपमस्य ॥ तस्यैषआत्मावृणुतेतनूंस्वां " इत्यादिश्रुत्यंतरात् ॥ इहअ-
स्यपरमात्मनोरूपंसंदृशेनतिष्ठतिलौकिकप्रत्यक्षविषयोनभवतीतिलौकिकचाक्षषविषय-
तायाएवनिषेधोनतुरूपस्य ॥ प्रत्युततदविषयरूपस्यसिद्धिः । अतएवचक्षुर्बलेनादृश्य-
त्वंतत्रैवाग्रेस्फुटीकृतं " नचक्षुषापश्यतिकश्चनैनं " इति ॥ भगवद्रूपाणांलौकिकच-
क्षुरविषयत्वंतत्कृपयालब्धदिव्यचक्षुर्विषयत्वंचगीतायामेकादशाध्यायेस्पष्टं ॥ ब्रह्म-
णोरूपबहुत्वंतु " यदेकमव्यक्तमनंतरूपं " इत्यादिश्रुतिषुप्रसिद्धं ॥ आनंदरूपश्रुत्यु-
पबृंहणंतुपुराणेषुतत्रतत्रानंदमूर्तित्वादिकथनात्स्फुटं ॥ यथाषष्ठस्कंधेषोडशाध्याये-
चित्रकेतुंप्रति नारदोक्तविद्यायां ( श्लोक.१९ ) नमोविज्ञानमात्रायपरमानंदमू-
र्तयेआत्मारामायशांतायनिवृत्तद्वैतदृष्टयेदशमेपिब्रह्मस्तुतौ ( अ०१३ श्लो०५४ ) स-
त्यज्ञानानंतानंदमात्रैकरसमूर्तयःइतिभगवद्रूपाणांबहुत्वमानंदमात्राकारत्वमेकरसत्वा-
दुत्तमाधमभावराहित्यंचेतिदिक् ॥ किंचकरादीनांमायिकत्वे आनंदजनकत्वमपि-
नसंभवतिमायायाआनंदरूपत्वाभावात् । अन्यथाहेयत्वानुपपत्तेः ॥ तज्जनकत्वेत-
द्रूपत्वमप्यर्थसिद्धं । यत् यज्जनकं तत् तद्गुणकमिति यत् यद्गुणकं तत् तद्रूपमिति
च व्याप्तेः ॥ इमेचव्याप्तीसांख्यादिग्रंथेषुसम्यगुपपादिते ॥ अतएवसांख्याः " य-
थैकारूपयौवनलावण्यादिसंपन्नास्त्रीस्वभर्तुःसुखदासपत्नीनांदुःखदापुरुषांतरस्यमोहदे"
त्यादिप्रदर्श्यसर्वस्यापिपरिदृश्यमानप्रपंचस्यसुखदुःखमोहस्वभावत्वात्त्रिगुणात्मकत्वं-
साधयंति क्वचिच्चतावकैरपितदवलंब्यते तस्मान्नलक्षणयापीष्टसिद्धिः ॥ यातु-
( रज्जुमात्रेसर्पइतिवदधिष्ठानाऽभेदेनाऽपितथाव्यपदेशोपपत्ति ) रुक्तासाप्यसंगता ब्र-
ह्मणोऽप्रत्यक्षत्वेनवास्तवकरपादादीनांक्वाप्युपलंभाभावेनचतत्रतदारोपस्यैवासंभवात्॥
नापिसर्पमिवब्रह्मणःपाणिपादादिकंकोपिलौकिकश्चक्षुरादिनानुभवतियेनमायिकंतत्स्या-
त्किंतुशब्दैकगम्यंतत् केवलशब्देनचारोप्यापवादःप्रक्षालनाद्धीतिन्यायादयुक्तः ॥
अधिकंतुवक्ष्यते यश्चआनंदोमात्रंत्वार्थोयस्य मात्राऽल्पोयस्येतिवा नारदपंचरात्रवा-
क्यार्थउक्तः ॥ सोपिमात्रंत्ववधृतावितिप्रथमोपस्थितस्यशीघ्रोपस्थितिकस्यावधार-
णस्यत्यागेप्रमाणाभावात् उक्तश्रुत्यादिबलेनतस्यैवादरणीयत्वसिद्धेश्चासंगतः ॥ त-
स्यागेतुकपालाधिकरणविरोधोमूलउक्तः । कपालाधिकरणंतुप्रथमस्यतुरीयेपादे-
( सू० १७ ) " पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यंसमाम्नाये " इत्यादिषट्सू-

त्मकंद्वादशमधिकरणमस्ति तत्र ( तै० सं० कां० २ प्रपा० २ अनु० ५ ) विंदतेप्रजांवैश्वानरंद्वादशकपालंनिर्वपेत्पुत्रेजाते यदष्टाकपालोभवतिगायत्र्यैवैनंब्रह्म-वर्चसेनपुनाति यन्नवकपालस्त्रिवृतैवास्मिंस्तेजोदधातिइतिश्रूयते अत्राष्टाकपालादि-द्रव्यरूपागुणाविधीयंते तेचब्रह्मवर्चसादिफलविशेषकामनयाद्वादशकपालेनसहविक-ल्प्यंतेइतिपूर्वपक्षंकृत्वा "वैश्वानरंद्वादशकपालंनिर्वपेत्" इत्युत्पत्तिशिष्टत्वात्प्रथमोप-स्थितस्यद्वादशकपालस्यैवानुष्ठेयतासिद्धांतिता अष्टादिसंख्यानांद्वादशसंख्यायामंतर्भा-वादंशस्तुत्यांशिनोद्वादशकपालस्यैवसास्तुतिर्नतूत्पन्नशिष्टानामष्टाकपालादीनामुत्पत्ति-शिष्टेनसहविकल्पइति ॥ तथाप्रथमोपस्थितमवधारणमेवादरणीयमितिमूलाशयः । यद्दशकपालोविराजैवास्मिन्नन्नाद्यंदधातियदेकादशकपालस्त्रिष्टुभैवास्मिन्निंद्रियंदधाति-यद्द्वादशकपालोजगत्यैवास्मिन्पशून्दधातियस्मिन्जातएतामिष्टिंनिर्वपतिपूतएवतेजस्व्य-न्नादइन्द्रियावीपशुमान्भवति „ किंच मात्रशब्दस्यावधारणार्थकत्वंनामयच्छब्दोत्तरं-मात्रशब्दःपठ्यते तदर्थोवधारितोभवतियथादुग्धमात्रमयमुपभुंक्तइत्यादावन्नादिकं-व्यावर्त्यते नतु अमुष्यावधारणंक्रियतामित्यर्थे अमुष्यमात्रंक्रियतामितिकश्चित्प्रयुंक्ते-तथा तस्यस्वार्थार्थकत्वंनामचिदेवचिन्मात्रमित्यादौ यःकेवलचित्शब्दार्थःसएवचिन्मा-त्रशब्दार्थइत्येव तेनात्रस्वार्थपरत्वादप्यानंदशब्दार्थएवानंदमात्रशब्दार्थःस्यादतःकरादा-वानंदाभेदःसुस्थः ॥नतुत्वत्संमतविग्रहः॥ एवंआनंदोमात्रायस्येतिविग्रहेप्यानंदपदेनब्र-ह्मानंदोलौकिकोवा आद्येबहुशास्त्रविप्लवः मायिककरादौब्रह्मानंदापेक्षयाधिकानंदवत्ता-पत्तेः॥ द्वितीयश्चेत्करादेःसुतरामानदात्मकतासित्ध्यामदिष्टसिद्धिरक्षतैवब्रह्माभिन्नस्यानं-दात्मकस्यतत्करादेरल्पोंशएवमानुषादिलौकिकानंदइतिसिद्धांतात् " एतस्यैवानंदस्या-न्यानिभूतानिमात्रामुपजीवंति " इतिबृहदारण्यकेषष्ठेश्रावणात् ॥ यश्चपरमानंदस्यवि-ग्रहःप्रविभागोविस्तारोवायस्मादितियाज्ञवल्क्यवाक्यार्थः कल्पितःसोप्यसंबद्धः ॥ विग्रहशब्दस्यमूर्तिपरत्वत्यागेमानाभावात् । परमानंदमूर्तयइत्यादिवाक्यैकवाक्यत-यामूर्तिपरतायाएवसिद्धेः संभवतिसामानाधिकरण्येवैयधिकरण्यस्यान्याय्यतयाव्य-धिकरणबहुव्रीहेरिहसतिसमानाधिकरणतत्संभवेऽनौचित्यादनेकमन्यपदार्थइतिशास्त्र-विरोधात्तस्यसप्तमीविशेषणेबहुव्रीहावितिसप्तमीग्रहणमात्रज्ञापितत्वात् ॥ वस्तुत-श्चतत्रैवयाज्ञावल्क्यगीतायां ( अ०९ श्लो०१४ ) चतुर्भुजमुदारांगंशंखचक्रगदाधर-मित्यादिना ( श्लो०१६ । १७ ) पप्रच्छत्रिपदंहृद्यंपरमात्मानमव्ययं । प्रभानिर्भासय-द्रूपंपरितःपुरुषोत्तममित्यंतेनस्पष्टतयामूर्तिरेवविग्रहशब्दार्थोयाज्ञवल्क्येनदर्शितः । किं-च कोशेप्रविभागशब्दः समस्तपदानामर्थबोधकंतदवयवशब्दविभागमेवाभिधत्तेमनोर-मादिषुविग्रहस्तुहल्लोंत्यमित्येवेत्यादौतादृशार्थएवविग्रहशब्दव्यवहारदर्शनात् ॥ अ-न्यथाकोशेतदसंग्रहप्रसंगाच्च ॥ अतोनत्वदिष्टसिद्धिः मायिककरादिहेतुकपरमानंद-कर्मकविभजनस्यश्रुत्यादौक्वाप्यनुपलंभाच्च ॥ विस्तारपरत्वे आनंदस्यपरमत्वंनोप-

पद्येत निरतिशयविस्तीर्णस्यैवस्वरसतःपरमत्वात् ॥ अपिच तद्विस्तारकत्वेकरा-देःसुतरामानंदात्मतासिध्येत् । अन्यथातद्विस्तारकत्वायोगात्श्रुतौ “ रसोवैस ” इत्यादिना “ एषह्येवानंदयाति ” इत्यंतेनआनंदरूपस्यैवानंदहेतुताकथनात् सूत्रकृतापि (अ०१ पा०१ सू०१३ वा०१४ ) तद्धेतुव्यपदेशाच्चेत्यत्रतथासमर्थनात् ॥ यच्चएते नेत्यादिनोपन्यस्तंइत्यंतंतत्तुविषयवाक्याननुसंधानात्सूत्रार्थभ्रमाच्च॥ तत्रहि “ तस्माद्वाएतस्माद्विज्ञानमयात् अन्योंतरआत्मानंदमयं ” इत्यानंदमयमुक्तातस्यस्वरूपं तस्यप्रियमेवशिरः मोदोदक्षिणपक्षः प्रमोदउत्तरः पक्षः आनंदआत्मा ब्रह्मपुच्छं प्रतिष्ठा ” इत्युक्तं अत्रशिरः प्रभृतीनां प्रियमोदाद्यात्मकत्वकथनादानंदमयएवाकारःसिध्यति ॥ दक्षिणोत्तरपक्षावपिपूर्वं “अयंदक्षिणः पक्षः अयमुत्तरः पक्षः” इत्युत्तरहस्तरूपौशंकराचार्यैर्व्याख्यातौतेनात्रापितावेवादर्तव्यौ ॥ आनंदआत्मेत्यात्मशब्दोहस्तद्वयादिमध्यवर्तिनंकटिमारभ्यकंठपर्यंतंभागं अभिधत्ते “ मध्यंह्येषामंगानामात्मा ” इतिश्रुत्यंतरात् ॥ पुच्छप्रतिष्ठाशब्दावपिकट्यादिचरणांतभागपरौ अत्रच अन्नमयादीनांचतुर्णांकार्यरूपाणांविभूतिरूपाणांवाप्रायपाठादानंदमयोपितथेतिपूर्वपक्षे आनंदमयोभ्यासादितिसूत्रितं ॥ अर्थस्तु आनंदमयः परमात्मैव नतुकार्यादिरूपः कुतः अभ्यासात् ॥ रसोवैसइत्यादिनापुनःपुनः कथनात् तेनपूर्वतआधिक्यसिद्धेरिति ॥ अभ्यासस्यभेदकत्वं तु पूर्वतंत्रेद्वितीयस्यद्वितीयपादे (सू० २) “एकस्यैवंपुनःश्रुतिरविशेषादनर्थकंहिस्यात् ” इत्यधिकरणेसिद्धं ॥ अतो विषयवाक्येप्रियशिरस्त्वादिनावर्णितमानंदमयपरमात्मानमेवसमर्थयदिदंसूत्रं परमात्मनआनंदाकारतामेव सिद्धांतयतीति मार्तंडटीकाकृतांनभ्रमलेशः केवलानंदस्यब्रह्मत्वेसिसाधयिषितेपि स्पष्टतयानंदाकारवस्तुबोधकं मयड्घटितमानंदमयपदं सूत्रेनब्रूयात् नचविषयवाक्यानुरोधात्तथासूत्रमितिवाच्यं ॥ आनंदोऽभ्यासादितिसूत्रेपिभृगुवल्ल्यनुरोधसिद्धेः ॥ यथाश्रुतसूत्रे ऐकार्थ्येनभृगुवल्ल्याइवतथासूत्रेपि ब्रह्मवल्ल्या विषयवाक्यत्वलाभात् ॥ तस्मादानंदाकाराभिप्रायमेव यथाश्रुतंसूत्रं तदुक्तसूत्रार्थस्तु न सूत्रकारसंमतः तथा सति ब्रह्माभ्यासादित्येवसूत्रयेत् । नतुयथाश्रुतं । आनंदमयेकस्यचिदपिविधेयस्याभावात् यथाश्रुतपाठे आनंदमयस्यपुच्छत्वेनोक्तं ब्रह्मपरमात्मैवेत्यर्थस्यकथंचिदप्युपस्थितेरभावाच्च ॥ विस्तरस्तुभाष्यतत्प्रकाशादावधेयः॥ अतोयाज्ञवल्क्यवाक्येविग्रहशब्दोदेहपरोपिब्रह्मणोजीववत्स्वातिरिक्तशरीराभावादाकारमात्रेपर्यवस्यतिसुवर्णस्यमूर्तिरित्यादिवत् ॥ परमानंदोविग्रहोयस्येतिसमासस्तुराहोःशिरः “ आनंदंब्रह्मणः ” इत्यादिवद्भेदोपचारात् ॥ निर्दोषपूर्णगुणविग्रहइत्यादौनिबंधादिष्वपितथैवसमासः ॥ तदेतदभिप्रेत्याहुः विग्रहपदेननशरीरमित्यादि ॥ स्वातिरिक्तंशरीरंनेत्यर्थः यदि ब्रह्मातिरिक्तंतस्यतत्स्वीक्रियेततर्हितन्नित्यमनित्यंवेतिविकल्पः ॥ शिष्टंस्पष्टं ॥

अतएवआहचतन्मात्रमितिसूत्रेलौकिकेंद्रियाद्यभावःप्रति-
पादितः ॥ सूत्रार्थस्तु आहच श्रुतिः स्वयमेवतन्मात्रंप्रज्ञान-
घनमात्रं " सयथासैंधवघनोऽनंतरोऽबाह्यःकृत्स्नोरसघनएवैवंवा-
अरेयमात्माऽनंतरोऽबाह्यःकृत्स्नःप्रज्ञानघनएवे " तिस्वरूपातिरि-
क्तानामिंद्रियाणामभावात् अतोनेंद्रियाणांकल्पनाकिंतुसर्वा-
कारस्वरूपंवस्त्वेवतादृशमितिमंतव्यंकृत्स्नवचनात् ॥ चकारा-
त्सर्वेंद्रियविवर्जितमितिस्मृतिरपि तस्मान्नेंद्रियकल्पनयावि-
रोधः ॥ यत्तुरूपादिरहितमात्रं आहेत्यर्थः अरूपवदेवेतिव्यव-
हितसूत्रे अरूपवद्ब्रह्मेत्युक्त्वात्तर्हिसाकारत्वश्रुतीनांवैयर्थ्यमि-
त्याशंक्य प्रकाशवच्चावैयर्थ्यमित्यनेन यथाप्रकाशःसौरश्चांद्र-
मसोवा वियद्व्याप्यावतिष्ठमानोंऽगुल्यादिसंबंधात्तेषुऋजुवक्रा-
दिभावंप्रतिपद्यमानेषुतद्भावमिवप्रतिपद्यते एवंब्रह्माऽपिपृथि-
व्याद्युपाधिसंबंधात्तदाकारतामिवप्रतिपद्यते इत्याद्युक्त्वा अ-
तएवोत्तरत्र " दर्शयतिचाथोअपिस्मर्य्यते " इतिनिर्विशेषमेव-
ब्रह्मोक्तवान् नतु आनंदमात्रहस्तादिकं ॥ अर्थस्तुदर्शयतिश्रु-
तिःपरप्रतिषेधेनब्रह्मअन्यदेवतद्विदितादथोऽविदितादधि इत्याद्यु-
क्तं तदपितत्तत्सूत्रभावानवबोधविजृंभितमेव नत्वरूपवत्सूत्रेण-
ब्रह्मण्यरूपवत्त्वंप्रतिपादितं प्रकरणविरोधात् वक्ष्यमाणदोषा-
च्च ॥ तथाहि " पूर्वंनस्थानतोपिपरस्योभयलिंगंसर्वत्र-
हि " इतिसूत्रतोब्रह्मस्वरूपविचारआरब्धः ॥ ननुब्रह्मस्वरूप-
निर्णयःप्रथमाध्यायेकृतएवेतिकिंपुनस्तन्निर्णयेनेतिचेत्सत्यं पू-
र्वंतुसर्ववेदांतेष्वेकमेवब्रह्मप्रतिपाद्यतइतिविचारितं नतुब्रह्मधर्म-

विरोधोपिपरिहृतः सचावश्यंपरिहरणीयः । अन्यथावेदांतप्रति-
पाद्यंब्रह्मसधर्मकंनिर्धर्मकंवेतिसंदेहापरिहारात् अतस्तन्निवृत्त्य-
र्थमयंविचारः ॥ तत्रवेदांतेषूभयविधवाक्यदर्शनात्संशयःकि-
मुभयलिंगंब्रह्मान्यतरलिंगंचेति तत्रधर्मविधायकवाक्यानामु-
पासनार्थतयौपचारिकत्वस्यापिवक्तुंशक्यतयानिषेधवाक्यानां
प्रयोजनांतरशून्यतयातत्स्वरूपमात्रबोधकत्वान्निर्विशेषमेवब्रह्म-
यद्वा यतोवाइमानिभूतानीत्यादिनासदेवेत्यादिवाक्यैश्वभगव-
तिजगदुपादानत्वस्यसिद्धत्वात्कारणस्यकार्य्येसत्वमविवादमेव
तथाचयथाघटपटादिकारणीभूतापृथिवीतत्तत्कार्येषुतत्तद्रूपा-
भवत्येवंब्रह्माप्यस्थूलेस्थूलंअनणौअनणु उच्चावचकर्त्तरिउच्चा-
वचकर्तृ पृथिव्यांसर्वगंधं जलादावगंधं एवंस्थानतउभयलिंगंत-
त्तत्स्थानभेदादुपपद्यते अत्रोत्तरमाह नस्थानतोपि अपिकारे-
णाचिंत्यसामर्थ्यवशादपिनोभयलिंगंब्रह्म सर्वत्रहिताद्दृशंरूपंभगव-
तउपदिश्यते हिइत्यस्यायमभिप्रायःसर्वकर्मेत्यादिवाक्यानिभगव-
त्स्वरूपप्रतिपादकान्येवनत्वनुवादकानि यदितेषामुपासनार्थंस्था-
नगतधर्मानुवादकत्वंस्यात्तदातैर्ब्रह्मज्ञानाभावात्तेषांवैयर्थ्यंस्यात्
नत्वौपाधिकानांधर्माणांतद्वत्तयाब्रह्मणोवाज्ञानंमुक्त्यर्थमितिव-
क्तुंशक्यं तथासतिदर्शनांतरीयज्ञानादपिसास्यात्ततश्चशास्त्रवैय-
र्थ्यंस्यात् किंचास्मिन्वाक्येनुवादकत्वमपिनसंभवति " ज्याया-
नाकाशा" दित्युक्तेः नह्याकाशाज्ज्यायः किंचिल्लोकेप्रसिद्धमस्ति
येनतद्ब्रह्मणि अनूदितंस्यात् तस्मात्तद्वाक्यस्यधर्मविधायकत्वंनानुवा-
दकत्वंनिरंकुशानांतेषामन्यत्राभावात् एवंसामर्थ्यवशेनाप्युभय-
लिंगत्वंसामर्थ्यस्याचिंत्यतयातद्वताब्रह्मणोप्यज्ञानापत्तिः ततश्चतमे-

वविदित्वेतिश्रुत्युक्तस्यज्ञानस्याभावान्मोक्षोपिनस्यादितितस्मा-
न्नमतांतरोक्तरीत्याविरोधपरिहारःसंभवति एवंचपूर्वोक्तसंश-
यस्तदवस्थएवतत्रोत्तरमनेनसूत्रेणाह अरूपवदेवहि तत्प्राधानत्वा-
त् अत्रसूत्रकारस्यायमभिप्रायः उभयलिंगवाक्यश्रवणात्संदे-
होवा उभयलिंगवतोऽभेदनिश्चयात् तत्रद्वितीयोनसंभवति का-
र्य्यकारणांशकृतस्यभगवद्विहारार्थंजातस्यभेदस्यसत्वात् तथा-
च सृष्टिदशायामभेदोवक्तुमशक्यइति आपाततएवसंदेहोव-
क्तव्यः उभयलिंगत्वस्यैकस्मिन्नसंभवाद्विरोधेनस्वरूपनिश्च-
याभावेप्राप्तआह अरूपवदेव रूप्यतेनिरूप्यते रूपंसर्वव्यवहा-
रविषयत्वं तद्युक्तंरूपवत् विश्वं ब्रह्मतुतद्विलक्षणं कार्यकारण-
योरंशांशिनोर्वैलक्षण्यस्ययुक्तत्वात् ॥ ननुकार्य्यकारणयोरवै-
लक्षण्यमपिसंभवत्येवेत्यतआह तत्प्रधानत्वात् तस्यब्रह्मणःप्र-
धानत्वात् मुख्यत्वात् यत्रहियत्प्रतिपाद्यतेतत्रतन्मुख्यंब्रह्मप्र-
तिपादनेब्रह्मधर्माणामेवमुख्यत्वंनान्यधर्माणांमुख्यत्वं यथाप्र-
शासनस्य॥ हि "एतद्वैतदक्षर"मितिब्रह्मैवोपक्रम्यप्रशासनस्योक्त-
त्वात्तस्यमुख्यत्वंसर्वकर्मेत्यस्यतुलौकिककर्मानुवादेनस्पष्टमेवा-
मुख्यत्वं तत्रमनोमयःप्राणशरीरइतिशरीरविशिष्टमुपक्रम्यपठि-
तत्वात् ॥ ननुसर्वकर्मत्वादयोपिनामुख्याअनुवादाभावात् किं-
तु लौकिकधर्मतुल्याधर्माब्रह्मणिविधीयंतइतिचेन्मास्तुसर्वक-
र्मादिशब्दानामनुवादकत्वं तथापि तेकेइत्यपेक्षायां येलोकप्र-
सिद्धास्तानेवसर्वपदेनानूद्यसर्वेषामिवकर्माणियस्येति तत्तुल्या-
नामतिरिक्तानां वा विधानंसमासेंगीकार्य्यं तथासति गौरवंस्या
द्यतिरिक्तकल्पनामकृत्वा यथाकथंचित्तद्धर्मवत्वेनज्ञानस्यैवो-

पासनायामुपयोगाल्लौकिकधर्मानेवानूद्योपचारेणशरीरधर्मवि- शिष्टबोधनमेवयुक्तं ॥ ननुर्यदिसर्वव्यवहारातीततयाजगद्वैलक्ष ण्यंसूत्रकृतोऽभिप्रेतंस्यात्तदा अरूपमित्येववदेन्नत्वरूपवदि- ति ॥ वदतित्वेवमतोऽतिरिक्तधर्मकल्पनैवयुक्तेतिचेन्मैवं ॥ लो- कवैलक्षण्येनलोकव्यवहाराऽतीतत्वमेवाभिप्रेतंनतुसर्वव्यवहा- रातीतत्वमस्थूलादिवाक्यएवप्रशासनश्रावणात्तथानिश्चीयते त- स्माल्लोकव्यवहारातीतंब्रह्मस्वरूपंसूत्रेणप्रतिपाद्यतेनतुरूपरहित- मात्रं पूर्वब्रह्मणिरूपास्तित्वनास्तित्वयोर्विचारस्याप्रकृतत्वा- त्तादृशव्याख्यानमयुक्तमेव तदुपष्टंभेन आहचतन्मात्र- मित्यस्यापिरूपरहितमात्रमाहेति व्याख्यानमपितथैव ॥ किंच त्वदुक्तव्याख्यानेब्रह्मणिरूपाभावेऽपिसाकारत्वंकुतो- नस्यात् नहिरूपाभावःसाकारत्वाभावव्याप्योयेनतन्निश्चा- यकःस्यात् वायौरूपाभावसत्वेऽपिसाकारत्वसत्वेनव्यभि- चारात् तथाच साकारश्रुतीनांवैयर्थ्यशंकायाअसंभवात् “- प्रकाशवच्चावैयर्थ्या”दितिसूत्रंनिरर्थकमेवस्यात् ॥ अस्मन्मतेच ब्रह्मणिलोकव्यवहारातीतत्वेपूर्वसूत्रेणसाधितेसर्वकर्मत्वादीना- मौपचारिकत्वेप्रतिपादितेप्रशास्तृत्वादीनांचालौकिकत्वेनसम्य- ग्बुद्ध्यावनारोहात्सर्वव्यवहारातीतत्वमेवस्यात् तथासति ब्रह्मणो- ज्ञेयत्वेनापिव्यवहारासंभवाज्ज्ञानार्थविचारशास्त्रस्यवैयर्थ्यमन- सैवेदमाप्तव्यमितिश्रुतिविरोधश्चेतिपूर्वपक्षःस्यादेव तत्समाधा- नार्थंप्रकाशवदितिसूत्रंप्रवर्त्तते तदर्थश्च ॥ यथासौरःप्रकाशोव्य- वहार्य्योऽव्यवहार्य्यश्च नहिस्वतःसंपादयितुंशक्यतेस्थापयितुं- वाऽऽदितेनुसूर्य्येप्रतिबंधकाभावेसान्निध्यमात्रेणव्यवहारःकर्त्तुंश-

क्यस्तथालौकिकवाङ्मनोभिर्नशक्यतेव्यवहर्तुंईश्वरसन्निधाने-
तुशक्यते सन्निधानंतुतत्कृपया . अन्यथाशास्त्रंव्यर्थंस्यादतए-
वसूत्रेहेतुंपठति । अवैयर्थ्यादिति ॥ चकारेणतद्धर्माणामप्य-
लौकिकत्वमतएवनविरोधः । " अपाणिपादोजवनोग्रहीतापश्य-
त्यचक्षुःसशृणोत्यकर्णः " इत्यादिश्रुतिभ्योऽलौकिकाएवभगवद्ध-
र्माउच्यंते एवंचाव्यवहार्य्येऽप्यलौकिकधर्मबोधकत्वान्नशास्त्र-
वैफल्यं अधिकंचभाष्यादिग्रंथेभ्योऽवसेयं ग्रंथगौरवभयान्ने-
होच्यते ॥ यत्तुऔपाधिकाधर्मानवास्तवाइति प्रकाशवच्चावै-
यर्थ्यमित्यनेन प्रतिपाद्य दर्शयतिचाथोअपिस्मर्य्यतइतिनिर्वि-
शेषमेवब्रह्मोक्तवान्नत्वानंदमात्रहस्तादिकमित्याद्युक्तं तदपि
नकिंचित् ॥ नहितेनसूत्रेणनिर्विशेषब्रह्मप्रतिपाद्यते तस्यपूर्व-
मेवप्रत्युक्तत्वात् .कस्तर्हिसूत्रार्थइतिचेच्छृणु पूर्वमरूपवत्सूत्रे-
णसर्वकर्मत्वादयोधर्माःकार्य्यनिष्ठाब्रह्मण्यारोप्यंतइत्युक्तंतत्रब्रह्म-
णउपादानकारणत्वात्कारणस्यैवधर्माःकार्येभवंति कामादयो-
धर्माश्चश्रुतौविहितास्तेब्रह्मणएवभवितुंयुक्ताइत्याशंक्याह द-
र्शयतिचाथोअपिस्मर्य्यते दर्शयतिश्रुतिरेव जडजीवधर्माणां
भगवत्यभावं " द्वेवावब्रह्मणोरूपे" इत्युपक्रम्यद्वेधापंचभूतान्यु-
क्त्वा " अथातआदेशोनेतिनेती " त्याह तत्रद्वौनञौप्रकृतमर्थं-
गमयतइतिद्वयोःस्थापनमात्रंक्रियते किंवावीप्सयापूर्वोक्तस-
र्वंनिषेधति उत रूपद्वयमेवनिषेधति अथवा पूर्वप्रतिषेधोभू-
तराशिंनिषेधति द्वितीयोवासनाराशिमित्यादिशंकायां श्रुतिः-
स्वयमेवविवृणोति " नह्यस्मादितिनेत्यन्यत्परमस्ती " तिअथा-
तआदेशइतिसमुदितवाक्यस्यार्थउच्यतेश्रुतावपिअथशब्दःप्रकृ

मभेदकः अतइतिहेतौपंचमील्यब्लोपेवा उक्तंरूपद्वयंहेतूक्त-
स्यआदेशः ताभ्यांकार्य्याभ्यांरूपाभ्यांज्ञाप्यस्यब्रह्मणउपदेशः
नेतिनेतीतिपूर्वइतिशब्दःप्रकारवाची तथाचसमवायित्वाद्ब्रह्मपं-
चभूतात्मकंभवतिइतिनपंचभूतप्रकारकंब्रह्मनेतिप्रथमपदस्यार्थः
इममेवार्थंश्रुतिर्वदतिनह्येतस्मादित्यनेननभवत्येवब्रह्मतादृशंहियु-
क्तोऽयमर्थःयतएतस्माज्जातंतंतनुनहिकार्य्यकारणयोरेकःप्रकारोभ-
वतिएवंप्रथमस्यनेतीतिशब्दस्यव्याख्यानंकृत्वाद्वितीयंव्याचष्टे-
अन्यत्परमस्तीतिनइतिसमवायित्वमात्रमेवन किंत्वन्यत्परम-
स्ति तथाचनेतीत्यनेनैत्तावतानिषेधः तथाचनसर्वनिषेधोना-
पिभूतद्वयस्यवासनभूतराश्योर्वानिषेधः किंतुप्रकारैतावत्तयो-
रेवनिषेधः एवंब्रह्मणो रूपंनिरूप्यनामनिरूपयति सत्यस्यसत्य-
मिति एवंचहियस्माद्धेतोर्नेतिनेतीतिवीप्सयामूर्त्तामूर्त्तेतद्वासना-
त्मिकाविद्यांतत्कार्यादिचनिषिध्यसर्वनिषेधावधित्वेनतत्साक्षि-
त्वेनचब्रह्मैवनिर्दिष्टं इतिकृत्वाएतस्मात्परंउत्कृष्टंब्रह्मणोनिर्दे-
शनमन्यत्नास्तिएतत्संदेहमपिनिराकर्त्तुंनामनिर्वक्ति " प्राणा-
वैसत्यंतेषामेषसत्य " मिति प्राणंतीतिप्राणाअपरब्रह्मरूपाः
तत्कार्य्यत्वात् सत्यं नाविद्यका ब्रह्मविवर्त्तभूताः तत्रहेतुस्ते-
षांप्राणानां परमात्मैवसत्यंस्वरूपभूतइतितेनप्रपंचातिरिक्तस्या-
पिब्रह्मणोविद्यमानत्वात्प्रपंचधर्मवत्वंतस्मिन्नौपचारिकमेवयुक्तं
श्रुत्यैवतथाप्रतिपादनात् चकारःपूर्वयुक्त्यनुसंधानार्थः॥ श्रुतेर-
न्यार्थतानिराकरणायाह अपिस्मर्यतेअनादिमत्परंब्रह्मनसत्तन्ना-
सदुच्यते इतिसदसतोःक्षेत्रत्वात् ज्ञेयनिरूपणेनिषेधः प्रपंच-
धर्माविदेभगवत्युच्यंते नतुनेतद्धर्माभवंतीतिज्ञापयति तस्मात्स-

चैकर्मत्त्वादयोधर्माजडजीवयोरेवेतिसिद्धं ॥ मायाह्येषेत्यस्या-
र्थस्तु पूर्वमेवविवृतः उपासनार्थंमायिककरादिकल्पनाइतित्व-
संगतमेव मायाहिव्यामोहिकाभगवतःशक्तिः नहिभगवताभ-
क्तानांव्यामोहःकर्त्तव्यः किंत्वसुराणामेव ॥

## टीका

सहस्राक्षे अनेनैवेत्यादिंकरादिकल्पनेत्यंतंभागंनिराकुर्वंति **अतएवाहत्वत-**
**न्मात्रमित्यादिना** किंत्वसुराणामेवेत्यंतेन ॥ **सयथेत्यादि** ॥ अत्रमैत्रेयीब्रा-
ह्मणवाक्येकृत्स्नस्यप्रज्ञानघनत्वंबोध्यते ॥ अत्रकृत्स्नपदात्करचरणादिमत्त्वंलभ्यते अ-
कृत्स्नत्वबुध्युत्पादकप्रकारसत्वएवकृत्स्नपदसार्थक्यसिद्धेः ॥ अनंतरोऽबाह्यइतिविशेष-
णेअपितथैवसतिसंगच्छेतां अन्यथाऽकाशतुल्यस्यबाह्यांतरविभागायोगात् ॥ घनप-
दादपिसाकारत्वमेवद्योत्यते अन्यथाप्रज्ञानमित्येववदेत् तेनविश्वतश्चक्षुरित्यादिश्रुत्यं-
तरशतप्रतिपादितस्यकृत्स्नस्यप्रज्ञानघनत्वमत्रबोध्यते ॥ प्रज्ञानशब्दश्च आनंदाभिन्न-
ज्ञानपरः अन्यथाप्रशब्दनैरर्थक्यात्केवलचित्परत्वे सूत्रेऽपिमात्रपदेनतदतिरिक्तव्यव-
च्छेदाद्योवैभूमातत्सुखमित्यादिव्याकोपस्तवनापेयात् ॥ ( अ ०१ पा ०२ सूत्र १५ )
" सुखविशिष्टाभिधानादेवचे " त्यादिसूत्रविरोधश्च ॥ तेनस्वाभिन्नचिदानंदात्मक-
सर्वेंद्रियादिकमेवब्रह्मात्रसूत्रेतन्मात्रपदेनोच्यते अतोमार्तंडटीकाकारोक्तंनायुक्तं ॥
**तादृशमिति**॥ चिदानंदघनं॥ **नेंद्रियेति** ॥पृथगिंद्रियकल्पनाप्रयुक्तोविरोधोनेत्यर्थः॥
यत्तुसूत्रेतन्मात्रंचिन्मात्रं रूपादिरहितमात्रंवेतिव्याख्यातंतत्रचिन्मात्रमित्येवशंकराचा
र्या व्याचक्षते ॥ "आहचश्रुतिःचैतन्यमात्रंविलक्षणरूपांतररहितंनिर्विशेषंब्रह्म" इति॥
पक्षांतरंतुकपोलकल्पितमयुक्तं अरूपवदेवेत्यनेनपौनरुक्त्यापत्तेः सूत्रेतच्छब्दस्यरूपादि
रहितपरामर्शकत्वेचित्परामर्शकतायाश्चित्परामर्शकत्वेतत्परामर्शकतायाश्चासंभवात्-
विषयवाक्येरूपादिरहितकथनाभावाच्च ॥ अतस्तत्पक्षंदूषयंति **यत्तुरूपादिरहि**
**तमात्रमित्यादिना अयंविचारइति** ( अ०३ पा०२सू०११ )नस्थानतोपिपर-
स्येत्यारभ्य ( सू०३० ) प्रतिषेधाच्चेत्यंतसूत्रविंशत्याकृतस्तद्धर्मविचारः ॥ **उभयवि-**
**धेति** सविशेषत्वनिर्विशेषत्वबोधकेत्यर्थः ॥ एतत्सूत्रविंशत्यां " नस्थानतोपिपरस्यो
भयलिंगंसर्वत्रही" त्यादित्रिसूत्रंप्रथमममधिकरणं तत्पूर्वपक्षप्रकारद्वयेनाहुः ॥ **तत्रध-**
**र्मविधायकेत्यादिना सर्वकर्मेत्यादीति** ॥ छांदोग्यपंचमप्रपाठके शांडिल्यवि-
द्यायां "सर्वकर्मासर्वकामः सर्वगंधः सर्वरसः सर्वमिदमभ्यात्त" इत्यादीनि **तेषामिति**

सर्वकर्मत्वसर्वज्यायस्त्वादीनां तमेवेति "तमेवविदित्वाऽतिमृत्युमेति" इतिवा-
क्येभगवज्ज्ञानादेवमोक्षइतिभावः । एतत्सूत्रव्याख्यानस्य प्रयोजनमग्रेस्फुटीभविष्य-
ति ॥ अस्मिन्नधिकरणेऽग्रिमसूत्रद्वयस्यप्रकृतखंडनेविशेषतः प्रयोजनाभावात्तन्नव्या-
ख्यातं अतःपरं ( सू० १४ ) अरूपवदेवेत्यादिपंचसूत्रमधिकरणमेकदेशिमतेन प्रागु-
क्तसंशयनिराकरणार्थं ॥ ( सू० १९ ) "अंबुवद्ग्रहणात्तुनतथात्व" मित्यादिचतुःसू-
त्रंसिद्धांतमतेनतत्समाधानार्थं ॥ तत्रब्रह्मप्रथमतोनिर्द्धर्मकमेवतत्तद्धर्मरूपंभवतीत्येक-
देशिमतनिष्कर्षः ॥ ब्रह्मत्वाभिन्ननित्यसर्वधर्माश्रयः प्राकृतधर्मानाश्रयइति सिद्धांत-
सारः ॥ परेषांतु नस्थानतोपीत्यस्यैकादशसूत्रंप्रकृतैतावत्त्वमित्यादिनवसूत्रंचेत्यधिक-
रणद्वयं तत्खंडनमाकरेषुध्येयं ॥ तत्रैकदेशिमतबोधकं अरूपवदधिकरणं संगृ-
ह्णाति ॥ **तत्रोत्तरमनेनेत्यादिना** ॥ **कार्यकारणांशेति** । भावप्रधानो-
निर्देशः जडप्रपंचः कार्यजीवांशः कारणमंशिचब्रह्मेतिभेदः सर्वैनैवरेमइत्यादि
श्रुतिभ्योरमणार्थंकृतः **तत्रहीति** ॥ बृहदारण्यकेपंचमाध्यायेगार्गीप्रश्नोत्तरबोधके-
ऽष्टमब्राह्मणे **उक्तत्वादिति** ॥ "एतस्यवाअक्षरस्यप्रशासनेगार्गीसूर्य्याचंमद्रसौ-

---

## सहस्राक्ष.

अनेनैवआहचतन्मात्रम् इत्यस्याऽप्यानन्दमात्रं तस्य करादिकमाहेत्यर्थः प्रत्युक्तः ॥ करा-
दिशब्दाभावात् ॥ सूत्रार्थस्तु आहचश्रुतिः तन्मात्रम् चिन्मात्रम् रूपादिरहितमात्रं वा ब्रह्मेति ॥
अरूपवदेवेतिव्यवहितपूर्वसूत्रे अरूपवद्ब्रह्मोक्त्वा तर्हि साकारत्वश्रुतीनां वैयर्थ्यमित्याशंङ्क्य प्र-
काशवच्चावैयर्थ्यमित्यनेन यथा प्रकाशः सौरश्चान्द्रमसोवा वियद्व्याप्याऽवतिष्ठमानोऽङ्गुल्याद्युपा-
धिसंबन्धात्तेष्वृजुवक्रादिभावं प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते एवं ब्रह्माऽपिपृथिव्याद्युपा-
धिसंबन्धात्तदाकारतामिव प्रतिपद्यते तदालम्बनोब्रह्मणआकारविशेषोपदेशउपासनार्थोन विरु-
ध्यते एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति औपाधिकाश्च धर्मानवास्त-
वाइति विरोधोनेत्यर्थकेनाऽवैयर्थ्यमुपपाद्य तत्प्रवृत्तेः ॥ अतएवचोत्तरत्र दर्शयतिचाथोअपिच-
स्मर्यते इति निर्विशेषमेव ब्रह्मोक्तवान् नतुआनन्दमात्रहस्तादिकम् ॥ अयंस्तु दर्शयतिचश्रुतिःपर-
प्रतिषेधेनैव ब्रह्म अन्यदेवतद्विदितादथोअविदितादधिइत्यद्या ॥ किञ्च बाष्कलिना पृष्टोबाधोऽ-
वचनेनैवप्रोवाचेतिश्रुयते सहोवाचाधीहिभोइति सहतूष्णींबभूवतंहद्वितीयेतृतीयेवावचनउवा-
चब्रूमःखलुत्वंतुनविजानास्युपशान्तोयमात्माइति ॥ तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते-
ज्ञेयंयत्तत्प्रवक्ष्यामियज्ज्ञात्वाऽमृतमश्नुते ॥ अनादिमत्परंब्रह्मनसत्तन्नासदुच्यते इत्येवमाद्यासु ॥
तथा विश्वरूपधरोनारायणोनारदमुवाचेतिस्मर्यते मायाह्येषामयासृष्टेति तस्मादुपासनार्थमेव
मायिककरादिकल्पना ॥

त्रिवृतौतिष्ठतः „ इत्यादिनोक्तत्वात् ॥ तत्रेति ॥ सर्वकर्मत्वादिबोधकशांडिल्य-
विद्यायां ॥ तत्रत्यं " मनोमयःप्राणशरीरोभारूप „ इतिवाक्यंवस्तुतस्तुज्ञानरूप
त्वाभिन्नप्राणशरीरबोधकं ॥ तथाप्येकदेशिविशिष्टयंतत्रमन्यते तेकइति कर्मकामाद-
योधर्माःसर्वकर्मसर्वकामसर्वगंधादिशब्दोक्ताःकइत्यर्थः ॥ रूपरहितमात्रमिति ॥
एवंव्याख्यानमप्ययुक्तं किंपुनारूपादिरहितमात्रमित्यादिपदघटितं ॥ रूप्यतेव्यव-
ह्रियतइतिव्याख्यानमनंगीकृत्यरूपशब्देनगुणविशेषस्यांगीकारेरूपमात्रस्यनिषिद्धतया
आदिपदग्राह्यधर्मांतरप्रतिषेधासिद्धेः ॥ अन्यथा सूत्रस्थादिपदंब्रूयात् अधर्मवदि-
त्येव वा वदेत् ॥ सर्वथारूपस्याप्यभावेऽभिप्रेते अदृश्यत्वाधिकरणेरूपोपन्यासं
न हेतुकुर्यान्नापितत्रतत्रतद्धर्मोपदेशविवक्षितगुणोपपत्तिसर्वधर्मोपपत्यादीन्विरुद्धत्वा-
दिस्यपिध्येयं अतोरूपशब्दस्योक्तव्याख्यानमेवयुक्तं वाय्वावित्यादि ॥ चक्रवाता-
दौचक्राद्याकारकत्वंतृणपर्णादिपरिभ्रमणेनतल्लीयमानधूलिपटलेनदाकारतादर्शनेनच-
निश्चीयतइतिभावः ॥ एतेनप्रकाशवत्सूत्रस्यतदुक्तमवतरणंनिरस्तं ॥ यस्तु प्रका-
शवच्चावैयर्थ्यमितिसूत्रेप्रथमांतपाठउपन्यस्तः अवैयर्थ्यमुपपाद्यतत्रवृत्तेरित्युक्तयाच-
लथैवत्वीकृतः सतुब्रह्मसूत्राणांगुरुसन्निधावभ्यासाभावाद्भ्रममूलकः सूत्रेत्ववैयर्थ्या-
दितिहेतुरेवोच्यते वैयर्थ्यमाशंक्यावैयर्थ्यस्यात्रोपाद्यत्वेतुहेतुतानसंगच्छेत ॥ उपा-
धिसंबंधव्याख्यानंतुसुतरामसंगतं सूत्रेपूर्वसूत्रेषुवातद्बोधकपदगंधस्याप्यभावात् ॥ अ-
स्मत्संमतार्थस्तु पूर्वरूपशब्दस्यव्यवहार्यपरत्वेप्रकाशवदित्युक्त्यैवलभ्यते ॥ यथा-
प्रकाशोऽरूपवान् येनप्रकारेणाव्यवहार्यः तथाब्रह्मापि इति ॥ तेनव्यवहार्यत्व-
कोटिरर्थादेवसिध्यति प्रकाशस्यतथात्वात् सौत्रहेतोरपितथैवसंगतेश्च ॥
नापिप्रकाशस्यागुल्यादिसंबंधेनरूपंभिद्यते भास्वरशुक्लतयैवप्रतीतेः ॥ ऋजु-
वक्रादिभावस्तु नरूपं ॥ किंच अंगुल्याद्युपाधिसंबंधात्तेष्वृजुवक्रादिभावंप्रतिपद्यमा-
नेषुतद्भावमिवप्रतिपद्यतइत्येतावदध्याहारगर्भव्याख्यानएवसूत्रकाराभिप्रायः सूत्रा-
क्षरतोननिश्चेतुंशक्यः ॥ ननु औपाधिकाश्चधर्मानवास्तवाइत्यादि तत्रपृच्छामः ध-
र्माणां तूपाधिकृतत्वादवास्तवत्वंब्रूषे परमुपाधेः केनकृतत्वादवास्तवत्वं ब्रूयाः ॥
उपाध्यंतरेणेतिचेदनवस्था तस्यानौपाधिकत्वेतूपाधिसंबंधोवास्तवएवेतिसधर्मकत्वं
तदवस्थं नहिप्रकाशस्यांगुल्यादिसंबंधोनवास्तवः ॥ तथासतिलाघवाद्धर्मानेववास्त-
वान्कुतोनब्रूषे॥ परस्योपाधिसंबंधश्चभाष्यप्रकाशे नविलक्षणत्वादित्याद्यधिकरणेषुवि-
स्तरेणनिराकृतः ॥ नचत्वद्धीत्याप्येकदेशिमतेपूर्ववद्धेतिकादाचित्कत्वाद्धर्माणामौपाधि-
कत्वमापततीतिशंक्यं घृतद्रवत्वादौकादाचित्केष्वौपाधिकत्वाभावात् ॥ तर्हितव-
कथंपूर्वपक्षसिद्धांतावित्यतआहुः ॥ अस्मन्मतेचेत्यादिना ॥ श्रुतिविरोधइ-
ति ॥ अस्याःश्रुतेः " अप्राप्यमनसासहे " त्यनेनविरोधः ॥ चकारात् " तंत्वौप-

निषदं ॥ यतोवाचः ॥ प्रत्यगात्मानमैक्षत् ॥ नचक्षुषापश्यतिकश्चनैनं ” इ-त्यादीनांविरोधः ॥ **स्थापयितुमिति** ॥ यथानापयातितथानिरोद्धुं ॥ **प्रति-बंधकाभावइति** ॥ प्रतिःबंधकंतुमेघादिकंदार्ष्टांतिकेतत्स्थानेगुणमयीमाया नाहं-प्रकाशःसर्वस्ययोगमायासमावृतइतिवाक्यात् ॥ अत्रसूत्रार्थेघनोयथार्कप्रभवो-ऽर्कंदर्शितइत्याद्युपबृंहणमप्यनुसंधेयं ॥ **ईश्वरसन्निधानइति** ॥ सन्निधा-नमाविर्भावः तत्रहेतुस्तु तत्रैवपादे ( सू० २३ ) तदव्यक्तमित्यधिकरणे स्फुटः ॥ **अलौकिकाएवेति** ॥ पाणिपादादिनिरपेक्षमादानगमनादिकमलौ-किकमेव ॥ अपाणिपादइतितुश्वेताश्वतरवाक्यं ॥ एवंक्रियादेरलौकिकताबोध-कानि “आसीनोदूरंव्रजतिशयनोयातिसर्वतः कस्तंमदामदंदेवंमदन्योज्ञातुमर्हति” इ-त्यादीनिकठादिवाक्यान्यपिस्मर्तव्यानि ॥ सन्निधानवतैवव्यवहार्यतयास्वान्यस्यज्ञान-योग्यतानिषेधःकठवाक्येयमेनदर्शितः ॥ श्वेताश्वतरवाक्येऽपि नचतस्यवेत्तेति लौ-किकविषयावेदननिषेधः ॥ इमेतस्यव्यवहार्यत्वाव्यवहार्यत्वेकेनोपनिषत्तृतीयखंडा-दौचस्फुटेस्वेच्छयाब्रह्मणिप्रादुर्भूतएवाग्निवाय्वादिदेवानामपिदर्शनस्पर्शनव्यवहारस्ति-रोधानेत्वव्यवहारइति ॥ अतएवचतुर्थखंडेविद्युतोविद्योतनंप्रकाशविशेषएवतत्रदृष्टां-तितः ॥ तस्मात्प्रकाशवत्सूत्रस्योक्तएवार्थः । नहित्वदभिमतदृष्टांतोवेदेक्वाप्यस्ति ॥ अथ ( अ० ३ पा० २ सू० १७ ) “ दर्शयतिचाथोअपिस्मर्यते ” इतिसूत्रस्यपरो-क्तार्थंदूषयंतः सिद्धांतेऽर्थमाहुः ॥ **यत्तुऔपाधिकाइत्यादिना** ॥ अस्मिन्सूत्रे सह-स्राक्षे “ अपिचस्मर्यते ” इतिद्वितीयचकारपाठस्तुप्रमादात् ॥ अत्रैवशांकरभाष्ये “अथातआदेशोनेतिनेति” इतिवाक्यंप्रथममुदाहृतं ॥ इहसहस्राक्षेत्वभाष्यस्थस्यसर्व-स्यानुवादेपितदेवैकंनसंगृहीतं ॥ तत्रबीजंचिंत्यं ॥ परंतद्भाष्यउदाहृतत्वात्सिद्धांतेऽ-पिसूत्रे अथोभिन्नप्रक्रमेणदर्शयतीतिकथनेनभिन्नप्रक्रमार्थकाथाथोशब्दघटितानां “अथातः । विदितादथोअविदितात् ” इत्यादीनांविषयवाक्यतयाऽभिप्रायाच्चाथातइ-तिवाक्यमपिचिंत्यते ॥ **कारणस्यैवधर्माइत्यादि** ॥ यद्यपीदंसिद्धांतेसंमतंतथा-प्येकदेशिमतदृष्ट्याऽयंपूर्वपक्षः सूत्रेऽथोइत्यस्य ओदंतनिपातत्वेनप्रगृह्यत्वादसंधिः **जडजीवेति** ॥ अधिदैवतप्रकारनिषेधाज्जडधर्माणामध्यात्मप्रकारनिषेधाज्जीवध-र्माणांचाभावःप्रकृतवाक्ये ॥ तलवकारवाक्येच विदिताज्जडात् अविदिताज्जीवाच्च-तदन्याद्भिन्नप्रकारकमितिस्पष्टएवोभयधर्माभावः ॥ **द्वेवावेति** ॥ बृहदारण्यकेतुर्या-ध्यायेमूर्तामूर्तब्राह्मणाख्येतृतीयब्राह्मणे “ द्वेवावब्रह्मणोरूपे मूर्तंचैवामूर्तंच ” इत्यु-पक्रम्य पृथिव्यादिभूतत्रयंमूर्तं वाय्वाकाशावमूर्तं मूर्तस्यकारणं आदित्यगततया-दृश्यमानंभगवत्तेजः अमूर्तस्यकारणंतत्रादृश्यमानःपुरुषइति अधिदैवतप्रकारेणपं-चभूतान्युक्तानि अथशरीरादिकंमूर्तं प्राणआंतराकाशश्चामूर्तं तत्कारणेचक्षु-रंतरपुरुषौचेत्यध्यात्मप्रकारेणतान्युक्तानि एवमधिदैवताध्यात्मभेदेनद्वेधासम-

ष्टित्व्यष्टिरूपाणिभूतान्युक्त्वा “ अथातआदेशोनेतिनेति ” इत्युच्यते एतद्वा-क्यमग्रे तत्रोपनिषद्येवानुपदंव्याख्यायते “ नह्येतस्मादितिनेत्यन्यत्परमस्त्यथनाम-धेयंसत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यं ” इति ॥ इह एतस्मादित्यत्र अ-स्मादितिपाठांतरं ॥ अथातआदेशइत्यत्राथशब्दोभिन्नप्रक्रमे पूर्वंकार्यंनिरूपितं इदा-नींकारणंनिरूप्यतइति ॥ अतःपूर्वोक्तरूपद्वयाद्धेतोरूपद्वयंहेतूकृत्यवा आदेशः का-र्याभ्यांज्ञाप्यस्यब्रह्मणउपदेशः नेतिनेति ॥ अत्रपूर्ववावशब्दस्यावधारणार्थतयापं-चभूतात्मकेमूर्तामूर्तेद्वेएवब्रह्मणोरूपेइतिसिद्ध्यापंचभूतप्रकारकत्वमेवब्रह्मण्यापतति ॥ रसत्वकथनात्समवायित्वेनतावन्मात्रत्वंचापतति तदिदंक्रमान्नेतिशब्दद्वयेननिषिध्यते ॥ इतिएवंप्रकारकंब्रह्मनएतावन्मात्रंचब्रह्मनेत्यर्थः ननुकथमेवंनिश्चीयतइत्याशंकावार-णायव्याख्यायते तत्रप्रथमस्यनेतिशब्दस्यार्थमाह “ नह्येतस्मादिति ” इति ॥ न ब्रह्मपंचभूतप्रकारकंनभवतिहि युक्तंचैतत् यतएतस्मात् एतद्धेतुकानितानि नहिकार्यकारणयोरेकःप्रकारोभवति तत्तदसाधारणधर्माणांभेदात् ॥ द्वितीयंनेतिश-ब्दंव्याचष्टे “ नेत्यन्यत्परमस्ति ” इति ब्रह्मएतावन्मात्रंनभवति किंतु अन्यत् अधिकंपरंब्रह्मास्ति तथाच कार्यासाधारणलौकिकधर्मविलक्षणधर्मकंसमवायित्वे-ऽपिकार्यादत्यधिकंचब्रह्मणोरूपंसिद्धं एवंरूपंनिरूप्यनामनिरूपयति “ सत्यस्य-सत्यं ” इतिव्याख्यानवाक्येप्यर्थांतरशंकावारणायनामनिर्वक्ति “ प्राणावैसत्यं-तेषामेषसत्यं ” इति ॥ प्राणंतीतिप्राणाःपूर्वोक्तकार्याणि वैनिश्चयेनसत्यंनतुविव-र्तरूपाः ॥ अथवातत्रपूर्वोक्तरीत्यासद्रूपत्वात्त्यद्रूपत्वाच्चप्राणाःसत्यं ॥ तेषांप्राणा-नामेषपरमात्मासत्यंस्वरूपभूतइत्यर्थः ॥ तदेतत्सर्वमुररीकृत्यभाष्यंप्रकाशंचैकीकृ-त्यानुवदंतिनत्वद्वैतआवित्यादिना ॥ श्रुताविति ॥ अपिशब्दाद्याख्येयसू-त्रेचतथेतिद्योतितं ॥ ह्ययस्मादित्यादि ॥ अयंप्रकृतवाक्यस्यपरैःसंभावितो-र्थोनूदितः ॥ एतत्संदेहमिति ह्ययस्मादित्यादिनाऽन्यन्नास्तीत्येतेनानूदितपरव्या-ख्यानरूपंसंदेहमित्यर्थः ॥ अत्रप्रकाशेपरेषांत्रिधाव्याख्यानानि अवतरणेसंगृह्य-नामनिरूपणमवतारितंतेष्वेकंव्याख्यानमिहानूद्यतादृशसंदेहं निराकर्तुंनामनिर्वक्ती-त्युक्तं ॥ पूर्वयुक्तीति पूर्वसूत्रोक्ततत्प्रधानत्वादियुक्तीनामित्यर्थः ॥ स्मर्य-तइति ॥ गीतात्रयोदशाध्यायेस्मर्यते क्षेत्रत्वादित्यादि ॥ इदंतदध्यायपर्यालोचने-स्फुटमेवेतिनप्रपंच्यते॥ अस्यापिसूत्रस्यप्रकाशोभाष्यंचोपयुक्तमात्रमनूदितमितिध्येयं ॥ सिद्धमिति ॥ कारणेकार्यधर्माभावएवैकदेशिमतेऽपिसिद्धोनतुब्रह्मणोनिर्विशेषत्व-मितिभावः । यत्तु दर्शयतिचश्रुतिरित्यादिउपशांतोयमात्माइत्यंतं तत्रविदिताविदि-तवाक्यंतु तदुभयभिन्नत्वमेववदतिनतुविशेषान्निषेधति अथान्यत्वादिकथनमुखेननि-षेधतितदालौकिकानेवनिषेधति तावतैवचारितार्थ्यात् नतुस्वरूपात्मकानपि ॥ तथा-हि इदंहिवाक्यंकेनोपनिषत्स्थंतत्र “ केनेषितंपततिप्रेषितंमनः ” इत्यादिना प्र-

नः प्राणवाक्चक्षुःश्रोत्राणां प्रेरकः क इति प्रश्नस्य " श्रोत्रस्य श्रोत्रं मनसो मनो यत् " इ-
त्यादिना सर्वेषां तेषां प्रेरकत्वं सर्वाधिदैविकत्वं चोक्त्वा " न तत्र चक्षुर्गच्छति न वाग्गच्छति
नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि इति शुश्रु-
म पूर्वेषां ये नस्तद्व्याचचक्षिरे " इति पठ्यते ॥ अत्र पराञ्चि खानीत्यादिश्रुत्या पराचां चक्षु-
रादीनां तत्राप्रवृत्तिमुक्त्वा तत एव यथा शिष्याणामनुशासनं स्यात् तादृशवेदनविज्ञानयोर-
भावः प्रतिपाद्यते ॥ कथमेतदित्याकांक्षायां अन्यदेवेत्यनेन जडेभ्यो जीवेभ्यश्च वैल-
क्षण्यं बोध्यते ॥ अधीत्यनेन अन्यत्वं च सर्वतआधिक्यरूपमिति दर्श्यते ॥ सर्वथा वागाद्य-
गोचरत्वेऽनुशासनाभावे शास्त्रानर्थक्यमनिर्मोक्षश्चापद्येतेति तद्वारणाय ब्रह्म विद्यागा-
दिविषयत्वं चोच्यते इति शुश्रुमेत्यनेन ॥ अग्रे च " यद्वाचानभ्युदितं येन वागभ्युद्यते "
इत्यादिवाक्यपंचके प्रथमचरणे लोकविदितधर्मप्रतिषेधपुरःसरं द्वितीयचरणे लोकाप्र-
सिद्धा धर्मा निरूप्यंते ॥ द्वितीयखंडे च " त्वं वेत्थ ब्रह्मणो रूपं " इति स्पष्टमेव रूपवत्त्वमु-
क्तं अतो लौकिकमनआदिभिरिदमित्थमिति निर्णयस्याभाव एव तत्तात्पर्यं ॥ तृतीयतुर्य-
खंडयोश्च स्पष्टमेव देवानां भगवदनुग्रहेण तत्स्वरूपोपलंभादिकमुक्तं ॥ अत उपक्रमोप-
संहारबलादप्राकृतविशेषत्वमेव सिध्यति न तु निर्विशेषत्वं तदीयभाष्यस्थं यतो
वाच इति वाक्यमपि पूर्वमक्षरानंदस्य प्रजापत्यानंदाच्छतगुणत्वमुक्त्वा परानंदस्यागणि-
तत्वं बोधनाय गणनासाधनवाङ्मनसयोरप्रवृत्तिं तत्र बोधयतीति लौकिकप्रमाणैरेव ब्र-
ह्मण इदमित्थतया निर्णयाभावे पर्यवस्यति न तु विशेषान्निषेधति ॥ अतोऽनिरुक्त-
वाक्यसमानार्थकं अवचनतः प्रवचनवाक्यमपि लौकिकप्रमाणैरिदमित्थमिति
ति निर्णेतुमशक्यत्वाभिप्रायमेव लौकिकसवर्धर्मराहित्यादेवोपशांतत्वसिद्धेः ॥
किंचेदं शंकरभाष्ये " बाष्कलिना च बाह्वः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते । स-
होवाचाधीहि भगवो ब्रह्मेति स तूष्णीं बभूव तं ह द्वितीये वा तृतीये वा वचन उवाच ब्रूमः खलु त्वं
तु न विजानासि उपशांतोयमात्मा इति " एवं पठ्यते अत्र तु बाह्व इत्यत्र वार्द्धः अ-
धीहि भगवो ब्रह्मेत्यत्र अधीहि भो इत्यादिरूपे महति पाठभेदे मूलं चिंत्यं ॥ न सत्तन्नास-
दुच्यत इति गीतावाक्यमपि व्याकृतयोः स्थूलसूक्ष्मयोरेव निषेधकमिति लौकिकनिषेधपर-
मेव ॥ सर्वतः पाणिपादांतमित्यादिना त्वदिसर्वस्याधिष्ठितमित्यंतेन अग्रिमवाक्यकदंबे-
न तथा निश्चयात् सर्वभृत्त्वगुणभोक्तृत्वभूतभर्तृत्वग्रसिष्णुत्वप्रभविष्णुत्वसर्वप्रकाशक-
त्वादिविशेषाणां स्पष्टतया कथनात् ॥ लोके क्वापि किमपि न हि सर्वतः पाणिपादादिकं अ-
चरत्वादिसमानाधिकरणचरत्वादिविशिष्टं दृष्टमतः स्पष्टमेव तद्धर्माणामलौकिकत्वं ॥ मा-
याह्येषेति वाक्यमपि सर्वभूतगुणयुक्तदर्शननिषेधाभिप्रायमिति तत्रैव स्फुटतीति न सार्वा-
त्म्यबाधकं ॥ किंच निर्बंधाया सुरीमता । मूढाजन्मनि जन्मनि । मायया पद्धतज्ञा-
ना इत्यादिवाक्यैर्मायया न्यथाप्रतीतिरसुराणामेवोचिता न तु नारदादीनां महाभागवतानां
मायाभितां तरंतितइति वाक्यात् ॥ अतस्तादृशानामुपर्यनुग्रहं कृत्वा पुनरधिकमायया-

ऽन्यथाप्रदर्शनेनैवसंगच्छेत ॥ तस्माद्भूतैश्चगुणैःअभूतगुणैःप्राकृतगुणैर्वायुक्तनयापूर्व-दर्शनमेवमायिकं ॥ अतएवमामेवंभूतगुणयुक्ततयाज्ञातुंत्वंनार्हसिकिंत्वलौकिकत्वा-भिन्नगुणकंज्ञातुमर्हसीत्युक्तं ॥ यत्तु उपासनार्थमेवमायिककरादिकल्पनेतितदप्ये-तेननिरस्तं उपासकानांदेवानांतत्प्रतीत्यसंभवात् ॥ किंचासौत्रत्वादपीदमनुपादेयं ॥ नह्यत्रैवसूत्रेषुतन्मायिकताग्राहकमेकमप्यधिकरणमस्ति ॥ यदिसूत्रकृत्तथाभिप्रैष्य-त्तर्हित्वमसृष्टाविवतत्करादौमायामात्रतामत्रस्फुटमेवावक्ष्यत् ॥ अधिकंप्रकाशप्रहस्ता-द्यावधेयं ॥

एतेन यत्तुउपासनार्थमित्यस्यखंडनादिकमपास्तम्.अप्रत्यक्षेऽ-प्याकाशेतलाद्यध्यासाच्चेत्यप्यसंगतं आकाशस्यप्रत्यक्षत्वात् ॥ अत्रावकाशोविद्यते अत्रस्थातव्यमिति लोकव्यवहारः नचा कार्शसाक्षात्करोमीतिप्रतीत्यापत्तिरितिवाच्यं अवकाशंसाक्षा-त्करोमीतिप्रत्यक्षस्येष्टत्वात् शाब्दानुमित्यादेरभावेऽपि अवका-शाभिलापस्तस्यप्रत्यक्षत्वंगमयति एतेन (अपरोक्षे अभिलाप-नियमेप्रमाणाभावात् स्वर्गाद्यभिलापाभावप्रसंगाच्चे)त्यादिकंप्र-त्युक्तं ॥ तादृशनियमानंगीकारात्स्वर्गादौशब्दादिनाज्ञातेभि-लापसंभवात् ॥ चाक्षुषमात्रउद्भूतरूपस्यहेतुत्वमितिनियमस्तु नसंभवति अभावचाक्षुषेव्यभिचारात् नचतत्रापिस्वाश्रयवि-शेषणतासबंधेनरूपमस्त्येवेतिकुतोव्यभिचारइतिवाच्यं विशेष-णतायाघटपटादिनिष्ठायाःकिंचित्संबंधावच्छिन्नायाएवदर्श-नेननिरवच्छिन्नविशेषणतायांमानाभावात् अभावेसतिविशेष-णतासंबंधस्वीकारेतदवच्छेदकसंबंधस्यान्यस्यवक्तव्यत्वापातात् किंचपरंपरयारूपस्यप्रत्यक्षहेतुत्वस्वीकारे अत्रापिप्रभादिनिष्ठ-रूपस्यस्वसमवायिसंयोगसंबंधेनसत्वात्तादृशनियमविरोधोद्भाव-नस्यासंगतत्वापत्तेः ॥ यदपि ( यत्साक्षादपरोक्षाद्ब्रह्मसर्वप्रत्य-

यवेद्येऽस्मिन्ब्रह्मरूपेव्यवस्थितइत्यादिश्रुतिस्मृतिभिःब्रह्मणःप्रत्य-
क्षत्वनिश्चया ) दितितदपिनप्रकृतोपयोगि नहिशाखावद्ब्रह्मप्र-
त्यक्षमित्याक्षेपे तादृशप्रत्यक्षत्वकथनंयोग्यंतस्यानुपयोगात् य-
दिशाखावद्ब्रह्मप्रत्यक्षमित्यभिप्रेतंतदाश्रवणादीनांव्यर्थतास्यात्
शास्त्रवैफल्यंच "परांचिखानिव्यतृणत्स्वयंभू"रित्यादिश्रुतिविरो-
धश्च नचतादृशीश्रुतिर्निरुपाधिकब्रह्मज्ञानाऽभावंसंसारिणामाहे-
तिवाच्यं निरुपाधिकब्रह्मण्येवारोपस्यत्वत्संमतत्वेनतादृशज्ञाना-
भावआरोपासंभवात् नहित्वन्मतेज्ञानिनामस्त्युपासनाधिकारः
येनतेषांतज्ज्ञातमित्यारोपःसंभाव्येत किंतुसंसारिणामेवतेषांचत-
दज्ञातमित्युपासनार्थंधर्मारोपइत्ययौक्तिकमेव ( उपहितस्य-
त्याज्यत्वेइष्टापत्ति ) रित्यप्यसंगतं त्वत्सिद्धांतउपहितस्यत्यागा-
भावात् महावाक्येषुभागत्यागलक्षणायाःसोयंदेवदत्तइत्यादि-
वत्सिद्धांतितत्वेनोपाधिमात्रत्यागेतात्पर्य्यात् नहिजहल्लक्षणा-
स्वीक्रियते येनोपहितत्यागइष्टःस्यात् अतएवशाखाचंद्रदृ-
ष्टांतोपिविषमः शाखावद्विशिष्टत्यागासंभवात् ननुउपास्य-
स्यत्याज्यत्वंश्रुत्यैवोक्तं तथाचश्रुतिः यन्मनसानमनुतेयेनाहु-
र्मनोमतंतदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासतइतिचेन्न तादृशश्रु-
तिभिरुपास्यनिषेधाप्रतिपादनात्पूर्वार्द्धेनयत्प्रतिपादितंमनोवृत्त्य-
विषयः मनआदिप्रेरयितृ तदेवब्रह्मत्वंविद्धि नेदंप्रेर्य्यत्वेना-
नुभूयमानंजीवात्मादिरूपंनविद्धि यत्प्रेरकंतत्किमित्यतआह य-
दिदंसच्चिदानंदाकारंउपासतेवैदिकोपासकाइतितदर्थः अनुपा-
स्यत्वेऽभिमतेतुद्वितीयेदंकारंनवदेदेव नेदंयदुपासतइत्येतावतैव-
चारितार्थ्यात् केवलमनसाऽलभ्यात्त्वान्मनसानमनुतइतिसंगतं

किंचउपास्यस्याब्रह्मत्वेतज्ज्ञानोपासनादिभिश्चित्तशुद्धिरपित्व-
दभिमतानस्यात् नचचित्तशुद्धौशास्त्रेणतदर्थतयाप्रतिपाद्यत्वंहे-
तुर्यथाप्रापंचिकचांद्रायणादिभिर्निष्कामतयासंपादितैरपिचित्त-
शुद्धिरितिवाच्यं शास्त्रंहिब्रह्मोपासनयाफलंप्रतिपादयति उ-
पास्यस्याब्रह्मत्वेकथंतदुपासनाच्चित्तशुद्ध्यादिकंस्यात् नह्यचां-
द्रायणंचांद्रायणत्वेनाचरितंफलायालंभवेति तस्मादुपास्यस्य-
ब्रह्मत्वमेवश्रुतिसंमतमिति ॥

## टीका

सहस्राक्षे यत्तुउपासनार्थमित्यादिइतिसंक्षेपइत्यंतं भागंनिरस्यंति ॥ एतेन-
यत्त्वित्यादिनाब्रह्मत्वमेवश्रुतिसंमतमितीत्यंतेन॥ अयंभावः मार्तंडे( श्लो०२२)
अत्रैवशांकराःप्राहुरितिकारिकाविवरणस्थमेकदेशंकिंचिदेवभिन्नपाठमादाययत्तत्रोक्तं-
( प्रत्यक्षारोपेऽधिष्ठानस्यप्रत्यक्षत्वापेक्षायामपिपरोक्षारोपेतदभावा ) दिति ॥ तदस-
त् ॥ आरोपेपरोक्षतायाएवदुर्वचत्वात् ॥ तदभाववतितत्प्रत्ययोह्यारोपःसचायथा-
र्थानुभवरूपः यथायथार्थानुभवेप्रत्यक्षादिविभागोनतथासोयथार्थानुभवेऽप्यस्ति ये-
नप्रत्यक्षजन्यंज्ञानं प्रत्यक्षं अनुमानादिजन्यंपरोक्षमितितत्रशक्येतवक्तुं अथपरोक्षस्या-
रोपइतियद्युच्येततदापिआरोप्यमाणस्यपरोक्षत्वंदुर्लभं अन्यत्रप्रत्यक्षस्यैवान्यत्रारो-
पदर्शनात् ॥ नहिविश्वतश्चक्षुष्ट्वादिकंक्वापिप्रत्यक्षं ॥ अथकथंचित्परोक्षारोपसा-
धनेऽपियेनप्रमाणेनारोपविषयस्यावगमस्तेनैवतदधिष्ठानस्यापिसोऽवश्यमपेक्षितः ध-
र्म्यवगमकमानेनब्रह्मणोप्यवगमस्यस्वीकारेतुसविशेषतासावशेषतामापद्येत ॥ त्वद्री-
त्यादर्शयतिचेतिसूत्रंतद्विषयवाक्यजातंचबाध्येत किंचोपासनार्थंधर्मारोपंब्रूषे उपा-
सनानिचमनसेतिधर्माणांमानसप्रत्यक्षविषयतावक्तव्या तथासतिनात्रपरोक्षारोपः ॥
ब्रह्मणिचमानसप्रत्यक्षविषयतायाअप्यनूरीकारात्स्यादारोपधागेपप्लवः ॥ एतेन (आ-
रोपस्यप्रत्यक्षत्वनियमेप्रमाणाभावाच्चे ) त्यपिनिरस्तं ॥ एवमुक्त्याप्रत्यक्षारोपपरो-
क्षारोपपदयोःकर्मधारयस्यैवबोधनेनषष्ठीतत्पुरुषसंभावनाचस्वयमेवापास्ता॥ यच्च(अ-
प्रत्यक्षेप्याकाशेतलाद्यध्यासाच्चे ) ति ॥ तन्न ॥ आकाशस्यमनोगोचरत्वेनव्यव-
हार्यत्वात् ॥ अन्यथानीलमिदंगगनमितिभ्रमोपिनस्यात् भ्रमंप्रत्यधिष्ठानसामान्य-
ज्ञानस्यकारणत्वात् तादृशप्रत्ययेगगनस्यविषयतयाऽवगाहाच्च ॥ आकाशाप्रत्य-
क्षेतुनीलमित्येवज्ञायेतनतुनीलंगगनमिति ॥ इदंचगगनज्ञानं, अनुमित्यादिरूपत्वा-
भावान्मानसप्रत्यक्षरूपमेवमंतव्यं ॥ किंचावकाशरूपेणाप्याकाशंप्रत्यक्षं अन्यथाव-

काशोयमित्याद्यभिलापोनभवेत् ॥ नह्यवकाशोभूतांतरेकालादौवाऽतर्भवितुमर्हतिनच- दिश्यंतर्भावः कल्प्यः नीरूपायाअपितस्याअवकाशात्मनाप्रत्यक्षांगीकारेअंतरंडावि- वाहन्यायादाकाशस्यैवतदंगीक्रियतां वस्तुतश्चाधिकावकाशमन्दिरमहीधरकंदरदर्दुंदु- भिवीणापणवाऽद्यवाद्यप्रभृतिषु महाप्रतिशब्दानुभवादवकाशतारतम्येन तत्तारत- म्यानुभवाच्चावकाशआकाशरूपएवसिध्यति. नदिग्रूपः तस्याः शब्दगुणकत्वा- भावात् "प्रतिध्वानिर्वियच्छब्द" इतितावकैरप्यंगीकाराच्च ॥ यत्तु ( अपरोक्षेअ- भिलापनियमेप्रमाणाभावात्स्वर्गाद्यभिलापाभावप्रसंगाच्चे ) ति ॥ तन्न ॥ ज्ञातेएवाभि- लापनियमः स्वीक्रियतेनत्वपरोक्षमात्रे ॥ प्रकृतेअवकाशज्ञानंचनानुमितिः हेतोस्त- द्व्याप्तिज्ञानपक्षधर्मताज्ञानादेश्चाभावात् ॥ नापिशाब्दं श्रवणाजन्यत्वाच्चक्षुरादिजन्यत्वा- च्च नाप्युपमित्यादिरूपं प्रमाणांतराणांप्रत्यक्षादिषुत्रिष्वेवांतर्भावस्यसांख्यपातंजल- काणादादिबहुवादिसंमतत्वात् सादृश्यज्ञानाद्यऽजन्यत्वाच्च ॥ अतःपरिशेषात्प्रत्यक्ष- मेव ॥ तस्याप्यनूरीकारेत्वज्ञातत्वादवकाशाद्यभिलापउच्छिद्येतैव ॥ स्वर्गादिकंतु- शब्दादिमानांतरावगतमितिनतत्राभिलापोच्छेदः ॥ अत्रसहस्राक्षेऽभिलापइतिवक्तव्ये-

---

## सहस्राक्ष.

यत्तु उपासनार्थं धर्मारोपइत्ययौक्तिकम् नहिशाखावद्ब्रह्मप्रत्यक्षं यस्मिन्नरुन्धतीवधर्मआरो- प्यते इत्युक्तम् ॥ तन्न ॥ प्रत्यक्षारोपेऽधिष्ठानस्य प्रत्यक्षत्वापेक्षायामपि परोक्षारोपे तदभावात् ॥ आरोपस्य प्रत्यक्षत्वनियमे प्रमाणाभावाच्च ॥ अप्रत्यक्षेऽप्याकाशे तलाद्यध्यासाच्च ॥ यत्तु अव- काशरूपेण वस्तुसामर्थ्यादेवतस्य प्रत्यक्षत्वम् अन्यथाऽवकाशाद्यभिलाषोच्छेदप्रसङ्गादिति ॥ त- न्न ॥ अपरोक्षेभिलाषनियमे प्रमाणाऽभावात्स्वर्गाद्यभिलाषाऽभावप्रसङ्गाच्च ॥ आकाशं साक्षा- त्करोमीत्यप्रत्ययात् आकाशंनपश्यामीतिप्रत्ययाच्च चाक्षुषमानउद्भूतरूपस्य हेतुत्वमितिनियम- विरोधाच्च यत्साक्षादपरोक्षाद्ब्रह्म सर्वप्रत्ययवेद्येऽस्मिन्ब्रह्मरूपेण्यवस्थितइत्यादिश्रुतिस्मृतिभिः अ- स्तिघटः इत्यादिसत्ताद्यवगाहिप्रत्यक्षेणच ब्रह्मणः प्रत्यक्षत्वनिश्चयाच्च ॥ पराञ्चिखानिव्यतृणा- त्स्वयम्भूस्तस्मात्पराङ्पश्यतिनान्तरात्मन्नितितु निरुपाधिकब्रह्मज्ञानाऽभावं संसारिणामाह ॥ अतएवोत्तरत्र कश्चिद्धीरःप्रत्यगात्मानमैक्षदिति प्रत्यागात्मदर्शनमेवसाधनविशेषसाध्यमित्याह ॥ यत्तूपहितस्य त्याज्यत्वेन पुत्रादिवत्त्यागापत्तिरिति ॥ तत्तु इष्टापत्त्या परिन्हियते ॥ अतएव नेदंयदिदमुपासते इतिसंगतम् ॥ कथंतर्हि तज्ज्ञानेन चित्तशुद्धिरन्यथा प्रापञ्चिकज्ञानेनाऽपि चित्तशुद्धिःस्यादितिचेच्चित्तशुद्धौ नध्येयस्योपहितत्वाभावः प्रयोजकतया स्वीक्रियते प्रमाणा- भावात् किन्तु शास्त्रेण तदर्थतया प्रतिपाद्यत्वं तच्चेदिहाऽस्ति तर्हि कथंनचित्तशुद्धिः स्यात् शास्त्रप्रतिपाद्यमेवहिफलं कर्मणामुपासनादीनांवक्तुमुचितं नतुयौक्तिकम् ॥ अतएवच प्रापञ्चि- कैश्चान्द्रायणादिभिर्निष्कामतया सम्पादितैरपि चित्तशुद्धिरितिसंक्षेपः ॥

ऽभिलाषइत्येवमुहुरुक्तिस्तुलेखादिप्रमादः ॥ यत्तु ( आकाशंसाक्षात्कारोमीत्यप्र त्ययादि ) त्यादितदपिरभसभवं अवकाशंसाक्षात्कारोमीतिप्रत्ययात् ॥ अवकाशंनपश्यामीत्यप्रत्ययाच्च ॥ सचाकाशानतिरिक्तइत्युक्तंप्राक् ॥ किंच चंद्रिकानिर्मलितमाकाशंपश्यमेघाच्छन्नमाकाशंपश्यतादृशंपश्यामीत्यादिव्यवहारादाकाशप्रत्यक्षमसंदिग्धमेव ॥ अतएवश्रीभागवते ( स्कंः १० अ० १७ वा० २० श्लो० ४४ , खम शोभतनिर्मेघमित्यादौतच्चाक्षुषंवर्ण्यते शोभायाश्चक्षुर्ग्राह्यत्वात् एवंअनार्षग्रंथेष्वपिखमिवजलंजलमिवखं इतिकुवलयानंदस्थोपमेयोपमोदाहरणे ॥ जलमिवाकाशनिर्मलंदृश्यतइतिवर्ण्यते ॥ कालिदासोपिरघुवंशे ( स० ३ श्लो० १२ ) पतिःप्रतीतःप्रसवोन्मुखींप्रियांददर्शकालेदिवमभ्रितामिवेतिगगनचाक्षुषंवर्णयति ॥ घटखर्परोपिखखंडकाव्ये । मेघावृतंनिशिनभातिनभोवितारं इतितदेवनिरूपयति ॥ मेघावृतत्वाद्रात्रौप्रत्यक्षंनभवतीत्युक्त्यातदनावरणेदिवाचप्रत्यक्षंभवतीतिलभ्यते ॥ एवमन्यत्रापिप्रामाणिकप्रयोगाःप्रेक्षणीयाः ॥ यस्तुचाक्षुषमात्रउद्भूतरूपस्यहेतुत्वमितिनियमउक्तःसनसंगच्छते संयोगादिचाक्षुषेकर्मजातिचाक्षुषेचव्यभिचारात् नचसमवायस्वसमवायिसमवायान्यतरसंबंधेनरूपवत्त्वंनियामकमितिवाच्यं समवायानभ्युपगमात् रूपचाक्षुषेव्यभिचारानपायाच्च ॥ नचद्रव्यचाक्षुषमात्रंप्रतिहेतुत्वंकल्प्यतइतिवाच्यं चाक्षुषमात्रइतिस्वोक्तिबाधात् तार्किकसंमतद्रव्यव्यवस्थायास्त्वयानिरासाच्च ॥ धूलिपटलाकर्षिचक्रानिलाकारादिचाक्षुषेव्यभिचाराच्च ॥ भट्टानुयायिनात्वयातमसिद्रव्यतायाः स्वीकारेणतच्चाक्षुषेव्यभिचारोपिविचार्यःतत्ररूपोद्भवानुद्भवयोर्निर्णयशरणत्वात् अतःपूर्वोक्तप्रतीतिबलेनांतरिक्षप्रत्यक्षस्यप्रत्याख्यातुमशक्यतयालाघवान्मूर्तचाक्षुषप्रत्येवोद्भूतरूपस्यहेतुत्वमास्थीयतां सामान्यतस्तदुक्तिनियमांगीकारेऽभावचाक्षुषेव्यभिचारोपिमूलेदर्शितः ॥ नचतत्रापिस्वाश्रयविशेषणतासंबंधेनरूपमस्त्येवेतिवाच्यं अनवच्छिन्नविशेषणतायाअसंभवात् अंबरेमुद्गिराणांतिमिरादेश्चाभावचाक्षुषेतेनसंबधेनापिरूपस्याभावाच्च ॥ कथंचित्तत्ररूपसाधनेंऽतरिक्षचाक्षुषमप्यक्षुण्णं अतिरिक्ताभाववादेप्यभावप्रत्यक्षस्याधिकरणप्रत्यक्षापेक्षत्वाच्च ॥ नचनियमशरीरेभावचाक्षुषमात्रइतिकल्प्यं पूर्वोक्तदोषानपायात् भावनिर्वचनानुपपत्तेस्स्वयमेवतृतीयश्लोकविवरणेभवतावतारणाच्चतस्मादाकाशमानसचाक्षुषप्रत्यक्षविषयतायाअनपायात्तत्रास्तु मायिकनीलिमादिप्रतीतिर्नतुत्वदभिमतेसर्वथानिर्विशेषेब्रह्मणिविशेषारोपः कथमभ्युपपद्येत ॥ यत्तुयत्साक्षादित्यादिनिश्चयाच्चेत्यंतं तदपिनप्रकृतोपयोगि ॥ दृष्टांतेशाखारुंधत्योरुभयोस्तुल्यंप्रत्यक्षं । किंतुशाखायामरुंधत्यवस्थानाभावेऽपितत्रसाऽऽरोप्यते ॥ प्रकृतेचारुंधतीवत्धर्मएवोपासकानांप्रत्यक्षविषयानतुशाखावद्ब्रह्मेतिदोषआपादितेब्रह्मणोज्ञानिप्रत्यक्षताबाधकश्रुत्यादेरनुपयोगःज्ञानिनामारोपकत्वाभावात् ॥ ईक्षणश्रुत्यादेरहंमित्यादिप्रत्ययपरत्वाद्दरेपिनब्रह्मणश्चाक्षुषादि-

विषयताततःसिध्यति धर्माणांतुतद्विषयत्वंसिद्धमतःशाखारुन्धतीवन्नारोपः संभवे ति ॥ आविर्भावतिरोभावानंतर्भाविनःषड्भावविकारान्स्वतंत्रान्मन्यमानस्यतवमते उत्पत्त्यनंतरंभवन्घटादावस्तीतिप्रत्ययोपिभावविकारतयानब्रह्मप्रत्यक्षसाधकोभविष्य ति ॥ यदिचशाखावदारोप्यमाणधर्मवद्वातस्यप्रत्यक्षत्वमेवोक्तश्रुत्यादिनाबोध्यतइ- तिस्वीकुर्यास्तर्ह्यात्मदर्शनस्यस्वतःसिद्धतयातदर्थश्रवणादिसाधनोच्छेदस्तद्ग्राहकगरुशा- स्त्रादीनांवैफल्यंचापद्येत ॥ तथाचायं-शाबरभाष्यादिप्रसिद्धआभाणकः ॥ अर्केचेन्मधु विंदेतकिमर्थंपर्वतंव्रजेत् इष्टस्यार्थस्यसंसिद्धौकोविद्वान्यत्नमाचरेदिति ॥ अक्केचेदि- तिपाठेअक्कोग्रहकोणइतिवदंति ॥ एवंचसाक्षात्कारफलकोपासनानामप्यनुपयोगात्क्व तंतदर्थधर्मारोपइतिकल्पनयाऽपि ॥ किंचब्रह्मणःसर्वप्रत्यक्षत्वेऽधोक्षजशब्दव्याकोपः “ पराञ्चिखानिव्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यतिनांतरात्मन् ” इतिकठतुर्यवल्लीस्थ वाक्यविरोधश्चस्यात् ॥ तदर्थस्तुखानींद्रियाणिपराञ्चिपराक्अञ्चंतिगच्छंतीतिपरा- ञ्चि ॥ यतःस्वयंभूः परमेश्वरः व्यतृणात् स्वसाक्षात्कारशक्तिहरणेनतानिहिंसितवा- न् ॥ तस्मात्पराङ्बहिःप्रापंचिकविशेषानेवजीवस्तैःपश्यति ॥ नअंतरात्मन्परमेश्वरे- स्थितविशेषांस्तदभिन्नान्पश्यतिनसंदृशइत्यादिश्रुत्यंतरैस्तस्यादृश्यत्वात् ॥ अंतरात्म- न्परमात्मानमेवनपश्यतीत्यन्येएवंचतद्धर्माणामारोपितत्वंतस्यशाखावत्प्रत्यक्षत्वंचेत्यु- भयमपिविरुद्धं ॥ अतएव “ कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छ- न् ” इतितदुत्तरार्द्धेकश्चिद्दुर्लभःधीरःयोगादिसाधनदुःखंसोढ्वानदीःप्रतिस्रोतोवाहयितु- मिवेंद्रियाण्यंतर्मुखानिकर्तुंसमर्थःप्रत्यगात्मानंवल्लीत्रयोक्तंपरंब्रह्मऐक्षत् प्रागीक्षितवान् इदानींचेक्षते ॥ यआवृत्तचक्षुःपुनःप्राप्तभगवदनुभवशक्तिकत्वादलौकिकचक्षुष्कः भग- वत्प्रवेशलक्षणमोक्षंचेच्छन् इतिसर्वप्रत्यक्षाविषयत्वमेवदृढीक्रियते ॥ अत्रप्रत्य- गात्मपदस्यनिरुपाधिकब्रह्मपरत्वेत्वावृत्तचक्षुरीक्षणीयतयासविशेषत्वापत्तिस्त्वन्मतेद- र्शनातिरिक्तमोक्षाभावात्तदीक्षकस्यामृतत्वेच्छाविरोधश्चस्यात् किंचशाखायामिवारो- पोनिरुपाधिकब्रह्मण्येवोपाधिभूतधर्माणांत्वयावाच्योनतुसोपाधिके अनारोपितोपाधे- रेवासंभवात् यदिचोपासनाधिकारिणांसंसारिणांनिरुपाधिकमप्रत्यक्षंतदोक्तदोषस्तद- वस्थएव मद्भक्तिंलभतेपरांआत्मारामाश्चमुनयइत्यादिमानसिद्धायाज्ञानोत्तरपरभक्ते- स्त्वयानंगीकारेणतत्साक्षात्कारिणांज्ञानिनामुपासनानुपयोगात् उपासनापेक्षाणांसा- क्षात्काराभावाच्च ॥ एवंचोपासनाएवनिर्विशेषवादे उच्छिद्येरन् एतेनपराञ्चिखानी त्यादिसाध्यमित्याहेत्यंतनिरस्तं ॥ यच्चयत्तूपहितस्येत्यादि इतिसंगतमित्यंतंतदप्यसं गतं तथासतिपुत्रादिष्विवेश्वरेपिवैराग्यमेवमुमुक्षोःकर्तव्यतयात्वन्मतउपदिश्येतनतू पासनाध्यानादयः ॥ नचतत्वमस्यादिनातस्यहेयत्वसिद्धिःशंक्या तत्रभागत्यागांगी कारादुपाधिमात्रस्यत्यागसिद्धेर्विशिष्टस्यत्यागासिद्धेश्च ॥ अतएवचंद्रवन्निर्गुणस्यज्ञा नायशाखावद्धीरातमुपहितंविशिष्टंनत्यज्यतइतितस्मिन्नंशेदीयमानःशाखाचंद्रदृष्टांतो-

पिमहावाक्यविरुद्धः ॥ प्रसक्तस्यहेयत्वांगीकारेहेयत्वावचनाच्चेतिसूत्रव्याकोपः ॥ नापिपुत्रेषणावित्तेषणादेरिवेश्वरेषणायाअपित्यागबोधकंकिंचिदपिवाक्यमस्ति ॥ यदिकापिवेदेतादृशार्थकंवाक्यमभविष्यत्तर्हिसर्ववेदज्ञआचार्यस्तथासूत्रयिष्यत् ॥ "तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासते" इतितलवकारवाक्यस्यतुतन्निर्विशेषमेवब्रह्मत्वंजानीहि नेदं यत्तउपासकाउपासतइत्यर्थोनभवति तच्छब्देननिर्विशेषपरामर्शायोगात् ॥ किंतु "यद्वाचानभ्युदितंयेनवागभ्युद्यते" इत्यादौ "यत्प्राणेननप्राणितियेनप्राणःप्रणीयते" इत्यंतेपूर्वार्धपंचकेयच्छब्दद्वयेनोक्तमेवतदापरामृश्यते ॥ तच्चवागादींद्रियबलागम्यंवाङ्मनःश्चक्षुःश्रोत्रप्राणानपेक्षतयाऽभिवदनमननदर्शनश्रवणप्राणनकर्तृत्वावाङ्मनआदिकर्मकाभिवदनमननादिकर्तृसर्वप्रेरकंचसविशेषमेवपूर्वमुक्तं ॥ अतःप्रथमेदंशब्देनसंनिकृष्टस्यवागादेःप्रेर्यस्यैवपरामर्शउचितोनतुशबलस्य अप्रकृतत्वात् ॥ तावकार्थेचद्वितीयमिदंशब्दंनैवब्रूयादतोमूलोक्तएववाक्यार्थः उपास्यस्याब्रह्मत्वेचतदुपासनध्यानादिनाचित्तशुद्धिर्नस्यात् उपहितत्वस्यमायिकत्वात्॥ अथमायिकस्यापितस्योपहितत्वाभावश्चित्तशुद्धावप्रयोजकश्चेन्मायिकविशेषयुक्तपुत्राद्युपासनध्यानादिनापिसाकुतोनस्यात् अधिष्ठानस्यशुद्धस्योभयत्रतौल्यात् ॥ मायिकविशेषाणांमोहकत्वमितिचेत्तदप्युभयत्रतुल्यं ॥ अथाविशेषेपिशास्त्रबलात्तदुपासनादितः फलंचांद्रायणादितइवेतिचेच्चांद्रायणादिफलप्रदस्त्वीश्वरएवफलमतइतिन्यायात् ॥ नतुजडंचांद्रायणादिकंतद्विधायकशास्त्रंवास्वतःफलंसमर्पयति ॥ उपहितस्यापिमिथ्यात्वेतदुपासनादिफलंकःसमर्पयेत् नतावदीश्वरः अब्रह्मत्वात् ॥ नापिस्वयमेवोपासनादिकं उक्ताधिकरणविरोधात् ॥ अतःकथंचित्तशुद्धिःस्यात् ॥ किंचशास्त्रंब्रह्मोपासनातएवफलंबोधयति "तन्महइत्युपासीतमहान्भवती" त्यादौनत्वब्रह्मोपासनया ॥ नह्यचांद्रायणंचांद्रायणतया आचरितंनिष्कामस्यापिचित्तशुद्धिहेतुर्भवति अस्माकंतुचांद्रायणादिकमपिब्रह्मरूपमेवनतुमायिकमितिनास्मान्प्रतितथावक्तव्यं किंच "तंयथायथोपासतेतदेवभवति" इतिबृहदारण्यकादिषुब्रह्मणएवतत्तदुपास्यरूपभावःश्रूयतेऽतोप्युपास्यस्यनाब्रह्मत्वं ॥ एतेनकथंतर्हीत्यादिसंक्षेपइत्यंतमपास्तं ॥

यत्तुपाण्याद्यभावे आनंदमात्रपाण्याद्यभावःकैमुतिकन्यायसिद्धइत्यादिप्रलपितं तत्तु पूर्वोक्तश्रुतिस्मृतिविरोधादुपेक्ष्यं श्रुतेर्मायिककरादिप्रतिपादनपरत्वंतु पूर्वमेवनिरस्तं तस्मात्तादृशश्रुतिभिःसर्वविरुद्धधर्माश्रयत्वेनालौकिकत्वं ब्रह्मणिप्रतिपाद्यते तथाचश्रुतयः । "अपाणिपादोजवनोगृहीतापश्यत्यचक्षुः

सशृणोत्यकर्णः अशरीरंशरीरेष्वनवस्थेष्ववस्थितं महांतंवि-भुमात्मानंमत्वाधीरोनशोचति अनेजदेकंमनसोजवीयोतद्धाव-तोऽन्यानत्येतितिष्ठत् इत्याद्याः ॥

## टीका

सहस्राक्षे विपक्षेबाधकमित्यादिनेतीत्यादिश्रुतिभ्यइत्यंत भागंनिराकुर्वंति यत्तु-पाण्याद्यभावइत्यादिनातिष्ठदित्याद्याइत्यंतेन ॥ अयमर्थः ॥ खंडयश्लो-के यत् ( नहिसुखंसंस्थानवद्दृश्यते ) इतिब्रह्मणआनंदाकारत्वेबाधकमुक्तं ॥ तन्न ॥ प्राक्समर्थितायाः श्रुत्यादिसंमतायास्तस्यानंदमूर्तितायालौकिकप्रत्यक्षविरोधमात्रेण-बाधस्यायोगात् ॥ अन्यथालोकेनिर्विषयंनिष्करणंनिरधिकरणंचज्ञानंनदृष्टमितिज्ञान-रूपस्यब्रह्मणोऽपिसविषयत्वजन्यत्वस्वातिरिक्ताधिकरणवृत्तित्वादिकंदुर्वारंस्यात् ॥ किंच सुखमपिलोकेजडंस्वातिरिक्ताधिकरणकमंतःकरणेनोपलभ्यमानंचदृष्टमितिब्रह्म-णिसुखरूपत्वांगीकारेतथात्वमनपनोद्यंभवेत् ॥ शास्त्रसिद्धस्यनबाधःकेवलयुक्त्याश-क्यइतिचेत्तर्हिसिद्धाऽऽनंदाकारतापिनवारणीया ॥ किंच दशमस्कंधेअक्रूरस्तुतौ-( अ० ४० श्लो० २९ ). नमोविज्ञानमात्रायसर्वप्रत्ययहेतवे पुरुषेशप्रधानायब्रह्मणेऽनं-तशक्तये इत्यत्र " विज्ञानमेवमात्रामूर्तिर्यस्यतस्मै अतएवसर्वप्रत्ययहेतवे- समस्त ज्ञानकारणाय " इतिव्याचक्षाणेनश्रीधरस्वामिनाप्यक्रूरदृष्टायामूर्तेर्ज्ञानात्मकत्वंव्यक्त मुक्तं ॥ अलौकिकेब्रह्मणिज्ञानस्यसंस्थानवत्त्वेसत्यानंदस्यापितत्कुतोनस्यात् ॥ अधि-कंतु साधितमधस्तात् यत्तुपाण्याद्यभावेइत्यादि बोधयंतीत्यंतं तदप्यविचारचारु ॥ अ-

---

## सहस्राक्ष.

विपक्षेबाधकमाह ॥ यतोनहीति ॥ पाण्याद्यभावे आनन्दमात्रपाण्याद्यभावः कैमुतिक-न्यायसिद्धइत्यभिप्रेत्याऽङ्गाऽभावमेवाहाङ्गाभावगिरइति ॥ शुद्धाऽङ्गशब्दस्याऽर्शआद्यजन्ताङ्गश-ब्देनैकशेषेऽभावशब्देनसमासः ॥ तेनावयवावयव्यभावबोधकशब्देभ्यइत्यर्थः ॥ तथाहि ॥ अपाणि पादोजवनोग्रहीतापश्यत्यचक्षुःसशृणोत्यकर्णः अचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणम् अ-शरीरंशरीरेषु अप्राणोह्यमनाःशुभ्रःनतस्यकार्यंकरणंचविद्यते इत्याद्या श्रुतयस्तदभावंबोधय-न्ति ॥ अङ्गाऽभावः सर्वविशेषाभावोपलक्षकः ॥ निष्कलंनिष्क्रियंशान्तं नचक्षुषागृह्यतेनाऽ-पिवाचा यन्मनसानमनुते अनेजदेकम् नेहनानास्तिकिञ्चन नेतिनेतीत्यादिश्रुतिभ्यः ॥

र्शआद्यजंतमव्ययंगशब्दमंगीकृत्यावयविनोऽव्ययभावंवदन् किं ब्रह्माभावंवक्तुमुद्यतोसि॥
अथभावप्रधानः सइतिचेदवयवाभावादेवतदभावः सिद्ध्येत् अवयव्यभावबोधकस्तु
शब्दोपिवस्तुतोनास्तीतिकस्ततः प्रस्तुतेऽर्थः॥ यानिचनिषेधकानिवाक्यान्युक्तानितेषु-
लौकिकानां पांचभौतिकानां स्वप्रेरकभिन्नानामेवतेषांप्रतिषेधः सामान्यतः पाणिपाद-
शब्दोच्चारणेतेषामेवलोकदृष्टानामुपस्थितेः॥ लौकिकानामेवनिषेधइति तुतवापिसंमतं ॥
स्वन्मतेतेषामलौकिकानामेवाभावात् ॥ विधीयमानानित्वलौकिकान्येव ॥ यन्नलोके-
भवंनवालोकेदृष्टंतदलौकिकं ॥ नहिलोकेक्कापिकोपिचेतनोविश्वतश्चक्षुर्विश्वतोमुखः
सर्वतः पाणिपादांतोवाप्यालोकितः ॥ ननुतथापिसर्वथालोकविरुद्धं बुद्धिकथंकार-
मारोहतु यद्ब्रह्मणः सर्वत्रैवपाणिपादादिसर्वाकारवैशिष्ट्यमितिचेदुच्यते ॥ व्यापके-
ब्रह्मणि शतेपंचाशदादिन्यायेनसर्वाकारशालितानविरुद्धा ॥ यथाशते तन्न्यूनान-
वनवतिपर्यंताः सर्वाअपिसंख्यानिविशंते तथाव्यापकेस्वाभाविकसर्वधर्माश्रयेब्रह्म-
णि सर्वाण्यपिपरिमाणानि तत्तत्परिमाणकाः सर्वेप्याकाराश्चस्वाभाविकाः समा-
विशंत्येव ॥ अतोयउपासकोयदा यामाकृतिंभावयति तदातामेवाकृतिमभिव्य-
क्तीकृत्य तत्समीपंनयति तंयथायथेतिश्रुतेः येयथामांप्रपद्यंतेतांस्तथैवभजाम्यह-
मितिभगवद्वाक्यात् ॥ ( स्कंध ३ अ० ९ श्लोक० ११ ) यद्यद्धियातउरुगा-
यविभावयंतितत्तद्वपुःप्रणयसेसदनुग्रहायेति तृतीयस्कंधेनवमाध्यायेब्रह्मस्तुतौ क-
थनाच्च ॥ अतएवानंतरूपश्रुतिः ससर्वनामासचसर्वरूपः अनंतरूपोनंतश्रीजितम-
न्युर्भयापहः नमोस्त्वनंतायसहस्रमूर्तये इत्यादिकंचसंगच्छते ॥ दृश्यंतेचलोकेपि-
कतिचिद्वस्तूनिसर्वतःसर्वाकाराणिमहाशिलामहादारुप्रभृतीनि ॥ तद्यथा ॥ महाशिला-
यांगवाश्वगजादयःसर्वेऽप्याकाराःसर्वत्रसंति ॥ अतएवयस्मात्तदंशाद्यवाकृतिंकारुरुद्दि-
धीर्षतितर्हिभागांतरापसारणेनतामेवततोऽभिव्यनक्ति ॥ यदिचाश्वाकृतिंयदिचगजा-
कृतिमितरांवायांयामुद्दिधीर्षतितांतामेवशक्नोतितत्तएवोद्धर्तुं ॥ एवंदारुविषाणादावप्य-
वधेयं ॥ नचकारुणानिर्मिह्यासानतत्रपूर्वमासीदितिशंक्यं धातुरसेनेवसजलमृदादिचूर्णे-
नेववातत्रगवाद्याकृतेर्निर्माणस्याभावात्॥किंतुशिलायाअंशांतरापसारणेनकारणेस्थितै
वसाततोऽभिव्यक्तैवक्रियते अतोऽभिव्यंजनमात्रेतत्रपुरुषव्यापारोपसारणरूपोनतुनि-
र्माणं ॥ तस्मात्संतिशिलादिषुसर्वत्रैवसर्वेऽप्याकारास्तदापरमेश्वरेकुतोननतेस्युः ॥ इयां-
स्तुविशेषः प्रस्तरादेर्जडत्वादितराभिव्यंजकापेक्षा भगवांस्तुज्ञानघनःसर्वशक्तिरभिव्यन
क्तिभक्तिमतामभिमतान्स्वयेमवतांस्तांश्चाकारानिति॥ भगवतःसर्वत्रस्वाभाविकसर्वाका-
रताज्ञापनायैवनृसिंहावतारेस्तंभादाविर्भावोयुगपदुभयाकारधारणंच॥ एतदेवाभिप्रेत्यो-
क्तंतन्नामसुश्रीमदाचार्यचरणैः ॥ महानुभावःसाकारःसर्वाकारप्रमाणभूरिति ॥ एवंच
स्वाभाविकसर्वाकारशालितया अपाणिपादइतिश्वेताश्वतरवाक्यंस्वातिरिक्तपाणिपा-
दादिराहित्येऽपितदनपेक्षसार्वत्रिकगमनादानादिस्वाभाविकसर्वकर्मत्वबोधकं॥ अतएव

सर्वकर्मेतिशांडिल्यविद्याश्रुतिः ॥ नतुनिर्विशेषतांसाधयितुंतदीष्टे जवनत्वादिविरोधा-
त् शबलपरत्वेपाण्यादिनिषेधायोगाच्च॥किंच निर्विशेषपरत्वे एतदुत्तरार्द्धे "सर्ववेत्तिवेद्यं"
इतिबाध्येतवेद्यस्यजगतोविवर्तरूपतयानस्य तज्ज्ञानायोगात् ॥ शबलपरत्वेतु "नचत
स्यवेत्ता" इतिपीड्येत तस्याप्यवेदने उपासनाऽसंभावापातात् निर्विशेषेऽनेनपाण्या-
दिनिषेधस्यासिद्धेश्च अरूपवत्सूत्रविचारेप्रागुक्तःसर्वकर्मेतिश्रुत्यर्थस्त्वेकदेशिबादयौडु-
लोमिकाशकृत्स्नादिसंमतोनतुव्यासाभिप्रेतः । सिद्धांतेतुस्वभावतःसर्वाणिकर्माणिय-
स्येत्येवार्थस्तत्रैवाग्रिमाधिकरणेषुद्रष्टव्यः ॥ यच्च बृहदारण्यकपंचमाध्यायाष्टमब्रा-
ह्मणस्थमचक्षुष्कमश्रोत्रमित्यादिवाक्यमुक्तं तदपि लोकवदलिरिक्तभौतिकचक्षुरादि-
निषेधकं उक्तयुक्तेः ॥ नतुनिर्विशेषतासाधकं तत्रैवाग्रेसूर्यचंद्राकाशभूमिसर्वकालन-
द्यादिप्रशासकत्वादीनलौकिकविशेषानुक्त्वासमाप्तौ "तद्वाएतदक्षरंगार्ग्यऽदृष्टंद्रष्टृऽश्रुत-
ं श्रोत्रऽमतंमंतृ" इत्यादिनाऽतिरिक्तचक्षुःश्रोत्रादिनिरपेक्षद्रष्टृत्वश्रोतृत्वाद्यलौकिक-
धर्माणामाकाशोपादानतायाश्चकथनात् ॥ अस्थूलादिवाक्यमधिकंत्वग्रेचिंतयिष्यामः॥
कठद्वितीयवल्लीस्थं "अशरीरंशरीरेष्वनवस्थेष्ववस्थितं महांतंविभुमात्मानं मत्वा-
धीरोनशोचति" इतिवाक्यमपिस्वातिरिक्तानवस्थभौतिकशरीरमात्रनिषेधकं नतु-
स्वाभिन्नाकाराभावसाधकं अनंतरूपश्रुतेः । छांदोग्यतैत्तिरीयादिषु "मनोमयः प्राण-
शरीरोभारूपः सत्यसंकल्पआकाशात्मा ॥ आकाशशरीरंब्रह्म" इत्यादिश्रवणाच्च ॥
नापिनिराकारत्वंततः सिध्यति आशरीरवाक्यात्पूर्वं "अणोरणीयान्महतोमहीया-
न् ॥ आसीनोदूरंव्रजति" इत्यादिश्रवणात् ॥ अव्यवहितोत्तरऋचि "तस्यै-
षआत्मावृणुतेतनूंस्वां" इतितनुमत्वश्रवणात् । अग्रेब्रह्मक्षत्रभोगाम्नानाच्च ॥
"अप्राणो ह्यमनाः शुभ्रोह्यक्षरात्परतःपरः" इतिद्वितीयमुंडकप्रथमखंडवाक्यम-
पिजीववत्कार्यरूपप्राणमनआदिवैशिष्ट्यंतस्यनिषेधति अव्यवहितोत्तरर्चि "एतस्मा-
ज्जायतेप्राणोमनःसर्वेंद्रियाणिच" इतिप्राणादीनांतत्कार्यत्वकथनेनतस्यतादृशप्राणा-
दिमत्तानुपपत्तेः ॥ नतुसर्वथानिर्विशेषतापरंपूर्वोत्तरमंत्रयोःकर्तृत्वादिश्रावणात् उत्तर
मंत्रादग्रिमएवमंत्रे "अग्निर्मूर्द्धाचक्षुषीचंद्रसूर्यौदिशःश्रोत्रेवाग्विवृत्ताश्चवेदाःवायुःप्रा-
णोहृदयंविश्वमस्यपद्भ्यांपृथिवीह्येषसर्वभूतांतरात्मा" इतिरूपोपन्यासाच्च ॥ न-
चारोपितंतदितिवाच्यं औपचारिकस्यप्रकृत्यादावपिसंभवेन अदृश्यत्वाधिकरणवि-
रोधापातात् ॥ नतस्यकार्यमितिश्वेताश्वतरवाक्यंतु भिन्नकार्यस्यजीववत्कर्तव्य-
स्यचतद्वदिंद्रियादेश्चनिवारकमितिनिर्णीतंप्राक् ॥ एतेनैव ( अंगाभावःसर्वविशे-
षाभावोपलक्षक ) इत्यपास्तं ॥ निष्कलंनिष्क्रियमितिबृहदारण्यकवाक्यंतु लोकव-
दिंद्रियादिपरतंत्रक्रियाप्रतिषेधकं निरवद्यत्वनिरंजनत्वाभ्यांतत्रैवसेतुत्वादिकथना-
च्च ॥ निष्कंपमितित्वशुद्धं ॥ "नचक्षुषागृह्यतेनापिवाचानान्यैर्देवैस्तपसाकर्मणा-

वा ,, इतितृतीयमुंडकप्रथमखंडवाक्यमपितपःकर्मसाहचर्यादास्माकीनचक्षुरादिबले-नायाह्यत्वपरं नतुनिर्विशेषतासाधकं ॥ तदुत्तरार्द्धएव “ ज्ञानप्रसादेनविशुद्धसत्वस्ततस्तुतंपश्यतेनिष्कलंध्यायमानः ” इतिज्ञानिनोध्येयत्वदृश्यत्वकथनात् तत्रपूर्वोत्तरभागेरुक्मवर्णत्वकर्तृत्वादिबह्वलौकिकविशेषश्रावणाच्च ॥ यन्मनसेतितत्तलवकारवाक्यंतु ब्रह्मकेवलमनोबलेनमंतुमशक्यं मननेजीववदतिरिक्तमनःसाहाय्यानपेक्षंवाब्रह्मेत्यर्थकमितिसूचितंप्राक् ॥ “ अनेजदेकंमनसोजवीयोनैनद्देवा-आप्नुवन्पूर्वमर्शत् तद्धावतोऽन्यानत्येतितिष्ठत्तस्मिन्नपोमातरिश्वादधाति तदेजति-तन्नैजतितद्दूरेतद्वन्तिके ” इतीशावास्यवाक्यंब्रह्मणिसर्वविरुद्धमाश्रयताबोधकं अ-नेजनातिजवीयस्त्वादेरन्योन्यविरुद्धत्वात् ॥ नतुनिर्विशेषतापरंस्पष्टमलौकिकधर्माभि-धानात् ॥ ननुधर्माणांविरुद्धत्वंहियुगपदेकाधिकारणावृत्तित्वं तथासति ब्रह्मणिकथंत-त्सामानाधिकरण्यमितिचेत् लोकदृष्ट्यैवविरुद्धानांधर्माणामाश्रयःसइतिजानीहि॥दृश्य-तेहिकार्येऽधितरेतरव्यधिकरणतयादृष्टानामपिधर्माणांकारणेसामानाधिकरण्यं । य-थालवणसितापक्वापक्वमाकंदपिचुमंदफलादिवृक्षारमधुराम्लतिक्तादेरेकैकस्यैवसत्वेन-परस्परवैयधिकरण्येऽपि पृथिव्यांतेषांसर्वेषां कार्यदृष्ट्याविरुद्धानामपि युगपदेकाधि-करण्यं ॥ तथाजीवजडादिवृत्तेरन्योन्यविरुद्धस्याऽप्येजनानेजनादेर्ब्रह्मण्यविरोधमव-धारयेनिसंक्षेपः कठवल्लीषुचतुर्थवल्लीस्थाया “ यदेवेहतदमुत्रयदमुत्रतदन्विह । मृत्योः समृत्युमाप्नोतियइहनानेवपश्यति । मनसैवेदमाप्तव्यं नेहनानास्तिकिंचन । मृत्योः -समृत्युंगच्छतियइहनानेवपश्यति ” इतिश्रुतेस्त्वयमर्थः यदेवधर्मजातंइहप्रपंचेस्तितत-त्सर्वं अमुत्रब्रह्मण्यस्ति ॥ एवकारोऽयोगव्यवच्छेदकःसाकल्येपर्यवस्यति ॥ यत् । अमुत्रब्रह्मणिधर्मजातमस्ति तदेवअनुपश्चादिहतत्कार्यप्रपंचेनुवृत्तमस्ति पृथ्वीगंधादि-कमिवघटादौ ॥ मृत्योर्दैवताविशेषान्मृत्युंमरणंसआप्नोति ॥ सकःयइहजगतिब्रह्मणि-वानानेवद्वैतमिवपश्यति ननु विरुद्धसर्वधर्माश्रयस्तत्कथंज्ञेयमित्यतआह मनसैवेति मननवतान्त्वदैव इदंब्रह्माप्तव्यं ॥ सर्वधर्माश्रयेधर्मधर्मिभावात्प्राप्तंद्वैतंवारयति नेहेति इहब्रह्मणि किंचनापि नानानास्ति यइहब्रह्मणि तद्धर्माणांद्वैतमिवपश्यति सोप्यु-क्तंदुष्फलमाप्नोतीतिनपौनरुक्त्यं ॥ एतेन तत्समानानुपूर्वीकंबृहदारण्यकवाक्यमपि-व्याख्यातं ॥ अतएतदपिद्वैताभावमेवबोधयति नतुविशेषाभावं । पूर्वापरमंत्रेष्वलौ-किकानांतेषांसिद्धेः ॥ नेतिनेतीतिमूर्तामूर्तब्राह्मणवाक्यंतु प्राग्व्याख्यातं ॥ तस्मा दपाणिपादइत्यादिश्रुतिभिर्लोकदृष्ट्याविरुद्धानांसर्वेषांधर्माणामाश्रयत्वमेवतत्रबोध्यते॥ मूलेआद्याइत्यनेन “ आसीनोदूरंव्रजति ॥ अणोरणीयान्महतोमहीयान् ॥ अतःपरं-नान्यदणीयस ९ हिपरात्परंयन्महतोमहांतं ॥ दूरात्सुदूरेतदिहांतिकेच ॥ प्रादेशमात्र-मभिविमानमात्मानं ” इतिकठतैत्तिरीयतृतीयमुंडकवैश्वानरविद्यादिश्रुत्यंतराण्यनुसं-धेयानीतिदिक् ॥

यदपिसुवर्णस्याविकारित्वंकामधेनोर्मणेरपीतिशुद्धाद्वैतमार्त्तंडोक्तमनूद्य (विविधकार्य्याकारतासद्भावेपिनिर्विकारित्वंयुक्तयारवंडयती) त्याद्युक्तं तदपिनकिंचित् विविधकार्य्याकारत्वेपिविकारित्वंनसंभवतिसुवर्णादीनां ॥ विकारस्तुतात्त्विकोऽन्यथाभावः ॥ यथादुग्धस्यदधिभावः अतएवदुग्धार्थिभिर्नदध्युपादीयतेऽतोदध्नोर्विकारत्वंदुग्धस्यचविकारित्वं अत्रतुसुवर्णार्थिभिःसुवर्णपरिणामःकुंडलादिरुपादीयते नतुत्यज्यते तस्मिन्तात्विकान्यथाभावाभावात् ॥ किंतुविकारोऽत्रवाचैवारभ्यते अतएव "वाचारंभणंविकारोनामधेय" मितिश्रुतिरपिसंगच्छते ॥ संगच्छतेचदधिदुग्धशुक्तिरजतादिदृष्टांतमप्रदर्श्यसुवर्णकटकादिदृष्टांतप्रदर्शनमतएवविवर्त्तवादादयोनश्रुतिसंमताइतिनिश्चीयते ॥ पूर्वाकारपरित्यागेनाकारांतरापत्तिस्तत्रदृश्यतइतिनसंगतम् पूर्वाकारत्यागाभावात् ॥ अन्यथासुवर्णव्यवहारोनस्यात् ॥ तस्मात्सुवर्णस्याविकारित्वमेव ॥ एवमेवब्रह्मणोप्यविकारित्वंश्रुतिसंमतं ॥ किंचसुवर्णस्यविकारित्वमेवत्वदभिमतंतदाब्रह्मणोपिविकारित्वं त्वन्मतेपिकुतोनस्यात् नचब्रह्मणिनविकारःकिंतुमाययैवप्रतीयते इतिवाच्यं एवंसतिदृष्टांतवैषम्यंस्यात् सुवर्णादीनांमाययाऽन्यथाभावस्याभावात् तत्रापिमाययैवचेद्ब्रूषेतदासुवर्णस्याविकारित्वंबलादापतितं ॥ सुवर्णत्वेनज्ञाने नेदंकटकमितिप्रतीत्यापतिश्च ॥ तस्माच्छुद्धस्यसुवर्णस्ययथाकटककुंडलादिभावस्तथैवब्रह्मणोऽपिशुद्धस्यैवजगद्रूपतासिद्धौशुद्धाद्वैतमेवश्रुतिसंमतं एतेनकिंचेत्यादिकःप्रलापोपास्तः ॥ यच्चअहिकुंडलादिदृष्टांतेनेतरविका-

रिवैलक्षण्यसंपादनप्रकारःयथासर्पःस्वेच्छयाहिकुंडलाकारतांग-
तः नविकारीतथाब्रह्मव्याससूत्रैर्निरूपितम् इतित्वदुक्तोनसंग-
च्छेते)त्युक्तं ॥तन्न॥ नहिविकारिवैलक्षण्यमात्रसंपादनार्थोऽयं-
प्रकारः किंतु भक्तसाक्षात्कारस्योभयविधत्वादुभयविधंब्रह्मे-
तिनवक्तव्यं वस्तुशक्त्यैवनिर्णयःकर्त्तव्यइतिपूर्वपक्षआह "उ-
भयव्यपदेशात्वहिकुंडलवत्"तुशब्दःपूर्वपक्षंव्यावर्त्तयति नैवके-
वललोकदृष्टांतेनयुक्त्यावाब्रह्मस्वरूपनिर्णयःकर्तुंशक्यते तथा-
सतिशास्त्रंव्यर्थमेवस्यात् अत्रहिदर्शनांतरादयमेवविशेषोयद्वे-
दादेवब्रह्मस्वरूपज्ञानंप्रमितिरूपंनलौकिकैप्रमाणैस्तन्न्यायैर्वा उ-
पचारनिवृत्त्याश्रौततात्पर्यज्ञापनार्थमेवास्यशास्त्रस्यप्रवृत्तेः त-
च्चजन्माद्यधिकरणएवशास्त्रयोनित्वादित्यनेननिर्णीतम्॥ अतोवे-
दमंतरेणस्वरूपस्यतच्छक्तेश्चानवगमात्कथंस्वरूपशक्त्यानिर्णयः
स्यात् वेदेतु उभयव्यपदेशोस्तिउभयोर्विरुद्धधर्मयोर्व्यपदेशउ-
भयव्यपदेशस्तस्मात् यत्रैवास्थूलादिवाक्येनिर्गुणत्वेनव्यपदि-
श्यते तत्रै "वाकाशओतश्चप्रोतश्चे" तिकथनात्कार्यगुणजन-
कानंतगुणवत्ताऽपिबोध्यते तथायत्रशारीरेब्राह्मणे "सएषनेतिने
त्यात्माअगृह्योनहिगृह्यते"इत्युच्यतेतत्रापि"सवाअयमात्मासर्व-
स्यवशीसर्वस्येशान" इत्यादिकंपूर्वमुच्यते ॥ "सवाएषमहान-
जआत्माअन्नादोवसुदान"इतिचतदनंतरं॥ एवंयत्र"यदेकमव्य-
क्तमनंतरूप"मित्युच्यते तत्रैव"विश्वतश्चक्षुरुतवि-श्वतोमुख" इ-
त्यादिचोक्तं धर्मविधिद्वारातन्निषेधद्वाराचनिरूपकाणांमध्यए-
कस्योपजीव्यत्वमंतरंगत्वमन्यस्योपजीवकत्वंबहिरंगत्वमिति-

निर्णेतुमशक्यत्वेनोभयवाक्ययोस्तुल्यबलत्वादुभयरूपमेवब्रह्म-
स्वरूपं यद्युभयलिंगंब्रह्मतदासंराधनसिद्धानांसर्वेषांतथैवप्रकाशे-
त ननुकंचित्प्रतिकथंचिदन्यंप्रत्यन्यथाअतएकंवस्तुकथमनेकधा
भासतेतत्रहेतुर्वक्तव्योनोचेद्दर्शनस्याप्रामाण्यमितिशंकायांदृष्टां-
तेनसमाधिमाह "अहिकुंडलवदिति ॥ यथासर्पऋजुरनेकाका-
रकुंडलश्चभवति तथाब्रह्मस्वरूपंसर्वप्रकारंभक्तेच्छयातथातथा-
स्फुरति यद्यपिसर्पःस्वेच्छयातथातथाभवतिब्रह्मतुसंराधकभ-
क्तेच्छयेतिवैषम्यं तथापिसंराधकस्यतादृशेच्छोत्पत्तौतादृशना-
दृशफलदित्सैवप्रयोजिकेतिनवैषम्यं ॥ इयंयुक्तिःप्रमाणश्रुतदृ-
ष्टविरुद्धशास्त्रसंभेदेनव्यामुग्धस्यसमाधानायव्यासपादैर्दर्शिता ॥
किंच यथाशरीरादीनांविषयभेदेनतथात्वं एवंब्रह्मणोपिभक्तभेदे-
नतथात्वं ब्रह्मणस्तत्तद्रूपभवनंतुतद्भक्तचक्षुर्मनोविषयेतद्रूपस्यप्रा
पणं नतुकरणं ॥ अतःसर्वविरुद्धधर्माश्रयोभगवानितिप्रतिपादि-
तं नतुविकारित्वंप्रदर्शितं ॥ अतएव यथासर्पःस्वेच्छयाहिकुंड-
लाकारतांगतः नविकारस्तथाब्रह्मव्यासैःसूत्रेनिरूपितमितिकथ-
नमपिसंगच्छते ॥ किंच यथाकामधेनोःसकाशादनेककार्यो-
त्पत्तावपिनतस्याविकारित्वमेवंब्रह्मणोपिनविकारित्वं नचधेनो-
र्निमित्तत्वमेवनोपादानत्वमितिवाच्यं उपादानस्यान्यस्याभा
वात्तज्जन्यपदार्थानांतर्हिकिमुपादानंवक्तव्यं ॥ विनाप्युपादानं
कार्य्योत्पत्तिश्चेद्घटाद्यर्थंनियमतोमृदाद्यानयनेप्रवृत्तिर्व्याहन्येत
जगतोपिविनैवोपादानमुत्पत्तिसंभवेनब्रह्मणउपादानत्वेनश्रुति
सूत्रयोः प्रतिपादनप्रयासोविफलःस्यात् तस्मादन्यस्योपादा
स्याभावाद्धेनुरेवोपादानं निमित्तंच ॥ तथाप्यविकृतैव॥ तथा-

ब्रह्मापीतिबोध्यं॥एतेन (धेनोर्निमित्ततयाऽप्रकृतित्वेने) त्यादिकं-
निरस्तं ॥ एवंमणेरपि यथाविविधाकारत्वेपिनविकारत्वं सा-
मर्थ्यविशेषात्तथैवब्रह्मणोपिविविधाकारत्वं नचविकारित्वं ॥

## टीका

सहस्राक्षे इदानीं सुवर्णस्येत्यादिं तदप्ययुक्तमित्यंतं भागंदूषयंति ॥ **यदपि सुवर्णस्येत्यादिना नचविकारित्वमित्यंतेन** ॥ अत्रेदंबोध्यं ॥ ब्रह्मपरिणा-
मवादस्य " तदात्मानंस्वयमकुरुत " इत्यादिश्रुतिशततः (अ० १ पा० ४ सू० २४)
" आत्मकृतेःपरिणामात् " इत्यादिसूत्रतश्च सिद्धतयाकेवलयुक्त्या विकारित्वाभा-
वनरूपयाखंडनमशक्यं " नैषातर्केणमतिरापनेये " तिकठश्रुतेः सूत्रकृतापिद्विती-
यस्यप्रथमेतर्काप्रतिष्ठानस्योक्तत्वात् महाभारतेचवनपर्वणितर्कोप्रतिष्ठःस्मृतयोविभि-

---

## सहस्राक्ष.

इदानीं सुवर्णस्याऽविकारित्वं कामधेनोर्मणेरपि इतिशुद्धाद्वैतोक्ते वैविध्यकार्याकारता(स-)
द्भावेऽपिनिर्विकारत्वं युक्त्या खण्डयति ॥सुवर्णवदिति ॥ यत्तु वस्तुतोविविधाकारंब्रह्मेतित्वन्म-
तं ॥ तस्मिंस्त्वन्मते सुवर्णवद्विकारि स्यात् ॥ नच परिणतेर्नविकारत्वमतः सुवर्णं नविकारीति-
वाच्यं ॥ विकारोनामधेयमितिश्रौतव्यवहारविरोधात् नच यस्मिन्विकारः सोऽविकारीत्युपपद्यते
विरोधात् ॥ किञ्च पूर्वाकारपरित्यागेनाकारान्तरापत्तिस्तत्रदृश्यते तथापिचेदविकारित्वं स्वीक्रि-
यते उत्पत्तिविनाशयोः सतोरप्यनित्यत्वंस्वीक्रियेततस्मादर्थाङ्गीकारे शब्दापलापस्याऽयुक्तत्वादी-
श्वरस्य विकारित्वंस्यादेव ॥ एकरसतायानित्यतायाश्चाभावःस्यात् ॥ त्वन्मते रूपान्तरापत्तेरे-
वानित्यत्वव्याप्यत्वात् ॥ अन्यथा घटादेरप्याविर्भावतिरोभावयोरेव सत्त्वेन तार्किकसंमतवि-
कारितायास्त्वन्मते व्याप्यभावेनेश्वरेऽहिकुण्डलादिदृष्टान्तेनेतरविकारिवैलक्षण्यसंपादनप्रकारः य-
था सर्पःस्वेच्छयाहिकुण्डलाकारतांगतः नविकारी तथा ब्रह्मव्याससूत्रैर्निरूपितम् इतित्व-
दुक्तोनसंगच्छेत ॥ सर्वाणि तैजसान्यविकृतानीति स्वगुरूक्तिंतु भवानेवस्वीकुर्यान्नान्य उ-
क्तविरोधात् ॥ धेनुः कामधेनुः ॥ एतेन कामधेनोरनेकवस्तूत्पत्तावपि यथा तस्यानविकृ-
तिरेवमीश्वरस्याऽपीतिसुबोधिन्युक्तं प्रत्युक्तम् धेनोर्निमित्ततयाऽप्रकृतित्वेनेश्वरस्य प्रकृतित्वे-
न दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् ॥ धेनुर्मणेरप्युपलक्षिका ॥ एतेन सुवर्णस्याऽविकारित्वंकाम-
धेनोर्मणेरपीति यद्विविधाकारसद्भावेऽपिनिर्विकारत्वमुक्तं तदप्ययुक्तम् ॥

न्नाइतिस्मरणात भीष्मपर्वणि अलौकिकास्तुये भावानतांस्तर्केणयोजयेदितिस्मरणाच्च ॥ अचिंत्याःखल्वितिपाठांतरं ॥ किंच यच्छाहकंयत्प्रमाणं तेन निश्चितेतस्मिन्न केवल-युक्त्या तद्धर्मस्यतत्त्वरूपस्यवाबाधःकर्तुंशक्यः ॥ यथारूपरहितेष्वाकाशादिषुस्पर्शा-भावेस्पर्शवत्सुपृथिव्यादिषुरूपसत्त्वेन च वायौस्पर्शवत्त्वेरूपराहित्यंतद्वाहित्येस्पर्शव-त्त्वंवानस्यादित्यशक्यशंकं । मतभेदात्प्रत्यक्षेणानुमानेनवातत्रतथात्वस्यनिश्चयात् ॥ तथा " नगृह्यतेचक्षुषानापिवाचा ॥ अप्राप्यमनसासह " इतिप्रत्यक्षाद्यविषये " तंत्वौपनिषदंपुरुषंपृच्छामि " इतिबृहदारण्यकपंचमाध्यायस्थशाकल्यब्राह्मणश्रुत्या-( अ० २ पा० १ सू० २७ ) " श्रुतेस्तुशब्दमूलत्वात " इतिसूत्रतश्चवेदैकसमधिग-म्यैब्रह्मणि उक्तप्रभृतिश्रुतिसूत्रैः अहंसर्वस्यप्रभवः अव्यक्ताद्यक्तयःसर्वाः घटस्यैमृ-त्स्नेवपरःपरस्मादित्यादिस्मृतिपुराणैश्चपरिणाम्युपादानतायाः " अविनाशीवाअरेय-मात्मा " ( अ० ४ पा० ४ सू० १९ ) " विकारावर्तिचतथाहिस्थितिमाह" आ-नंदमात्रमविकारमनन्यदन्यत् सत्तामात्रंनिर्विकारंनिरीहं इत्यादिश्रुतिन्यायपुराणैरवि-कारितायाश्चसिद्धतयानान्यतराश्रयेणेतरापराकर्तुंशक्या ॥ एतेन यहिल्तयाहेम्नो-विकारित्वादेरेऽपिब्रह्मणिपरिणामित्वेनविकारिताशंकानिवारिता वस्तुतस्तुसूवर्ण-मपिनैवविक्रीयते ॥ विकारोहितात्त्विकोऽन्यथाभावइतिसर्वसंमतं ॥ अत्रता-त्त्विकपदंसूवर्णादेःकटककरुचकादिभावेपिसूवर्णत्वानपगमेनतत्परिणामेऽतिप्रसंगवा-रणाय ॥ अतोदुग्धादेर्दध्यादिरूपतयापरिणतिरेवविकारः तत्रदुग्धत्वाद्यपगमा-त् ॥ अतएव पयस्कामनदधिनोरीक्रियते ॥ हेमकामेनतु कनकशकलकटक-रुचकस्वस्तिकादिकंसकलमपिस्वीक्रियते ॥ तथाचायंमामकचिंतामणौसंग्रहः वि-कृताविकृतत्वाभ्यांपरिणामोद्विधामतः विकृतंसत्परिणमेत्कारणंकार्यरूपतः नपुनः-कारणात्मत्वंविकृतःसोभिधीयते दुग्धंदधियथाजातंपुनर्दुग्धंनजायते कार्यात्मना-परिणमेत्कारणंत्वविकारिसत् पुनःकारणरूपत्वमेषोविकृतउच्यते नानाभूषादिरूपे-णरजतंपरिणामिहि मध्येतदेवचांतेपितत्पुनःस्याद्विलापने असौवेदांतसिद्धांतःशुद्धां-तःकरणप्रियः परिणामोह्यविकृतःसाक्षाच्छ्रुत्यादिसंमतस्ति कटकादौभेदव्यपदेशस्तु-वाङ्मात्रारब्धः ॥ अतएव " वाचारंभणंविकारः " इतिसंगतं ॥ विशदीकृतंच-प्राक् ॥ सुवर्णस्याविकारित्वादेवतत्रैव " यथासोम्यैकेनलोहमणिनासर्वंलोहमयं-विज्ञातंस्यात् " इतिदृष्टांतः ॥ अन्यथात्वत्संमतदृष्टांतानपहायविकारापादकंदृ-ष्टांतंश्रुतिःकिमितिवदेत् ॥ वाक्यस्यपूर्वापरभागौचपरस्परंविरुध्येताम्॥किंच तत्रदृ-ष्टांतोक्तंमृल्लोहादिकंपरिणाम्येवनतुशुक्त्यादिवन्मृन्मयलोहमयादेरधिष्ठानं ॥ अतो-पिब्रह्मणःपरिणामित्वमेवश्रुतिसंमतं नतुविवर्त्तवादः ॥ अन्यथानिःसंदिग्धंशुक्तिर-जतादिकमेवदृष्टांतीकुर्यात् ॥ नतुसुतरांविरुध्धंमृदादिकं ॥ दृष्टांतयतितुतदेवनतु-क्वापित्वदभिमतंकिंचित् सर्वत्रश्रुतिषुतादृशदृष्टांतानामेवसत्वेपिविवर्तवादएव तासां-तात्पर्यमितिकल्पनातु वाक्यस्थगमकाभावान्निर्मूलैव ॥ परिणामित्वानादरेचअ-

भिन्ननिमित्तोपादानवादोभज्यंतैव ततश्च अनेकश्रुतिविप्लवः ॥ नचाधिष्ठानोपादा-
नतयातत्सिद्धिः अधिष्ठानस्योपादानतायाएवमनोराज्यविजृंभितत्वात् ॥ शुक्त्यादौ-
रजतादेःसमवायेनविद्यमानत्वाभावात् ॥ ॰समवायस्तुनैयासेऽस्मद्दर्शनेतादात्म्यमेवे-
त्यन्यत्रविस्तरः ॥ अनुपादानत्वादेवघटकटकादिकामेनमृत्तिकाकनकादिकमिवर-
जततैलधारादिकामेननहिशुक्तिरज्वाद्युपादीयते ॥ नापिघटादौदर्शनमात्रेणमृदा-
द्युपादानकत्वमिवरजतादिदर्शनेनतत्रशुक्त्याद्युपादानकतावगम्यते नचप्रकृतेपिब्रह्मो-
पादानकत्वंकार्यदर्शनादनिर्णयमितिशंक्यं ॥ अस्तिभातिप्रियैःसच्चिदानंदोपादानक-
तायानिर्णयात् ॥ किंचयद्यस्योपादानंनियमेनततएवतस्योद्भवोदृष्टः ॥ रजता-
दिकंतुशुक्त्यादिकमंतरेणोद्भवति ॥ तत्ख्यातिश्चत्रपुससीसकुरुविंदविशेषादावपि-
भवति ॥ नापिब्रह्मणोऽधिष्ठानताबाधकंकिंचिदपिश्रुतिवाक्यमुपलभ्यते ॥ उ-
पलभ्यंतेतुपरिणामबोधकान्येव तानिचाधिकानिवक्ष्यंते ॥ एतेन यत्तुव-
स्तुनइत्यादिविरोधादित्यंतमपास्तं ॥ यदिचतात्त्विकपदमपहायान्यथाभावए-
वविकारइत्युच्यते तदापिसुवर्णस्यनविकारः कटकाकृतिमुपमृद्यरुचकाकृते-
र्निर्माणेपिसुवर्णत्वस्योभयत्राप्यनपायात् ॥ नहिरुचकः कटकस्यकार्यमितिवदंति-
येनविकारःस्यात् किंतुसुवर्णस्यकार्यं ॥ किंच तथासति तवब्रह्मणोविकारोदुर्वा-
रः तत्रविवर्तरूपान्यथाभावसत्वात् ॥ नचप्रातीतिकःसइत्यदोषः चेतनस्यब्रह्मण-
एवतथाप्रतीतिसत्वेनविकारानुपरमात् ॥ नचाविद्योपहितस्यैव तथाप्रतीत्यानदो-
षइतिवाच्यं उपहिततायाअप्यन्यथाभावरूपतयाविकारत्वात् नचयस्मिन्विकारः
सोविकारीत्युपपद्यते इतित्वयैवकथनात् ॥ नचोपहितत्वमपिनास्त्येवेतिवाच्यं मो-
क्षसाधनानांतदुपदेशकशास्त्रगुर्वादेश्चानर्थक्यप्रसंगात् एवंसति तावकानांकिमर्थो
मतप्रवर्तनप्रयासः ॥ एतद्भयात्तात्विकपदनिवेशेसुवर्णादिकमविकारीति तद्वद्ब्रह्मा-
प्यविकार्येव ॥ यत्तु ( पूर्वाकारपरित्यागेन आकारांतरापत्तिस्तत्रदृश्यते ) इत्या-
दि ॥ तन्न ॥ स्वापोत्तरमुपवेशनेपूर्वाकारपरित्यागेपिविकृतइदानीमयंपुमानित्यभिला-
पाभावात् ॥ अस्माकंतुकटकरुचकाद्याकाराणां हिरण्यआविर्भावतिरोभावावेवेति-
नकोपिचोद्यावकाशः ॥ नचाकाराणांध्वंसादिकंकल्प्यं मुहुरनेकधाशयनोपवेशनो-
त्थानादावनंताकाराणामनंतप्रागभावध्वंसकल्पनेमहागौरवात् सएवायं शयनाद्या-
कारइति प्रत्यभिज्ञानाच्चेतिदिक् ॥ एतदेवाभिप्रेत्यमूले **पूर्वाकारपरित्यागा-
भावादित्युक्तं** ॥ किंच कटकादिभावेपिसुवर्णपदार्थत्वमक्षतंव्यवह्रियते ॥ " जा-
त्याकृतिव्यक्तयः पदार्थः " इतिचतल्लक्षणं इत्यप्येकायुक्तिरित्याशयेनोक्तं ॥ **अ-
न्यथेत्यादि** एवंसुवर्णस्याविकारित्वमेव तत्तदाकाराणां तत्तद्यपदेशानां चकारण-
मतत्त्वमेवाभिप्रेत्यप्रवृत्तः श्रौतसुवर्णदृष्टांतस्तथैवोपबृंहणेषुस्फुटीकृतः ॥ यथाएकाद-
शस्कंधेऽष्टाविंशे ( श्लो० १९ ) यथाहिरण्यंसुकृतं पुरस्तात्पश्चाच्चसर्वस्यहिरण्म-

यस्य ॥ तदेतन्मर्त्येऽव्यवहार्यमाणं नानापदेशैरहमस्यतद्वत् इति ॥ द्वादशस्कंधेचतुर्थे ( श्लोक० ३० ) यथाहिरण्यंबहुधासमीयते नृभिःक्रियाभिर्व्यवहारवर्त्मसु एवं-वचोभिर्भगवानधोक्षजो व्याख्यायतेलौकिकवैदिकैर्जनैरिति नत्वस्माभिः कपोल-कल्पनयासुवर्णदृष्टांतोक्रियते ॥ अतोदृष्टांतस्यप्रमाणसिद्धत्वात्तस्यविकारित्वेतत्वा-पिब्रह्मणितदापत्तिः ॥ मायाश्रयणेतुदृष्टांतासंगतिः ॥ तत्रापितदाश्रयणेसुवर्ण-स्याविकारित्वसिद्धिः ॥ एवमपिनिर्विकारेएवाविकारांगीकारान्नाशोत्पत्तिमतिननित्यतांगीकृतिप्रसंगः ॥ एतावता किंचपूर्वैत्यादिस्यादेवेत्यंतंनिरस्तं ॥ यच्चएकरस-तायाइत्यादि व्याप्यत्वादित्यंतं तदपिमदपिहितमतिमूलकं ॥ किमिदमेकरस-त्वंनाम ॥ सार्वदिकं वस्तुनएकरूपत्वमुतान्यथाप्रतीतेरप्यविषयत्वं ॥ नद्वितीयः ॥ प्रपंचप्रतीत्यातवाप्येकरसताभंगप्रसंगात् ॥ आद्यश्चेत् मन्मतेवस्तुतः सर्वदासर्वत्रसर्वाकारमेव स्वाभिन्नस्वाभाविकसर्वधर्मविशिष्टमेव ब्रह्मास्तीति नै-करसत्वाभावः कार्येष्वाकारादिपरिच्छेदतत्तन्मात्रधर्मकत्वादिप्रत्ययस्तुविचित्रश-क्तिकस्यभगवतइच्छयातत्रतत्रप्रतीयमानातिरिक्तसर्वाकारधर्माणांतिरोधानमूलकः ॥ अतएवब्रह्मविदांसदासर्वत्रतादृशब्रह्मप्रतीतिःप्रमारूपोपपद्यते॥ एतावतानित्यतापिनिराबाधा ॥ सर्वेषांरूपाणांब्रह्मण्येवसत्त्वेनतत्रतत्रतत्तन्मात्ररूपाविर्भावेनचरूपांतरापत्तेरभावात् ॥ यदिपूर्वमविद्यमानंकार्यरूपंपश्चादापन्नमित्युच्येत तर्ह्यर्थवैनाशिकप्रक्रियापातादसत्कार्यवादः स्यात् ॥ नचसोस्मत्संमतः ॥ अतोनास्माकंतथा ॥ रूपांतरापत्तेरेवानित्यत्वव्याप्यत्वमितितुनवयंवदामः नापितार्किकादयस्तथाव्याप्तिंवदंति ॥ पिलु-पाकपक्षेपाकेनपार्थिवपरमाणूनां रूपांतरापत्तावपितेषामनित्यतानंगीकारेणव्यभिचा-रात् ॥ अतः कस्यसंमतेयंव्याप्तिः ॥ नन्वहमेवतथामन्येकिमन्येषामपेक्षयेतिचेत् ॥ त्वन्मतेतुरूपमात्रमनित्यत्वव्याप्यमितिमंतव्यं नतुरूपांतरापत्तेरेवतत्वं । नित्यस्यरू-पवतस्तवाप्रसिद्धत्वात् ॥ दृश्यंमिथ्येतिव्याप्तिस्वीकारात् ॥ यच्च अन्यथेत्यादिसं-गच्छेतेत्यंतं तत्तुपरमतपरमतत्वानवबोधविलसितं । लोकेदुग्धादेर्दध्यादिभावेविका-रस्याप्यस्मदनुमतत्वात् ॥ नचैवमविकृतपरिणामवादभंगःशंक्यः तद्दुग्धादेरेवविकृ-तपरिणामोजगदाविर्भावदशायां ॥ ब्रह्मणस्तुसर्वमविकृतःसएवेतिस्वीकारात् ॥ अतोलो-केदध्यादेरेवनपुनः प्रकृतिभावः सर्वस्यजगतस्तु वस्तुतो ब्रह्मभावः प्रतिसंचरेसं-पद्यतएव "यत्प्रयंत्यभिसंविशंति ॥ पूर्णमेवावशिष्यते ॥ भवानेकः शिष्यतेशेषसं-ज्ञः ॥ ( अ० २ पा० ३ सू० १४ )" विपर्ययेणतुक्रमोतउपपद्यते " इत्यादिश्रुति-स्मृतिन्यायैः ॥ अतोदुग्धादिन्यायेनसंभावितविकारवारणायापीश्वरेऽहिकुंडलदृष्टांतः सूत्रकृतोपन्यस्त संगच्छतएव त्रिसूत्रेतत्राधिकरणे (अ०३पा०२सू०२७) " उभयव्य-पदेशात्वहिकुंडलवत् "इति सिद्धांतसूत्रस्य पूर्वोत्तराधिकरणसंबंद्धोमुख्योद्देशस्तुसंराधकानुभवगोचरानेकब्रह्माकाराणां वास्तवतास्थापनलक्षणोमूले भाष्यंप्रकाशंच तत्वतः

संगृह्णद्भिःसम्यगेवदर्शितः ॥ एतेनैवचप्रपंचरूपतयानानाकारैःपरिणतावप्यविकारिता- निर्धारिताभवति ॥ एतदेवोरसिकृत्यमूले **नहिविकारिवैलक्षण्यमात्रसंपादना- र्थोयंप्रकार** इतिमात्रपदमुपात्तं । युक्तंचैतत् ॥ उभयोर्विरुद्धधर्मयोर्व्यपदेशाच्छ्रुति- षुनिर्गुणत्वेनानंतगुणत्त्वेनचपरिणामित्वेनाविकारित्वेनच एवंविधविरुद्धधर्मांतरैश्चक- थनात्तत्रतत्रोक्तोभयलिंगंब्रह्म एकस्याविकारितयाऽनेकाकारत्वेदृष्टांतस्त्वहिकुंडल- वदितीतितत्सूत्राशयात् ॥ एतच्चमार्तंडटीकाविद्वन्मंडनादिषुस्फुटं ॥ अतएवसूत्रेसामा- न्यतउभयव्यपदेशोहेतूकृतः ॥ प्रकाशेप्यन्यतरवाक्यस्योपजीव्यत्वांतरंगत्वकल्पन- स्याशक्यत्वकथनेन " एतेष्ववंविधेष्वन्येष्वपिउभयरूपेणव्यपदेशात्" इतिव्याख्या- नेनचपरिणामित्वाविकारित्वादिबोधकवाक्यानामप्यत्रसंग्रहः स्फुटमेवबोधितः ॥ त- स्माद्यथासर्पःस्वेच्छयेतिसृष्टिप्रकरणस्थाऽपिमार्तंडकारिकानिरवद्यार्थैव ॥ अस्यांका- रिकायांव्यासैःसूत्रेनिरूपितमितिपाठेपिव्याससूत्रैरिततस्यकपोलकल्पनाःप्रकृतसूत्रा- र्थकथने **युक्त्यावेति** ॥ श्रुत्यननुकूलयाकेवललौकिकयुक्त्या ॥ **यत्रैवास्थूले-** **ति** ॥ बृहदारण्यकपंचमाध्यायस्याष्टमब्राह्मणे ॥ **यत्रशारीरेति** तत्षष्ठाध्यायस्य- चतुर्थब्राह्मणे ॥ यद्यपि " सएषनेतिनेत्यात्मा " इतिवाक्यंतत्रैवाध्यायेद्वितीयब्रा- ह्मणेपिपठ्यते ॥ अस्तिचतत्रापिशारीरनिरूपणंतथाप्यत्रोदाजिहीर्षितःपूर्वापरवाक्य- संदर्भश्चतुर्थएवातोयत्रशारीरब्राह्मणइतिपदद्वयंप्रकाशकारैरुक्तमिहचानूदितम् ॥ **एवं-** **यत्रेति** ॥ तैत्तिरीयेनारायणप्रपाठके ॥ **संराधकभक्तेच्छयेति** ॥ इदं ( अ० ३ पा० २ सू० २४ ) "अपिसंराधनेप्रत्यक्षानुमानाभ्यां " इतिपूर्वाधिकरणसिद्धांतसूत्र- लभ्यं ॥ **प्रमाणश्रुतदृष्टइति** ॥ अव्यक्ताद्यधिकरणोक्तैःप्रमाणैःश्रुते ॥ साधन- सिद्धैर्दिव्यचक्षुरादिप्रमाणैर्दृष्टेनुभूते ब्रह्मणीत्यर्थः ॥ **शरीरादीनामिति** ॥ अत्र " लोकेपिशरीरांतः करणादीनांपरस्परविरुद्धदयामारकत्वादीनिविषयभेदेनैकस्मिन्नपि- क्षणेप्रतीयंते " इतितत्सूत्रस्यभाष्येउक्तंब्रह्मणउभयलिंगत्वेदृष्टांतांतरंतत्रत्यप्रकाशाक्ष- राण्येवानुवदद्भिस्संगृहीतंज्ञेयं " तत्तद्वपुःप्रणयसे " इतिगर्भस्तुतिवाक्येप्रणयनंतु प्रणीताप्रणयनादिवत्प्रापणमेव नतुनिर्माणमित्याशयेनाहुः ॥ **ब्रह्मणस्तत्तदित्यादि** **यथासर्पइति** यथासर्पः हि प्रसिद्धं स्वेच्छयाविविधकुंडलाकारतांप्राप्तोपि न विका- रीभवति तथाब्रह्मस्वेच्छयासंराधकेच्छाविशेषजनकतत्तत्फलदित्सारूपयाबहुस्या- मितिबहुभवनेच्छयावातत्तदाकारप्रकाशयदपिनविकारिभवति ॥ इत्थंव्यासैःप्रकृ- तसूत्रेनिरूपितमितिमार्तंडकारिकार्थः ॥ पूर्वंस्वर्णस्याविकारितायानिर्णयात् तद्वद्र- जतादिष्वितरधातुष्वपिसासंभवत्येवेतिसर्वतैजसानामविकृतत्वंभाष्योक्तं सर्वैरेवविद्व- द्भिराद्रियते ॥ एतेन सर्वाणीत्यादिविरोधादित्यंतमपिदत्तोत्तरं ॥ यत्तुधेनुरि- त्यादितत्प्रत्युक्तमित्यंतंतत्तुमूलएवविशदतयाप्रत्युक्तं तेनजन्माद्यस्ययतोन्वायादिति- श्लोकसुबोधिन्यां " यथाकामधेनोःकल्पवृक्षात् ॥ चिंतामणेर्मंत्रादेश्चजायमानाः- पदार्थादृश्यंतेनहितेविकृताभवंति " इतिश्रीमदाचार्योक्तिरनाकुलैव ॥ सहस्राक्षो-

त्प्रेक्षितानुनसुबोधिनी महाभारतेनवमस्कंधादिषुपुराणभागेषुचसहस्रार्जुनसत्कारावस-
रेजमदग्निधेनोःसकाशात् विश्वामित्रसत्कारावसरेवसिष्ठधेनोःसकाशाच्चविविधवस्तू-
त्पादोवर्णितः ॥ विश्वामित्रनीयमानायास्तस्याश्चरोमतोःशस्त्रपाणिम्लेंच्छगणोत्पत्ति-
र्निरूपिता ॥ तत्रचालौकिकप्रभावशालिन्याधेन्वाएवोपादानतासिध्यति नतु-
तत्रतेषामुपादानांतरंनिरूप्यते ॥ अतोधेनोरभिन्ननिमित्तोपादानतैवभारतादिसंमता ॥
एवंदेवतरुप्रभृतीनामपितथात्वंपुराणतंत्रादिषुद्रष्टव्यम् ॥ विस्तरभयाद्भारतादिवचना-
नितुनोदाह्रियंते ॥ तस्मात् धेनुप्रभृतिवद्ब्रह्मणः प्रकृतित्वमविकृतत्वंचनिर्बाधं ॥ त-
स्योपादानत्वाभावेभूयानुपनिषद्भागोबाधितार्थःस्यात ॥ सयथा ॥ बृहदारण्यकेमैत्रे-
यीब्राह्मणेआत्मज्ञानादिभिः " सर्वविदितं " इतिप्रतिज्ञायतज्ज्ञानंकिंप्रकारकमित्या-
कांक्षायां " ब्रह्मतंपराऽदाद्योन्यत्रात्मनोब्रह्मवेद " इत्यादिना " सर्वंतंपराऽदाद्योन्यत्रब्र
ह्मणःसर्वं वेदे " त्यंतेनवाक्यसप्तकेनप्रपंचेआत्मभिन्नत्ववेत्तुर्मोक्षाभावरूपंपराभवंप्रद-
र्श्य " इदंसर्वंयदयमात्मा " इत्यंतेनोपसंहारेज्ञानप्रकारदर्शनेनसर्वस्यात्माभेदो-
दर्शितः ॥ सचसर्वस्यात्मोपादानकत्वमेवगमयति ॥ तत्रैवपुरुषविधब्राह्मणे " आ-
त्मैवेदमग्रआसीत् " इत्युपक्रम्य " सस्सर्वंभवति " इत्यंतेनब्रह्मणएवप्रपंचरूपे-
णभवनमाम्नातं ॥ छंदोग्येपंचमेप्रपाठके " सर्वंखल्विदंब्रह्मतज्जलान् " इतिसर्वस्यत-
दुपादेयत्वमेवोक्तंतत्रैवनवमेसनत्कुमारसंवादे " आत्मैवेदंसर्वं " इतितत्राप्यग्रेआ-
त्मनएवप्राणाकाशादिभावआविर्भावतिरोभावौचश्राविता ॥ तत्राप्युपादानत्वमेव
सिध्यतिउपादानांतराश्रावणात् ॥ एवंतत्राष्टमेप्रपाठकेप्रतिज्ञादृष्टांताःसदेवसोम्येदमि
त्यादिकंचानुसंधेयं ॥ तैत्तिरीयेऽपि " आत्मनआकाशःसंभूतः " इत्याद्युक्त्वाकेव-
लनिमित्तताभ्रमवारणाय "तदात्मान ँ स्वयमकुरुततस्मात्तत्सुकृतमुच्यतइति" इत्यु-
च्यते ॥ एवंसर्वास्वप्युपनिषत्सुसृष्टिनिरूपणस्थलेप्रायेणस्पष्टंक्वचिद्गम्यमानंचेदमस्त्येवे-
तिदिक् ॥ किंच ब्रह्मणःप्रकृतित्वंप्रतिषेद्धुमिच्छतिभवान् ॥ सूत्रकारस्तुकंठरवेणतदु-
क्त्वाबहुहेतूपन्यासेनसाधयतोतितवमनोर्थोऽपार्थः ॥ तथाच प्रथमस्यचतुर्थेपंचसूत्र-
मधिकरणं ( सू० २३ ) " प्रकृतिश्चप्रतिज्ञादृष्टांतानुपरोधात् " इत्यादि ॥ तत्रमा-
यापरपर्यायायाःप्रकृतेरेवसमवायित्वंब्रह्मणःकेवलनिमित्तत्वमस्त्वितिपूर्वपक्षइदमुच्यते-
प्रकृतिःउपादाननिमित्तंचकारादाधारादिकंच यत्रयेनयतोयस्येत्यादावुक्तंब्रह्मैव ॥
कुतः ॥ एवंसत्येवप्रतिज्ञादृष्टांतयोरनुपरोधात् ॥ छांदोग्यबृहदारण्यकमुंडकादि-
षु " येनाश्रुतंश्रुतं इदंसर्वंविदितं ॥ विज्ञातेसर्वमिदंविज्ञातंभवति " इत्यादावेक-
विज्ञानेनसर्वविज्ञानप्रतिज्ञा " यथासोम्यैकेनमृत्पिंडेन " इत्यादयः " सयथादुंदुभेर्ह-
न्यमानस्य " इत्यादयः " यथोर्णनाभिःसृजतेगृह्णतेच " इत्यादयश्चदृष्टांतास्त-
दैवनोपरुध्येरन् ॥ यदिब्रह्मणएवोपादानादिसर्वविधकारणतास्यादित्यर्थः ॥ प्रपं-
चितंतुप्रागेवेदं ॥ कार्यस्यविवर्तत्वंब्रह्मणोविवर्तोपादानत्वंचवारयितुंतत्रैवद्वेवंतरमा-

ह ( सू०२४ ) " अभिध्योपदेशाच्च " इति " सोकामयतबहुस्यांप्रजायेयेति " इ-
त्यादौत्वस्यैवबहुभवनाभिध्यानेनबहुभावश्रावणात् ब्रह्मैवप्रकृतिः ॥ चकारात् " इ-
दंसर्वंयदयमात्मा " इतिसर्वस्यात्मत्वश्रावणाच्च ॥ अथवा "सर्वंखल्विदंब्रह्मतज्जला-
नितिशांतउपासीत " अत्रसर्वस्यब्रह्मत्वेततएवोत्पत्तिस्थितिलयान् हेतुत्वेनोक्त्वा-
सर्वस्यब्रह्मतयाभिध्यानंविधीयते ॥ चकारादेकत्वेनपृथक्त्वेनेत्यादिश्रुतावपितथा अ-
तोब्रह्मैवप्रकृतिरित्यर्थः ॥ लिंगमुक्त्वाश्रुतिमाह ( सू० २५ ) साक्षाच्चोभयाम्ना-
नात् " इति ॥ साक्षाच्छ्रुत्यास्मृत्याचतस्यप्रकृतित्वमुच्यते ॥ कुतः ॥ उभयोः सृष्टि-
प्रलययोस्ततएवाम्नानात् ॥ शिलकप्रवाहणादिकथायां " आकाशादेवसमुत्पद्यंते
आकाशंप्रत्यस्तंयंति " इत्यादौ अर्हंकृत्स्नस्यजगतः प्रभवः प्रलयस्तथेत्या-
दौचततएवोद्भवस्तत्रैवलयश्चश्रूयते ॥ इदंतत्परिणामत्वएवोपपद्यते ॥ सर्वत्रवाक्येषू-
पचारवारणायाह ॥ ( सू० २६ ) " आत्मकृतेः परिणामात् " इति " तदात्मान
२ स्वयमकुरुत " इत्यत्रात्मनएवजगद्रूपेणकृतिः स्वस्यैवकर्मकर्तृभावश्चश्रूयते ॥ सा
चप्रकृतिः परिणामात् ॥ अतः सुवर्णादिवद्ब्रह्मवाविक्रियमाणंप्रकृतिः ॥ एतेनपरिणाम-
वादएवसूत्रकाराभिप्रेतः सिध्यति ॥ परिणामशब्दस्यकंठरवेणोपादानात् भ्रमविव-
र्तादिशब्दानांसूत्रेषु क्वाप्यकथनाच्च ॥ विवर्तवादस्तदभिप्रेतइतितुकल्पनामात्रं ॥
शुक्रशोणितसंनिपातजन्यशरीरवत्सुतस्यकारणत्वाभावमाशंक्यतेष्वपिमूलकारणत्वं -
तस्यैवाह ॥ ( सू० २७ ) " योनिश्चहिगीयते " इतियोनिश्चकारात्कर्ताचपरमात्मै-
व ॥ हियुक्तमिदं " सदेवसोम्य ॥ आकाशादेव ॥ आनंदाद्ध्येव " इत्यादावन्य-
व्यावर्तनात् ॥ " कर्तारमीशंपुरुषंब्रह्मयोनिं ॥ यद्भूतयोनिंपरिपश्यंतिधीराः " इतिमुंड-
कादिषुतथैवगीयते तस्मात्तस्यैवपरिणाम्युपादानत्वं निमित्तत्वमाधारत्वादिकंचेतिसि-
द्धं ॥ किंचद्वितीयस्यप्रथमपादेऽपि (सू० ४ ) नविलक्षणत्वादित्यादित्रिसूत्रेतृतीयस्मि-
न्नधिकरणेजगद्ब्रह्मणोर्वैलक्षण्येपि वृश्चिकगोमयादिवत्कार्यकारणभावंसमर्थ्य (सू० ७ )
असदितिचेन्नेत्यादिपंचसूत्रेचतुर्थेअसतः कारणतानिरासेनब्रह्मणएवतथात्वमुपपाद्य-
काणादादिवादानामपरिग्रहमेकेनसूत्रेणोक्त्वा ( सू० १३ ) भोक्त्रापत्तेरित्येकेन कट-
ककुंडलादिपरिणामितौल्यं पुनर्दृढयित्वात्रिसूत्रेतदनन्यत्वाधिकरणेकार्यस्यब्रह्मान-
न्यत्वं सत्यत्वंचसाधयित्वा ( सू० १७ ) असद्व्यपदेशादित्यादिचतुःसूत्रे-
कार्यस्यासत्यतानिरासपुरः सरंतदेवप्रतिपाद्य ( सू० २१ ) इतरव्यपदेशादित्यादित्रिसू-
त्रेचेतनस्यकारणत्वेप्राप्तान्हिताकरणादिदोषान् " पादोस्यविश्वाभुतानि " इत्यादौदृष्ट
व्यादिवाक्येषुचब्रह्मणः कार्यापेक्षयाधिक्यसिद्धेः केशप्रसाधननखनिकृंतनादिन्यायेन-
परित्यत्यतत्रैववदति (सू. २३) "अश्मादिवच्चतदनुपपत्तिः " इति ॥ पार्थिवत्वाविशे
षेपिहीरमाणिक्यसाधारणपाषाणानांआदिपदात्पलाशचंपकचंदनादीनांचयथाच्चनीच

त्वमेवंजीवस्यांशत्वाविशेषेपिब्रह्मादिस्थावरांतानामुच्चनीचत्वं ॥ अतोवाद्युक्तदोषा नोपपन्नाइत्यर्थः ॥ एतावतापिब्रह्मपरिणामवादएवसिद्धः ॥ अग्रेचब्रह्मणएवसर्वविध कारणतयालोकेमृत्कुलालादिवदितरकारणापेक्षावारणाय (सू० २४) "उपसंहारदर्शनान्नेतिचेन्नक्षीरवद्धि" इत्यादिषट्सूत्रमधिकरणमारब्धं ॥ तत्राद्यसूत्रेयथाक्षीरंकारणांतरानपेक्षमेवदधिरूपेणपरिणमतितथाब्रह्मापि स्वयमकुरुतेत्यादिश्रावणादितिसाधितं इतरनिरपेक्षपरिणाममात्रेक्षीरदृष्टांतोनतुविकारित्वे ॥ सोपिप्रवचनसूत्रेक्षीरस्यदृष्टांतीकरणात्तत्संप्रतिपत्तिदर्शनायेहाप्युपात्तः श्रोतृबोधसौकर्योपयोगिनः श्रोतृवक्तृसंप्रतिपन्नार्थस्यैवदृष्टांतत्वात् ॥ क्षीरवत्प्रामाणआतंचनाद्यपेक्षायाविकारस्यचवारणायाह (सू० २५) "देवादिवदपिलोके" इति ॥ यथादेवऋषिपितृप्रभृतयइतरनिरपेक्षाएवसृजंतिस्वयंबहुरूपाश्चभवंतिनचतेविक्रियंतेतथाब्रह्मापिस्वेतरनिरपेक्षमविकृतंचेत्यर्थः ॥ अत्रादिपदात्चिंतामणिकामधेन्वादयोपिसंगृह्यंतेअतएवसमुच्चयार्थोपिशब्दःएतेनापिसहस्राक्षोक्तंसर्वंप्रत्युक्तं॥ ततस्तत्रतृतीयेसूत्रेकृत्स्नप्रसक्त्यादिदोषमुद्भाव्यचतुर्थेश्रुतिबलात्तन्निरस्यपंचमेसर्वानुपपत्तिपरिहारायविचित्रशक्तिकत्वंब्रह्मणिसाधयित्वाषष्ठेन्यथापरपक्षस्याप्यनुद्धरणीयादोषाःसूचिताःअतोब्रह्मणएवनिमित्तत्वमिवपरिणामित्वमपिसिद्धमेवेत्यलंप्रसक्तानुप्रसक्त्या॥तदेतत्सकलमनुसंधायोक्तंमूलेतथैवब्रह्मणोपिविविधाकारत्वंनचविकारित्वमितियदिचब्रह्मणःशुक्तिवदधिष्ठानत्वंसूत्रकृदभिप्रैष्यततर्हिक्षीरंदेवादीन्वादृष्टांततयानैवन्यरूपयिष्यत्तेषांपरिणामित्वात्तदध्याद्यधिष्ठानत्वाभावात् ॥ किंतुशुक्त्यादिकमेवावक्ष्यत्अतोपिपरिणामवादएवतत्संमतःसिध्यति ॥

किंच त्वन्मतेब्रह्मणोनिर्विशेषत्वस्वीकारा " प्रकृतैतावत्वं हिप्रतिषेधति ततोब्रवीतिचभूयइतिसूत्रविरोधस्तत्रप्रकृतेगार्ग्युपक्रांतेप्रश्नेयदेतावत्परिदृश्यमाना यावंतःपदार्थालौकिकास्तेषामेवधर्मान्निषेधति प्रतीतस्यैवहिनिषेधात् अतोजगद्वैलक्षण्यमेवास्थूलादिवाक्यैःप्रतिपाद्यते ॥ ननुवेदोक्ताब्रह्मधर्मानिषेद्धुंशक्यंते कुतएतदवगम्यते तत्राह ॥ ततोब्रवीतिचभूयः यस्मिन्नेववाक्येपूर्वंनिषेधतितस्मिन्नेववाक्येपुनस्तमेवविधत्ते "यतोवाचोनिवर्त्तंतेअप्राप्यमनसासहआनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चन" इतिवाक्येज्ञानकारणाप्राप्तिकथनमुखेनपूर्वार्द्धेज्ञानंनिषिध्योत्तरार्द्धे तद्विधत्ते एवमस्थूलवाक्येपि " अवागमनः

असुख " मितिप्रशासनकारणनिषेधमुखेनप्रशासनंनिषिध्य ए-
तस्यैवेत्यादिना तद्विधत्ते एवंसर्वधर्मनिषेधमुखेनवेद्यत्वंनिषि-
ध्य " एतद्विदित्वा " इत्यादिनातद्विधत्ते ॥ तथा " नतदश्नो-
तिकंचनेतिव्याप्तिंनिषिध्या " काशओतश्चप्रोतश्चे" त्यनेन तां
विधत्ते तथाचकर्मणिव्यक्तिभेदेनषोडशिग्रहणाग्रहणवन्नित्ये-
प्येकस्मिन्ब्रह्मणिज्ञेयत्वाज्ञेयत्वप्रशासितृत्वाप्रशासितृत्वादीना-
विकल्पस्याशक्यवचनत्त्वात् वाक्यस्याबोधकत्त्वापत्त्यातन्नि-
वृत्त्यर्थंलौकिकंनिषेधति अलौकिकंतंधर्मंविधत्ते इतिव्यव-
स्थामंतव्या इत्यलौकिकधर्माश्रयत्वेऽपिनिर्विशेषत्वविरोधात्ता-
दृशसूत्रविरोधोदुर्वारएव ॥ ननुमैवंपरत्रोक्तिमात्रस्यप्राबल्या-
प्रयोजकत्वेनश्नौतितावत्त्वस्यैकतत्रनिषेधादतएव " नतत्ररथा-
रथयोगाःपंथानोभवंत्यथरथानथयोगान्पथःसृजती" त्यत्रसृष्टेः-
परत्रोपन्यासेऽपिनसत्यत्वमितिचेन्मैवं नहिपरत्रोक्तिमात्रस्यप्राब
ल्यंवयंब्रूमः किंतु परस्परविरुद्धवाक्यानांव्यवस्थामंतरे-
णाप्रामाण्यंस्यादतोब्रह्मण्येकरूपेतेषामेवधर्माणांनिषेधःसत्वंचा-
नुपपन्नमतोलौकिकालौकिकभेदेनव्यवस्थाभवद्भिरप्यवश्यंक-
ल्पनीया ॥ यदिब्रह्मधर्माणामपिस्वाप्नपदार्थवत्सत्यत्वमेकत्या-
त्तर्हिस्वाप्नपदार्थस्यैव " मायामात्रंतुकार्त्स्न्येनानभिव्यक्तस्वरूप-
त्वा " दितिसूत्रेणव्यासोनब्रूयात् तस्माद्ब्रह्मधर्माणांसत्यतथा-
तादृशसूत्रविरोधस्तन्मतेदुर्वारएव किंच यतोवाचोनिवर्त्ततंइ-
तिवाक्ये अस्थूलादिवाक्येचपूर्वंब्रह्मणएव"सत्यंज्ञानमनंतंब्रह्मे"-
त्युपक्रमे एतद्वैतदक्षरंगार्गीत्यत्रचप्रकृतत्वात्प्रकृतेब्रह्मणियदेताव-
त्वंप्रतिषेधतीत्ययुक्तमितिकथनमसंगतं ॥ द्वेवाबब्रह्मणइत्या-

दिप्रलापस्त्वस्मदभिमतविषयवाक्याज्ञानमूलकत्वादुपेक्ष्यः ॥ (कस्तर्हिसूत्रार्थइतिचे) दित्युक्तायत्सूत्रव्याख्यानंप्रदर्शितं तत्तु-द्दोषदूषितत्वादनुपादेयं ॥ केदोषाइतिचेच्छृणु ॥ त्वदुक्तव्या-ख्यानेमूर्त्तामूर्त्तप्रतिषेधस्यप्रकृतंप्रतिषेधतीत्येतावतैवसिद्धेरेताव-त्त्वमित्यस्य एतावत्वपदादरेचप्रकृतपदस्यवैयर्थ्यप्रसक्ते र्दुर्वार-त्वात् एतावत्वमितित्वप्रत्ययस्यभावेऽनुशिष्टत्वेन एतावतापरि-च्छिन्नस्यमूर्त्तामूर्त्तलक्षणरूपद्वयस्यतेनपदेनालाभात् त्वप्रत्य-यस्यषष्ठ्यंतादनुशिष्टत्वेनतृतीयांतादभवनेनापितथात्वाच्च ॥अ-थतन्नविग्रहवाक्यंकिंत्वर्थमात्रकथनमित्युच्यतेतदापिरूपद्वया-त्मकस्यसर्वस्यप्रपंचस्यपरिच्छिन्नांतर्निवेशादेतावतेत्यत्राभिप्रेत-स्यपरिच्छेदकस्यालाभेनासंगतिः ॥ नचलौकिकप्रमाणमेवत-थेतिवाच्यं जन्मादिसूत्रव्याख्यानेमनसाप्यचिंत्यरचनारूपस्ये-तिस्वोक्तस्यप्रपंचविशेषणस्यविरोधेनतथावक्तुमशक्यत्वात् ॥ किंचात्रमूर्तामूर्त्तरूपद्वयंयत्प्रकृतत्वेनत्वयाविवक्षितंतस्यप्राधान्यं-किंस्वेनरूपेणब्रह्मरूपत्वेनवा ॥ नाद्यः ब्रह्मणोरूपेइतिविशेषण-वैयर्थ्यप्रसंगात् द्वितीयेतु ब्रह्मणएवप्राधान्यंब्रह्मपरिचायनार्थमे-व रूपद्वयस्यकथनात् ब्रह्मणएवात्रोपदेश्यत्वाच्च ॥ नचसंबंध-षष्ठ्यंतपदेनबोधनाद्ब्रह्मणोऽप्राधान्यमितियुक्तं राहोःशिरइति-वदभेदेपिषष्टीसंभवेनसंबंधषष्ठ्येवेत्यत्रनियामकाभावादानंदंब्र-ह्मणोविद्वानित्यत्रत्वयाप्यभेदेषष्ट्याःस्वीकृतत्वात् कार्य्यैका-रणानन्यत्वस्यभगवतासूत्रकारेणोक्ततयाद्वेवावब्रह्मणोरूपेइत्य-त्र ब्रह्माभिन्नेरूपेइत्यर्थस्यवक्तुमुचितत्वाच्च ॥ अतोब्रह्मणः-प्राधान्यस्याविघाता "द्वलतेब्रवाणी" तिवाक्योपन्यासे-

नस्वयमेवोपक्रांतत्वांगीकारादग्रे उपदेश्यत्वाच्च ॥ ब्रह्मणःप्र-
कृतत्वसिद्धौतस्मिन्नेतावत्त्वंपरिच्छिन्नत्वंप्रतिषेधतीत्येवव्याख्या-
तव्यंएतावच्छब्दस्यपरिच्छिन्नवाचकतायाःप्रसिद्धत्वात् ॥ त-
थाचमूर्त्तामूर्त्तमात्रत्वंब्रह्मणिनास्तीत्यर्थस्त्वन्मतेविषयवाक्याद्‌-
रेपिसिद्ध्यति ननुप्रकृतंयदेतावतापरिच्छिन्नमित्यर्थःसिध्यति-
एवंचनेतिनेतीतिश्रुतिव्याख्याने नञ्द्वयेन यथासंख्यं मूर्त्तामूर्त्तनि-
षेधेवासनाशेषात्तद्विहायभूतराशिवासनाराश्योर्निषेधांगीकारे
परिगणितनिषेधेनयदिनेदंब्रह्मकिमन्यद्ब्रह्मेतिशंकापत्तेस्तदपिवि-
हायवीप्सयायावद्विषयजातनिषेधोयोंऽगीकृतःसोपितथा ॥ भू-
तराशिनिषेधेकं.नुाक्तिकोदववासनाराशिनिषेधसंभवेनतदर्थंनि-
षेधापेक्षाभावात् त्यक्तेयथासंख्येवासनानिषेधावतारकप्रमा-
णाभावात्वासनाया अनुक्तत्वेनतन्निषेधस्याप्ययुक्तत्वाच्च ॥
अतएवनयावन्निषेधोपियुक्तः यदपि “ नह्येतस्मादितिनेत्यन्य-
त्परमस्ती ” तियोजनाद्वयंतत्रप्रथमयोजनायांनिषेधवीप्स-
याब्रह्मव्यतिरिक्ताभावउच्यते नपुनर्ब्रह्माभावस्तदेवदर्शयत्य-
न्यत्परमस्तीतिव्याख्यातंतदपितथा ॥ ब्रह्मव्यतिरिक्तनिषेधा-
नंतरंब्रह्मसत्ताप्रदर्शनस्य अन्यदस्तीत्येतावतैवसिद्ध्यापरपदवैय-
र्थ्यापत्तेःअतोव्यतिरिक्तनिषेधेनाव्यतिरिक्तत्वंसर्वस्यस्वीकृत्यता-
वन्मात्रत्ववारणायपरंब्रह्मान्यदस्तीत्यंगीकार्य्यमित्येवयुक्तं ॥
द्वितीययोजनायामपिपरपदवैयर्थ्यंपूर्ववदेव तदर्थंपरपदमुत्कृ-
ष्टार्थकतयाव्याख्येयं तत्रचाभावावसानएवनिषेधःसिद्ध्यती-
तिब्रह्मसत्तासाधनायततोब्रवीतिचभूयइतिसूत्रांशंनामधेयविष-
यत्वेनयोजयित्वानामधेयेनतत्सत्तांसाधयित्वानिषेधस्यब्रह्माव-

सानत्वमुपपादितं तदपितथानामधेयांगीकारेतद्वत्तासिद्ध्यायाव-द्विशेषशून्यत्वप्रतिज्ञाहानिप्रसंगात् नामधेयकथनमात्रेणैवतत्सत्तासिद्धेस्तन्निर्वचनश्रुतिवैयर्थ्यप्रसंगात् तदादरेचचक्षुषश्चक्षुरित्यादिवत्तन्नियामकत्वतन्मूलरूपत्वयोःसिद्ध्याप्रतिज्ञाहानितादवस्थ्याच्च ॥ एवमादयोऽन्येपिदोषाःसंतिग्रंथगौरवभयान्नोच्यंते ॥

## टीका

सहस्राक्षे ननुप्रकृतैतावत्त्वमित्यादिसूत्रंप्रतिकूलमित्यंतंभागंपरिहरंतिकिंचान्यन्मतइत्यादिनानोच्यतइत्यंतेन ॥ इदमधिकरणंतृतीयस्यद्वितीयपादे ( सू०१९ ) " अंबुवदग्रहणा " दित्यादिचतःसूत्रंसिद्धांतेवर्तते ॥ तत्रएकदेशिमतनिरूपणांतिमसूत्रेजलप्रतिबिंबितसूर्यादिवदौपाधिकधर्मोपपत्तिर्दर्शितेतिसाऽत्र " अंबुवदग्रहणात्तुनतथात्वं " इतिप्रथमसूत्रेणप्रतिबिंबनिरासान्निरस्ता ॥ ततउभयधर्मविरोधतादवस्थ्यात्सिद्धांतेतन्निरासायाह ( सू० २० ) "वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवं " अर्थस्तु ॥ महानवकाशोऽल्पोवकाशइतिलौकिकव्यवहारात् " यथावकाशंदशचमसान् " चयनेष्टकोपधानेपरितःचितिःस्रुगित्यादितत्तद्धोतृमंत्रैरुपधानोत्तरं "यथावकाशंग्रहान्यथावकाशंप्रतिग्रहान् " एवमादिवैदिकव्यवहाराच्चविभोरप्याकाशस्यशतंपंचाशदितिन्यायेनसर्वपरिमाणाश्रयतयादरीकरकाद्यंतर्भावात्प्रतीयमानंयथावृधिह्रासभाक्त्वंतथाब्रह्मणोपिसर्वधर्माश्रयस्यपृथ्वीजलादिकार्यान्तर्भावात्प्रतीयमानंसर्वगंधत्वाऽगंधत्वादिकंतत्तदुपासकहृदयादौस्फुरद्वृद्धिह्रासभाक्त्वंच ॥ तथासत्येवश्रुतित्वाविशिष्टद्विविधवाक्यानांतदुक्तोभयधर्माणांचसामंजस्यात्ब्रह्माप्येवमिति ॥ अत्रबीजंविषयवाक्येशांडिल्यविद्यायामाकाशात्मेत्युक्तिश्शिक्षोपनिषदादौ "आकाशशरीरंब्रह्म" इत्याद्युक्तिश्चेतिज्ञेयं ॥ संराधनवृध्यादिचतत्रतत्र " सक्रतुंकुर्वीत ॥ इतिप्राचीनयोग्योपास्व "इत्याद्युक्त्याबोध्यं ॥ आकाशएवावकाशइतितुनिर्णीतंप्राक् ॥ केचित्तुत्वदेहांतर्हृदयावकाशेत्यादिस्मृतिषुचप्रसिद्धतेनप्रथमस्यद्वितीये ( सू ७ ) अर्भकौकस्त्वसूत्रेदर्शितमिहप्रयोजनविशेषायविशलितंनचसर्वगंधत्वादिकंपृथिव्यादिस्थानगतमेवांतर्भावात्तत्रोपचर्यतइतिवाच्यंतत्रैवपादे (सू० ११)नस्थानतोपिपरस्येत्यादिनातन्निषेधात् ॥ जलादौसर्वत्रप्रतिबिंबस्यतौल्यात्तद्व्यादिपरमितरव्याख्यानंतूपेक्ष्यमित्यन्यत्रविस्तरः ॥ जलगतमपिसूर्यप्रतिबिंबंहिजलवृद्धौवर्धते

बलन्ह्रासेव. न्हसतिदृष्टांतेयहिलतयावृध्यादेरागंतुकत्वं मन्यमानंप्रतिहेत्वंतरमाह (सू० २१) "दर्शनाच्च" उभयसामंजस्यादेवमित्यनुवर्त्तते ॥ तथाच 'प्रादेशमात्रमभिविमानं॥ यदेकव्यक्तमनंतरूपं" इत्यादिषुतत्रसर्वविरुद्धधर्माणांदर्शनात्तुचकारादवतारदशाया-मुलूखलबंधनमृत्साभक्षणव्यादानमिथिलाप्रवेशादौतथाप्रत्यक्षाच्चवस्तुस्वभावतउभयसामंजस्याद्ब्रह्मैवमुभयलिंगमित्यर्थः ॥ एवंसाधितेपिवस्तुस्वभावंमन्यमानंबोधयितुंधर्म-विधिनिषेधवाक्यविषयव्यवस्थारूपायुक्तिः प्रकृतैतावत्सूत्रेणोच्यते॥ इयंचसर्वोपनिषत्साधारणी ॥ तेनयत्रयत्रवेदेब्रह्मणोधर्माणांनिषेधोविधिर्वातानिसर्वाण्यपि "यतोवाचः ॥ अस्थूलमनणु ॥ अपाणिपादः" इत्यादीनि "आनंदंब्रह्मणः ॥ एतस्यवाअक्षरस्य ॥ जवनः" इत्यादीनिचसर्वाण्यस्यविषयवाक्यानि ॥ नतुमूर्तामूर्तब्राह्मणमात्रंसूत्रेतदुपस्थापकस्यतथासर्वसंमतेश्चाभावात् ॥ अन्यथामूर्तामूर्तेहिप्रतिषेधतीत्येववदेत् ॥ तत्रापियथावृद्धिन्ह्राससूत्रेप्रतिबिंबप्रतिपादकानिदर्शनसूत्रउपाधिप्रवेशप्रतिपाद

---

## सहस्राक्ष.

ननु प्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्रवीतिचभूयइति सूत्रविरोधः ॥ अपाणिपादोजवनइतिलौकिकैतावत्त्वं निषेध्य जवनोग्रहीतेत्याह ॥ एवमस्थूलमनण्विइतिनिषेध्यैतस्यैवाऽक्षरस्य प्रशासनेगार्गीत्याहेतिचेन्न ॥ परत्रोक्तिमात्रस्य प्राबल्याप्रयोजकत्वेन श्रौतैतावत्त्वस्यैव तत्रनिषेधादतएव नतत्ररथारथयोगाःपन्थानोभवंत्यथरथान्रथयोगान्पथःसृजतीत्यत्र सृष्टेः परत्रोपन्यासेऽपि नसत्यत्वमिति मायामात्रंतुकात्स्न्येनेतिसूत्रेण स्वप्नस्य मायामात्रत्वं व्यासऊचे ॥ किञ्च प्रकृतशब्दस्योपक्रान्तार्थतायाः प्रसिद्धत्वेन लौकिकेतिव्याख्यानंनयुक्तम् ॥ एवं प्रकृते ब्रह्मणि यदेतावत्त्वं तत्प्रतिषेधतीत्यप्ययुक्तम् ॥ रूपद्वयस्यैव प्रकृतत्वात् ॥ द्वेवावब्रह्मणोरूपेमूर्तंचामूर्तंचेत्युपक्रम्य भूतपञ्चकस्य राशिद्वयेनाऽत्रैववर्णितत्वात् ॥ ब्रह्मणः षष्ठ्यन्ततया निर्दिष्टस्य तद्विशेषणत्वेनाऽप्रकृतत्वात् ॥ एतेन प्रकृते ब्रह्मणि प्रकृतस्य ब्रह्मणइतिव्याख्याद्वये ततोब्रवीतीत्याद्यनर्थकमापद्यते ॥ प्रकृतशब्देन ब्रह्मणः सत्त्वस्य सिद्धत्वात् इति विद्वन्मण्डनटीकोक्तं निरवकाशमस्माभिस्त.दृशव्याख्यानस्यानादृतत्वात् ॥ कस्तर्हि सूत्रार्थइतिचेत् प्रकृतं एतावत्त्वं वस्तुपरिच्छिन्नत्वं मूर्तामूर्तरूपत्वं प्रतिषेधति अथातआदेशोनेतीति तता निषेधानंतर भूयश्च ब्रवीति अन्यत्परमस्तीति सूत्रार्थइति गृहाण ॥ नच प्रकृतैतावत्पदयोरन्यतरस्य वैयर्थ्यमितिवाच्यम् ॥ अवैदिकस्य निषेधकमिति त्वादृशावासनावासिताशयनिवारणाय प्रकृतपदस्य प्रकृतपदार्थस्वरूपप्रदर्शनायैतावत्पदस्यचसार्थक्योपपत्तेः ॥ नहिशब्दाधिक्यमात्रेणाऽर्थाधिक्यं युक्तमतिप्रसंगात् ॥ तस्मात्तवैवेदं सूत्रं प्रतिकूलम् ॥

कानिचसर्वांगिविषयवाक्यानितथात्रापिएकस्यैवनिषेधकानिविधायकानिचसर्वांगि-
विषयवाक्यानिसंतु ॥ तत्रलौकिकानामेवनिषेधात्भाष्यप्रकाशेसोत्रप्रकृतपदस्यार्थः '
गार्ग्युपक्रांतेप्रपंचे " इतिव्याख्यातः ॥ तत्रगार्गीप्रश्नेवेतितूपलक्षणं ॥ भाष्यंप्रकाशंच-
तत्रत्यमेकीकृत्ययथोपयोगमनुवदंतःसूत्रार्थादिकमाहुः **तत्रप्रकृतइत्यादिना परि-
दृश्यमानाइति** गार्गीप्रश्नेहि " यदूर्ध्वंयाज्ञवल्क्यदिवोयदवाक्पृथिव्याः " इत्यादौ-
द्यावापृथिवी भूतं भवत्भविष्यच्चेत्याकाशांताःअपंचीकृतसर्वपदार्थाःसंग्रहेणपरिदर्शि-
ताः संति ॥ अतोगार्गीप्रश्नेतयाप्रकृतेप्रपंचेयेपदार्थाः परिदृश्यंतेलौकिकास्ते सूत्रएताव-
त्पदेनोच्यते ॥ समीपतरवर्तिपरिमितिकत्वात् ॥ एतदःसमीपतरवत्यर्थकत्वात् ॥ तन्नि-
ष्ठाःस्थूलत्वाणुत्वादयोधर्माश्चत्वप्रत्ययेन ॥ **प्रतीतस्यैवेति** सौत्रहिशब्दस्यार्थोयं ॥
हियुक्तमिदंअस्थूलमित्यादिप्रतिषेधश्रवणेलोकेविदितानांपरस्परव्यधिकरणानांस्थूल-
त्वाणुत्वादीनामेवोपस्थितेः अप्रतीतानांसमानाधिकरणानामलौकिकानतेषामनुपस्थि-
तेश्च ॥ तेनधर्मनिषेधकवाक्यानांलौकिकधर्माएवविषयाइतिसूत्रांशेननिर्णीतं ॥ सिद्ध-
माहुः **अतइति** ॥ अस्थूलमनण्वितिनिषेधेउभयधर्मवत्त्वमेवसिध्यतिनमुच्चिवधप्रसं-
गेनश्रुक्केणनचार्द्रेगेत्युभयधर्मनिषेधेफेनस्योभयात्मकत्ववत् ॥ तेनजगद्वैलक्षण्यमेवसि
ध्यतिनतुनिर्विशेषत्वं॥नापिवेदोक्ताभगवत्प्रसादपात्रैर्वीतशोकैर्मुक्तैर्दृश्याअणोरणीयस्त्वं-
महतोमहीयस्त्वमित्यादयोब्रह्मधर्माअस्थूलादिवाक्यैर्निषेद्धुंशक्यंते अनुपस्थितेःतुल्य-
बलत्वाच्च ॥ नन्वध्यारोपापवादाश्रयणेशक्यंतइत्याशयेनशंकते**कुतइति**सूत्रांशेन-
समादधते**ततइत्यादि** ॥ ततःप्रतिषिध्यमानाल्लोकविदितधर्माद्भूयःअधिकंअलौकिक-
मितियावत्धर्मवत्त्वंप्रतिषेधानंतरंपुनर्वेदोब्रवीत्येव॥चोऽवधारणार्थःसर्वत्रेमंनियमंबोधय-
त्यधिकरणसमाप्तिंचद्योतयति ॥ एतदेवाहुः**यस्मिन्नेवेति**यदितथावेदोभिप्रेयात्तर्हिपू-
र्वमेवाध्यारोप्यततोपवदेत् ॥ वदतितुविपरीतं ॥ नचापवादोत्तरमध्यारोपेप्रयोज-
नमस्तिप्रक्षालनोत्तरमिवपुनःपंकलापनेयेनायंक्रमोप्याश्रीयेत ॥ किंचयत्रनिषेधतित-
त्रसामान्यतएववाक्चक्षुरादिकंनिषेधति ॥ विधत्तेतुलोकेक्वाप्यसंभावितसूर्यचंद्ररोदसी
सर्वकालप्रशासकत्वविश्वतश्चक्षुष्ट्वादिकं ॥ अतस्तुल्यत्वाद्विधायकवाक्यानामलौकि-
कधर्माएवविषयाइतिसूत्रांशांतरेणनिर्णीतं ॥ तेनसर्वकामत्वादयः श्रुत्यंतरोक्ताअ-
प्यलौकिकाएवज्ञेयाः लोकएकस्मिन्सर्वकामत्वादेरसंभवात् ॥ यत्राप्यलौकिकत्वं-
नस्पष्टंतत्रापि तदूह्नेयंब्रह्मधर्मत्वात् धर्मिणोऽलौकिकत्वादनुच्छित्तिधर्मत्वाच्च ॥ एवं
चविधिनिषेधवाक्यानांव्यवस्थितविषयभेदेनपरस्परविरोधाभावात् ॥ श्रुतित्वादि-
नातुल्यबलत्वाच्च नैकतरबाधः कल्प्यः ॥ दिग्प्रदर्शनायोदाहरणमाहुः **यतोवा-
चइत्यादि** ॥ इदंब्रह्मवल्लीस्थं ॥ वाक्विशेषतः परस्यज्ञानकारणंमनस्तुविशेषतः
तस्य ॥ **ज्ञानं** ब्रह्मकर्मकं ॥ **विधत्ते** विद्वानित्युक्तेनेतिभावः ॥ **अस्थूलादीति**
इदंबृहदारण्यकपंचमाध्यायाऽष्टमब्राह्मणस्थं ॥ प्रशासनंहिवागादिभिरेवभवति ॥ अ-

मुखेपदस्यव्यवहितत्वबोधनायासंधिः ॥ **इत्यादिनेति** ॥ “ एतस्यवाअक्षरस्य शा-
सनेगार्गिसूर्याचंद्रमसौविधृतौतिष्ठतः ” इत्यादिकाण्वाः “ एतस्यवाक्षरस्यप्रशास-
नेगार्गिद्यावापृथिवीविधृतेतिष्ठत ” इत्यादिमाध्यंदिनाः ॥ अत्रवैशब्दोअवधारणा-
र्थः अतः फलितार्थकथनं एतस्यैवाक्षरस्येति तथापाठांतरंवा ॥ **इत्यादि-
मिति** अश्नोतीतिमाध्यंदिनपाठे अशूभोजनइत्यस्यैवविकरणव्यत्ययेनरूपमित्ये-
कंव्याख्यानं अशूव्याप्तावित्यस्यस्वादेरूपमित्यपरं तत्रद्वितीयमादायैवमुक्तिः ॥ **व्य-
क्तिभेदेनेति** एकस्यामतिरात्रव्यक्तौ षोडशिग्रहस्यग्रहणमपरस्यामग्रहणमितिक-
र्माणअभिव्यज्यमानेनव्यक्तिभेदेनः “ अतिरात्रेषोडशिनं गृह्णातिनातिरात्रेषोडशिनंगृ-
ह्णाति ” इतिविधिनिषेधयोर्विकल्पोयथाशक्यवचनस्तथानब्रह्मणितस्यैकत्वान्नित्य-
त्वाच्च ॥ **अबोधकत्वेति** परस्परविरोधपराहतत्वात्तथेतिभावः इदंदिग्दर्शनायोदाह-
रणद्वयं एवमन्यत्रापिबोध्यं यथाईशावास्यभागे “ अनेजदेकंमनसोजवीयः ” इत्या-
दिनाविधिनिषेधयोर्यौगपद्यं ॥ केनोपनिषदि “ नतत्रचक्षुर्गच्छतिनवाग्गच्छति ”
इत्युपदेश्यत्वंनिषिध्य “ इतिशुश्रुमपूर्वेषां ” इतिब्रह्मविदुपदेश्यत्वं वाक्यपंचके ।
“यद्वाचानभ्युदित ” मित्याद्युक्त्वा “ येनवागभ्युद्यते ” इत्यादिकंद्वितीयखंडेवेत्तुमश-
क्यत्वमुक्त्वातृतीयखंडादौतदिच्छयासाक्षात्कारश्चोच्यते ॥ कठवल्लीषु “ अशरीरंशरी-
रेषु ” इत्युक्त्वा “ वृणुतेतनूंस्वां ” इतिपराञ्चिखानीत्युक्त्वाकश्चिद्धीरइत्यादिपठ्य-
ते ॥ प्रश्नोपनिषदि ( प्रश्न ४ ) “ तदच्छायमशरीरमलोहितंइतिधर्मान् ” नि-
षिध्य “ शुभ्रमक्षरंवेदयतेयस्तुसौम्यससर्वज्ञःसर्वोभवति ” इतितद्वेत्तुःसर्वज्ञसर्वभा-
वकथनेन तस्यसर्वाश्रयत्वसर्वरूपत्वेबोधयति ॥ मुंडके “ यत्तदद्रेश्यमग्राह्यं ” इ-
त्याद्युक्त्वा “ यद्भूतयोनिंपरिपश्यंतिधीरा ” इत्याद्याम्नायतेतैत्तिरीये “अदृश्येऽनात्म्ये-
ऽनिरुक्तेऽनिलयने ” इत्युक्त्वाअदृश्यत्वविरुद्धमभयप्रतिष्ठाविदनंअशरीरत्वविरुद्ध-
भीषास्माद्वातिप्रशासनंअनिरुक्तत्वविरुद्धाऽऽनंदमीमांसाअनिलयनत्वविरुद्धापुरुषादि-
स्ययोस्थितिरुपसंक्रांतिश्चश्राव्यत ॥ बृहन्नारायणे “ नैनमूर्ध्वंनसंदृशे ” इत्याद्युक्त्वा-
“ एषहिदेवःप्रदिशोनुसर्वाः ” ॥ विश्वतश्चक्षुः ” इत्याद्युक्तं श्वेताश्वतरे “ अपा-
णिपादोजवनोग्रहीता ” इत्यादिएवमन्यत्रापिशतशोवाक्यानिद्रष्टव्यानि ॥ तेनक्वचि-
देवतदस्फुटत्वेपितथोन्नेयं ॥ यत्तुनन्वित्यादिव्यासऊचइत्यंतंतन्नयुक्तं ॥ तथाहि-
॥ पूर्वपक्षेनिषिध्येतिप्रयोगोऽनुचितः ॥ स्वप्नश्रुतावपपाठस्तुवेदाभ्यासगंधाभावात् ॥
पाठस्तुबृहदारण्यकेषष्ठाध्यायेज्योतिर्ब्राह्मणे (पृ०७५७) “नतत्ररथानरथयोगानपंथा-
नोभवंत्यथरथान्रथयोगान्पथःसृजते ” इतिप्रत्येकंनकारयुक्तआत्मनेपदयुक्तश्चदृश्य-
ते ॥ तन्मौर्ख्यबोधनायमूलेतदुक्तिस्तथैवानूदितावस्तुतःस्वप्नश्रुतावपिलोकेपरिदृश्य-
मानावास्तवारथाश्वमार्गप्रभृतयएवविधिविषयाअवास्तवास्तेच सृष्टिवाक्यविष-

याइतिनपूर्वेणनिषेधवाक्येनतत्रापिपरस्यबाधः ॥ मायिकानामपिनिषेधांगीकारेनतै
स्वमउपलभ्येरन् ॥ वास्तवानांसृष्ट्यंगीकारेसूत्रंकुप्येत ॥ तेषांमायिकत्वंतुशरीरे
वास्तवरथादिभानासंभवनियततत्तदुपादानाभावादिभ्योवगम्यमानात् कार्त्स्न्येनानभि
व्यक्तस्वरूपत्वादेवनतुनिषेधबलात् ॥ अन्यथामायामात्रंतुप्रतिषेधादित्येवसूत्रयेत् ॥
पूर्वमभावप्यनंतरंवास्तवानेवसृजतीतिव्याख्यानसंभवेननिषेधबलोपक्षयाच्च ॥ त्वदा
चार्यैरपिनिषेधोत्रबाह्यानामेवांगीकृतइतितत्रापिवाक्ययोर्भिन्नविषयत्वात्तद्वदत्रापिभिन्न
विषयत्वमेव सिद्ध्येन्नतुततस्त्वदिष्टसिद्धिः ॥ तथापिनहिकेवलांपरत्रोक्तिमेवसाध-
कतयात्रयंब्रूमः किंतुनिषिध्यमानानांसाधारणतयालोकेदृष्टत्वांविधीयमानानां सूर्य-
चंद्रप्रकाशकत्वविश्वतश्चक्षुष्ट्वादीनांलोकाप्रसिद्धत्वं सर्वत्रैव परत्रोक्तिचतथाभूमोप-
वादांतरमध्यारोपस्यायोग्यत्वात् ॥ तस्मादुक्तव्यवस्थयैवाविरोधस्तुल्यप्रमाणभाव-
योरुचितइत्याशयेनाहुः **नहिपरत्रेत्यादि** ॥ किंचनस्वाप्नसृष्टिवद्ब्रह्मधर्मामायिकाः ॥
अन्यथातस्यास्तथात्वं विस्तरेणसाधयन्सूत्रकारस्तेषामपिमायामात्रत्वं स्पष्टंकुतो-
नब्रूयात् ॥ तदेतदाहुः **यदीत्यादि** ॥ यत्तुकिंचेत्यादिनयुक्तमित्यंतं तत्प्रागेवापा-
स्तम् ॥ गार्गीप्रश्नादौपूर्वं प्रपंचस्यप्रकृततायादर्शितत्वात् ॥ तत्रतदभावे ( अ० १
पा० ३ सू० १२ ) “ अन्यभावव्यावृत्तेश्च ” इत्यादिकमसंगतंस्यात् ॥ यच्चएवंप्रकृत-
इत्यादि अप्रकृतत्वादित्यंतं तदप्यसत् ॥ अस्मत्संमतेषु “ यतोवाचः ॥ अ-
स्थूलमनणु ” इत्यादि विषयवाक्येषु “ ब्रह्मविदाप्नोतिपरं ॥ सत्यंज्ञानं ॥
एतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंति ” इत्यादिनाब्रह्मणःप्रकृततायाःस्फुटत्वात् ॥
“ मूर्तंचैवामूर्तंच ” इतिपाठसत्त्वेप्येवकाररहितश्रुतिपाठोपन्यासस्त्वनभ्यासात् ॥
किंचतस्मिन्विषयवाक्येपिषष्ठीनिर्देशमात्रेणब्रह्मणोनाप्रकृतत्वंशक्यंवक्तुं । बुभोधयि-
षिततयाऽर्थतस्तस्यमुख्यत्वात् ॥ अन्यथाब्रह्मजिज्ञासासूत्रेब्रह्मणोविशेषणतयावै-
यासदर्शनेपितस्याप्राधान्यमप्रकृतत्वंचस्यात् ॥ तथाचशास्त्रस्याब्रह्मविषयत्वंतत्तद-
धिकरणेषुब्रह्मपरमात्मेत्यादिपदाननुषंगश्चापद्येत ॥ किंचेदंचतुर्थाध्यायेदृप्तबाला-
क्यऽजातशत्रुसंवादेवर्ततेतत्राध्यायारंभे “ दृप्तबालाकिर्हानूचानोगार्ग्यआससहोवा-
चाजातशत्रुंकाश्यंब्रह्मतेब्रवाणीति ” इतिब्रह्मैवप्रकृतं ॥ किंतुरूपद्वयमेवतत्परिचायना-
र्थतयाप्रासंगिकं ॥ ( ब्रह्मणःषष्ठ्यंततये ) त्युक्तिरपिशब्दार्थाभेदात्कथंचिद्योज्याएतेनै-
वप्रकृतंयदेतावत्त्वंमूर्तामूर्तत्वलक्षणमित्यादिव्याख्यानस्यासंगतत्वमित्यध्यायदिसमभ्या-
षष्ठ्यावासमासंकदाचिदाश्रयेस्तदासूत्रेग्रिमांशवैयर्थ्यमित्यभिप्रेत्यविद्वन्मंडनटीकायामु-
क्तंयुक्तमेवेतिसिद्धं ॥ यस्तुकस्तर्हीत्यादिना गृहाणेत्यंतेनसूत्रार्थस्तेनदर्शितस्तंदूषयं-
ति ॥ **तत्तुदोषेत्यादिना** ॥ अत्रमूर्तामूर्तप्रतिषेधस्येत्यारभ्य प्रतिज्ञाहानितादवस्थ्या-
चेत्यंतः सर्वोपिभाष्यप्रकाशलेखएवसुखेनबोधार्थंक्वचित्कंचिदेवपाठंभित्वाऽनूदितः
समतस्थानांविशेषतःप्रामाण्यग्रहसिद्धये ॥ अत्रसहस्राक्षे (प्रकृतंएतावत्त्वंवस्तुपरिच्छि-

ह्मत्वंमूर्तामूर्तरूपत्वं) इत्युक्तिस्तु "प्रकृतंयदेतावत्त्वंएतावतापरिछिन्नंमूर्तामूर्तलक्षणंब्रह्म-
णोरूपं" इतिस्वभाष्यफलितार्थकथनरूपा ॥ तत्रएतावतापरिछिन्नमित्यस्यैवार्थो-
वस्तुपरिछिन्नमिति ॥ अत्रानूदितःप्रकाशग्रंथस्तुप्रकृतसूत्रस्यशारीरकभाष्यमेवलक्षीकृ-
त्यप्रवृत्तइतितत्पर्यालोचनेनसम्यगवगंस्यते ॥ **दुर्वारत्वादिति** यत्तु अवैदिकस्यनिषे-
धकमित्यादितदबोधात् ॥ तत्रहिलोकप्रसिद्धान्येवपंचभूतानिराशिद्वयेनमूर्तामूर्तरूपतयो-
क्तानि नतुवेदैकगम्यंविश्वतश्चक्षुष्ट्वादिकं येनवैदिकधर्मजातस्यनिषेधःस्यात् ॥ अत-
एवप्रकृतसूत्रभाष्येशंकराचार्याः " नेदंशास्त्रंप्रतिपाद्यत्वेनब्रह्मणोरूपद्वयंनिर्दिशतिलो-
कप्रसिद्धंत्विदंरूपद्वयंब्रह्मणिकल्पितंपरामृशतिप्रतिषेध्यत्वाय " इतिलौकिकस्यैवाऽ-
त्रप्रतिषेधंमन्यंते ॥ अतःप्रकृतपदस्यवैदिकपरताकल्पनयासार्थकतामनोरथोव्यर्थः ॥
तथासतिलौकिकस्यब्रह्मण्यप्रतिषेधसिद्धेश्च ॥ नापिप्रकृतपदार्थस्वरूपप्रदर्शनायैता-
वत्पदस्यसार्थक्यमुपपद्यते। षष्ठीनिर्दिष्टस्याप्राधान्यंप्रथमानिर्दिष्टरूपद्वयस्यैवलादितित्व-
न्मतरीत्याप्रकृतपदादेवासंदिग्धतत्स्वरूपलाभात् तेनालाभेएतावत्त्वपदतोपिमूर्तामूर्तरूप-
लाभस्याशक्यत्वात् ॥ अतोदुर्वारत्वंयुक्तमेव ॥ **अनुशिष्टत्वेनेति** ॥ " तस्य-
भावस्त्वतलौ " इतिशास्त्रेणानुशिष्टत्वेन**तथात्वादिति** एतावतापरिछिन्नमित्यर्थला-
भएतावत्त्वपदान्नभवतीतिभावः ॥ **तथेतीति** एतावतेतिपदस्यार्थइत्यर्थः **प्रसि-
द्धत्वादिति** " यत्तदेतेभ्यः परिमाणेवतुप् " इत्यनुशासनेनतथात्वात् ॥ **अ-
नुक्तत्वेनेति** मूर्तामूर्तब्राह्मणेवासनागंधस्याप्यकथनेन ॥ अनुक्तस्यापिनिषेधांगी-
कारेसूत्रेप्रकृतपदस्यहिशब्दस्यचतुतरांविरोधइतिभावः ॥ **प्रथमयोजनायामिति**
तद्भाष्ये " तत्रैषाक्षरयोजनानेतिनेतीतिब्रह्मादिश्यतमेवादेशंपुनर्निर्वक्ति नेतिनेती-
त्यस्यकोर्थः नह्येतस्माद्ब्रह्मणोव्यतिरिक्तमस्तीतिअतोनेतिनेतीत्युच्यतेनपुनःस्वयमेवना-
स्तिइत्यर्थः तच्चदर्शयतिअन्यदतःपरमप्रतिषिद्धंब्रह्मास्तिइति " इतिदर्शितायाम् ॥
**युक्तमिति** ॥ श्रुतावुत्कृष्टार्थकपरपदस्यसार्थक्यंतथाव्याख्यानएव ( अ०२पा०-
१सू०२२ ) " अधिकंतुभेदनिर्देशात् " इत्यधिकरणसिद्धांतितरीत्यासिध्यतीत्य-
तोयुक्तं ॥ **द्वितीययोजनायामिति** तत्रैव " यद्वापुनरेवमक्षराणियोज्यंतेनह्येतस्मा-
दितिनेतिनेतिप्रपंचप्रतिषेधरूपादादेशनादन्यत्परमादेशनंब्रह्मणोस्तिइतितदाततोब्रवी-
तिचभूयइत्येतन्नामधेयविषयंयोजयितव्यं " इत्यादिव्याख्याने **तद्वत्तेति** वाच्यत्वरू-
पविशेषवत्तेत्यर्थः ॥ **तत्सत्तेति** ब्रह्मसत्तेत्यर्थः ॥ **तन्नियामकत्वेति** " प्राणा-
वैसत्य" मित्याद्यग्रिमवाक्योक्तं प्राणानांनियामकत्वं मूलरूपत्वंचब्रह्मणिसिध्ये-
त् ॥ " सउप्राणस्यप्राणः " इतितलवकारश्रुतेरितिभावः ॥ **एवमाद्यद्व-
तितथार्थेसतिसूत्रेभूयः** स्थानेपरपदंवदेत् । विषयवाक्यस्मागुक्तत्वादिष्टसिद्धेश्च ॥
प्रतिषेधमात्रोक्तावपिआधारंविनाप्रतिषेधासंभवेन तदाधारब्रह्मसत्तायाअयत्नतः सि-
ध्यामूत्रेग्रिमांशवैयर्थ्यं लौकिकंभूतराशिमूर्तामूर्तपदाभिधेयंप्रतिषिध्यतदधिकब्रह्म-

साधनेप्यलौकिकत्वाभिन्नविशेषाप्रतिषेधादस्मदिष्टव्यवस्थासिद्धिः सूत्रेऽधिमांशस्याधिकंत्वित्यधिकरणेनगतार्थता ॥ किंचाग्रिमसूत्रेतत्पदंनैवंसति पूर्वसूत्रोक्तंनिर्विशेषमेवपरामृश्यतइति तस्यैवमत्यक्षतासंराधनेसिद्धांतितास्यात् तथाचनिर्विशेषताभंगस्तदवस्थः ॥ शबलपरामर्शस्त्वशक्यः असंनिधानात ॥ पूर्वत्रब्रह्मणएवब्रवीतिकर्मत्वेऽत्रतत्पदमंतरैवार्थसिध्यातस्यवैयर्थ्यंच ॥ सिद्धांतेतुभूयसोऽप्राकृतस्यैतावत्त्वस्य तत्कर्मत्वात्तस्येहोपस्थितिवारणायतत्पदंसार्थकं ॥ अलौकिकमात्रविशेषवतश्चक्षुरादिगम्यतानौचित्यादव्यक्तत्वमाशंक्यसंराधनेत्वेछयाभिव्यक्तिरुक्तव्यवस्थानिर्वाहिकासिद्धांतिना ॥ तस्मादस्मदुक्तएवसूत्रार्थः ॥ एवमादयोदोषाःश्रुतिसूत्रार्थमार्मिकैरूह्याः ॥ यच्च ( नहिशब्दाधिक्यमात्रेणार्थाधिक्यंयुक्तं ) इत्युक्तंतत्तुश्रुतिसूत्रादौप्रायःसर्वत्रपदंकृत्यंचिंतयतांसर्वेषांप्राचां दृष्टप्रयोजनरहितंपदंसूत्रंवाप्रत्याचक्षाणानांमहाभाष्यकृतांचोन्मत्ततांत्वयमाक्षिपत्प्रेक्षावतामुपेक्षार्हं व्यर्थशब्दाधिक्येसूत्रलक्षणबाधाच्च ॥ तेनसूत्राद्यतिरिक्तेसाधारणग्रंथेकचिदतिप्रसंगोप्यकिंचित्करः ॥ तस्मादस्माकमेवेदमनुकूलं ॥

अतोब्रह्मणःकर्तृत्वस्यवेदोक्तत्वात्तन्निषधस्यचानुक्तत्वात्तदंगीक्रियतेकार्यत्वंब्रह्मणःकुत्रापिनप्रतिपादितंयेनप्रतिबंदीस्यात् तथाच यत्तुइत्यादिनायदुक्तं तदसंगतमेव .नतस्येत्यर्थस्तुप्रागेवविवृतः ॥

## टीका

सहस्राक्षे यत्तुस्वरूपलक्षणेत्यादिनिषेधाच्चेत्यंतंभागपरिहरंति ॥ **अतोब्रह्मणः इत्यादिनाविवृतइत्यंतेन** ॥ **अतः** प्रकृतसूत्रस्यतादृशार्थकत्वात् ॥ **वेदोक्तत्वादिति** “ मुंडकब्रह्मवल्यादिषु “ कर्तारमीशं ॥ तदात्मानंस्वयमकुरुत „ इत्यादावुक्तत्वात् ॥ **तन्निषेधस्येति** नह्यलौकिकंनिरंकुशजगत्कर्तृत्वंब्रह्ममात्रनिष्ठंवेदेक्वापिनिषिद्धं ॥ **कार्यत्वमिति** इतरनिरूपितकार्यत्वंतुब्रह्मणिश्रुत्यादिनाक्वापिनोक्तं ॥ प्रत्युत ( अ० २ पा० ३ सू० १७ ) “ नात्माऽश्रुते „ रित्यादौतत्प्रतिषेधःसिद्धः ॥ अत्रेदंज्ञेयंयदिशुद्धस्वरूपेकर्तृत्वंवेदानभिप्रेतंस्यात्तर्हिस्वरूपलक्षणवाक्यशेषेतत्प्रतिषिद्धंस्यात् ॥ नचैवंकार्यत्वस्याप्याप्तिःशंक्यानहिकर्तृत्वस्यतत्राप्रतिषेधमात्रंकिंत्वशनक्रियायांब्रह्मणःसहभावकथनेनप्र-

त्युनन्द्बोधितं कार्यत्वंतुतुच्छजडजीवव्यावर्तकैःसत्यज्ञानानंतपदैः स्वरूपलक्षणवाक्ये-
पिनिवारितमतस्तदनापत्तेः ॥ नचतत्रसहशब्दोयुगपदर्थःतस्यसर्वकामशब्दस्यचशक्ति-
विहायलक्षणादरेमानाभावात्आत्ममिथुनादिश्रुत्यासइतिकर्तुःब्रह्मणेतितृतीयायानिर्दे-
शेनचसहभावार्थकत्वस्यैवौचित्यात्नचानंतपदात्कर्तृत्वनिषेधशंकयःअपरिच्छिन्नेपित-
स्याविरोधात् ॥ कालेपिजन्यानांजनकत्वादर्शनात विभुजीववादेजीवेपितदंगीकारात ॥
पृथिव्यादौरूपस्पर्शयोरिवकुलालादौपरिच्छेदकर्तृत्वयोःसहचारदर्शनेपिप्रत्यक्षबलाद्वा-
यौनीरूपेस्पर्शवदपरिच्छिन्नेपिपरमात्मनिश्रुतिबलात्तत्स्वीकार्यं ॥ नतस्येतिवाक्यं-
तुस्वाभिन्नकार्यस्यजीववत्सुकृताद्यपेक्षायाश्चनिषेधकमित्युक्तंप्राक् ॥

तस्माद्यथावेदेब्रह्मप्रतिपादितंतथैवोपगंतव्यं वेदेतुनिर्गुण-
त्वेनानंतगुणत्वेनोभयरूपेणैवब्रह्मप्रतिपादितं अतएवोभय-
व्यपदेशात्वहिकुंडलवत्प्रकाशाश्रयवद्वातेजस्त्वादितिसूत्रद्वये-
नायमेवार्थोव्यासैर्दर्शितः ॥ सूत्रार्थस्तु पूर्वमुक्तएव ॥ यत्तुमतां-
तरपरेसूत्रेइतिस्वकल्पितश्लोकव्याख्यानेअपिसंराधनेप्रत्यक्षा-
नुमानाभ्यां१प्रकाशादिवच्चावैशेष्यंप्रकाशश्चकर्मण्यभ्यासा-
त्२ अतोनंतेनतथाहिलिंगं३ उभयव्यपदेशात्वहिकुंडलवत्४-
प्रकाशाश्रयवद्वातेजस्त्वात् ५ पूर्ववद्वा६ इतिसूत्रषट्कस्यार्थवर्ण-
नंस्वमतानुसारेणकृतं तन्नसत् ॥ तद्यप्रथममपिसंराधनसूत्रे-
णकश्चिन्निर्णयोनसिद्धः प्रत्युत ब्रह्मणोदृश्यत्वबोधनेनजीवे-
ब्रह्मणोःसंराधकसंराध्यभावाद्भेदबोधनेनचसंशयस्यैवोत्पत्तिरि-

---

सहस्राक्ष

यत्तु स्वरूपलक्षणवाक्यशेषेकर्तृत्वस्यानिषेधाद्ब्रह्मणःकर्तृत्वमित्याह ॥ तन्न ॥ कार्यत्वस्याऽनिषे-
धात्तत्त्वस्याऽव्याप्तेः ॥ परिच्छेदमात्रनिषेधकानन्तपदेन कर्तृत्वनिषेधस्य सिद्धत्वाच्च ॥ नतस्य-
कार्यमितिवाक्यान्तरे कार्यस्य निषेधेन तन्निरूपितकारणत्वस्याऽर्थान्निषेधाच्च ॥

ति ॥ तदुक्तं रंचप्रकाशादिवत्सूत्रे जीवब्रह्मणोरभेदं युक्त्या व्याख्याय तत्रप्रमाणापेक्षायां वेदांतेषु जीवप्राज्ञयोरभेदप्रतिपादनाभ्यासो हेतुत्वेन व्याख्यातः सोपि शिथिलः ॥ सौत्रस्याभ्यासपदोक्तस्य हेतोरवैशेष्ये कर्मणि प्रकाशे च साधारण्येनोक्ततया जीवप्राज्ञाभेदाभ्यास एव नियमने प्रमाणानुपलंभात् वेदांतेषु तयोरभेदस्येव भेदस्याप्यभ्यासदर्शनाच्च ॥ यदप्युभयव्यपदेशादिसूत्रद्वयमेकदेशिमतीयत्वेन व्याख्याय पूर्ववद्वेतिसूत्रव्याख्याने तद्दूषणमुक्तं जीवात्मनः परमात्मसंस्थानभूतत्वे एकदेशभूतत्वे वांगीक्रियमाणे बंधस्य पारमार्थिकत्वेनातिरस्कार्य्यत्वापत्त्या मोक्षशास्त्रवैयर्थ्यमिति तदपि तथा ॥ बहुस्यां प्रजायेयेतीच्छाभ्यां भेदस्यागंतुकत्वावगमाद्बंधस्य पारमार्थिकत्वेपि तथात्वात् वस्त्रप्रक्षालनेन तन्मालिन्यस्येव शास्त्रीयसाधनैरीश्वरकृतमर्य्यादारूपैस्तन्नाशसंभवेन शास्त्रवैयर्थ्याभावात् ॥ अतएव “ पराभिध्यानात्तु तिरोहितं ततोह्यस्य बंधविपर्ययाविति ” सूत्रमपि संगच्छते अहिकुंडलसूत्रे तुशब्दस्तु पूर्वपक्षव्युदासार्थः पूर्ववद्वेतिसूत्रे वाशब्दोपि अथवेत्यर्थकः अथवा अरूपवदेवहीत्यादिपंचसूत्र्या यः सिद्धांतः कथितः प्रपंचविलक्षणं तत्समवायित्वेपि न तत्प्रकारकं नापि समवायिमात्रं किंतु ततोप्यतिरिक्तं कृत्स्नं चिन्मात्रस्वरूपं यदाविर्भवति तदाव्यवहार्य्यं भवति तत्र जडजीवधर्मा औपचारिका इत्येवंरूपः तादृशं कारणरूपं ब्रह्म प्रतिपत्तव्यमित्यर्थः अयमाशयः वेदस्थापनार्थं हि प्रवृत्तिः तत्र यथाक्षरमात्रस्यापि बाधो न भवति तथा वक्तव्यं एतदर्थमेवोभयरूपतांगीकृता तत्र धर्माणां स्वरूपनिर्वाहार्थमवश्यं ब्रह्मवैलक्षण्यमंगीकर्त्तव्यं तथास-

तिएकमेवाद्वितीयमितिश्रुतिविरोधःस्यात्तथाचतत्रकथंविचारः कर्त्तव्यइत्याकाक्षांयांकारणविचारेश्रुतावेकविज्ञानेनसर्वविज्ञानस्यप्रतिज्ञातत्वाद्धर्म्माणामपिब्रह्मरूपत्वंवक्तव्यं तदेवैतदुपपद्यते नतुधर्माणांनित्यभिन्नत्वे आविद्यकत्वेवा आद्येभिन्नत्वे न द्वितीयेमिथ्यात्वेनतत्प्रतिबंधादित्यभिप्रायः एतेनधर्माणांमिथ्यात्वेनाभेदबोधनेपूर्ववद्वेतिसूत्रमुपष्टंभकतयावदंतःपरास्ताः

## टीका

सहस्राक्षे यत्तुउभयेत्यादिंसूत्रंचसंगतमित्यंतं भागंनिरस्यंति ॥ **तस्माद्यथावेदइत्यादिनापरास्ताइत्यंतेन** ॥ **वेदेत्वित्यादि** ॥ यथा श्वेताश्वतरे " साँक्षीचेताकेवलोनिर्गुणश्चे " त्युक्त्वा " एकोवशीनिष्क्रियाणांबहूनामेकंबीजंबहुधायः करोती " त्यादि तथातत्रैव " ततोयदुत्तरतरंतदरूपमनामय " मित्येतदग्रे " सर्वाननशिरोग्रीवःसर्वभूतगुहाशय " इति एवंतैत्तिरीयेपि " यदेकमव्यक्तमनंतरूप " मितिइत्थं भाष्यप्रकाशादिदर्शितदिशातत्रतत्रोभयव्यपदेशाद्रष्टव्याः ॥ **यत्तुमतांतरे** त्यादि यद्यपिअपिसंराधनसूत्रंसहस्राक्षेनोपन्यस्तंतथापिप्रकाशादिवत्सूत्रावतरणेतदर्थोपिसूचितोतोमूलेसूत्रषटकस्येत्युक्तिर्नायुक्ता ॥ तद्भूषणायभाष्यप्रकाशमेवसुखेनबोधार्थंकिंचिद्भिन्नपाठमनुवदंति**अपिसंराधनेत्यादिना** ॥ तत्संमतेप्रकाशादिवत्सूत्रस्यार्थेनीरूपप्राकाशंविहायदृश्यस्यप्रकाशस्यैवसूत्रेकंठरवेणोपादानेबीजंमृग्यं ॥ प्रकाशश्चेत्यंशस्यार्थश्चकोव्याख्यातइति चिंत्यं व्यवहितस्यकर्मणोत्यस्यपूर्वत्रान्वयेविवक्षितेपरत्रतदुच्चारणेबीजंतपआद्यर्थकतयाप्रसिद्धस्यकर्मशब्दस्यांगुल्याद्यर्थकत्वे मानं- तथासत्यत्रैकवचनांतकर्मशब्दस्यैवप्रयोगेबीजंचान्वेष्यं अभ्यासपदस्यार्थान्वययोरनिर्णयस्तुमूलएवदर्शितः । एव मतोनेतेनेतिसूत्रेप्यतश्शब्दार्थेतत्संमतेमानंमृग्यं पूत्रतदभावात् ॥ तृतीयांतमात्रश्रवणे अविद्यांविधूयेत्यादेर्गच्छतीत्यंतस्यपदकलापस्याध्याहारेसूत्रकाराभिप्रेततायागमकंचित्यं वस्तुतस्तु सूत्रद्वयमिदंपूर्वपक्षबोधकं ॥ अएतवोभयव्यपदेशसूत्रे तुशब्दः पूर्वपक्षव्यावर्तकः प्रयुक्तः ॥ सहि ( अ. २ पाद१ सू० ६ ) " दृश्यतेतु " ( अ ३ पा० २ सू० ३२ ) " सामान्यात्तु " इत्यादाविवपूर्वसूत्रयोस्तद्बोधकतामेवगमयति ॥ मतांतरपरत्वेतुतत्रतुशब्दंनैवब्रूयात् सिद्धांतसूत्रातिरिक्तेक्वापितस्यप्रयोगादर्शनात् ॥ किंतुसूत्रद्वयएवविकल्पार्थकं वाशब्दंपूर्व-

यत्सूत्रएवपक्षव्यावर्तकं तुशब्दंचब्रूयात् ॥ वदन्तित्वेवं ॥ अतः प्रकाशादिवदित्यादित्रिसूत्रमेकमधिकरणंततः स्वसंमतस्यैकदेशिसंमतस्यच पक्षांतरस्यबोधकंवाशब्दघटितंसूत्रद्वयमितिसमजसं ॥ नचोत्तरत्रवाशब्दात्पूर्वसूत्रोक्तस्यबाधःशंक्यः ॥ पूर्वत्रारुचौपरत्रैववाशब्दंप्रयुंजीत उभयत्रतत्प्रयोगेणतुएकोदेवः केशवोवाशिवोवेत्यादिवत् द्वेअपिस्वतंत्रेमतेइतिबोध्यते **मतीयत्वेनेति** गहादिषुपाठविवक्षयाछः **तद्रूपितथेति** शिथिलमित्यर्थः **इच्छाभ्यामिति** ॥ बहुभवनेच्छयाप्रकृष्टभवनेच्छयाच ॥ "हंतातिरोसानि" इत्यादीच्छाप्यत्रानुसंधेया ॥ तथेच्छयानंदांशतिरोभावादत्रान्यतेजीवभावः ॥ अतएव ( अ० १ पा० १ सू० १५।१६ ) "ने-

---

## सहस्राक्ष.

यत्तु उभयव्यपदेशात्त्वहिकुण्डलवत् प्रकाशाश्रयवद्वातेजस्त्वादिति सूत्रे स्वमतोपष्टम्भकतयोपन्यस्ते तत्राह ॥ मतान्तरपरेसूत्रेइति ॥ तथाहि संराध्यसंराधकभावे सति परेतरात्मनोरन्यत्वं स्यादित्याशङ्क्य प्रकाशादिवच्चावैशेष्यं प्रकाशश्चकर्मण्यभ्यासात् यथा प्रकाशाकाशसवितृप्रभृतयोऽङ्गुलिकरकोदकप्रभृतिषु कर्मसु उपाधिषु सविशेषाइवाऽवभासन्ते नच तत्र स्वाभाविकीमविशेषात्मतां जहति एवमुपाधिनिमित्तएवायमात्मभेदः स्वतस्त्वैकात्म्यमेव ॥ तथाहि वेदान्तेषु अभ्यासेनाऽसकृज्जीवब्रह्मणोरभेदः प्रतिपाद्यते अतोऽनन्तेनतथाहिलिङ्गम् अतः स्वाभाविकत्वादभेदस्याऽविद्याकृतत्वाद्भेदस्यविद्ययाविद्यां विधूय जीवः परेणानन्तेन प्राज्ञेनात्मना एकतां गच्छति तथाहिलिङ्गम् सयोहवैपरमंब्रह्मवेदब्रह्मैवभवति ब्रह्मैवसन्ब्रह्माप्येति इतिसूत्रद्वयेनाऽभेदमुक्त्वा उभयव्यपदेशात्त्वहिकुण्डलवत् प्रकाशाश्रयवद्वातेजस्त्वात् इति मतद्वयमुपन्यस्तं ॥ स्वमतविशुद्धये भेदाभेदयोर्व्यपदेशादहिकुण्डलवदत्र तत्त्वं भवितुमर्हति यथाऽहिरित्यभेदः कुण्डलाभोगप्रांशुत्वादीनीतिभेद एवमिहापीति ॥ अथवा प्रकाशाश्रयवदेतत्प्रतिपत्तव्यम् यथा प्रकाशः सावित्रः तदाश्रयश्च सविता नात्यन्तभिन्नावुभयोरपि तेजस्त्वाविशेषादथच भेदव्यपदेशभाजौ भवतएवमिहापीति ॥ एवं मतान्तरमुपन्यस्य पूर्ववद्वाइत्युक्तम् ॥ यथावा पूर्वमुपन्यस्तं प्रकाशादिवच्चावैशेष्यं तथैतद्भवितुमर्हति तथाह्यविद्याकृतत्वाद्बन्धस्य विद्यया मोक्षउपपद्यते ॥ यदिपुनः परमार्थतः संस्थानभूतोऽहिकुण्डलवदेकदेशभूतोवा प्रकाशाश्रयवदऽभ्युपगम्येत ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्यते ॥ नचाऽन्योन्यौ भेदाभेदौ श्रुतिस्तुल्यवद्व्यपदिशति अभेदमेवहि प्रतिपाद्यत्वेन निर्दिशति भेदंतु पूर्वप्रसिद्धमेवाऽनुवदति अर्थान्तरविवक्षयाप्राप्तत्वेन शास्त्राप्रतिपाद्यत्वात् ॥ अतएवाहिकुण्डलसूत्रेतुशब्दः उत्तरसूत्रेवाशब्दः पूर्ववद्वेतिसूत्रंच संगतम् ॥

सर्गानुपपत्तेः" इत्यानंदमयतानिषेधः ॥ नत्वविद्याकृतोयेनावास्तवः स्यात् ॥
अतोभेदो घनजतुद्रवत्ववदागंतुकऐच्छिकत्वात् ॥ तेनभेदोत्तरमेवसंभवन्नविद्यासं-
बंधरूपोबंधोप्यागंतुकः नतुभ्रमरूपोवस्त्रादिमालिन्यवत् ॥ तत्संबंधस्य-
मिथ्यात्वेसंसारोपिनस्यात् ॥ असंबद्धयापितयातत्संभवेमुक्तेष्वपिसभवेत् ॥ त-
स्मादविद्यायावास्तवत्वात्तत्संबंधोनमिथ्याभूतः स्फटिकेजपाकुसुमसंबंधवत् ॥ किं-
तुस्फटिकेतज्जन्यलौहित्यप्रत्ययवदविद्याबंधजन्योहंताममतारूपसंसारएवमिथ्या ॥
तस्यमिथ्यात्वंतु ( श्लो० २७ ) एतद्वा ोहिसंसारोगुणकर्मनिबंधनः अज्ञा-
नमूलोपार्थोपिपुंसःस्वमइवेयतेइतिसप्तमस्कंधसप्तमाध्यायादिषु सर्वत्रस्फुटंदर्शि-
तं ॥ तस्यैवमिथ्यात्वंचनिबंधेप्रपंचोभगवत्कार्यइत्यत्रनिर्णीतं ॥ बंधजन्य-
त्वंचतत्रैवपंचपर्वात्वविद्येयंयद्बद्धोयातिसंसृतिमित्यत्रचस्फुटमुक्तं जपाकुसुमापसार-
णेलौहित्यप्रत्ययवदविद्यापगमेसनिवर्तेत ॥ तदेतदाहुः **भेदस्येत्यादिना** बंधनाशे-
तद्योग्यतापादकस्तिरोभावमूलकोजीवभावोप्यानंदांशस्यैश्वर्यादिभगवद्धर्माणांचपुन-
राविर्भावेनावतिष्ठेत ॥ अतएव ( अ०३ पा०२ सू०५ ) पराभिध्यानात्त्वितिसूत्रे-
परस्यभगवतइच्छयाभगवत्धर्मतिरोभावस्ततएवजीवस्यबंधोविपर्ययश्चोक्तःसंगतः ॥
भेदस्यतिरोभावमूलकत्वादेवपुनरानंदाद्यभिव्यक्तावैक्यंमोक्षश्चनानुपपन्नः ॥ अतएव-
द्वितीयस्यतृतीयस्मिन् ( सू०३० ) यावदात्मभावित्वाच्चेत्यादिसूत्रत्रयेणआनंदस्यै-
श्वर्यादेश्चब्रह्मगुणस्यमुक्तावात्मानमनतिक्रम्यवर्तनशीलतयापुनरतिरोभावं बाल्येसे-
कादिसामर्थ्यलक्षणपुंस्त्वस्यत्वेपूर्वंसतएवानंदादेर्मुक्तावभिव्यक्तिं एवमनंगीकारेजीवे-
सच्चिदानंदानांसदोपलब्धेः सदानुपलब्धेः प्रसंगादिदोषंच निर्णीतवान्सूत्रकारः ॥ अ-
तोनशास्त्रवैयर्थ्यं ॥ एवंप्रकाशमनूद्यत्वयमाहुः ॥ **अतएव** ॥ **पराभीत्यादि** ॥
**पूर्वपक्षेति** ॥ सूत्रद्वयोक्तपूर्वपक्षेत्यर्थः ॥ उभयव्यपदेशसूत्रार्थस्तुदर्शितचरः ॥
यस्तुभेदाभेदयोरित्यादिरिहापात्यंतस्तदर्थउक्तः सनसंमतः । तथासति कुंडलादिव-
दितिवदेत् उभयव्यपदेशइतिप्रथमांतमेवोच्चारयेत् ॥ वक्तितुहेतं अतोविरुद्धोभयध-
र्मव्यपदेशात्ब्रह्मसर्पाहिवत्तत्कुंडलवच्चोभयरूपमित्येवार्थः ब्रह्मेतिसर्वत्रानुषंगात् ॥ ए-
तदग्रे ( सू. २८ ) "प्रकाशाश्रयवद्वातेजस्त्वात्" इतिसूत्रितं ॥ तत्रयथापटरूपंपट-
कार्यंतथाब्रह्मधर्माब्रह्मकार्यभूताअतस्तद्भिन्नाएवेतिप्राप्तेइदमुच्यते ॥ यथाआतपज्यो-
त्स्नादयः प्रकाशास्तदाश्रयाःसूर्यचंद्रादयश्चतेजस्त्वेननभिन्नाः प्रभायारूपविशेषत्वा-
त्द्वादशस्कंधचतुर्थाध्याये ( श्लो० २३ ) दीपश्चक्षुश्चरूपंचज्योतिषोनपृथग्भवेदित्युक्तेः
तथाब्रह्मापिब्रह्मतयानात्मधर्मातिरिक्तंतेजः शब्दवाच्यत्वात् ॥ मुंडकछांदोग्यकठतै-
त्तरीयादिषु "तच्छुभ्रंज्योतिषांज्योतिः ॥ अथयदतः परोदिवोज्योतिर्दीप्यते ॥
परंज्योतिरुपसंपद्य ॥ भारूपः तस्यभासासर्वमिदंविभाति छायातपौब्रह्मविदो-

वदंति श्रुक्रेणज्योतिः ँ षिसमनुप्रविष्टः ” स्मृतिस्त्वपितत्तेजोविद्धिमामकं ब्रह्मज्योति- र्निगुणां ब्रह्मज्योतिः सनातनं । इत्यादौब्रह्मतद्धर्मयोस्तद्वाच्यत्वंप्रसिद्धं ॥ एतेन “प्राणन्नेवप्राणोभवतिवदन्वाक् ॥ नेहनानास्तिकिंचन ” इत्यादिवाक्यजातंतद्- भेदबोधकंसंगतार्थं ॥ ब्रह्महिसर्वधर्माश्रयः ॥ तेचधर्माब्रह्माभिन्नाएवतत्कार्येप्रपंचे- तदिच्छानुरोधात्केचित्क्वचित्केचिदनुवृताभुवोगंधइवपुष्पादौक्षारमाधुर्यादिकमिवल- वणशर्करादावितिप्रपंचगताअपितेब्रह्माभिन्नाएव किंपुनः कारणावस्थायांतन्नि ष्ठाः ॥ अतएवभगवता रसोहमप्सुकौंतेयप्रभास्मिशशिसूर्ययोरित्यादौ यदादि- त्यगतंतेजइत्यादौचधर्माणांस्वाभिन्नतैवदर्शिता ॥ धर्माणामब्रह्मत्वेइमानिवाक्या- निनसंगच्छेरन् ॥ अतः प्रकाशाश्रयवदभेदसिद्धांतसंमतंप्रतिपाद्यएकदेशमत- स्यापिसर्वथाहेयत्वंवारयितुंतमपिपक्षमाह ( सू० ०९ ) “ पूर्ववद्वा ” इति ॥ एतदर्थं- स्फुटीकर्तुमत्रत्यंभाष्यंप्रकाशंचैकीकृत्यप्रायेणाक्षरशोनुवदंति **अथवाअरूपवदित्या- दिना** ॥ अत्रप्रपंचविलक्षणमित्यादिररूपवत्सूत्रस्यार्थः किंत्वित्यादिराहचेतिसूत्रस्य- यदाविर्भवतीत्यादिःप्रकाशवत्सूत्रस्य तत्रजडेत्यादिरग्रिमसूत्रयोश्चेतिध्येयम् ॥ अस्मि- न्पक्षेनिर्धर्मकमेवब्रह्मपूर्वंधर्मरूपंभवतिततःप्रपंचरूपं ॥ तस्यधर्मरूपतयाभवनंतु “ का- मस्तदग्रेसमवर्तताधि ” इत्यादौतद्ब्रह्मैवअग्रेपूर्वंकामःसमवर्ततइच्छारूपमभवदित्याद्यर्थ- प्रतिपादकेप्रसिद्धं ॥ पूर्वंचनासदासीदित्यादिप्रतिषेधोप्येकदेशिमतेप्राङ्निर्धर्मकताभि- प्रायः ॥ अतएवप्रतिषेधाच्चइत्यग्रिमंसूत्रं अन्यत्सर्वंनिगदव्याख्यातं ॥ **तत्प्रतिबं- धादिति**एकविज्ञानेनसर्वविज्ञानस्यप्रतिबंधात्एतदंतोभाष्यतत्प्रकाशयोरनुवादःनच- परत्रोक्त्याऽस्यपक्षस्यप्राबल्यंशंक्यं परत्रोक्तिमात्रस्यप्राबल्यजनकतायाःपूर्वतंत्रे- ( अ ० ५ पा ० १ सू ० २ ) “ अर्थाच्च ” त्यधिकरणसिद्धयवागूपाकन्याया- दिबाधितत्वात्पूर्वत्रयुक्तिप्राबल्यात् सर्वश्रुत्यनुग्रहप्राबल्याच्च ॥ त्वयातुनैतदाशं- कितुमपिशक्यं ॥ “ नतत्ररथा ” इत्यत्रत्योक्तिविरोधात् सूत्रेषुसर्वत्रपरमपादो- क्तमुक्तौसगुणत्वरूपापकर्षस्यतावकैःकल्पनाच्च ॥ अनयोश्चपक्षयोःप्रथमउत्तमाधि- कारिणामर्थेद्वितीयोमध्यमाधिकारिणामितिद्वितीयस्कंधे नास्यकर्माणिजन्मादौपर- स्यानुविधीयतइत्यादिनाव्यासपादैरेवदर्शितं ॥ अधिकंतुसकलमाकरेभ्योवगंतव्यं ॥ ( अहिकुंडलसूत्रेतुशब्द ) इत्यादिकंतुप्रागेवापास्तं ॥

यदपि ( अतएवनस्थानतोपिपरस्योभयलिंगंसर्वत्रहिअरूपव- देवहितत्प्रधानत्वादितिसूत्रेचसंगच्छेते ) इत्यादिनास्वमतोप- ष्टंभकत्वेनसूत्रद्वयमुपन्यस्यतयोरर्थवर्णनंसूत्रार्थस्त्वित्यादिना-

क्तं ॥ तदपिनसम्यक् तादृशव्याख्यानस्यायुक्तत्वात् सर्व-
ग्रहीतिहेतुबोधकेपदेनिर्विशेषस्यैवोपदेशादित्यस्यार्थस्यासौत्र-
त्वेनतृतीयाध्यायेवाशास्त्रेवाईदृशस्यशब्दस्यार्थस्यचक्काप्यनु-
क्ततयाऽनुवृत्तेरपिकर्त्तुमशक्यत्वेनाभ्युपगमैकशरणत्वात् अ-
शब्दमस्पर्शमितिविषयवाक्योत्तरार्द्धेपि अनाद्यनंतंमहतःपरं-
ध्रुवंनिचाय्यनमित्यनेनमहतःपरमित्यादिनापूर्वोक्तस्यध्रुवस्यपुरु-
षस्यपरामर्शेनप्रामायाःसविशेषतायाअनादरेणतद्विरुद्धत्वात्-
निर्विशेषमेवब्रह्मेतिसिद्धांतस्यात्रैवसिद्धावग्रिमस्यारूपवत्सूत्र-
स्यवैयर्थ्यप्रसक्तेः तत्रसाध्यमानस्यात्रसिद्धवन्निर्देशांगीकारकृ-
त्यस्याप्ययुक्तत्वाच्च तथा अरूपवत्सूत्रेतत्प्रधानत्वादित्यस्य-
निर्विशेषब्रह्मप्रधानत्वादितिव्याख्यानमप्ययुक्तंतदुपन्यस्तानांवि-
षयवाक्यानामुपक्रमादिविचारेतथात्वस्यालाभात्तथाहिप्रथमं-
तत्रास्थूलवाक्यंतच्च " कस्मिन्वाआकाशओतश्चे " तिगा-
र्गीप्रश्नात्प्रवृत्तंस्थूलत्वादीन्लौकिकान्धर्मान्निषेधत्प्रशासितृत्वां-
बरांतधारकत्वद्रष्टृत्वादीनाकाशोपादानत्वांतानलौकिकान्दर्श-
यति अशब्दवाक्यंतुप्रागुक्त्यातंआकाशवाक्येचनामरूप-
निर्वाहकत्वं " दिव्योह्यमूर्त्त " इतिवाक्यंचेयत्तापरिच्छिन्न-
परिमाणंनिषेधत्पुरुषत्वंबाह्याभ्यंतरसाहित्यंबाह्याभ्यंतररूपत्वंवा-
दर्शयदक्षरात्परत्वमप्यश्रावयति " तदेतद्ब्रह्मे " तिमधुविद्योपसं-
हारस्थमपिमधुविद्यायाउपक्रमे " अयमेवसयोयमात्मेदममृत-
मिदंब्रह्मेदंसर्व " मित्येवंचतुर्दशपर्य्यायैरभ्यस्तंसर्वत्वंमध्यउक्तं-
सर्वभूतपतित्वादिकं "अयंवैहरयोयंवैदशचसहस्राणिबहूनिचा
नंतानि,, चेत्यनंतरूपतांश्रावयतीतिनिर्विशेषब्रह्मप्रधानतायाबकु

मशक्यत्वात् नचतदेतद्ब्रह्मेति भिन्नंवाक्यंपूर्वेभ्यइतिवाच्यं तच्छ
ब्दात्पूर्वपरामर्शाद्विभागेसाकांक्षत्वेनैकवाक्यतयातदभावात् उ-
क्तंच अर्थैक्यादेकंवाक्यंसाकांक्षंचेद्विभागेस्यादिति नचेदंत-
च्छब्देनपूर्वोक्तरूपत्वंपरामृशदप्यपूर्वमित्यनेनतन्निषेधतीतिन-
दोषइतिवाच्यं एवंतर्ह्यनपरमित्यनेनानंतरत्वादीनांयमानांपिनिषे-
धच्छून्यवादमेवप्रसंजयेत् अतोत्रपूर्वत्वादीनांधर्माणामेवनिषे-
धइत्येवांगीकार्यंतथासति नशुष्केणनचार्द्रेणजहारनमुचेःशि-
रइत्यत्रयथोभयात्मकस्यफेनस्याशुष्कत्वमनार्द्रत्वमेवमत्राप्ये-
कैकतन्निषेधेनसर्वात्मकमेवबोध्यतेइत्येवयुक्तं ॥ अतएवग-
जेंद्रस्तुतौ सवैनदेवासुरमर्त्यतिर्यङ्नस्त्रीनषंढोनपुमान्नजंतुः ना-
यंगुणःकर्मनसन्नचासन्निषेधशेषोजयतादशेषइत्यशेषत्वमु-
क्तं तथा शुकैरपिएवंगजेंद्रमुपवर्णितनिर्विशेषंब्रह्मादयो-
विविधलिंगभिदाभिमानाः नैतेयदोपससृपुर्निखिलात्मकत्वा-
त्तत्राखिलामरमयोहरिराविरासीत् इतिनिर्विशेषस्यनिखिला-
त्मकत्वंबोधितं तथात्राप्यंतेसर्वानुभूरितिश्राव्यते सर्वसत्वेएव-
सर्वानुभवितृत्वसंभवादिति नचेदंप्रलयेनसंभवतीतिवाच्यंको
नामप्रलयः ध्वंसोवाप्रतिसंचरोवा ॥ नाद्यः असत्कार्य्य-
वादप्रसंगात् द्वितीयश्चेदस्मदाद्यगोचरत्वेपिसर्वंब्रह्मगोचरोस्त्ये-
वेतिनासंभवः वस्तुतस्त्वखंडब्रह्मवादेअस्मदाद्यगोचरत्वमेवप्र-
लयःक्रमेणत्रायुगपद्वातद्गोचरत्वमेवसृष्टिरितीच्छयासमर्थना-
न्नकश्चिद्दोषः एवमेवास्थूलादिवाक्योक्तनिषेधस्थलेपिबोध्यम्
इति यच्चयत्वित्यादिनाऽस्मन्मतमनूद्यतन्नेत्युक्त्वा ( यतोव्यवहा-
रविषयोव्यवह्रियते नतुव्यवहारविषयत्व ) मित्युक्तं तन्नु-

त्त्वंव्यवहारविषयत्वस्यापिव्यवहाराविषयत्वादन्यथाव्यवहार-
विषयत्वस्याव्यवहार्यत्वापत्तेः ॥ नहितद्व्यवहाराविषयइति-
शक्यतेवक्तुंप्रमेयेप्रमेयत्वंचप्रमेयत्ववद्वाच्यत्वेवाच्येचवाच्यत्वव-
द्व्यवहारविषयेतद्विषयत्वेपिव्यवहारविषयत्वसत्वेबाधकाभावा-
त् ॥ एवंतत्प्रधानत्वादितिसूत्रांशस्यव्याख्यायामपि ( प्र-
धानपदस्वारस्यभंगात् अरूपवदेवहितत्परत्वादितिब्रह्मैवहित-
त्परत्वादितिवावक्तुमुचितत्वा ) दित्यादियदुक्तं तदपिपूर्वा-
परसूत्रार्थानालोचनस्वमतदोषानवबोधाभ्यामेवोक्तं नस्थान-
तोपीत्यादिपूर्वसूत्रैर्ब्रह्मस्वरूपविचारआरब्धः तत्रजडजीवधर्मा-
ब्रह्मणिकचिद्विधीयंतेकचिन्निषिध्यंते तथाचब्रह्मजडजीवध-
र्मवन्नवेतिसंदेहेरूपवत्सूत्रंप्रवर्त्ततेब्रह्मैवेत्युक्तेतादृशसंदेहानिवृत्तेः
सूत्रंव्यर्थमेवस्यात् ॥ एवंतत्प्राधानत्वादित्युक्तौसर्वेषुवेदेषुब्र-
ह्मणःप्रधानत्वात् “ सर्वेवेदायत्पदमामनंति वेदैश्चसर्वैरहमेववे-
द्य ” इत्याद्यपिसंगच्छते तत्परत्वादितियद्युच्यतेतदा “ ज्यो
तिष्टोमेनस्वर्गकामोयजेते ” त्यादिवाक्यानांकर्मपरत्वात्ब्रह्मपर-
त्वाभावाच्चासंगतिःस्यात् ॥ तन्निवेशेचतेषांवाक्यानांब्रह्मप्र-
धानत्वमस्त्येव ॥ कथमितिचेदुच्यते ॥ सर्वस्यैवपूर्वकांडस्य
“ तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेन तपसाऽना-
शकेने ” त्यादिनाब्रह्मज्ञानांगत्वबोधनादंगिनएवप्राधान्यंनत्वं-
गस्यत्वन्मतेतुयथाऽस्थूलादिवाक्यानिनिराकारब्रह्मतत्वप्रधाना-
नि तथा सहस्रशीर्षेत्यादिवाक्यानिसाकारब्रह्मप्रधानानि-
यथाऽस्थूलादिवाक्यान्निराकारंब्रह्मप्रतिपत्तव्यं तथासाकार-
मपिप्रतिपत्तव्यंस्यात् ॥ तस्मात्वन्मत्तएवप्रधानपदस्वारस्य-

भंगः अधिकंतुभाष्यादितोऽवसेयं ॥ " नतत्ररथानरथयोगाः पृथगात्मानंप्रेरितारंचमत्वा " इत्यादिवेदस्ययदिभेदप्रतिपादकत्वंतवाभिमतं तदाऽद्वैतप्रतिपादनार्थंतवापिप्रयासोव्यर्थएवयदितत्रलोकसिद्धएवभेदोनूद्यतेतर्हिकरादीनामभेदप्रतिपादनाग्रहोनिर्मूलइतिकथनमसंगतंस्यात् ॥ एतेननतत्ररथाइत्यादिकःप्रलापोनिरस्तः एवंसर्वेवेदायत्पदमामनंतीत्यत्रपद्यतेऽनेनेतिपदंप्राप्त्युपायमित्यर्थस्यप्रतीतिसंभवेलक्षणायांमानाभावा(त्लक्षणयात्वयाप्यर्थोवाच्य ) इतिकथनमसंगतमेवएवंगीतावाक्येपिलक्षणायांमानाभावेनविद्वन्मंडनाद्युक्तोविरोधोदुरुद्धरएवेति ( विद्वन्मंडनाद्युक्तस्तद्विरोधोपिपरिहृत ) इत्यसंगतं ॥

## टीका

सहस्राक्षे अतएवनस्थानतइत्यादिंविरोधोपिपरिहृतइत्यंतं भागमपाकुर्वंति ॥ यदपिअतएवेत्यादिनापरिहृतइत्यसंगतमित्यंतेनअत्रापिभाष्यप्रकाशमेवाक्षरशोऽनुवदंति ॥ सर्वत्रहीतिहेतुबोधकइत्यादिनाअसौत्रत्वेनेति ॥ नहिसूत्रेनिर्विशेषोपदेशादितिपदमस्ति ॥ अध्याहारेतुविनिगमनाविरह इतिभावः ॥ अशब्दमित्यादि ॥ इदंकटवल्लीषुतृतीयवल्लीस्थं ॥ पूर्वोक्तस्येति ॥ तत्रैव " अव्यक्तात्पुरुषःपरः " ॥ इत्यादिनोक्तस्यांकिंचोभयलिंगनिषधेनिर्विशेषतायाअप्यस्थूलादिवाक्यसिद्धायानिषेधसिध्यातत्रैवनिर्विशेषोपदेशस्यहेतुत्वासंगतिःस्वमतस्यापित्यागःशून्यवादप्रसंगश्चेत्यादिकमपितन्मतेद्रष्टव्यं ॥ अरूपवत्सूत्रेपिरूपपदमात्रोच्चारणेआदिपदानुपादानेचसत्यपिरूपाद्याकाररहितमित्यर्थःकथंनिर्णेतव्यः ॥ तदुपन्यस्तानामिति ॥ तद्भाष्ये "अस्थूलमनण्वह्रस्वमदीर्घं अशब्दमस्पर्शमरूपमव्ययं आकाशोवैनामनामरूपयोर्निर्वहितातेयदन्तरातद्ब्रह्म दिव्योह्यमूर्तःपुरुषःसबाह्याभ्यंतरोह्यजः तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्माब्रह्मसर्वानुभूः " इत्येवंविषयवाक्यानिदर्शितानि ॥ प्रशासितृत्वेत्यादि " एतस्यवाअक्षरस्यप्रशासने " इतिप्रशासनं ॥ अंबरांतशब्दोपादानंतुप्रथमस्यतृतीयपादस्याक्षराधिकरणानुरोधात् ॥ तद्धरा-

कत्वंतु " सूर्याचंद्रमसौविधृतौतिष्ठतः ॥ द्यावापृथिव्यौविधृतेतिष्ठतः " इत्यादिश्रावणात् ॥ द्रष्टृत्वादिकंतु " तद्वाएतदक्षरंगार्ग्यऽदृष्टंद्रष्टृश्रुतंश्रोत्रऽमतमंत्रऽविज्ञातंविज्ञातृनान्यदतोऽस्तिद्रष्टृ " इत्यादिनोक्तं ॥ समासौ आकाशोपादानत्वंच " एतस्मिन्नुखल्वक्षरगार्ग्याकाशओतश्चप्रोतश्चेति " इतिस्पष्टं ॥ अशब्दवाक्यंतअव्ययत्वंवदत्पंचभूतगुणान् कर्मेणानिषेधत्तथातेनभूतेषु दृष्टप्रकारेणेत्यर्थकैतथापदंचसर्वत्रान्वयायदेहलीदीपमिवमध्यउ-

---

## सहस्राक्ष.

अतएव नस्थानतोपिपरस्योभयलिङ्गंसर्वत्रहि अरूपवदेवहितत्प्रधानत्वादिति सूत्रेष्वसंगच्छेते ॥ तदेतदाह ॥ निपातादितइति ॥ निपातौ तुवाशब्दौ आदिनासूत्राणि तद्विषयवाक्यानि न ऽसामान्येत्यादिनावक्ष्यमाणायुक्तयश्चगृह्यंते ॥ १८ ॥ सूत्रार्थस्तु स्थानतः भूम्यादिरूपात् स्थानात् उपाधितइतियावत् अपिशब्देन स्वतस्तुनसंभवत्येव विरोधादित्यर्थः संगृह्यते ॥ परस्य ब्रह्मणः उभयलिङ्गम् उभेलिङ्गेयस्यतत् सविशेषत्वनिर्विशेषत्वसहितं हि यस्मात् सर्वत्रब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु अशब्दमस्पर्शमित्यादिष्वित्यर्थः ॥ नत्द्युपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशः स्वभावः संभवति ॥ नहि स्वच्छः सन्स्फटिकोऽलक्तकादियोगादस्वच्छोभवति भ्रममात्रत्वादस्वच्छत्वाभिनिवेशस्य ॥ यत्तु विरुद्धरूपता ब्रह्मणोलक्षणमिति तत्प्रतिवक्ष्यामः ॥ अरूपवदेव आकाररहितमेव हि प्रसिद्धं ब्रह्म तत्प्रधानत्वात् ॥ अस्थूलमनणुअह्रस्वमित्येवमादीनि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि नार्थान्तरप्रधानानि इत्येवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्म प्रतिपत्तव्यम् ॥ यत्तुन रूप्यतेव्यवह्रियते इतिरूपं सर्वव्यवहारविषयत्वं तद्वद्विश्वंतद्विलक्षणं ब्रह्मेत्यादिव्याचक्षतेतत्तुनयुक्तं ॥ यतोव्यवहारविषयोव्यवह्रियते नतुव्यवहारविषयत्वम् ॥ एवंतत्प्रधानत्वात् इत्यस्य सर्वेषां वेदान्तानां ब्रह्मैव प्रतिपाद्यम् ॥ यतः करादीनामपि ब्रह्मत्वेनैव निरूपणम् ॥ अन्यथा तेषामब्रह्मत्वे सर्वेवेदायत्पदमामनन्ति • वेदैश्चसर्वैरिति नियमव्याहतिःस्यात् ॥ अतः करादिनिरूपकाः साक्षाद्ब्रह्मनिरूपकाएवेत्यपि न युक्तम् ॥ प्रधानपदस्वारस्यभङ्गात् ॥ अरूपवदेवहितत्परत्वादिति ब्रह्मैवहितत्परत्वादितिवा वक्तुमुचितत्वात् ॥ ननत्रयारययोगाः ज्योतिष्टोमेनस्वर्गकामोयजेत पृथगात्मानंप्रेरितारंचमत्वाजहात्येनांभुक्ताभोगामजोन्य इत्यादिना स्वमस्य कर्मणांभेदस्यच वेदप्रतिपाद्यत्वदर्शनेऽप्यभेदप्रतिपादनाग्रहाभावान्निर्मूलस्तवकरादीनामभेदप्रतिपादनाग्रहः ॥ सूत्रस्थप्रधानपदविश्वासेनाऽस्मद्रीत्याऽर्थकरणेतु नकोपिदोषः ॥ एवंच सर्वेवेदात्यपदं यत्पदप्राप्तिप्रयोजकमामनंतीति सर्वेवेदाइत्यस्य लक्षणया त्वयाऽप्यर्थोवाच्यः ॥ एवं गीतावाक्यस्य सर्ववेदप्रतिपाद्यैर्धर्मैरित्यादिरर्थः ॥ एतेन विद्वन्मण्डनायुक्तविरोधोपिपरिहृतः ॥ १६ ॥

पादरस्त्वव्ययशाल्यनित्यपांचभौतिकाकारमेवनिषेधति ॥ अतएवतांनचार्य्येत्युक्ति-स्तदवगंतरपिमृत्युमुखान्मुक्तिश्चसंगच्छते ॥ अस्यात्रविषयवाक्यतयाविवक्षणेऽश-ब्दवदेवेत्येवसूत्रकारांब्रूयात् प्रथमस्यत्यागेमानाभावात् ॥ "दिव्योह्यमूर्तःपुरुषः सबाह्याभ्यंतरोह्यजः अप्राणोह्यमनाः शुभ्रोह्यक्षरात्परतःपरः" इतिमुंडकस्थं ॥ **निषेधादिति** ॥ अमूर्तपदेनेतिभावः ॥ **सर्वहित्यमिति** ॥ बाह्याभ्यंतराभ्यांसह-वर्ततइतिविग्रहादरात् ॥ सइतिपृथक्पदेतुद्वितीयोऽर्थः ॥ **परत्वमिति** जगतःपरस्मा-दक्षरादपिपरइतिव्याख्यानात् ॥ **मधुविद्येति** ॥ बृहदारण्यकेतुरीयाध्यायस्यपंचममि-दंब्राह्मणम् ॥ **सर्वभूतपतित्वादिकमिति** तत्रैव "सवाअयमात्मासर्वेषांभूतानांम-धिपतिःसर्वेषांभूतानां राजातद्यथारथनाभौचरथनेमौचाराःसर्वेसमर्पिताएवमेवास्मि-न्नात्मनिसर्वाणिभूतानिसर्वएतआत्मानःसमर्पिताः" इतिदर्शितंरूपंरूपमित्यादितुग्रंथव्या-ख्यातं ॥ श्रुतावपूर्वपदस्यपूर्वोक्तरीतिकिंनभवतीत्यर्थमभिप्रेत्यकृतशंकादिकंप्रकाश-स्थमेवानुवदति ॥ **पूर्वत्वादीनामिति** पूर्वत्वंकालिकंदैशिकंवापरत्वं ॥ एवम-परत्वमपिद्विविधंग्राह्यंवक्ष्यमाणदृष्टांतेनतदुभयधर्माश्रयोब्रह्मेत्यत्रार्थः ॥ **नशुष्केणेति** अष्टमस्कंधेएकादशाध्याये ( श्लो० ४० ) इदमस्तिअतःपूर्वमेव ( श्लो० ३९ ) ध्यायन्फेनमथापश्यदुपायमुभयात्मकमितितेननिषेधःशुष्कत्वमार्द्रत्वमात्रयोरेवेतिसि-ध्यति **बोध्यमिति** स्थूलत्वाणुत्वाद्युभयधर्माश्रयत्वंबोध्यम् ॥ एतदंतःप्रकाशा-नुवादः ॥ तदर्थइतिशब्दः ॥ सिद्धांतेअरूपवत्सूत्रेरूपशब्दः "रूप्यतेव्यवह्रियतइ-तिरूपं" इतिव्याख्यातस्तत्रेदंज्ञेयम् ॥ रूप रूपकरणेचुरादिः ततोबाहुलकात्कर्मण्य-चि अन्येषामपीतिदीर्घः रूपकरणंचशब्दादिनाव्यवहरणं अथवारूयते शब्द्यते रुशब्दे-अदादिः ततःशप्पशिल्पेतिपप्रत्ययोदीर्घश्चनिपात्यते ॥ भाष्येरूप्यतइतितुफलितार्थ-कथनं ॥ यद्वाग्रंथावृत्तौपशौशब्देस्वभावेनाटकादिषु । रूपमाकारसौंदर्यनाणकेष्वपि-दृश्यतइतित्रिकांडशेषात् रूपंतुश्लोकशब्दयोरिति हैमाच्च शब्दार्थकाद्रूपशब्दान्मत-वंतात्तत्करोतीति णिचि विन्मतोर्लुगितिलुकिनामधातोरिहरूप्यतइतिरूपं ॥ अथवाऽ-स्तुप्रथमपक्षएव व्यवहाराविषयत्वंतुसर्वत्रफलिष्यत्येव ॥ **नहितदिति** ॥ नागृहीत-विशेषणेतिन्यायेनव्यहारविषयस्यैवव्यहार्यत्वप्रसंगान्नशक्यतइतिभावः ॥ **प्रमेये-त्यादि** ॥ प्रमेयत्ववाच्यत्वयोः प्रमेयत्वाद्यभावेसर्वंप्रमेयंसर्ववाच्यमित्यापत्त्यात-योःकेवलान्वयित्वंनस्यात् ॥ **इयर्थमेवेति** ॥ उक्तसंदेहानिवृत्तेरितिभावः ॥ किंचब्रह्मै-वेत्युक्तौकरादिकमितिपक्षोविनिगमकविरहिताध्याहारक्लेशलभ्यः ॥ वास्तवपाठेतुब्रह्मै-वेतिपक्षोन्यत्रप्रायःसर्वत्राधिकरणेष्विवसुलभः ब्रह्मविचारादिहाधिकाराऽनुवृत्तस्यपर-स्येत्यस्यप्रथमांततया विपरिणामाक्षा ॥ अतोयथान्यासमेवास्तु ॥ अत्रेदंज्ञे-यं प्रकृतमंत्रंहिद्विधाव्याख्यायतेभाष्यविद्वन्मंडनयोः ॥ तत्राद्यैएकदेशिमतप्रदर्शि-

कापंचसूत्री ॥ तत्रजडजीवधर्माब्रह्मणिसंतीतिपूर्वपक्षेइदमुच्यते ॥ अरूपवत्-
ब्रह्मव्यवहारविषयोनभवति कुतः वेदांतेषुतस्यैवप्राधान्यात् ॥ इत्येकोऽर्थः ॥ अत्र-
बहुव्रीहिमाश्रित्यतत्परत्वादितिपाठेतुविरुद्धोहेतुःस्यात् ॥ शब्दगम्यत्वेअव्यवहार्यत्वा-
संभवात् ॥ पूर्वकांडस्यान्यपरत्वात्त्वद्रीत्याऽनैकांतिकश्चतदेतदाहुः ॥ एवंतत्प्र-
धानत्वादित्यादि ॥ अथचअरूपवत् रूप्यतेव्यवह्रियतेऽनेनेतिरूपंकरादिकंत-
द्विशिष्टंब्रह्मनभवति किंतुरूपरूपं॥ अस्मिन्पक्षेपिहेतुस्तुल्यः सर्वेषुवेदेषुतस्यैवप्रतिपाद्य-
तयामुख्यत्वादितितदर्थः ॥ "सर्वेवेदाः ॥ वेदैश्चसर्वैः" इत्यादिश्रुतिस्मृतिभ्यः यदि-
ब्रह्मणःकरादिकमब्रह्मभूतं, मिथ्यास्यात्तर्हिप्रत्यक्षादिप्रमाणांतरागम्यंतत् वेदःकिमर्थंप्र-
तिपादयेत् ॥ प्रतिपादनेतुसर्वेवेदाइत्यादिविरोधः ॥ तत् अद्वितीयब्रह्मप्रधानंप्रतिपा-
द्यतयामुख्यंयेषामितिबहुव्रीह्यादरेपिसमानं ॥ स्वमस्त्वनुभवसिद्धःस्वयंज्योतिष्ट्वसाध-
नायोक्तः तस्यनिर्मातृत्वायच नहिब्रह्मणःकरादिकंब्रह्मनिर्मितंलोकेऽनुभवसिद्धंच॥ ये-
नतदनुवदेत् ॥ तत्परत्वादित्युक्तौतुमुख्यत्वालाभात् कथंचिदपितत्परत्वस्यसंभवा-
च्च विवक्षितंनसिध्येत् ॥ यत्तुनतत्ररथाइत्यादितन्न ॥ सदसच्चाहमर्जुनेतिस्मृतेः यद-
स्तियन्नास्तिचविप्रवर्येतिविष्णुपुराणवाक्याच्चकथंचित्स्वप्नोपितद्देवेतिकेचित् ॥ "यज्ञो-
विष्णुः" धर्मोयस्यांमदात्मकइत्यादिश्रुतिस्मृतिभिर्ज्योतिष्टोमादिपराअपिसाक्षात्तत्प-
राएव ॥ मूलेतेषामब्रह्मपरत्वंतुपिशाचः पिशाचभाषयाबोधनीयइतिन्यायानुरोधा-
दुक्तं ॥ द्विधासम्भवद्वृहत् प्रकृतिश्चप्रतिज्ञेत्यादिस्मृतिसूत्रैः प्रकृतेरपिब्रह्मत्वमेव
तेनाजानिरूपणादरेपिनाब्रह्मपरत्वं ॥ यत्तुश्वेताश्वतरप्रथमाध्यायवाक्यं ( ऋक् ६ )
"पृथगात्मानंप्रेरितारंचमत्वाजुष्टस्ततस्तेनामृतत्वमेति" इतिअंशांशिभावमूलकंप्रेर्यप्रेर-
कयोर्भेदंविचार्ययोयदंशः सतंभजेदितिन्यायेनप्रीतिसेवनयुक्तः ॥ तेनभगवताऽमृतंप्राप्नो-
तीत्यर्थकमुक्तं ॥ यच्चतत्रैवचतुर्थाध्यायस्थंजहात्येनामितिवाक्यंजीवानां पर-
स्परप्रतियोगिकभेदबोधकमुक्तं तत्रोभयत्रापिभेदऐच्छिकोघृतजतुद्रवत्ववद्ब्रह्मध-
र्मएवेत्युक्तंप्राक् किंच लोकसिद्धंस्वप्नादिकंभेदश्चक्वचिद्वेदेनानूद्यते नतुब्रह्मविशे-
षाणामिवतस्यप्रतिपादकानिशतशोवाक्यानिसंति विशेषाणामब्रह्मत्वेभूयांसएववेद-
भागाअब्रह्मपराःस्युः ॥ भेदादेश्चानुवादोपिनिषेधार्थं अन्यथानिषेधायोगात् ॥ त-
थात्रापिनिषेधस्थलेलोकसिद्धमेवपाणिपादादिकमनूद्यनिषिध्यते ॥ निषेधवाक्यस्या-
नुवादमात्रेणनिषेधसिद्ध्यातः पृथग्भूतानांविशेषबोधकवाक्यसहस्राणामनुवादकत्वम-
शक्यवचनं प्रयोजनाभावात् ॥ तावद्भिर्भागैःप्रतिपादनमंतरानिषेधस्याशक्यत्वाङ्गी-
कारेभेदप्रतिपादकान्यपिशतशःसहस्रशोवाक्यानिभवेयुः अन्यथानिषेधासंभवेनाद्वैता-
सिद्धेः ॥ नह्येकमपिपृथग्भूतंसिद्धवत्कारेणभेदबोधकंवाक्यमस्तियथासाकारत्वावा-
क्यानि ॥ भेदस्वमादेरिवविश्वतश्चक्षुष्ट्वादेर्लोकसिद्धत्वाभावादपिनानुवादोवक्तुंशक्यः
॥ तदेतदाहुः ॥ यदितत्रेत्यादि ॥ श्रुत्यपपाठास्तुतस्योपेक्ष्याः ॥ यच्चए-

वंचेत्यादिपरिहृतइत्यंतंतत्तुत्वमतस्याप्यज्ञानात् ॥ तत्रसर्वैर्वेदाइतिकठवाक्येयदि-तिपदमितिचपृथक्पदेएव नतुयस्यपदमितिसमासोयद्भमात्तवलक्षणाक्लेशः ॥ अर्थ-स्तु यत्पद्यतइतिपदंप्राप्यंसर्वेऽशेषावेदाआमनंतीति ॥ अतएवतद्भाष्येशंकराचार्याअ-पि " सर्वेवेदायत्पदंपदनीयमविभागेनामनंति " इत्याहुःगीतावाक्येपिसर्वैरशेषैर्वे-दैश्चात्तदनुकूलस्मृतिभिश्चाहमेववेदनीयइत्यर्थः ॥ एवकारोऽन्ययोगव्यवच्छेदकः ॥ अतएवैकादशस्कंधे मांविधत्तेभिधत्तेमामित्यादिनाभगवतात्वस्यैवधर्मरूपेणविधेय-त्वंवेदैरभिधयाप्रतिपाद्यत्वंविकल्प्यत्वापोह्यत्वादिकंचत्वस्यैवदर्शितम् ॥ कौर्मेपि-पूर्वखंडद्वादशाध्याये नहिवेदादृतेकिंचिच्छास्त्रंब्रह्माभिधायकमित्यभिधयाब्रह्मण्येववे-दप्रवृत्तिर्बोधिता ॥ अतोनवेदशब्दोऽत्रलाक्षणिकः अन्यथाधर्मैश्चसर्वैपित्येववदेत् ॥ शंकराचार्यैरप्यत्र " वेदैश्चसर्वैरहमेवचपरमात्मावेद्यःवेदितव्यः " इतिव्याख्यातं ॥ धर्मेत्रलक्षणातुतावकेनापिनकेनापिव्याख्याता ॥ अतोविद्वन्मंडनाद्युक्तंयुक्तमेव ॥

अग्रेच( ननुस्वामरथादिकंब्रह्मणोऽभिन्नमेवपरंतुतदक्षरब्रह्म-णोऽभिन्नंकरादितुपुरुषोत्तमादभिन्न )मित्यादिनास्वयमेवपूर्व-पक्षमुद्भाव्य ( तयोरभेदेऽक्षरादभिन्नमिदंपुरुषोत्तमादभिन्नमिद-मितिनिर्णयस्यावास्तवत्वापत्ते )रितियद्दोषोद्भावनंकृतं तत्रा-क्षरब्रह्मणःपुरुषोत्तमादभेदस्यास्मत्संमतत्वेपिस्वामरथादीनामक्ष-रब्रह्माभेदस्यभाष्यादिष्वदृष्टत्वेनतादृशपूर्वपक्षतत्खंडनयोः पर-प्रज्ञाकल्पितत्वादुपेक्षणीयत्वमेव ॥ अक्षरंतुपुरुषोत्तमस्यैवरू-पांतरं ॥ अतएवगीतायांभगवताप्युक्तं यस्मात्क्षरमतीतोहम-क्षरादपिचोत्तमः अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमइति ॥-ननू ( क्तभगवद्वचनेऽक्षरशब्देनब्रह्मनोच्यते ॥ एकस्मिन्परा-परभावस्यविरुद्धत्वात् किंतु जडमेवेतिभातितच्चमायैव ॥ अतएवाक्षरंस्यादपवर्गेपरमब्रह्मवर्णयोः गगनेधर्मतपसोरध्वरे-मूलकारणेइतिपरमब्रह्मणोमूलकारणंपृथवदन्हेमचंद्रकोशःसं-गतः ॥ अतएव तस्मिन्नेवप्रकरणेकूटस्थोक्षरउच्यते

इत्युक्तंभगवतातथाचकूटमित्युपक्रम्य सीरांगे नृततुच्छयोरि-
तिहेमचंद्रोक्त्याकूटमनृतं तुच्छंवायथास्यात्तथातिष्ठतीतिकूट
स्थोमाया ॥ तस्माद्गीतासुअक्षरपदेनजडस्यग्रहणादक्षरा-
ख्यब्रह्मांतरासिद्ध्याऽक्षरब्रह्मणोऽभिन्नंजगदित्यादिनिर्मूलमेवे )
तिचेन्न ॥ " एतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनणव-
ह्रस्वं ॥ एतस्यवाअक्षरस्यप्रशासनेगार्गिसूर्य्याचंद्रमसौविधृतौ-
तिष्ठत „ इत्यादिश्रुतिविरोधात् ॥ नचतादृशश्रुतिष्वपिअक्ष-
रशब्देनप्रकृतिरेवोच्यतेपूर्वोक्तकोशप्रामाण्यादितिवाच्यं अक्ष-
रमंबरांतधृतेरितिसूत्रस्यतत्सूत्रव्याख्यानरूपस्यश्रीशंकरकृतभा-
ष्यस्यचविरोधापत्तेः ॥ तथाचभाष्यं " परएवात्माऽक्षरशब्द-
वाच्यः कस्मादंबरांतधृतेः पृथिव्यादेराकाशांतस्यविकारजात-
स्यधारणात् तथाचोपसंहृतमेतस्मिन्नुखल्वक्षरेगार्ग्याकाश-
ओतश्चप्रोतश्चेति ॥ नचेयमंबरांतधृतिर्ब्रह्मणोन्यत्रसंभवति "
इति ॥ प्रकृतेश्चाक्षरपदवाच्यत्वंनास्तीतिद्योतनाय " कार्य्य-
स्यचेत्कारणाधीनत्वमबरांधृतिरभ्युपगम्यतेप्रधानकारणवादि-
नोपीयमुपपद्यतेकथमंबरांतधृतेर्ब्रह्मत्वप्रतिपत्तिरिति " पूर्वपक्षं-
कृत्वाऽ तउत्तरंपठती॒तिसाचप्रशासनादितिसूत्रमवतारितं तत्रा-
पि " साचांबरांतधृतिःपरमेश्वरस्यैवकंर्म ॥ कस्मात्प्रशासनात् ॥
प्रशासनंहीहश्रूयतेएतस्यवाऽक्षरस्यप्रशासनेगार्गिसूर्य्याचंद्रमसौ-
विधृतौतिष्ठतइत्यादि ॥ प्रशासनंचपारमेश्वरंकर्मनाचेतनस्यप्र-
शासनंसंभवति ॥ नह्यचेतनानांघटादिकारणानांमृदादीनांघ-
टादिविषयंप्रशासनमस्ति " इतिप्रतिपादितं ॥ तथाचतन्मत-
मनुरुध्यानेकार्थकोशबलेनाक्षरपदवाच्यामायैवेतिवदतास्वयमे-

वर्शंकरसिद्धांतानभिज्ञत्वंप्रकटीकृतं ॥ किंचसांख्यमतेप्रकृते-
र्नित्यत्वात् तन्मतेऽक्षरशब्दस्यकथंचिदवयवार्थसंभवेपित्वन्म-
तेमायायाअनित्यत्वस्वीकारेणनक्षरतीत्यक्षरमितियोगार्थस्यक-
थमप्यसंभवादक्षरशब्देनमायायाउपादानंनसंभवतीति एवंहेम-
चंद्रोक्तिवलात्कूटस्थपदेनमायायाउपादानमपि॥ कूटस्थोब्रह्म-
जीवेशावित्येवंचिच्चतुर्विधा कूटस्थब्रह्मणोर्भेदोनाममात्रादृते
नहि कूटस्थभासितोदेहोधीस्थजीवेनभास्यते स्वयंकूटस्थरूपे-
णदीव्यतेसौनिरंतरमित्यादिविद्यारण्यवचनविरुद्धंकूटस्थोक्ष-
रउच्यतइत्यादिभगवद्वचनविरुद्धंच ॥ तथाचश्रुतिसूत्रप्रा-
माण्यात्पूर्वोक्तभगवद्वाक्येऽक्षरपदेनब्रह्मैवोच्यते नतुजडंतस्यापि-
यस्मात्क्षरमतीतोहमित्यत्रकार्यपरेणाक्षरपदेनैवोक्तत्वात् ॥ ए-
वंच जडस्यक्षरत्वेनाक्षरपदेनग्रहणासिद्ध्याऽक्षरब्रह्मणोऽभि-
न्नंजगदितिसिद्धं ॥ किंच अलौकिकाकारसिद्धौप्रवेशोहरि-
णोदितः अव्यक्तोक्षरइत्युक्तस्तमाहुःपरमांगतिं यंप्राप्यननि-
वर्त्तंतेतद्धामपरमंमम इत्याद्यपिसंगच्छते अक्षरशब्देनमाया-
याउपादानेतस्याःपरममतिरूपत्वाभावेनतदसंगतमेवस्यात् त-
च्चाक्षरब्रह्मपुरुषोत्तमाभिव्यक्तिस्थानत्वाद्भगवद्वहंतद्धामपरमं
ममइतिभगवतावर्णितं ॥ अतएवपुरुषःसपरःपार्थभक्त्याल-
भ्यस्त्वनन्ययेत्यादिनागेहाधीशोनिरूपितःभक्तिश्चगुरुसेवयाभ-
वति ॥ अतएवोक्तं भक्त्यालाभोहिनिर्दिष्टोभक्तिश्चाचा-
र्य्यसंश्रयात् श्रीमदाचार्य्यचरणभजनादेवनान्यथा ननुपुरुषो-
त्तमाक्षरयोर्भक्तमुक्तप्राप्यत्वेआधाराधेयभावेचकिंमानं नच-
पूर्वोक्तभगवद्वचनमेवप्रमाणमितिवाच्यं धामशब्दस्यनानार्थ-

त्वात्पतत्यधोधामविसारिसर्वतइतिकाव्येधामशब्दस्यतेजोवा-
चकतायादृष्टत्वात् तेजस्यपिधामस्यादित्यनेकार्थेषुहलायुध-
कोशाच्चकथंनतेजोवाचकत्वंकथंचगेहवाचकत्वमेवकथंचप-
रमगतिशब्देनोक्तात्ज्ञानीत्वात्मैवमेमतंनहिज्ञानेनसदृशंपवित्र-
मिहविद्यतइत्यादिनासंस्तुतेनज्ञानेनसाध्यान्मोक्षान्नेदंयदिदमु-
पासतेइत्यादिनाऽब्रह्मत्वेनोक्तविषयकोपासनेनपुरुषोत्तमप्राप्तेःश्रे-
ष्ठत्वमुच्यतेइतिचेन्नपुरुषोत्तमाक्षरयोःपरापरभावादिषुश्रुत्यादेरे-
वप्रमाणंनहिवैदिकानांश्रुतेरन्यत्प्रमाणमधिकमस्तितच्च “ब्रह्मवि-
दाप्नोतिपर” मितिश्रुत्याप्रतिपादितं अक्षरब्रह्मवित्परंब्रह्माप्नोती-
तितदर्थः ॥ अत्रपरशब्दस्यपूर्वपरत्वेतदित्येववदेत् पूर्वंब्रह्मोक्त्वा
अथेयत्परमित्याहतेनसांनिध्यात्ततएवपरंपुरुषोत्तमरूपमेवात्रा
भिप्रेतमितिज्ञायते ॥ किंच प्रतिवादिनातदाभिज्ञानात्मिकैव-
वाच्या तथासति ब्रह्मप्राप्तोब्रह्मप्राप्नोतीत्यर्थःस्यात्सचासंगतः
साधनसाध्यभावव्याहतिश्च ॥ अतःपरंविशेषतस्तद्विवक्षमा
णानुभवैकगम्यंतत्स्वरूपंनान्यमानगम्यमितिज्ञापयितुमन्यमुखे-
नाह ॥ “ तदेषाभ्युक्ते ” ति॥ अन्यथासर्वार्थत्वप्रतिपादिका
श्रुतिरेवंकथंवदेत् तदित्यव्ययं तथाचतत्पूर्वोक्तंब्रह्मविदःपरप्रा-
प्तिलक्षणमर्थंविशदतयाप्रतिपाद्यत्वेनाभिमुखीकृत्योपगृह्यऋगे
षाविदितपरब्रह्मकैरुक्ता ॥ पूर्ववाक्योक्तार्थस्यवैशद्यमनयाक्रि
यतइत्यर्थःसंपद्यते ॥ तामेवाह “ सत्यंज्ञानमनंतंब्रह्मयोवेदनिहि-
तंगुहायांपरमेव्योमन् ॥ सोऽश्नुतेसर्वान्कामान्सह ॥ ब्रह्मणाविप-
श्चिते ” तितत्रब्रह्मणःसच्चिदानंदात्मकत्वेपिफलस्यानंदात्मक-
स्यपुरुषोत्तमस्याप्येफलनिरूपणावसरेनिरूपणीयतयाप्रथमतः-

साधनमेवनिरूपणीयमित्यभिप्रायेणसत्यज्ञानपदाभ्यांसच्चिदंशा
वनंतपदेनदेशकालापरिच्छिन्नत्वंचज्ञेयस्यब्रह्मणःसाधनविशेष-
त्वायोक्तवतीश्रुतिःतेनब्रह्मत्वेतुल्येपिक्षरस्यदेशकालापरिच्छिन-
त्वाभावान्नविवक्षितफलसाधनशेषत्वंअक्षरस्यतुतदपरिच्छिन्न-
त्वात्तादृशसाधनशेषत्वमितिबीजंअत्र योवेदेतियजुषिवेदनप्रा-
प्यत्वमुक्तं मुंडकेचनायमात्माप्रवचनेनलभ्योनमेधयानबहुना-
श्रुतेनयमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्मावृणुतेतनूंस्वा मितिश्रु
त्यावरणेतरसाधनाप्राप्यत्वमुच्यते एवंसति श्रुतिद्वयविरोधपरि-
हारायाक्षरब्रह्मज्ञानेनाविद्यानिवृत्याप्राकृतधर्मराहित्येनशुद्धत्व-
संपादनेनपुरुषोत्तमप्राप्तौस्वरूपयोग्यतासंपाद्यते तादृशजीवेस्वी-
यत्वेनवरणेभक्तिभावात्सहकारियोग्यतासंपत्यापुरुषोत्तमप्राप्ति-
र्भवतीतिनिर्णीयतेतथाचवरणाभावेज्ञानमार्गेण ज्ञानप्रधान-
तयाब्रह्मज्ञानं वरणेतुभक्तिमार्गरीत्यानंदप्रधानतयाब्रह्मज्ञा-
नं येनपरप्राप्तिरितिवेद्यस्यद्विधाविर्भावः सत्यज्ञानानंतरू-
पाक्षरंयोवेदतस्यगुहायांपरमव्योमाविर्भावः परोमीयतेदृश्यते-
अनेनेतितथा ॥ ज्ञानमार्गीयजीवज्ञेयप्रकारकाद्वैशिष्ट्येनापित-
थापरमव्योम्नोऽस्यलौकित्वज्ञापनायालौकिकप्रयोगःकृतः॥भ-
क्त्याहमेकयाग्राह्यःमुक्तानामपिसिद्धानांनारायणपरायणः सुदु-
र्लभःप्रशांतात्माकोटिष्वपिमहामुनेतस्मान्मद्भक्तियुक्तस्ययोगि-
नोवैमदात्मनः नज्ञानंनचवैराग्यंप्रायःश्रेयोभवेदिहेत्यादिवा-
क्यैर्यमेवेत्यादिश्रुतिपठितस्यवरणस्यांगीकारार्थकत्वेनगुहायां-
हृदयाकाशेयदाविर्भूतंपरमव्योमाक्षरात्मकंव्यापिवैकुंठंतस्यपु-
रुषोत्तमगृहरूपत्वात्तत्रनिहितंस्थापितमिववर्त्तमानंयोवेदसभक्तो-

ब्रह्मणानित्याविकृतरूपेणविपश्चितावििविधंपश्यच्चित्त्वंहिविपश्चि-
त्त्वंपृषोदरादित्वात्पश्य च्छब्दावयवस्यय च्छब्दस्यलोपंकृत्वा
व्युत्पादितोविपश्चिच्छब्दस्तेनविविधभोगचतुरेणसहसर्वान्का-
मानश्नुतेइत्यर्थः एतेनपरप्राप्तिपदार्थउक्तोभवतिशुद्धपुष्टिमार्गी-
यत्वादस्यभक्तस्यस्वातंत्र्यंभोगउच्यते सहभावोक्त्याब्रह्मणो-
गौणत्वंअतएवभक्ताधीनत्वंभगवतःस्मृतिषूच्यते अहंभक्तपरा-
धीनोवशेकुर्वंतिमांभक्त्येत्यादिवाक्यैः यद्यप्यशभोजनेइतिधा-
तोरश्नातीत्येवरूपंभवत्यशूङ्व्याप्ताविितिधातोर्भवत्यश्नुतइतिरू-
पंविकरणभेदात्पदभेदाच्चतथाप्यत्राशभोजनइतिधातोरेवप्रयो-
गइतिज्ञायतेतथाहि अत्राशनक्रियायांब्रह्मणःसहभावउच्यतेत
थाचव्याप्त्यर्थकत्वेब्रह्मणासह कामान्व्याप्नोतीत्यर्थोभवत्यथ-
वाब्रह्मणासहभूतःसजीवःकामान्व्याप्नोतीत्यर्थःस्यात्एतौत्वर्थौ-
वनुपपन्नौनहिकामवज्जीवकर्तृकव्यापनक्रियाकर्मत्वंब्रह्मणि-
संभवतिअतिमहत्वात् ॥ व्यापनंचात्रस्वाधीनीकरणमेववाच्यं
नहिकामानांतथात्वंस्वतःपुरुषार्थरूपंभोगशेषत्वात्तेषांपूर्वोक्त-
परप्राप्तिव्याकृतिरूपत्वाच्चास्यतथार्थोनुपपन्नः॥ एतेनैवब्रह्मणा-
करणभूतेनसर्वान्कामान्सहाश्नुतेयुगपद्भुंक्ते इतियोजनासि-
द्धोर्थोपिनिरस्तोबोध्यःभोगगम्यसुखसाक्षात्कारातिरिक्तोदासी-
नज्ञानात्मकोर्थस्तुपूर्वमेवनिरस्तःसचासंगतइत्यादिना तेनाश-
भोजनइतिधातोरेवायंप्रयोगोऽर्थस्यालौकिकत्वज्ञापनायालौ-
किकःप्रयोगःकृतःव्यत्ययोबहुलमितिसूत्रेणछंदसितद्विधानात्
श्नाप्रत्ययपरस्मैपदयोर्व्यत्ययेनश्नुप्रत्ययात्मनेपदेजातेइति भोगा-
र्थकएवायंधातुःएवमेव " नतदश्नोतिकंचननतदश्नोतिकश्चने "

त्यत्रप्रत्ययमात्रव्यत्ययेनप्रयोगोशूधातोरेवेतिज्ञेयं ॥ ननुसका-
मोऽत्रोपासकस्तदुपास्यंचसगुणंब्रह्मतद्वयोरपिकामोपभोगश्रव-
णात् " यत्रहिद्वैतमिवभवतितदितरइतरंपश्यति " त्युपक्र
म्य "यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्ये " दित्यादिनाऽन्यद-
र्शनादिनिषेधाद्ब्रह्मविदःकामोपभोगासंभवश्चेतिचेन्मैवंब्रह्मविदा-
प्नोतिपरमित्युक्तत्वातदेषाभ्युक्तेतिवाक्येनपूर्ववाक्योक्तार्थनिरू-
पिकेयमृगित्युच्यतेतत्रप्राकृतगुणसंबंधेब्रह्मवित्प्राप्यत्वंपरत्वंच-
नस्यात्सकामप्राप्यत्वेपरत्वंनस्यात्यद्धिपश्यंतिमुनयोगुणापा-
येसमाहिताइतिभागवतवाक्येनगुणातीतानांवैकुंठदर्शनाधिका-
रदर्शनेनसकामानांपरदर्शनंदूरापास्तं यत्रत्वस्येत्यादिकाश्रुति-
स्त्वखंडब्रह्माद्वैतभानेब्रह्मविदःप्रापंचिकभेदादर्शनंवदति नतुप्रपं
चातीतार्थदर्शनंबोधयतिनिषेधतिवापुरुषोत्तमस्वरूपंतुयाव-
त्स्वधर्मविशिष्टंप्रपंचातीतमेवेतितद्दर्शनादौकिंबाधकम् ॥ एवं-
सतिब्रह्मविदःपरप्राप्तेःपूर्वदशातत्केनकंपश्येदित्यादिनोच्यतउत्तर-
दशातुसोश्नुतइत्यनेनोच्यतइतिसर्वंसुस्थंएवंच ऋचिपरमेव्यो-
मन्निितिसप्तम्यंतपदेनाधाराधेयभावः ब्रह्मविदाप्नोतिपरमितिवा-
क्येनाक्षरपुरुषोत्तमयोःपरापरभावश्चोक्तः भगवद्वाक्यस्थधा-
मशब्दस्यगृहवाचकत्वेपिनिहितंगुहायांपरमेव्योमन्नितिवाक्यं-
विनिगमकं किंचप्राप्तिनिवृत्त्योर्गृहादावाधारएवदृष्टत्वाद्यंप्राप्य-
ननिवर्त्तंतइतिप्राप्तिनिवृत्तिबोधकपदसमभिव्याहारोपिधामश-
ब्दस्यगृहवाचकत्वेप्रमाणं अक्षरपुरुषोत्तमयोरभेदेपि " सभग-
वःकस्मिन्प्रतिष्ठितइतिस्वेमहम्नि " ॥ इतिवाक्यादाधेराधेयभा-
वोपिस्वीक्रियते ॥

## टीका

सहस्राक्षेननुस्वामरथेत्यादिंइत्यपिप्रत्युक्तमित्यंतंभागंखंडयंति ॥ **अग्रेचनन्वित्यादिनाआधाराधेयभावोपिस्वीक्रियतइत्यंतेन** ॥ अयमाशयः स्वामरथादिकमक्षरब्रह्माभिन्नमित्यादिपूर्वपक्षःकेवलंकपोलकल्पितः स्वामिकेष्वक्षररूपतायाअस्मदनभिप्रेतत्वात् " यदाह्येवैषएतस्मिन्नुदरं ,, इतितैत्तिरीयश्रुतिसत्वेपियउदरमितिलिखस्तुत्वमपिगुरुमुखतोवेदभ्यासगंधस्याभावात् ॥ स्वयंकल्पितेदत्तोदोषोप्युपेक्ष्यः ॥ **पुरुषोत्तमस्यैवरूपांतरमिति** ॥ अत्रमेदीबेवेदांतचिंतामणौ ( प्रक० १३ श्लो०६२ ) आम्नायतेतैत्तिरीयेप्रश्नेनारायणाभिधे ॥ सब्रह्मसशिवः सहरिःसेंद्रसोऽक्षरः परमःस्वराट् ॥ गीतायां ( अ० १० श्लो० १ ) परंब्रह्मपरंधामपवित्रंपरमंभवान् ॥ पुरुषंशाश्वतंदिव्यमादिदेवमजंविभुं ॥ आहुस्त्वामृषयःसर्वेदेवर्षिर्नारदस्तथा ॥ ( अ० ११ श्लो० १८ ) त्वमक्षरंपरमंवेदितव्यंत्वमस्यविश्वस्यपरंनिधानं ॥ त्वमव्ययःशाश्वतधर्मगोप्तासनातनस्त्वंपुरुषोमतोमे तथा ( श्लो० ३७ ) त्वमक्षरंसदसत्तत्परंयत् । एवंवेदरभेदोस्यशुद्धःकृष्णेनकथ्यते ॥ सएवाक्षरसंज्ञोतएकांशेप्रतिपादितः इतिसंग्रहोद्रष्टव्यःअत्रतैत्तिरीयवाक्ये " सहस्रशीर्षंदेवं " इतिपूर्वोक्तस्यपरस्यैवब्रह्म-

---

## सहस्राक्ष.

ननु स्वामरथादिकमपि ब्रह्मणोऽभिन्नमेव परन्तु तदक्षरब्रह्मणोऽभिन्नं करादितुपुरुषोत्तमादभिन्नम् ॥ नचैवं ब्रह्मभेदवादापत्तिः साच यउदरमन्तरंकुरुतेअथतस्यभयंभवति द्वितीयाद्वैभयंभवति भयंद्वितीयाभिनिवेशतःस्यादित्यादिश्रुतिस्मृतिविरुद्धा ॥ जीवस्यापि परेण भेदस्य निन्दितत्वेन परस्परेण भेदस्य स्तुतरां निन्दितत्वादितिवाच्यम् ॥ अक्षरपुरुषोत्तमयोर्वस्तुतोभेदास्वीकारात् ॥ पुरुषोत्तमस्यैवहिअक्षरंब्रह्मरूपान्तरं ज्ञानिभिरपीदमक्षरंब्रह्मैवगम्यते पुरुषोत्तमस्तुभक्तैः ॥ पुरुषोत्तमस्याऽक्षरात्परत्वंतु यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः ॥ अतोऽस्मिल्लोकेवेदेचप्रथितःपुरुषोत्तमः इतिगीतायामुक्तम् इतिचेन्न ॥ तयोरभेदेऽक्षरादभिन्नमिदं पुरुषोत्तमादभिन्नमिदमिति निर्णयस्यावास्तवत्वापत्तेः ॥ परापरभावस्याचानुपपत्तेः ॥ किंचोक्तभगवद्वचनेऽक्षरशब्देन ब्रह्म नोच्यते ॥ एकस्मिन्परापरभावस्य विरुद्धत्वात् किन्तु जडमेवेतिभाति तच्चमायैव अतएव अक्षरंस्यादपवर्गेपरमब्रह्मवर्णयोः ॥ गगनेधर्मतपसोरध्वरेमूलकारणे इति परमब्रह्मणोमूलकारणं पृथग्वदन्हेमचन्द्रकोशः

विष्ण्वादिरूपत्वमक्षररूपत्वंचोक्तं॥ गीतावाक्येषुधामपुरुषपदाभ्यामक्षरपुरुषपदाभ्याम क्षरतत्परपदाभ्यांचशब्दांतराभ्यांनिर्दैशपूर्वकमभेदोभ्यस्तः॥ अतोयुक्तंरूपांतरत्वं॥यत्तुएकस्मिन्परापरभावस्यविरुद्धत्वमुक्तंतत्तुतद्ग्राहकश्रुत्याद्यनवबोधात्॥ तथाहिमुंडके "तदक्षरमधिगम्यतेयत्तदद्रेश्यं" इत्यादिनाऽक्षरंनिरूप्य "तथाअक्षरात्संभवतीहविश्वं" इतिततोविश्वोत्पत्तिमुक्त्वाद्वितीयमुंडके "तथाऽक्षराद्विविधाः" इतिततएवप्रजननाप्ययौजीवानांनिरूप्यानुपदमग्रे "दिव्योह्यमूर्तःपुरुषः" इतिगीतादिवत्पुरुषपदेनोक्तपुरुषोत्तमस्य "अक्षरात्परतःपरः" इतितनःपरत्वमाम्नातंनचात्राप्यक्षरपदंमायापरंशंक्यंपरतइतिविशेषणेनव्यावर्तनात् ( अ० १ पा० २ सू० २१ ) "अदृश्यत्वादिगुण-

---

संगतः ॥ अतएव तस्मिन्नेव प्रकरणे कूटस्थोऽक्षरउच्यते इत्युक्तं भगवता तथाच कूटमित्युपक्रम्यसीराङ्गेनृततुच्छयो रिति हेमचन्द्रोक्त्या कूटमनृतं तुच्छं वा यथास्यात्तथातिष्ठतीति कूटस्थोमाया ॥ अतएव द्वाविमौपुरुषौलोकइति उभयोरपि भगवता लौकिकत्वमुक्तम् ॥ अव्यक्तोऽक्षरइत्युक्तइतितु प्रकरणान्तरस्थमिति नेहोपयुज्यते ॥ किञ्चाव्यक्तम्प्रकृतावात्मनीति हेमचन्द्रकोशात् अव्यक्तशब्दस्याऽपि प्रकृतिवाचित्वमेव ॥ किञ्चाऽव्यक्तोऽस्फुटमूर्खयोरिति हेमचन्द्रकोशादस्फुटःलौकिकैरगृह्यमाणोक्षरोऽपवर्गरूपः इत्यपिव्याख्यायुक्ता ॥ तस्माद्गीतासु अक्षरपदेन जडस्य ग्रहणादक्षराख्यब्रह्मान्तराऽसित्व्याऽक्षरब्रह्मणोऽभिन्नं जगदित्यादिनिर्मूलमेव ॥ एतेन अलौकिकाकारसिद्धौप्रवेशोहरिणोदितः ॥ अव्यक्तोऽक्षरइत्युक्तस्तमाहुःपरमांगतिम् ॥ यंप्राप्यननिवर्तन्तेतद्धामपरमंमम ॥ इतिवाक्येनभगवद्गृहंब्रह्मप्रकीर्तितम् ॥ पुरुषःसपरःपार्थभक्त्यालभ्यस्त्वनन्यया ॥इत्यग्रिमेणवाक्येनगेहाधीशोनिरूपितः ॥ भक्त्यालाभोहिनिर्दिष्टोभक्तिश्चाचार्यसंश्रयात् ॥ श्रीमदाचार्यचरणभजनादेवनान्यथा इति अक्षरपुरुषोत्तमशब्दाभ्यां गृहतदधीशयोर्मुक्तभक्तप्राप्ययोवर्णनमपि प्रत्युक्तम् ॥ किञ्च सर्वंखल्विदं यतोवा इत्यादौ यदि अक्षरं ब्रह्मवर्ण्यैत तर्हि- पुरुषोत्तमोऽश्रौतः स्याद्गीतावाक्यस्योक्तविध्ययोपपत्त्याऽलीकःस्यात् ॥ यदिपुरुषोत्तमउच्येत तर्हिअक्षरस्यजगदभेदवर्णनंव्याकुप्येत इत्यनया दिशा जीवाभेदप्रकरणादिष्वप्यूह्यम् ॥ किञ्च धामशब्दस्य नानार्थत्वाद्धामप्रसारिसर्वतइत्यादौ तेजोवाचकताया दृष्टत्वात्तेजस्यपिधामस्यादित्यनेकार्थेषु हलायुधकोशाच्च कथंनतेजोवाचकत्वं कथंचगेहवाचकत्वमेव कथंचपरमगतिशब्देनोक्ताज्ज्ञानीत्वात्मैवमेमतम् समहात्मासुदुर्लभः नहिज्ञानेनसदृशंपवित्रमिहविद्यते इत्येवंसंस्तुतेन ज्ञानेन साध्यान्मोक्षाद्यद्वाचानभ्युदितं येनवागभ्युद्यतेतदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासते इत्यादिनाऽभ्यासेनाब्रह्मत्वेनयदुक्तं तद्विषयकेनोपासनेन तमेवविदित्वाऽतिमृत्युमेतिनान्यःपंथाविद्यतेऽयनायेत्यादिश्रुतिविरुद्धायाः पुरुषोत्तमप्राप्तेः श्रेष्ठत्वमुच्यते ॥ एतेन येतुज्ञानैकसंनिष्ठास्तेषांतुऽप्यएवहि ॥ भक्तानामेवभवतिलीलास्वादोऽतिदुर्लभः इत्यपिप्रत्युक्तम् ॥

कोधर्मोक्तेः ” इत्यधिकरणविरोधाच्चब्रह्मण्येवतत्राक्षरशब्दोऽभ्यस्तोनतुमायायानामा-
प्युक्तमतोनैतस्याग्रहणमशक्यंकठवल्लीष्वपि “ महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः पु-
रुषान्नपरंकिंचित्साकाष्ठासापरागतिः ” इति. अत्राव्यक्तमक्षरं अव्यक्तोक्षरइत्युक्त-
इतिभगवतातत्रशक्तेर्ग्राहितत्वात् ॥ किंचपुरुषस्यांशेऽक्षरेकथमव्यक्तत्वमित्याकां-
क्षायांतत्रैवाग्रेश्रावितं “ एषसर्वेषुभूतेषुगूढोत्मानप्रकाशते दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्म-
यासूक्ष्मदर्शिभिः ” इति ॥ सूक्ष्मदर्शिभिरक्षरंपश्यद्भिः ब्रह्मविदः परमाप्तिकथनात् ॥
अतएवसूत्रकृता ( अ० १ पा० ४ सू० २ ) आनुमानिकाधिकरणे “ सूक्ष्मंतुतद-
र्हत्वात् ” इति तत्राव्यक्तशब्देनाक्षररूपंब्रह्मैवेतिनिर्णीय अभेदेकथंपरापरभावइत्या-
शंका ( सू० ३ ) “ तदधीनत्वादर्थवत् ” इत्यनेननिराकृता ॥ तथाचचरणादेःस्वांश-
स्यपुरुषादभिन्नत्वेपितदधीनत्वात्पुरुषस्ययथाततः परत्वंतथाऽत्रापि ॥ अतएवानं-
दमयस्यपुरुषोत्तमस्यनिरूपणे “ ब्रह्मपुच्छंप्रतिष्ठा ” इत्यक्षरस्यपुच्छरूपताऽऽम्ना-
ता ॥ प्रतिष्ठापदंचरणपरंधामपरंवा “ गृहाहिपशूनांप्रतिष्ठे ” तिवत् अत्रसंग्रहो-
प्रमेयचिंतामणौ ( प्रकरण १३ ) ( श्लो० २१। २२। २३। २४। २५ )
ब्रह्मपुच्छंप्रतिष्ठेतिपुच्छंतत्राक्षरंश्रुतं नपुच्छंपक्षितोऽभिन्नंनाक्षरंपुरुषोत्तमात् ॥ सर्वा-
वयववान्पक्षीस्वतंत्रःपुच्छतोधिकः ॥ पुच्छंत्ववयवत्वेनन्यूनंभेदोनवस्तुतः अल्प-
धर्मकमेकांशभूतंन्यूनंतथाक्षरम् ॥ सर्वधर्माश्रयःसोऽस्मादंशभूतोधिकःश्रुतः ॥ न-
भेदोभगवत्सच्चिदानंदात्माऽक्षरोऽपियत् ॥ पुच्छंपक्षिपदार्थान्नविभक्तमिहतत्तथा अ-
तोऽक्षरस्यचरणत्वमपिक्वचिदुच्यते ॥ प्रतिष्ठेतिपदात्तस्यप्रोक्तैवोत्तमधामताइति ॥
अक्षरपुरुषोत्तमयोर्भेदाभेदौ अक्षरस्याव्यक्तादिशब्दवाच्यताचगीताद्वादशाध्यायेऽपि-
स्पष्टा ॥ उक्तसूत्रयोर्भूतसूक्ष्मपरतायानिरासस्तुप्रकाशादावववधेयः ॥ यत्तु ( किंतु-
जडमेवे ) त्यादितत्तु ( अ० १ पा० ३ सू० १० ) “ अक्षरमंबरांतधृतेः ” इत्य-
धिकरणतस्तद्विषयवाक्यतश्चविरुद्धं ॥ गीतावाक्यार्थनिश्चायकानिबहून्यसंदिग्धा-
निश्रुतिसूत्राणिविहायतन्निश्चयायहेमचंद्रोक्तौनिर्भरस्त्वास्तिकैरुपहसनीयः ॥ हैम-
कोशे अक्षरंस्यादपामार्गे इतिबहुपुस्तकेषुपाठेप्यपवर्गेइतिछंदोविरुद्धस्वमात्रक-
ल्पितपाठोक्तिर्धौर्त्याद्र्थांतरकरणायेत्यनादरणीया ॥ वस्तुतश्चपुरुषोत्तमःपरमब्रह्म मू-
लकारणंचाक्षरब्रह्ममुंडकादिषु “ यद्भूतयोनिपरिपश्यंतिधीराःतथाऽक्षरात्संभवति ॥
तथाक्षराद्विविधाःसोम्यभावाः ” इत्यादिश्रावणात् तृतीयस्कंधैकादशाध्यायादिषु
तदाहुरक्षरंब्रह्मसर्वकारणकारणमित्यादिस्मरणाच्च ॥ अतःकोशोऽप्यस्मन्मतेसुसंगतः-
किंचतत्रक्लीबमेवाक्षरंतद्वाचकमुक्तं अत्रतुक्षरश्चाक्षरएवचेत्यादिनापुमानेवाभ्यस्तइ-
तिनात्रतत्कोशप्रसक्तिःगीतायांजडपरत्वेजडेमुक्तजीवलयादेरयोगात् यदक्षरंवेदविदो-
वदंतिविशंतियद्यतयोवीतरागाइत्यादितद्वाक्यंविरुध्येत मायायामक्षरशब्दस्ययोगो-
पिनसंगच्छेत ॥ सचमहाभाष्येप्रत्याहाराह्निकेसमाप्तौ “ अथकिमिदमक्षरमिति ॥

अक्षरंनक्षरंविद्यात् ॥ नक्षीयतेनक्षरतीतिवाक्षरमिति । अश्नोतेर्वासरोऽक्षरम् ॥ अश्नोतेर्वापुनरयमौणादिकःसरन्प्रत्ययः। अश्नुतइत्यक्षरम् ” इति ॥ नचेदंवर्णप्रस्तावान्नब्रह्मविषयकमितिभ्रमितव्यम् ॥ तत्रैवकैयटेन “ क्रियाशब्दोयंनित्यस्यार्थस्यावाचकइतिदर्शयति ॥ तत्राक्षयःक्षरतेर्वाविनाशार्थस्यनञ्पूर्वस्यरूपंतच्चब्रह्मतत्त्वंपरमार्थतोनित्यंव्यवहारनित्यतयातुवर्णपदवाक्यस्फोटानांनित्यत्वं ” इतिकथनात् तत्रैवविवरणकारेणाप्यक्षरशब्दस्यमुख्यतयाब्रह्मपरतायास्तत्सादृश्याद्वर्णादिषु तदुपचारस्यचस्पष्टमुक्तत्वात् ॥ अश्नोतेर्वेतिपक्षेव्रश्चेतिषत्वेषढोरितिकत्वेआदेशप्रत्यययोरितिषत्वेतिसिद्धम् ॥ मायायाएकदेशवर्तित्वस्वीकारादयमप्यर्थोब्रह्मण्येवपरमार्थतः संगच्छते तैत्तिरीये “ विश्वंनारायणंदेवमक्षरंपरमंपद ” मित्याद्युक्त्वा “ अंतर्बहिश्चतत्सर्वंव्याप्यनारायणस्थित ” इतिश्रावणेनमुंडकादिष्वक्षरमुपक्रम्य “ नित्यंविभुंसर्वगतंसुसूक्ष्म ” मित्यादिश्रावणेनचनिरंकुशविभुतायास्तत्रैवसिद्धेः यस्तुकूटस्थोक्षरउच्यतइतिवाक्ये ( कूटमनृतंतुच्छंवायथास्यात्तथातिष्ठतीतिकूटस्थोमाया ) इत्यर्थोहेमचंद्रचरणमात्राश्रयेणदर्शितः ॥ सतुच्छःपुंस्त्वविरोधात् केवलयोगादरेस्त्रीत्वौचित्यात् कूटस्थशब्दस्यपुंल्लिंगस्यैवतत्ररूढेर्ग्राहकाभावाच्च ॥ किंच विद्यारण्येनपंचदश्यां ( प्रकरण ६ श्लो० १८ ) कूटस्थोब्रह्मजीवेशावित्येवंचिच्चतुर्विधेत्यादिनाब्रह्मस्वरूपविशेषएवकूटस्थपदार्थश्चित्रदीपेकूटस्थदीपादौचप्रपंचितः ॥ विशुद्धचिदभेदोपितस्यचित्रदीपे ( श्लो० २३७ ) कूटस्थब्रह्मणोर्भेदोनाममात्रादतेनहीतिदर्शितः ॥ अतस्तदुक्तिविरुद्धइहकूटस्थपदस्यार्थस्तवनस्तवनविषयः ॥ शंकराचार्यैरपिद्वादशेऽध्यायेकूटस्थमचलंध्रुवमित्यत्रपंचदशेचप्रकृतवाक्ये “ कूटोराशिरिवस्थितः ” इत्याद्येवव्याख्यातंनतुत्वदुक्तं ॥ वस्तुतस्तुमहाभाष्येपस्पशाह्निके “ नित्यपर्यायवाचीसिद्धशब्दःकथंज्ञायतेयत् कूटस्थेष्वविचालिषुभावेषुवर्तते ” एवमादौनित्यार्थपरएवकूटस्थशब्दःप्रयुज्यते ॥ अत्रैवविवरणे “ कूटमयोघनस्तद्वत्तिष्ठंति येतेषु संसर्गिनाशेऽपिस्वयमनष्टेष्वित्यर्थः ” इतिविव्रियते एवंप्रत्याहाराह्निकादिष्वपितत्रतत्र “ नित्येषुचशब्देषुकूटस्थैरविचालिभिर्वर्णैर्भवितव्य ” मित्यादिप्रयोगाद्द्रष्टव्याः ॥ तद्व्याख्यातार्थकस्तुकूटस्थशब्दोनक्कापिशिष्टग्रंथेषुदृश्यते अतोभाष्यादिषुयोदर्शितः सएवार्थोत्रादर्तव्यः कालव्यापीमकूटस्थइत्यमरोक्तिरप्यत्रनुकूला ॥ किंचायंशब्दोमूलपुरुषेसुप्रसिद्धः अक्षरब्रह्मचजगतोमूलकारणमित्युक्तंप्रागतः साप्यत्रार्थःसंगच्छते यच्चद्वाविमावित्यादिलौकिकत्वमुक्तमित्यंतंतदज्ञानात् ॥ तत्रलोकशब्दःशास्त्रपरः ॥ दृश्यतेचतर्कन्यायपातंजलादिशास्त्राणांकथंचिदक्षरमात्रेपर्यवसानं ॥ किंचाक्षरस्यलौकिकत्वमात्रेतवैवस्त्रपादेकुठारप्रहारः मायावादस्यावैदिकत्वसिद्धेः ॥ “ अक्षरात्परतः ॥ मायांतुप्रकृतिं ” इत्यादिषुत्वाभिमतमायापरतायाबाधात् आनुमानिकाधिकरणस्थत्वभाष्यविरोधाच्च ॥ यत्तु ( अव्यक्तोक्षरइत्युक्तइतितुप्रकरणांतरस्थमितिनेहोपयुज्यते ) इतिजल्पितं ॥ तन्न ॥

पंचदशाध्यायइवाष्टमाध्यायेऽपि अव्यक्ताद्व्यक्तयःसर्वाइत्यादिना येनसर्वमिदंतत-
मित्यंतेन क्षराक्षरपुरुषोत्तमाःक्रमेणैवनिरूपिताइतिप्रकरणतौल्यात् ॥ नापिको-
शाश्रयादव्यक्तमिहप्रकृतिरेवेतिवाच्यं ततएवकोशादात्मार्थकत्वस्यसंभवात् प्रकृ-
तितएवोत्पत्तिप्रलययोरंगीकारेसर्वश्रुतिसूत्रव्याकोपाच्च ॥ अन्यथा अव्यक्तोयमचिं-
त्योयमित्यत्रापिसैवास्तु ॥ यातुपुनःकोशाश्रयात् अव्यक्तः अस्फुटः अक्षरोऽपवर्ग-
रूपइत्यपिव्याख्यादर्शितासाप्यसंगतैवशंकराचार्यैरव्याख्यानात् ॥ राध्यागमेसर्वेषां-
मोक्षेप्रलयस्याहरागमेततः प्रभवस्यचासंभवात् उक्तकोशे अक्षरंस्यादपामार्गे-
इत्येवपाठस्यसत्वेनाक्षरशब्दस्यापवर्गार्थकत्वाभावाच्च ॥ अक्षरंतुमोक्षेपीत्यमरोक्त्या-
तत्रतथापाठादरेपिप्रकृतवाक्येतथाव्याख्यानंस्वाचार्यगीताभाष्यविरुद्धंतत्वत्वप्रथमश्लो
कोक्तरीत्याशमतापादकं । अक्षरइतिपुंलिंगविरोधात् अपवर्गरूपइतिनिष्कारणलक्षणा-
क्लेशप्रसंगात् तद्धामपरमंममेत्यस्यापिस्वरसतोऽन्वयानुपपत्तेः परस्तस्मात्त्विवतिपूर्व-
श्लोकविरोधाद्दुतरोपक्रमोपप्लवाच्चाशक्यंतत् ॥ तथाच यस्मात्क्षरमितिवाक्ये-
क्षरशब्देनजडस्यापिसंग्रहादक्षरशब्दोनतत्परः क्षरशब्दस्यजडजीवरूपप्रपंचपरत्वात्
क्षरःसर्वाणिभूतानीत्यत्रभूतशब्दस्यजीवमहाभूतोभयार्थकत्वात् ॥ तस्माद्गीता-
सुविशंतियदित्यादिव्याकोपतोजडस्यगृहीतुमशक्यतया जरामरणमोक्षायमामाश्रि-
त्ययतंतियेतेब्रह्मतद्विदुः कृत्स्नमित्यादिश्रुत्वाकिंतद्ब्रह्मेत्यादौपृष्टे अक्षरंब्रह्मपर-
ममितिकथनात् अधियज्ञोहमेवात्रेतिपृथक्कथनाच्च ॥ उपासनफलभेदपरापरभावा-
दिवचनाच्चपररूपांतरस्याक्षरंब्रह्मणःसुखेनसिद्ध्याचअक्षरब्रह्मणः अभिन्नंजगदित्या-
दिसमूलमेव तदुपादानकत्वात् उक्तश्रुतिस्मृतिभिः " एतद्वैतदक्षरंगार्गी " त्युपक्र-
मे " आकाशओतश्चप्रोतश्च " अव्यक्ताद्व्यक्तयःसर्वाः अव्यक्तादीनिभूतानीत्यादि-
श्रुतिस्मृत्यंतरैश्चजगतस्ततएवप्रभवस्यतत्रैवप्रलयस्यचदर्शिततयामृद्घटादिवत्तदभेदस्यौ-
चित्यात् ॥ एतेन अलौकिकाकारसिद्धावित्याद्याः भजनादेवनान्यथेत्यंताः मार्त-
ण्डकारिकाःसमर्थिताज्ञेयाः ॥ भक्तिश्चाचार्यसंश्रयादितितु छांदोग्ये ( अ० ८ )
"आचार्यवान्पुरुषोवेद " तद्विद्धिप्रणिपातेन आचार्योपासनंशौचं ( स्कंध० ११ अ०
३ श्लो० ४८ ) लब्धानुग्रहआचार्यात्तेनसंदर्शितागमइत्यादिश्रुतिस्मृतिपुराणवचःप्रच-
यान्निश्चेयम् ॥ यत्तु किंचसर्वंखल्वित्यादि ऊह्यमित्यंतं तदप्यापातरम्यं " अ-
व्यक्तात्पुरुषःपरः ॥ दिव्योह्यमूर्तःपुरुषः ॥ अन्योंऽतरआत्मानंदमयः " इत्या-
दिश्रुतिशतैरसंदिग्धैरभ्यस्ततयाअनाकुलीकृतगीतादिसिद्धतयाचपुरुषोत्तमोनाश्रौतोना-
प्यलीकः ॥ यतोवाइत्यादिसामान्यवाक्येष्वपिप्रायेणसएवोच्यते ॥ यत्त्वक्षरत्व-
गमकंकिंचित्तन्नसः नचाक्षरस्यकारणत्वेयतोवाइत्यादौपरस्यतत्त्वानुपपत्तिःशंक्या
महाहेमराश्येकांशहेमपिंडान्निर्मितकुंडलादिकंप्रतिहेमराशेरिवशिलाभवमूर्त्यमत्रादिकं-
तांतवपटादिकंचप्रतिपृथिव्याइवत्वांशाक्षरोपादानकप्रपंचंप्रतिपरस्योपादानतायावि-

वादाविषयत्वात् ॥ एतेनजगत्यक्षराभेदस्तद्वारापराभेदएवंजीवेपितद्भेदोनवद्यएवे-
तिनकोपिदुरूहस्यप्ररोहः ॥ यच्च किंचधामशब्दस्येत्यादि वाचकत्त्वमेवेत्यंतं त-
त्रब्रूमः निर्विशेषस्यकथंतेजोरूपोविशेषः ॥ मायिकःसइतिचेत्कथंतत्प्राप्तावनावृ-
त्तिस्तस्यपरमगतित्त्वंच ॥ नाप्यक्षरोव्यक्तइतिशब्दाभ्यांवेदादौकापितेजउक्तम-
स्ति ॥ अत्रधामशब्दोऽत्रहपरएवेतिनिश्चायकास्तुबहुश्रुतिस्मृतिष्वक्षरस्यधामप-
दपरमस्थानादिशब्दैर्निर्देशाइतिजानीहि ॥ नहिपदादिशब्दाअपितेजःपर्यायाः स-
र्वत्रैकार्थ्यसंभवेतत्रतत्रनानार्थकोशाश्रयात् पृथक्पृथगर्थानामनेकेषांव्याख्यानंत्त्व-
निर्णयप्रसंगादेकवाक्यताबाधाच्चसद्भिर्नादरणीयं ॥ निर्देशास्तुयथाद्वितीयस्कंधे
( अ० ४ श्लो० १४ ) निरस्तसाम्यातिशयेनराधसास्वधामनिब्रह्मणिरंस्यते-
नम.तृतीयस्कंधे ( अ० ११ श्लो ० ४१ ) तदाहुरक्षरंब्रह्मसर्वकारणकारणं वि-
ष्णोर्धामपरंसाक्षात्पुरुषस्यमहात्मनइतिकठवल्लीषुद्वितीयवल्यां " सर्वेवेदायत्पदमा-
मनंतितपांसिसर्वाणिचयद्वदंतियदिच्छंतोब्रह्मचर्यंचरंतितत्तेपदंसंग्रहेणब्रवीम्योमित्येत-
त् " अत्रद्वितीयपदशब्देनस्थानमेवगम्यते ॥ एतदग्रेऽनुपदं " एतद्ध्येवाक्षर-
ब्रह्मएतदेवाक्षरंपरं " इतितस्याक्षरत्वं " एतदालबनंश्रेष्ठमेतदालंबनंपरं " इ-
तिधामत्वंचस्पष्टमेवाम्नातं एतदेवगीतायामपि यदक्षरंवेदविदोवदंतिविशंतियद्यतयो-
वीतरागाः ॥ यदिच्छंतोब्रह्मचर्यंचरंतितत्तेपदंसंग्रहेणप्रवक्ष्येइतिस्पष्टमेवानूदितं ॥ पु-
नस्तत्रतृतीयवल्ल्यां " यःसेतुरीजानानामक्षरंब्रह्मयत्परंअभयंतितीर्षतांपारंनाचिकेतँ-
शकेमहि " इत्युपक्रम्य ' नसतत्पदमाप्नोतिसंसारंचाधिगच्छति ॥ सतुतत्पदमाप्नो
तियस्माद्भूयोनजायते ॥ सोध्वनःपारमाप्नोतितद्विष्णोःपरमंपदं " इति तदाप्रागु-
क्तमक्षरंपरामृश्यतस्यपदत्त्वमभ्यस्तं ॥ मुंडकेष्वपि " ययातदक्षरमधिगम्यते "
इत्यादिबहुतरमुक्त्वाद्वितीयमुंडकद्वितीयखंडे " आविःसन्निहितंगुहाचरन्नाममहत्प-
दमत्रैतत्समर्पितं " इतिधामत्वंनिरूप्याऽसंदेहायपुनः " तदेतदक्षरंब्रह्म " इत्या-
द्युक्तं ॥ जडस्यजीवानांचाक्षराभेदस्तत्रदर्शितः एवंतेयांतिपरमंस्थानमित्यादी-
निसहस्रशोवचांस्यनुसंधेयानिमाघकाव्याद्यसर्गेपतत्यधोधामविसारिसर्वतइतिपाठेपि-
धामप्रसारीत्यनुवादस्तुछंदोभंगप्रसंजकःप्रमादमूलकउपेक्ष्यः । यदपि कथंचपरमे-
त्यादिउच्यतइत्यंतंतच्छ्रुत्यादिसाराविचारात् यानिवचांस्युक्तानितानिसर्वाण्यस्मत्सं-
मतव्यवस्थासाधकान्येव ॥ व्यवस्थातुज्ञानमात्रनिष्ठानांब्रह्मभावादक्षरेलयः भक्ति-
मतांतुसाधनभक्त्याश्रवणादिभिरविद्याबंधनिवृत्तौब्रह्मभूतानांफलरूपपरभक्तिलाभःपु-
रुषोत्तमप्राप्तिश्चेति ॥ तत्राद्यानांलयेमानंतु " ब्रह्मैवसन्ब्रह्माप्येति " विशंतियद्य-
तयः इत्यादिश्रुतिस्मृतयः ॥ यद्यपिभक्तानामपिब्रह्मभूतत्वाविशेषात्पांचभौतिक-
पिंडत्यागोत्तरमक्षरेलयोभवत्येव ॥ " ब्रह्माप्येतिसयथासैंधवखिल्यउदकेप्रास्तउदक-
मेवानुविलीयेत " इत्यादीनामुभयत्रतौल्यात् तथापिवरणकृत्पुरुषोत्तमःसकृदक्षरां-

शेमज्जयित्वास्वलाभार्थंपुनस्तानुद्धरतीतितुरीयस्यतुरीयपादेसंपद्याविर्भावाधिकरणे-सिद्धमित्यन्यदेतत् ॥ केवलज्ञानिनांतुविशंतियद्यतयइत्याद्युक्तस्तत्रलयएवभवती-तिसूत्रकृतातृतीयस्यतृतीये ( सू० ३३ ) अक्षरधियांत्ववरोधएवनिर्णीतः भ-क्तिरहितानांतेषांपरमाप्त्यभावादेवब्रह्मस्तुतौज्ञानेप्रयासमुदपास्येतिश्रेयःस्रुतिंभक्तिमुद-स्यतेविभो क्लिश्यंतियेकेवलबोधलब्धयेइत्यादि प्रथमस्कंधादौनैष्कर्म्यमप्यच्युत-भाववर्जितंनशोभतेज्ञानमलंनिरंजनमित्यादिचोक्तं ॥ दशमेच ( अ० ९ श्लो० २१ ) नायंसुखापोभगवान्देहिनांगोपिकासुतः ज्ञानिनांचात्मभूतानां-यथाभक्तिमतामिहेत्युक्तं परस्यभक्त्यैकलभ्यत्वंतुगीतायां अक्षरप्रविष्टानामनिवृ-त्तिमुक्त्वापुरुषःसपरःपार्थभक्त्यालभ्यस्त्वनन्ययेतीतरव्यावर्तकतुशब्दकंथनपूर्वकमुक्तं तत्रपरमगतिशब्देनतुमुक्तलयस्थानत्वादक्षरमेवोक्तंनतुमोक्षः ॥ एकादशाध्या-येपिभक्त्यात्वनन्ययाशक्यइतिभक्त्यैवपरस्यापरोक्षज्ञानदर्शनप्रवेशाउक्ताः ॥ पर-निष्ठानांज्ञानोत्तरमपिभक्तिरितितुभजंत्यनन्यमनसोज्ञात्वाभूतादिमव्ययं इतिमत्वा-भजंतेमांबुधाभावसमन्विताः इत्यादावभ्यस्तं ॥ ज्ञानीत्वात्मैवेतिवाक्यंतु ज्ञानि-भक्तपरमेव चतुर्विधाभजंतेमामित्युपक्रम्य तेषुज्ञानिभक्तस्य तेषांज्ञानीनित्ययुक्त-एकभक्तिर्विशिष्यतइत्यनन्यभक्तिमत्तयोत्कर्षमुक्त्वात्रिभ्योऽधिकोत्कर्षबोधनायतथा-कथनात् ॥ तस्यपरमागतिरक्षरेणनभवतीतिज्ञापनायमामेवानुत्तमांगतिमितिचोक्तं ॥बहू-नांजन्मनामितितदग्रिमेबहुजन्मांतेज्ञानंप्राप्तस्यवासुदेवः सर्वमितिपरप्रतिपत्तिमतःसुष्ठुदौ-र्लभ्यमुक्तंनतुकेवलज्ञानिनोजीवन्मुक्तस्य एतत्समानार्थकमेवषष्ठस्कंधे ( अ० १४-श्लो० ५ ) मुक्तानामपिसिद्धानांनारायणपरायणः सुदुर्लभःप्रशांतात्माकोटिष्वपि-महामुने इतिवाक्यं ॥ नहिज्ञानेनसदृशंपवित्रमिहविद्यते तत्स्वयंयोगसंसिद्धःकालेना-त्मनिविंदतीतिवाक्यंतुसर्वकर्मनाशकत्वाज्ज्ञानस्येहातिपावित्र्यंवक्ति ॥ तदस्माकमि-ष्टमेव ॥ नहीदंभक्त्यैवपरप्राप्तिरित्यस्यबाधकं ॥ किंचयोगसंसिद्धस्यस्वयंज्ञानप्राप्ति-रुक्ताषष्ठाध्यायेचतपस्विभ्योधिकोयोगीत्यादिनातंप्रशंस्ययोगिनामपिसर्वेषामित्यादिना योगसंसिद्धस्यापिभक्तिस्तुकस्यचिदेवेति तस्याअत्युत्कर्षोबोधितः ॥ तेनज्ञानवा-न्युक्ततरः परभक्तोयुक्ततमइतिविवेकः यद्वाचेतिश्रुतिस्तुनोपास्यस्याब्रह्मत्वबोधिके-तिप्राक्निर्णीतंनिर्णेष्यतेच “ तमेवविदित्वा ॥ नान्यःपंथाः ” इत्यादिकंतुज्ञाना-देवब्रह्मभावलक्षणमुक्तिंवक्ति नतुभक्तितःपरप्राप्तिंवारयतीतिननतद्विरोधः ब्रह्मभाव-स्यपरभक्तिपूर्वदशारूपत्वात् ॥ अतएवाष्टादशाध्यायेज्ञानस्यपरांनिष्ठांसमासेनकथ-यन् ब्रह्मभूयायकल्पतइत्यहंकारममकाररूपसंसारनिवारणोत्तरंब्रह्मभावमुक्त्वानंदावि-र्भावात्प्रसन्नात्मनोब्रह्मभूतस्यपरभक्तिलाभमाह ब्रह्मभूतःप्रसन्नात्मेत्यादिना ॥ तया-पुरुषोत्तमसाक्षात्कारस्तस्मिन्प्रवेशश्चतत्रैवानुपदमुक्तः ॥ परप्राप्तेःश्रेष्ठत्वंतु मामुपेत्य-पुनर्जन्म मामुपेत्यतुकौंतेयसर्गेपिनोपजायंतेइत्यादिनासम्यगभ्यस्तं ॥ द्वादशाध्यायेपि-

पुरुषोत्तम भक्तानामक्षरोपासकानांचोत्कर्षतारतम्येपृष्टेभगवता मय्यावेश्यमनोयेमामि- त्यादिनात्वप्राप्तियोग्य भक्तानामत्युत्कर्षोऽक्षरोपासकानांक्लेशाधिक्यादिनाऽपकर्षो या वदध्यायसमाप्तिपुनर्भक्तोत्कर्षश्चदर्शितः. ॥ भक्त्यापरसाक्षात्कारतत्प्राप्तिलक्षणामृतत्व- बोधिकाःश्रुतयस्तुकैवल्योपनिषदि " श्रद्धाभक्तिध्यानयोगादवेहि" छांदोग्ये " ब्रह्मसं- स्थोऽमृतत्वमेति " आथर्वणे " परब्रह्मैनयोधारयतिरसतिभजतिध्यायते " इत्याद्यु क्ताऽऽम्नायते " सोऽमृतोभवतिसोऽमृतोभवति " एवमाद्याआकरेषुज्ञेयाः अत्रछां दोग्यवाक्यंभक्तिपरतयाभक्तिमीमांसायां ( सू- २ ) " तत्संस्थस्यामृतत्वोपदे शात् " इतिसूत्रेनिर्णीतं ॥ एतदर्थबोधिकास्मृतयश्च मयिभक्तिर्हिभूतानाममृतत्वा यकल्पतइत्याद्याभागवतीयकुरुक्षेत्रसूर्योपरागप्रसंगस्थभगवद्वाक्यादिरूपा अनुसंधे याः विस्तरभयाद्विरम्यते ॥ एतेनयेतुज्ञानैकसंनिष्ठाइतिमार्तंडकारिकासम्यक्स मर्थिताज्ञेया ॥ तदेतत्सर्वमुरसिकृत्याहुः **परापरभावादिषुश्रुतिरेवप्रमाणामि ति ॥ तच्चेति** ॥ परापरभावादिकं ॥ अत्र आनंदमयोऽभ्यासादिति सूत्रेप्रभुचर णैः प्रणीते द्वितीयवर्णके स्थितंभाष्यभागं मध्येमध्येप्रकाशभागसहितंबोधसौलभ्या यक्वचिदापूरितपदांतरैश्चक्वेचिद्युक्तं प्रकृतानुपयोगिभागत्यागपुरः सरंप्रायोऽक्षर शोऽनुवदंति ॥ **अक्षरब्रह्मवित्परंब्रह्माप्नोतीत्यादिना सर्वंसुस्थमित्यंतेन अ संगतइति** ॥ पौनरुक्त्यात्तथा ॥ **अव्ययमिति** ॥ पंचम्यर्थकं अर्थविशेष णंवा ॥ **तत्रब्रह्मणइत्यादि** ॥ अत्रकिंचिदार्थिकं किंचित्प्रकाशस्थं ॥ **ब्रह्मत्व इति** क्षराक्षरयोस्तथात्वे ॥ **नायमात्मेति** इहप्रकाशकाराः प्रवचनादिपदत्रयेण केवलयज्ञादीनां पुरुषनिष्ठानां स्वाभाविकसाधनानामागंतुकसाधनानांचोपलक्षणेनवर्णां तरसाधनाप्राप्यत्वं स्पष्टयंति ॥ **सहकारियोग्यतेति**सहाकारियोग्यतयोः संपत्त्या ॥ **तथाचवरणेत्यादि** ॥ अयंप्रकाशानुवादआविर्भावइत्यंतः सत्यज्ञानेत्याद्यार्थिकं ॥ गुहायामित्यादिपुनर्भाष्यं ॥ **अलौकिकप्रयोगइति** ॥ नङिसंबुद्ध्योरिति निषेधतो- नलोपाभावादवगम्यमानेन सुपांसुलुगितिच्छांदसङिलोपेनसाधुव्योमन्निति प्रयोगः ॥ अक्षरस्यैवपरमव्योम त्वंतु " ऋचोअक्षरेपरमेव्योमन् ॥ यदक्षरेपरमेव्यमन " इ- त्यादिश्रुतिभ्योऽसंदिग्धं ॥ **भक्त्याहमित्यादि**अत्रभाष्यांशपरित्यागोविस्तरा भावाय ॥ **स्वातंत्र्यमिति**कर्तृताबोधनात्तथा ॥ ब्रह्मणस्तुसहगुक्तेप्रधानइतिशास्त्रा- द्गौणत्वं**अहंभक्तेत्यादि**इमानिनवमस्कंधेदुर्वाससंप्रतिभगवद्वाक्यानि ॥ द्वितिये- दोषमाहुः**व्यापनंचेतिव्याकृतिरूपत्वाच्चास्येति**अस्ययजुषः ॥ आप्नोतिपरमि- तिव्याख्येयवाक्यानुरोधात् भगवल्लोकस्थाःकामाअपि अशनेसहभाविप्राप्यपुरुषोत्तमात्- मकाएवेतिसिध्यति ॥ अत्रशंकराचार्यकृतोपनिषद्भाष्यस्यार्थदूषणप्रकाशस्थमनुवदंति- **एतेनैवे**तिपुनर्भाष्येसिद्धमाहुः**तेनाशभोजनइत्यादिनतदाप्नोतीति**माध्यंदिनानां गार्गिब्राह्मणस्थमिदंतत्रद्विधाव्याख्यानंप्रागुक्तंअत अशूधातोरेवेत्येवकारोप्यर्थेतत्रेदं-

व्याख्यानंआश्नातीतिकाण्वपाठानुरोधान्मुख्यं ॥ यत्रहिद्वैतमितिइदंबृहदारण्यकचतुर्थाध्यायेमैत्रेयीब्राह्मणाख्यचतुर्थब्राह्मणेऽस्ति ॥ अत्र “ यत्रत्वस्यसर्वं ” इतिमाध्यंदिनपाठोगृहीतः ॥ काण्वानांतु “ यत्रवाअस्यसर्वं ” इतिपाठःभाष्योक्तसमाधिसंक्षिप्याहुःतत्रमात्रकृतेत्यादिनायद्धिपश्यंतीतिदशमस्कंधे ( अ० २८ श्लो- १४ ) दर्शयामासलोकंस्वंगोपानांतमसःपरंसत्यंज्ञानमनंतंयद्ब्रह्मज्योतिःसनातनंयद्धिपश्यंतिमुनयोगुणापायेसमाहिताइत्युच्यतेअत्रोपबृंहणेसत्यमित्यादीनांभगवल्लोकविशेषणत्वाल्लक्षणवाक्यस्याक्षरपरत्वादेरपिबीजंस्मारितं ॥ यद्धीतिश्लोकाऽर्द्धोक्तार्थे “तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः ” इत्यादिश्रुतयःपरंपदंवैष्णवमामनंतितथान्नेतिनेतीत्यनद्भुत्तिसृक्षवः विसृज्यदौरात्म्यमनन्यसौहृदाद्धृदोपगुह्यावसितंसमाहितैरित्यादिभागवतवचनांतराणिचस्मार्याणि ॥ तेनकृचउक्तरीतिकंव्याख्यानमप्युपष्टब्धंभवति एवस्वग्रंथस्यातिप्रामाणिकत्वबोधनायश्रीप्रभुचरणप्रणीतद्वितीयवर्णकस्थभार्गसर्वलुस्थमित्यंतं शब्दतोर्थतश्चानूद्य ततःसिद्धप्रकृतोपयोगंदर्शयंतिएवंचेत्यादिनाभगवद्इति ॥ छांदोग्यंभूमविद्याऽध्ययनमाध्याःइदं ॥ उभयोर्विभुत्वेप्याधाराधेयभावस्तु “ तिलेषुतैलंदधनीवसर्पिः ” इत्यादिश्रौतदृष्टांतानुरोधाद्ध्येयः ॥

नेदंयदिदमुपासतेइतिश्रुतेरर्थस्तुपूर्वमेवप्रतिपादितः यद्युपास्यस्याब्रह्मत्वमभिप्रेयात्तर्हिपुनरिदंकारंनब्रूयात् नेदंयदुपासतइत्येतावतैवसिद्धेः नच ( नेदंत्वमौषधंभोज्यंयदिदंशूद्राभुंजतेइतिवदुभयत्रप्रसिद्धिसूचनायेदंकारद्वयमस्यसत्व ) मितिवाच्यं तादृशवाक्यस्योभयासंमतत्वेनदृष्टांतत्वासंभवात् यच्छूद्राभुंजतइत्येतावतैवसामंजस्ये इदंकारस्यव्यर्थत्वात् नचान्यतरोपादानेनिषेधउपासनायांचप्रसिद्धेरभावइतिवाच्यं नेदमित्यनेनप्रतियोगिनएवप्रसिद्धिःप्रतीयते नतुनिषेधस्य ॥ यदिदमित्यनेनापिप्रतियोगिनउपासनस्यप्रसिद्धिः प्रतिपाद्यतेचेदेकेनैवतल्लंभवेद्द्वितीयेदंपदस्यवैयर्थ्यंदुर्वारमेव ॥ तृतीयचरणेब्रह्मणउक्तत्वेननेदंशब्दंपुनर्ब्रूयात्तदव्यवहितंवाब्रूया )

दित्यादिदोषाणामापादनंतुस्वव्याख्यामनवेक्ष्यैव ॥ तत्रापियद्य-
दुपासतेतन्नयदुपासतेनेदमित्यादिकुतोनोक्तमितिपर्य्यनुयोगसं-
भवात् निषेधस्यप्रतियोगिसापेक्षत्वात्प्रतियोगिनएवप्रथमंव-
क्तुमुचितत्वात्नचे ( दमःसन्निकृष्टपरामर्शकत्वेनवागादिसमुदा-
यस्यासन्निकृष्टतयातेनपरामर्शोयुक्तइतिवाच्यं इदंशब्दस्यय-
दित्वयासंनिकृष्टवाचकत्वमेवविवक्षितंतदा ( प्रसिद्धिसूचना-
येदंकारद्वयस्यसत्वात् अन्यतरोपादानेहि उपासनायांनिषेधे-
चप्रसिद्धिर्नस्या ) दित्यादिकस्तत्रप्रलापोऽसंगतःस्यात् ॥ किं-
च सन्निकृष्टपदेनसमीपपठितत्वमुच्यतेचेत्तच्चवागादीनामप्यस्ति
यद्यव्यवहितपूर्वपठितत्वमेवविवक्ष्यतेतदा उपास्यस्याप्यव्यव-
हितपूर्वंनपठितत्वान्निषेधानुपपत्तिः ननुवागादीनांब्रह्मत्वंनप्रस-
क्तंप्रसक्तंहिप्रतिषिध्यते नह्यप्रसक्तं ममतूपासनाप्रकरणानुरो-
धेनोपास्यस्यब्रह्मत्वंप्रसक्तंतदनेनप्रतिषिध्यते निषेधस्तुनसर्वथा
किंतु ज्ञेयत्वाभावबोधनाय ॥ अतएवविद्धीत्युक्तमितिचे-
न्मैवं ॥ वागादीनामपिप्रकाशकत्वेनकैश्चिदात्मत्वंस्वीक्रियते-
तन्मतनिराकरणायप्रतिषेधःक्रियते उपासनाप्रकारणानुरोधा-
दुपास्यस्यब्रह्मत्वंतुनसंभवतिकिंतूपासनांगत्वमेवातएवोक्तं अं-
गत्वबोधकानिप्रमाणानिषट्श्रुतिलिंगवाक्यप्रकरणस्थानसमा-
ख्यारूपाणि तथाच यथादर्शपौर्णमासाभ्यांस्वर्गकामोयजेतेति
दर्शपौर्णमासप्रकरणपठितानांपंचप्रयाजानांदर्शपौर्णमासांगत्वंत-
थोपासनाप्रकरणपठितस्योपासनांगत्वमेवयुक्तं नब्रह्मत्वं ॥
वस्तुतस्तुकेनोपनिषद्भाष्यपर्यालोचनयातत्रज्ञानप्रकरणं नोपा-
सनाप्रकरणं अतएवतदारंभे"केनेषितमित्याद्योपनिषत्परब्रह्म'व-

षयावक्तव्येति ” इत्याद्युक्त्वा “ तस्माद्दृष्टादृष्टेभ्योबाह्यसाधनसाध्ये भ्योविरक्तस्यप्रत्यगात्मविषयाब्रह्मजिज्ञासेयंकेनेषितमित्यादिश्रुत्याप्रदर्श्यते ॥ शिष्याचार्यप्रश्नप्रतिवचनरूपेणकथनंतुसूक्ष्मवस्तुविषयत्वात्सुखंप्रतिपत्तिकारणंभवती ” त्युक्तं श्रीशंकराचार्यैः एवंचतन्मताज्ञानमूलकएवायंप्रलापस्तन्मतानभिज्ञत्वंव्यनक्ति यच्च ( तस्मादुपासकानामुपास्यब्रह्मप्राप्तिर्याभवतिसानमुख्यब्रह्मप्राप्तिरित्याद्युक्तंतदपिभक्तंयाहमेकयाप्राह्यःनज्ञानंनचवैराग्यं प्रायश्रेयोभवेदिहब्रह्मभूतःप्रसन्नात्मानशोचतिनकांक्षति समःसर्वेषुभूतेषुमद्भक्तिं लभतेपरामित्यादिवाक्यविरोधादुपेक्ष्यं यदिज्ञानिप्राप्यस्यमुख्यत्वंस्यात्तदा “ ब्रह्मविद्ब्रह्मैवभवती ” तिश्रुतिप्रतिपादितब्रह्मभावानंतरंभक्तिलाभकथनंविरुद्धंस्यात्तत्प्राप्यस्यामुख्यत्वात्तस्माद्ब्रह्मभावानंतरमेवभगवद्भावसंभवात्तेनपुरुषोत्तमेप्रवेशात्तत्परंपरयोपयोगोब्रह्मज्ञानस्येतिपुरुषोत्तमप्राप्तिरेवपरमामुक्तिरधिकंतुभाष्यादितोवसेयं उक्तश्चायमर्थोऽक्षरधियांत्ववरोधः सामान्यतद्भावाभ्यामौपसद्वत्तदुक्तमितिसूत्रेव्यासपादैरिति ॥

## टीका

सहस्राक्षे यत्तुपश्चाचेत्यादि तत्प्रसक्तिरित्यंतं भागं व्यदस्यंति नेदंयदिद्मित्यादिनाव्यासपादैरितीत्यंतेन ॥ उभयासंमतत्वेनेत्यादिश्रोतृसंमतएवार्थोदृष्टांतोभवति नतुबुद्धिसाम्याभावेसः अतएव गौतमंपचलक्षण्यां ( अ० १- आन्हीक १ सू० २५ ) “ लौकिकपरीक्षकाणांयस्मिन्नर्थेबुद्धिसाम्यंसदृष्टांतः ” इतितल्लक्षणमुक्तंइहलौकिकानांपरीक्षकाणांचेत्यर्थोवात्स्यायनभाष्येसिध्यति ॥ अतो दृष्टांतत्वाभावः किंचनेदमौषधमितिकल्पितवाक्येपिप्रथमइदंशब्दःश्रोत्रनुभूयमानामौ-

षधव्यक्तिवत् ॥ द्वितीयश्चतज्जातिं ॥ प्रकृतेतुश्रावणकालेश्रोतुरुपास्यव्यक्तिप्रत्यक्षाभावात्दृष्टांतासंगतिः पूर्वमुपास्यस्याप्रक्रांततयाकेवलेनेदमापरामर्शासंभवाच्च ॥ औषधपारोक्ष्येप्रक्रमस्याप्यभावेचसतितुनकोपिप्रयोगकुशलस्तथाप्रयुंजीत ॥ यत् उपास्ते इदं प्रसिद्धंब्रह्मनेत्यर्थःउक्तयाएकेनैवोभयत्रप्रसिद्धेःसंभवात् अन्यतरोपादानेहीत्यादिकमसंगतं ॥ उपासनाविषयस्यैवप्रतियोगितयाविवक्षणात् । वस्तुतोनिषेधप्रतियोगिताधःलोकेप्रसिध्यभावनप्रथमः इकारस्यैवयथ्यानपायाच्च ॥ यच्चकिंचत्वदुक्तेत्यादि उत्थानादित्यंतं ॥ तन्न ॥ अत्रपूर्वार्धेयच्छब्दद्वयेननिर्दिष्टं तृतीयचरणेतदापरामृश्य एवकारेणावधार्यते तत्रप्रथमचरणस्थयच्छब्दविचारे वाचायत् अनभ्युदितं तदेवेत्येवकारव्यावर्त्यमुत्थिताकांक्षत्वात्प्रथममाहनेदमितिवागादिभिरनभ्युदितादिकमेवब्रह्मविद्धि इदंसन्निकृष्टंवागादिकंतुब्रह्मनविद्धीत्यर्थः ब्रह्मत्वप्रसक्तिस्तु “ वाग्वैब्रह्म ॥ प्राणोब्रह्मेति ॥ मनोब्रह्मेति ” इत्यादिवाक्यांतरैः ॥ कौशीतकिब्राह्मणादिषु “ नवाचंविजिज्ञासीतवक्तारंविद्यात् ” इत्यादिश्रावणादप्यवेद्यत्वं ॥ अथद्वितीयेचरणेवागभिवदनादेःकरणंकर्तृवायदुक्तं तद्ब्रह्मकार्यमात्रेणकथंवेद्यमित्याकांक्षोत्थानात्तद्रूपमाह यदिदमुपासतइति ॥ अतश्चतुर्थचरणेपूर्वार्धपादद्वयार्थः क्रमेणैवनिर्मलीक्रियते ॥ तर्वानिषेधविषयस्यप्रसिद्धत्वेपुनराकांक्षोत्थानमसंगतं ॥ अप्रसिद्धत्वे इदंशब्दविरोधःतच्छब्दस्यैवतत्रौचित्यात् ॥ यच्छब्दबलात्तच्छब्दाध्याहारस्त्वावश्यकः तथासतिप्रथममिदंपदंतवासंगतार्थं ॥ यत्तुकिंचेदमइत्यादिनिषिध्यतइत्यंतं तत्रोच्यते यद्वाचेत्यादिवाक्यपंचकेद्वितीयचरणेष येनेति करणेहेतौवातृतीयेत्यकपक्षः कर्तरीत्यपरः तत्राद्येयेनसाधनेनयद्ब्रह्मअर्थाज्जीवेनकर्त्रावागभ्युद्यतइत्याद्यर्थःसंपद्यते तथासति नेदमित्यत्रेदंशब्देनभगवत्प्रेर्यं अभिवदनादिकर्तृजीववस्तूच्यते ॥ अयंपक्षः ईक्षत्यधिकरणावसानेभाष्यप्रकाशेबोधितः ॥ अस्मिन्पक्षेक्लीबनिर्देशो नकापिदोषः ॥ कर्तरितृतीयेतिमुख्यपक्षेतुनेदमित्यत्रेदमावागादिकमेवप्रत्येकंपरामृश्यतेतत्रापिवाक्प्राणयोःक्लीबनिर्देशः शरदःकृतार्थतेत्यादिवत्सामान्येनपुंसकमित्यभिप्रायात् ॥ एवमेवकठवल्लीषुषष्ठवल्ल्यां “ एतद्वैतत् ” इतिप्रवाहे “ याप्राणेनसंभवत्यदितिर्देवतामयी ” इतिस्त्रीवाक्योत्तरमपितथैवोच्यते एतत् अदितिपदवाच्यभूमिरूपंवस्तुवैनिश्चयेनब्रह्मेतितदर्थः “ सआत्मातत्वमसि ” इत्याद्यप्येवमेवसंगच्छते ॥ अन्यथासत्वमित्यादिवाच्यं स्यात् ॥ वागादेर्ब्रह्मत्वप्रसक्तिस्तुदर्शिता ॥ यच्च ( प्रमतुसविशेषस्योपासनाप्रकरणानुरोधेनब्रह्मत्वंप्राप्तंतन्निषिध्यते ॥ इतितदकिंचित्करं ॥ केनेषितमित्यादेस्तलवकारब्राह्मणषष्ठाध्यायस्योपासनाप्रकरणत्वाभावात् तत्रशंकराचार्यैरपिज्ञानप्रकरणताया एवांगीकारात् नचान्यत्रोपासनाप्रकरणसिद्धस्यसविशेषस्याब्रह्मत्वमिहबोध्यतइतिवाच्यं यदुपासतेतन्नब्रह्मेतिव्या-

ख्यानेपिउपासनागंधविधुरेषुबहुष्वेवोपनिषद्भागेषुप्रतिपादितेसविशेषेब्रह्मतानिषेधस्यै-
तोऽसिद्धेः ॥ द्वितीयचरणेषुवागभिवदनादेर्हेतुतायाःकर्तृतायावास्पष्टंकथनेनात्रापि-
वेद्येसविशेषतायाअनपायाच्च ॥ किंच इदमादिदंशब्दवैयर्थ्यानंगीकारेपिवागाद्युपा-
सनाविधायकवाक्यानांसत्त्वात् यद्वागादिकंतत्तत्फलकामाउपासतेतदिदंवागादिकंब्र-
ह्मनेत्येवार्थः सिध्येन्नतुत्वदुक्तः ॥ किंच " ऊर्ध्वंप्राणमुन्नयत्यपानंप्रत्यगस्यति
मध्येवामनमासीनंविश्वेदेवाउपासते " इतिकठश्रुत्यावागादयोयदुपासतेतद्ब्रह्मेत्य-
प्यर्थः प्रतिभाति एवंत्वदुक्तार्थनिरासात् " इतिप्राचीनयोग्योपास्व ॥ परंब्र-
ह्मैतद्योधारयतिरसतिभजति ॥ भक्तिरस्यभजनं " इत्यादिश्रुत्युक्तभक्तिविषय-
स्यपरब्रह्मत्वंनिर्बाधं ॥ परत्वोक्तिसामंजस्याच्च ॥ यत्तुनिषेधश्चेत्स्यादितावदित्यं-
तं तत्स्विष्टमस्मत्पक्षेपि ॥ वागादिषुसर्वथाब्रह्मत्वाभावस्यास्मदसंमतत्त्वात् उ-
क्तकौषीतकिश्रुत्यामुक्त्यर्थमज्ञेयतामात्रविवक्षणात् तस्मादुपासकानामित्यादितुभ-
क्त्याहमेकयेत्यादिवाक्यविरोधपराहतं ॥ उपास्यब्रह्मणइत्यादिकंचउक्तदिशाज्ञे-
योपास्ययोरभेदसमर्थनेनैवनिरस्तं ॥ तत्त्राप्यस्याकुख्यत्वादिति ॥ भ-

---

## सहस्राक्ष

यत्तु यद्वाचाइत्यस्यायमर्थः यद्वागाद्यगम्यं तत्प्रेरयितृ ब्रह्म विद्धि नेदं वागादि ॥ कथंतर्हि तस्य ज्ञानं तत्राह ॥ यदिदं श्रुतिप्रसिद्धमुपासते वैदिकाइतिशेषः ॥ यद्युपास्यस्याब्रह्मत्वमभिप्रेयात्तर्हि पुनरिदंकारं नब्रूयात् नेदंयदुपासतइत्येतावतैवसिद्धेरिति ॥ तन्न ॥ नेदंत्वयौषधंभोज्यं यदिदंशूद्राभुञ्जतेइतिवदुभयत्र प्रसिद्धिसूचनायेदंकारद्वयस्य सत्त्वात् ॥ अन्यतरोपादानेहि उपासनायां निषेधेचप्रसिद्धिर्नस्यात् ॥ किञ्च त्वदुक्तव्याख्यायां तृतीयचरणेब्रह्मणउक्तत्वेन नेदंशब्दस्पुनर्ब्रूयात् तदव्यवहितं वाब्रूयादुत्थिताकाङ्क्षत्वान्नतुनिषेधाव्यवहितम् ॥ अनुत्थिताकाङ्क्षत्वात् ॥ ततोऽग्रेश्रुवन्प्रतियोगिनं समर्पयतीतिभाति ॥ आकाङ्क्षायाउत्थानात् ॥ किञ्चेदमः सन्निकृष्टपरामर्शकत्वेन वागादिसमुदायस्याऽसन्निकृष्टतया तेन परामर्शोऽयुक्तइति प्रत्येकमेव सवाच्यस्तथाच वाक्प्राणयोरनपुंसकत्वेन तत्र नपुंसकनिर्देशोऽप्यसंगतःस्यात् ॥ किञ्च वागादेर्ब्रह्मत्वं कथं प्रसक्तं यदनेननिषिध्यते मन्तुसविशेषस्योपासनाप्रकरणानुरोधेन ब्रह्मत्वं प्राप्तं तन्निषिध्यते ॥ निषेधश्च न सर्वथा तदभावबोधनाय किन्तु ज्ञेयस्वरूपत्वाभावबोधनाय ॥ अतएव विद्धीत्युक्तमित्यास्तांतावत् ॥ तस्मादुपासकानामुपास्यब्रह्मप्राप्तिर्या भवति सा न मुख्यब्रह्मप्राप्तिः ॥ उपास्यब्रह्मणःकरादिकमास्तां नतावता ज्ञेयब्रह्मणि तत्प्रसक्तिः ॥ ४ ॥ २१ ॥

क्तित्राप्यस्यज्ञेयब्रह्मापेक्षयागौणतायास्त्वयास्वीकारादित्यर्थः ॥ अक्षरधियां त्विति ॥ तृतीयस्यतृतीये पादे ( सू. ३३ । ३४ ) द्विसूत्रमधिकरणम् ॥ आथर्वणे " परब्रह्मैतद्योधारयति " इत्यादौपरभक्तेर्मुक्तिकारणत्वं " तमेवविदित्वा ॥ तमेवंविद्वान् " इत्यादौज्ञानस्यैवतथात्वं चश्रूयतेऽतः कस्य कारणत्वमितिसंशयेऽक्षरज्ञानस्यैवतथात्वमिति पूर्वपक्षे परमाप्ति लक्षणमुक्तौ स्वरूपयोग्यतासंपादनमात्रमक्षरज्ञानेनसंपाद्यते सातुभक्त्यै वेत्याशयेनेदमुच्यते ॥ अर्थस्तु ॥ तुः पूर्वपक्षनिरासे अक्षरधियां अक्षरविषयकज्ञानानां अवरोधो मुक्तिसाधनतयायत्परिगणनं तत्सामान्यतद्भावाभ्याम् ॥ भगवत्सच्चिदानंदात्मकस्याक्षरस्य धामतयाविर्भूततया चरणतयाचपरेणसमानत्वं कथंचिदस्तीति पुरुषोत्तमसबंधिसंबंधेऽपिमुक्तिः ॥ अतस्तत्सामान्यादवरोधः ॥ किंच तद्भावात् ब्रह्मभावात् ब्रह्मभूतःप्रसन्नात्मेत्यत्र पुनरानंदांशाविर्भावात्प्रसन्नात्मनो ब्रह्मभावोत्तरं परभक्तेर्लाभ स्तयाऽभिज्ञानपूर्वकं परस्मिन्प्रवेशश्चोच्यते ॥ अतोब्रह्मभावलक्षणां स्वरूपयोग्यताऽक्षरज्ञानात्संपद्यते इतितज्ज्ञानस्यावरोधः ॥ अक्षरधियातद्भावस्तु " ब्रह्मवेदब्रह्मैवभवती " त्यादौसुप्रसिद्धः ॥ भक्तिरहितानामक्षरमात्रज्ञानवतांतत्रैवलयः " ब्रह्मैवसन्ब्रह्माप्येती " त्यादौस्फुटः ॥ अथज्ञानस्याविशेषेपि केषांचिद्ब्रह्मभावोत्तरंभक्तिः केषांचित्तत्रैवलयइतिफलतारतम्ये भगवदिच्छारूपंहेतुं दृष्टांतमुखेनाह ॥ औपसदवदिति ॥ ज्योतिष्टोमादौउपसदाख्येष्टिविशेषेषु " तानूनप्त्रस्पर्शाख्यमौपसदं कर्मास्तितत्रातिथ्याया ध्रौवात्स्रुचिचमसेवायदाज्यं चतुरवत्तं पंचावत्तंवासमवद्यति तत्तानूनप्त्रमित्युच्यते ॥ अनाधृष्टमसीतिमंत्रेणषोडशाप्यृत्विजोयजमानेनसह तानूनप्त्रंसमवमृशंत्यनुमेदीक्षामितिमंत्रेणयजमानस्तत्समवमृशन्यमृत्विजं कामयेतायंयज्ञयशसमृच्छेदितितंप्रथममवमर्शयेदितिश्रूयतेश्रुतौकल्पेच ॥ अत्रसैवषामृत्विजांतानूनप्त्रित्वाविशेषेपियस्मिन्स्नेहातिशयेनतथेच्छातत्रैवतथाकृतिर्नेतरेषु ॥ नहितत्राविशिष्टेषुकथमेवंकृतिरिति पर्यनुयोगः संभवत्येवमिहापी" तिव्याख्यातम्॥ अत्रसंमतिमाह तदुक्तमिति गीताष्टमाध्यायेभगवतेतिभावः ॥ तत्रयदक्षरंवेदविदोवदंतीत्यादिनायातिपरमांगतिमित्यंतेनाक्षरविदांयतीनांतत्रैवप्रवेशमुक्त्वा अनन्यचेताः सततमित्यादिना स्वप्राप्त्युपायःपृथगुक्तः ॥ स्वस्यभक्त्यैकलभ्यत्वं क्षराक्षरातीतत्वं चवक्तुं सहस्रयुगेत्यादिश्लोकत्रयेणक्षरस्वरूपमाविर्भावितिरोभावाभ्यां मुहुरावर्तमान त्वलक्षणमुक्त्वा परस्तस्मात्तुभावोन्यइतिश्लोकद्वयेनाक्षरस्वरूपंतस्यक्षरणाभावं धामत्वंचाह ॥ तुशब्दसमभिव्याहृतेनतस्मादित्यनेन क्षरमात्रंपरामृश्यते यंप्राप्यननिवर्तंतइत्युक्त्याज्ञानिनांतत्रैवलयः तमाहु परमांगतिमितिशक्तिग्राहकवाक्यात्सयातिपरमांगतिमित्यत्रापिसएवेतिज्ञेयम् ॥ एतदग्रेऽनुपदं । पुरुषःसपरःपार्थभक्त्या

लभ्यस्त्वनन्ययेति क्षराक्षराभ्यां परःपुरुषोत्तमस्तस्यच भक्त्यैवलाभउक्तः ॥ तुंश ब्दस्तदितरव्यावर्त्तकः ॥ एवमक्षरपुरुषोत्तमोपासनाफलतारतम्यं पार्थप्रश्नोत्तरंद्वा दशाध्यायेपिस्पष्टमेवनिर्दिष्टम् ॥ एतदुत्तरसूत्रेऽपि ( सू- ३४ ) " इयदामनना त् " इति ॥ तैत्तिरीये आनंदमीमांसायांगणनाश्रावणादक्षरमियद्गणितानंदं तेनैव यतोवाचइतिश्लोकगणनाकारणयोर्वाङ्मनसयोः प्रतिषेधादानंदमयः पुरुषोत्तमः पूर्णानंद इत्यपिबोधितमिति संक्षेपः ॥ अतःपरमार्थतऐक्येप्यैच्छिकमक्षरपुरुषोत्त- मयोस्तारतम्यं उपास्यपुरुषोत्तमप्राप्तेः सर्वोत्तमफलत्वं तदुपासकानामविरान्मृ- त्युसंसाराकूपारात्समुद्धारादिकंचगीतादिषुप्रसिद्धमेवेत्यस्माकंसकलमनाकुलमेव ॥ ( गीति ) निर्द्धर्मताभिलाषाद्यासामयिकीसदाऽऽकृतिःसहजा ॥ सामायिकीतिवदता- ब्रूथैवभवतावतादृतागुरुता ॥ १ ॥

॥ इतिचतुर्थश्लोकखंडनम् ॥

यत्तु अत्रैवशांकराःप्राङ्मायिकंनश्वरंजगदितिशुद्धाद्वैतमार्त्तंड- श्लोकव्याख्योक्तास्थूलादिवाक्यानांलौकिकस्थूलत्वकलादि- निषेधकत्वेन्यायविरोधमाह नञ्सामान्यनिषेधकृद्यदुदितानो- र्वीसकुंभाघटेत्यादिश्लोकेन तदप्यविचारितरमणीयं॥ तथाहि- नञ्सामान्यनिषेधकृदित्यस्यनञःसामान्याभावबोधकत्वमि- त्यर्थोवाच्यः तत्रसामान्यभावोयावद्वस्त्वभावःसमभिव्याहृत- यावद्वस्त्वभावोवा ॥ नाद्यः घटोनास्तिघटोनपटइत्यादौया- वदभावाप्रतीतेः तादृशप्रत्ययानांयावदभावविषयकत्वेघटवति- तादृशप्रत्ययोनस्यात् घटभेदस्यचासत्वेनघटोनपटइतिप्रतीति- श्चनस्यात् नचस्वान्वयितावच्छेदकधर्मावच्छिन्नात्यंताभाव- वत्तादृशान्योन्याभावश्चनञाबोध्यतइतिवाच्यं भूतलेघटोना- स्तीत्यत्रघटस्येवभूतलस्यापिनञर्थाभावान्वयितयाघटत्वाव- च्छिन्नप्रतियोगिताकाभाववद्भूतलत्वावच्छिन्नप्रतियोगिताका-

भावस्यापिप्रतीत्यापत्तेःकिंतुस्वप्रतियोगिताव च्छेदकीभूतधर्मा-
वच्छिन्नस्यैवाभावोनञाप्रत्याय्यते सोपिकुत्रचिन्नप्रतीयते
यथा अहिंसासत्यमक्रोधमित्यत्रहिंसासामान्याभावस्यधर्म-
त्वेयज्ञानांहिंसासाध्यानांधर्मत्वानुपपत्यातत्रहिंसापदंविहित-
हिंसातिरिक्तहिंसापरंवाच्यं तथाच हिंसापदेनाविहितहिंसा-
त्वावच्छिन्नाभावएवप्रतीयते नतु हिंसात्वावच्छिन्नप्रतियो-
गिताकात्यंताभावः ॥ एवंचतत्रापिन्यायविरोधस्तुल्यएव य-
दिच तत्र " स्थुलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति "
तिवाक्यपर्य्यालोचनयाहिंसासामान्याभावबोधकस्यापिनञो-
हिंसाविशेषाभावउपसंहारःक्रियते ॥ उपसंहारःसामान्यतः
प्राप्तस्यविशेषेसंकोचनं ॥ यथा " पुरोडाशंचतुर्द्धाकरो-
ती " तिपुरोडाशसामान्येप्राप्तंचतुर्द्धाकरण " माग्नेयंचतुर्धा-
करोती " तिवाक्यबलादाग्नेयेसंकोच्यते ॥ एवमत्रापिसं-
कोचेन न्यायविरोधःयदिच तादृशन्यायस्यविशेषविधा-
यकवाक्यासमवधानकालिकनञ्विषयकत्वमित्युच्यतेतदा-
ऽत्राप्ये " तस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंती " त्य-
लौकिककलाविधायकवाक्यस्या "सौनोदूरंव्रजती" त्यलौकि-
कक्रियाबोधकस्य॥ "एकोदेवःसर्वभूतेषुगूढ" इत्यलौकिकगुण-
विधायकवाक्यस्य " अणोरणीयान्महतोमहीया " नित्यलौ-
किकाणुत्वमहत्वादिबोधकवाक्यस्यचसमवधाना " दस्थूल-
मनणवह्रस्वे " त्यादिवाक्यस्थस्य " निष्कलंनिष्क्रिय "
मित्यादिवाक्यस्थस्यचनिषेधस्यलौकिकस्थौल्यलौकिकाणु-
त्वलौकिककलाक्रियादिरूपविशेषेसंकोचेकथंन्यायविरोधः ॥

नचैतस्यैवानंदस्येतिवाक्यस्यलौकिकानंदबोधकत्वमितिवाच्यं ॥ तादृशानंदस्यलोकेऽप्रसिद्धेः एवंनत्तच्छ्रुतिप्रतिपाद्यक्रियादीनामपिलोकेप्रसिध्यभावादलौकिकत्वंबोध्यं ॥ नहिलोकेकश्चिदासीनएवदूरंगच्छतिसर्वाणुभ्यःसर्वाणुनरःसर्वेभ्योमहद्भ्योमहत्तरश्चप्रसिद्धोयेनतेषांलौकिकत्वंस्यात् ॥ तस्मात्तादृशवाक्यबलादस्थूलादिवाक्यैर्लौकिकस्थूलादिगुणस्यैवनिषेधःक्रियतइत्येवकल्पते एतेन ( अस्थूलादिवाक्यैःप्रतिपाद्यस्यनिषेधस्यकीदृशेनापिवाक्येनलौकिकस्थौल्यादिनिषेधबोधकत्वेसंकोचेक्लेशएवे ) तिपरास्तं ॥ सत्यपिविशेषवाक्येयद्युपसंहारेक्लेशःस्यात्तर्हिनहिंस्यात्सर्वाभूतानीत्यत्रापिसकथंनस्यादत्रैवकथंस्यादित्यपिविवेचनीयं ॥ नचाऽस्थूलत्वादिकंनिष्क्रियत्वादिकंचामायिकं ॥ महीयस्त्वदूरप्राप्त्यादिकंचमायिकमितिवाच्यंलौकिकालौकिकविषयभेदेनैवनिषेधानांविधीनांचव्यवस्थोपपत्तौमायिकत्वकल्पनेमानाभावात् ॥ ननुनिषेधबोधकैर्वाक्यैस्तत्तद्धर्माणामभावनिश्चयेपुनस्तत्तद्धर्माणांविधानेतत्तद्धर्माणांमायिकत्वरूपंमिथ्यात्वमेवपर्य्यवस्यति ॥ स्वात्यंताभावाधिकरणवृत्तेरेवमिथ्यात्वादितिचेन्न ॥ स्वात्यंताभावसामानाधिकरण्यस्यमिथ्यात्वरूपतास्वीकारेतस्यैवविमतंमिथ्या दृश्यत्वादित्यनुमानेन त्वयासाधनीयत्वेनस्वात्यंताभावसमानाधिकरणेषुसंयोगादिषुसमवायसंबंधावच्छिन्नप्रतियोगिताकस्वाभावाधिकरणवृत्तिषुवन्ह्यादिषुचसिद्धसाधनतापत्तेः ॥ नचस्वाभावाधिकरणवृत्तित्वमित्यस्यस्वाधिकरणनिष्ठाभावप्रतियोगित्व-

मेवपर्य्यवसितोर्थः तच्च येनसंबंधेनयेनरूपेणयद्यस्याधिकरणं-
तेनसंबंधेनतेनरूपेणतन्निष्ठाभावप्रतियोगित्वंविवक्षितं रूपंचाव-
च्छेदकविशेषः तथाच येनसंबंधविशेषेणयेनचावच्छेदकविशे-
षेणयदधिकरणताप्रतीतिर्यत्रभवितुमर्हतितेनैवसंबंधविशेषेणतेनै-
वावच्छेदकविशेषेणतदधिकरणकात्यंताभावप्रतियोगित्वंतस्य-
मिथ्यात्वं नहिसंबंधविशेषमंतरेणपर्वतेवन्ह्यधिकरणताप्रतीयते-
ऽवच्छेदकविशेषमंतरेणवृक्षेकपिसंयोगाधिकरणतावाप्रतीयत-
इतिनवन्हिकपिसंयोगादौसिद्धसाधनमितिवाच्यं ॥ तादृशा-
भावस्यपारमार्थिकत्वंप्रातिभासिकत्वंव्यावहारिकत्वंवाविवक्षि-
तं ॥ नाद्यः ब्रह्मभिन्नंसर्वंमिथ्येतिप्रतिज्ञाहान्यापत्तेः नद्वि-
तीयः सिद्धसाधनतापत्तेः सर्वस्यस्वाश्रयनिष्ठभ्रमविषयाभा-
वप्रतियोगित्वात् ॥ नतृतीयः व्यावहारिकात्यंताभावप्रतियो-
गित्वेऽपिपारमार्थिकसत्वेविरोधाभावादर्थांतरतायादुर्वारत्वात्
नचाभावस्यतात्विकत्वेप्यभावस्यास्मन्मतेऽधिकरणात्मकतया-
ब्रह्मभिन्नत्वाभावात्कथंब्रह्मेतरन्नमिथ्येतिप्रतिज्ञाहानिरितिवाच्यं॥
तात्विकाभावप्रतियोगिनोत्रमिथ्यात्वासंभवेनतात्विकत्वापत्तेः॥
ननुव्यावहारिकएवास्तुनिषेधः व्यावहारिकस्यज्ञानवाध्यत्वे-
पिनप्रतियोगिनःपारमार्थिकसत्वापादकत्वं यत्राभावाबाधेपिप्र-
तियोगिनःसत्वंतत्रैवतादृशाभावप्रतियोगिनःपारमार्थिकत्वं अ-
त्रतूभयोःसमसत्ताकत्वंस्वाभावनिषेधप्रतियोगिस्वाभरजतादेरिवत-
त्रमिथ्यात्वमव्याहतमेव नापिनिषेधस्यनिषेधेप्रतियोगिसत्वमि-
तिशंकनीयं ॥ प्रतियोगिनिषेधयोरुभयोरेववाध्यत्वात् ॥ अ-
न्यथाप्रागभावाभावरूपस्यघटादेर्ध्वंसेप्रागभावस्यसत्वापत्तेरि-

तिचेन्न ॥ श्रुतिप्रतिपादितस्यार्थक्रियाकारिणःस्वरूपेण-निषेधासंभवात् ॥ नचपारमार्थिकत्वाकारेणापिनिषेधइति-वाच्यं ॥ अबाध्यत्वरूपस्यपारमार्थिकत्वस्याभावज्ञानस्यप्र-तियोगिज्ञानाधीनत्वेनबाध्यत्वरूपमिथ्यात्वज्ञानसापेक्षत्वेनान्यो-न्याश्रयतापत्तेः ॥ किंचपारमार्थिकत्वस्यपारमार्थिकत्वेऽद्वैत-हानिरतस्तस्यापिबाध्यत्वंस्वीकरणीयं तस्यपारमार्थिकत्वेन-निषेधेनन्निष्ठपारमार्थिकत्वेपुनःपर्य्यनुगेऽनवस्थापत्तिः ॥ किं-चपारमार्थिकत्वेनघटपटादिप्रपंचस्याभावंस्वीकुर्व्वताव्यधिक-करणधर्मावच्छिन्नाभावएवस्वीकृतस्तादृशाभावप्रतियोगित्व-स्यसर्वत्रसौदृढमतानुयायिभिःस्वीकृतत्वात्सिद्धसाधनतापत्तिर्ना-पितादृशाभावाःस्वीकर्त्तुंशक्यंते ॥ प्रतियोगितावच्छेदकविशिष्ट-प्रतियोगिज्ञानस्याभावप्रत्ययहेतुत्वादत्रपारमार्थिकत्वविशिष्टप्र-पंचस्यत्वन्मतेऽसत्वेनतादृशाभावासंभवात् ॥ विशेष्येविशेष-णमितिरीत्यात्वभावप्रतीतिर्नसंभवति तत्प्रत्ययस्यविशिष्टवैशि-ष्ट्यावगाहित्वादतएवा " भावप्रत्ययोहिविशिष्टवैशिष्ट्यमर्य्या-दांनातिशेत " इतिदीधितिकारैरप्युक्तं " तत्प्रतियोग्यवृत्तिश्च-धर्मोनप्रतियोगितावच्छेदक " इतिचिंतामणिकारैरुक्तमित्यल-मप्रस्तुतविचारेण ॥

## टीका

अथ नञ्सामान्येति सहस्राक्षस्यपंचमश्लोकं इदानीं अत्रैवशांकरगइत्यादिना-क्रियेतेत्यलमित्यंतेनव्याख्यानेनसहितं यत्तुअत्रैवेत्यादिना सूत्रंविरुद्धंस्यादित्यंतेन खंडयिष्यंतः प्रथमं इदानीमित्यादिं अन्यत्रविस्तरइत्यंतं भागं निराकुर्वंति ॥ यत्तुअत्रैवेत्यादिना अप्रस्तुतविचारेणेत्यंतेन ॥ अयंभावः मार्तंडटीकायां

( कारिका २२ ) अत्रैवशांकराःप्राहुरितिकारिकाविवरणे "निष्कलमित्यादिश्रुतौ लौकिककलाक्रियासत्वादिगुणजन्यशरीरविकारीद्रियजडधर्मनिषेधपरत्वेनकथनात् ॥ सामान्यनिषेधेतु "एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंती" तिकलायाः । "आसानोदूरंव्रजती" त्यादौक्रियायाः । "एकोदेवःसर्वभूतेषुगूढ" इत्यादिभिर्गुणानां । "अपाणिपादोजवनोग्रहीते" ति । "उतामृतत्वस्येशान" इत्युक्त्वासवर्तःपाणिपादादिकथनादजन्यशरीरस्याविकारीद्रियाणां । "अणोरणीयान्महतोमहीया" नित्यादावणुत्वादिधर्माणांचश्रावणेनतत्तद्बोधकानांविरोधापत्तेः ॥ "अथातइत्यत्रेतिशब्दःप्रकारवाचीतेनलौकिकप्रकारकंनभवतीत्यर्थ", इत्यादिः प्रहस्तप्रथमभागस्थग्रंथएवकांचिदानुपूर्वीभित्वाऽनूद्यते ॥ तत्रन्यायविरोधमापादयितुंचत् ( यद्यस्मात्कारणात्सकुंभा पृथिवी अघटा नोच्यते अतोनञ्सामान्यनिषेधकृ-

---

## सहस्राक्ष.

नञ्सामानिषेधकृद्यदुदिता नोर्वी सकुम्भाऽघटासंकोच्योविहितौ
विशेषउपसंहारानपेक्षोबलात् ॥ तुल्ये सापिविधेर्विशेषविषयावि
ध्यादिना न्यायतःसंकोचःसफलं प्रपंञ्चवचनं मिथ्यात्वभावि
स्थितः ॥ ५ ॥

इदानीम् अत्रैवशाङ्कराःप्राहुर्नायिकंनश्वरंजगदिति श्लोकटीकायामस्थूलमनणु निष्कलंनिष्क्रियंशान्तंनिरवद्यंनिरञ्जनमित्यादिश्रुतीरुपन्यस्य तासामेतस्यैवानन्दस्यान्यानिभूतानिमात्रामुपजीवन्ति आसीनोदूरंव्रजति इत्यादिश्रुत्यनुरोधेन यज्जीव,दिगतलौकिककलादिनिषेधपरत्वमुक्तं तत्रैवचार्थे प्रकृतैतावत्त्वंहिप्रतिषेधतीति सूत्रमुपष्टम्भकतयोपन्यस्तं तन्न्यायविरुद्धमित्याह ॥ नञ्सामान्येति ॥ यद्यस्मात्कारणात्सकुम्भा पृथिवी अघटा नोच्यते अतोनञ्सामान्यनिषेधकृत् स्वान्वयितावच्छेदकधर्मावच्छिन्नात्यन्ताभावबोधकइत्यर्थः ॥ नञित्युपलक्षणं निषेधार्थकपदान्तरस्यापि ॥ यतस्तादृशी भूमिर्निष्कुम्भापिनोच्यते तस्मान्निषेधवाक्येषु संकोचे न्यायविरोधइति ॥ यत्र विशेषेविहितिः विशेषविषयकं विधानमस्ति तत्र न्यायविरोधेऽपि तादृशवचनबलादेव सामान्यनिषेधकोऽपि नञ् विशेषेसंकोच्य स्तद्बलादेव सङ्क्लेशः सह्यइतियावत् ॥ यथा नाहिंस्यात्सर्वा इतिश्रुतिस्थस्य नञोऽग्नीषोमीयंपशुमालभेतेति विधिबलात् ॥ तथाच तत्र सर्वशब्दस्योक्तन्यायाविरोधाय विशेषेलक्षणा ॥ यतः सउपसंहाराऽनपेक्षः यथाहि विधिवाक्येन सामान्यार्थबोधे सामान्यस्य विशेषमन्तरा पर्यवसा-

तू ) इत्याद्युक्तम् ॥ तन्न सर्वत्रसामान्यनिषेधनियमस्यवक्तुमशक्यत्वात् ॥ बहुजनावमोचनादिस्थानेषु स्वोयंघटविशेषमनुपलभ्यतदन्वेषणाययतमानंप्रतिकि-मर्थंभ्राम्यसि नास्त्यत्रघटइत्यादिकंघटांतरसत्त्वेपिविवक्षितघटविशेषाभावाभिप्राय-कमुच्यतएव ॥ अमराइत्यत्रत्वग्तिभाविनोमरणस्य " अपशवोवाअन्ये " इत्यादौप्रशस्तपशुत्वादेः अनुदरेत्यादौबृहदुदरादेः अज्ञइत्यादौविशिष्टज्ञानादश्चनि-षेधोदृश्यतएवेतिस्वान्वयितावच्छेदकधर्मावच्छिन्नात्यंताभावबोधकत्वंनियमेननञोऽ-शक्यवचनं ॥ तथानिष्कलमस्थूलमित्यादौश्रोत्रनुभवगोचरलौकिककलास्थौल्यादे-रेवनिषेधोऽभिप्रेतइत्युभयविधवाक्यैकवाक्यतयाऽवसीयते ॥ किंचप्राञ्चः शाब्दि-काआरोपितत्वमभावंवानञर्थंमन्यंते ॥ यथाहुः ॥ नञ्समासेचापरस्यप्राधा-न्यात्सर्वनामता ॥ आरोपितत्वंनञ्द्योत्यंनह्यसोप्यतिसर्ववत् ॥ १ ॥ अभावोवात-दर्थोस्तुभाष्यस्यहितदाशयात् ॥ विशेषणंविशेष्योवान्यायतस्त्ववधार्यताभिति ॥ तत्र-प्रथमपक्षेनञ्समासेप्युत्तरपदार्थस्यप्राधान्यादेवसर्वनामतासिध्यति॥ प्राधान्यंचासर्वइ-त्यादावारोपितःसर्वइत्याद्यर्थस्वीकारएव॥नञोभेदार्थकत्वेतत्रप्रतियोगितयासर्वशब्दा-र्थस्यान्वयादुपसर्जनतयाऽतिसर्वइत्यादाविवसर्वनामतानस्यात् संज्ञोपसर्जनीभूतास्तु-

---

नाभावाद्विधिवाक्यस्य तदपेक्षत्वं तथा निषेधवाक्यस्यनास्ति उक्तविधाभावस्यैव तेन बो-धात् ॥ तुल्ये निषेधशास्त्रादन्युनानतिरिक्तेविधाने सापि विहितिरपि वचनबलादेव संको-च्या ॥ यथाऽतिरात्रेषोडशिनंगृह्णाति नातिरात्रेषोडशिनंगृह्णातीत्यत्र ॥ पक्षान्तरांशेऽनुत्थि-ताकाङ्क्षत्वेन तत्रसंकोचस्य न्यायेनालाभात् निषेधेनावसरावशोषणाच्च तथाप्युभयत्र गौ-रवं सत्वन विधे-सामान्यविधेः पुरोडाशंचतुर्धाकरोतीत्यस्य सस्यमिवमर्त्यःपच्यते सस्यमि-वजायतेपुनः ध्रुवंजन्ममृतस्यचेत्यस्यच विशेषविषये आग्नयादिविषये विधिना आग्नेयं-चतुर्धाकरोतीत्यनेन आदिपदेन , निषेधोग्राह्यस्तेन नसपुनरावर्तते इत्यनेन न्यायत उपसं-हारापेक्षत्वादितिभावः ॥ एवञ्चास्थूलादिवाक्यप्रतिपाद्यस्य निषेधस्य कीदृशेनापिवाक्येन लौकिकस्थौल्यादिनिषेधबोधकत्वे संकोचेक्लेशएव ॥ नातिरात्रेइतिश्रुतिवन्नाहिंस्यादितिश्रुति-स्थसर्वशब्दवद्वा तस्य दुर्वारत्वात् ॥ एतस्यैवानन्दस्येत्यादिवाक्यप्रतिपाद्यस्य तु समानवि-षयकनिषेधेन संकोचएवक्लेशः ॥ इन्द्रोमायाभिर्मायान्तुप्रकृतिमित्याद्युपसंहाराः अशरीरंशरी-रेष्वित्यादयोज्ञेयस्याकारनिषेधाद्यसमानविषयकानसंत्येवेतितैः संकोचे नास्ति क्लेशः ॥ एतस्यै-वानन्दस्यआसीनोदूरमित्यादिजन्यमात्रागमनादिसामान्यधियः किंस्वभावदयं मात्रादिर्मा-यिकउतात्मवदमायिकइति किमयंज्ञेयस्योताज्ञेयस्येति च विशेषाकाङ्क्षत्वात् ॥ २२ ॥ स्वमते विशेषानुवादफलमाह ॥ सफलमिति ॥ हि यस्मात् अभाविस्थितः स्वात्यन्ताभावाधिकरण-स्थो मिथ्येत्युच्यते तस्मात्तद्बोधनाय प्रपञ्चवचनं सफलमित्यन्यत्रविस्तरः ॥

नसर्वादयइतिसिद्धांतात् एवंचासर्वस्मै इत्यादिनस्यात् ॥ नचेष्टापत्तिः ॥ एतत्त-द्दोःसुलोपोकोरनञ्समासइतिपर्युदासवैयर्थ्यप्रसंगात् । नञ्स्थलेत्यदाद्यत्वादेरंतरंग-णकार्यस्याप्यभावेनासइत्यादिरूपासिद्ध्यानञ्समासइत्यस्यानुपयोगात् ॥ नचभे-दप्रतियोगीसर्वइत्यर्थांगीकारान्नाप्राधान्यमितिवाच्यम् ॥ घटोनास्तीत्यादावभाव-विषयकबोधेतस्यविशेष्यतायाएवदर्शनेन अन्योन्याभावेविशेषणतायाअंगीकर्तुमश-क्यत्वात् ॥ अघटः पटइत्यादौघटभिन्नइत्यादिबोधस्त्वार्थोमानसएव ॥ नञ्द्योत्य-मित्युक्तिःनिपातानांद्योतकत्वाभिप्राया ॥ आरोपितत्वंचात्रारोपविषयत्वमवाचक-त्वपक्षेप्यनन्यलभ्यमारोपमात्रंनञर्थः नत्वारोपविषयत्वंगौरवात् विषयत्वंतुसंसर्ग-मर्यादयैवलभ्यते ॥ एवंचास्थूलमित्यादौआरोपितलौकिकस्थौल्यादिर्शालग्रहेति-प्रथमपक्षेऽर्थः ॥ क्वाप्यप्रसिद्धस्यारोपासंभवात्स्थौल्यादिकंलोकभवमेवगृह्यते ॥ घ-टोनास्तीत्यादौव्यस्तस्थलइव अब्राह्मणइत्यादिसमस्तस्थलेप्यारोपार्थकत्वस्याननु-भवात्पक्षांतरमाह अभावोवेति तदर्थःनञोवाच्योद्योत्योवाऽर्थः ॥ तत्राप्यसति-बाधकेवाचकत्वमेव सतितुबाधकेद्योतकतापीतिज्ञेयम् ॥ ( अ० २ पा०२सू० ६ ) नञ्सूत्रेभाष्ये " कःपुनरसौ । निवृत्तपदार्थकः " इत्युक्तम् ॥ असौनञर्थइत्यर्थःतच्च " निवृत्तंपदार्थोयस्यनपुंसकेभावेक्तइतिक्तः अभावार्थकइत्यर्थः " इतिभूषणसारे-व्याख्यातम् ॥ यद्यप्येमिमभाष्यग्रंथपर्यालोचने इहकैयटकृतंव्याख्यांतरंसाधुभाति ॥ तथाप्यत्यंतासदृशत्वादारोपायोग्यस्थलेप्यघटःपटइत्यादिप्रयोगदर्शनात्तद्भाष्यमन्यथा-नेयमितिनञर्थमभावंमन्यमानानामाशयः सचाभावउत्तरपदार्थेप्रतियोगिनिविशेषण-मित्येकःपक्षः तथाचाब्राह्मणइत्यादौभेदप्रतियोगीब्राह्मणइत्यादिरर्थः ॥ एवंचासर्व-इत्यादौतदंतविधिनासर्वनामसंज्ञा ॥ ८ अनेकमन्यपदार्थे ॥ सेव्यतेऽनेकयासन्नतापां-गयेत्यादोएकपदार्थप्राधान्यादेकवचनोपपत्तिः ॥ अन्यथैकभिन्नस्यद्वित्वंबहुत्वं-वायुक्तमित्येकवचनंनसंगच्छेत अत्वंभवसिअनहंभवामिअयुवांभवथःइत्यादौपुरुषव-चनव्यवस्थाचविशेष्यत्वांगीकारेनस्यात् । एतन्मतेतुभेदप्रतियोगित्वदभिन्नाश्रयिका-भवनक्रियेत्यर्थः अथनञर्थस्यविशेषणत्वे अघटमानयेत्यादौपटाद्यनुयोगिकभेदप्र-तियोगिघटमित्यर्थव्यक्त्यापत्त्याघटादेरप्यानयनंप्रसज्येतविशेष्यत्वेतुघटभिन्नस्यपटादे-रेवतदित्यतोविशेष्योवेतिद्वितीयःपक्षः एवंचाब्राह्मणइत्यादौउत्तरपदार्थस्यप्रतियोगि-तयाभेदेन्वयःतेनब्राह्मणप्रतियोगिकभेदवानित्यादिरर्थः ॥ ननुप्रागुक्तदूषणप्रसंगइति-चेन्न ॥ असर्वइत्यादौगौणत्वेपिसर्वनामता अनञ्समासइतिज्ञापकात् ॥ असःशिव-इत्यत्रसुलोपवारणायहितद्ग्रहणं ॥ समासेसतितुगौणत्वादतदित्येवरूपंस्यान्नत्वसइत्य-तस्तद्यर्थंसत्गौणत्वेपिसर्वनामतांज्ञापयति ॥ (अ० २ पा०२ सू०२२) " अनेकमन्यप-दार्थे " इत्यत्रैकवचनंतु ( अ० २ पा०१ सू० २ ) " सुबामंत्रिते" इत्यतोनुवर्तमा-नस्यसुबित्येकवचनांतविशेष्यस्यानुरोधात् असतिविशेषानुशासनेविशेषणविशेष्ययोः-

समानवचनकत्वस्यापितंत्रत्वात् ॥ अन्यथानीलाघटःनीलोघटाइत्याद्यपिनयुज्येत. ॥ किंचानेकशब्दाद्विवचनस्योपादानेमधुरकोमलकांतपदावलिमित्यादौबहूनां बहुवचनस्योपादानेपरिणद्धकंधरइत्यादौद्वयोश्चबहुव्रीहिर्नस्यादतोजात्यभिप्रायमौत्सर्गिकंवैकवचनम् ॥ सेव्यतेऽनेकयेतिमाघप्रयोगेपियोषयेतिविशेष्यानुरोधात्स्त्यैकसेवनान्वयाभिप्रायाच्चतत् नतूत्तरपदार्थप्राधान्यात् ॥ तेनपतंत्यनेकेजलधेरिवोर्मयइत्यादिकमनवद्यम् ॥ एकशेषस्त्वगतिकगतिः ॥ अत्वंभवसीत्यादौतुयुष्मदस्मदोस्तद्भिन्नेलक्षणा तद्द्योतकोनञ् अतोयुष्मदाद्यर्थसामानाधिकरण्यात्पुरुषव्यवस्था ॥ त्वद्भिन्नाऽभिन्नाश्रयिकाभवनक्रियेत्यादिःशाब्दबोधः ॥ अयंचाभावोऽन्योन्याभावतयाऽत्यंताभावतयाच नञःशक्यार्थः तथाचपर्युदासस्थले भेदस्तदर्थः प्रसज्यप्रतिषेधस्थले त्वत्यंताभावइतिबोध्यम् ॥ असमस्तस्थलेदेवदत्तोनब्राह्मणइत्यादौपर्युदासः घटोनास्तीत्यादौप्रसज्यप्रतिषेधइत्युभौ यथायथंदृश्येते समस्तस्थलेतुप्रायेणपर्युदासः अभयमित्यादावन्योपि नञ्बहुव्रीहावन्यएवेतिविवेकोभाति ॥ एवंचास्थूलमित्यादौ नास्तिस्थूलोयत्रेत्यादि प्रसज्यप्रतिषेधाश्रयणेपिप्रसिद्धमेवप्रतियोगिनंधीरालिंगतीति लोकभवानामेवस्थूलादिगुणानामभावःसिध्यति दांतवलयाद्यापणेदंतोनास्तीत्युक्तेदंतावलदंतस्येव नत्वणोरणीयस्त्वमित्यादिश्रौतानां । अनुपस्थितेर्विधानापार्थक्यप्रसंगात्तुल्यबलतयाबाधायोगाच्च ॥ लाघवात्पर्युदासाश्रयणेतुस्थूलादिभिन्नंतत्सदृशंचब्रह्मेतिफलतितत्र " नायंन रोनापिमृग " इत्यादिवत्तत्तन्मात्रधर्मकत्वाभावाद्भेदः उभयधर्मवत्त्वादुभयसादृश्यंच " समोमशकेनसमोनागेने " त्यादाविवेतिज्ञेयम् ॥ यत्त्वस्मिन्पक्षे तत्सादृश्यमभावश्चेत्यादिपठनमब्राह्मणइत्यादौ भेदप्रतियोगित्वप्रकारकब्राह्मणादिबोधानंतरभाविमानसबोधविषयत्वंसादृश्यादेरित्यभिप्रेत्येत्युक्तम् तदादरेऽत्राप्युभयधर्मवत्ताबोधःपाश्चात्योमानसोस्तु ॥ वस्तुतस्तुसादृश्यादिरप्यर्थः तादृशबोधेशाब्दबोधत्वानुभवात् "नासौलोष्टमानीयकृतीभवती " तिमहाभाष्यानुग्रहाच्चेत्यन्ये । अधिकंतुतुर्यश्लोकखंडनेऽभिहितमभिधास्यतेचकिंचित्पुरस्तात् ॥ नव्यास्तुसमस्तनञ्स्थलेआरोपविषयत्वमेवनञर्थमन्यंते यथामंजूषायां " घटोनास्तीत्यादावभावस्यविशेष्यतयाबोधान्नञोवाचकत्वम् । नानूयाजेष्वित्यादौसनम्याः साधुत्वार्थद्योतकत्वमपि । आरोपितानूयाजेषुयजतिष्वितितदर्थः भेदेप्रतियोगित्वेनान्वयेनानूयाजभिन्नेष्वित्यर्थेसमम्यनुपपत्तिः । आरोपविषयत्वतत्रनञ्द्योत्यम्अतएवाघट इत्यादिवदुत्तरपदार्थप्राधान्यं । अनुदराकन्येत्यादावप्यल्पत्वादिनोदराभावमारोप्यनञ्समभिव्याहारे आरोपितोदरबुध्द्यातन्मूलालपत्वादौविश्रमः । अद्विज इत्यादौच तद्भेदमूलकमारोपितप्रवृत्तिनिमित्तकत्वमितिभेदेविश्रांतिः । असंदेहइत्यादौचारोपितःसंदेहइतिबोधः । भेदसंबंधेनारोपितत्वज्ञानाच्चतदत्यंताभावप्रतीतिः । असमस्तेत्वभावोनञर्थः । सद्विधा । अत्यंताभावोभेदश्च । तत्रतादात्म्येतरसंबंधाभावेआद्यः । तादात्म्याभा-

बोऽन्त्यः । तादात्म्यमतिरिक्तंतद्धत्यसाधारणधर्मरूपंवेत्यन्यत् । समनियताभाव-
स्थलेएकस्यानेकप्रतियोगित्ववदनयोर्घटादिप्रतियोगिकत्वमपि । तत्राद्यस्तिङन्तार्थ-
क्रियान्वय्येव । असमस्तनञर्थात्यंताभावविशेष्यकबोधेतिङ्समभिव्याहृतधातुज-
न्योपस्थितेर्हेतुत्वात् । अतएवत्वंनासिघटोनस्तइत्यादौपुरुषादिव्यवस्था ॥ तिङन्त-
समभिव्याहृतनञोत्यंताभावार्थकत्वमेव । अयमेवप्रसज्यप्रतिषेधइत्युच्यते । प्र-
सज्यविधायविहितस्यप्रतिषेधइतितदर्थः । नञ्सूत्रेभाष्येतुप्रसज्यक्रियागुणौततःपश्चा-
न्निवृत्तिंकरोतीत्युक्तम् । तेनगुणाभावबोधेपिप्रसज्यप्रतिषेधइतिलभ्यते । नास्माकं-
मेकंप्रियमित्युदाहरणम् । अत्रहिएकप्रियप्रतिषेधेबहुप्रियप्रतीतिः नसंदेहइत्यादौच-
संदेहाभावप्रतीतिः संदेहस्यगुणत्वात् सर्वत्रक्रियाप्रतिषेधेहिगुणपदोपादानंभाष्येऽन-
र्थकंस्यात् । प्रसज्यप्रतिषेधोसौक्रिययासहयत्रनञित्यत्रक्रियाग्रहणंगुणस्याप्युपलक्ष-
णमितिबहवः ॥ अन्त्योघटःपटोनेत्यादौ ॥ अत्रारोपितपटाभिन्नोघटइतिबोधः ।
नञ्द्योतकएव । एवंचसमानविभक्तिकत्वंसिद्धम् । घटभेदबोधस्त्वार्थः । तत्स-
मनियतत्वात् । घटत्वाभावबोधोपितत्राऽऽर्थः ॥ कःपुनरसौनञर्थविशिष्टइतिप्रश्ने
" निवृत्तपदार्थक " इतिभाष्येउक्तम् ॥ " निवृत्तःपदार्थोमुख्यब्राह्मण्यंयस्मिन्स-
क्षत्रियादिरित्यर्थः सादृश्यादिनाऽध्यारोपितब्राह्मण्योनञ्द्योतिततदवस्थइत्यर्थ "
इतिकैयटः ॥ प्राचीनोक्तमर्थांतरंतुभ्रांत्यैवेतिस्पष्टंभाष्यविदां ॥ किंच " प्रतियोग्य-
भावौतुल्ययोगक्षेमा " वितितान्त्रिकोक्तर्नञ्वाच्यभेदस्यविशेषणतानयुक्ता ।
यत्रप्रतियोगिनःप्रकारतातत्रैवतदभावस्यापिसा यत्रतस्यविशेष्यतातत्रैवतदभाव
स्यापिसेतितदर्थः । बाधबुद्धिप्रतिबंधकतापियथानुभवंकल्प्येतिन तदनुरोधेनक्ल
प्यनुभवसिद्धबोधान्यथाभाव उचितोऽनेनैव न्यायेनप्रतियोग्याधिकरणमेवाभावा-
धिकरणमिति बोध्यमितिदिक् ॥ तत्रप्रतिषेधेद्वयीगतिः ॥ प्रतिषेधंदृष्ट्वापश्चादुत्स-
र्गस्यतद्विषयत्वाभावज्ञानेप्रामाण्यग्रहइत्येका ॥ एवमुत्सर्गापवादस्थलेपि ॥ त-
दुक्तंहरिणा ॥ ब्राह्मणानांश्रुतिर्दधिप्रक्रांतामाठरंविना ॥ माठरस्तक्रसंबंधात्तत्रा-
प्नोतियथार्थताम् ॥ दधिब्राह्मणेभ्यइत्यादौ माठरवर्जमेवदधिदानमुपक्रांतम् ॥
उत्तरकालंतक्रंमाठरायेत्येतत्तस्ययथार्थत्वंगमयतीतिभिन्नवाक्यतायामप्यत्यनुमानं
बाधइति पुञ्जराजः । उत्सर्गस्यापवादनियमनिषेधानामेकवाक्यतेत्यपरा ।
तदुक्तं । अनेकाख्यातयोगेपिवाक्यंन्याय्यापवादयोः । एकमेवेष्यतेकैश्चिद्भिन्नरू-
पमिवस्थितम् । नियमःप्रतिषेधश्चविधिशेषस्तथासतीति । न्याय्यउत्सर्गः ॥
आपाततोभिन्नवाक्यत्वावभासेपिसर्वस्याप्युत्सर्गस्य विशेषविधिनियमनिषेधवि-
ध्याकांक्षानियमेन तल्लाभेवाक्यैकवाक्यतातयोः । तदलाभेतुस्वार्थएवपर्यवसान
म् । एकवाक्यताचेत्थं । यतोमाठरायतक्रमतस्तदतिरिक्तेभ्योदधीत्येवेतीत्यल-
म् " एवमादिदर्शितम् ॥ इत्थंचैतन्मतानुरोधेन विचोरण्यनुदरेत्यादावल्पत्वादा-

विवस्थूलादिवाक्येषूभयधर्माश्रयत्वेन स्थौल्याद्यभावमारोप्यनञःप्रयोगे आ-
रोपितस्थौल्यादिबोधेन केवलस्थौल्याद्यभावेविश्रमः ॥ अद्विजइत्यादिवत्प्राकृत-
स्थूलादिवस्तुभेदेवैषः ॥ किंच प्रतियोग्यभावयोःसमानयोगक्षेमतायास्तांत्रिकैः
कथनात्प्रतियोग्यधिकरणमेवाभावाधिकरणमितिस्वीकारेण ब्रह्मणिस्थौल्याद्यधि-
करणताप्यापततीति ॥ ननुवायौरूपाभावव्यवहारान्नैवमितिचेन्न । वस्तुतोहि
"सर्वंसर्वमयं" इतिनृसिंहोत्तरतापनीयादिश्रुत्या वायौसतोरूपस्य तिरोभाव
स्यैवतत्ररूपाभावपराभिलप्यत्वात् ॥ अन्यथातत्कार्ये तेजस्यपितन्नोद्भवेत् ।
अतोबीजावस्थायांफलपुष्पादेरननुभवेपिवृक्षावस्थायांतदनुभववत्तेजोवस्थायां रू-
पानुभवइतिवायौप्रतियोग्यधिकरणतानानुपपन्ना ॥ अपिच ,तार्किकचरण-
शरणीकरणेप्यन्यत्रसतएवरूपस्यवायावभावात् अत्यंतासतोऽभावस्याप्यस्वीकारा-
त्काणादसूत्रेगेहेसतएवघटादेः प्रतिषेधार्हताकथनाच्चान्यत्रसतएवस्थौल्यादेरत्रप्रति-
षेधोवाच्यः । तच्चसर्वात्मनातवासंभवि ॥ किंचब्रह्मणिविशेषणतयाविशेष्यतयावा-
ऽभावस्थितिः प्रतियोगिनिष्ठाधेयतावच्छेदकसंबंधसत्त्वंचापद्यतएवेति सविशेषताना-
पायाच्छ्रौतधर्मैर्गवेतामुररीकुरु ॥ अथमीमांसकपदावलंबादभावस्याधिकरणात्मक-
त्वमितिचेत्तथापिसतएवनिषेधः सविशेषताचाशक्याऽपाकर्तुम् ॥ तत्प्रतियोगिकत्व-
स्याधिकरणतावच्छेदकसंबंधविशेषादेश्चब्रह्मणिसत्त्वस्यावश्यवाच्यत्वात् ॥ केवला-
भावत्वरूपत्वेशून्यवादोदुष्परिहरः ॥ किंचप्रतिषेधेद्वयीगतिर्दर्शिता । तत्राद्येपक्षे "अ-
स्थूलमनणु अचक्षुः इत्यादौ महतोमहीयस्त्वमणोरणीयस्त्वंविश्वतश्चक्षुष्ट्वमित्यादि-
कमलौकिकंनप्रतिषिध्यते किंतु लोकप्रसिद्धमेवस्थौल्यादिकमपि ॥ श्रौतालौकिक-
धर्मेषुनिषेधाविषयत्वनिश्चयात्प्रामाण्यग्रहः ॥ बहुसंमतेमुख्येद्वितीयपक्षेतुयतउक्तरी-
तिकंविधीयतेतोऽणुत्वादिष्वधिकरणस्थौल्यादेरेकदेशिचक्षुरादेश्चैवप्रतिषेधइत्येकवा-
क्यता ॥ नियमः प्रतिषेधश्चविधिशेषस्तथासतीतिहर्युक्त्यानिषेधस्योपसंहारानपेक्ष-
त्वोक्तिर्निरस्ता ॥ ( नञित्युपलक्षणंनिषेधार्थकपदान्तरस्यापि ) इतितुत्वयैवकथना-
दस्थूलादिवाक्यविचारेण "निष्कलंनिष्क्रिय" मित्यादिकमपि "आनंदस्यान्या-
निभूतानिमात्रामुपजीवंति ॥ ममैवांशः" इत्यादिभिः "आसीनोदूरंव्रजति । भूतभर्तृ-
चतज्ज्ञेयंग्रसिष्णुप्रभविष्णुच" भीष्मपर्वाष्टमाध्याये ( श्लो० १७ ) सप्रभुःसर्वभूतानांवि-
भुश्चभरतर्षभ ॥ संक्षेपोविस्तरश्चैवकर्ताकारयिताहरिरित्यादिभिश्चसहैकवाक्यतया-
लोकवत्पूर्णत्वविभुत्वविरोधिविभागपरिच्छिन्नक्रियादिप्रतिषेधपरतयाव्यवस्थापितंवे-
दितव्यम् । भीष्मपर्ववचनेकर्ताकारयितातथेत्यपिक्वचित्पाठःयच्च ( नञसामान्यनिषे-
धकत् स्वान्वयिताऽवच्छेदकधर्मावच्छिन्नात्यंताभावबोधक ) इत्युक्तंतदव्युत्पत्ति-
विजृंभितम् । यतएवमुक्तयाताहशाभावोनञ्वृत्तिप्रतिपाद्यइतिलभ्यते ॥ तदसंगतम् ॥
स्वान्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वस्याभावेव्युत्पत्तिबललभ्यत्वात् ॥

एवंचासमस्तनञ्स्थलेक्वचिदियंव्युत्पत्तिर्विशेषज्ञानेसतिसामान्याभावज्ञानस्यतदभाव- व्याप्यवत्तामुद्रयाप्रतिबंधेनानुदयादंगीकृता ॥ अतएवनीलघटवत्यत्रघटोनास्तीतिनव्यवहारः पीतघटोनास्तीतिव्यवहारोभवत्येव ॥ अन्वयितावच्छेदकस्यपीतरूपस्यतत्राभावात् ॥ अत्रान्वयितावच्छेदकस्याप्यभावएवप्रतियोगितयाऽन्वयः ॥ स्पष्टीकृतंचैतन्मंजूषायाम् " अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वंचाभावेव्युत्पत्तिबललभ्यम् ॥ नीलघटवत्यत्रघटोनास्तीत्यव्यवहारात् ॥ पीतघटोनास्तीतिव्यवहाराच्च ॥ ध्वनितंचेदंविरामोऽवसानमित्यत्रभाष्ये ॥ अतएववायौरूपंनास्तीतिप्रतीत्यासामान्यभावसिद्धिः ॥ विशेषाभावकूटस्यततोबोधासंभवात् ॥ अन्वयितावच्छेदकशब्देननञर्थान्वयिविशेषणमुच्यते ॥ यथापीतघटइत्यत्रपीतरूपं ॥प्रतियोगितावच्छेदकंचतत्रापिघटत्वमेव ॥ विशिष्टबोधेविशेष्यवृत्तिधर्मस्यैवप्रतियोगितावच्छेदकत्वात्॥ तदवच्छिन्नाप्रतियोताचपीतत्यादिविशेषणबलात्पीतघटव्यक्तिनिष्ठैव ॥ विशिष्टंचप्रधानान्नात्यंतमतिरिक्तम् ॥ सर्वथातिरिक्तत्वेतुवैशेषिकाणांपदार्थविभागन्यूनतापत्तिः॥ अतएवाभियुक्तैरन्वयितावच्छेदकेत्युक्तम् नतुप्रतियोगितावच्छेदकेति॥ यथाघटादिपदानांघटत्वादिनाशक्तावपिप्रकरणादिनाकासांचिदेवव्यक्तीनांबोधस्तथाप्रकृतेविशेषणबला" दितिग्रंथेन ॥ एवंच घटाःसंतीत्यादौयावद्घटासत्वेऽपिकासांचिदेवव्यक्तीनांयथासत्वंप्रकरणादिनाऽवगम्यते तथाघटानसंतीत्यादौतासामेवाभावस्तत्र ॥ एवंचास्थूलमित्यादौप्रकरणादिनालोकदृष्टानामेवप्रतिषेधः ॥ प्रकरणादिनिर्णयस्तुतृतीयेद्वितीयेनस्थानतोपीतिविंशतिसूत्र्यासम्यग्दर्शितःपरमाचार्यपादैः ॥ पीतघटोनास्तीत्यादौपीतत्वादिकमिव " निश्चेतनात्मकशरीरगुणैश्चहीनः " इत्यादौतुनिश्चेतनात्मकत्वमेवान्वयितावच्छेदकंस्पष्टमेव ॥ समस्तासमस्तसर्वस्थलेष्वयमेवन्यायइतिहठेतु अज्ञोजीवइत्यादिकंनप्रयोक्तुंशक्येत । ज्ञानसामान्याभावस्यतत्राशक्यवचनत्वात् । इष्टापत्तौच " द्वावीशानीशौज्ञाज्ञौ " इत्यादेर्व्याकोपः ॥ एवं " अपशवोवाअन्ये " इत्यादिकमपिबाधितंस्यात् ॥ गवाश्वेतरखरकासरकरभादिषुपशुत्वस्यप्रत्यक्षसिद्धतयासामान्यनिषेधस्याशक्यत्वात् ॥ इत्थममरादिशब्देष्वपिद्रष्टव्यम् ॥ किंच सार्वत्रिकत्वदुराग्रहेसतिव्युत्पत्तिशरीरघटकाभावपदंकिंबोधकोनञ् । सकिंभावत्वावच्छिन्नप्रतियोगिताकाभावमेवबोधयतिभावविरोधंवा ॥ आद्ये आत्माश्रयानवस्थादयः ॥ भेदात्यंताभावरूपार्थयोरबोधश्च ॥ अभावपदेविरोधार्थस्यबहुग्रंथेष्वंगीकृतत्वाद्द्वितीयश्चेद्युत्पत्तिशरीरएवव्युत्पत्तिभंगः ॥ अज्ञानमविद्येत्यत्रचज्ञानत्वावच्छिन्नप्रतियोगिताकाभावएवतावकन्यायात्सिद्धयेन्नतुभावरूपमज्ञानम् ॥ तथाचापसिद्धांतः ॥ एतेनाधर्मामित्रासितादिशब्देष्वप्यर्थासंगतिर्ज्ञेया ॥ तादृशस्थलेषुनञोविरोधबोधकत्वमेवेतितुदर्शितं—व्यासपादैर्योगसूत्रभाष्येद्वितीयपादे ( सू० ५ ) " अनित्याशुचिदुःखानात्मसुनित्यशुचिसुखात्मख्यातिरविद्या " तिसूत्रव्याख्याने " अविद्यानप्रमा-

र्णनप्रमाणाभावः किंतुविद्याविपरीतंज्ञानांतरमविद्येति „ इतिज्ञानांतरमित्युक्त्यानञः सामन्यनिषेधकत्वमिहापास्तम् ॥ मंजूषाकारोपि " अज्ञानशब्देऽधर्मशब्दइवविरोध्यर्थकोनञ् तेनभावपदार्थएवससर्वविषयइत्यन्यत्रविस्तरः । अभावपदेचन्निरोध्यर्थकएवसः । भावविरोधीत्यर्थः । एवंचाभावस्यभावप्रतियोगिकत्वमेव „ इत्याह ॥ तावकन्यायात्तुमित्रत्वावच्छिन्नाद्यभावएवबुध्येतेति " नामित्रोमित्राभावोनमित्रमात्रंकिंतुतद्विरुद्धःसपत्नः " इत्यादिव्यासभाष्यविरोधःस्पष्टएव ॥ किंच येननाशासे नाविष्णुःपृथिवीपतिरित्यादौनञ्द्वयसमभिव्याहारेप्रकृतार्थदार्ढ्यस्यैवसर्वसंमतत्वात्तत्रापितावकव्युत्पत्तेर्व्यभिचारः । उक्तंच ( अ० ५ पा० २ सू० २७ ) " विनञ्भ्यांनानाञौनसह „ तिसूत्रेमहाभाष्ये " द्वौप्रतिषेधौप्रकृतमर्थंगमयतः । ननसहसहैवेति „ इति ॥ एतदेवाश्रित्यमंजूषायाम् " अभावाभावइत्यादिव्यवहारोवर्वराणामप्रामाणिकएव ॥ घटाभावोनास्तीत्यादौतत्कर्तृकसत्तायाएवाभावप्रतियोगित्वम् एवमेवनासहस्त्रदस्तत्रास्तेइत्यादावपिबोध्यं „ इत्याद्यभिहितम् ॥ एवंमथ्नामिकौरवशतंसमरेनकोपाद्दुःशासनस्यरुधिरंनपिबाम्युरस्तः संचूर्णयामिगदयानसुयोधनोरूइतिवेणीसंहारस्थभीमवाक्यादिषुकाकुसहकारेणनञामथनादिगतंनिश्चितत्वंद्योत्यतेइत्यप्युक्तम् । तत्रापितद्व्यभिचारःस्फुटः ॥ इत्थं ( अ० ८ पा० १ सूत्र० १० ) " आबाधेचे " तिसूत्रेमहाभाष्ये " ननसुसु " इतिप्रयोगे " ननकरोतिसुसुजागर्तीत्येवमादिवाक्यैकदेशः " इतिकैयटः ॥ एवमादौकाकभावेपितद्व्यभिचारः ॥ मंजूषाकारस्तुअत्रब्राह्मणोनास्तीत्यादावसमासस्थलेप्यभावार्थकतांनञोनिराचष्टे यथाह " आरोपितत्वमेवनञर्थइतियुक्तम् अत्रब्राह्मणोनास्तीत्यादावपि एतद्देशाधिकरणिकारोपिताब्राह्मणकर्तृकासत्तेत्येवबोधः ॥ आर्थस्तुतदभावबोधः अतएवनत्रतत्सदृशेतरसत्ताप्रतीतिः " इत्यादि ॥ सर्वत्रतादृशाभावमात्रबोधकत्वनियमेऽब्राह्मणइत्यादौसादृश्यावगमोऽपिनस्यात् नचतत्र तत्प्रत्यय आर्थइतिवाच्यम् नञसूत्रादिभाष्यविरोधात् तत्रतादृशस्थलेषुतथार्थकतायाएवसिद्धेः ॥ किंच ( अ० २ पा० २ सू० ६ ) " नञ्सूत्रएवभाष्ये " भवतिचैवंजातीयकानामप्येकस्यप्रतिषेधेनबहूनांसंप्रत्ययः तद्यथा ननएकं प्रियं ननएकं सुखमिति " इत्युक्तम् ॥ व्यस्तस्थलेनञःक्रियायामेवान्वयादरेऽत्रास्तिक्रियामात्रस्यप्रियादेर्वाप्रतीयेताभावमात्रम् ननुबहुत्वादिकम् ॥ इत्थंचास्थूलादिवाक्येष्वस्थूलादिपदानां " अच्छायं अवायु अचक्षुष्कं " इतिबहुव्रीह्यंतपदप्रायपाठात् नास्तिस्थूलोयत्रेत्यादिरर्थोनिश्चीयतेऽतोऽत्रब्राह्मणो नास्तीत्यादौ ब्राह्मणादिनिषेधात्तदितरसत्तेव लोकदृष्टस्थौल्यादीनां निषेधादलौकिकगुणगणसत्तातत्रसिध्यति ॥ नञोविरोधार्थताऽऽदरेत्त्वज्ञानमित्यत्रयथार्थज्ञानविरुद्धज्ञानांतरमिव लोकदृष्टस्थूलादिवस्तुविरुद्धधर्मकंतदलौकिकत्वादुभयधर्माश्रयत्वाच्चेतितादृशवाक्यार्थोनिर-

वयः ॥ अणुर्बृहत्कृशःस्थूलोगुणभृन्निर्गुणोमहानित्यादिभारतीयविष्णुसहस्रनामवाक्यादिरूपास्मृतिरप्येवमर्थेऽनुग्राहकावेदितव्या नैयायिकास्तु भूतलेनघटइत्यत्र भूतलवृत्तिर्घटाभाव इतिबोधेभूतलनिरूपितस्य सप्तम्यर्थवृत्तित्वस्य स्वनिष्ठयाप्रतियोगितानिरूपकतयाऽन्विते नञर्थेघटाभावेऽन्वयः ॥ तादृशवाक्येभ्योभूतलवृत्तिर्घटाभाव इत्यादिघटाद्यभावधर्मिकभूतलादिवृत्तित्वप्रकारकशाब्दानुभव इवतात्पर्यरूपकारणवशाद्घटोभूतलवृत्तित्वाभाववानित्यादिर्घटादिविशेष्यकभूतलादिवृत्तित्वप्रकारकबोधोपिभवत्येव ॥ भूतलादिवृत्तित्वंचवस्त्वंतरादौप्रसिद्धम् ॥ ईदृशबोधानङ्गीकारेभूतलेनघटइत्यादिवाक्यजन्यस्याप्रामाण्यज्ञानानास्कंदितबोधस्यभूतलेघटइत्यादिवाक्यजन्यघटादिविशेष्यकभूतलाद्याधेयत्वप्रकारकबोधविरोधितासर्वानुभवसिद्धानोपपद्येत ॥ नहिघटाभावधर्मिकभूतलवृत्तित्वप्रकारकंज्ञानंघटधर्मिकंभूतलवृत्तित्वप्रकारकज्ञानंविरुणद्धिग्राह्याभावानवगाहित्वात् किंतुघटोभूतलवृत्तिरितिज्ञानस्यघटोनभूतलवृत्तिरित्येवज्ञानंप्रतिबंधकंग्राह्यभूतलवृत्तित्वाभावावगाहित्वात् ॥ तादृशबोधानंगीकारे "प्रतियोग्यभावान्वयौतुल्ययोगक्षेमा" वितिनियमानुरोधी "नञ्पदंविनायत्रधर्मिणियस्यविशेषणतयाभानंयादृशसमभिव्याहाराद्भवति तादृशसमभिव्याहारस्थलेनञ्सत्वेतत्रधर्मिणितदभावःप्रतीयत" इत्यनुभवोऽपलप्येत ॥ एवंचनञर्थाभावेऽनुयोगितयाघटाद्यन्वयबोधोपपत्तयेनामार्थयोरभेदान्वयव्युत्पत्तिशरीरेनिपातातिरिक्तेतिनामविशेषणमावश्यकम् ॥ एवंनपचतिचैत्रइत्यादौचैत्रादिषुनञर्थपाककृत्याद्यभावस्य चैत्रस्यनधनमित्यादौधनादिषुनञर्थचैत्रस्वत्वाद्यभावस्यचानुयोगितयाऽन्वयार्थं घटोनपटइत्यत्रनञर्थभेदस्यघटादावनुयोगितयापटादौप्रतियोगितयाऽन्वयार्थं चतत्रतदावश्यकम्। एवक्रियानामार्थयोरपिविभक्त्यर्थमंतराकृत्यैवान्वयबोधः अतएवराजापुरुषःभूतलंघटइत्यादौपुरुषाद्यंशेराजभूतलादेःस्वत्वाधेयतासंबंधेनतंडुलःपचतिचैत्रःपच्यतइत्यादौचकर्मत्वकर्तृत्वादिसंबंधेनतंडुलचैत्रादौपाकादेः स्वकर्मत्वस्वकर्तृकत्वादिसंबंधेनपाकाद्यंशेवातंडुलचैत्रादेर्नान्वयबोधः ॥ निपातातिरिक्तत्वादिविशेषणादेवभूतलेनघटःघटोनपटइत्यादौघटादेर्नञर्थाभावेनमुखंचंद्रइवेत्यादौमुखचंद्रादीनामिवार्थसादृश्यादिनान्वयबोधोभवत्येव ॥ एवं "नकलंजंभक्षये" दित्यादौनैयायिकमतेनञुपस्थाप्येनबलवदनिष्टाननुबंधित्वविशिष्टेष्टसाधनत्वादिरूपविध्यर्थाभावेन धात्वर्थभक्षणादेरनुयोगितया गुरुमतेतुविध्यर्थापूर्वांशे विशेषणतयाऽनुमितेन नञुपस्थाप्याभावेन धात्वर्थभक्षणादेःप्रतियोगितयाऽन्वयोबोध्यः „ ॥ विशेषणविभक्तेरभेदार्थकत्वे घटोननीलइत्यादौनञानीलाद्यभेदाभावएवप्रत्याययिष्यते नतुनीलादिभेदः यादृशसमभिव्याहारस्थले येनसंबंधेनयद्धर्मिणियेनरूपेणयद्वत्वं नञसत्वे प्रतीयतेतादृशस्थले नञातद्धर्मिणि तादृशसंबंधावच्छिन्नतादृशधर्मावच्छिन्न प्रतियोगिताकतदभावबोधस्यव्युत्पत्तिसिद्धत्वात् प्रतियोग्यभावान्वयौचेत्यादेर-

ष्ययमेवार्थः ॥ एवंचनञोभेदबोधकत्वं नकुत्रापिसंभवति । अनीलंघटमानयेत्यादौघट-पदसामानाधिकरण्यानुरोधेनानीलपदस्यनीलभिन्नपरतया नञोभेदवत्येवलक्षणायाउ-पगंतव्यत्वात्" नीलोघटइत्यादावभेदस्यप्रकारतावादिमतेघटरूपेधर्मिणिस्वरूपसंबंधेन नीलाभेदत्वेनरूपेणनीलाद्यभेदोभासते ॥ तत्रनञ्समभिव्याहारे घटेस्वरूपसंबंधावच्छि-न्ननीलभेदत्वावच्छिन्नप्रतियोगिताकाभावोभासते ॥ घटःपटइत्यादौत्वयोग्यत्वादेव-नान्वयः ॥ संसर्गतामते नीलोघटइत्यादावभेदसंबंधावच्छिन्ननीलत्वावच्छिन्नप्रकारता निरूपितघटत्वावच्छिन्नविशेष्यताशालीबोधोभवति ॥ तत्रनञ्समभिव्याहारेऽभेदसंबं-धावच्छिन्ननीलत्वावच्छिन्नप्रतियोगिताकाभावोघटेनञाबोध्यते ॥ यत्रचायो-ग्यत्वादिनाघटःपट इत्यादावभेदोनसंभवति तत्रनञ्समभिव्याहारेघटत्वावच्छिन्न-प्रतियोगिताकाभावःस्वरूपेणवनञाबोध्यते । अनीलमित्यादिसमासस्थलेपूर्ववदेवलक्ष-णाबोध्या ॥ भूतलेघटइत्यादौस्वरूपसंबंधावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रकारतानिरू-पितविशेष्यताघटेभासतेतत्रनञ्समभिव्याहारेस्वरूपसंबंधावच्छिन्नवृत्तित्वत्वावच्छिन्न-प्रतियोगिताकाभावोघटेभासतइतिमन्यंते ॥ स्पष्टंचैतत्सर्वव्युत्पत्तिवादादिषुइत्थंकार-मेतन्नयेपिक्वाचित्कएवतावकन्यायः अभावस्यक्वचिदनुयोगितयाक्वचित्प्रतियोगित-याचान्वयस्वीकारात् ॥ त्वान्वयितावच्छेदकेत्यादिनियमस्यसार्वत्रिकत्वेतु भूतलेन-घटः घटोनपटः चैत्रस्यनधनमित्यादौभूतलघटधनादेरनुयोगितयाऽन्वयिनोऽप्यभावो-ऽवगम्येत ॥ अतोघटोनेत्यादिकेवलप्रतियोगिघटितवाक्येष्वेवसइतिरमणीयम् ॥ अ-स्थूलादिवाक्यानितु एतद्वैतदक्षरमित्याद्यनुयोगिबोधकपदघटितानीतिनतत्रतदवका-शः॥न्दडादयस्तुवह्नित्वेनघटोनास्तीत्यादिव्यधिकरणधर्मावच्छिन्नाभावमप्युरीकुर्वंति तन्मतेक्वास्यन्यायस्यैकांतिकत्वावसरः । अथप्रागुक्तरीतिकातिप्रसंगवारणायान्वयि-पदंप्रतियोगिमात्रपरमितिचेत्प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावबो-धकइत्यापत्याऽऽत्माश्रयादिर्दुर्निवारइतिदिक् ॥ मीमांसकमतेऽपिनायंन्यायःसार्वत्रि-कःशक्योवक्तुं ॥ बहुश्रुतिसूत्रासामंजस्यप्रसंगात् ॥ तद्यथा " तस्माद्धूमएवाग्नेर्दिवा-ददृशे, नार्चिः तस्मादर्चिरेवाग्निर्नक्तंददृशे, नधूमः " इत्यत्र दिवानक्तमर्चिर्धूमयोर्दर्श-नसामान्यस्याभावेत्वदुक्तरीत्यावक्तव्येऽपिदूरदर्शनभूयोदर्शनयोरेवाभावस्तत्रसिद्धांति-तःप्रथमस्यद्वितीयेपादेऽर्थवादाधिकरणे ( सू० १२ ) " दूरभूयस्त्वात् " इतिसूत्रेजैमि-निना ॥ तथा " नचैतद्विद्मोवयंब्राह्मणावास्मःअब्राह्मणावा " इत्यत्रतवज्ञानसामा-न्याभावप्रसंगेपिनिश्चयरूपस्यज्ञानविशेषस्यैवाभावोगम्यते नतुसंशयरूपस्य अन्य-थाप्रवरानुमंत्रणापार्थ्यापातात् ॥ संशयबीजंचतत्रैव ( सू० १३ ) " रूपपराधा-त्कर्तुश्च पुत्रदर्शनम् " इतिदर्शितम् ॥ नचविदिर्यथार्थज्ञानार्थ एवेतिभ्रमितव्यम् " अविदितपरमानंदो वेत्तिनरो विषयमेवरमणीय " मित्यादावयथार्थज्ञानेपितस्य शंक-राचार्यादिभिःप्रयोगेण भीमसेनोक्ते ज्ञानसामान्यएव तच्छक्तेर्निर्धारात् ॥ एवं "

देवावैदेवयजनमध्यवसायदिशोनप्रजानन् " इतिदिक्प्रज्ञाननिषेधः शबरादिभिः ( सू १० ) " गुणवादस्तु " इतिसूत्रंगौणीसाधकंमन्वानैर्गौणःस्वीक्रियते यथोक्तं तद्भाष्ये " कथमसति दिङ्मोहेदिङ्मोहशब्दः इति । उच्यते अप्राकृतस्य बहोःकर्म समूहस्योपस्थितत्वाद्गौणो मोहशब्दोऽवधारणावकाशदानादिभिर्ज्ञापयतीतिगौणता " इति ॥ तवव्युत्पत्त्यातुदिक्प्रज्ञानस्यैवाभावःसर्वात्मनावाच्यः ॥ यद्यपीहसिद्धांते-त्राऽन्यएवपंथास्तथापिशबरादीनामयमत्राशयइत्यनूद्यते ॥ इत्थं दशमस्याष्टमेपादेऽपि बहूनिनिषेधवाक्यानिविचारितानि तत्रापि " दीक्षितो नददातिनजुहोति " त्यादौ दानहोमादेरवच्छेदकावच्छेदेनाकरणनिराकरणपरःसरंपर्युदासमाश्रित्यतद्वि-शेषविषयतयानिषेधो निर्धारितइति संक्षेपः ॥ एवंकारममोषांमतरीत्याप्यस्थूला-दिवाक्येषुलाघवात्पर्युदासमाश्रित्य " नानूयाजेषु " इत्यादाविव लोकप्रसिद्ध-स्थूलादिवस्तुभेदः " अपशवोवा अन्येगोअश्वेभ्यः " इत्यत्रनञन्वयितया सामान्यतःपशुशब्दस्योपादानेपि प्रशस्तपशुत्वप्रतिषेधइवकार्यभावनिर्वाहकाणां नियताणुत्वादिवैयधिकरण्यकस्थौल्यादीनां प्रतिषेधोवासिद्ध्येदितिप्रियंमेवनः ॥ ननु प्रबलप्रत्यक्षविरोधादेवतत्रपशुत्वसामान्याभावो ऽशक्याश्रयणइतिचेदत्रा-पिश्रुत्येकसमधिगम्येब्रह्मणि " अणोरणीयान्महतोमहीयान् " इत्याद्यलौकि-कधर्मवत्ताबोधकसर्वाधिकस्वतःप्रमाणप्रत्यक्षनिरवकाशश्रुतिशतविरोधात्तथास्त्वतिगु-डजिह्विका ॥ एतच्चसर्वंतत्तन्नयानुसारेणवाक्यार्थविचारेप्यास्माकोब्रह्माप्राकृतनिखि-लधर्मरूपतावादःसुस्थएवेत्यभिप्रेत्यदर्शितम् ॥ वस्तुतस्तुतत्तन्मतेसिद्धांतविरुद्धःक-श्चिदंशःसूक्ष्मेक्षिकयाहेयएव ॥ अथकस्तर्हिसिद्धांतेनञर्थइतिचेद्यासेसमासेचसर्वत्रा-नुगतोलाघवात्तिरोभावएवनञर्थोव्याख्येयइतिप्रतिभाति ॥ द्वितीयस्कंधनवमाध्याये-( श्लोक ३२ ) अहमेवासमेवाग्रइत्यत्रसुबोधिन्यांसर्वेषामभावानांतिरोभावानतिरि-क्ततायाःस्वमतेकथनात् सर्वार्थनिर्णयनिबंधावरणभंगादिषुतत्रैवतेषामंतर्भावसाधना-च्च ॥ एवंच पुरुषसूक्तशांडिल्यविद्याबृहदारण्यकनृसिंहोत्तरतापनीयादिषु " पुरुषएवे-दंसर्वंयद्भूतंयच्चभव्यम् ॥ सर्वंखल्विदंब्रह्मतज्जलान् ॥ इदंसर्वंयदयमात्मा ॥ स-र्वंसर्वमयंसर्वेजीवाःसर्वमयाः " सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनि । ईक्षतेयोग-युक्तात्मासर्वत्रसमदर्शनः ॥ योमांपश्यतिसर्वत्रसर्वंचमयिपश्यति ॥ अनागतमती-तंचवर्तमानमतींद्रियम् ॥ विप्रकृष्टंव्यवहितंसम्यक्पश्यंतियोगिनः ॥ एवमादिश्रु-तिस्मृतिपुराणैर्ब्रह्मरूपतयासर्वस्यसार्वात्म्येसर्वत्रसर्वसत्त्वेचवस्तुतःसत्यपियत्रयत्रयस्य-यस्यद्रव्यस्ययद्यत्क्रियागुणयोर्वायदातिरोभावस्तदातत्रतत्रतत्द्रव्यंसासक्रियासस्गुण-श्चनेत्युच्यते ॥ अतएवामदशायांघटेरागतिरोभावादरक्तइतिव्यवहारः पाकेननैल्यति-रोभावेत्वनीलइति ॥ पाकानुकूलक्रियातिरोभावेतु नपचतिचैत्रइति ॥ बीजदशा-यांतरोस्तिरोहितत्वान्नास्त्यधुनाऽत्रवृक्षइतिच ॥ नचवृक्षादेरसत्त्वमलकएवतदानीं

थाव्यवहारइतिशंक्यं असतउत्पत्त्ययोगात् । अन्यथाशशविषाणादेरपिकदाचिदु-
त्पादापातात् । उपादाननिरपेक्षतयैवोत्पादनस्यशक्यताप्रसंगात् । असताकार्येण-
कारणस्यसंबंधाभावापत्तेः संबंधस्यद्विनिष्ठत्वात् असंबद्धस्योत्पत्तिस्वीकारेवटबीजा-
देर्वपिचुमंदकुंदचंदनादेरुद्भवप्रसक्तेश्च ॥ अतोऽभिव्यंजनार्थमेवपुरुषादिप्रयत्नइत्यन्य-
त्रविस्तरः ॥ इदंचसकलंनकेवलमस्मद्ग्रंथेष्वेवापितुसांख्यादिग्रंथेष्वपि " असदक-
रणादुपादानग्रहणात्सर्वसंभवाभावात् । शक्तस्यशक्यकरणात्कारणभावाच्चसत्कार्यं "
मित्यादिस्थलेवाचस्पतिमिश्रादिभिरपिप्रपंचितमितितत्प्रतितंत्रार्थोऽप्यनुकूलोनः ॥ ति-
रोभावश्चविद्यमानवस्तुनिष्ठजीवानुभवयोग्यताविरोधीधर्मः ॥ अतएवतिरोभावकाले-
लौकिकप्रमाणैर्नानुभवः ॥ तिरोभावस्यैवनञर्थतामभिप्रेत्य ( अ० २ पा २ सू० ६ )
" नञि " तिसूत्रेमहाभाष्ये " अथवापुनरस्तूत्तरपदार्थप्रधानः । ननुचोक्तम-
ब्राह्मणमानयेत्युक्तेब्राह्मणमात्रस्यानयनंप्राप्नोतीति नैषदोषः इदंतावदयंप्रष्टव्यः अथे-
हराजपुरुषमानयेत्युक्तेपुरुषमात्रस्यानयनंकस्मान्नभवति । अस्त्यत्रविशेषः । राजा-
विशेषकःप्रयुज्यतेतेनैवंविशिष्टस्यानयनंभवति । इहापितर्हिनञ्विशेषकःप्रयुज्यतेते-
ननञ्विशिष्टस्यानयनंभविष्यति । कःपुनरसौनिवृत्तपदार्थकः । यदापुनरस्यार्थो-
निवर्त्तते किंस्वाभाविकीनिवृत्तिराहोस्विद्वाचनिकी । किंचातः यदिस्वाभाविकी
किंनञ्प्रयुज्यमानः करोतिअथवाचनिकी तद्वक्तव्यम् नञ्प्रयुज्यमानःपदार्थंनिव-
र्त्तयतीति ॥ एवंतर्हिस्वाभाविकीनिवृत्तिः ॥ ननुचोक्तं किंनञ्प्रयुज्यमानःक-
रोतीति । नञ्प्रयुज्यमानःपदार्थंनिवर्त्तयति ॥ कथम् । कीलप्रतिकीलवत् ।
तद्यथा । कीलआहन्यमानःप्रतिकीलंनिर्हन्ति । यद्येतन्नञोमाहात्म्यंस्यान्नजातु-
चिद्राजानोहस्त्यश्वंविभृयुर्नैत्येवराजानोब्रूयुः । एवंतर्हिस्वाभाविकीनिवृत्तिः ॥ न
चोक्तं किंनञ्प्रयुज्यमानःकरोतीतिनञ्निमित्तातूपलब्धिः । तद्यथा । समंधकारेद्रव्या
णां समवस्थितानांप्रदीपनिमित्तंदर्शनंनचतेषांप्रदीपोनिवर्त्तकोभवति । यदिपुनरयं-
निवृत्तपदार्थकःकिमर्थंब्राह्मणशब्दःप्रयुज्यते एवंयथाविज्ञायेतास्यपदार्थोनिवर्ततइति ।
नेतिह्युक्तेसंदेहःस्यात् कस्यपदार्थोनिवर्त्ततइति । तत्रासंदेहार्थंब्राह्मणशब्दःप्रयुज्य
ते । एवंचैतत् " इत्याद्युक्तम् ॥ अत्रनिवृत्तपदंभावक्तान्तम् ॥ निवृत्तिःपदार्थो-
यस्येतिभूषणादिसंमतव्याख्यानस्यादेरऽपिनिवृत्तिस्तिरोभावः ॥ अभावकल्पनेऽ-
पिसनतिरोभावातिरिक्तोऽस्मन्मते ॥ वस्तुतस्तुनतद्व्याख्यानंभाष्यकाराभिप्रेतम् ।
तच्छैलीविरोधात् । "प्रतीतंपदार्थकोलोकेध्वनिःशब्दउच्यत" इत्यादिषुपस्पशादिस्थ-
लांतरेषुभावेक्तस्याव्याख्यानात् अन्यथाज्ञानपर्यायेष्वशब्दत्वमित्यापातात् अत्रा-
र्थेऽनुपदं " अस्यार्थोनिवर्तते । अस्यपदार्थोनिवर्तते " इत्याद्युक्त्या कर्तरिक्तस्यै
वनिश्चयसिद्धेश्च ॥ तथाचायं भाष्यार्थः ॥ नञर्थनिर्धारणायशंकते नन्विति ।
ब्राह्मणमात्रस्येति । अभावेभेदेवानञर्थे वस्तुविशेषानुयोगिकस्याभावस्यभेदस्यवाप्र-

तियोगीब्राह्मण इत्यत्रब्राह्मणशब्दार्थःस्यादतएवमितिशंकाशयः ॥ मात्रशब्देनच क्ष-
त्रियादब्रह्मसंबंधोश्चानयनं नस्यादितिभावः ॥ नञ्विशिष्टस्येति । यथाराजशब्दा-
र्थसंबद्धस्यानयनं तथानञर्थतिरोभावविशिष्टस्य तिरोहितब्राह्मण्यस्य क्षत्रिया-
देर्ब्रह्मसंबंधोश्चेत्यर्थः ॥ नञर्थमेवस्पष्टयितुंपृच्छति । कःपुनरसाविति । असौ-
नञर्थविशिष्टप्रमितोत्तरपदार्थव्यतिरिक्तःकःसमासार्थइत्यर्थः ॥ अभावएवनञो-
ऽर्थःप्रसिद्धोऽतउत्तरपदार्थस्यब्राह्मण्यादेर्भावस्यतदभावस्यचविरोधान्नञर्थविशिष्ट-
उत्तरपदार्थःकथंस्यादितिभावः ॥ उत्तरयति निवृत्तपदार्थकइति ॥ पस्पशा-
न्हिके " अथसिद्धशब्दस्यकःपदार्थः " इत्यादिस्थलइवात्रपदार्थशब्दोऽर्थमात्रेरू-
ढःनिवृत्तस्तिरोहितःपदार्थउत्तरपदबोध्योऽर्थोयस्मिन्सइत्यर्थः ॥ अयंभावः शब्दा-
हितिरोहितआविर्हितेचार्थेतुल्यतयाप्रवर्तते ॥ अन्यथानलोभूद्युधिष्ठिरोभूदित्या-
दिनव्यवन्हियेत । सर्वथोत्तरपदार्थाभावेचतस्यप्राधान्यमपिनस्यात् । नञ्वा-
चकस्यविशेषणंस्यात् । अतोनञ्समासस्थलउत्तरपदंतिरोहितस्यार्थबोधकम् ।
तस्यतथात्व द्योतकश्चनञ् ॥ इत्थंनञर्थविशिष्टस्यनिवृत्तपदार्थनिर्णीते निवृत्तिरे-
वनञर्थइत्यर्थात्फलति निवृत्तिश्चतिरोभावः ॥ पूर्वंतत्रसतितदानीमप्यन्यत्रविद्य-
मानेनिवृत्तिव्यवहारात् ॥ तद्यथा ॥ निवृत्तकृषीवलोऽयंग्रामःनिवृत्तविद्योदेवदत्तइ
ति ॥ अयंचतिरोभावोवस्तुनानात्वनिर्वाहायभगवदिच्छाकृतोवस्तुत्वभावसिद्धए-
वनञाद्योत्यतेनतुपारिभाषिकोवचनबलात्क्रियतइतिसाधयितुंपृच्छति । यदापुन-
रिति । किंत्वयंतिरोहितस्यब्राह्मणपदार्थस्यनञातिरोभावोद्योत्यते । अथ-
स्थितस्यैवब्राह्मण्यस्यनञानिवृत्तिःक्रियते मंत्रेणैवविषादिसामर्थ्यस्येतिप्रश्नः ॥ किं-
नञ्प्रयुज्यमानइति । एकएवाराच्छब्दोदूरादूरार्थाविवतिरोहितातिरोहितयोस्तु-
ल्योब्राह्मणशब्दएवातिरोहितब्राह्मण्यं प्रक्ष्मव्यंतिरोहितब्राह्मण्यंक्षत्रियादिकंच
वक्ष्यति ॥ प्रकारणादिकंचतत्रतत्रार्थेतात्पर्यग्राहकंभविष्यतीतिनास्तिनञोव्यापारइ-
त्यर्थः ॥ नञ्प्रयुज्यमानःपदार्थंनिवर्तयतीति । ब्राह्मणादिपदार्थंतिरोहितंगमयती-
त्यर्थः ॥ केवलोब्राह्मणशब्दोहिप्रयुज्यमानःप्रसिद्धिवशादतिरोहितब्राह्मण्यकमेवप्र-
त्याययति । नञ्समभिव्याहृतस्तुतिरोहितब्राह्मण्यकम् ॥ यथाप्रतिष्ठतइत्यत्रतिष्ठ-
तिरत्रगत्यर्थकस्तथापिसकेवलःप्रयुक्तोगतिविराममेवबोधयेदतः प्रस्थानबोधनायत-
त्रप्रशब्दउपयुज्यते । तथोत्तरपदस्यतिरोहितार्थकताबोधनायनञ् । केचित्तु भा-
ष्येशब्दस्यपदार्थप्रत्ययपरतांलक्षणयाऽऽश्रित्यनञ्पदार्थप्रत्ययंनिवर्तयतीतिव्याचक्षते
तथाव्याख्यानेऽपिप्रत्ययस्यैवकेवलब्राह्मणादिशब्दप्रयोगेभावोनञ्प्रयोगेचाभावोगम्य
ते नतपदार्थस्येतिनञ्समासेउत्तरपदार्थस्याप्रतीतिरूपस्तिरोभावएवफलति ॥ यदि-
चसर्वथोत्तरपदस्यार्थप्रत्ययंनञ्निवर्तयेत्तदात्वयमपिकस्यविशेषणंस्यात् । अब्राह्म-
णोऽयमइत्यादौचाविशेषोऽर्थस्यस्यादतस्तिरोहितार्थपरतैवयुक्ता ॥ ननुशङ्काआवि

भूतार्थमेवस्वभावाद्बोधयंति केवलब्राह्मणशब्दप्रयोगेप्रकटब्राह्मण्यकएवार्थोगम्यतेअ-
तःस्वभावसिद्धामाविर्भूतार्थपरतामुत्तरपदस्यनञ्निवर्तयेदित्याशंकांदृष्टांतेनपरिहरति॥
कीलप्रतिकीलवदिति ॥ एकस्मिन्नेवकाष्ठे । पूर्वकीलविशेषवैशिष्ट्येसत्यपितत्राह-
न्यमानःप्रतिकीलःपूर्वकीलमुत्खायतद्वैशिष्ट्यंयथातत्रप्रत्याययतितथाचकेवलब्राह्मणा
दिशब्दानामाविर्भूतार्थपरत्वेपितेषुसंबध्यमानोनञ्प्रादुर्भावांशमपह्नुत्यस्वार्थतिरोभाववै
शिष्ट्यंतदर्थेप्रत्याययति ॥ काष्ठस्थानमुत्तरपदार्थः पूर्वकीलस्थानआविर्भावः प्रति-
कीलस्थानेतिरोभावइतिभावः ॥ अथपदार्थंनिवर्तयतीत्यस्य तिरोहितंबोधयतीत्य-
र्थमबुद्ध्वा पदार्थमेवतिरोभावयतीति विपरीतार्थंचगृहीत्वाशंकते यद्येतदिति। नकार-
प्रयोगेणैवशत्रुबलतिरोभावसंभवात् किंद्रव्यव्ययपरिश्रमसाध्ययासेनयेतिभावः ॥ न-
ञ्समासस्थलेनञोद्योतकत्वैवेतिस्पष्टयितुमेतत्प्रश्नोपन्यासः ॥ तदेवस्पष्टयन्समाधत्ते ॥
एवंतर्हीति । स्वाभाविकीनिवृत्तिः । तत्रतत्रतत्तत्तिरोभावोभगवत्क्रीडेच्छाकृतवस्तु-
नांस्वभावहेतुकः । यथाक्षत्रियादौब्राह्मण्यादितिरोभावःक्षत्रियादिवस्तुस्वभावात्
पतितादौनत्तिरोभावश्चपातकादितिवस्तुस्वभावादितिभावः ॥ नञ्निमित्तातूपलब्धिः ॥
शब्दानांतिरोहितातिरोहितार्थयोरुभयत्रप्रवृत्तावपितिरोहितब्राह्मणाद्यर्थकोऽयंब्राह्मणा-
दिशब्दइत्युपलब्धिर्निर्णयोनञाजन्यतइत्यर्थः ॥ तिरोहितश्चपदार्थोन्धकारगतद्र-
व्यवद्वस्तुतःसन्नप्यनुभवागोचरोभवति । प्रदीपश्चयथानद्रव्यंयथास्थितमेवदर्शय-
ति । तथानञपिशब्दद्वारासंबद्धस्तिरोभावविशिष्टतदर्थस्वरूपंयथास्थितमेवशा-
ब्दज्ञानेविषयीकारयतीतितद्वथासमंधकारइत्यादिग्रंथस्याशयः ॥ एतेन "तत्तदर्थ-
काःशब्दाभिन्नाएवनञ्समभिव्याहारेतुतदर्थकोयमितिज्ञायते इदमेवनञोद्योतकत्वं-
नञ्निमित्तातूपलब्धिरिति भाष्यस्यतत्समभिव्याहारेमुख्यब्राह्मणार्थकोनायं किंतु
अरोपिततदर्थकोयमित्युपलब्धिर्निर्णयइत्यर्थः" इत्यादिविवरणंप्रत्युक्तम् एकस्या-
पिब्राह्मणादिशब्दस्यनानात्वकल्पनेवृथागौरवात् नब्राह्मणइत्यादिविग्रहवाक्येतस्य-
मुख्यब्राह्मणाद्यर्थतयासमासविग्रहवाक्ययोस्तुल्यार्थताभंगप्रसंगाच्च ॥ नचतत्रापिन-
ञ्समभिव्याहारादारोपितार्थःसइतिवाच्यं प्रथमतः पदपदार्थज्ञानेनञोनेनपदेनसंबं-
धइतिबोधस्यपश्चादुदयात् नञासहोच्चारणमात्रेणारोपितार्थतालाभेनब्राह्मणोमूर्खइ-
त्यादावपितदर्थकःस्यात् ॥ मन्मतेत्वाविर्भूतार्थबोधेपिनञाकीलप्रतिकीलन्याये-
नविग्रहवाक्येप्याविर्भावांशस्योद्वापइतितुल्यार्थता ॥ यदितुनामरूपव्याकरणकृ-
तशक्तिसंकोचात्तत्रतत्रार्थएवतत्तच्छब्दस्यप्रसिद्धाशक्तिः । वस्तुतस्तुसर्वेसर्वार्थ-
वाचकाइतिन्यायेनसर्वार्थेसर्वशब्दानामप्रसिद्धासाऽतः क्षत्रियादिषुब्राह्मणादिशब्दा-
अप्रसिद्धशक्तिका नञाद्योत्यंतइत्युच्येत तदातिरोहितब्राह्मण्याद्यर्थकास्तइ-
तिमन्मतएवप्रवेशः ॥ एवमन्यदप्यूह्यम् ॥ यदिपुनरिति । अर्थबोधना-

यैवहि:शब्द:प्रयुज्यते सचेत्तिरोहितः किमर्थमसौब्राह्मणादिशब्द:प्रयुज्यतइत्य-
र्थः ॥ एवंयथेति । अस्यपदस्याभिधेयंतिरोहितमितियथाविज्ञायेतातस्तिरोभाव-
विषयप्रदर्शनार्थंतत्प्रयोगः ॥ केवलेनञिप्रयुक्तेसतिततस्तिरोभावस्यबोधेपिकस्यपद-
स्याभिधेयंतिरोहितमितिनिर्णयोनस्यात् केवलाद्ब्राह्मणादिशब्दाच्चतिरोहितब्राह्म-
ण्यादिरर्थोन निर्णीयेतातोऽसंदेहेनतिरोहितब्राह्मण्यइत्याद्यर्थबोधनार्थं नञ्विशिष्टो-
ब्राह्मणादिशब्द:प्रयुज्यते एवंचैतत् एवमेवैतदित्यर्थः ॥ एवंच नञर्थतिरोभाव-
विशिब्राह्मणस्यबोधादुत्तरपदार्थप्राधान्येपिब्राह्मणमात्रस्यानयनंनप्राप्नोति आविर्हि-
तब्राह्मण्यकस्य व्यावर्तनार्थैत्रनञ्प्रयोगादितिभावः । तस्मादब्राह्मणइत्यादौति-
रोहितोब्राह्मणइत्यादिरर्थः ॥ अतएवपूर्वंब्राह्मणतया व्यवह्रियमाणेपिसुरापानादि-
नापतितेपश्चादब्राह्मणइति व्यवहारः ब्राह्मण्याख्यदेवतायास्तत्रतिरोधानात् ॥ आ
रोपवादिनापिकिंब्राह्मण्यंतत्रतिरोहितमित्यवश्यंवक्तव्यम् सतितस्मिन्नारोपायोगात् ॥
तथासतितेनैवनिर्वाहे कृतमधिकयाऽऽरोपितत्वकल्पनया ॥ क्षत्रियादिशरीरेच
ब्राह्मण्यदेवतातिरोभावःस्वाभाविकइतितत्रापितथाप्रयोगः ॥ अतएवयत्रविश्वामि-
त्रऋषभदेवपुत्रादिशरीरेकारणविशेषवशात्तस्या आविर्भावस्तत्रब्राह्मणोयमित्येवव्य-
हारो नत्वब्राह्मणोयमिति तिरोभावेसत्येवनञ्प्रयोक्तुं शक्यत्वात् ॥ आधुनिके-
ष्वपिक्षत्रियादिषुयत्रदीक्षाकालावच्छेदेनतदाविर्भावस्तत्र " दीक्षितोयंब्राह्मण " इ
त्येवाध्वर्य्वादिभि:प्रयुज्यते नत्वब्राह्मणइति ॥ अतएवक्रतुस्थक्षत्रविड्वधेब्रह्महत्या-
प्रायश्चित्तंस्मरंतियाज्ञवल्क्यादयः ॥ अतोदीक्षातिरिक्तकाले तेषुप्रयुज्यमानाब्राह्म-
णपदस्यापितिरोहितोब्राह्मणइत्यर्थः ॥ आरोपवादिनापिदीक्षाकालेतदाविर्भावस्त-
तएव पूर्वंतत्तिरोभावश्चवक्तव्यएवेति लाघवान्मन्मतमेवाद्रियताम् ॥ ब्राह्मण-
क्षत्रियादीनां भगवन्मुखाद्यवयवसंभवब्रह्मक्षत्रादिपदवाच्यदेवताविशेषरूपत्वम् " ब्र-
ह्मणेब्राह्मणमालभेतक्षत्रायराजन्य " मित्थाद्यनेकश्रुतिसिद्धंद्वितीयस्कंधे ( अ०-
१ श्लो० ३७ ) ब्रह्माननंक्षत्रभुजोमहात्म्येत्यत्रसुबोधिन्यांश्रीमदाचार्यचरणैरवतार-
वादावल्यांब्राह्मणत्वादिदेवतावादेदशमेश्रीपुरुषोत्तमचरणैश्चपुरुतरप्रमाणयुक्तिपुर:सरं-
निर्णीतमितिततोऽवधेयम् ॥ ननुतदाविर्भावकगर्भाधानादिसंस्कारशालिनिकुलशुद्ध
सर्वथातत्तिरोधायकसुरापानादिरहितेपितप:श्रुताद्यनुपलंभादब्राह्मणोयमितिप्रयुज्यते ।
नहितत्रतत्तिरोभावःशक्यवचनः तत्रापितिरोभावांगीकारेब्राह्मणपदार्थस्यैवानुपलंभ:-
प्रसज्येत अतोऽतिरोभावेपिकथंतत्रतथाप्रयोगइतिचदेकदेशतिरोभावादितिजानीहि ॥
तथाहि यत्रसंपूर्णस्तदाविर्भावस्तत्राशेषतद्गुणानुभवः ॥ आविर्भावतारतम्याच्चगुणता-
रतम्यं ॥ अतोशेषगुणसमुदायेशक्तोब्राह्मणशब्द:स्वशक्यसमुदायैकदेशेपिवर्तते ।
पूर्वेपंचालाउत्तरकोसलाइत्यादौपांचालादिशब्दइव ॥ अतोगुणसमुदायैकदेशस्यय-
स्ययत्रतिरोभावस्तत्रततिरोभावमादायैवाब्राह्मणादिप्रयोगोतोनास्मत्संमतनञर्थव्यभि-

चारः ॥ एतदेवतत्रैवसूत्रेभाष्यकृताऽग्रेऽनुपदम् " अथवासर्वएतेशब्दागुणसमुदाये-
षुवर्तन्ते " इत्यादिनास्पष्टीकृतम् ॥ यद्यपिशरीरेतत्तद्देवतासन्निधानमेवब्राह्मणा-
दिशब्दप्रवृत्तिनिमित्तं तथापिसन्निधानस्याप्रत्यक्षत्वात्तत्कार्यतपःश्रुतादिगुणैरेवानु-
मेयत्वात्सन्निधानतारतम्यस्यापिगुणतारतम्यानुमेयत्वाच्चगुणसमुदायेषुवर्ततइत्युक्त-
म् ॥ अतस्तिष्ठन्मूत्रणाद्यनाचारवतिशुच्याचारतारूपस्यशक्यैकदेशस्यतिरोभावबो-
धकस्तथाप्रयोगोनतुलाक्षणिकः ॥ अतएवतत्र " एवमयंसमुदायेब्राह्मणशब्दः-
प्रवृत्तोऽवयवेष्वपिवर्तते । जातिहीनेगुणहीनेच । गुणहीनेतावत् । अब्रा-
ह्मणोयम् यस्तिष्ठन्मूत्रयति । अब्राह्मणोऽयं यस्तिष्ठन्भक्षयति । जातिहीने-
संदेहाद्दुरुपदेशाच्चब्राह्मणशब्दोवर्तते " इत्याद्युदाहृतम् ॥ अत्रकैयटोपि " सर्व-
इति । तत्रयस्यैवगुणस्यस्वाभाविकीनिवृत्तिस्तस्यैवासौनञाद्योत्यते । अवशिष्टानां-
तुगुणानामर्थात्सद्भावोगम्यते । गुणशब्देनचात्रधर्ममात्रंपराश्रयमुच्यते ॥ यस्तिष्ठ-
न्निति । तपःश्रुतयोरभावान्निंद्यात्राब्राह्मणशब्दप्रयोगस्तत्रजातिमात्रेऽवयवेसमुदाय-
रूपारोपाद्ब्राह्मणशब्दप्रयोगोनञातुस्वाभाविकीतपःश्रुतनिवृत्तिर्द्योत्यते । नचभिन्नवि-
षयत्वंपूर्वपदोत्तरपदयोराशंकनीयम् । द्वयोरपिसमुदायविषयत्वात्तदेकदेशनिवृत्तिस-
द्भावप्रतिपादनद्वारेणे " त्याद्याह ॥ आरोपाप्रहेतुलक्षणयैवनिर्वाहादेतद्भाष्यंनास्यं-
तमुपयुज्येत ॥ उत्तरपदार्थैकदेशतिरोभावेपिनञ्प्रयोगस्यभाष्यकृतास्वीकारात्स्वान्व-
यितावच्छेदकेत्यादिनियमस्यव्यभिचारःसुतरामापन्नः । तादृशेसर्वथाब्राह्मण्याभाव-
स्याशक्यवचनत्वात् ॥ केचित्त्वारोपितत्वमेवनञर्थमूरीकुर्वंति ॥ अपरेपुनरन्यो-
न्याभावात्यंताभावभेदभिन्नमभावं ॥ तत्रनाद्यः भाष्याक्षरालभ्यत्वात् ॥ भाष्ये
तुनञ्विशिष्टस्यनिवृत्तपदार्थकत्वस्थापनान्निवृत्तिरेवनञर्थःसिद्ध्यति ॥ आरोपस्तु-
ननिवृत्तिपदस्यार्थः । आरोपितमितिवक्तव्येमाणवकेसिंहत्वंनिवृत्तम् शुक्तौरजतंनि-
वृत्तम् शक्यतावच्छेदकनिवृत्तिर्लक्षणेत्याद्यभिलापस्यापातात् ॥ किंचतद्वारिनाविव-
रणकृता " लक्षणाप्यस्मिन्नयेइयमेवयत्आरोपितप्रवृत्तिनिमित्तकस्यबोधः तत्रनञ्-
समभिव्याहारेनिवृत्तमुख्यब्राह्मण्यकोब्राह्मणशब्दार्थइतिबुद्धेआरोपिततत्कार्यकत्वंफ-
लतीतिबोध्यम् " इत्युच्यते ॥ तथासतिभाष्यएवतथास्पष्टंकुतोनब्रूयात् ॥ किंच
नञंविनापिसिंहोमाणवकइत्यादाविवकेवलब्राह्मणादिशब्देभ्योप्यारोपतब्राह्मण्यइत्या-
दिबोधस्यप्रकरणादिनासुखेनसंभवात्तद्योतनार्थंनञोऽनुपयोगाज्जगतिनञ्प्रयोगएवो-
च्छिद्येत ॥ लाक्षणिकप्रयोगेच्छायामसिंहमध्यापयाऽगंगायांघोषइत्यादिप्रयोगश्चापद्ये-
त ॥ एवमन्यदप्यूह्यम् ॥ तत्रैवाग्रे " जातिहीनेसंदेहाद्दुरुपदेशाच्चब्राह्मणशब्दो-
वर्तते " इत्यादिभाष्यपर्यालोचनेतुनञ्प्रयोगात्पूर्वंशुच्याचारतादिसमानधर्मदर्श-
नाद्भ्रमजनकदुरुपदेशाद्वाभ्रमादब्राह्मणआरोपितस्यब्राह्मण्यस्यनिवृत्तौसत्यामेवतद्बोध-
नायप्रत्युतनञ्प्रयोगानतुनञ्विशिष्टप्रयोगकालेतत्रारोपप्रतीतेर्गंधोपीत्येवसिद्ध्यति ॥

अथैवंनहिनिवृत्तिपदलभ्यत्वाद्द्वितीयःपक्षोऽस्त्वितिचेन्मैवम् ॥ अभावस्योत्तर-
पदार्थेविशेषणतयान्वयेऽब्राह्मणमित्यादौप्रागुक्तदिशाब्राह्मणमात्रस्यानयनं प्रसज्ये-
त ॥ नञोऽनर्थकत्वेब्राह्मणाब्राह्मणशब्दयोःपर्यायताऽन्वाख्यानाच्चसाधुत्वमि-
तियथाप्रसज्यते तथा विशेषणतयाऽन्वयेऽपिभेदवान्ब्राह्मणइत्येवबोधात्पर्यायते-
वस्यात् ॥ विशेष्यतयाऽन्वयेतूत्तरपदार्थप्राधान्यंनस्यात् तथाचप्रकृतभाष्यविरो-
धः ॥ अवर्षाःहेमन्तइत्यादौच हेमंतादिगतलिंगवचनेप्रसज्येयाताम् ॥ नानूयाजेष्वि-
त्यत्रानूयाजशब्दात्सप्तमीचनस्यात् भेदेऽनूयाजशब्दार्थस्यप्रतियोगितयाऽन्वयात् ॥
अनेकमित्यत्रैकवचनंचनोपपद्येत एकभिन्नएकत्वायोगात् ॥ साधितंत्वेतदुत्तरपदा-
र्थप्राधान्यात्तत्रैवभाष्ये ॥ अत्वंभवसिअयुवां भवथइत्यादौचपुरुषवचनव्यवस्थान-
स्यात् ॥ पूर्वपदार्थप्राधान्येचाव्ययत्वमापद्येत ॥ तुल्यार्थतयाव्ययीभावोवाऽनेन-
बाध्येतेत्यमक्षिकमित्याद्यसिद्धिः । निर्मक्षिकमित्यादावव्ययीभावस्यावकाशात् ॥
एतेन विशेषणविशेष्योवान्यायतस्त्ववधार्यतामितिनिरस्तम् । विशेषतस्तद्दूषणंच-
विवरणमंजूषादितोऽवसेयम् अतःपक्षद्वयापेक्षयातिरोभावोनञर्थइत्येवरम्यम् ॥ अ-
भावधीस्तुलौकिकानांत्वाज्ञानमूलिका । वस्तुतः सर्वेषामभावानांतिरोभावानतिरि-
क्तत्वात् ॥ अतस्तादात्म्यतिरोभावेभेदव्यवहारः संसर्गतिरोभावेऽत्यंताभावव्य-
वहारो लौकिकानामितिविवेकः ॥ घटोनास्त्यब्राह्मणइत्यादावारोपबोधस्तुस-
र्वानुभवविरुद्धः ॥ अत्यंतासदृशे तदारोपासंभवेन तत्रनञआरोपार्थकत्वासंभवा-
दघटःपटइतिनोपपद्येत ॥ तादृशेप्यारोपस्यांगीकारे तुल्योष्ठेप्यब्राह्मणशब्दःप्रयुज्येते-
तिसुडनपुंसकस्येत्यादिसूत्रभाष्यव्याकोपः ॥ तिरोभावस्यैवलौकिकैरभावत्वेन-
ग्रहणात् " प्रतियोग्यभावौ समानयोगक्षेमा " वितितांत्रिकोक्तेर्नीलोघट इत्यत्रनी-
लपदार्थस्य तादात्म्येनघटेभानाद्नीलोघट इत्यत्रघटेतादात्म्यसंबंधावच्छिन्ननी-
लतिरोभावभानमनुभवसिद्धमारोपवादेनसंगच्छेत ॥ नेदंरजतमिदंरजतमितिज्ञा-
नयोस्तुल्यविषयकतयाऽविरोधात्परस्परप्रतिबंधकत्त्वमपिनघटेतेतिदिक् ॥ न
ञोद्योतकत्ववाचकत्वयोरन्यतरपरिग्रहेतुनास्माकंनिर्बंधः ॥ वाचकत्वपक्षेप्युक्तावि-
धंथस्यकंश्चिद्योज्यमानत्वात् ॥ एवंचाव्ययीभावेपूर्वपदार्थप्राधान्यान्नञर्थतिरोभाव-
स्यविशेष्यतयाभानम ॥ अमक्षिकमहिममित्यादौमक्षिकाणामत्रतिरोभावोहिमस्यस-
र्वथातिरोभावइत्यादिर्बोधः ॥ अन्यत्रोपलंभेपिस्थलविशेषतिरोभावोऽर्थाभावः ।
लौकिकप्रत्यक्षानर्हतासाधकस्तिरोभावोत्ययः । कालविशेषमात्रोपलभ्यस्तिरोभावो-
ऽसंप्रतिशब्दार्थइत्याद्यूह्यम् ॥ नञ्सूत्रविहितसमासस्तूत्तरपदार्थप्रधानएव एतत्तदोरि-
त्यत्रानञ्समासग्रहणाज्ज्ञापकात् । असतिबाधकेप्रमाणानांसामान्येपक्षपातौचित्यात्-
तेनानेषोददात्यसःशिवइत्यादौसर्वनामकार्यम् । असर्वस्मा इत्यादौचस्मायादिरूपंतत् ॥
बोधस्तुतिरोहितैतत्त्ववानित्यादिः । एषकिंपचोनददातितिरोहितकैम्पच्यस्तुददाती
त्यादिबोधेबाधकाभावात् ॥ अनेकमन्यपदार्थइत्यत्रानेकंतिरोहितमेकमित्यर्थः ॥

एकत्वतिरोभाववदितिनञर्थविशेष्यकोबोधस्तुपाश्चात्योमानसः ॥ उत्तरपदार्थ-
प्राधान्यादेकवचनम् ॥ द्वयोर्बहुषुचतिरोहितैकरूपत्वमस्त्येव ॥ द्वयोर्निर्देशेबहूनांब-
हुनिर्देशेद्वयोश्चसमासाभावापत्तेरनुगतेनतिरोहितैकत्वेनरूपेणनिर्देशः ॥ एतेन " अ-
नेकस्तिष्ठति " इतिनञ्सूत्रेभाष्येप्रयोगः " सेव्यतेनेकयासन्नतापांगयेत्यादयो-
माघादिप्रयोगाश्चसमाहिताः ॥ क्वचिदनेकंतिष्ठतीतिपाठः ॥ पतंत्यनेकेजलधेरिवोर्म-
यइत्यादौत्वेकशेषाद्बहुत्वं॥ अथवाऽनेकशब्देनास्त्येकःसंख्याविशेषोऽत्रेतिबहुव्रीहिः ॥
तिरोहितैकसंख्याकमित्यर्थः ॥ तेनानेकमनेकयेत्यादावेकवचनंसुबितियोषयेत्या-
दिविशेष्यानुरोधहेतुकंक्वचिज्जात्यभिप्रायमौत्सर्गिकंवा ॥ अनेकस्तिष्ठतीत्यादौज-
नइत्यादिःशेषः ॥ अनेकोजनाइतिमंजूषादृतंत्वसाध्वेवभाति ॥ अनेकेइत्यादौ-
तुसंख्येयवाच्येकशब्दैकशेषस्ततोनञ् अतोनसर्वनामकार्यानुपपत्तिः ॥ प्रतिव्यक्ति-
स्थिताप्येकसंख्यायथानानुभूयतेतथासमुद्रतरंगततिवत्पतंतीत्यतिबाहुल्यंबोधयितुंत-
थाप्रयोगः ॥ एवंचनञ्सूत्रविहितसमासेतूत्तरपदार्थस्यैवप्राधान्यंस्वीक्रियतइतिनभा-
ष्यविरोधः ॥ अस्मिन्समासेनञ्द्योतकएव भाष्यानुरोधात् ॥ समासांतरेत्वनियम-
मः ॥ इत्थंचावर्षाहेमंतः अघटःपटइत्यादौतिरोहितवर्षाऽभिन्नस्तिरोहितघटभिन्नइ-
त्यादिर्बोधः । वर्षात्वतिरोभाववानित्यादिस्त्वार्थोमानसोबोधः ॥ अघटंभूतलमि-
त्यादौतिरोहितघटकमित्यादिःसः । घटतिरोभाववदितितुफलितं । शब्दमहिम्ना-
ऽऽरोपस्यतत्राप्रतीतेरारोपितघटकमित्यादिस्तुनार्थः ॥ केनचिद्भ्रमात्तत्रघटादावारोपि-
तेतन्निषेधार्थमेवतथाकथनव्यवहारात् । एवमघटःपटइत्यादावप्यूह्यम् ॥ व्यासस्थ-
लेतुनञर्थस्यविशेष्यताविशेषणतावायथासंभवंद्रष्टव्यातेनभूतलेनघटइत्यादौतात्पर्यवि-
शेषरूपकारणवशाद्यथायथंसंबंधविशेषावच्छिन्नघटनिरूपिताधिकरणतातिरोभावइ-
तिवा । संबंधविशेषावच्छिन्नभूतलनिरूपिताधेयतातिरोभाववान्घटइतिवाबोधः ॥ पटो
नघटइत्यादौचतिरोहितघटाभिन्नइत्यादिरेवशाब्दः । घटत्वतिरोभाववानित्यादिस्तुपा-
श्चात्यः । तेनघटादिपदात्प्रथमायानानुपपत्तिः ॥ चैत्रस्यनधनमित्यादौचैत्रस्वत्वतिरो-
भाववद्धनमित्यादिर्घटोनास्तित्वंनपचसीत्यादौघटकर्तृकसत्तातिरोहितात्वत्कर्तृकपचन-
क्रियातिरोहितेत्यादिश्चयथायथंबोधः । तादृशस्थलेनञःक्रिययाऽन्वयात् ॥ येषामभा-
ववादस्तेषामप्यत्यंताभावान्योन्याभावावेवनञर्थौनत्वपरौ ॥ तेनाभावत्वंनशक्यता-
वच्छेदकं किंतूक्तान्यतरत्वमितिगौरवं । मन्मतेतुतिरोभावत्वमेवतदितिलाघवं ॥ तत्रा-
समस्तस्थलेयत्रतादात्म्येतरसंबंधतिरोभावस्तत्रात्यन्ताभावइतियत्रचतादात्म्यतिरोभा-
वस्तत्रान्योन्याभावइतितेषांप्रत्ययइतिविवेकः । संबंधतिरोधानेचक्वचित्तत्प्रतियोगिनो-
ऽपितिरोभावःफलति । घटोनास्तीत्यत्रघटसत्तातिरोभावबोधेतत्समनियततयाघटति-
रोभावबोधस्यार्थिकत्त्वात् ॥ अत्रासमस्तस्थलेऽत्यंताभावरूपःसतिङंतधात्वर्थक्रिया-
यामेवान्वेति नतु तिङर्थकर्तृत्वादौ ॥ अतएव " असमस्तनञर्थात्यंताभावविशेष्यकबो-

धेतिङ्समभिव्याहृतधातुजन्योपस्थितेर्हेतुत्वम् ” इतिमंजूषायांस्थितं ॥ अतएवचत्वंना-
सिघटोनस्तइत्यादौपुरुषवचननियमः। त्वत्तिरोभावोस्तीत्यादिबोधेसनस्यात्। तस्माद्धा-
त्वर्थसत्तायाएवतत्रतिरोभावःतेनतिरोहितसत्ताश्रयस्त्वं तिरोहितात्वत्कर्तृकासत्तेतिवाए
वमादिर्यथायथं बोधःघटोनास्तीत्यादौतात्पर्यरूपकारणविशेषवशात्कदाचिद्भूतलेतिरो-
हिताघटसत्तेतिकदाचिद्घटेभूतलाधिकरणकसत्तातिरोहितेतिचबोधइत्याद्यूह्यम् । भूत-
लवृत्तिर्घटाभावइत्याद्यंगीकारेत्त्वधिकरणकारकंदुर्घटं । कर्तृकर्मान्यतरद्वाराक्रियान्व-
येतस्यसाधुतयाऽभावेतस्यान्वयदौर्लभ्यादितिदिक् ॥ तस्मात्तिङंतसमभिव्याहृतनञो-
ऽत्यंताभावतयाप्रसिद्धतिरोभावएवार्थःअयमेवप्रसज्यप्रतिषेधइतिव्यपदिश्यते ॥ प्रसज्य-
विधायविहितस्यप्रतिषेधइतितदर्थः ॥ नञ्सूत्रेभाष्येतुप्रसज्यक्रियागुणौततःपश्चान्नि-
वृत्तिंकरोतीत्युक्तं । तेनगुणाभावबोधेपिप्रसज्यप्रतिषेधइतिलभ्यतेइत्यन्यत्रविस्तरः ॥
तेनप्रसज्यप्रतिषेधोसौक्रिययासहयत्रनञित्यत्रक्रियाशब्दंगुणस्याप्युपलक्षकंवदंति ॥
घटःपटोनेत्यादौत्वन्योन्याभावतयाप्रसिद्धस्तिरोभावोनञोर्थः ॥ तिरोहितपटाभि-
न्नोघटइत्यादिस्तत्रबोधः ॥ स्वसमभिव्याहृतपदार्थतिरोहितत्वद्योतकस्तत्रनञ् ॥
एवंचनब्राह्मणैरेतैरुपद्रुतमित्यादौतिरोहितब्राह्मणाभिन्नैरित्यर्थात्समानविभक्तिकत्व-
म् ॥ यत्त्वत्रभेदोनञर्थस्तत्रप्रतियोगितासंबंधेनपटस्यान्वयइत्यादिमतं ॥ तत्रभे-
दाश्रयभेदप्रतियोगिनोःसमानविभक्तिकत्वमसंभवि ॥ एवंभेदवान्नञर्थइतिमतेपिबो-
ध्यम् ॥ घटाद्भिन्नःपटइतिवद्घटान्नपटइतिप्रयोगाऽऽपत्त्यादिकमपितत्रोह्यम् ॥ तिरो-
हितपटाभिन्नइत्यादिबोधादेवसमासवाक्ययोस्तुल्यार्थकत्वमुपपन्नम् । अब्राह्मणोय-
मपटोघटइत्यादौतथैवबाधात् । येननाप्राप्तइत्यादौनञ्द्वयस्यप्रकृतार्थदार्ढ्यद्योतक-
त्वंत्वित्थम् । तिरोभावस्यतिरोभावआविर्भावस्वरूपएवसचप्राप्तादिपदमात्रेणापि-
लभ्यस्तथापिनाप्राप्तइत्यादिकथनंव्यर्थंगौरवमापद्यमानंसत् तद्दार्ढ्यएवपर्यवस्यति ॥
एतदेवाभिप्रेत्य ( अ० ५ पा० २ सू० २७ ) “ विनञ्भ्यां ”मिति-
सूत्रभाष्ये “ द्वौप्रतिषेधौप्रकृतमर्थंगमयतः ” इत्युक्तम् ॥ ( स्कं० २ अ० २ श्लो० ५)
चीराणिकिंपथिनसंतिदिशंतिभिक्षांनैवांघ्रिपाइत्यादौतुकाकुसहकारात्प्रकृतार्थदार्ढ्यबो-
धः । काकोःस्वाधिकरणशब्दार्थगततिरोभावद्योतकतयातत्रापिनञ्द्वयप्रयोगतौल्या-
त् ॥ काकास्तथात्वादेवरुद्धागुहाइत्यत्रनरुद्धाइत्यर्थबोधः एवमन्यदपितत्रतत्रस्वयमू-
ह्यम् । यत्त्वारोपंनञर्थंसाधयितुं “ प्रतियोग्यारोपस्यान्वयव्यतिरेकाभ्यांस्पष्टमेवा-
भावज्ञानेकारणतोक्ता । एतदेवाभिप्रेत्यारोपितरजतत्वायामेवशुक्तौनेदंरजतमितिप्रती-
तिरितिलीलावत्युपायेउक्त ” मितिवदंति तन्न ॥ रजतारोपावसरेनेदमित्यप्रयोगे-
णारोपापगमोत्तरमेवतथाप्रयोगेणचप्रत्युतारोपस्याऽनञर्थतायास्ततःसिद्धेः ॥ किंच-
तन्मते “ असंदेहइत्यादौचारोपितःसंदेहइतिबोधः भेदसंबंधेनारोपितत्वज्ञानाच्चतदत्यं-
ताभावप्रतीति ” रितिक्लेशः ॥ ममतुतिरोहितःसंदेहइतिबोधः । संदेहतिरोभावइत्या-

र्थम् ॥ एवंपटोनघटइत्यादिव्यस्तस्थलेपितेषामेवक्लेशः ॥ स्वीकृतश्चसमंजूषायाम् ॥
" घटभेदबोधस्त्वार्थः । तत्समनियतत्वात् । घटत्वाभावबोधोपिनत्रार्थः " इति ॥ म-
मतूक्तिः शानक्लेशलेशोपि ॥ तस्मात्तिरोभावस्यैवनञ्शब्दप्रयोगकारणत्वाद्बौद्धैरपि-
तदातिरोभावविषयस्यैवप्रतीतेस्तिरोहितत्वमेवनञर्थइतियुक्तम् ॥ इत्थंचयत्रतादात्म्य-
तिरोभावस्तत्रतिरोहितत्वंनामाथगतं । यत्रसंसर्गतिरोभावस्तत्रक्रियागुणगतंतदिति-
व्यवस्था ॥ युक्तंचैतत् ॥ अन्यथा "नकलंजंभक्षयें" दित्यादिनोपपद्येत । यदि
कलंजभक्षणाभावः प्रेरणाविषयइतिबोधःस्वीक्रियेततदाप्रत्ययानांप्रकृत्यर्थान्वितस्वार्थ-
बोधकत्वव्युत्पत्तिर्भज्येत । तस्मान्नव्यानांतत्रारोपितंकलंजभक्षणमिववस्तुतस्तिरो-
हितंकलंजभक्षणंप्रेरणाविषयइतिबोधः ॥ मीमांसकरीत्याविचारेतुतिङंतार्थक्रियाया-
मेवव्यस्तस्थलेनञोऽन्वयइत्ययंननियमः । तेनरागप्राप्तंभक्षणमनूद्यतत्प्रतिषेधोविधी-
यते । प्रतिषेधश्चतिरोभावः ॥ एवंच "नकलंजंभक्षयेन्नलशुनंनगृंजन"
मित्यनारभ्याधीतवाक्ये तत्तद्भक्षणतिरोभावोविधीयतइतिपूर्वतंत्रेषष्ठस्यद्वितीये-
पादे ( सू० १९ ) "प्रतिषेधेष्वकर्मत्वा" दित्यादिद्विसूत्रेपंचमाधिकर-
णेपूर्वसूत्रेणाभक्षणविधानंपूर्वपक्षीकृत्य ( सूत्र २० ) "शास्त्राणांत्वर्थवत्वेन"
त्यादिद्वितीयसूत्रेसिद्धांतितम् ॥ एवंसति तिरोहिताभावनेतिवातत्रबोधोस्तु ।
तथापिनञस्तिरोभावार्थकत्वमक्षतं । तिरोभावार्थकत्वेसत्येवलौकेकेनञ्प्रयोगःसूपपा-
दः । तत्समभिव्याहृतपदार्थस्यसत्वेनप्रतिषेधस्यनिर्विषयत्वानापातात् । तिरो-
भावबोधनायनञ्प्रयोगस्य सार्थक्याच्च ॥ मतांतरेतुसदुरुपपादःसत्सुअभाव-
स्यारोपितस्वस्यचासंभवात् । असत्सुनञ्प्रवृत्तौतदर्थस्य निर्विषयत्वापाता-
च्च ॥ अतएवोक्तमभियुक्तैः–सतांचननिषेधोस्तिसोसत्सुचनविद्यते । जगत्य
नेनन्यायेननञर्थःप्रलयंगतः–इतिअतएव काणादसूत्रेपिनवमाध्याये ( आ० १
सू०१० ) "नास्तिघटोगेहइतिसतोघटस्य गेहसंसर्गप्रतिषेध" इतिसूत्रेसतएवसं-
सर्गप्रतिषेधउक्तः ॥ अग्रेच ( सू० १२ ) "तथाद्रव्यांतरेषुप्रत्यक्षम्" इत्यादिसूत्रच-
तुष्टयेन युक्तानांयुंजानानांचयोगिनांसार्वज्ञ्यसिद्धयेक्रमेणध्याननिरपेक्षंतत्सापेक्षंचा-
तीतानागतादिसर्वद्रव्यप्रत्यक्षंसर्वगुणप्रत्यक्षंचासंदिग्धमेवदर्शितमतस्तत्रान्हिकेप्रागुक्तं-
कार्याणामसत्वंकेवलंलौकिकदृष्ट्येतिबलादापतत्यतस्तत्रापितिरोभावएवनञर्थःस्वतः
फलति ॥ नचवर्तमानमात्रद्रव्यादिगतंतेषातदितिवाच्यम् ॥ सार्वज्ञ्यभंगप्रसं-
गात् । लोकाप्रसिद्धचिरंतनातीतवृत्तांतकथनस्यभाविवृत्तांतकथनस्यचयथार्थस्य त-
त्कर्तृकस्यानुपपादापाताच्च ॥ वैयासदर्शनानुगानामौपनिषदानामस्माकं कथंचि-
त्तद्विरोधोप्यकिंचित्करएव ॥ तिरोभावस्यैवनञर्थतामभिप्रेत्यहरिणाप्युक्तं–तिरो-
भावाभ्युपगमेभावानांसैवनास्तिता लब्धक्रमेतिरोभावेनश्यतीतिप्रतीयतइति भूषणाकृ
ताऽपिसुबर्थनिर्णयेऽतीतानागतकर्मणां धात्वर्थफलाश्रयत्वंसत्कार्यवादात्साधयितु-

मिदमुदाहारि ॥ सत्कार्यवादश्चवाक्यपदीयेऽनेकत्रस्फुटःसिध्यति ॥ एतेनापिनञ्सूत्र-
भाष्येनिवृत्तिपदं प्रागुक्तार्थकं नत्वभावार्थकमारोपार्थकंवेतिसिद्धम् ॥ तत्सादृश्यम-
भावश्चतदन्यत्वंतदल्पता अप्राशस्त्यंविरोधश्चनञर्थाः षट्प्रकीर्तिताइत्यभियुक्तोक्तौ
तुव्युत्पादनार्थं स्तिरोभावस्यैवप्रपञ्चः । तथाहि अत्यंताभावोभेदश्चतिरोभावएवे-
त्युक्तंप्राक् ॥ तद्गतभूयोधर्माविर्भावेसति तादात्म्यतिरोभावःसादृश्यम् ॥ घटरास-
भयोःसादृश्याव्यवहारात्सत्यंतम् । घटोघटइवेत्यव्यवहाराद्विशेष्यदलं ॥ नञ्सम-
भिव्याहृतपदार्थगतबाहुल्यरूपैकदेशतिरोभावोऽल्पत्वम् । तद्गतोत्कर्षरूपैकदे
शतिरोभावोऽप्राशस्त्यम् ॥ एकदेशनिवृत्तावपिनञ्प्रयोगोनञसूत्रेभाष्ये "अब्राह्म
णोऽयं यस्तिष्ठन्मूत्रयति अब्राह्मणोयं यस्तिष्ठन्भक्षयति " इत्यादिनास्पष्टएवनि-
र्दिष्टः ॥ नियततद्वृत्तिताकधर्माविर्भावसमानाधिकरणस्तादात्म्यतिरोभावोवि-
रोधइतिसंक्षेपः एतेनसादृश्यादीनांषण्णामार्थिकार्थत्वमेवेतिवदंतोमंजूषादयःप्रत्युक्ताः ॥
तथाचसामान्यविशेषभावाद्भेदःसादृश्यंविरोधइतित्रिधान्योन्याभावरूपःअत्यंताभावो
ल्पत्वमप्राशस्त्यंचेतित्रिधात्यंताभावरूपश्चतिरोभावएवनञर्थइतिरमणीयम् ॥ यद्य-
प्यत्रनञर्थविषयेबहुतरंवक्तव्यंशक्यवचनंच तथाप्यत्यंतविस्तरभियाविरम्यते ॥
प्रसक्तानप्रसक्त्याचेहकिंचिद्गौरवंसंपन्नमेव । तथापिसिद्धांतग्रंथेषुवैशद्येननञर्थनिर्ण-
यस्यक्वाप्यनुपलंभात्तन्निर्णयार्थमत्रकृतंतद्गुणैकलुब्धैःसुधीभिःक्षंस्यते ॥ एवंचस्वान्व-
यितावच्छेदकेत्यादिकथनस्यक्वावसरः ॥ यदितुतत्राभावपदंतिरोभावविशेषपरमूरी-
क्रियेततदायत्रतादृशव्युत्पत्तिसंगतिस्तत्रसासंगच्छतांनामनतत्रनःकोपिविद्वेषः ॥ त-
थाचास्थूलादिवाक्येषुलाघवात्पर्युदासादेरकार्यदशायांप्रतीयमानस्थौल्याद्यैकैकधर्मक
कार्यप्रतियोगिकोभेदोब्रह्मणिसर्वधर्माश्रयेकारणत्वनिर्वाहायास्तांनाम ॥ अचक्षुष्क-
मित्यादिप्रायपाठाद्बहुव्रीह्यादेरेतुबीजेतरुगतच्छायासौरभादीनामिवकार्यधर्माणांस्थौ
ल्यादीनांसर्वकारणेब्रह्मणितिरोभावःसिध्यतीतिप्राकृतप्रपंचवैलक्षण्यमेवतादृशवाक्ये-
षुतस्यबोध्यतेनतुनिर्विशेषत्वं । पाषाणादौगंधादितिरोभावेपिनिर्गंधतायास्तत्राशक्य-
वचनत्वादितिदिक् ॥ एवंसतितस्मान्निषेधवाक्यैर्वित्युपसंहारोप्ययुक्तः ॥ प्रदर्शि-
तन्यायस्यासार्वत्रिकत्वात् । यदपितत्रविशेषेविहितिरित्याद्युक्तंतत्रोच्यते ॥ यत्र-
विशेषविषयकंविधानमस्तितत्रवचनबलान्नञोविशेषेसंकोच्यतातद्बलादेवन्यायवि-
रोधरूपक्लेशसहनंचत्वत्कल्पनायामेवापतति ॥ अस्माकंतन्न्यायविषयाभावादेनस-
क्लेशःश्रुतिस्थस्यनञइतित्वल्लेखेषष्ठीस्थानेप्रथमापाठ्या । अन्यथासंकोचंइत्यप्र-
सक्तपदाध्याहारक्लेशापत्तिः ॥ यदप्यत्रनहिंस्यादित्याद्युदाहृत्यसर्वशद्बस्यविशे-
षलक्षणेत्युक्तंतदपिनयुक्तम् ॥ उक्तरीत्यान्यायविरोधस्याभावेनसर्वशब्देल
क्षणायाःप्रयोजनाभावात् ॥ नचैवमग्नीषोमीयपश्वाद्यालंभस्यापिपापजनकत्वा-
पत्तिरितिवाच्यं ॥ सांख्यादिदर्शनरीत्येष्टापत्तेः ॥ यथोक्तसांख्यकौमुद्यांवाच-

स्पतिमिश्रैः ( आर्या २ ) " दृष्टवदानुश्रविकःसह्यविशुद्धिक्षयातिशययुक्त ."
इत्यार्याव्याख्यायां ॥ " अविशुद्धिर्हियागस्यपशुबीजादिवधसाधनता ॥ यथा-
हस्मात्रभवान्पंचशिखाचार्यः ॥ स्वल्पःसंकरसपरिहारःसप्रत्यवमर्शइति ॥ स्व-
ल्पःसंकरोज्योतिष्टोमादिजन्मनःप्रधानापूर्वस्यपशुहिंसादिजन्मनानर्थहेतुनाऽपूर्वेणसप-
रिहारःकियताऽपिप्रायश्चित्तेनपरिहर्तुंशक्यः ॥ अथप्रमादतः प्रायश्चित्तमपिनाचरितं-
प्रधानकर्मविपाकसमयेचपच्यतेतथापियावदसावनर्थंप्रसूतेतावत्सप्रत्यवमर्शः ॥ मृ-
श्यंतेहिपुण्यसंभारोपनीतसुखसुधामहान्हृदावगाहिनःकुशलाःपापमात्रोपपादितांदुःख-
वन्हिकणिकां ॥ नच " नहिंस्यात्सर्वाभूतानी " ति सामान्यशास्त्रंविशेषशास्त्रेण"
अग्नीषोमीयंपशुमालभेते " त्यनेनबाध्यतइतियुक्तम् ॥ विरोधाभावात् ।
विरोधेहिबलीयसादुर्बलंबाध्यते ॥ नचकश्चिदस्तिविरोधोभिन्नविषयत्वात् ॥ न-
हिंस्यादितिनिषेधेनहिंसायाअनर्थहेतुभावोज्ञाप्यतेक्रत्वर्थत्वमपि ॥ नचानर्थहे-
तुत्वक्रतूपकारकत्वयोःकश्चिद्विरोधः ॥ हिंसाहिपुरुषदोषमावक्ष्यतिक्रतोश्चोपकरिष्य-
ती " ति ॥ प्राचीनबर्हिःप्रभृत्युपाख्यानेष्वपिपुराणेष्वित्थंप्रतीयतेअथमीमांसक-
रीत्योच्यतेचेत्तत्रापितत्तदपूर्वयोर्विरोधाभावेऽपिसामान्यशास्त्रंविशेषशास्त्रेणबाध्यतइ-
तिशास्त्रमर्यादया-हिंस्यादित्यनेनवैधेतरहिंसायाएवनिषेधः ॥ ( अ० ५ श्लो०
३२ ) देवान्पितृंश्चार्चयित्वाखादन्मांसंनदुष्यति । नाद्यादविधिनामांसंविधिज्ञो-
नापदिद्विजः । जग्ध्वाह्यविधिनामांसंप्रेत्यतैरद्यतेऽवशः । नतादृशंभवत्येनोमृगहं-
तुर्धनार्थिनः । यादृशंभवतिप्रेत्यवृथामांसानिखादतः ॥ नियुक्तस्तुयथान्यायंयो-
मांसंनात्तिमानवः । सप्रेत्यपशुतांयातिसंभवानेकविंशतिम् । असंस्कृतान्पशून्मं-
त्रैर्नाद्याद्विप्रःकदाचन । मंत्रैस्तुसंस्कृतानद्याच्छाश्वतंविधिमास्थितः । कुर्याद्घृत-
पशुंसंगेकुर्यात्पिष्टपशुंतथा । नत्वेवतुवृथाहंतुंपशुमिच्छेत्कदाचन । यावंतिपशुरो-
माणितावत्कृत्वोहमारणम् । वृथापशुघ्नःप्राप्नोतिप्रेत्यजन्मनिजन्मनि । यज्ञार्थंपश-
वःसृष्टाःस्वयमेवस्वयंभुवा । यज्ञस्यभूत्यैसर्वस्यतस्माद्यज्ञेवधोऽवधः । ओषध्यःपश
वोवृक्षास्तिर्यंचःपक्षिणस्तथा । यज्ञार्थंनिधनंप्राप्ताःप्राप्नुवंत्युत्सृतीःपुनः । उत्सृतीः-
उत्कृष्टजन्मानिमधुपर्केचयज्ञेचपितृदैवतकर्मणि । अत्रैवपशवोहिंस्यानान्यत्रेत्यब्रवी-
न्मनुः । एष्वर्थेषुपशून्हिंसन्वेदतत्वार्थविद्द्विजः । आत्मानंचपशुंचैवगमयत्युत्तमांग-
तिम् । गृहेगुरावरण्येवानिवसन्नात्मवान्द्विजः । नावेदविहितांहिंसामापद्यपिसमाचरेत्
यावेदविहितांहिंसानियतास्मिंश्चराचरे । अहिंसामेवतांविद्याद्वेदाद्धर्मोहिनिर्बभावित्या-
दिभिर्वचनैः सर्ववेदतात्पर्यंप्रकटयद्भिर्मन्वादिभिर्वैधहिंसायांपापजनकत्वाभावस्यबो-
धनाच्च ॥ एवंचसर्वाभूतानीतिसर्वपदेनभूतपदेनचयागीयपश्वितरजीवानांग्रहणमि-
त्यर्थात्सिद्धम् नतुसर्वशब्दस्यविशेषेलक्षणा ॥ अपवादविषयपरिहारेणोत्सर्गविधिवा-

क्यार्थज्ञानेजायमानेऽन्वयानुपपत्तितात्पर्यानुपपत्त्यादिलक्षणाबीजाभावेनतस्याअत्रा-
संभवात् ॥ वृत्तिसंकोचेतुलक्षणात्वाभावात् ॥ सर्वान्भोजयघटानानयेत्यादौवि-
वक्षितानांकेषांचिदेवभोजनआनयनेसत्यपितत्रसर्वघटादिपदेषुलाक्षणिकत्वस्यास्वी-
काराच्च ॥ नचनिषेधस्यविधिरूपताशास्त्रकारैर्नस्वीकृतेतिवाच्यम् ॥ निषेधस्यापू-
र्वविधित्वस्यनियमविधिरूपत्वस्यचापिशास्त्रकारैरंगीकारात् ॥ तथाच विधिरसाय-
नेपरिसंख्यालक्षणकथनावसरेऽपैयादीक्षितैरुक्तम् " ननुतत्रचान्यत्रचप्राप्तइत्यत्रैक-
रूपसंबंधेनप्राप्तिर्विवक्षिता ॥ अस्तिचप्रागुदाहृतेषुसर्वेषुपरिसंख्योदाहरणेषुशेषत्वेन-
शेषित्वेनाश्रयत्वेननिमित्तत्वेनवान्येनकेनचिदेकरूपेणैवसंबंधेनोभयोःप्राप्तिः ॥ तथा-
च दीक्षितोनजुहोतीत्यत्रापूर्वविधौनातिव्याप्तिः ॥ दीक्षामध्येक्रत्वर्थहोमानांक्रतु-
शेषत्वेनप्राप्तिः ॥ पुरुषार्थहोमानांकालैक्येनेतिसंबंधभेदात् ॥ नतौपशौकरोतिना-
तिरात्रइतिनिषेधयोरुक्तलक्षणानुसारेणपरिसंख्यात्वमेवास्तु ॥ नचैवमपि " नहिं-
स्या " दितिनियमविधावतिव्याप्तिः ॥ पुरुषार्थशेषत्वेनैवभोजादीनांहिंसादीनांच-
प्राप्तिसत्वादितिवाच्यम् ॥ अत्यंतप्राप्तिनिवृत्तिफलकत्वस्यलक्षणेविवक्षितत्वादिति-
चेन्नैवम् ॥ दृष्टार्थानांकंडूयनादीनामदृष्टार्थानांचहरिस्मरणादीनांपुरुषार्थहोमैःसहक्र-
तौकालैक्यसंबंधेनप्राप्तिसत्वेन " दीक्षितोनजुहोती " त्यपूर्वविधावुक्तविवक्षयाऽप्य-
तिव्याप्त्यनिरासात् ॥ निवृत्तावत्यंतप्राप्तत्वविशेषणविवक्षायांशशादिपंचकव्यतिरि-
क्तपंचनखभक्षणानिवृत्तेरत्यंताप्राप्तत्वाभावेनपंचपंचनखाभक्ष्याइतिपरिसंख्यायामव्या-
प्तिप्रसक्त्यातस्यविशेषणस्याविवक्षणीयतया " नहिंस्या " दितिनियमविध्यतिव्याप्त्य-
निरासाच्चे " ति ॥ एवंच नहिंस्यादित्यस्यनियमविधित्वंस्पष्टमेवोक्तं ॥ बलवदनि-
ष्टाननुबंधित्वविशिष्टेष्टसाधनत्वज्ञानंकृतिसाध्यत्वज्ञानंचलिङर्थइतितार्किकादिमतेऽपि-
नत्वदिष्टसिद्धिः ॥ तर्हिविधिविचारादिग्रंथेषु "–" नकलंजंभक्षये " दित्यादौ " कृति-
साध्यत्वान्वितकलंजभक्षणेबलवदनिष्टाननुबंधित्वविशिष्टेष्टसाधनत्वाभावान्वये नक-
श्चिद्विरोधः ॥ कृतिसाध्यत्वस्यानिष्टजनकतावच्छेदकाघटकत्वेऽपितद्विशिष्टेविशिष्टाभा-
वबोधात् ॥ यदिच विशेषणाभावस्यानुयोगितावच्छेदकमेवान्यत्तदेवतत्प्रयुक्तविशि-
ष्टाभावस्यानुयोगितावच्छेदकम् ॥ एवंच बलवदनिष्टजनकत्वरूपविशेषणाभावस्य-
कृतिसाध्यत्वघटितधर्मोनानुयोगितावच्छेदकः ॥ जनकतायाअवच्छेदकस्यैवतदनु-
योगितायाअप्यवच्छेदकत्वादितितादृशधर्मतद्विशिष्टाभावयोरेकत्रद्वयमितिरीत्यैवकलं-
जभक्षणेऽन्वयबोधः ॥ अत्रच नकाचिदनुपपत्तिः ॥ एवंबलवदनिष्टाननुबंधित्ववि-
शिष्टेष्टसाधनत्वेविधिशक्त्युपगमे इष्टसाधनत्वविशिष्टस्यबलवदनिष्टाननुबंधित्वस्याश-
क्यत्वमादायविनिगमनाविरहस्यदुरपन्हवतयापृथगेवतयोः शक्तिरितिमतेऽपबलवद-
निष्टाननुबंधित्वाभावस्यतादृशानिष्टजनकत्वरूपस्यकृतिसाध्यत्वेष्टसाधनत्वोभयविशि-
ष्टतदेकतरविशिष्टेवाकलंजभक्षणेनान्वयोयेनतादृशधर्मयोः प्रत्यवायजनकतावच्छेद-

ककुभ्यनिविष्टतयाबाधआपाद्येत ॥ किंतु एकत्रद्वयमितिरीत्यैवतदन्वयउपेयते ॥
विशिष्टानुयोगिकवैशिष्ट्यबोधतात्पर्यस्यौत्सर्गिकत्वेऽपि अत्रागत्यातत्परित्यागात् ॥
"वाजपेयेनयजेते" त्यादौप्रकारांतरसंभवान्नवाजपेयसाध्यत्वेष्टसाधनत्वयोः केव-
लमेकत्रद्वयमितिरीत्यायागेऽन्वयबोधःस्वीक्रियते ॥ माभूद्वाकृतिसाध्यत्वस्यतन्मते-
धात्वर्थेऽन्वयस्तथापितत्रान्वितधात्वर्थभक्षणस्याख्यातसामान्यार्थकृतौविशेषणतया-
तादृशव्युत्पत्तेरपरित्यागइतिचेत् प्रत्ययानांसाक्षात्प्रकृत्यर्थान्वितस्वार्थबोधकत्वनि-
यमस्यप्रामाणिकत्वेममापिकृतिसाध्यत्वात्रिषयकः कलंजभक्षणाभावइष्टसाधनमित्या-
कारकएवबोधउपगंतव्यः ॥ एवंचबलवदनिष्टासाधनतयाविध्यर्थत्वेयागपाकादिजन्य-
नांतरीयकश्रमस्यापिकदाचित्कस्यचिद्बलवद्द्वेषविषयतयाबलवद्द्वेषविषयदुःखाजनक-
त्वस्ययागपाकादौबाधात् यजेतपचेतेत्यादौविधेरप्रामाण्यप्रसंगः ॥ यदायस्यपाकादि-
गोचरप्रवृत्तिर्जायतेतदातत्कालीनतत्पुरुषीयबलवद्द्वेषविषयासाधनत्वस्यनविध्यर्थतासं-
भवः ॥ अननुगमात् यदाकलंजभक्षणादौयः पुमान्रागौत्कंठ्येनप्रवर्त्ततेतदाकलं-
जभक्षणादेरपितत्कालीनतत्पुरुषीयबलवद्द्वेषविषयदुःखासाधनत्वात्तदभावबाधक-
स्य "नकलंजंभक्षये" दितिनिषेधविधेरप्रमाण्यप्रसंगाच्चेत्यनुपपत्तिरपिसमाहि-
ता ॥ बलवदनिष्टाननुबंधित्वस्यविध्यर्थतायाएवानुपगमात् ॥ अस्तुवापापाजन-
कत्वंविध्यर्थस्तदभावएवनिषेधस्थलेनञाबोध्यते ॥ तथाच "नकलंजं-
भक्षये" दित्यादौपापाजनकत्वाभाववत्कलंजभक्षणकृतिमान्द्विजइत्यन्वयबोधः
प्रथमांतपदार्थविशेष्यकः ॥ एतेन बलवदनिष्टाननुबंधित्वस्यविध्यर्थतानु-
पगमे "अग्नीषोमीयंपशुमालभेते" त्यादौविध्यर्थबाधभयेन "नहिं-
स्यात्सर्वाभूतानी" त्यादिनिषेधविधेर्वैधहिंसेतरहिंसापरत्वं कल्प्यतइतिसिद्धांतवि-
रोधः ॥ वैधहिंसायानरकाजनकत्वेऽपि अग्नीषोमदेवताकपश्वालंभनादौविध्यर्थ-
स्यकृतिसाध्यत्वस्येष्टसाधनत्वस्यबाधादित्यपिसमाहितम् ॥ पापाजनकत्वरूप-
विध्यर्थभयेनतादृशनिषेधविधौसंकोचस्यावश्यकत्वात् ॥ श्येनयागादेःपापसाधन-
त्वेऽपि "श्येनेनाभिचरन्यजेते" त्यादौपापासाधनत्वरूपेऽर्थेतात्पर्यानभ्युपगमा-
न्नबाधः ॥ लौकिकविध्यविषयतथाविधकृतिसाध्यत्वेष्टसाधनत्वयोरेवान्वयाभ्युप-
गमात् ॥ विशेष्यविशेषणभावेविनिगमनाविरहेणकृतिसाध्यत्वेष्टसाधनत्वपापाज-
नकत्वेषुशक्तित्रयकल्पने यत्रयदन्वययोग्यतातत्रेतरांशंपरित्यज्यतस्यैवान्वयोपगमे-
बाधकाभावात् ॥ नच यागीयपशुघातवच्छ्येनादेरपिवैधहिंसात्वेन "नहिंस्या"
दित्यादिनिषेधविध्यविषयतयापापसाधनताविरहेणपापासाधनत्वरूपविध्यर्थोऽपित
त्राबाधितइतिकथंश्येनविधौतदन्वयोनोपेयतइति वाच्यं ॥ श्येनस्यवैधहिंसात्वेनता
दृशनिषेधविध्यविषयत्वेऽप्यभिचारतयादुरदृष्टजनकत्वस्यसर्वसंमतत्वादुपपातकग-
णनेऽभिचारोहीनकर्मचेतिमनुनापरिगणितत्वात् ॥ सर्वेषामभिचाराणांवैधत्वेन "न-

हिंस्या " दित्यत्रवैधेतरार्हिसापरत्ववदत्रवैधेतराभिचारपरत्वासंभवात् ॥ अतएव म-रणोद्देशेनकृतोऽदृष्टद्वारकमरणानुकूलव्यापारोहिंसेतिहिंसालक्षणस्यदुरदृष्टद्वारा मरण-साधनीभूतश्येनादिव्यावृत्ततयानतस्यपापसाधनता अपितु तज्जन्यमरणानुकूलव्या-पारांतरस्येतिनिरस्तं अतएव श्येनजन्यपापेबलवद्द्वेषादपेक्षितवैरिवधसाधनत्वेऽपिन तत्रशिष्टानांप्रवृत्तिः ॥ यत्तुश्येनाच्चवधोवधाच्चपापमितिपापप्रयोजकताज्ञानान्नतत्रप्रवृ-त्तिरिति तदसत् ॥ तथासति पापाप्रयोजकत्वस्यैवविध्यर्थतायावाच्यतयाविध्यथबा-धस्यावश्यकत्वात् ॥ अथायोग्यतयाश्येनेपापाजनकत्वान्वयानुपगमे " अग्नीषोमीयं-पशुमालभेते " त्यादावप्ययोग्यतयातदन्वयास्वीकारेणैवोपपत्तौ " नहिंस्या " दित्या-दिनिषेधविधेःसंकोचकल्पनमयुक्तमितिचेन्न ॥ पापाजनकत्वेवैदिकविधितात्प-र्यस्यौत्सर्गिकत्वात् ॥ गत्यंतरविरहएवतत्परित्यागात् ॥ अत्रनिषेधसंकोचेनैवोपपत्तौ-तस्यापरित्यागात् ॥ नचमुख्यार्थेऽपितात्पर्यस्यौत्सर्गिकत्वेना " ग्नीषोमीयंपशुमालभे ते " त्यादिविधेःपापाजनकत्वपरतानुरोधेन " नहिंस्या " दित्यादौहिंसासामान्यरूपमु-ख्यार्थत्वंत्यज्यतेनहिंस्यादित्यादेस्तादृशार्थपरत्वानुरोधेनाहिंसाविधेर्वापापाजनकत्वंप-रित्यज्यतइत्यत्रविनिगमनाविरहइतिवाच्यम् ॥ वैधहिंसाजन्यानंतपापाकल्पनप्रयु-क्तलाघवस्यैवनिषेधविधिसंकोचकल्पनेविनिगमकत्वात् ॥ आततायिहिंसायादुरदृ-ष्टाजनकतयासंकोचस्यावश्यकत्वा " दित्यादिप्रतिपादितम् ॥ एवंचसामान्येनिषे-धवाक्येऽपिविशेषविधिनासंकोचःशास्त्रकारैरंगीक्रियतइतिस्पष्टमेव मंजूषायामपि " लिङस्तुविध्यादयोऽर्थाः ॥ तत्रविधिःप्रेरणायथानिकृष्टस्यभृत्यादेःप्रभुणास्वाभिलषि-तेप्रेरणं ॥ इयमेवाज्ञा ॥ अप्रवृत्तप्रयोज्यस्यतदभिलषितज्ञातोपायप्रवर्त्तनोपदेशः ॥ " यथास्वर्गकामोयजेते " त्यादिरित्याद्युक्त्वा " नकलंजंभक्षये " दित्यादावनिष्टसा-धनत्वंविध्यर्थोऽत्रैवनञ्तात्पर्यग्राहकइति तन्न ॥ चिकीर्षयेष्टसाधनत्वस्याप्यन्यथासि-द्धेः ॥ अमुकफलसाधनमिदंकृतिसाध्यंभवत्वितीच्छायाएवचिकीर्षात्वात् ॥ एवंहिप्र-वृत्तौफलविषयतानियमस्याप्युपपत्तिः ॥ उपायेच्छयापितदन्यथासिद्धेश्च ॥ साचा-मुकसाधनंपाकोजायतामित्याकारैव ॥ इच्छायांस्वजनकज्ञानप्रकारकत्वनियमात् ॥ नचद्वारेणद्वारिणोनान्यथासिद्धिः ॥ यस्यद्वारिणोमानांतरेणतत्कारणतासि-द्धायथायागपरश्वोस्तदन्यथाऽनुपपत्त्याचद्वारस्यापूर्वादेःकल्पनंनद्विषयेतदभावेऽपि अन्यत्रतदभावेमानाभावात् ॥ येषामपिचिकीर्षाव्यापारेच्छैवव्यापारेकृतेरपिनिवे-शात्कृतीच्छापिसातेषामपिव्यापारविषये इष्टसाधनत्वकृतिसाध्यत्वज्ञानोत्तरमेवसेति-तेअन्यथासिद्धेएव ॥ किंचेदंतइष्टसाधनंकृतिसाध्यंचनाप्यत्रदुःखंतस्मात्त्वंकुर्विति-त्वारसिकलोकव्यवहारसत्त्वेनतस्यविध्यर्थतावक्तुमशक्या ॥ पौनरुक्त्यापत्तेः ॥ न-चेदंपौनरुक्त्यंसर्वथेष्टसाधनत्वबोधनाय ॥ तस्मादित्यस्यानन्वयापत्तेः ॥ अपिच-राज्ञाप्रवर्तितोऽहमित्यादिव्यवहारात्प्रवर्त्तनाप्रवर्तकपुरुषनिष्ठासालिङ्शक्येतिसूत्रभा-

ष्यादिसंमतं ॥ नचेष्टसाधनत्वंतद्बोधोवातन्निष्ठस्तज्ज्ञापनस्यतन्निष्ठत्वेपिनतदिष्टसा-
धनत्वं ॥ नापितच्छक्यत्वेनतवसंमतं ॥ तज्ज्ञानानुकूलव्यापारस्यमदुक्तातिरि-
क्तस्याभावाच्च ॥ किंचेष्टसाधनताज्ञानादिवसाध्येष्टकत्वज्ञानादपिप्रवृत्त्यनुभवेनवि-
निगमनाविरहादुभयोःशक्यत्वेगौरवं ॥ साधनत्वमिवयोगक्षेमसाधारणंसाध्यत्वम-
प्यखंडमितिनतत्पक्षेऽपिकारणतावच्छेदकगौरवम् ॥ एवंकृतिसाध्यत्वज्ञानादिवम-
त्कृतिसाधनकःपाकइतिज्ञानादपिचिकीर्षाप्रवृत्त्योर्दर्शनात्तच्छक्तावपिविनिगमनाविर-
हः ” इतिदिक् ॥ “ नकलंजंभक्षये ” दित्यादावारोपितंकलंजभक्षणंप्रेरणाावि-
षयइतिवाच्योऽर्थस्तदभावःप्रेरणाविषयइतित्वार्थोनञ्शाब्दः ॥ नञ्त्रादोक्तरीत्यान-
ञर्थेवाच्यवृत्त्याविभक्त्यर्थान्वयाभावात् ॥ तेनंचप्रतियोगिन्यनिष्टसाधनत्वंबो-
ध्यते ॥ यदभावत्वेनयदभावःप्रेरणाविषयतयाबोध्यतेतत्प्रतियोगीकृतेष्टाधिकानिष्ट-
साधनमितिव्याप्तेः ॥ तद्भक्षणेप्रायश्चित्तविधयश्चतत्रतथाकल्पनेतात्पर्यग्राहकाइ-
त्युक्तं ॥ एवंचैतन्मतेऽपि “ नहिंस्या ” दित्यादौत्वद्व्युत्पत्तिरलब्धप्रचारसंप-
त्तिरितिकिंबहुना ॥ सिद्धांतेतुतिरोहितंकलंजभक्षणंतिरोहिता सर्वभूतहिंसाप्रेरणा-
विषयइत्यादिर्विशेषःप्रागेवसिद्धः ॥ एतेन ( यतःसउपसंहाराऽनपेक्षः यथाहिवि-
धिवाक्येन सामान्यार्थबोधेसामान्यस्यविशेषमंतरापर्यवसानाभावाद्विधिवाक्यस्य-
तदपेक्षत्वं तथा निषेधवाक्यस्यनास्ति उक्तविधाभावस्यैवतेनबोधात् ) इतितत्क-
थनमपास्तम् ॥ सर्वत्रनञोक्तविधाभावस्यैवबोधनेप्रमाणाभावाच्च ॥ बहुत्रैवत्व-
न्नियमव्यभिचारस्यप्राग्दर्शितत्वात् ॥ शास्त्रांतरेष्वपि “ समासप्रत्ययविधौप्र-
तिषेध ” इत्यादिनिषेधानां “ उगिद्वर्णग्रहणवर्ज ” मित्यादिप्रतिप्रसवविधायकवाक्या-
र्थमंतरापर्यवसानाभावेनतादृशविधिवाक्यसापेक्षतयातद्विषयव्यतिरिक्तविषयेषूपसंहा-
रांगीकाराच्च ॥ पूर्वतंत्रे “ यदाहवनीयेजुह्वतितेनसोऽस्याभीष्टःप्रीतोभवति ” इतिसामा-
न्यवाक्यमनारभ्यश्रूयते । ज्योतिष्टोमेश्रूयते “ पदेजुहोति वर्त्मनिजुहोती ” ति । राजसू-
येश्रूयते “ वल्मीकवपायामुत्सृज्यजुहोती ” ति तथाऽन्यत्रश्रूयतेगार्हपत्ये “ पत्नीसंया-
जाञ्जुहोती ” ति । एवमादिविशेषशास्त्रविहितैःपदादिभिःसामान्यशास्त्रविहिताह-
वनीयस्यबाधो यथा दशमस्याष्टमेपादे (सू.१६) “ अविशेषेणयच्छास्त्रमन्याय्यत्वाद्विक-
ल्पस्यतत्संदिग्धमाराद्विशेषशिष्टंस्यात् ” इत्येकसूत्रेऽष्टमाधिकरणेसिद्धांतितस्तथातत्रैव-
पादेबहूनांनिषेधवाक्यानामपितत्तद्विधिवाक्यैकवाक्यतयानानाव्यवस्थाराद्धांतितैव ॥
यथा अग्निहोत्रेश्रूयते “ अथोखल्वाहुरनाहुतिर्वैजर्तिलाश्चगवेधुकाश्चपयसाऽग्निहोत्रं
जुहुया ” दिति ॥ अत्रानाहुतिस्तिरोहितंहव्यमित्यर्थः ॥ महाभाष्यसंमतो-
त्तरपदार्थप्राधान्यादेकवचनोपपत्तिः अभावेभेदेवानञर्थेतु पूर्वपदार्थप्राधान्यंस्या-
त् । तत्राप्यभावेऽर्थेजर्तिलैरभेदान्वयोऽसंगतः ॥ भेदेऽर्थेतुविशेष्यवचनानुरोधाद्बहुव-
चनंस्यात् ॥ जर्तिलगवेधुकावारण्यौतिलगोधूमौ ॥ आस्तामेतत् ॥ एषोऽनाहु-

तिरितिनिषेधः पयोविधिबलात्पयस्तावकोऽर्थवादइति तत्रैवपादे ( सू० ७ ) “ नचेदन्यंप्रकल्पयेत्प्रक्लृप्तावर्थवादःस्यादानर्थक्यात्परसामर्थ्याच्चे ” त्येकसूत्रेचतुर्थाधिकरणेव्यवस्थापितं ॥ अन्यथाविहितप्रतिषिद्धत्वात्तृतीयाधिकरणरीत्याषोडशिग्रहणवद्विकल्पआपद्येत ॥ चातुर्मास्येषुत्र्यैयम्बकनामकानेककपालान्पुरोडाशान्प्रकृत्यश्रूयते “ अभिघार्यानाभिघार्याइतिमीमांसंतेब्रह्मवादिन ” इत्यादि ॥ अत्रेतिशब्देनमीमांसाप्रकारबोधकेनाभिघारणनिषेधस्याप्यर्थवादत्वं । “ अभिघार्याएवतूष्णीमिवहोतव्य ” मितिविधिबलात्तत्रैव ( सू· ८ ) “ पूर्वैश्चतुल्यकालत्वा ” दित्येकसूत्रेपंचमाधिकरणेनिर्णीतम् ॥ तथा आधानंश्रूयते तत्रेदमप्याम्नायते “ यएवंविद्वान्वारवंतीयंगायति यएवंविद्वान्यज्ञायज्ञीयंगायति यएवंविद्वान्वामदेव्यंगायति ” इति ॥ तत्रेदमाम्नायते “ उपवीतावाएतस्याग्नयोभवंति यस्याग्न्याधेयब्रह्मसामानिगायति ” इति ॥ उपशब्दोऽत्रसामीप्यार्थः उपसमीपेविगताःकालविलंबमंतरेणपरैस्त्यक्ताइत्यर्थः ॥ अनयानिंदयाब्रह्मणःसामगाननिषेधःफलति अयंचब्रह्मणोनिषेधः पूर्वाधिकरणेष्विवार्थवादउद्गातुर्विहितसामगानस्तावकोभविष्यतीतिप्राप्ते तत्र ( सू· ९ ) “ उपवादश्चतद्वत् ” इत्यादित्रिसूत्रंषष्ठाधिकरणंप्रवृत्तम् नब्रह्मणउपवादः । कस्यचिदर्थवादःसंभवति । वामदेव्यादिविधीनांबहुत्वात्स्वसन्निहितार्थवादस्तुततयानिराकांक्षत्वाच्च ॥ तस्मादयमुपवादोऽपि तद्वत् तृतीयाधिकरणोक्तषोडशिग्रहवद्विकल्पार्थः ॥ ब्रह्मणःसामगानस्यकथमपिप्राप्त्यभावात्तन्निषेधोऽसंगतोऽतोब्रह्मशब्दोऽत्रब्राह्मण्यादुद्गातृपरः ॥ अतोविहितप्रतिषिद्धत्वाद्विकल्पः ॥ अग्रे ( सू· १० ) “ प्रतिषेधादकर्मेतिचे ” दितिद्वितीयसूत्रेनिषेधादुद्गातुरपिसामगानंतत्राकर्तव्यमितिशंकामनूद्यतृतीयेसमादधे ( सूत्र ११ ) “ नशब्दपूर्वत्वात् ” इति ॥ गानस्यापिवेदवाक्यमूलकत्वादित्यर्थः विधिनिषेधवाक्ययोर्वैदत्वाविशेषादुभयसामंजस्यार्थविकल्पइतिभावः ॥ अत्रशबरस्वाम्यपि “ अनुष्ठातुंविधिः वर्जयितुमुपवादः ” इत्याह ॥ इहनिषेधवाक्यंविधिबलादुद्गातृपरतयापाक्षिकार्थपरतयाचोपसंहृतम् ॥ “ नशब्दपूर्वत्वा ” दित्यनेनविधेरबाध्यत्वंचोक्तम् ॥ एवंप्रकृतेऽपि गुणक्रियादिग्राहकवाक्यानामबाधएवोचितः ॥ तत्र गत्यंतराभावाद्विकल्पादुभयसामंजस्यम् ॥ अत्रतुव्यासाद्युक्तविषयभेदादित्येवविशेषः ॥ किंच ज्योतिष्टोमेश्रूयते “ दीक्षितोन ददाति नजुहोति नपचति ” इति ॥ इमेनिषेधास्तत्र सप्तमाधिकरणेचतुःसूत्रे ॥ तत्रसंशयः किमयं सर्वदानहोमपाकानांप्रतिषेधः उत अक्रतुयुक्तानां अथवाक्रतुयुक्तानामपिचोदकप्राप्तानांप्रतिषेधः अथवापर्युदासइति ॥ तत्रसूत्रत्रयेणप्रथमंपक्षत्रयंपूर्वपक्षतयोक्तम्यथा ( सू० १२ ) “ दीक्षितस्यदानहोमपाकप्रतिषेधोऽविशेषात्सर्वदानहोमपाकप्रतिषेधःस्या ” दिति ॥ नन्सामान्यनिषेधकृदस्तु ॥ अतोदानत्वाद्यविशेषाद्यत्पुरुषार्थं यत्क्रत्वर्थं यच्चातिदे-

शाल्लभ्यं तेषांसर्वेषांदानादीनां प्रतिषेधइत्यर्थः ॥ ( सू० १३ ) " अक्रतुयुक्तानांवाधर्मःस्यात्क्रतोःप्रत्यक्षशिष्टत्वा " दिति ॥ वाशब्दः पक्षंव्यावर्त्तयति ॥ नसर्वदानादीनांप्रतिषेधः कुतः क्रतोःप्रत्यक्षशिष्टत्वात् । प्रत्यक्षंहिश्रुतौदानादीनांशासनमस्ति तस्मात्प्रत्यक्षंवर्जयित्वाप्रतिषेधःस्यात् ॥ क्रतोरितिपदंमध्यमणिवदुभयत्रान्वेति क्रतोर्धर्मःक्रत्वर्थमुपदिष्टंदानादिकंकर्तव्यं किंतु पुरुषार्थमतिदिष्टंचेत्येवप्रतिषिध्यतइत्यर्थः ॥ ( सू० १४ ) " तस्यवाप्यानुमानिकमविशेषात् " इति ॥ अपिवा तस्यक्रतोर्यत् आनुमानिकंचोदकप्राप्तं तत् प्रतिषिध्यते । आनुमानिकंहि तन्नप्रत्यक्षं प्रत्यक्षश्रुतश्चप्रतिषेधः ॥ पूर्वप्राप्ते सिद्धांतमाह ॥ ( सू० १५ ) " अपितुवाक्यशेषत्वादितरपर्युदासःस्यात्प्रतिषेधेविकल्पःस्या " दिति ॥ तुशब्दः पूर्वपक्षं निरस्याऽवधारणार्थः ॥ वाक्यशेषःस्यात्प्रतिषेधः । अहरहर्दद्यादित्यस्यशेषोनदीक्षितइति ॥ एवंहोमपाकवाक्ययोरपि ॥ असतिपर्युदासेप्रतिषेधेविकल्पःस्यात् सचान्याय्यइत्युक्तम् तस्मात्पर्युदासइति ॥ एवमिदंशाबरभाष्यादिषुव्याख्यातम् ॥ अत्रन्यायमालायांमाधवः " नित्याग्निहोत्रदानादिकंपुरुषार्थत्वेनयत्प्रत्यक्षश्रुतावुपदिष्टं ज्योतिष्टोमकालेऽपिप्राप्तं यच्चातिदिष्टंदानादिकं तयोरुभयोर्मध्ये प्रत्यक्षोपदिष्टनिषेधस्योपदिष्टमेवसन्निहितमितिपुमर्थस्यैवात्रनिषेधः ॥ नच नित्याग्निहोत्रदानादौविधिनिषेधयोःप्रवृत्त्याविकल्पः शंक्यः । भिन्नविषयत्वात्क्रत्वर्थोनिषेधः क्रतुकालेतदनुष्ठानंवारयति । पुरुषार्थस्तुविधिःकालांतरेतदनुष्ठापयति । तस्मात्पुमर्थस्यनिषेधः ॥ यदिप्रतिषेधपक्षेवाक्यभेदःशंक्येत तर्हि पुमर्थदानादिव्यतिरिक्तंक्रतुकालेऽनुष्ठेयमिति पर्युदासोऽस्तु "। इत्याह ॥ अतो नददातीत्यादिसामान्यनिषेधेऽपि दानादिविशेषाणामेव यथातत्रनिषेधःसिद्धांतः सूत्रकृताच सएव निर्णीतस्तथाऽस्थूलादिवाक्यैःसामान्यतोनिषेधेऽपि लौकिकानामेव ससिद्धांतितः सूत्रकृताच प्रकृतैतावत्वादिसूत्रैःसएव निर्णीतइति शुभम् ॥ स्वान्वयितावच्छेदकेत्यादित्वदुक्तनियमस्यप्रसह्यसर्वैर्वांगीकारेत्वेवमाद्यधिकरणानिबाध्येरन् ॥ तस्मान्निषेधानामपिसंकोचादिरूपास्तथातथोपसंहाराभवंत्येव ॥ तैत्तिरीयसंहितायां द्वितीयकांडे ( प्र० ५ अ० १ ) " तृतीयंब्रह्महत्यायैप्रत्यगृह्णन्त्सनिर्यासोऽभवत्तस्मान्निर्यासस्यनाश्य " मितिपूर्वंसामान्यतयानिर्यासमात्रस्याशनप्रतिषेधोयद्यपिप्रसज्यते तथापि " ब्रह्महत्यायैह्येषवर्णोऽथोखलुयएवलोहितोयोवाव्रश्चनान्निर्येषतितस्यनाश्यं । काममन्यस्ये " त्यग्रिमवाक्येन लोहितवर्णोवाव्रश्चनाच्चनिर्गच्छति तस्यैवनिर्यासस्याशनप्रतिषेधस्तेनान्यस्यहिंगुकर्पूरादेर्यथेच्छमशनाभ्यनुज्ञानंचबोध्यतइतिस्पष्टएवनिषेधस्योपसंहारः स्वान्वयितावच्छेदकेत्यादिनियमभंगश्च ॥ अतएवात्रसायनमाधवीयभाष्येऽपि " वृक्षान्निर्गत्यघनीभूतोरसोनिर्यासः । ब्रह्महत्यायाः स्वरूपत्वान्निर्यासस्यस्वरूपंनभोज्यंभवति । अपिचपक्षांतरमस्ति । नसर्वोपिनिर्यासोनिषिद्धः किंतु लोहितवर्णः यश्चच्छिन्नवृक्षप्रदे-

शान्तिगर्तस्तदेवोभयंनिषिद्धम् ॥ अन्यस्यतुनिर्यासस्यस्वरूपंकाममाश्यमिच्छायांस-
स्यामशितुंयोग्य ” मिति व्याख्यातम् ॥ ननु नयोऽशनक्रियायामन्वयोनतु नि-
र्यासेऽतोन स्वान्वयिनावच्छेदकेत्यादिनियमव्यभिचारइतिचेत्तर्हि “ नहिंस्या ” दि-
त्यत्रापि हिंसायामेव तस्यान्वयो नतुसर्वादिपदार्थेऽतस्तत्रन्यायव्यभिचारंस्वीकृ-
त्य तत्समाधानायलक्षणाप्रतिपादनादिरूपस्त्वद्ग्रंथोव्याहन्येत ॥ अथहिंसाकर्मत्वा-
दस्तितत्राप्यन्वयइतिचेदत्रापिनिर्यासेसोऽस्त्विति सुस्थोनियमभंगः ॥ एवं निषेधोदा-
हरणांतरेष्वपिद्रष्टव्यम् ॥ यच्च तुल्यइत्यादि गौरवंसह्यमित्यंतमुक्तं तत्रोदाहृतवा-
क्यमपि पूर्वतंत्रेप्रागुक्तपादएवतृतीयाधिकरणे ( सू०६ ) “शिष्टातुप्रतिषेधःस्या” दित्येक-
सूत्रेविचारितम् ॥ अत्र शबरमाधवादयः । प्रथमेऽधिकरणेनशब्दःपर्युदासार्थः ॥ द्विती-
यंतु अर्थवादार्थं अथकिंलक्षणकःप्रतिषेधः इति लक्षणमुच्यते “शिष्टातुप्रतिषेधःस्यात्”
यथाज्योतिष्टोमे तस्यसंस्थाविशेषेश्रूयते “ अतिरात्रेषोडशिनंगृह्णाति नातिरात्रेषोड-
शिनंगृह्णाती ” ति ॥ तत्रनानूयाजेष्वित्यत्रेव पर्युदासोऽशक्यवचनः ॥ अतिरात्रातिरि-
क्तातिरात्रइत्यन्वयायोगात् । विधेर्निर्विषयत्वापाताच्च ॥ तर्हि “ नतौपशौकरो-
ती ” त्यत्रनसोमइतिवदर्थवादोऽस्त्वितिचेन्न ॥ स्तुत्यस्तावकयोर्विधिनिषेधयो-
रेकविषयत्वेनव्याहतितादवस्थ्यात् ॥ “ अपशवोवान्येगोअश्वेभ्य ” इत्यत्र
पश्वंतरनिषेधेन गोऽश्वविधेःस्तुतिर्दृष्टा ॥ इहतु षोडशिनिषेधेनषोडशिनएवस्तु
तौस्पष्टोव्याघातस्तस्मात्प्रतिषेधइति तृतीयःपक्षोऽस्तु. गृह्णातीत्यत्रसंबंधःननुपर-
स्परंविरुद्धौविधिप्रतिषेधौनसंभवतः उच्यते “ वचनप्रामाण्यात्प्रतिषेधोविधिबा-
धित्वाभविष्यति विधिरपिप्रतिषेधंनान्यागतिरस्ती ” ति ॥ अतोव्रीहियववद्वि-
कल्पोवचनप्रामाण्यात् ॥ तत्प्रामाण्यादेवान्यतरकल्पमादायप्रयोगइति ॥ व्याच-
क्षते ॥ एवंसति शिष्टाविधेर्विषयमवशेष्यैवप्रतिषेधःप्रवर्त्ततेतिसूत्रार्थःसिद्ध्यति
तेनधर्मनिरूपकवाक्यानांविषयमवशेष्यैवाऽस्थूलादिवाक्यानांप्रवृत्तिरुचिता ॥ पू-
र्वेषांसर्वथाबाधेनिर्विषयत्वादप्रामाण्यंस्यात्तच्चायुक्तं ॥ वेदत्वाविशेषात् ॥ अ-
थापोद्यविषयसमर्पकत्वान्नानर्थक्यंतेषामिति चेदतिरात्रवाक्यस्यापि तथात्वादेव
सार्थक्यंस्यादिति माऽस्तुविकल्पः ॥ यदिच नातिरात्रवाक्यादेवापोद्यविषयबो-
धपूर्वकं तत्प्रातिषेधावगमोऽतोऽतिरात्रवाक्यस्यविषयसमर्पणार्थं नोपयोगइत्युच्ये-
त तर्ह्यस्थूलादिवाक्यैरपि निराकांक्षबोधस्य संभवादध्यारोपार्थं धर्मनिरूपकाणां-
नोपयोगः ॥ अतः प्रमाणत्वाविशेषादुभयसामंजस्यं विषयभेदात्कल्प्यम् ॥
ब्रह्मणःप्रयोगासंभवेन प्रकृतवद्विकल्पस्य वक्तुमशक्यत्वात् ॥ वस्तुस्वरूपेविक-
ल्पानुपपत्तेः ॥ तस्मात्तदपि तवैवप्रतिकूलम् ॥ यच्च ( विधेःसामान्यविधेरि-
त्यादि उपसंहारापेक्षत्वादितिभाव ) इत्यंतमगादि तदप्येतावतैवदत्तोत्तरम् ॥
विधेरिवनिषेधस्याप्युपसंहाराणांसमूलानांदर्शितत्वात् ॥ किंच सामान्यविधेरित्या-

द्विनोक्तविषयोऽपिननियतः ॥ अन्यथाऽनारभ्यश्रुतस्य “ वषट्कारेणवास्वाहा-कारेणवादेवेभ्योऽन्नंप्रदीयत ” इति सामान्यविधेः दर्विहोमे “ पृथिव्यैस्वाहा अंतरिक्षायस्वाहा वायवेस्वाहा ” इतिश्रवणात्तत्परतयोपसंहारेहोमांतरेषु स्वाहाकारोनस्यात् अतःपृथिव्यैस्वाहेत्यादेर्विधित्त्वपक्षेऽपितथोपसंहाराभावस्तत्रैव-पादेदशमाधिकरणे ( सू० २०-२१-२२ त्रिसूत्रेराद्धांतितः ॥ तस्माज्जैमि-निव्यासाक्तन्यायैरेवसर्ववैदिकवाक्यानांव्यवस्थोपपत्स्यते नतुभवादृशस्ययथार्थ-शास्त्रार्थापरिज्ञानप्रयुक्तैकदेशिद्वित्रवचनमात्रतः ॥ एतेनैव एवंचास्थूलेत्यादिकं-निरस्तं ॥ दीक्षितोनददातीत्यादाविवप्रमाणतःसंकोचक्लेशत्वस्याशक्यवचनत्वात् ॥ अन्यथाशास्त्रसिद्धःप्रतिप्रसवघंटापथएवलुप्येत ॥ नातिरात्रादिवाक्यार्थेष्वपिन-क्लेशलेशोऽन्यथासूत्रकारस्तथानसिद्धांतयेत् । वैदिकवाक्यानामक्लिष्टवास्तवा-र्थप्रकाशनायैव तस्यप्रवृत्तेः ॥ निष्कलमितितु निषेधएवसामान्यः ॥ लो-केतादृशमात्रादेरदर्शनादलौकिकमात्राबोधकस्यै “ तस्यैवानंदस्ये ” त्यादेर्विशेषवा-क्यत्वात्तेनैवनिष्कलादिवाक्यानांसंकोचउचितः ॥ सामान्यविशेषभावस्यस्फुटतया-समानविषयतायावक्तुमशक्यत्वात् ॥ “ इंद्रोमायाभिः अशरीरं ” इत्यादिवाक्या-नितुप्रागेवसम्यग्विचारितानीतिनकिंचिदेतत् ॥ आकारबोधकानांवाक्यसहस्राणा-मिंद्रोमायाभिरित्येकेनैवान्यथानयनस्याऽसंभवात् व्याख्यातरीत्यातस्याभित्वदभिप्रे-तार्थासमर्थकत्वाच्च ॥ विग्रहमायिकतायास्ततोनिश्चयेप्रत्यताशरीरमित्यादयोनिषेधा-मायिकशरीरादिकमेवनिषेधंति नतु वास्तवमलौकिकमित्युपसंह्रियंताम् ॥ ज्ञे-याज्ञेयविभागमनसैवपरिकल्प्यतत्तद्वाक्यकदंबस्यतत्तत्परत्वकल्पनेमानाभावे “ इंद्रो-मायाभिः अशरीर ” मित्यादेःसमानविषयतायाएवसुवचत्वात् ॥ वस्तुतस्तु इंद्रो-मायाभिरितिवाक्यंभेदप्रतीतेरेवमायाहेतुकत्त्वंबोधयति । मायांतुप्रकृतिवाक्यंचप्रकृति-रूपमायाशाक्तिकत्वंपरस्यबोधयति । तत्रैव “ देवात्मशक्तिं । पराऽस्यशक्तिः ” इत्याद्यभ्यासात् ॥ अशरीरमितिकठवाक्यंचपांचभौतिकशरीरप्रतिषेधकम् । तत्रै-वानुपदं “ तस्यैषआत्माविवृणुतेतनूंस्वा ” मिति स्वाभाविकालौकिकतनुबोधनादि-त्यादि सर्वंशुद्धं सिद्धंप्राक् ॥ एतस्यैवेत्यत्र मात्रायाजन्यत्वं नश्रूयते आसी-नइत्यादौ गमनादेर्मायिकत्वंच नैवोपतिष्ठतइति त्वदुक्तविशेषाकांक्षत्वमसंभवि । सं-क्षेपसृष्टेरिवगमनादेर्मायामात्रत्त्वबोधकाधिकरणाभावात् । ज्ञेयाज्ञेयस्वरूपविभागस्यकें-वलनिर्मूलतायाःपुरैवदर्शितत्वाच्चेतिदिक् ॥ अधिकोऽस्थूलादिवाक्यविचारःप्रहस्तवा-दादिषुद्रष्टव्यः ॥ अत्रप्रहस्तवादस्थंकिंचिदनूद्यते॥ यथातत्र “ कश्चित्तु अस्थूलादिवा-क्ये नञःक्रियान्वयाभावात्पर्युदासएवेति तेनसदृशग्रहणात्समोमशकेनसमोनागेनेतिश्रु-त्यंतराच्चात्रापिसर्वाकारतैवफलतीतिवृथैवेयंविरोधाभावचिंतेत्याह । अन्यस्तु ॥ नात्र-

पर्युदासःशक्यवचनः ॥ असंगमित्यत्रानन्वयात् । अचक्षुष्कमितिकप्रत्ययविरोधात् ॥ यथासंभवमुभयस्वीकारेप्रायःपाठविरोधाच्चेतिनपर्युदाससंसेहे ॥ नेदं ॥ असंगमित्यत्रसंगभिन्नस्यसंगसदृशस्यप्रदेशद्वयस्वरूपसंबंधस्यसत्वेन तद्रूपताबोधनेऽन्वयसंभवात्स्वार्थेकप्रत्ययस्यापिसंभवात्पर्युदासबाधाभावात् ॥ किंतु ( स्कं. ८ अ० ३ श्लो. २४ ) सवैनदेवासुरमर्त्यतिर्यङ्नस्त्रीनषंढोनपुमान्नजंतुः । नायंगुणःकर्मनसन्नचासन्निषेधशेषोजयतादशेष इत्यादिषुपुराणस्थोपबृंहणेषुनिषेधशेषत्वकथनात्तदनुरोधेनात्रप्रसज्यप्रतिषेधस्यापिसंभवदुक्तिकत्वाद्युक्ताविरोधाभावचिंतेति ॥ नन्वेऽवं सतिश्रुत्युक्ताणुत्वादीनामपिनिषेधान्नात्रजडजीवधर्ममात्रनिषेधइतिसिद्धम् ॥ तथाचविरोधः ॥ सचधर्मविरोधःत्वाश्रयंभेत्स्यतीति धर्माःसोपाधिके एवपर्यवसास्यंतीतिचेत् ॥ नैतत् ॥ ब्रह्महिश्रुत्येकसमधिगम्यं तत्रच " तदेजतितन्नैजतितद्दूरेतद्वंतिके ॥ आसीनोदूरंव्रजतिशयानोयातिसर्वतः । अणोरणीयान्महतोमहीयान् । विश्वतश्चक्षुः । अचक्षुष्कमश्रोत्र " मित्यादिभिर्विरुद्धनानाधर्माएकस्मिन्नेवब्रह्मणिप्रतिपाद्यंतइतितत्तथैवमंतव्यम् ॥ नचापवादार्थं धर्मारोपःशक्यवचनः ॥ विनिगमकाभावात् । अपोद्यानामविरोधेविरोधेवाविशेषाभावात्सूत्रेषुसविशेषनिरूपकश्रुतीनांपरस्पराविरोधचिंतनस्याप्रयोजनकत्वापाताच्च ॥ अतोविरोधएवनास्ति ॥ धर्मिग्राहकमानसिद्धत्वात् । अंतर्यामिब्राह्मणे " यःपृथिव्यांतिष्ठन्यःपृथिवीमंतर " इत्यादिभिस्तदंतःस्थितत्वतदंतःस्थापकत्वयोर्वैश्वानरविद्यायांप्रादेशमात्रत्वाभिविमानत्वयोःश्रावणाच्च ॥ ( अ. ९ ग. ३६ ) नहिविरोधउभयंभगवन्यपरिगणितगुणईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलांतःकरणविकरणदुरवग्रहवादिनांविवादानवसर इतिश्रीभागवतषष्ठस्कंधवाक्याच्च । लोकविरुद्धयोरप्येकप्रपंचप्रतियोगिकनिमित्तत्वोपादानत्वयोरेकस्मिन्नेवशबलेश्रुतिबलेनभवताप्युपगमाच्च " त्यादिबहुतरंश्रीपुरुषोत्तमचरणैः प्रहस्तवादेप्रापंचि ॥ उक्तेश्रीभागवतगद्येअंतःकरणाविकरणेत्यत्रांतःकरणाश्रयेइतिकचित्पाठः शबलवादस्तु सबलप्रमाणैर्युक्तिभिश्चेह धस्तादपास्तः ॥ किंचत्वन्मतेविशेषानुवादोव्यर्थः तदनवगतवतोऽपि पुंसःसुखेनास्थूलादिवाक्यार्थबोधोदयेनसहस्रावधिवाक्यैरध्यारोपस्यसर्वथाप्रक्षालनाद्धिपंकस्येतिन्याययस्तत्रात् ॥ बलात्कारेत्वध्यारोपवाक्यवृंदवदतिरात्रादिवाक्यानिनातिरात्रवाक्यादेःप्रतिषेध्यविषयसमर्पकाणिस्युरतोनविकल्पसिद्धिरित्यादिर्बहुतरशास्त्रविप्लवप्रसंगः ॥ अग्रेवृक्षःकपिसंयोगीनमूलइत्यादिप्रतीत्यास्वात्यंताभावाधिकरणस्थस्यापिकपिसंयोगादेर्मिथ्यात्वस्यपरेणकेनापिस्वीकृतत्वाभावात् ॥ ( मिथ्याह्यभाविस्थितः ) इत्यादिकथनंतु केवलजलमथनं वस्तुतश्च धर्मविधिनिषेधवाक्यानांविषयविभागः प्रकृतैतावत्त्वादिसूत्रैःसयुक्तिकःसप्रमाणःसिद्धांतितएवेतिश्रौतविशेषाणां स्वात्यंताभावाधिकरणस्थत्वकल्पनमपि-

पुष्करतलपत्तापकल्पमित्यलम् ॥ तदेतत्सर्वमुरसिनिधायाहुर्मूले ॥ **तदप्यविचारितरमणीयमित्यादि** ॥ **अहिंसेति** ॥ गीताषोडशाध्यायवाक्यमिदं अत्र हिंसासामान्याभावादरेदानंदमश्चयज्ञश्चेतितत्पूर्वश्लोकोक्तिः पौष्चेताऽतस्तदेकवाक्यतयावैदिकातिरिक्तहिंसाभावएवतत्रार्थइतिभावः ॥ **स्थूलपृषतीऽमिति** ॥ इदंवाक्यमसंदेहरूपमयोजनकथनेमहाभाष्येऽप्युदाहृतम् ॥ **तादृशानंदस्येति** ॥ सर्वभूतोपजीव्यविविधानंदवृंदमूलकंदस्य ॥ यच्च ( स्वात्यंताभावाधिकरणस्थोमिथ्ये ) त्युक्तं तदेतत्पिशाचः पिशाचभाषयेतिन्यायेनतदीयानद्वैतसिद्धिगौडब्रह्मानंदकृततच्चंद्रिकादिग्रंथान्कांश्चितार्किकग्रंथांश्चानुसृत्यनिराकुर्वंति ॥ **ननुनिषेधबोधकैरित्यादिना** ॥ सिद्धसाधनतायांहेतुमाहुः ॥ **सर्वस्येति** ॥ गंधवत्यपिपाषाणादौगंधाभावभ्रमसंभवात् सर्वस्यगंधादेःस्वाश्रयपृथिव्यादिनिष्ठभ्रमविषयोयोभावस्तत्प्रतियोगित्वमस्त्येव ॥ **अर्थांतरतायाइति** ॥ गौतमपंचलक्षण्यांपंचमाध्यायद्वितीयाह्निकोक्तेषुप्रतिज्ञाहान्यादिचतुर्विंशतिनिग्रहस्थानेष्वर्थांतरंनामषष्ठंनिग्रहस्थानं ॥ लक्षणंतुतत्रैव ( अ० ५ आ० २ सू० ७ ) "प्रकृतादर्थादप्रतिसंबद्धार्थमर्थांतर" मिति ॥ उदाहृतंचात्रभाष्येवात्स्यायनेन "नित्यःशब्दोऽस्पर्शत्वादितिहेतुःहेतुर्नाम हिनोतेर्धातोस्तुनिप्रत्ययेकृदंतपदं पदंचनामाख्यातोपसर्गनिपाताः" इत्यादितदत्रापारमार्थिकत्वरूपमिथ्यात्वसाधनेप्रकृतेव्यावहारिकाभावप्रतियोगित्वकथनमर्थांतरम् ॥ **श्रुतिप्रतिपादितस्येति** ॥ स्वमादेर्व्यावर्तनार्थार्थक्रियेति ॥ महतोमहीयस्त्वादिकंहि ब्रह्मणःश्रुतिप्रतिपादितम् ॥ "अतःसमुद्रागिरयश्चसर्वे" गामाविश्यचभूतानीत्यादिश्रुतिस्मृत्युक्तं सर्वनियमधारणाद्यर्थक्रियाकारिच प्रसिद्धमेव । तस्यास्थूलादिवाक्यैर्निषेधोऽसंभवी ॥ अर्थक्रियाश्चात्रजाग्रदवस्थाऽनुभूताःसत्यत्वनिर्वाहिका यावदर्थक्रिया ज्ञेयाः ॥ तेन असंतोऽप्यर्थकारणइतिवाक्यात्प्रतिबिंबादीनां यथाकथंचिद्यत्किंचिदर्थक्रियाकारित्वेऽपिनक्षतिः मायामात्रसूत्रेप्रकाशेऽप्येवमेवस्वीकृतम् ॥ एवंचजगतोऽपिश्रुतिप्रतिपाद्यत्वमर्थक्रियाकारित्वंचानुसंधेयं ॥ **अबाध्यत्वरूपस्येत्यादि** ॥ जगत्पारमार्थिकंनभवतीतिबाध्यत्वरूपमिथ्यात्वज्ञानंपारमार्थिकत्वज्ञानमंतरानसंभवति ॥ अबाध्यत्वरूपपारमार्थिकत्वस्यज्ञानंचबाध्यत्वज्ञानमंतरानभवतीत्यन्योन्याश्रयः ॥ **विशेष्येविशेषणमिति** ॥ अत्रायंसारः । ( स्वात्यंताभावाधिकरणस्थोमिथ्ये ) तिस्वाकारेसोऽभावःकिंप्रमाविषयोभ्रमविषयोवा ॥ आद्येऽभावस्यवास्तवत्वान्मिथ्यासत्ययोरेकाधिकरणवृत्तित्वमनुपपन्नमितिव्याघातः ॥ सत्याभावप्रतियोगिनोऽपिस्थलांतरेसत्वापातःसर्वंमिथ्येतिप्रतिज्ञाहानिश्च ॥ नचरज्जौसर्पतदभावयोःसामानाधिकरण्यदर्शनात्तन्नानुपपन्नमितिशंक्यम् ॥ रज्जौसर्पाभावाधिकरणत्वेऽपिसर्पनिरूपिताधिकरणतायास्तत्रवक्तुमशक्यत्वात् ॥ केवलायांद्रष्टृबुद्धावेवकल्पितसर्पादेःसत्वात् ॥ रज्जौतत्सत्वंतुभ्रांताभ्रांतैःसर्वैरेवसमतीयेत ॥ एकस्यैवाधेयतावच्छेदकसंबंधाद्देश-

क्यनिरूपणतयापितयोःसामानाधिकरण्यमशक्यवचनम् ॥ द्वितीयेप्रतियोगिनःसत्व-
प्रसक्तिःपुनःसामानाधिकरण्यानुपपत्त्याव्याहतिश्च ॥ शर्करायांकेनचिद्भ्रमान्माधुर्या-
भावेगृह्यमाणेऽपितस्यांमाधुर्यस्यैवसत्वात् ॥ तदभावोऽपितस्यांचेत्सर्वैःसोऽनुभूयेत ॥
अथ प्रतियोगिनोमिथ्यात्वादेवाभावस्यापिमिथ्यात्वमितिचेद्वस्तुनोमिथ्यात्वज्ञानमभा-
वज्ञानाधीनं अभावस्यतथात्वज्ञानंचवस्तुमिथ्यात्वज्ञानाधीनमित्यप्यन्योन्याश्रयः॥
एतच्चमूलएवसम्यक्प्रपंचेननिराकृतं प्रागुक्तग्रंथविद्भिश्चात्राधिकंदर्शितचरदिशासुखे-
नशक्योहमितिकिंबहुना ॥ वस्तुतस्त्वभावस्तिरोभावानतिरिक्तइतिशिलाबीजादौस्व
तिरोभावसमानाधिकरणस्यापिगंधानोकहादेरमिथ्यात्वात्त्वत्कल्पनमखिलंनिर्मूलं त-
थापिपिशाचःपिशाचभाषयेतिन्यायादभाववादमभ्युपेत्यमूलेसमाहितं ॥

किंचवेदेप्रपंचोमिथ्येतिकुत्रापिनोक्तं किंतु ब्रह्मैवेदंसर्वंआ-
त्मैवेदंसर्वं" मित्यादिनाब्रह्मरूपतैवसर्वस्यप्रदर्शिता साचशुद्धाद्वै-
तस्वीकारएवसंगच्छते नमिथ्यात्वस्वीकारइति ॥ यत्तु ( विशे-
षानुवादस्याभावेवायौरूपस्यनिषेधेपितस्याग्न्यादाविवब्रह्मणि
विशेषाणांनिषेधेपिप्रधानादौतेषांसिद्ध्यामिथ्यात्वाऽसिद्धेस्तदनुवा
दोयुक्त ) इत्युक्तं तन्मंदं विशेषानुवादस्योपसंहारार्थत्वसंभवेन-
मिथ्यात्वसाधकत्वासंभवात्ईक्षत्यधिकरणंतुनप्रधानस्यकर्तृत्वा-
भावबोधकं तत्रप्रधानवाचकपदाभावात् किंतु ब्रह्मणःसर्वप्रमा-
णाविषयत्वस्ययतोवाचोनिवर्त्तंतइत्यादिश्रुतिप्रतिपादितत्वाद्वि-
चारःकर्तुंनशक्यतइत्याक्षेपआह "ईक्षतेर्नाशब्द"मिति नविद्य-
तेशब्दोयत्रेत्यशब्दंवेदांताप्रतिपाद्यंब्रह्मेतिनवक्तव्यं कुतः ईक्षतेः
तदैक्षतबहुस्यांप्रजायेयेत्यादिवाक्यादीक्षाप्रतीयते साचसर्वव्य-
वहारातीतोपिसृष्टिद्वाराव्यवहार्य्योभविष्यामीति ॥ एवंसति
इच्छयाव्यवहार्य्योपिभवतीत्यादिकंभाष्यादौविस्तरेणप्रपंचितं॥
तथाचेक्षत्यधिकरणमपीत्यादिकमसंगतं ॥ किंचत्वन्मतेविशे-
षनिरूपणस्यकुत्रचिन्मिथ्यात्वसाधकत्वंकुत्रचिद्बुद्धिसौकर्य्या-
र्थत्वंकुत्रचिल्लक्ष्यज्ञानसौकर्य्यार्थत्वंकचिदुपासनार्थत्वमित्यतीव

गौरवंस्यात् ॥ प्रत्यासन्नप्रतियोगिनंविहायाप्रत्यासन्नप्रतियोगि-
निषेधोनसंभवतीतिन्यायविरोधस्तु "नहिंस्यात्सर्वाभूतानी"त्यत्र-
व्यभिचरितत्वेनतादृशन्यायएवमानाभावान्नसंभवति ॥ अप्रा-
माणिकन्यायविरोधस्याकिंचित्करत्वात्॥अन्यथाप्रधानस्याप्र-
त्यासन्नत्वेनतत्कारणत्वम्याप्यंप्रत्यासन्नत्वात्तन्निषेधमीक्षतेर्ना-
शब्दमित्यधिकरणेस्वीकुर्वतस्तवैवन्यायविरोधःकथंनस्यात् ॥
अन्यथेत्यादिनानतत्ररथाइतिलौकिकरथादीनांनिषेधःस्यादथ
रथानित्यादिनापारमार्थिकरथादीनांविधानंस्यादितियदुक्तंत-
च्चब्रूमःयदिश्रुतिर्लौकिकानामिवस्वाप्नानांमपिरथादीनांसत्यत्वं-
प्रतिपादयेत् "यथैतदात्म्यमिदंसर्वंतत्सत्यं आत्मानंस्वयमकुरुत-
तत्सत्यमित्याचक्षत" इत्यादिनातेषांसत्यत्वंप्रतिपादयति तदा-
पारमार्थिकत्वंस्यात् ॥ नत्वेवंप्रतिपादयति किंतु सृष्टिमात्रं "
अविद्ययामन्यत"इतिवचनाच्चमायिकत्वमेवनपारमार्थिकत्वं ॥
अतएव " मायामात्रंतुकार्त्स्न्येनानभिव्यक्तस्वरूपत्वा"दितिसू-
त्रंसंगच्छते ॥ त्वन्मतेचसर्वस्यैवप्रपंचस्यमायिकत्वेनस्वाप्नमात्र-
स्यमायिकत्वाभिधायकंमायामात्रमितिसूत्रंविरुद्धंस्यात् ॥

टीका

सहस्राक्षे यत्तुप्रत्यक्षमित्यादिं क्रियेतेत्यर्लमित्यंतं भागंपरिहरंति ॥ किंचवे-
देप्रपंचइत्यादिना ॥ सूत्रंविरुद्धंस्यादित्यंतेन ॥ अयंभावः ऋग्वेदस्याश्व
लायनसांख्यायनभेदाद्वे । इदानींकृष्णशुक्लतयोच्यमानयजुषोस्तैत्तिरीमैत्रायणीमान-
वीकाण्वीमाध्यंदिनीतिभेदात्पञ्च । सामवेदस्यराणायनीकौथुमीतिद्वे । अथर्ववेद-
स्यपैप्पलादीशौनकीतिद्वे । इत्येवंसर्ववेदानांसंकलनयैकादशैवशाखाःसांप्रतंप्रचलं-
ति । तासुक्वाप्येकर्मापकंठरवेणजगन्मिथ्यात्वग्राहकंवाक्यंनोपलभ्यतेइदंचशास्त्रार्थ-

निबंधे ( कारिका- ८८ ) नास्तिश्रुतिषुतद्वार्ता दृश्यमानासुकुत्रचिदित्यत्रस्फुटम् ॥ अतःशंकराचार्यैर्व्याख्यातास्वीशावास्याद्युपनिषत्सुसर्वशिष्टसंमतत्त्वादसंदिग्धप्रमाणभावासुतुकुतस्तादृशस्पष्टवाक्योपलंभसंभावनाऽपि ॥ यदिचक्कापितत्स्यात्तर्हिसूत्रतात्रकभाष्यादौमिथ्यात्वसाधनावसरेऽवश्यमुदाह्रियेत । तस्माच्छास्त्रांतरीयमपिमिथ्यात्ववाक्यंसमूलंनास्त्येव ॥ यत्तुसहस्राक्षे तदनेनेत्यादि उक्तत्वादित्यंतमुक्तंतत्तुपूर्वखंडएवापास्तम् ॥ , अविप्रतिपन्नरूपेणेत्युक्तिरप्यज्ञानात् । अभावस्यतिरोभावतावादेकारणादौत्वतिरोभावसमानाधिकरणस्यकार्यादेर्मिथ्यात्वानंगीकारात् ।. किंचस्यादप्येवं यदिकंठरवेणसत्यत्वबोधकानिप्रागुक्तादीनिबहूनिवाक्यानिवेदेषुनस्युः ॥ किंच " पुरुषएवेदंसर्वं " इत्यादीनिपरःसहस्रंवाक्यानिसर्वस्यब्रह्माभिन्नत्वंग्राहयित्वाऽद्वैतंसाधयंतिनतुमिथ्यात्त्वंबोधयित्वा ॥ मिथ्यासत्ययोश्चाभेदोऽशक्यएववक्तुम् ॥ अतोपिसत्यत्त्वएवश्रुतितात्पर्यंनिर्णीयते ॥ किंचप्रतियोगिज्ञानानालिंगिताऽभावबुद्धिर्नैवोज्जृंभतइतिमहताप्रबंधेनमंजूषाकारादिभिर्बहुभिरेवव्यवस्थापितं ॥ एवंचत्वन्मतेस्थौल्यादिविशेषाणांवास्तवानांक्काप्यसत्त्वात्खपुष्पादिवत्तदारोपस्याप्यसंभवादस्थूलादिवाक्यैस्तेषांनिषेधोप्यशक्यवचनः ॥ शृंगादिकंचा-

---

## सहस्राक्ष

यत्तु प्रत्यक्षं क्वापि वेदे मिथ्यात्वकथनं नास्तीत्युक्तं तदनेनैवनिरस्तम् ॥ अधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वस्यैव मिथ्यात्वपदार्थत्वेन मिथ्यापदेनानुक्तावपि अविप्रतिपन्नरूपेण मिथ्यात्वस्योक्तत्वात् ॥ एवंच विशेषानुवादस्याभावे वायौ रूपस्य निषेधेपि तस्याग्न्यादाविव ब्रह्मणि विशेषाणां निषेधेपि प्रधानादौ तेषां सित्थ्या मिथ्यात्वाऽसिद्धे स्तवनुवादोयुक्तः ॥ ईक्षत्यधिकरणमपि ब्रह्मणि विशेषाधारत्वे सत्येव प्रधानादौ तदभावं बोधयितुमीष्टे ॥ तदाहुरध्यारोपापवादाभ्यांनिष्प्रपञ्चंप्रपञ्चयते इति ॥ ब्रह्मनिरूपकमहावाक्यप्रकरणे विशेषनिरूपणं बुद्धिसौकर्यार्थं ॥ क्वचित्तु शब्दवाक्यप्रदर्शनपरं लक्ष्यज्ञानसौकर्यार्थम् ॥ उपासनायाः प्रकरणेतु तदर्थमिति ॥ किञ्च श्रुतिषु विशेषनिरूपणाभावे निर्विशेषवाक्यानां लौकिकविशेषनिषेधपरत्वं स्यादपि सतिलौकिकविशेषद्वयस्यसमूलत्वे ॥ सतितु श्रुतिषु तन्निरूपणे नैवंभवितुंशक्यं ॥ प्रत्यासन्नप्रतियोगिनं विहायाऽप्रत्यासन्नप्रतियोगिनिषेधे न्यायविरोधात् ॥ अन्यथा नतत्ररथाइत्यनेनापि लौकिकरथादेरेवनिषेधःस्यादथरथानित्यादिनातु पारमार्थिकरथादिप्रतिपाद्येत ॥ मायामात्रंत्विति सूत्रं श्रुतिविरुद्धंस्यात् ॥ तादृशसूत्रबलेन कथंचित् श्रुत्यर्थस्यान्यथाकरणेतु इहापि प्रकृतैतावत्त्वमितिसूत्रबलेन श्रुत्यर्थोऽन्यथाक्रियेतेत्यलम् ॥

न्यत्रसदेवशशीयत्वादिनाकल्प्यते । अतएवशशशृंगंनास्तीत्यादौबौद्धार्थस्याभावोमं-
जूषादौस्वीकृतः ॥ रूपंचतेजोऽबन्नेष्वाविर्भूतमेववायौप्रतिषिध्यते तेषुरूपस्यैवप्रधा-
नादौविशेषाणाममिथ्यात्वेत्वद्वैतहानिरपसिद्धांतश्च ॥ अंतरंडाविवाहन्यायाद्ब्रह्मण्येव-
वास्तवतत्स्वीकारेसर्ववाक्यसामंजस्यं ॥ प्रधानादिकार्यगतविशेषाणामेवब्रह्मण्यस्थू-
लादिवाक्यैःप्रतिषेधइतितयुक्तं ॥ एवंचप्रधानाद्यवृत्तिविशेषानुवादकानि "आसीनोदू-
रंव्रजती" त्यादीनिनिषेधविषयातिरिक्तविषयकाणितत्तदलौकिकविशेषानेवपरस्मिन्नुप-
संहरन्तीतिनिरपराधानिबहूनितानिवृथानविप्लावनीयानि ॥ ईक्षत्यधिकरणंत्वशब्दशब्दे-
नप्रधानपरिग्रहे "तदैक्षत । सईक्षत । सईक्षांचक्रे" इत्यादिश्रुत्युक्तमीक्षणंप्रधानेप्रधा-
नगुणोपहितगौणेचप्रमाणपुरःसरंप्रतिषिध्यब्रह्मण्येवतत्सिद्धांतयतीतिचेत्नस्यब्रह्मणए-
वतादृशश्रौतविशेषाःस्वाभाविकाइतितत्रसिद्ध्यति ॥ नतुनिर्विशेषत्वं । तथासत्यन्यत्र-
तन्निरसनपुरःसरंपरस्मिन्नेवतत्स्थापनेप्रक्षालनाद्धीतिन्यायेनानौचित्यस्यानपायात् ॥
ईक्षतिसूत्रेसोऽप्यर्थोबृहद्भाष्यसंमतइतिशास्त्रार्थनिबंधादितोऽवसीयते ॥ अणुभाष्यस्थं-
मुख्यव्याख्यानमनुसृत्य बाहुमूले ॥ **ईक्षत्यधिकरणंत्वित्यादि** ॥ एतेनएवंचेत्या-
दिप्रपंच्यतइतीत्यंतमपास्तं ॥ यच्च ( ब्रह्मणिविशेषाधारत्वेसत्येवप्रधानादौतदभावंबोध-
यितुमीष्ट ) इत्युक्तं तत्तु युक्तम् । परंतुब्रह्मण्यपिविशेषाणांमिथ्यात्वकल्पनेतन्नसंग-
च्छते एकत्रारोपितविशेषाणांसत्त्वेततोन्यत्रतेषांनिषेद्धुमशक्यत्वात् ॥ आरोपाधार
त्वस्यप्रधानादौयत्रकुत्रापियथाकथंचित्संभवात् । ईक्षितृत्वादीनांप्रधानादौनिषेधे-
नब्रह्मण्यपिमिथ्यात्वेनवास्तवतयाकाप्यविद्यमानानामारोपायोगात् । अंततोगत्वा-
निरसनीयतयाप्रधानादौप्रतिषेधपूर्वकंब्रह्मण्येवतत्स्थापनार्थमधिकरणनिर्माणप्रयासे-
प्रयोजनाभावाच्च ॥ अध्यारोपापवादौतुप्रागेवव्युदस्तौ ॥ श्रुतिषुपूर्वंसामान्यतया-
धर्मनिषेधस्यततस्तत्रैवानुपदं लोकाप्रसिद्धधर्मविशेषनिरूपणस्यचसर्वत्रोपनिषत्सुप्रा-
येणदर्शनेनसूत्रकृताऽपि प्रकृतैतावत्त्वसूत्रेतथाकथनेचप्रागध्यारोपस्ततोऽपवा
दइतिपरपक्षस्यसुतरामसिद्धेरितिदिक् ॥ यच्चब्रह्मनिरूपकेत्यादितदर्थमित्यंतं त
न्न एकत्रैकस्यान्यत्रान्यस्यप्रयोजनस्यमनसैवकल्पनेऽप्रामाणिकगौरवानपाया-
त् । तथाकल्पनानांमहत्तवादादिषुसुष्ठुनिराकृतत्वाच्च ॥ तथाहितत्रारंभएवसर्व
वेदांतानांब्रह्मैकपरत्वंब्रह्मरूपस्यशब्दैकगम्यत्वंचव्यासाभिप्रेतमुक्त्वोच्यते "एवंस-
त्युपाधिपक्षस्तदास्याद्यदिश्रुतिरुपोद्बलयेत् । तदेवतावदसंभवि । यस्माद्यतो-
वाचइतिश्रुतौनवाङ्मात्राप्राप्यत्वमुच्यते । किंतुलौकिकवागप्राप्यत्वं मनःसहभा-
वोक्तेः । वेदस्यापौरुषेयत्वेईश्वरनिश्वासत्वेवामनःसहभावाभावात् । "दूतीरि-
वत्वंमनसोऽसी" तिश्रुत्यालौकिकवाचएवतथाकथनात् ॥ "अनृतंवैवाचावदति ।
अनृतंमनसाध्यायती" त्यादावपि तथादर्शनात् । अनिरुक्तश्रुतिविरोधाच्च ॥ इद-
मित्थतयाकथितस्यनिरुक्तपदार्थत्वेन तद्भिन्नस्यानिरुक्तत्वोत्सर्वथाऽनुक्तत्वस्यतेनै-

वनिरासात ॥ अतोनवाङ्निवृत्तिश्रुत्यातद्रुपोद्बलनम् ॥ किंच लौकिकवाचोऽप्राप्यैव-
निवर्तंतेश्रुतयोऽभित्वश्रुत्यनुसारेणैववदंतीत्यौपनिषदत्वमेवसंगतंभवति ननुतथा ॥
अब्रह्मपरत्वापादकत्वात् ॥ उक्तश्रुत्योर्विवादकवलितत्वेनबाधकयुक्त्यंतरंविनातद-
र्थानिश्चयेताभ्यामन्यासांश्रुतीनांतात्पर्यांतरस्याशक्यवचनत्वात ॥ नचतौल्यमिति-
वाच्यं॥ एवंचवृत्तेर्द्वैगुण्यात् नचसर्वेषांवैदिकशब्दानांब्रह्मवाचकत्वाभावात वाक्येशक्ते-
रनंगीकाराच्चनब्रु तेर्द्वैगुण्यमितिशंक्यं ॥ अग्रेऽथर्वशिखाविचारे उपपादयिष्यमाण-
त्वात् ॥ वाक्येशक्तेर्वैयाकरणसिद्धांतसिद्धत्वाच्च ॥ एवंसर्वश्रुत्यविरोधाच्च ॥ अत-
एवसत्यंज्ञानमित्यत्रलक्षणाप्यनुपपन्नैव ॥ प्रमाणाभावात् । वाक्येनयावद्यावर्त्यं-
ज्ञानाभावात्तद्यावृत्तब्रह्मणोपिज्ञानाभावेवाक्यस्याबोधकताप्रसक्तेश्च ॥ लक्ष्यत्वस्य-
वाच्यत्वव्याप्तत्वेनर्पत्युतवाच्यत्वस्यापरिहार्यत्वाच्च ॥ ननुलक्ष्यत्ववाच्यत्वयोर्नव्या-
प्तिः॥ हेतोरुपहितत्वात । लक्ष्यत्वेसधर्मकत्वस्योपाधित्वादितिचेन्न ॥ तस्यतल्लक्षणा-
नाक्रांतत्वेनप्रकृतेउपाधित्वस्याशक्यवचनत्वात् ॥ नचशुद्धेब्रह्मणिलक्ष्यत्वसधर्मक-
त्वयोः साहचर्याभावादस्त्युपाधिलक्षणाक्रांतत्वमितिवाच्यं ॥ साहचर्याभावस्याभ्यु-
पगमैकशरणत्वेनप्रतिवादिनादरणीयत्वात् । अतस्तेनैवसधर्मकत्वस्यानुमानसंभवात् ।
ततःसिद्धेःतस्मिन्तेनचवाच्यत्वेसत्यज्ञानादिपदानांतात्पर्यानुपपत्त्यभावाल्लक्षणायाबी-
जाभावेनाशक्यवचनत्वात् । लक्षणायावाशक्यसंबंधरूपत्वेनद्विनिष्ठत्वाद्धर्मापत्त्या-
घट्टकुट्यां प्रभाताच्च ॥ नचोक्तहेतोरप्रयोजकत्वंशंक्यं । व्याप्तेःसर्वजनीनत्वात् ।
यदपि किंचश्रुतिष्वित्यादि न्यायविरोधादित्यंततदपितुच्छम । विश्वतश्चक्षुरुतासीनदू-
रव्रजनादेर्लोकाप्रसिद्धतयाविशेषद्वैविध्यसमूलतासंशयस्यानौचित्यात् । ततएवनिषेधे-
षसामान्यनिषेधेनविधिषुविशेषविधानेनचभिन्नविषयतया निषेधानांप्रसिद्धविषय-
निषेधकतायाःप्रागेवव्यवस्थापितत्वाच्च ( प्रत्यासन्नप्रतियोगिनंविहायाऽप्रत्यासन्न-
प्रतियोगिनिषेधेन्यायविरोधा ) दित्युक्तिस्तुसुतरामसंगता ॥ तथासतिप्रधानस्यत-
त्कारणत्वादेश्चाश्रौततायाःकेवलानुमानिकतायाःस्मार्ततायाश्चानेकत्रसूत्रेषुकथनेनश्रु-
त्यर्थविचारशास्त्रेऽप्रत्यासन्नस्यतस्यनिषेधईक्षत्यादिबहुनराधिकरणेष्वसंगतःस्यात् ॥
किंतु श्रुत्युक्ततेजोऽबन्नलक्षणाऽजायाअन्यस्ययस्यकस्यचिद्वाश्रुत्युक्तस्यनिषेधस्ते-
षुकल्प्यतां प्रत्यासन्नत्वात् । किंच " नहिंस्यात्सर्वाभूतानी ." त्यत्रापिश्रुत्युक्त-
तयाप्रत्यासन्नस्याग्नीषोमीयादेरेवहननस्यनिषेधोवक्तव्यः । नतुलौकिकपशूनांराग-
प्राप्तहननस्य । अप्रत्यासन्नत्वात् ॥ तर्ह्यस्तुमायिकत्वस्योपाधित्वमितिचेत् । ओमिति
ब्रूमः ॥ परंसत्यज्ञानादिपदलक्ष्यत्वंकुतोऽवगतं ॥ नश्रुतेः ॥ अप्रसिद्धत्वात् । नापिश्रु-
तार्थापत्तेः ॥ परिहृतत्वात । नाप्यन्यतः ॥ लौकिकानांब्रह्मधर्मविचारेअप्रामाण्या-
त् अलौकिकानामभावाच्च ॥ अतउक्तवाक्येलक्षणानुपपन्नैवेतिदिक् " इत्यादि ॥
एवमुपासनाप्रकरणेषुविशेषाणामुपासनाद्यर्थत्वेपितेषामवास्तवत्वंश्रुत्यनभिप्रेतमेवेति

प्रहस्तत्वादभाष्यप्रकाशादिषुविस्तरेणनिर्णीतमस्माभिरपिदिङ्मात्रेणप्राग्प्रदर्शितम् ॥ ए-
वंचश्रौतपश्वालंभनमेवप्रतिषिध्ययथाकामंलौकिकपशुहननमभ्यनुज्ञातंमंतव्यंभवतीति-
महानेवोपप्लवः ॥ नचविधिवाक्यवैयर्थ्यापातान्नैवमितिवाच्यम् ॥ तर्ह्यत्रापितद्वैयर्थ्या
पातात्तथावक्तुमशक्यमित्यापत्तेः ॥ अत्रविधीनामध्यारोपार्थमनुवादकत्वेत्वग्नीषोमी
यालंभनादिविधयोपिनहिंस्यादित्यस्य प्रतिषेध्यविषयसमर्पका.प्रसंजनार्थमनुवादका-
भविष्यंति । एवं " नब्राह्मणंहन्यात् । नसुरांपिबेत् " इत्यादावपि " ब्रह्मणेब्रा-
ह्मणमालभेत " इतिविहितहननस्यैवसौत्रामणीसुराग्रहादेरेवचप्रत्यासन्नत्वात्प्रतिषेधं-
मन्यतांभवान् ॥ लोकेविद्यमानानांब्राह्मणानांद्वेषादिनाहननंलौकिकसुरायारागतोय-
थाकामंपानंचत्वाच्छंदादभ्यनुजानातु ॥ अनयादिशाऽन्यदपिदूषणसहस्रमूह्यम् ॥
यत्तुअन्यथानतत्रेत्यादिअन्यथाक्रियेतेत्यंतमुक्तं तत्तु श्रुतिसूत्रार्थाज्ञानात् ॥ त-
देतत्स्फुटयितुंमायामात्रसूत्रभाष्यस्यांशंकंचिदक्षरशोऽर्थतश्चानुवदंति **तत्रब्रूमइत्या-
दिना** ॥ अयमाशयः इदंहिवाक्यंबृहदारण्यकेषष्ठाध्यायेज्योतिर्ब्राह्मणाख्यतृतीय-
ब्राह्मणे ( पृष्ट ७५० ) " तस्यवाएतस्यपुरुषस्यद्वेएवस्थानेभवतइदंचपरलोकस्था-
नंचसंध्यंतृतीयंस्वप्नस्थानंतस्मिन्संध्येस्थानेतिष्ठन्नेतेउभेस्थानेपश्यतीदंचपरलोकस्थानं-
चे " त्युपक्रम्य " नतत्ररथानरथयोगानपंथानोभवंत्यथरथान्रथयोगान्पथःसृजत "
इत्यादिपठ्यते ॥ एतच्चचतुर्लक्षण्यां तृतीयस्यद्वितीयपादारंभेसूत्रे ( १ ) " संध्येसृष्टि-
राहहि " त्यादिचतुःसूत्र्याविचारितं ॥ तत्रस्वप्नेपरलोकस्थानामेतल्लोकस्थानांचोभ-
येषांदर्शनसंभवात्संधौभवत्वेनसंध्यत्वम् ॥ तत्रसृष्टेर्वास्तवत्वंसूत्रद्वयेनपूर्वपक्षीकृत्य-
मायामात्रादिसूत्रद्वयेनतस्याःकेवलमायिकत्वमेवनिर्धारितं ॥ एवंसति अन्यथानत-
त्रेत्यादिना यदापादितं तदिष्टापत्तितया स्वीक्रियते । नतत्ररथाइत्यादिनाहिलौकि
कावास्तवा रथादयएवस्वप्नेप्रतिषिध्यंते तेषामेवशीघ्रोपस्थितिकत्वात् ॥ नहितत्रेत्य-
नेनपरासृष्टेस्वप्नेस्वामिकानांनिषेधःशक्योवक्तुं । वदतोव्याघातापातात् ॥ अतएव-
संध्यसूत्रेश्रीमद्भाष्यकारचरणैः " नचैयमेवसृष्टिस्तत्रदृश्यते । नतत्ररथाइत्यादिना-
निषेधात् " इतिस्पष्टमुक्तम् । अग्रेपिसर्वानुभाव्यानांनिषेधोव्याख्यासुदृश्यते ॥ त-
स्मादस्मन्मतमबुध्वोत्स्वमायितं ॥ ननुप्रत्यासन्नानांस्वामिकानांनिषेधेसत्येवतेषांमि-
थ्यात्वंसिध्येत् । लौकिकानांनिषेधेतुसृज्यमानानांपारमार्थिकत्वंबाह्मसृष्टावैवतवाप-
द्येत । मायिकत्वगमकाभावात् । तथाचसूत्रविरोधइतिचेन्मैवं ॥ स्वामिकानांप्रति-
षेधप्रतियोगित्वेततएवतेषांमायिकत्वफलनेचसूत्रकाराभिप्रेतेसतिमायामात्रंतुनिषधादि-
त्येवसूत्रयेत् । लाघवात्स्पष्टश्रुत्यनुग्रहाच्च ॥ नतुगुरुनराश्रुतहेत्वंतरपर्यंतमनुधावे-
त् ॥ हेतूकरोतितुनिषेधंविहायकात्स्न्येनानभिव्यक्तस्वरूपत्वं । तस्मान्नतथा ॥
नन्वेवमपिश्रुतौसृष्टिकथनादविशेषाद्बाह्मप्रपंचवत्सत्यत्वंकुतोनापद्यतेतिचेन्न॥वैदिकैःश्रु-





त्यक्षरलभ्यस्यैवमुख्यतयामंतव्यत्त्वात् ॥ अत्रहिश्रुतौसृष्टिरेवकेवलोच्यते । ननुतेषां सत्यत्वंब्रह्मात्मकत्त्वंवा ॥ प्रपंचस्यतु श्वेतकेतुविद्यायां " तत्तेजोऽसृजत " इत्यादिनास्पष्टंसृष्टिमुक्त्वा " ऐतदात्म्यमिदंसर्वंतत्सत्यं " इति तैत्तिरीयब्रह्मवल्ल्याम् " इदंसर्वमसृजत " इतिसृष्टिमुक्त्वा " तदात्मान ँ स्वयमकुरुत । यदिदंकिंचतत्सत्यमित्याचक्षते " इति । एवमादिषुब्रह्मात्मकत्वंसत्यत्वंचानुपदमुच्यते ॥ नत्वेवंप्रकृते । तस्मान्नतथा ॥ नचविहारान्यथानुपपत्त्यासत्यताशंकयाऐंद्रजालिकनटकल्पितैःसामाजिकानामिवमहामायावित्वाद्भगवताकल्पितैर्मायिकैरेवजीवस्यविहारोपपत्तेः । तथाचायं ( अ० ३ पा २सू० ३ ) " मायामात्रंतुकात्स्न्र्येनानभिव्यक्तस्वरूपत्वा " दितिसिद्धांतसूत्रस्यार्थः ॥ भगवतोव्यामोहिकाशक्तिर्मायाप्रथमस्कंधादिषुमायांचतदुपाश्रयांययासंमोहितोजीवइत्याद्युक्तः ॥ संध्येसृज्यमानंसर्वंमायामात्रंमायैकोपादानकं तदात्मकंच ॥ मात्रपदाद्रथादिनिर्माणकाष्ठलोहादेरतत्तन्नियतोपादानस्यव्यावृत्तिः ॥ अत्रहेतुः ॥ कात्स्न्र्येनानभिव्यक्तस्वरूपत्वादिति ॥ वास्तवप्रपंचवस्तूनांस्वरूपाभिव्यक्तौकात्स्न्र्यंहिदेशःकालोविषयसंनिधिरिंद्रियव्यापारोबाधाभावश्चेतिबोध्यम् । स्वामिकवस्तूनांतुतथात्वाभावादित्यर्थः ॥ तथाहि नात्रदेशकालयोर्नियमः ॥ अल्पकालेबहुकालस्यदूरदेशस्थस्यचानुभवात् ॥ ज्योतिःशास्त्रोक्ततत्तद्देशनियतदिनमानरात्रिमानाद्यभावात् ॥ नापिविषयसंनिधिः । अतिस्थूलानांकरिगिरिसरित्पतिप्रभृतीनांशरीरांतर्मानस्यानुपपत्तेः॥ नापींद्रियव्यापारः पंग्वंधबधिरादेरपिधावनदर्शनश्रवणाद्यनुभवात् ॥ जागरोत्तरंबाधश्चस्पष्टएवतत्रैव " सयत्तत्रकिंचित्पश्यत्यनन्वागतस्तेनभवती " तिश्रुतेश्च ॥ तस्मादैंद्रजालिकसर्गादिवन्मायिकं ॥ ननुतथापिश्रुतेरत्रैवमेवाभिप्रायःकथंज्ञेयइतिचेदुच्यते तत्रैव " उतेवस्त्रीभिःसहमोदमानोजक्षदुतेवापिभयानिपश्यन् " एवमादाविवशब्दाभ्यासात्स्त्र्यादिवस्तूनांमोदनजक्षणादिक्रियाणांचप्रतीतिमात्रत्वमवास्तवत्वंचगम्यते ॥ इवशब्दोऽत्रसंभावनार्थःजुगोपगोरूपधरामिवोर्वीम् । लिंपतीवतमोंगानीत्यादिवत् ॥ किंच " तावाअस्यैताहितानामनाड्य " इतिनाडीविशेषानुपक्रम्यश्राव्यते॥ "अथयत्रैनंघ्नंतीवजिनंतीवहस्तीवविच्छाययतिगर्त्तमिवपतति॥यदेवजाग्रद्भयंपश्यतितदत्राविद्ययामन्यतेऽथयत्रदेवइवराजेवाहमेवेद ँ सर्वोस्मीतिमन्यते, सोऽस्यपरमोलोक " इत्यादि ॥ अत्रअविद्ययामन्यतइतिमध्यमणिवदुभयत्रस्वामिकस्यदुःखस्यसुखस्यचदर्शनेपूर्वापरवाक्योक्तेसंबध्यते तेनमायाहेतुकत्त्वंप्रतीतीमात्रत्वंचस्फुटमेवसिद्धं॥ परंदेहलीदीपवदुभयत्रव्याख्याशरणः संदिग्धइतितमनुक्त्वातस्यापिनिर्णायककात्स्न्र्येनानभिव्यक्तस्वरूपत्वमेवहेतुस्तयोक्तं ॥ देवताज्ञादिकंतुतत्रापिसत्यमितितुमहाभारतादिप्रमाणपुरःसरंदर्शितंप्राक् ॥ तस्मान्नैतत्सूत्रबलाच्छ्रुतिरन्यथानीयते । किंतु श्रुते गूढार्थएवसंदेहवारणायात्रसूत्रकृतोच्यते । तवतुसर्वंमायिकं

सूत्रकृतानुप्तनस्यैवतथात्वंसाध्यते ननुबाह्यप्रपंचस्यानन्ततत्रत्रविरोधःस्पष्टएव ॥
एवंसविशेषानिर्विशेषश्रुतीनामपिगूढार्थःसर्वसंदेहापाकरणपूर्वकंप्रकृतैतावत्त्वादिसूत्रैर्नि-
र्णीतइतितत्रापिनसूत्रबलाच्छ्रुतयोऽन्यथानीयंतेसूत्रार्थास्तुसंक्षेपतःप्रकाशिताःपुरैव ॥
तस्मादस्माकंनकोपिश्रुतिस्मृतिन्यायविरोधगंधोतःसकलंमंगलंनः ॥

इतिपंचमःश्लोकः ॥

अथेच विष्णौजीवगकर्तृत्वादियदिनप्राप्तमित्यादिश्लोकेन-
जीवसंबंधियत्कलादिकंतद्देवनिष्कलमित्यादिवाक्यैर्निषिध्य-
तइतिहिनदभ्युपगमस्तत्रतावत्सप्रष्टव्यःजीवगतंगतृत्वादिकं ई-
श्वरे नप्राप्तं वा प्राप्तं ॥ नाद्यः प्राप्तंहिप्रतिषिध्यतइतिन्या-
यात्प्रतिषेधएवनसंभवति ॥ यदिजीवस्य “ सर्वंखल्विदंब्रह्मे ”
त्यादिवाक्यैरभेदबोधनाज्जीवगतकर्तृत्वंप्राप्तंतदातस्यनिषेधोनुप-
पन्नः विशिष्टतद्वत्ताबुद्धेस्तदभाववत्ताबुद्धिप्रबंधकत्वादित्या-
दिदोषाउद्भाविताः ॥ अत्रोच्यते “ एतस्यैवानंदस्यान्यानिभूता-
निमात्रामुपजीवंति ॥ आसीनोदूरंव्रजती ” तिवाक्यपर्य्या-
लोचनया “ निष्कल ” मित्यादिनिषेधवाक्यानांसामान्या-
भावबोधकानामप्युपसंहारेणविशेषाभावबोधकत्वमितिपूर्वमु-
क्तंतत्रविशेषाभावस्यापिविशेषनिषेधरूपस्यतत्प्राप्तिसापेक्षत्वा-
द्विशेषप्राप्तिरपेक्षितेतिचेदित्थं कार्य्यकरणयोरभेदात्कार्य्ययो-
र्जडजीवयोर्धर्माअपिकारणेस्युरित्यापाततःकार्य्यधर्माणांलौ-
किकत्वादीनांकारणेप्राप्तानांप्रतिषेधःक्रियते ॥ नचकार्य्यकार-
णयोरभेदेकार्यगतधर्माणांकारणेसत्वात्तन्निषेधोनसंभवति पू-
र्वोक्तप्रतिबध्यप्रतिबंधकभावानुरोधादितिवाच्यं ॥ सत्यमस्त्य-
भेदस्तथापिकार्य्यकारणभावकृतोभेदोपिभगवद्विहारार्थंजातः

स्वीक्रियतेन्यथेदंकारणमिदंकार्य्यमितिव्यवहारोनस्यात्॥ वैलक्षण्यंविनाताद‍ृशव्यवहारासंभवात् ॥ यथा घटगतकंबुग्रीवादिमत्वजलाहरणोपयोगित्वादीनांमृदिनिषेधस्तथालौकिकधर्माणांब्रह्मण्यपिनिषेधे नकोपिविरोधः ॥ तद्वत्ताबुद्धेस्तदभाववत्ताबुद्धिप्रतिबंधकत्वं यदुक्तं तदपि नसंभवति ॥ भूतलादावेकत्रघटादिनिश्चयेऽपितद्भिन्नस्थलेतदभावबुद्धिर्जायतएव ॥ एवंपर्वतत्वसामानाधिकरण्येनवह्निमत्तानिश्चयसत्वपितत्सामानाधिकरण्येनतदभाववत्ताबुद्धेरुत्पादस्यद‍ृष्टत्वान्नताद‍ृशप्रतिबध्यप्रतिबंधकभावःसंभवति किंतुतद्धर्मपर्य्याप्तावच्छेदकताकविशेष्यतानिरूपिततद्धर्मव्यापकप्रकारीभूतपदार्थप्रतियोगिकतत्संबंधावच्छिन्नतद्धर्माच्छिन्नप्रकारताशालिनिश्चयस्तद्धर्मावच्छिन्नतत्संबंधावच्छिन्नप्रतियोगिताकाभावप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिबुद्धिंप्रति प्रतिबंधकः सचनप्रकृतेस्तीति ॥ केचित्तु प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यारोपोभावप्रत्ययहेतुः ॥ अतएव संसर्गारोपजन्यप्रतीतिविषयाभावएव संसर्गाभावउच्यते तथाच जीवब्रह्मणोरभेदेजीवगतधर्माणांब्रह्मणिप्राप्तिरूपआरोपोऽभावरूपनिषेधोपयोग्येवेतिनकाचिदनुपपत्तिरित्याहुः ॥ यत्तु ( अन्यथानेतिनेतीतिवाक्यैर्लौकिकजगतस्तत्रनिषेधेयतोवाइत्यादिवाक्यैरानंदमयस्यजगतःस्वीकारस्तत्रत्वन्मतेस्या) दित्यादिप्रलपितंतदपिपरमताज्ञानमूलकत्वात्तुच्छं॥ नहिनेतिनेतीतिवाक्यैर्लौकिकजगतोनिषेधःपैररभ्युपगतस्तथाहिबृहदारण्यकेमूर्त्तामूर्त्तब्राह्मणे "द्वेवावब्रह्मणोरूपे" इत्युपक्रम्याधिदैवताध्यात्मभेदेनद्वे-

धापंचभूतान्युक्त्वा " अथातआदेशोनेतिनेती " तिनिषेधमाह॥
तत्रकिंद्वौनञौप्रकृतमर्थंगमयतइतिस्थापनमात्रंद्वयोःक्रियते कि-
वा वीप्सयासर्वंपूर्वोक्तंनिषेधति उत रूपद्वयमेवनिषेधति अं-
थवा पूर्वप्रतिषेधोभूतराशिंनिषेधति द्वितीयोवासनाराशिम्-
इत्यादिशंकायांश्रुतिःस्वयमेवविवृणोति ॥ " नह्येस्मादितिने-
त्यन्यत्परमस्ती " ति ॥ अत्रव्याख्येयेवाक्ये अथशब्दःप्र-
क्रमभेदकः अतइतिहेतौपंचमील्यब्लोपेवा उक्तंरूपद्वयंहेतूकृ-
त्यआदेशः ताभ्यांकार्य्याभ्यांरूपाभ्यांज्ञाप्यस्यब्रह्मणउपदेशः ॥
नेतिनेतीतिपूर्वइतिशब्दःप्रकारवाचीतथाचसमवायित्वाद्ब्रह्मपंच-
भूतानिभवति इतिनएवंप्रकारकंनेत्यर्थः॥ तदेतद्व्याख्यानेनसाध-
यतिनह्येतस्मादित्यनेन नभवत्येवब्रह्मतादृशं ॥ हियुक्तोयमर्थः-
युक्तत्वेहेतुःएतस्मादिति यतएतस्माज्जातंतत् ॥ नहिकार्य्यकार-
णयोरेकःप्रकारःसंभवति अतोव्याख्यानात्प्रथमेननेतीत्यनेनप्र-
कारनिषेधोपसंहारः॥ द्वितीयंनेतीतिव्याख्याति अन्यत्परमस्ती-
ति भिन्नप्रकारत्वेपिनतुसमवायित्वमात्रं किंत्वन्यत्परमस्ति ॥
तथाच द्वितीयेननेतीत्यनेन एतावत्तानिषेधोपसंहारः ॥ तथा-
चात्रनसर्वनिषेधोनापिरूपद्वयनिषेधःयदिसर्वस्यैवजगतोनिषेधः-
स्यात्तदाव्युत्पादनपूर्वकंप्रतिपादनंव्यर्थंस्यात् ॥ अतः प्रकारैता-
वत्तयोरेवनिषेधः ॥ एवंचनेतिनेतीतिवाक्यैर्जगतोनिषेधे यतो-
वाइत्यादिना आनंदमयस्यजगतःस्वीकारापत्तिरित्यादिप्रला-
पस्य कोऽवसरः ॥

सहस्राक्षेविष्णौजीवगकर्तृतादीतिषष्ठंश्लोकमिदानीमुक्तन्यायमित्यादिनासर्वात्मेतीत्यं
तेनव्याख्यानेनसहितं ॥ **अग्रेचविष्णावित्यादिना अवसरएवनास्तीत्यंने-**
**न** खंडयिष्यंतः प्रथमं इदानीमित्यादितन्न्यायावतारइत्यंतंभागंपरिहरंति ॥ **अग्रेचे-**
**त्यादिनाकोवसरइत्यंतेन** ॥ अत्रेदंज्ञेयंप्रथममस्मदनुवादोऽस्मन्मताज्ञानात् ॥ अ-
स्माभिर्जडसंबंधिकलायानिष्कलवाक्येनप्रतिषेधस्यांगीकारेपिजीवसंबंधिगंतृत्वस्यासी-
नपदेन प्रतिषेधोनस्वीक्रियते ॥ किंत्वासनदूरव्रजनयोर्युगपदेकस्मिन्विरुद्धयोरपिवि-
चित्रशक्तिमत्यलौकिकेब्रह्मणिसदासत्वमात्रंतनकठवाक्येनबोध्यते ॥ जडसंबंधिक-
लातुस्वाधारेन्यूनत्वापादिका ॥ काष्ठपाषाणादेःकस्मिंश्चिदंशेपृथग्भूतेऽवयविनिता-
वदंशन्यूनतादर्शनात् ॥ नतथाब्रह्मणिबव्हंशोद्गमेपिन्यौन्याभावात् ॥ अतएवसूत्र
कताद्वितीयस्यप्रथमेकार्यकारणभावविचारे ( सू॰ २६ ) " कृत्स्नप्रसक्तिर्निरवय-
वत्वशब्दकोपोवा " इतिपरिणामवादे " निष्कलंनिष्क्रियं ॥ दिव्योह्यमूर्तः " इ-
त्यादिरूपस्यैवशब्दस्यकोपमप्याशंक्य ( सू॰ २७।२८ ) " श्रुतेस्तुशब्दमूलत्वात् ॥
आत्मनिचैवंविचित्राश्चहि " इतिवेदैकवेद्यत्वाद्विचित्रशक्तिकत्वाच्चब्रह्मणःसमाहितं ॥
तेनशब्दबोधितविभागादिकंननिष्कलमित्यादिनिषेधस्यविषयःअपितु लोकेजडादिषु-
दृष्टमेवतत्तस्यविषयइतिसिध्यति ॥ तस्मादस्माकमसंमतमनूद्यते ॥ अतोजीववत्क-
र्तृत्वंपरस्यनिरस्यतइत्यत्र " नतस्यकार्यं " मित्याद्युदाहार्यं ॥ यच्चतत्रतावदित्या-
दिनिषेधासंभवादित्यंतंतन्न ॥ अप्राप्तस्यापितावत्प्रतिषेधादृश्यंते ॥ यथा " नपृथि-
व्यामग्निश्चेतव्योनांतरिक्षेनदिवि " इत्यादयः ॥ अतएवजैमिनिनाप्रथमस्यद्वितीये
( सू॰ ५ ) अभागिप्रतिषेधमुक्त्वा ( सू॰ १८ ) " अंत्ययोर्यथोक्तं " इत्यप्रसक्तप्र-
तिषेधःस्वीकृतः ॥ अंत्ययोरभागिप्रतिषेधानित्यसंयोगयोरित्यर्थः ॥ स्पष्टंचे-
दंतत्रशाबरभाष्ये " असतिप्रसंगेप्रतिषेधोनित्यानुवादः " इति ॥ अथसि-
द्धांतरीत्यादेवादीनामपिव्यासेनकर्माधिकारस्य ( अ॰ १ पा॰ ३ सू॰
२६ ) " तदुपर्यपी " त्यादिनास्वीकारात्तेषांप्राप्तस्यचयनस्यायंप्रतिषेधइत्यस्म-
दाचार्यकृतपूर्वमीमांसाभाष्यानुरोधादुच्येत तदापिप्रकृतेनदोषः प्राप्तेःसत्त्वात् ॥
तथाहिलोकेऽवगतसामर्थ्यःशब्दोवेदेपिबोधकइतिभट्टवार्तिकानुसरणेलोकेगृहीतशक्ति-
कानामेवशब्दानांवेदेप्यर्थबोधजनकत्वदर्शनेननिषेधाभावेसतिवेदेनबोध्यमानंपरस्य-
कर्तृत्वादिकमपिवस्त्वंतरसमवधानसापेक्षंपरिच्छिन्नमेवावधार्येत जीवेतथैवदर्शना-
त् ॥ अतःप्राप्तानामेवजडजीवधर्माणांलौकिकार्थसंभवच्छक्तिकानेवशब्दानुच्चार्यप्रति-
षेधः " अस्थूलमनणु नतस्यकार्यं " इत्यादिनाकृतः ॥ तेनालौकिकानामप्रतिषि-
ध्यमानानांसर्वकर्तृत्वविश्वतश्चक्षुष्ट्वात्यणीयस्त्वातिमहीयस्त्वादीनांनहानिः ॥ प्रसक्तं
हिप्रतिषिध्यतइतिन्यायेप्रसक्तंप्रसंजनार्हमितिमंजूषाकारादयोव्याचक्षते ॥ ननु स-
र्वंखल्वित्यादिवाक्यैरभेदस्यबोधनेनजडजीवधर्माअपिब्रह्मधर्माब्रह्मरूपाएव ॥ अतो-

विशिष्टतद्वत्ताबुद्धेस्तदभाववत्ताबुद्धिप्रतिबंधकत्त्वात्कथंनिषेधइतिचेन्नसत्यंकार्यधर्मा-अपिब्रह्मधर्माएवपुष्पादिगंधाइवभूगंधाः ॥ स्पष्टंचेदं ( अ० २ पा० ३ सू० ४१ ) "परात्तुतच्छ्रुतेः" इत्यधिकरणेब्रह्मगतकर्तृत्वस्यांशएवजीवेऽनुवृत्तइति तथापिब्रह्मा-साधारणधर्माअपरिछिन्नानिरस्तसाम्यातिशयाजडजीवयोर्नसंतीतितेषामसाधारण्य-स्थापनायलौकिकानांप्रतिषेधःसंगतः ॥ सचब्रह्मधर्मेषुतावन्मात्रत्वंनिराकर्तुमेवप्रवृ-त्तोनतुकार्यधर्माणांसर्वथाब्रह्मावृत्तित्वंब्रह्मभिन्नत्वंवासाधयितुं ॥ यथासप्तमस्कं-धाष्टमाध्याये ( श्लो० १८ ) अदृश्यतात्यद्भुतरूपमुद्वहन्मध्येसभायांन-मृगंनमानुषम्इतिमृगत्वमानुषत्वयोःप्रतिषेधःअग्रेहिरण्यकशिपुनाकृतो. ( श्लो० १९ ) "नायंमृगोनापिनरः" इतितयोःप्रतिषेधश्चान्यतरमात्रत्वमपाकर्तुमेव-नतुसर्वथातत्रतदभावंबोधयितुं ॥ विचित्रमहोकिमेतन्नृमृगेंद्ररूपमित्याद्यग्रिमग्रं-थविरोधात्किंतुलोकेनियतव्यधिकरणतयाविरुद्धयोरपितयोस्तस्मिन्रूपेसमावेशोद-

---

## सहस्राक्ष.

विष्णौ जीवगकर्तृताद्वि यदी नप्राप्तं निषेध्यं कथं
प्राप्तं चेत्प्रतिबन्धतोन तदसत्ताधीर्न योगान्तरैः ॥
सर्वैरेव हरौ यतस्तव जगद्योगैः समस्तात्मनि आ
विर्भावनिषेधने क्व सनचेत्सर्वात्मसर्वाश्रये ॥ ६ ॥

इदानीमुक्तन्यायमनाश्रित्याऽपि निर्विशेषश्रुत्यादे र्युक्त्यन्तरेण तदुक्तार्थपरत्वं खण्डयति ॥ विष्णाविति ॥ जीवादिसंबन्धि यद्गन्तृत्वकलादि कं तदेवासीनोदूरंव्रजति-निष्कलमित्यादावासीनादिपदैर्निषिध्यते इतिहि तदभ्युगमस्तत्र तावत्सप्रष्टव्यः किमिदंजीवा-दिगतगन्तृत्वादिकम् ईश्वरे न प्राप्तम् उतप्राप्तं नाद्य इत्याह ॥ यदिनप्राप्तमिति ॥ प्रसक्तंहि-प्रतिषिध्यतेइतिन्यायादिति भावः ॥ जीवेत्युपलक्षणं जडस्यापि ॥ ननुसर्वंखल्विदंब्रह्मेत्या-दिभिः सर्वाभेदबोधकैर्वाक्यैर्जगदिव तदन्तःपातिजीवादिसंबन्धिगन्तृत्वादिकमपि प्राप्तमेवेति-कुतोनेत्युच्यते इति द्वितीयपक्षमाशङ्कयाह ॥ प्राप्तंचेदिति ॥ प्रतिबन्धतइति ॥ विशिष्टत-द्वत्ताबुद्धेरतदभाववत्ताबुद्धिप्रतिबन्धकत्वात्सर्वं खल्विति सर्वशब्देन विशिष्य तत्तद्धर्मोपादा नेनाऽभेदबोधने तन्निषेधासम्भवात् ॥ अन्यथा नेतिनेतीतिवाक्यैर्लौकिकजगतस्तत्र निषेधे यतोवाइत्यादिवाक्यैरानन्दमयस्यजगतः स्वीकारस्तत्र त्वन्मते स्यात् ॥ द्विविधवाक्यबलेन गन्तृत्वादेरिव जगतोऽपि द्वैविध्यसंभवात् ॥ ओमितिचेत् लौकिकजगतःकिमुपादानं ॥ ब्रह्मैवेतिचेत्तत्रनिषेधानुपपत्तिरतएवनजगद्विषयेद्वैविध्यकल्पनेति चेद्गन्तृत्वादिषुजीवधर्मेषुत-न्न्यायावतारः ॥

शितः ॥ नह्यनूनशुष्केणनचार्द्रेणेत्यादिवच्चलोकेऽप्यधिकरणतयानिश्चितानामपि-
सर्वधर्माणांब्रह्मणिसामानाधिकरण्यमस्थूलमित्यादिनिषेधाशयगोचरः ॥ एतेना-
पितदीयपूर्वश्लोकोक्तंसर्वत्रनञःस्वान्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभाव-
बोधकत्वंपुनरपास्तंवेदितव्यं ॥ केननृसिंहादावार्द्रत्वशुष्कत्वनरत्वमृगत्वादेःसा-
मान्याभावस्याशक्यवचनत्वात् ॥ अतएवगजेंद्रस्तवादौनस्त्रीनषंढइत्यादिनातत्त-
च्छात्रत्वंप्रतिषिध्यानिषेधशेषस्याशेषरूपत्वमुक्तमित्यादिप्रागेवप्रापंचि ॥ अतःका-
र्यरूपैकांशावच्छेदेनकार्यधर्माणामपिब्रह्मण्येवसत्वेतेषामपिब्रह्मरूपत्वेचनकोपिशंका-
वकाशः ॥ नाप्युक्तप्रतिबंधतःप्रतिषेधासंभवः ॥ अग्रावच्छेदेनकपिसंयोग-
वत्ताबुद्धेर्मूलाद्यवच्छेदेनतदभाववत्ताबुद्धिप्रतिप्रतिबंधकत्वाभावात् । इमेपरमाणवोन-
शतंनसहस्रंकिंत्वसंख्याताइत्यादिप्रतिषेधदर्शनाच्च ॥ एवंसिद्धांतसंमतोवृद्धिह्रास-
भाक्त्वमक्तैतावत्त्वोभयव्यपदेशादिसूत्रसिद्धस्तदविरोधप्रकारउक्तः ॥ कार्यधर्मा-
णांब्रह्मधर्मांशत्वादेवबृहदारण्यके ( अ० ६ ब्रा० ३ पृ० ८१६ ) " एत-
स्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति " इत्यादिश्रुतयःसंगच्छंते ॥
मूलेतुमध्यमाधिकारिबोधनायैकदेशिसंमतंपंचसूत्रीसिद्धंजडजीवधर्मयोःसर्वथाब्रह्मण्य-
सत्वपक्षमपिएकोकृत्यपरोक्तंपरिहरंति ॥ **इत्थमित्यादिना** ॥ **यथाघटगतेति**
तत्संस्थानविशिष्टायामृदएवतेधर्माइतिमृत्सामान्यसाधारणधर्मत्वाभावादेवमृदितन्निषेध-
इतिभावः ॥ **तद्धर्मपर्यासेत्यादि** ॥ यथापृथिवीसमवायेनगंधवतीतिनिश्चयः
सासमवायेनगंधाभाववतीतिबुद्धेःप्रतिबंधकः ॥ अत्रपृथिवीत्वधर्मपर्याप्तावच्छेदक-
ताका या पृथिवीनिष्ठाविशेष्यतातन्निरूपितापृथिवीत्वव्यापकःप्रकारीभूतोगंधपदार्थः
प्रतियोगीयस्मिंस्तादृशेनसमवायसंबंधेनावच्छिन्ना या गंधत्वावच्छिन्नाप्रकारता-
तच्छालीपृथ्वीसमवायेनगंधवतीतिनिश्चयउक्तविधाभावप्रतिबंधकः । पदकृत्यंतुप्रासं-
गिकविस्तरभियानचिंत्यते ॥ **केचित्त्विति** नव्यामंजूषाकारादयः ॥ अब्राह्मणइ-
त्यादौयथाब्राह्मण्यारोपस्तदभावप्रत्ययहेतुः ॥ नेदंरजतमित्यादौचरजतारोपस्तद्धे-
तुरित्याद्युदाहार्यम् ॥ यत्तु अन्यथेत्यादिन्यायावतारइत्यंतं तदप्येतेनैवनिरस्तम् ॥
नेतिनेतीतिवाक्यस्यप्रागुक्तार्थपरतयाजगन्निषेधकत्वाभावेनलौकिकालौकिकधर्मवत्-
जगतोद्वैविध्यंयतोवाइत्यादिवाक्यनिर्वाहार्थंनस्वीकार्यं ॥ धर्मभेदस्तुविधिनिषेधवा-
क्यसहस्राविरोधायसूत्रकृतैवप्रकृतैतावत्त्वमित्यादौसिद्धांतितः अतोनतत्रतन्न्यायाव-
तारःशक्यः ॥ किंच कदाचित्सर्वमात्मैवभवतीहजनार्दनइत्यादावानंदांतराभावा-
दिरहितोऽलौकिकोलीलासर्गोऽस्माभिरङ्गीक्रियते परंलौकिकस्याप्युपादानंब्रह्मैव नि-
षेधोपपत्तिस्तूक्तदिशैव अतोऽस्मन्मतमज्ञात्वाऽनेकधोक्तिःप्रलापएव ॥ तदेतदाहुः ॥
**यत्तुअन्यथेत्यादिना** ॥ अत्र ( अ० ३ पा० २ सू० १७ ) "दर्शयतिचाथोअपि-
स्मर्यते " इतिसूत्रस्थंभाष्यंप्रकाशंचावलंब्याहु **बृहदारण्यकइत्यादि** ॥ इदंच-
प्रायेणव्याख्यातचरं ॥

यदपि ( येनसंबंधेन हरौ जडजीवधर्मानिषिध्यंतेसस्सं-बंधश्चेद्धरौनास्तितर्हिसर्वात्मत्वहानि ) रित्यादिकमुक्तं तदपि नसाधीयः ॥ कारणात्मकत्वेनकारणधर्माःकार्येभवंत्येव ॥ कारणस्यकार्यात्मकत्वंकार्य्यानुवृत्तत्वंचसर्वैःस्वीक्रियते ॥ न-पुनःकार्य्यस्यकारणात्मत्वं तस्यव्यावृत्तत्वात् ॥ अतःकार्य्य-धर्मानकारणआपादयितुंशक्याः ॥ अन्यथा यथा ब्रह्मसत्ता-घटादिषुस्वीक्रियतएवंघटगतमिथ्यात्वमपिब्रह्मणिस्त्वन्मतेकथंन स्यात् ॥ यदपि ( नहिघटसंयोगवतिभूतलेसंयोगेन घटोन भवति नवा तत्रसंयोगेन घटोनास्तीतिप्रमाभवती ) त्याद्यु-क्तं तदपि तदास्यात् ॥ यदि तत्संबंधवत्ताबुद्धेस्तत्संबंधाव-च्छिन्नप्रतियोगिताकतदभाववत्ताबुद्धिविरोधित्वंनियमतःस्या-त् ॥ तदेवनसंभवति आकाशसंयोगस्यभूतलादौसत्वेपितद-भावस्यतत्रविद्यमानत्वादन्यथातस्यकेवलान्वयित्वंनस्यात् ॥ तथाच तत्संबंधवत्ताबुद्धिसत्वेपितत्संबंधावच्छिन्नतदभाववत्ता-बुध्युत्पादेनतादृशनियमोप्रामाणिकएवेत्यवधेयं ॥ ( ननु जी-वधर्माःसंत्येव हरौ तेषामाविर्भावस्तत्र निषिध्यत ) इत्या-दिकंत्वनभ्युपगमरास्तं ॥ जीवधर्माब्रह्मण्यस्माभिर्नाभ्युपगम्यं-ते मुख्यसिद्धांतरीत्यातत्रकार्यधर्माणामभ्युपगमेपितदुक्तदो-षस्यावसरएवनास्ति ॥

## टीका

सहस्राक्षेननुजीवेत्यादिसर्वात्मितीत्यंतंभागंदूषयंतियदपियेनेत्यादिनाअवसर-

**एवनास्तीत्यनेन कारणात्मत्वमिति** निःशेषत्वकारणरूपत्वम् ॥ कारणाभेदस्तुतत्रास्त्येव ॥ **तदभावरूपेति** ॥ संयोगसंबंधावच्छिन्नप्रतियोगिताकस्याकाशाभावस्य ॥ भूतलेघटादेरिवाकाशस्यसंयोगेनसत्वंनप्रतीयतइतिभावः **अन्यथेति** आकाशस्यभूतलादिनिरूपिताधेयत्वे ॥ **तस्य** आकाशस्यइतरत्सुगमं ॥ एतत्सर्वंपंचसूत्रीदर्शितमतंभेदाभेदपक्षंचपुरस्कृत्ययक्षबलिन्यायाभ्युपायादुक्तम् ॥ ( अ० ३ पा० २ सू० १९ ) " अंबुव" दित्याद्यधिकरणसिद्धेमुख्यसिद्धांतेतुशंकैवानवकाशा ॥ तथाहिननुजीवेत्यादिकंनिषेधादित्यंतंत्वसंगतंपटाद्युपादानस्यतंत्वादेर्धर्मित्वेपिपटादिसमवेतरूपनिष्ठधर्मतानिरूपितधर्मितायास्तत्राभावात्धर्मधर्मिभावेनपटरूपादेस्तंत्वादिषुनिषेधेपिपारंपरिकोपादानतायानिषेद्धुमशक्यत्वात ॥ किंच ननुजीवेत्यादिनोक्तमस्माभिस्तुनैवोच्यत इतिकिमनेन ॥ त्वयैवब्रह्मणिविशेषाणांधर्मधर्मिभावेननिषेधोविशेषनिरूपिनमप्यधिष्ठानोपादानत्वंतत्रैवसमर्थनीयमितिचिंत्यतां ॥ ब्रह्मणिविशेषाणांनिषेधेपिकिमप्रामानामतप्रामानांआद्येत्वदुक्तदोषःद्वितीयेनिषेधासंभवइत्यादित्वन्मतेप्यूह्यम् ॥ यश्चपरिहारःक्रियेतसोस्मन्मतेपिमायःसंगच्छेतेतियत्रोभयोःसमोदोषइतिन्यायावतारः ॥ अथभवताकथमुच्यतइतिचेतइत्थं ॥ ब्रह्मणएवैजनादयोजीवेवनेजनादयोजडेषुचेतरधर्मतिरोभावपुरःसरमनुवृत्ताइनितत्तत्कार्येषनत्तद्धर्ममात्रदर्शनात्लोकेनियतव्यधिकरणतयागृह्यमाणाभगवदिच्छयापरिच्छिन्नास्तेतेधर्मास्तत्तत्कार्यासाधारणधर्मतयाव्यवह्रियंते ॥ भगवतितुतएवापरिच्छिन्नाःस्वाभाविकावस्तुसामर्थ्यादविरो-

---

## सहस्राक्ष.

ननु जीवधर्माउपादानोपादेयभावेनेश्वरे सन्ति धर्मिधर्मभावेन तत्र निषिध्यन्ते तत्राह मयोगान्तरैरिति ॥ उपादानस्यापि धर्मित्वेन धर्मिधर्मभावेन निषेधे उपादानतयाऽपि निषेधात् ॥ किञ्च येन संबन्धेन निषिध्यन्ते ससंबंधश्चेद्धरौ नास्ति तर्हि सर्वात्मत्वहानिर्यद्यस्ति तर्हि तेन निषेधानुपपत्तिस्तेन सबन्धेन जगतस्तत्रसत्वात् ॥ नहि घटसंयोगवति भूतले संयोगेन घटोन भवति नवा तत्रसंयोगेन घटोनास्तीति प्रमाभवतीत्याह ॥ समस्तात्मनीति ॥ समवायाङ्गीकर्तृमतेतु येन संबन्धेनेत्यस्य स्थाने यन्निरूपितत्वविशिष्टेन येन संबन्धेनेतिनिवेश्यम् ॥ ननु जीवधर्माः सन्त्येव हरौ तेषामाविर्भावस्तत्रनिषिध्यते यतस्ते जीवे आविर्भूतास्तिष्ठन्ति तत्राह ॥ आविर्भावेति ॥ सःआविर्भावः यदा सर्वस्य सएवाश्रयस्तदा तत्रासत्त्वे कसत्त्वंस्यात् ॥ तस्य सर्वाश्रयत्वेन आविर्भूतानामपि तत्र सत्वाभ्युपगमस्यावश्यकत्वमितिभावः ॥ किञ्च जीवे तत्सत्त्वे सुतरामीशे तत्सत्त्वं जीवस्यैशादभिन्नत्वादित्याह ॥ सर्वात्मेति ॥

धेनसमानाधिकरणाः " तदेजतितन्नैजति । सर्वकामःसर्वगंधःसर्वरस " इतिवेदा-दिवर्णिताःसंति ॥ एतदेवब्रह्मणोविरुद्धसर्वधर्माश्रयत्वंनाम ॥ अतःकार्यधर्माअपिव-स्तुतोनाब्रह्मधर्माब्रह्मभिन्नावा ॥ तेषांप्रतिषेधस्तुकार्येष्विवतन्मात्रपरिच्छिन्नधर्मकत्वं-ब्रह्मणिवारयितुमितिकार्यधर्माब्रह्मासाधारणधर्मानभवंति ॥ तेननायंभग्नोनापिनरोन-शुष्केणनचार्द्रेणेत्यादिवत्सर्वधर्माश्रयत्वसिद्धिरित्युक्तंप्राक् ॥ यथाच नेमेपंचाशतुनश-तंकिंतुसहस्रमित्यादौपंचाशत्त्वादयः पंचाशदादिषुपर्याप्तिसंबंधेनविद्यमानास्तेनैवसंबं-धेनसहस्रेप्रतिषिध्यंते ॥ तथाकार्यधर्माः कार्येषुब्रह्मांशभूतेषुपर्याप्तिसंबंधेनासा-धारणधर्मतयाविद्यमानाब्रह्मणितेनैवसंबंधेनतदसाधारणधर्मत्वेनचप्रतिषिध्यंतइतिनि-गर्वःसमंबंधोपिब्रह्मानतिरिक्तःपरंसंबंधत्वेनकार्येष्वेवानुभूयते उक्तदृष्टांतवत् ॥ अ-तोनसार्वात्म्यहानिः ॥ एतेनकिंचयेनेत्यादि तत्रसत्वादित्यंतमपास्तं ॥ अ-ग्रावच्छेदेनकपिसंयोगवत्यपिवृक्षेमूलावच्छेदेनसंयोगेनकपिर्नास्तीतिप्रमैवातोनहिघटे-त्यादिकमप्यकिंचित्करम् ॥ तार्किकवत्समवायंतुनवयंस्वीकुर्मः ततःसमवायांगी-कर्तृमतइत्यादिप्रलापमात्रं तच्छब्दद्वयाभावादर्थसंगत्यसंभवाच्च ॥ किंच का-र्याविर्भावांगीकारात्तत्कार्येषुकार्यासाधारणधर्माविर्भावःशक्यवचनः ॥ तत्रैवासाध-रणधर्मत्वेनतेषांप्रतीतेः ॥ यद्यपिसर्वाश्रयत्वात्तत्तद्धर्माविर्भावस्यापितत्तत्कार्यरूपो-भगवानेवाश्रयस्तथापिकारणभूतेसकलेब्रह्मस्वरूपेतदनाविर्भावात्तत्रिस्तद्धर्मनिषेधो-व्याघटीति ॥ नृसिंहेभग्नत्वादेरसार्वत्रिकत्वेनतत्रनायंभग्नइत्यादितन्निषेधवत् ॥ ए-तेननन्वित्यादिइतिभावइत्यंतंनिराकृतं ॥ किंचजीवगतयावद्धर्माणांब्रह्मनिष्ठत्वां-गीकारेतद्गतव्यामोहादिकमभेदवादिनस्तवापिविशुद्धचिदाख्येपरस्मिन्नापद्येत ॥ क-थंचिद्देदमंगीकृत्यासमाधानेत्वन्मतेपिसमःसमाधिः ॥ वस्तुतस्तुचक्षुरादित्ययोरंशां-शिभावेनाभेदेपिलोचनगोचरतिमिरकामलादिमलानामंशुमालिन्यऽमालिन्यजनकत्ववत्-तजीवगव्यामोहादीनांपरोपरोधासामर्थ्यसंभवत्येव ॥ अतएवसूर्योयथेत्याद्याःक-ठादिश्रुतयः ( अ० २ पा० ३ सू० ४६ ) " प्रकाशादिवन्नैवंपरः " इ-त्यादीनिचसंगच्छेरन्नितिपुरस्तात्प्रपंचयिष्यामः तदेतदनुसंधायाहुःमुख्यसिद्धां-तेति एतेनकिंचजीवइत्यादिसर्वंदत्तोत्तरमत्रश्लोके ( समस्तात्मनिसर्वात्मस-र्वाश्रये ) इत्यादिपुनरुक्तिः ( समस्तात्मनिआविर्भावे ) त्यत्रश्लोकेविद्वद्भिर-नादतोऽविवक्षयासंध्यभावश्चिंत्यःजगद्योगीरत्यत्रजगद्योगइतियुक्तंभातिअन्यथाय-तइतिक्रान्वियात्तुआस्तांवाजगदितिच्छेदेनसमाधिः ॥ एवमेतच्छ्लोकखडनेनप्रागुक्ता-विधिनिषेधवाक्यव्यवस्थापुनःसमर्थिताज्ञेयाइतिषष्ठश्लोकखंडनम् ॥ ६ ॥

अग्रेच नात्माणुश्रुतितइतिश्लोकेनात्मनोऽणुत्वंनसंभवती-त्युक्तं तत्रब्रूमः ॥ आत्मनोऽणुत्वमेव ." एषोणुरात्माचे-

तस्मावेदितव्यः बालाग्रशतभागस्यशतधाकल्पितस्यचभागो-
जीवःसविज्ञेयः सचानंत्यायकल्पत ” इत्यादिश्रुतिभ्यस्तथै-
वावगमात् ॥ ननु “ सवाएषमहानजआत्मायोऽयं-
विज्ञानमयःप्राणेषु ” इत्यादिश्रुत्यामहत्वप्रतिपादनात्कथम-
णुत्वं महत्वस्याणुत्वविरुद्धत्वादितिचेन्न ॥ तद्वाक्यंब्रह्मपरं
नजीवपरं ॥ तत्रचप्रकरणंब्रह्मणः ॥ अतएव “ तस्मादेवं-
विच्छांतोदांत ” इत्यादिना “ आत्मन्येवात्मानंपश्ये ”
दित्युपक्रम्य पठितं ॥ तदग्रेच “ ब्रह्मेदंक्षत्र ” मित्याद्युक्त्वा-
“ इदंसर्वंयदयमात्मे ” तिपठ्यतेतस्मात्तादृशवाक्यस्यान्यपर-
त्वान्नविरोधः ॥ ननुतादृशवाक्यस्यब्रह्मविषयत्वंनसंभवतिब्रह्म-
णिप्राणहृदयविज्ञानानामसंभवात् विज्ञानंहिबुद्धिः प्राणादि-
सहचारात् हृदयस्थानालिंगाच्च जीवविषयलिंगस्यप्रकरणापे-
क्षयाबलवत्वान्न तेन ब्रह्मविषयत्वंव्यवस्थापयितुंशक्यतेऽत-
एवोक्तंपूर्वकांडे“श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानांसमवा
ये पारदौर्बल्यमर्थविप्रकर्षा ” दिति ॥ “ आलोमभ्यआनखा-
ग्रेभ्य ” इतिश्रुतेश्चेतिचेन्मैवं “ योयंविज्ञानमय ” इति-
श्रुतौविज्ञानमयशब्दोविज्ञानप्राचुर्य्यमाह ॥ तच्च ब्रह्मण्येवसं-
भवति नजीवे तस्याल्पविज्ञानाश्रयत्वात्ब्रह्मचप्रज्ञानघनत्वेन-
“ यथासैंधव ” इत्यादिश्रुतौश्रुतं एवंप्राणेषुस्थितिरपिब्रह्मध-
र्मएव “ यःप्राणेषुतिष्ठन्नित्यादिश्रुतेः ॥ हृदयस्थितिरपिन-
जीवस्यैवलिंगंब्रह्मणोहृदयावस्थानस्यबहुधादर्शितत्वात् ॥ त-
स्माल्लिंगमपिब्रह्मविषयकमेव ॥ तच्चप्रकरणानुगृहीतंब्रह्मपर-
त्वमेव तादृशवाक्यस्यगमयति ॥ आलोमभ्यइत्यादिश्रुतिस्तु-

चैतन्याभिप्रायेण ॥ किंच " स्वयंविहृत्यस्वयंनिर्मायस्वेन-भासास्वेनज्योतिषाप्रस्वपिती " तिस्वशब्दोऽणुपरिमाणंजीवं-बोधयति ॥ नस्वमेव्यापकस्यवाशरीरपरिमाणस्यवाविहरणं-संभवति " आराग्रमात्रोह्यवरोपिदृष्ट " इतिश्रुतेश्चाणुत्वमे-व नचालोमभ्यइत्यादिश्रुतिःस्वरूपेणाल्पसत्वमेवबोधयति ॥ नचैतन्याभिप्रायेणतत्रचैतन्यसत्वेमानाभावादितिवाच्यं ॥ आ-लोमर्य्यादावाचित्वेननखाग्रसमीपभागेकेशमूलदेशेचैतन्योपल-ब्धेरेवमानत्वादन्यथास्वरूपतआत्मसत्वस्यघटादिसाधारण्येन-आलोमभ्यइतिमर्य्यादायाअभिविधेर्बाधप्रसंगःनखशब्दस्यांगु-लिसमनखपरत्वमग्रशब्दस्यतदधिकदेशनिस्तृतनखपरत्वाद्वाद्धि-तनखस्यापिनखाग्रत्वमेवेतिनतत्रदोषः ॥ गुहांप्रविष्टाविति श्रु-तिप्रदर्शनंतु " नित्यःसर्वगतःस्थाणुरिति स्मृत्यंतर्गतसर्वगतस्थपद-प्रतिपाद्यासर्वगतेनब्रह्मणासहयास्थितिःसाकुत्रेतिसंदेहेतन्निवृत्य-र्थंगुहायांबुद्धौतयाःसहास्थितिरितिबोधनार्थंनत्वणुत्वप्रदर्शनार्थं ॥ तस्मात्तादृशाभिप्रायमबुध्वेश्वरस्यापितथात्वापत्तेरित्यादि दोषापादनंमौर्ख्यादेवेतिगम्यतेगुहाप्रवेशस्याणुत्वासंपादकत्वात् आकाशस्यघटादिप्रवेशेप्यणुत्वाभावात्महत्वप्रतिपादकवाक्य-विरोधेननतथापादयितुमशक्यत्वाच्चेति उपाधेर्मायायाःपूर्वमेवखं-डितत्वेनौपाधिकतयाप्रवेशस्यवक्तुमशक्यत्वेनतदृष्टांतेनजीवऔ-पाधिकप्रवेशापादनमसंगतमेव॥ जीवेचाणुत्वंनित्यःसर्वगतःस्था-णुरित्यादिस्मृत्यापिस्पष्टमेवप्रतिपादितं ॥ सर्वगतेनसहतिष्ठ-तीतिसर्वगतस्थः सर्वगतस्थश्चासावणुश्चेतिसर्वगतस्थाणुःयत्तु (सामानाधिकरण्येनस्थित्यातथाप्रयोगेरसस्यरूपेणसहस्थित्या-रूपस्थोरसइतिप्रयोगापत्तेःतस्मात्तत्रासामर्थ्यान्नोपपदसमास )

इत्युक्तंतदपिनसाधीयः ॥ प्रयोगस्यविवक्षाधीनतयातथाविव-
क्षायामिष्टत्वात्असामर्थ्येहियत्रपदानांसमासाघटकपदार्थान्वि-
तस्वार्थबोधकत्वंभवतितत्रैवमहाभाष्यकारैर्दर्शितंअतएवसमर्थः-
पदविधिरितिसूत्रेसमर्थग्रहणंकिमर्थंपश्यदेवदत्तकष्टंश्रितोविष्णु-
मित्रोगुरुकुलंतृतीयातत्कृतार्थेनगुणवचनेनशंकुलाखंडःसमर्थ-
ग्रहणंकिंतिष्ठत्वंशंकुल्याखंडोधावतिमुसलेनचतुर्थ्याअपि हि-
तंगोभ्यःसुखंदेवदत्तायेत्यादीनिप्रत्युदाहरणान्युक्तानिभाष्येप्रति
पादितानितत्रयथाकष्टशंकुलासुखादिपदानांसमासाघटकपद-
सापेक्षत्वेनसामर्थ्याभावस्तथाप्रकृतेनसंभवतीतिध्येयं नचैवं-
व्याख्यानेसर्वगतस्थपदस्यवैयर्थ्यंप्रकृतानुपयुक्तत्वादितिवाच्यं
त्वन्मतेपिस्थाणुपदेनैवनिष्क्रियत्वसिद्धावचलपदस्यनिरर्थकतै-
व ॥ ननुममतेस्थाणुपदस्यनिर्विकारार्थकत्वेनतत्राचलत्व-
स्यहेतुगर्भितविशेषणतयानवैयर्थ्यमितिचेदत्रापिभगवत्सामीप्य
भगवन्नियंम्यत्वादिजीवधर्मबोधकतयानवैयर्थ्यमितिविभावय
नचतादृशधर्माणांप्रकृतानुपयुक्तत्वात्तद्बोधनंनिरर्थकमेवेतिवा-
च्यंसर्वगतत्वस्यप्रकृतानुपयोत्वेगिपितद्बोधनवदत्रापिक्षत्यभावात्-
नचसर्वगतत्वस्यनित्यत्वव्याप्यतयातत्पुष्टिकरत्वेनप्रकृतोपयोगि
त्वमितिवाच्यं ॥ सर्वगतस्याप्याकाशादेस्त्वन्मतेनित्यत्वाभावेन-
व्याप्तेरसंभवात्तस्मात्स्वरूपमात्रबोधकतैवत्वयापिवाच्या सा-
चात्राप्यव्याहतैव किंचत्वयापिसर्वगतस्थाणुरचलइत्यादिप-
दानांजीवस्वरूपबोधकतयैवप्रकृतोपयोगोवक्तव्यस्तत्रजीवस्य
प्रकृतत्वात्तदन्वयएवनसंभवतिजीवस्यत्वन्मतेकल्पितत्वेनतत्र-
नित्यत्वसर्वगतत्वादीनामसंभवात्नचजीवब्रह्मणोरभेदाज्जीवेपि-

नित्यत्वादयःसंभवंत्येवेतिवाच्यंकल्पितस्यमायिकस्यपारमार्थिक शुद्धब्रह्माभेदासंभवात् अन्यथाब्रह्मणोपिमिथ्यात्वापत्तेरितिसंक्षेपःसविसर्गनिर्विसर्गपाठयोरुभयोःसंगतिरस्माकमित्यपिनसंभवति संहितायांविसर्गलोपेपिविसर्गानुसंधानस्यावश्यकत्वेनसविसर्गपाठस्यैवत्वन्मतसंमतत्वात् " एषोणुरात्माचेतसावेदितव्य- " इत्यत्रपरस्यैवग्रहणंयुक्तमित्युक्त्वातत्रहेतुत्वेनचक्षुराद्यगम्यत्वस्यज्ञानप्रसादगम्यत्वस्यप्रदर्शनंयत्तदपिजीवस्यापिचक्षुराद्यगम्यतयाज्ञानप्रसादगम्यतयाचतादृशहेतोर्व्यभिचारित्वेनतन्मात्रग्रहणानियामकतयानसाधीयःवेदितव्यतापिजीवस्वरूपेवर्त्ततेऽतस्तत्रापिपरएवेत्यवधारणंनसंभवति ॥

## टीका

सहस्राक्षिजीवस्याणुत्वांशत्वादिकंश्रुतिसंमतमाक्षिपंतंतदीयंनात्माऽणुरिति सप्तमश्लोकं यत्तु त्रयश्चत्वारिंशश्लोकव्याख्यायामित्यादिना वस्तुस्थितिस्तूक्तेत्यंतेन व्याख्यानेन सहितं अग्रे च नात्माणुरित्यादिनाअंशांशिभावमनादृत्येत्यादिकमपास्तमित्यंतेन निराकरिष्यंतः प्रथमं यत्त त्रयश्चत्वारिंशेत्यादिं पर एवात्मेत्यंतं भाग निरस्यंति ॥ **अग्रेचेत्यादिना अवधारणंनसंभवती त्यंतेन** ॥ एषोऽणुरिति मुंडकवाक्यं बालाग्रइतिश्वेताश्वतरस्थं अदिपदात " अणुमेतमाप्य " इत्यादीनि कठादिवाक्यानि वक्ष्यामः ॥ **स वा एष इति** ॥ इदंवाक्यं शारीरकब्राह्मणेप्यस्ति तद्विचारयिष्यते ॥ किंच बृहदारण्यकषष्ठध्याये चतुर्थब्राह्मणेऽपि " सवाएषमहानजआत्माऽन्नादोवसुदान " इतिपाठभेदेन पठ्यते ॥ अनयोर्वाक्ययोरानपूर्वीसाम्यादर्थोपि समान उचितः ॥ अत्र च ब्रह्मणः प्रकरणं लिंगं च स्पष्टमेवेति बोधायतुं नाणुरितिसूत्रप्रकाशस्थंकिंचित्प्रायोऽक्षरशोऽनुवदंति ॥ **तत्रचेत्यादि** ॥ **पठ्यतइत्यंतं पूर्वकांड इति** ॥ पूर्वकांडविचारशास्त्रेपूर्वतंत्रेतृतीयस्यतृतीयेपादे ( सू० १४ ) श्रुतिलिंगवाक्यप्रकरणे " त्याद्येकसूत्रेसमभाधिकरणे तस्मिन्पादेविनियोगकारणत्वेनोक्तानां श्रुत्यादीनांसमवायेते पूर्वपूर्वस्यप्राबल्यंसाधितंतत्रश्रुतिर्लिङ्गादिपञ्चकाद्बलिष्ठालिङ्गंचवाक्यादिचतुष्टयादितिपरस्परस्यदौर्बल्यंसोदाहरणंतत्रैवज्ञेयं उक्तंसूत्रभाष्यप्रकाशोक्तमर्थ-

तोऽनूद्यसमादधते ॥ योऽयंविज्ञानेत्यादि ॥ " स्वशब्दोन्मानाभ्या " मिति-
सूत्रभाष्यमुपन्यस्यति ॥ स्वयंविहृत्येत्यादि ॥ इदंवाक्यंतुबृहदारण्यकेषष्ठाध्याये-

---

## सहस्राक्ष.

नात्माऽणुःश्रुतितःस्मृतेरणुवचोगौणं परस्मिन्यथाएवं
बुद्धिगुणैर्विसर्पिगुणता युक्तेर्विरोधान्नतु ॥ अंशत्वं
घटखाम्बुचन्द्रवदजोजीवोऽत्र कस्याऽपरेज्ञानस्याऽ
पि तिरस्कृतिर्यदि तदा प्रीतिश्च भानं कथम् ॥ ७ ॥

यत्तु त्रयश्चत्वारिंशश्लोकव्याख्यायाम् एषोऽणुरात्माचेतसावेदितव्यइति श्रुतेर्जीवस्याऽणुत्वम् ॥ लिङ्गशरीराभिप्रायेणाणुत्वस्य गौणस्य वर्णनेतु न मानम् ॥ सवाएषमहानजइतीयंश्रुतिस्तु ब्र-ह्मपरा ॥ तत्प्रकरणस्थत्वात् ॥ तथाच सूत्रं नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात् ॥ अत-च्छ्रुतेरित्यस्य महत्त्वश्रुतेरित्यर्थइत्युक्तं तत्राह ॥ नात्माणुःश्रुतितइति ॥ श्रुतिस्तु सवाएष-महानजआत्मायोयंविज्ञानमयःप्राणेषुहृद्यन्तर्ज्योतिरिति ॥ नचेयंपरविषया ॥ प्राणहृदयविज्ञा-नानां परस्मिन्नसंबन्धात् ॥ विज्ञानंहि बुद्धिः प्राणादिसहचारात् ॥ प्रदेशान्तरेऽपि तत्सह-चारदर्शनाच्च विज्ञानमयोमनोमयःप्राणमयइति ॥ हृदयस्थानलिङ्गाच्चजीवविषया ॥ जीवस्य हृदयस्थानंतु अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदिहि इतिसूत्रसिद्धम् ॥ प्रकरणन्तु लि-ङ्गादिभ्योदुर्बलम् ॥ आलोमभ्यआनखाग्रेभ्यइतिश्रुतेश्च ॥ साहि तत्रात्मसत्त्वं स्वरूपाभिप्रा-येणाह नतुचैतन्याभिप्रायेण ॥ मानाभावात् ॥ लोमनखे तददर्शनाच्च मर्यादायामाङित्यङ्गी-कारेऽपि नखाग्रात्प्राग्भागे तदुपलब्धिप्रसङ्गात् वर्धितनखेषु तददर्शनात् ॥ गुहांप्रविष्टाविति-श्रुतिप्रदर्शनंतु मौर्ख्यादीश्वरस्याऽपि तथात्वापत्तेः ॥ तत्रौपाधिकतयोपपादनेऽत्रापि तथा-वक्तुंशक्यत्वात् ॥ तत्सहचारेण जीवेऽपि तथैववक्तुमुचितत्वेन तस्याःश्रुतेस्तत्प्रतिकूलत्वा-च्च ॥ स्मृतेरिति ॥ नित्यःसर्वगतःस्थाणुरचलोयंसनातनइतिस्मृतेरित्यर्थः ॥ यत्तु तत्र सर्व-तेन सहतिष्ठतीतिसर्वगतस्थः सचासावणुश्चेतिव्याचख्यौ ॥ तन्न ॥ सामानाधिकरण्येन स्थित्या तथाप्रयोगे रसस्य रूपेण सह स्थित्या रूपस्थोरसइतिप्रयोगापत्तेः तस्मात्तत्रा-सामर्थ्यान्नोपपदसमासः ॥ किञ्चैवं सवगतस्थपदं विफलं स्यात्प्रकृतानुपयोगात् ॥ नच यथाश्रुतेऽपि स्थाण्वचलपदयोः पर्यायत्वापत्तावन्यतरवैयर्थ्यमापद्येतेतिवाच्यम् ॥ स्थाणुप-दस्य निर्विकारार्थकतया तत्राचलइत्यस्य हेतुगर्भितविशेषणत्वात् ॥ अस्माकं सविसर्ग-निर्विसर्गपाठयोरुभयोःसङ्गतिस्त्वस्यतु सविसर्गपाठोऽसङ्गतःस्यात्सच तद्गुरुणा कृते विद्वन्म-ण्डने दृश्यते ॥ किञ्च तेनास्मादभिमतार्थपरत्वेनैवोपन्यस्तमिदंवचनम् ॥ एषोऽणुरात्माचे-तसावेदितव्यइत्यत्रतु परस्यैवग्रहणं ॥ परस्यैवात्मनश्चक्षुराद्यगम्यत्वेन ज्ञानप्रसादगम्यत्वेन प्रकृतत्वात् ॥ इहापि वेदितव्यतया उक्तत्वाद्वेदितव्यश्च परएवात्मा ॥

ज्योतिर्ब्राह्मणाख्येतृतीयब्राह्मणेस्ति ॥ आराग्रवाक्यंतुश्वेताश्वतरस्थं ॥ श्रुति-
प्रदर्शनंत्विति मार्तण्डटीकादिषुजीवब्रह्मणोःसहावस्थानस्थानंगुहारूपंस्पष्टीकर्तुमेत-
च्छ्रुतिप्रदर्शनंनतुतन्मात्रादणुत्वसाधनंतत्राभिप्रेतमितिभावः ॥ वस्तुतस्तुश्रुतिसूत्र-
योर्गुहाप्रवेशोक्तिरप्यणुत्वसाधिकैव व्यापकस्यशरीरपरिमाणकस्यवाल्पतमगुहायां-
प्रवेशायोगात् ॥ ईश्वरस्यापिवास्तवाणुपरिमाणकान्तर्यामिरूपेणप्रवेशस्तत्रोच्यते-
ऽतस्तद्दृष्टान्तेननजीवस्यौपोधिकप्रवेशइतिवक्ष्यामःअतएवनिबन्धे ( प्र० १ कारि
का ६३ ) गुहांप्रविष्टावित्युक्तेर्भगवद्वचनादपीत्याद्युक्तं अन्तर्यामिणोप्यणुत्वंतुमनुना-
पिद्वादशाध्यायेदर्शितं ( श्लोक १२२ ) प्रशासितारंसर्वेषामणियांसमणोरपि ॥
रुक्माभंस्वप्नधीगम्यंविद्यात्तंपुरुषंपरमिति ॥ रुक्माभत्वंतिरोहितानंदत्वात् वेदेहिर
ण्मयादिशब्दानामानंदमयपर्यायतायाः अंतस्तद्धर्माद्यधिकरणेव्याकरेस्पष्टत्वात् ॥
असामर्थ्यंहीत्यादि ( अ-२ पा १ सू-१ ) " समर्थःपदविधिः " इतिसूत्रेमहाभा-
ष्ये " अथसमर्थग्रहणंवक्ष्यतिद्वितीयाश्रितादिभिःसमस्यते । कष्टश्रितोनरकश्रितइति ।
समर्थग्रहणंकिमर्थं । पश्यदेवदत्तकष्टंश्रितोविष्णुमित्रोगुरुकुलं । तृतीयातत्कृतार्थेनगु-
णवचनेन । उपादानविकलः । शङ्कुलाखण्डः । किरिकाणः । समर्थग्रहणंकिम-
र्थं । त्वंतिष्ठशङ्कुलया खण्डोधावतिमुसलेन । किंत्वंकरिष्यसिशङ्कुलयाखण्डोविष्णुमि-
त्रउपलेन । चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः । गोहितं । वृषभहितं । गोहित
मश्वहितं । समर्थग्रहणंकिमर्थं । सुखंगोभ्योहितंदेवदत्ताय । पञ्चमीभयेन । वृकभ-
यं । दस्युभयं । चोरभयं समर्थग्रहणंकिमर्थं । गच्छत्वंमावृकेभ्योभयंदेवदत्तायज्ञद-
त्तस्य " इत्यादिग्रंथोस्ति. तत्रमूलोक्तरीतिकमेवासामर्थ्यंभाष्यकैयटादिषुक्तःसाम
र्थ्यविचारात्सिध्यति जीवस्यप्रकृतत्वादिति नित्यस्योक्ताःशरीरिणइत्यादिनागी-
तायांप्रकृतत्वात् तदन्वयइति कल्पितस्वरूपेजीवेनित्यादिपदानामन्वयः चक्षुरा-
द्यगम्यतयेत्यादि " पराञ्चिखानि " इत्यादौअंतरात्मनिदर्शननिषेधात् शरीरतउ-
त्क्रमणकालेपिदर्शनाद्यभावाद्गीतायां ( अ० १५ श्लो-१० ) उत्क्रामंतंस्थितंवापी-
त्यादिनानैनंपश्यंत्यचेतसइत्यंतेनतन्निषेधाच्चतदगम्यत्वं ज्ञानप्रसादवतायोगिनैवत-
द्रातस्यदर्शनात् पश्यंतिज्ञानचक्षुषःयतंतोयोगिनश्चैनंपश्यंत्यात्मन्यवस्थितमित्यादि-
स्मरणात् " आत्मन्येवात्मानं पश्ये " दित्यादिश्रुतिष्वपि शमदमादिमत्तयाज्ञान-
प्रसादवानेवजीवस्वरूपंसाक्षात्करोतीतितावकैरंगीकाराच्चजीवस्य ज्ञानप्रसादगम्यत्वं
वर्ततइति " आत्मानंचेद्विजानीयात् विज्ञानंब्रह्मचेद्वेद " इत्यादिषुकाण्वतैत्तिरीयादि
श्रुतिषुवर्ततेतत्रेति वेदनइत्यर्थः इहायमाशयोबोद्धव्यःसहस्राक्षस्थेऽत्रानुवादे त्रिच-
त्वारिंशश्लोकव्याख्यायामितिन्यूनं दशमश्लोकविवरणेपितत्सत्वात् यातुश्रुतिरुदाहृ-

ता " सवाएषमहानज आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति " रिति- साप्रमादात् नाणुरिति सूत्रविषयीभूतायाः बृहदारण्यकषष्ठाध्यायस्थशारीरकब्राह्म- णाख्यतृतीयब्राह्मणस्थाया अस्याहृद्यन्तर्ज्योतिरित्यानुपूर्वीघटितत्वाभावात् " कत- मआत्मेति योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष " इति ज्योतिर्ब्राह्मणश्रुते- स्तदुक्तपूर्वभागाघटितत्वेन तदिष्टासाधकत्वात् । अतोनाणुरवस्थितिवैशेष्यादितिसू- त्रद्वयस्वभाष्यदर्शनाद्भ्रान्तोसि नचास्मद्भाष्यादाविव हृद्यन्तर्ज्योतिरिति श्रुत्यन्त- रमेवैकहेलयोदाहरामीतिवाच्यं । विभुत्वबोधकपदाघटितत्वेन प्रकृतानुपयोगात् । प्राणहृदयविज्ञानानां परस्मिन्नसम्बन्धं प्राणादिसहचारात् विज्ञानशब्दार्थे हृदयस्था- नलिङ्गं चवदतस्तवैकश्रुतितायां अभिप्रेतत्वाच्च । नाप्यसौ नपरविषयेतिवक्तुंशक्यं नाणुरित्युक्तसूत्रविरोधात् ( अ० १ पा० ३ सू० ४२ ) " सुषुप्त्युत्क्रान्त्योर्भेदेने " त्यत्रभाष्ये परविषयतायाः सम्यकूव्युत्पादितत्वाच्च । ननु शारीरकब्राह्मणेपि " सवाएषमहानजआत्मा योयं विज्ञानमयः प्राणेषु यएषोन्तर्हृदय आकाशस्तस्मिन्- श्छेत " इति श्रूयमाणःप्राणहृदयसम्बन्धः परस्मिन्नसम्भवीति चेन्नैवं " यःप्राणेतिष्ठ न्प्राणादन्तरः ॥ सउप्राणस्य प्राण " इत्यन्तर्यामिब्राह्मणतलवकारादिश्रुतिभ्यः प्रा- णसम्बन्धस्य "एष मआत्मान्तर्हृदयेणीयान्व्रीहेः ॥ अन्तरात्मन्पुरुषो हिरण्मयः ॥ गु- हांप्रविष्टौपरमेपरार्द्ध"इतिछन्दोगवाजसनेयिकठादिश्रुतिभ्यः ईश्वरः सर्वभूतानां हृद्देशे र्जुनतिष्ठति गुहांप्रविष्टावात्मानौ हृद्दहृधिष्ठितमात्मकल्पितानामित्यादि स्मृतिन्याय- पुराणेभ्यश्च हृदयसम्बन्धस्य च परस्मिन्सिद्धत्वात् अन्तः शयनं च " परात्परं- पुरिशयंपुरुषमीक्षत " इति प्रश्नादिश्रुतिसिद्धंपरस्य ॥ बोधितं चैतत् ( अ० १ पा० ३ सू० १३ ) " ईक्षतिकर्मव्यपदेशात्स " इत्यधिकरणे एतेन प्राणसहचारा- त् विज्ञानशब्दस्य बुद्धिपरत्वमप्यपास्तं अतो विज्ञानमयशब्दोपि " सत्यंविज्ञा- नमानन्दंब्रह्म " इत्यादिश्रुत्युक्तस्वरूपभूतविज्ञानात्मकत्वमेवात्राभिधत्त इति नका- प्यनुपपत्तिः । मयट् चेह स्वार्थे प्राचुर्येवेत्यन्यदेतत् यच्चावस्थितिवैशेष्यसूत्रो- दाहरणाद्धृदयस्थितेर्जीवलिङ्गत्वमुक्तं तत्तुतन्मात्रस्थायित्वे स्वाभिमतविभुत्वबाधात्त- त्सूत्रस्य स्वमते पूर्वपक्षस्थत्वाच्च गले पादुकापादकं यदि च पूर्वपक्षसूत्रोक्त- मप्याद्रियते तर्हि नाणुरित्यादिसूत्रोक्तमप्याद्रियतां वस्तुतस्तूत्क्रान्त्यादिसूत्रदशकं न पूर्वपक्षप्रतिपादकमिति समर्थयिष्यामः यच्च प्रकरणंतु लिङ्गादिभ्यो दुर्बलमित्य- वादि तदप्यकिञ्चित्करं उक्तरीत्यालिङ्गस्योभयसाधारणत्वात् उक्तश्रुतेरग्रेनुपदमे- व " सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सनसाधुना कर्मणाभूयान्नोए- वासाधुनाकनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एषसेतुर्विधरण एषां लोकानामसम्भेदायतमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दा- नेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवती " त्यादिना प्रबलतराणि सर्व-

वशित्वादि ब्रह्मलिङ्गानि सर्वेश्वरत्वादिश्रुतयश्चात्रोपलभ्यन्त इति श्रुतिलिङ्गयो-र्विचारेपि नजीवपरत्वं वाक्यस्य शक्यवचनं अत्राम्नातानि भूताधिपतित्वादी-नि प्रतर्दनविद्यायामप्येवमेवाम्नातानि तानि च ब्रह्मण्येव समनुयन्ति नजीवा-दाविति सिद्धमनुगमाधिकरणे "एतमेवविदित्वा मुनिर्भवती" त्यस्य परब्रिषय-त्वं च अंशोनानेतिसूत्रे शङ्कराचार्यैरपि स्वीकृतं आलोमभ्य इतिश्रुतिस्त्वणुत्व-स्यैवसाधिका तथाहि कौषीतकिब्राह्मणे चतुर्थाध्याये "हितानामपुरुषस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वन्ति तद्यथा सहस्रधा केशोविपाटितस्तावदण्व्यः पिङ्ग-लस्याणिम्नस्तिष्ठन्ति शुक्लस्य कृष्णस्य पीतस्य लोहितस्य च तासु तदा भ-वती" ति जीवस्य हृदयायतनत्वं तादृगत्यणुनाडीषु स्थित्याणुत्वं चोक्त्वा शरीरे गुणतोव्याप्तिं वक्तुमाम्नायते "एष प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आलोम-भ्य आनखाग्रेभ्य" इति अत्र प्रज्ञाशब्दश्चैतन्यगुणपरः तथा च स्वचैतन्यगुणे-नायं लोमनखाग्रपर्यन्तं सर्वशरीरमभिव्याप्यतिष्ठति एतदेव बोधयितुं दृष्टान्त उच्यते "तद्यथा क्षुरःक्षुरधानेऽवोपहितो विश्वंभरोवाविश्वम्भरकुलाय" इति ॥ बृहदार-ण्यकेपितृतीयाध्यायेपुरुषविधब्राह्मणाख्येचतुर्थब्राह्मणे ( मं०७ पृ० १६८ ) इदं श्रूय-ते न ह्ययं विभुत्वपक्षे सङ्गच्छते यदि तु तथाभिप्रेयात्तर्ह्याकाशादिकमेवदृष्टान्तीकु-र्यात् अतः परमाचार्योपि गुणतः शरीरे व्याप्तिमुक्त्वा आलोमभ्यःश्रुतिं विषयीकु-र्वन्नसूत्रयत् ( अ- २ पा- ३ सू० २७ ) "तथा च दर्शयती" तिअतः प्रकृत-श्रुतौ शरीरे गुणतो व्याप्तिरुच्यते इत्यत्र मानं तु प्रज्ञात्मश्रुतिर्हृदयायतनत्वनाडि स्थितिदृष्टांतादयस्सूत्रंचेतिभूयएवास्त्यतोमानाभावोक्तिःश्रुत्याद्यदर्शनात् । आङ्चेह मर्यादार्थकइति लोमनखाग्रेषु चैतन्यानुपलब्धिः । अग्र शब्देन चेह अग्रमग्रंचरं-तीनां आदातुं सकृदीक्षितेपि कुसुमेहस्ताग्रमालोहितमित्यादौ चर्वणलौहित्यादि-योग्यभागवदनुपलभ्यमानचैतन्योनिखिलएव नखाग्रिमभागो ग्राह्यो योग्यत्वात् । अतो वर्धितनखेष्वनुपलब्धिरदोषः । आनखेभ्य इतिकचित्पाठेऽपि "नखानि-निकृंतत" इति दीक्षाश्रुतिवद्योग्यत्वाच्छ्याप्रलभाग एव नखशब्देनोपादेय इ-त्यनवद्यं । यश्चेह आङमभिविध्यर्थकं ब्रूयात्तेनैव वर्धितावर्धितनखाग्रेषु लोमसु च चैतन्यानुपलब्धिदोषः समाधेयस्तत्रात्मसत्वात् । त्वन्मताचार्यशंकरानंदकृतकौषी-तकिदीपिकायां "प्रवेशावधिमाह आलोमभ्य आनखेभ्यः लोमनखपर्यंतं नखा-ग्रशरीरबहिर्गतकेशान्मुक्त्वा समग्रे शरीर इत्यर्थः" इतिव्याख्यातमप्याङोमर्यादा-र्थकत्वं स्वयं शंकराचार्यैरप्युक्तस्थले बृहदारण्यकभाष्ये "आनखाग्रेभ्यो न-खाग्रमर्यादमात्मनश्चैतन्यमुपलभ्यते तत्रकथमिवप्रविष्टइत्याह" इत्यादिनातिस्फुटमु क्तंतत् परमनखंडनाय दूषयन्स्वारूढशाखाच्छेदकवत्स्वमतदूषणं नानुसंधत्से । किंच-जीवस्याणुत्वे सत्येव कठाद्याम्नातस्तस्य गुहाप्रवेशः संगच्छेत विभोः प्रवेशा-

योगात् । ईश्वरस्य प्रवेशस्त्विहांतर्यामिरूपेणैवोच्यते । द्वासुपर्णेत्यादौ स्थितिव-दतोनेश्वरस्याणुत्वापत्तिः । अंतर्यामीनामातिरोहितानंदाणुमात्रोभगवदंश इति तु सित्धमाकरे । अंतर्यामिमानस्यच " यथाव्रोहिर्वे " त्यादिश्रुतिसि-ध्धत्वान्नौपाधिकत्वं कल्प्यं ( तत्सहचारेण जीवेऽपि तथैव वक्तुमुचित-त्वेने ) त्याद्युक्तिस्तु तवैव प्रतिकूला । नैयायिकादिवज्जीवात्मपर-मात्मनोरत्यंतभेदस्य विभुत्वस्य चोरीकार एव उभयोः प्रवेशस्यौपाधि-कतायाः शक्यवचनत्वात् ब्रह्मण एवौपाधिकं जीवभाववदतात्वया त्व-शक्यं विभोरपि जीवस्य ब्रह्मवदौपाधिकः प्रवेश इति वक्तुं ॥ स्मृतयोऽपि जीवस्याणुत्वमेव प्रतिपादयंति । यथा गीतायां । ममैवांशोजीवलोके इत्यंश-त्वोक्तिरणुत्वमेव गमयति । सर्वथा विभोरंशत्वासंभवात् । मध्यमपरिमाणवा-दस्य च वेदविरुत्धत्वात् । तृतीयस्कंधेऽपि ( अ० २५ श्लो० १७।१८ ) तदा पुरुष आत्मानं केवलं प्रकृतेः परं । निरंतरं स्वयंज्योतिरणिमानमखं-डितं ॥ ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना । परिपश्यत्युदासीनं प्रकृ-तिं चहतौजसमिति ॥ अत्राप्यणुत्वंजीवस्यापि ज्ञानप्रसाददृश्यत्वंचोक्तं ॥ ए-कादशेपि ( अ० २७ श्लो० २३।२४ ) पिंडेवाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम । अण्वीं जीवकलांध्यायेन्नादांते सिद्धभावितां । तयात्मभूतया पिंडे व्यामे संपूज्य तन्मय इति व्याप्तिश्चेह दीपप्रभान्यायेनैव श्रीधरस्वाम्यादिभिरपि व्याख्याता । एतन्मूलभूताश्रुतिरपि " तस्य मध्ये वन्हिशिखा अणीयोर्ध्वा-व्यवस्थिते " त्यादिर्नारायणप्रपाठकस्था ध्येया । एवमितरत्रापिद्रष्टव्यं । या-तुनित्यः सर्वगतः स्थाणुरितिस्मृतिरुदाहारिसाप्यंशत्वादिवाक्यैकवाक्यतया सर्व-गतश्चासावणुश्चेत्यर्थपरापि शक्या व्याख्यातुं । नच तत्रासामर्थ्यान्मार्तंडटी-कोक्तसमासस्यासंगतिः शंक्या । ( अ० ३ पा० २ सू० ४ ) " सुपि-स्थ " इत्यत्र सुपीति योगं विभज्य कच्छपोद्विप इत्यादौ तृतीयांतपदेनापि समासस्य स्वीकारात् । स्पष्टंचेदंतत्रैव महाभाष्ये " योगविभागः करिष्यते आतोनुपसर्गे कोभवति ततः सुपि सुपिचातःकोभवति कच्छेन पिबति कच्छपः कटाहेन पिबति कटाहपः द्वाभ्यांपिबतिद्विपः ततः स्थः स्थश्चकोभ-वतिसुपीति " इत्यादि । एवं कच्छेन पिबतीत्यादिवत् सर्वगतेन तिष्ठतीतिव्यु-त्पत्तिरपि सुवचैव । कच्छशब्दार्थजलप्रायदेशस्य वस्तुतः पानक्रियाधारत्ववत् सर्वगतस्य ब्रह्मणः स्थितिक्रियाधारत्वेऽपि साधकतमत्वविवक्षया तथाव्युत्पा-दने बाधकाभावात् । जीवनिष्ठक्रियायां सर्वगतस्य साधकतमत्वं च । द्वासु-पर्णेत्यादिश्रुत्युक्तनियतत्वसहभावरूपमेवेत्यार्थिकः सहभावोमार्तंडटीकाकारैःकंठरवे-ण स्पष्टप्रतिपत्तये दर्शितःसर्वगतस्थत्वविशेषणं व्युच्चरणानंतरमपि सार्वदिकभग-

त्संबंधेन जीवस्य शरीरच्छेदनदहनादिदुःखानुभवायोग्यत्वादिलक्षणोत्कर्षबोधनायावश्यकमिति न विफलं । स्थाणुरिति च्छेदेऽचलशब्दस्य पौनरुक्त्यमभिप्रेत्य मार्तंडटीकायां तथाव्याख्यातं तत्परिहारायोच्यमानं स्थाणुपदस्य निर्विकारार्थत्वं तु लक्षणांविना दुर्वचं स्थिरेशक्तत्वात् । लक्षणाक्लेशप्रीतिमत्वात्तदूरीकारेतु अचलपदेऽपि सा किन्नस्यात् विनिगमनाविरहात् । स्थाणुपदार्थेऽचलपदार्थस्य हेतुत्वोत्प्रेक्षणमपि स्वाचार्यविरुद्धं शंकराचार्यैर्गीताभाष्ये " नित्यत्वात्सर्वगतः सर्वगतत्वात्स्थाणुरित्येतत्स्थिरत्वादचलोयमात्मे " तिव्याकुर्वद्भिः स्थिरपदार्थस्याचलपदार्थे हेतुत्वस्यांगीकारात् । अतो न त्वदुक्तप्रकारोऽन्यतरपदवैयर्थ्यपरिहारायप्रभवति अस्ति चास्या स्मृतौ निबंधादिषु सर्वगत इत्यपि च्छेदः । तथापि " खर्परे शरि वा विसर्गलोपोवक्तव्य " इति तल्लोपादुभयथापि व्याख्यानमदुष्टं " विसर्जनीयस्य स " इति सत्वेन सकारद्वयेऽपि न मार्तंडविवृतिबाधः । एकपदपक्षेऽ"च्यनचिचे"ति सद्वित्वसंभवात् । निबंधविद्वन्मंडनादिपुस्तकेषु चैकसकारो द्विसकारो वापाठो दृश्यत इति न पाठद्वयासंगतिः नाप्याचार्यविरोधः । एकवाक्यस्योभयथा व्याख्यानं तु न दोषाय अन्यथा शास्त्रयोनित्वसमन्वयाद्यधिकरणेषु वर्णकद्वयप्रतिपादकत्वद्भाष्यन्यायमालादिबाधप्रसंगात् । " सुमेधा अमृतोक्षित " इत्यादिश्रुतीनां पदभेदेन शंकराचार्यैरपि द्विधाव्याख्यानाच्च । यच्चैषोणुरात्मेत्यस्य परविषयत्वं प्रकरणमाश्रित्योक्तवान् तत्र " एषोऽणुरात्मा चेतसावेदितव्यो यस्मिन्प्राणःपंचधा संविवेशे " त्यनुपदंप्राणसंबंधश्रावणात् । " स वा एष महानज " इति श्रुत्यर्थसमर्थनावसरे त्वमुखोक्तं प्राणसंबंधस्य जीवलिंगत्वं लिंगात्प्रकरणबाधं च कुतो नानुसंधत्से । अतस्त्वयातुल्लोकविरोधान्नैवं वक्तुं शक्यं । वस्तुतस्तु तद्गुणसारसूत्रस्थत्वभाष्यपंक्तिमेव परस्यैवेत्यादिं प्रकृतत्वादित्यंतां किंचिद्वर्णभेदेनानुवदन्नस्यप्रकरणादिकं नावलोकितवानसि । इदं हि वाक्यं तृतीयमुंडकप्रथमखंडे पठ्यते । तत्रारंभ एव " द्वासुपर्णासयुजासखाया " इतिद्वावप्यात्मानौ प्रकृतौ " नचक्षुषे " तिवाक्ये च यथाज्ञानप्रसाददृश्यत्वेन ब्रह्मोक्तं एवं प्रसादवत्त्वदृष्टत्वादिना जीवोऽप्युक्तइति नप्रकरणमात्रान्निर्णयः । प्रकृते च यस्मिन्यत्समीपे प्राणः पंचधाभूत्वासंविवेश सोणुरात्मा जीवो मनसा ज्ञेयः । अथवाऽणुमात्रोऽतींद्रियोप्ययं चेतसा चैतन्यगुणेन लिंगेन वेदितव्यः । यस्मिन्सर्वशरीरविसर्पिणिचैतन्ये प्राणः पंचधाभूत्वा देहे संविवेश चैतन्यसंबंधमंतराजडस्य व्यापारायोगात् इत्यर्थःचितीसंज्ञाने भ्वादिःततः सर्वधातुभ्योऽसुन्नित्यसुनिचेत इति सिद्धं । अत इत्थं प्राणसंबंधो जीवस्यैव लिंगं । यःप्राणेतिष्ठन्नित्यादौतु प्राणांतरस्थित्या नियम्यत्वेन प्राणसंबंधःपरस्योच्यते । नत्वेवं पंचप्राणवत्वं ॥ इत-

एव " महानज " इतिश्रुतावपि प्राणेष्विति सप्तम्याप्राणांतस्थत्वंबोध्यतइति नमदुक्तिविरोधः । नापि वेदितव्यश्चपरएवात्मेति शक्यवचनं " आत्मानंचेद्विजानीयादयमस्मीतिपूरुषः । किमिच्छन्कस्यकामायशरीरमनुसंज्वरेदि " तिबृहदारण्यकादिषु स्वस्वरूपस्यापि विज्ञेयत्वाम्नानात् ॥

यदपिकिंचेत्यादिना ( यथा ऽणोरणीयानित्यादिवाक्यंमहतोमहीयानितिवाक्यबलाद्दुर्ज्ञेयत्वपरमित्यंगीक्रियतेतथेहापिमहानजःनित्यसर्वगतस्थाणुरित्यादिवाक्यबलाद्बालाग्रशतभागस्येत्यादिवाक्यंतत्परंस्वीक्रियतामित्युक्तंतदपिमंदतरमेव दृष्टांतस्योभयवादिसंमतस्यैवसंभवेनस्वमतमात्रसिद्धस्यदृष्टांतत्वासंभवात् नह्यस्मन्मतेणोरणीयानित्यादिवाक्यस्यदुर्ज्ञेयत्वपरत्वंस्वीक्रियते ॥ अस्माभिस्तथातदास्वीक्रियेत यदाभगवतोविरुद्धधर्माश्रयत्वंनस्यात्अस्तिचा " पाणिपादोजवनोगृहीतापश्यत्यचक्षुःसशृणोत्यकर्ण " इत्यादिवाक्यैःप्रतिपादितपरस्परविरुद्धधर्माश्रयत्वं ततश्चात्रापिमहत्वाणीयस्त्वादिविरुद्धधर्माश्रयत्वस्यब्रह्मण्यलौकिकत्वप्रतिपादकत्वसंभवेदुर्ज्ञेयत्वेपरत्वकल्पनेमानाभावः तस्माद्दृष्टांतासंभवात्तदनुरोधेनाणुत्वप्रतिपादकवाक्यैर्जीवदुर्ज्ञेयत्वंप्रतिपादयन्नुपेक्षणीयएव किंच " बालाग्रशतभागस्यशतधाकल्पितस्यचभागोजीवसविज्ञेयःसचानंत्यायकल्पते आराग्रमात्रोह्यवरोपिदृष्ट" इत्यादिश्रुतीनांस्पष्टतयापरिमाणबोधिकानांकथंदुर्ज्ञेयत्वपरत्वं स्वीयवाच्यार्थपरत्वेकस्यचिद्बाधकस्यप्रमाणांतरविरोधस्यचाभावेनलक्षणयातादृशार्थबोधकत्वेप्रमाणाभावात्नचबुद्धिगुणैरेवाणुत्वव्यपदेशोस्तुतथाचश्रुतिः बुद्धेर्गुणेनात्मगुणेनचैवआराग्रमात्रोह्यवरोपिदृष्टःएवंचउत्क्रांतिगत्यागतयोः

पिसंगच्छंतइतिवाच्यं जीवस्ययदित्वन्मतइवौपाधिकत्वंस्यात्तदा-
स्यादेवतथाव्यपदेशःनहिजीवस्यौपाधिकत्वंसंभवतितथासति-
सउपाधिर्नित्योऽनित्योवेतिवक्तव्यंनाद्यःमोक्षानुपपत्तेःनह्युपाधि-
नाशंविनास्वस्वरूपेणावस्थानंरूपोमोक्षःसंभवति॥ नद्वितीयःकृ-
तहानाकृताभ्यागमप्रसक्तेः तदेतद्विस्तरेणाग्रेवक्ष्यतेएवमुत्क्रांतिग-
त्यागतीनामपिस्वेनरूपेणैवसंभवे बुद्ध्युपाधिकतयातत्कल्पनेमाना-
भावात्शरीरंयदवाप्नोतियच्चाप्युत्क्रामतीश्वरइत्यादिभगवद्गीता-
वाक्येणुत्वेपिजीवस्यसर्वेंद्रियग्रहणपूर्वकगमनस्योपपत्तौतदनुरो-
धादप्यौपाधिकत्वकल्पनंनसंभवति॥ ननु "तद्गुणसारत्वात्तुतद्व्य-
पदेशःप्राज्ञव" दितिसूत्रबलेनजीवस्यबुद्ध्युपाधिकत्वंस्वीक्रिय-
तेतत्रतुशब्दःनाणुरतच्छ्रुतेरितिसूत्रोक्तपूर्वपक्षव्यावृत्त्यर्थःतस्याबु-
द्धेर्गुणास्तद्गुणास्तेसाराःप्रधानंयस्यात्मनःसंसारिभावेसंभवंतिका-
रणत्वात्सतद्गुणसारस्तस्यभावस्तत्वंतस्मात्तद्व्यपदेशअणुत्वोत्क्रां-
त्यादिव्यपदेशःप्राज्ञवत्यथाप्राज्ञस्यपरमात्मनःसगुणेषूपासनेषु-
उपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशो "णीयान्व्रीहेर्वायवा-
द्वा" इत्येवंप्रकारस्तद्वत्जीवेप्यणुत्वव्यपदेशउपाधिकृतएवनतु-
वास्तवइतिचेन्नैवंसूत्रस्यत्वदुक्तार्थकत्वाभावाज्जीवेबुद्ध्युपाधि-
कृतोणुत्वव्यदेशोनसंभवति॥ तथाहिजीवेवस्तुतोणुत्वंतदास्याव्य-
द्विजीवस्यब्रह्मणःसकाशाद्भेदःस्यात्सएवतुनसंभवति "ऐतदात्म्य-
मिदंसर्वंतत्सत्यंसआत्मातत्वमसिश्वेतकेतो" कौशीतकिब्राह्मण-
समाप्तौच "इदंसर्वंयदयमात्मे" त्यभिधाय"सएवत्वमसी"त्या-
दिश्रावणेना"हंब्रह्मास्मी" त्यहंग्रहश्रावणेनचपरमेवब्रह्मजीवइ-
तिसिद्ध्यति "सत्यंज्ञानमनंतंब्रह्मे" त्यादिश्रुतिभिस्तस्यव्यापक-

त्वमपिसिद्धमेवकथमणुत्वंतस्येतीमामाशंकांसूत्रस्थस्तुशब्दोनि वारयतितस्यब्रह्मणोगुणास्तद्गुणाःप्रज्ञाद्रष्टृत्वादयः " प्रज्ञा- चतस्मात्प्रसृतापुराणीएतदक्षरंगार्ग्यदृश्यंद्रष्टृ " इत्यादिश्रुति- सिद्धाःतएवात्रजीवेसाराइंद्रप्रतर्दनसंवादे " प्रज्ञयावाचंस- मारुह्यवाचासर्वाणिकर्माणिनामान्याप्नोति " प्रश्नोपनिषदि- च " एषहिद्रष्टास्प्रष्टाश्रोताघ्रातारसयितामंताबोद्धाकर्तावि- ज्ञानात्मापुरुष " इत्युक्त्वात्साराःप्रधानाजडविलक्षणाइति यावत् अन्यथापदार्थत्वब्रह्मांशत्वादीनांसर्वत्रतुल्यतयाकेनजड- वैलक्षण्यमस्यभवेत् तस्मात्तद्व्यपदेशःजीवेभगवद्व्यपदेशःअमात्ये राजपदप्रयोगवत् अयंचव्यपदेशोमैत्रेयीब्राह्मणेतत्र " नवाअ रेपत्युःकामायपतिःप्रियोभवती " तिजीवमुपक्रम्याग्रेच तद्वि- ज्ञानतःसर्वविज्ञानार्थंसर्वस्यतदात्मकत्वकथनेनवेदादीतन्निश्वा- सत्वकथनेनब्रह्मधर्माणांतत्रबोधनाद्भगवत्वेनजीवउक्तएवंतत्व- मसीत्यादावपितद्व्यपदेशःननुमैत्रेयीब्राह्मणेन्यस्यान्यधर्मत्वेनक- थनंनसंभवतिनिरूपणस्थलउपचारस्यासंभवादितितत्रैवोपाचा राभावात्तद्दृष्टांतेननतत्वमसीत्यादावप्युपचारोनसंभवतीतिचेत्त- त्राहप्राज्ञवत् ॥ बृहदारण्यकेशारीरकब्राह्मणेजीवमुपक्रम्यत- ज्जाग्रत्स्वप्नावस्थेपूर्वमुक्त्वा "यत्रसुप्तोनकंचनकामंकामयतेनकं- चनस्वप्नंपश्यती "तिसुषुप्तिंवदन्नंतरसामयिकंजीवस्वरूपंनिरूप्य- "तद्यथाप्रिययास्त्रियासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतर" मिति- जीवब्रह्मणोर्भेददृष्टांतनिरूपणावसरे "एवमेवायंप्राज्ञेनात्मनासं- परिष्वक्त " इत्यभिधायकः प्राज्ञइत्याकांक्षायांप्राज्ञस्वरूपमा- हतत्र " अत्रपिताऽपिताभवती " त्यादिना अत्रअस्यरूपमित्य-

नेनपरमेश्वरस्यैवरूपांतरमुच्यतेनहिसुषुप्तिसाक्षिणःप्राज्ञस्यस्वतो
ऽपहतपाप्मत्वादिकंसंभवत्यपहतपाप्मत्वस्यब्रह्मलिंगत्वात्तथा
चयथाप्राज्ञस्यनिरूपणावसरएव " एषसर्वेश्वरएषसर्वज्ञएषोऽ-
न्तर्याम्येषयोनि " रित्यादिनाब्रह्मधर्मैर्निरूपणमेवंशारीरस्या-
पिब्रह्मधर्मबोधिकाःश्रुतयोजीवेगौण्याब्रह्मत्वंवदंतीति ॥

## टीका

सहस्राक्षे किंच यथाणोरित्यादिएवंबुद्धिगुणैरितीत्यंतं भागंनिरस्यंति यद्-
पि किंचेत्यादिना ब्रह्मत्वं वदंतीतीत्यंतेन ॥ तत्परमिति ॥ जीवस्य
दुर्ज्ञेयत्वप्रतिपादकं ॥ उभयत्रादीतिन्यायपंचलक्षण्यां ( अ० १ आ० १ सू० २५ )
" लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं सदृष्टांत " इति गौतमोक्तेरिति
भावः । अपाणिपादेति श्वेताश्वतरस्थं प्राग्व्याख्यातं । बालाग्र इत्यादि
वाक्यद्वयमपि श्वेताश्वतरस्थं अर्थस्तु व्याख्यास्यते । बुद्धेर्गुणेनेति । ए-
तदपि श्वेताश्वतरवाक्यमग्रे व्याख्यास्यामः ॥ साराःप्रधानमिति । सहस्रा-
क्षे सारा इति बहुवचसा. विग्रहादिहापि तथैवानूदितं । शांकरभाष्ये तु सार
इत्येकवचनेनैव विग्रहःसारशब्दस्यैव चार्थः प्रधानमिति । अतः सहस्राक्षे त-
द्भाष्यार्थाद्भेदोनुसंधेयः ॥ कारणत्वादिति । कर्तृत्वभोक्तृत्वलक्षणं संसारं प्रति
बुद्धेरेव कारणत्वात् ॥ अणीयान्व्रीहेरिति । छांदोग्येपंचमप्रपाठके शांडि-
ल्यविद्यायामिदं पठ्यते । तत्रच " इतिशांत उपासीते " त्युपक्रमादुपासनाप्र-
करणं तत् । तत्रैव " सक्रतुं कुर्वीते " तिश्रावणाच्च ॥ सोत्रतुशब्देननिराक-
रणीयं पूर्वपक्षमाहुः । जीवे वस्तुतइत्यादिना । अत्र तद्गुणसारसूत्रस्थभा-
ष्यप्रकाशग्रंथमेव तत्रत्यभाष्यसहित केनचित्पाठभेदेन संक्षिप्य प्रायेणाक्षरशोऽ-
नुवदंति । ऐतदात्म्यमित्यादिना । इदं छांदोग्येऽष्टमप्रपाठकेऽस्ति । अत्रा-
ऽपि जडस्य ब्रह्मात्मकत्वं सत्यत्वंचोक्त्वा ततः पृथक् जीवस्य शुद्धात्मरूपतो-
क्ता ॥ प्रज्ञाचेति । इदं श्वेताश्वतरस्थं द्रष्टृत्ववाक्यं च बृहदारण्यकगार्गी-
ब्राह्मणस्थं । इंद्रप्रतर्दनसंवादस्तु कौषीतकिब्राह्मणे तृतीयाध्यायेऽस्ति ॥ प्र-
ज्ञयावाचमिति ॥ प्रज्ञया विसर्पिस्वचैतन्यगुणेन वागिंद्रियं समारुह्येत्यर्थः ।
एवमिंद्रियांतरेष्वपि प्रज्ञयासमारोहणं तत्र " प्रज्ञया प्राणं समारुह्य प्राणेन सर्वा-
न्गंधानाप्नोती " त्यादिना " प्रज्ञया मनः समारुह्य मनसा सर्वाणि ध्यानान्या-

मेती ” त्यंतेन आवितं ॥ **प्रश्नोपनिषदीति** । तत्र “ अथहैनं सौर्यायणी-
गार्ग्यः पप्रच्छ ” इतिचतुर्थप्रश्ने इदमस्ति तत्र “ तेन तर्ह्येष पुरुष ” इत्यादि-
ना प्रत्वापवर्णनात् स्वप्नवर्णनात् “ सपरेऽक्षरे आत्मनि संप्रतिष्ठते ” इत्यादिक-
थनाच्चजीवपरमेवैतत् ॥ **अन्यथेति** । जीवेभगवद्गुणसारत्वस्याभावे ॥ **पदा-
र्थत्वेति** । पदार्थत्वमभिधेयत्वं ॥ **जीवमुपक्रम्येति** बृहदारण्यके षष्ठाध्या-
ये द्वितीयब्राह्मणे शारीरकत्वेन जीवमुपक्रम्य तृतीयब्राह्मणे तस्य जाग्रत्त्वमाद्य-
वस्थानिरूपिताः । “ यत्र सुप्त ” इत्यादिवाक्यान्यपि तृतीयब्राह्मणस्थानि ॥ **प्रा-
ज्ञस्वरूपमाहेति** “ तद्वाअस्यै तदतिछंदा ” इतिवाक्यं तद्यथाप्रिययेत्यस्मा-
दव्यवहितं पूर्वमस्ति । ततःपुरस्तादव्यहितंच “ तद्वाअस्येतदाप्तकाममात्मकाममन-
कामरूपं शोकांतरं अत्र पिताऽपिताभवति माताऽ माता ” इत्यादिपठ्यते ।
तथापूर्वोत्तरवाक्ययेउभेऽपि परमेश्वरस्य प्राज्ञाख्यं रूपविशेषं निरूपयतइ-

---

सहस्राक्ष.

किञ्च यथाऽणोरणीयानित्यादिवाक्यं महतोमहीयानितिवाक्यबलात् दुर्ज्ञेयत्वपरमित्य-
ङ्गीक्रियते तथेहापि महानजः नित्यःसर्वगतःस्थाणुरित्यादिवाक्यबलाद्वालाग्रशतभागस्येत्या-
दिवाक्यं तत्परं स्वीक्रियतामित्याह ॥ परस्मिन्यथेति ॥ यथा दुर्ज्ञेयत्वाभिप्रायेण ब्रह्म-
ण्यणुवचस्तथा जीवइत्यर्थः ॥ किञ्च बुद्धिस्थगुणैरेवात्रतथा व्यपदेशोऽस्तु तथाच श्रुतिर्बुद्धे-
गुणेनात्मगुणेनचैवआराग्रमात्रोह्यवरोपिदृष्टइति ॥ एतेनोत्क्रान्त्यादयोऽपि व्याख्यातास्तासामपि
बुद्ध्युपाधिकत्वात् ॥ तमुत्क्रामन्तं प्राणोनूत्क्रामतीत्यादौ प्राणादेरेव पश्चादुत्क्रमणमुक्तं नतु
बुद्धेरिति तस्याः सहोत्क्रमणेऽपि नतद्विरोधः ॥ अनोर्लक्षणार्थत्वेनापिविरोधाभावाच्च ॥ त-
थाच भगवद्गीतायां शरीरंयदवाप्नोतियच्चाप्युत्क्रामतीश्वरः ॥ गृहीत्वैतानिसंयातिवायुर्गन्धानि-
वाशयात् ॥ श्रोत्रंचक्षुःस्पर्शनंचरसनंघ्राणमेवच ॥ अधिष्ठायमनश्चायंविषयानुपसेवते इत्यत्र
ग्रहणपूर्वकं गमनमुक्तम् ॥ तथाचसूत्रम् तद्गुणसारत्वात्तुतद्व्यपदेशःप्राज्ञवदिति ॥ तुशब्दः पू-
र्वपक्षव्यावृत्त्यर्थः ॥ एतेन नाणुरतच्छ्रुतेरिति सूत्रविरोधः परिहृतस्तस्य पूर्वपक्षस्थत्वा-
त् ॥ सूत्रार्थस्तु तस्याबुद्धेर्गुणास्तद्गुणास्ते सारः प्रधानं यस्यात्मनः संसारिभावे संभ-
वन्ति कारणत्वात् सतद्गुणसारस्तद्भावस्तद्गुणसारत्वं तस्मात् ॥ तद्व्यपदेशः अणुत्वोत्क्रा-
न्त्यादिव्यपदेशः ॥ प्राज्ञवत् यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषु उपाधिगुणसार-
त्वादणीयस्त्वादिव्यपदेशोऽणीयान्व्रीहेर्वायवाद्वाइत्येवंप्रकारस्तद्वदिति ॥ यद्वा सारोबलेस्थिरांशे-
चेतिमेदिनीकोशाद्बलवाची सारशब्दः ॥ एतेन बुद्धिगुणानामनर्थरूपत्वात्कथं सारत्वमित्य-
पास्तं ॥ संसारित्वे सारत्वाच्च ॥ तदेतदाह ॥ एवंबुद्धिगुणैरिति ॥

तिभावः ॥ ब्रह्मलिंगत्वादिति । स्पष्टं चेदं प्रथमस्य प्रथमे पादेंतस्तद्ध र्माधिकरणे ॥ अत्रेशोभिप्रायोवसेयः । ( किंच यथाणोरणीयानि ) त्यादिलेखस्त्व- स्मन्मताज्ञानात् । नह्यस्माभिर्महीयस्त्वश्रुतिबलात्पूर्वत्रोपचारलभ्यदुर्ज्ञेयत्वं स्वीक्रि- यते । विनिगमनाविरहेणोत्तरत्रपूज्यतमपर्यायितोक्तेर्दुर्निरसत्वात् । किंत्वलौकिक- सामर्थ्याद्विरुद्धधर्माश्रयत्वमेव " तदेजतितन्नैजति आसीनोदूरंव्रजतिशयानोयाति- सर्वत " इत्यादिश्रुत्यंतरेभ्यः । किंच बालाग्रश्रुतेर्महत्वश्रुत्याभक्तिमत्वउच्यमा- नेतद्वलान्महत्वश्रुतेरेव कुतो न तदापाद्यतां श्रुतित्वाविशेषात् । बालाग्रवाक्ये जी- वशब्दश्रुतिश्च सर्वतो बलीयस्यनुसंधेया । बहूनामनुग्रहोन्याय्यइति च । अणु- त्वश्रुतीनां बहुत्वात् ॥ वस्तुतस्तुमहत्वश्रुतेर्विषयभेदः सूत्रकृदभिहितः प्रागेवसम- र्थित इतिन तथाणुत्वश्रुतीनां बाधसंभावनापि । तस्मादेषोणुरात्मेत्यादौ शक्या- र्थबाधाभावाल्लक्षणाप्रणयोनास्थेयः । सूक्ष्मेत्वणुशब्दः शक्तः । अणुर्व्रीह्यल्प- योरितिहैमोक्तेः । अणुर्व्रीहिविशेषेस्यात्पुंसि सूक्ष्मेऽभिधेयवदितिमेदिनीकोशाच्च । यत्तुबुद्धिस्थगुणैरणुत्वव्यपदेशवचनं तत्तुसंपूर्णवेदांतादर्शिनां मंदानां व्यामोहनायैव । इदंहि वाक्यं श्वेताश्वतरे पंचमाध्याये " अंगुष्ठमात्रोरवितुल्यरूपःसंकल्पाहं- कारसमन्वितोयः । बुद्धेर्गुणेनात्मगुणेन चैवआराग्रमात्रोह्यपरोऽपिदृष्ट" इति पठ्य- ते । अत्रबुद्धेर्गुणेन परिमाणेनांगुष्ठमात्रः । आत्मनः स्वस्य परिमाणेनचाराग्र- मात्रइत्यर्थः एवमेवबुद्धेर्गुणेनेत्येकवचनंस्वरसतःसंगच्छते ॥ त्वन्मतेचात्मगुणेनेतिआ- राग्रमात्रपदादन्यत्रकान्वियातत्रान्वीयमानेचकथंसंगच्छेतत्वन्मतेबुद्धिगुणैरेवाराग्र- मात्रत्वात् आत्मगुणेन तुविभुत्वात् । बुद्धेरंगुष्ठमात्रत्वंतु मनुष्यह्रदयाकाशस्य ता- वन्मात्रत्वात् स्पष्टं चेदं ( अ० १ पा० ३ सू० २५ ) " ह्यपेक्षयातुमनु- ष्याधिकारत्वादि " तिसूत्रे । किंच बुद्धेराराग्रमात्रत्वेमानाभावात् । तेनतद्गुणानां- तावत्वे च सुतरां तदभावात् । नबुद्धिगुणैरणुत्वं सुवचंतस्मादेवंश्रुत्यैकदे- शमात्रमुदाहृत्यदुर्बलान्व्यामोहयंतः सद्भिरुपेक्ष्याः । अथवाऽदृष्टोपनिषत्कोऽयं- स्वपरिशीलिततद्भगसारसूत्रीयस्वभाष्ये उत्तरार्धमात्रमुपलभ्य तावदेवालिखदिति नायं वराकोत्रापराध्यति । उत्क्रांत्याद्वयश्चन बुद्धिधर्माः श्रुतिसूत्रादिभिस्तेषां जी- वधर्मत्ववसितेः । तथा च सूत्रं ( अ- २ पा- ३ सू- १९ ) " उत्क्रांतिगत्या- गतीना " मिति इह " ज्ञोतएव " तिपूर्वसूत्रमनुवर्ततेतथाच जीवउत्क्रांतिगत्यागति- संबंधीतद्बोधकश्रुतिभ्य इत्यर्थः । उत्क्रांतिश्च कौषीतकिब्राह्मणे प्रतर्दनाख्यायि- कायां । " सयदास्माच्छरीरादुत्क्रामतिसहैवैतैःसर्वैरुत्क्रामती " ति । अत्र सइति- पूर्वोक्तजीवः परामृश्यते । एतच्छब्देन चपूर्वोक्तानि वागादिमनोंतानि परामृश्यंते मनःशब्दश्चेहांतःकरणचतुष्टयोपलक्षकः । अन्यथा पूर्वोक्तध्यानासिद्धेः तेन ( प्राणादेरेवपश्चादुत्क्रमणंऽन तु बुद्धे ) रितिनिरस्तं । अतोत्रोत्क्रांतिर्मुख्यतया-

जीवस्यैवोच्यते बुध्यादेस्तु तेनसहोत्क्रमणं । न च बुध्यादिनिष्टासाजीवउपचर्यंत-इतिवाच्यं सहैवैतैरितिप्रयोगानुपपत्तेः । नहिपुत्रस्यैव गमने पितुश्चागमने पुत्रेण सह पिता गच्छतीति प्रयुज्यते । अतोजीवानुत्क्रांतिसाधनाय बुद्धेस्सहोक्तिप्रयासस्तदर्थं स्वविरुद्धगीतावाक्योपन्यासश्चाविचारात् । तत्र हि ममैवांशइतिजीवस्य स्वांशत्वमुक्त्वाणुत्वं बोधयितुं शरीरं यदवाप्नोतीति शरीरांतरप्राप्तिः पूर्वशरीरादुत्क्रांतिश्च जीवस्यैवोच्येते । गृहीत्वेत्यनेन चमनःप्रभृतेर्जीवसहभावःअतएवलिंगशरीरनिष्ठेतेतत्रोपचर्येते इतिप्रत्युक्तं भवति । देवदत्तोवस्त्राभरणादिकं गृहीत्वा गच्छतीत्युक्तेवस्त्राभरणादिकमेवगच्छति तन्निष्ठंचगमनं देवदत्तउपचर्यतेइति नहीकेनापिशक्यं व्याख्यातुं । वायुर्गंधानिवेतिदृष्टांतेनापि जीवस्यैवतेत्रोच्येते न हि गंधमात्रं गच्छति तन्निष्ठा च गतिरगंतर्यपि वायावुपचर्यत इति त्वयापि शक्यं वक्तुं । ईश्वरशब्दश्च जीवपक्ष एव संगच्छते स्वांशत्वात् न तु बुद्धिपक्षे जडत्वात् । त्वन्मते मिथ्यात्वाच्च । तस्मादुत्क्रांतिर्जीवधर्मः तथालोकांतरगतिरपि तत्र तत्र श्रुतिषु तस्य श्रूयते यथा कौषीतकिब्राह्मण एव ( पृ० ७ ) गांग्यायनि श्वेतकेतुसंवादे " ये वै केचास्माल्लोकात्प्रयंतिचंद्रमसमेव ते सर्वे गच्छंति " इतितथालोकांतरात्तस्येहागतिरपि अनेकत्राम्नायते । यथा बृहदारण्यके ( पृ० ८५६ अ० ६ ब्राह्मण ४ मं० ६ ) " तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे " इति । अत्र कर्मणइत्युक्तयापिजीवस्यैव सा दर्शीक्रियतेजडस्य बुध्यादेस्तदयोगात् । जीवस्यैव सर्वकर्मकर्तृतायाः ( अ० २ पा० ३ सू० ३३ ) " कर्ताशास्त्रार्थवत्वादि " त्यधिकरणे सुनिर्धारितत्वाच्च । अग्रे तस्यैवागंतुर्निष्कामत्वे मोक्षस्तत्रैवाम्नायते न सबुध्यादेःसंभवति किंच मनुनाऽपि षष्ठाध्याये ( श्लो० ६३ ) देहादुत्क्रमणं चास्मात्पुनर्गर्भे च संभवं । योनिकोटिसहस्रेषु सृतीश्चास्यांतरात्मन इतिस्मरता जीवस्योत्क्रांत्यादयः श्रुत्यभिप्रेततया दर्शिताः स्मृत्यंतराणि तु विस्तरभयान्नोपन्यस्यंते । किंचैतासूत्क्रांत्यादिषु तु तस्या मनःप्रभृतिसहभावोप्यस्ति सुषुप्त्यादिषु तुकेवलस्यैव जीवस्य गत्यागतीसिध्यतःअतउक्तसूत्रात्पुरतएव सूत्र्यते ( अ० २ पा० ३ सू० २० ) " स्वात्मनाचोत्तरयोरि " तिअथस्तुजीवः स्वात्मना केवलेनाणुमात्रस्वस्वरूपेणोत्तरयोर्गत्यागत्योः संबंधीसुषुप्त्यादौ भवति । तथाचाथर्वणानां ब्रह्मोपनिषदि " ऊर्णनाभिर्यथातंतून् सृजते संचरत्यपि । जाग्रत्स्वप्नेतथाजीवोगच्छत्यागच्छतेपुनरि " ति अत्रोर्णनाभितौल्यं ब्रह्मणः ततो गत्यागती जीवस्य स्पष्टं चेदं दृप्तबालाकिब्राह्मणादिष्वपीत्यलं प्रसक्तानुप्रसक्त्या । किंच श्वेतकेतुविद्यायां " अनेन जीवेनात्मनानुप्रविश्ये " ति नामरूपव्याकरणादिसृष्टेः प्रागपिजीवरूपेण प्रवेश उच्यते । तथा " ब्रह्मैव स-

न ब्रह्माप्येती " त्यादौ ब्रह्मभावोत्तरं सैंधवखिल्यन्यायेन ब्रह्मण्यप्ययः श्रूयते " यथासैंधवखिल्यउदके प्रास्तउदकमेवानुविलीयेते " तिमैत्रेयीब्राह्मणश्रुतेः । न हि ब्रह्मभावोत्तरं बुध्यादिकं त्वयाशक्यं वक्तुंबुध्यादेर्ज्ञानावश्यनाश्यत्वात् । ज्ञानमंतरा ब्रह्मभावाभावात् " ब्रह्म वेद ब्रह्मैव भवति । नान्यः पंथा विद्यतेऽयनाये " त्यादिश्रुतिभ्यः । किंच भृगुवल्ल्यां " अस्माल्लोकात्प्रेत्ये" ति परममुक्त्यनंतरमपि " कामान्नीकामरूप्यनुसंचर " न्नित्यनुसंचरणंश्रूयते । छांदोग्येऽपि " तस्य सर्वेषु लोकेषु कामचारोभवती " ति । न हीदं विभोः संभवति नापि परममुक्त्युत्तरमपि बुध्यादिकमस्ति यद्गतं तदुपचर्येत अतोजीवस्यैवोत्क्रांतिगत्यागतीनां श्रुतिगीतासूत्रादिसिध्दत्वाद्विभुत्वेच तदसंभवात्सोणुरेव । यत्त्वनोर्लक्षणार्थत्वं तमुत्क्रामंत मिति श्रुतावुक्तं तदसंगतं तथासनिजपमनुप्रावर्षदित्यादौ वृष्टेर्जपज्ञानजन्यज्ञानविषयत्ववत्प्राणोत्क्रांतेर्जीवोत्क्रांतिज्ञानजन्यज्ञानविषयत्वं वाच्यं तदेव न संभवति जीवोत्क्रांतेः सुतरां दुर्ज्ञेयत्वात् । लोके प्राणोत्क्रांतिज्ञानाज्जीवोत्क्रांतिनिश्चयदर्शनेनविपर्ययाच्च ॥ किंचैतावतापि साक्षाज्जीवोत्क्रांतिः स्वमुखेन प्रतिपादितेति वृथाश्रांतोसि ॥ नन्वेवमपि श्रुतौ प्राणादेरनूत्क्रमणं गीतायां च सहोत्क्रमणंसिध्यतीति कथं तयोरविरोध इति चेदुच्यते । बलिष्टहयस्योत्क्रमणे हि तद्बंधनशंकूनामनूत्क्रमणं प्रसिध्दंतत्र व्यवहितोत्तरक्षणएव शंकूत्क्रमणात् शंकुभिः सहोत्क्रांतो हय इत्यपि प्रयुज्यते स्पष्टश्चायं दृष्टांतो बृहदारण्यके छांदोग्ये च प्राणविवादे ( अ० ७ पृ० २९९ ) " अथहप्राण उच्चिक्रमिष्यन् सयथासुहयः पड्वीशशंकून् संखिदेदेवमितरान्प्राणान्त्समखिदत्त्ँहाभिसमेत्योचुर्भगवन्नेधि त्वन्नःश्रेष्ठोसि मोत्क्रमीरिती " ति । तस्मादनूत्क्रमणे वास्तवं स्वल्पकालांतरायंविवक्षित्वा बृहदारण्यकादिश्रुतिः प्रवृत्ता । तमविवक्षित्वा तुकौषीतक्यादिश्रुतिर्गीताचेत्यविरोधः । तद्गुणसारसूत्रस्य वास्तवार्थस्तूच्यते । तत्त्वमसीत्यादौ जीवस्यसाक्षाद्ब्रह्मत्वकथनाद्ब्रह्मणश्च " व्याप्यनारायणस्थित " इत्यादिश्रुतिभिर्व्यापकत्वश्रवणात् कथंजीवस्याणुत्वं संगच्छतामित्याशंकायामुच्यते ( अ० २ पा० ३ सू० २९ ) " तद्गुणसारत्त्वात्तुतद्व्यपदेशःप्राज्ञवत् " इतितुःशंकानिरासेतस्य ब्रह्मणो ये गुणाः प्रज्ञाद्रष्टृत्वादयःतएवसाराःप्रधानाः जडवैलक्षण्यबोधकायत्रस तद्गुणसारःजीवस्यतद्गुणसारत्वादेवास्मिँस्तद्व्यपदेशःतत्त्वमसीत्यादौसाक्षात्तत्त्वव्यपदेशःराजज्येष्ठपुत्रे राजेतिव्यपदेशवत्तत्रश्रौतदृष्टांतः प्राज्ञवदिति " तत्रतस्येवे " तिसप्तम्यर्थे वतिः । प्राज्ञः सुषुप्तिसाक्षीशारीरकब्राह्मणदौ माध्यंदिनपाठे प्रियस्त्रीवत्सुषुप्तिकाले तत्परिष्वंगमभिधाय तस्य स्वरूपमुच्यते " तद्वा अस्यैतदतिच्छंदोपहतपाप्माभय्ँ रूपमशोकांतरमि " तिमूलव्याख्यानावसरेत्वस्माभिः काण्वपाठउपन्यस्तःभाष्ये प्रकाशे चैतत्सूत्रे माध्यं-

दिनपाटस्थसप्तमाध्यायपाठ एवोदाहृतोज्ञेयः । अतोत्र साक्षाद्ब्रह्मत्वाभावेपि यथातत्त्वव्यपदेशस्तद्वदित्यर्थः । यत्तु नाणुरितिसूत्रस्य पूर्वपक्षस्थत्वमुक्तं तदसत्तदुत्क्रांत्यादिदशसूत्र्याःपूर्वपक्षरूपत्वेमानाभावात् । नच प्रकृतसूत्रस्थस्तु शब्दः पूर्वसूत्रेषु पूर्वपक्षत्वं बोधयतीतिवाच्यं तुशब्दघटितसूत्रपूर्वसूत्राणां पूर्वपक्षरूपत्वनियमांगीकारे "तत्तुसमन्वयादि" त्यादितःपूर्ववर्तिशास्त्रयोनित्वादिसूत्राणामपितथात्वप्रसंगात् । किंच " ज्ञोतएवे " त्यंतानितुसिद्धांतसूत्राण्येवेत्यत्रापि किंगमकं लोके बुद्धिद्वारा ज्ञानदर्शनात् ज्ञातृत्वव्यपदेशोपि बुद्धिगुणसारत्वादेवेति तस्यापि पूर्वपक्षसूत्रत्वमापद्येत । तथा बुद्धिनित्यत्वादेव तस्य नित्यत्वमस्त्विति " नात्मश्रुतेरि " त्यस्यापि तथात्वं । विनिगमकाभावात् । बहुश्रुतिव्याकोप एवात्र गमक इति चेत्तत एवोत्क्रांत्यादिसूत्राणामपि पूर्वपक्षरूपत्वं त्यज्यतां ॥ बहुष्वेवश्रुतिष्वणुत्वोत्क्रांत्यादीनांश्रवणात् । किं च पूर्वं केवलजीवस्वरूपेण गत्यागती अणुत्वबोधकस्वशब्दादिकं विभुत्वबोधकश्रुतीनां परविषयत्वं चोक्तं तत्सर्वंत्वद्व्याख्यातरीत्यापितद्गुणसारसूत्रेणनशक्यंसमाधातुं । तथाभिप्रायेसूत्रकारःपुनःसूत्रांतराणिकृत्वास्वरूपगत्यागतिःस्वशब्दादिकंचसमादध्यात । महत्त्वश्रुतेश्चप्रकरणंबाधित्वाजीवविषयत्वंसाधयेत् । यच्चपूर्वंगुणविसर्पणेप्रभागंधादिकंदृष्टांतीकृतंतन्निरासायप्रभायाद्रव्यत्वंपुष्पादेरवयवोद्गमंचस्वयंब्रूयात् । याश्चांतिमसूत्रद्वयेनस्पष्टतराविसर्पिगुणत्वबोधिकाःश्रुतयोगृहीतास्ताअपिकथंचिद्योजयेत् । नहिभगवानसमर्थोयत्स्वयंपूर्वपक्षेबहुतरंबलीयोबाधकमुपपाद्यापिनसमादध्यात् । बुद्धिगुणसारत्वादणुत्वव्यपदेशइत्येतावन्मात्रोक्त्यातु " प्रज्ञयाशरीरंसमारुह्य " त्यादिस्पष्टविसर्पिगुणत्वबोधकश्रुत्यंतंसर्वंनैवसमाहितंभवतीत्यपाणिपिहितमेतत् । नापिव्यासातिरिक्तःकपिलकणादगौतमाद्यन्यतमःकोप्यणुत्वंवदति । यदनुवादत्वेनोत्थिताशंकारूपोतिविस्तीर्णएवंपूर्वपक्षःप्रवर्तेतबुद्धिगुणसारत्वादणुत्वादिव्यपदेशइत्येवसूत्रितेविभुत्वासिद्धेर्दशसूत्रीप्रणयनवैयर्थ्यंच । किंचपूर्वसूत्रेषुबुद्धेर्नाम्नोप्यभावात् । तच्छब्देनात्रबुद्धिरेवपरामृश्यतइतिकथंनिश्चीयतां । सर्वनाम्नांपूर्वपरामर्शकत्वदर्शनेनतदसंभवात् । बुद्धेरेवसूत्रकर्तृबुद्धिस्थत्वकथनेमानाभावाच्च । तथासतिचअल्पाक्षरमसंदिग्धमितिसूत्रलक्षणंजानन्बुद्धिगुणसारत्वादित्येवसूत्रयेत । श्रीमदाचार्योक्तार्थेतुब्रह्मणोधिकृतत्वात्परामर्शःसंभवति । ॐ तत्सदितिनिर्देशइतिगीतावाक्यंचात्रानुगुणं । सूत्रेब्रह्मवाचकतच्छब्देन तत्त्वमस्यादीनि तद्घटितविषयवाक्यान्यप्युपतिष्ठंते । "जन्माद्यस्य यतः ईक्षतेर्नाशब्दमि " त्यादौयतश्शब्दादिभिः " यतोवाइमानिसईक्षते " त्यादिवदितिसर्वंसमंजसं । किंच नैयायिकोपपादितगुणानां द्रव्यमात्रवृत्तित्वमिव गुणे गुणांतरासत्वमपि त्वयोरीकार्यं । तथासति बुद्धेर्गुणत्वेन तस्यागुणा एव नसंभवंतियच्चेह शारीरकभाष्ये " तस्याबुद्धेर्गुणास्तद्गुणाइच्छाद्वेषःसुखंदुःखंइत्येवमादय " इत्यभ्यधायि तदसंभवि बुद्धेर्जडत्वात्इच्छाया अजडधर्मत्वस्य स्वयमीक्षत्यधिकरणेंगीकारात् " एतस्यैवानंदस्यान्यानिभूतानि मा-

चामुपजीवंती ” त्यादिश्रुतिभिः सुखस्य ब्रह्मधर्मत्वात् । नैयायिकादरणेतु- द्वेषदुःखयोरप्यात्मधर्मत्वापत्तेश्च ॥ बुद्धिगुणानामनर्थकत्वात्सारत्वं चासंगतं नच- सारशब्दोबलार्थइतिवाच्यं स्वभाष्यविरोधात् । यदि भाष्यकारस्तथाभिप्रैष्यत्- तर्हि सारोबलमित्येवव्याख्यास्यत् । बलस्य प्राणधर्मत्वेन बुद्धेर्गुणाप्राणधर्मायस्ये- त्येतावतापि इष्टाऽसिद्धिरर्थासामंजस्यंच्च । नच सारोबलइतिकोशे बलशब्दस्या- र्थांतरंकल्प्यंकोशांत्वेवमदर्शनात् । अनिर्णयापत्तेश्च । अतोनबलार्थता । अपिच- उपाधिगुणानां सारत्वोक्तौ सहचरितस्योपधेयस्यासारत्वमर्थादेवफलत तस्मात्तदु- क्तः सूत्रार्थएवनसंगच्छते । अधिकंतूत्तरभागे प्रकाशयिष्यते एवंच जीवोणुरे- वोत्क्रांत्यादयश्चतस्यैवधर्माइतिसिद्धम् ॥ ॥

ननुजीवस्याणुत्वेसकलशरीरव्यापिशैत्यस्यजलावगाहनादौ निदाघेचतादृशौष्ण्यस्याप्रतीतिप्रसंगादात्मनएकदेशस्थत्वादिति- चेन्नयथाचंदनमेकदेशस्थ मेवसामर्थ्यविशेषात्सकलशरीरेसुखंक रोत्येवमात्मापिसामर्थ्यविशेषात्सकलशरीरव्यापिशैत्याद्युपल- ब्धिंजनयिष्यतीतिनपूर्वोक्तदोषःकिंचयथावैद्यके ज्वरंहंतिशिरो- बद्धासहदेवीजटायथाइत्यादिना एकदेशस्थजटयासर्वशरीरेसुख- स्यजननंप्रभावविशेषात्तथात्मनापीति ननुचंदनदृष्टांतेनसामर्थ्य व्याप्तिसाधनमयुक्तंचंदनेएकदेशस्थायित्वस्यप्रत्यक्षतोनिश्चया- त्जीवेतुशरीरैकदेशस्थायित्वस्यप्रत्यक्षेणानिश्चयाद्दृष्टांतवैषम्ये- नतादृशसामर्थ्यासिद्ध्यभावात्किंचचैतन्यमात्मनोगुणःसचगुणि- मात्रवृत्तीरूपरसादिषुतथैवदृष्टत्वात्तथाचचैतन्यस्यसर्वशरीर- व्याप्त्यासर्वशरीरव्यापीजीवात्मामंतव्यःयदिसामर्थ्येनव्याप्नुया- त्तदास्यगुणोनसर्वत्रानुभूयेतेतिचेन्नैवंगुणोगुणिनंविनानसंभवती- तिव्याप्तेरसिद्धत्वात्रूपरसादिषुसत्वेपिमणिप्रवेकेव्यभिचारात्- विनापिमणिंतस्यसकलभवनव्याप्तिदर्शनादत्रापितद्वच्चैतन्यस्य-

सकलशरीरव्याप्तिकल्पनेविरोधाभावात् ननुप्रभादृष्टांतोनसंभव-
तितस्यामणिजनितविरलसजातीयद्रव्यांतरत्वात् सूर्य्यादिप्रभाव-
तिदिचेत्सूर्य्यादिप्रभायांस्पर्शोपलंभात्तत्रद्रव्यांतरत्वमपिसंदेग्धुं-
शक्यंमणेस्तुपार्थिवत्वेनतत्रकिरणरूपद्रव्यांतरजननेमणितोबहि-
र्गतानामवयवानांबहिष्ठत्वान्मणिपिधानकालेपितदनुभवापत्तिः
मणिनाशेपिस्थित्यापत्तिःनिमित्तकारणनाशस्यद्रव्यनाशाहेतु-
त्वात् मणेर्विजातीयद्रव्यंप्रतिसमवायिकारणत्वासंभवात् यदि-
मणौस्वप्रभायाःसंकोचकत्वंप्रसारकत्वंचस्वीक्रियतेतदामणेश्चे-
तनत्वापत्ति.स्वतआकुंचनप्रसारणादिकस्यजडेऽसंभावितत्वात्-
नचलज्जावत्याख्यओषधिविशेषेपुरुषच्छाययातेनाकुंचनस्य-
तदभावेचसरणस्यदृष्टत्वान्नोक्तापत्तिरितिवाच्यंतस्याअपिजी-
वत्वान्नाचेतनत्वमन्यथोत्पादितेपितथाभावप्रसंगादचेतनत्व-
साम्यात्तस्मान्मणिप्रभानद्रव्यांतरंकिंतुतस्यगुणएवननुयदिमणि-
प्रभागुणएवेत्यंगीक्रियतेतदागुणस्यगुणिनंविनागमनायोगात्क-
थंमणिंविनाभित्यादिदेशव्यापित्वमन्यथारसादीनामपिस्वाश्र-
यद्रव्याधिकदेशवृत्तित्वंस्यादिचेन्न प्रकृष्टगुणस्यगुण्याधिक-
देशवृत्तित्वमपिकल्प्यतेप्रतीतिबलात् अपकृष्टगुणस्तुगुणिमात्र-
वृत्तिरितिनियमःतेननरसादिष्वतिप्रसंगःअयमेवार्थो “ गुणाद्वा-
लोकव ” दितिसूत्रेणव्यासैर्दर्शितःतथाचजीवस्याणुत्वेपितच्चैत-
न्यस्यसकलदेहव्यापित्वान्नसर्वांगशैत्यौष्ण्याद्यनुपलब्धिप्रसंगः
एतेनप्रदीपालोकस्यगुणत्वेप्रकाशवत्सूत्रविरोध ) इत्यपास्तं-
दीपस्यतेजस्त्वात्तस्यस्वलोकरूपतेजोविशेषोपादानत्वस्यकथं-
चित्संदेहेपिमणेःपार्थिवत्वात्तत्प्रभायांद्रव्यत्वेमानाभावात् किंच-

" प्रकाशव " दितिसूत्रेणप्रकाशस्यद्रव्यत्वंप्रतिपादयतिये-
नालोकस्यगुणत्वेतद्विरुद्धंस्यात्सूत्रार्थस्तुभाष्येस्पष्टःग्रंथगौरव-
भयादनतिप्रयोजनकत्वाच्चात्रनोक्तःयत्तु ( ज्ञानस्यगुणत्वेतस्य-
पदार्थांतरेणसंयोगसमवाययोरसंभवेनसाक्षात्संबंधांतरस्यवक्तु-
मशक्यत्वेनासंबद्धस्यभानेऽतिप्रसंगेनचशैत्यादिभानानुपपत्ति )
रित्युक्तंतदपिनसम्यक् ज्ञानस्यसाक्षात्संबंधाभावेप्यंतःकरणवृ-
त्तिद्वारकसंबंधसत्वेबाधकाभावात् अन्यथात्वन्मतेप्यात्मनोज्ञा-
नस्वरूपत्वेनज्ञानस्यचगुणत्वेनविषयैःसहसाक्षात्संबंधासंभवात्त
द्विषयभासकत्वंतस्यनस्यात्वस्तुतस्तु द्रव्यगुणसंयोगसमवाया-
दिपरिभाषायास्तार्किकसंमतत्वेप्यस्मदसंम्मतनयानास्मन्मते-
तादृशगुणत्वादिकमादायदोषःएव ( मालोकस्यचाक्षुषसत्वेनगु-
णचाक्षुषेस्वसंयुक्तद्रव्यद्वाराचक्षुषोहेतुत्वंव्याकुप्यते ) त्यादिदो
षस्यापादनमप्यस्मन्मतमज्ञात्वैव तादृशकार्य्यकारणभावस्य-
तार्किकसंमतत्वेनास्मन्मतेतद्व्याकोपस्यदोषत्वासंभवात्यथाम-
ण्यादिप्रभायाःधर्मिणंविनैवगमनंतथैवगंधस्यापिधर्मिणंविनैव-
प्रसरणं नचगंधप्रत्यक्षेघ्राणसंयुक्तसमवायस्यहेतुत्वाद्रव्येणघ्राण-
स्यासंयोगेगंधप्रत्यक्षानुपपत्तिरितिवाच्यं तादृशकार्य्यकारणभावे
मानाभावात्तवगंधाकारवृत्तिविशेषस्यैवगंधप्रत्यक्षहेतुत्वात्यदि-
चस्वमतंविहायतार्किकमतमवलंब्यतादृशकार्य्यकारणभावानु-
रोधेनद्रव्यस्यैवदेशांतरगमनंस्वीक्रियतेतर्हिवक्तव्यंतद्द्रव्यंपरमा-
णुरूपंव्द्यणुकरूपंतद्भिन्नंत्रसरेण्वादिरूपंवानाद्यःतन्मतेविषयता-
संबंधेनषड्विधप्रत्यक्षत्वावच्छिन्नंप्रतिसमवायस्यसमवायिसमवे-
तत्वाद्यन्यतमसंबंधेनमहत्वस्यहेतुत्वोपगमात्परमाणौव्द्यणुकेच-

महत्वाभावाद्गंधस्यप्रत्यक्षंनस्यात्तादृशकार्य्यंकारणाभावानुपग
मेपरमाणुतद्गतरूपादीनांप्रत्यक्षत्वापत्तिःनापिद्वितीयःयथागंध-
स्यप्रत्यक्षंतथातदाश्रयस्यापित्रसरेण्वादेःप्रत्यक्षंस्यात्तत्कारणीभू-
तमहत्वोद्भूतरूपादिकारणकलापसत्वात्नचतेषुमहत्वस्यगंधप्रत्य-
क्षानुरोधेनकल्पनेपितत्प्रत्यक्षानुपलंभेनात्रानुद्भूतरूपवत्वकल्प-
नान्नानुपपत्तिरितिवाच्यंचंपकाद्यवयवानामनुद्भूतरूपवत्वेचंप-
कादीनामप्यनुद्भूतरूपवत्वापत्त्याचक्षुरादिवत्प्रत्यक्षंतेषांनस्या-
त्अवयवरूपस्यावयविनिस्वसजातीयरूपारंभकत्वात्किंचद्र-
व्यस्यप्रसरणेऽवशिष्टद्रव्येन्यूनपरिमाणवत्वंस्यात्नचावयवाना-
मतिसौक्ष्म्यात्तदपगमेपिनद्रव्यस्यलघुत्त्वादिभानमितिवाच्यं ते-
षामतिसौक्ष्म्यकल्पनेगंधस्यप्रत्यक्षत्त्वानुपपत्तेरुक्तत्वात्नचावय-
वांतरपूरणान्नाल्पपरिमाणवत्वंचंपकादीनामितिवाच्यंआगंतुक-
स्यावयवत्वेप्रमाणाभावात्किंचागंतुकस्यविजातीयगंधवत्वाच्चं-
पकादीनांन्यूनगंधवत्वंमिश्रितगंधवत्वंवास्यात्नचत्वन्मतेपिगंध-
स्यप्रसरणेचंपकादौन्यूनगंधवत्वंतत्परिहारायतद्भिन्नद्रव्यगंधपूर-
णेमिश्रितगंधवत्वंवाकुतोनस्यादितिवाच्यंअस्मन्मतेकस्यचिद्द्र-
व्यस्यस्वाधिकदेशव्याप्तरूपवत्वंयथामण्यादेःकस्यचित्स्वाधिक-
देशव्याप्तगंधवत्वंयथाहिंगुचंपकादिद्रव्यस्यतत्रयथामण्यादिरू-
पंप्रतिनियतदेशव्याप्तमेकमेवतस्यतावद्देशव्याप्तावपिनमण्यादौ
रूपस्यन्यूनत्वं तादृशरूपस्यैवविजातीयत्वात्तथाचंपकादिगंध-
स्यापिप्रतिनियतदेशव्याप्तस्यैकस्यैवविजतीयस्वभावस्यस्वीका-
रान्नकोपिदोषःत्वन्मतेचयथामण्यवयवानांमणिभिन्नदेशेव्याप्ता-
नामपिप्रत्यक्ष्यतातथाचंपकाद्यवयवानांचंपकादिभिन्नदेशेव्या-

मानांकथंनप्रत्यक्षंचंपकादेरूपिद्रव्यत्वेनतदवयवानांरूपशून्य-
त्वस्यवक्तुमशक्यत्वात्एवमनेकचर्मपुटवेष्टितमृगमदादीनामव-
यवनिःसरणासंभवात्तद्गंधानुपलब्ध्यापत्तेर्दुरुद्धरत्वंगंधस्यतुनि-
रवयत्वान्निर्गमनंसंभवतिकिंचावयवनिर्गमनस्वीकारेप्रसारित-
मुखस्यचंपकहिंग्वादिगंधवत्तद्रसस्यापिप्रत्यक्षंस्यात्तद्दोषवार-
णार्थंतद्रसस्यानुद्भूतत्वकल्पनेहिंग्वादिगंधस्याप्यनुद्भूतत्वापत्तिः-
रसप्रत्यक्षेकस्यचित्प्रतिबंधकत्वकल्पनेतुगौरवंस्यात्किंचसक-
त्स्पृष्टस्यापिलशुनादेर्मुहुर्हस्तादिप्रक्षालनेपिगंधापगमाभावादव
यवसंयोगोपगमेप्रक्षालनादिनान्द्रदापगमदर्शनात्तादृशावयवा-
पगमस्यांगीकरणीयत्वेनगंधोपलपलब्ध्यनुपपत्तिरतोद्रव्याधिक
देशवृत्तित्वंगंधस्यमंतव्यंयथाविनश्यद्द्रवस्थगुणानामनाश्रित-
त्वंत्वयास्वीक्रियतेतथाद्रव्याधिकदेशवृत्तित्वमप्यनुभवानुरो-
धात्कुतोनस्यात् " यथासंपुष्पितस्यवृक्षस्य दूराद्गंधोवात्ये-
वंपुण्यस्यकर्मणोदूराद्गंधोवाती " तिश्रुतिरपिगंधस्यद्रव्याधि-
कदेशवृत्तित्वेप्रमाणंनचतत्रसागंधवद्द्रव्यपरालेशपरावेतिवाच्यं-
वेदेनिर्मूललक्षणायाअप्रामाणिकत्वात्गंधपदस्यमुख्यार्थपरत्वे
पिबाधकाभावात्अतएवदूरादित्यपिसंगच्छतेननुपृथ्वींविनागं-
धोनकुत्रापिवर्त्ततेयत्राप्युपलभ्यतेतत्रापिपृथिव्याएवतथाचो
क्तंव्यासैउपलभ्याप्सुचेद्गंधंकेचिद्ब्रूयुरनैपुणाःपृथिव्यामेवतंवि-
द्यादपोवायुंचसंश्रितमितितथाचपृथिव्यवयवरूपाश्रयसंचारादे
वगंधसंचारइतिचेन्नअवयवसंचारस्यपूर्वोक्तयुक्तिभिरसंभवेन-
शब्दादिवद्गुणसंचारकल्पनायाएवन्याय्यत्वाद्व्यासवाक्यस्यपृ-
थिव्यमेवतंविद्यादित्यस्यपृथिवीगुणंविद्यादित्यर्थकत्वात्केव-

लगुणसंचारानंगीकारेभेर्य्यादिशब्दस्यान्यत्रप्रत्ययोनस्यात्नहि त्वन्मतेशब्दस्याकाशमात्रगुणत्वमस्तियेनाकाशस्यतत्रसत्वेनश- ब्दोत्पत्तिस्तत्रकल्प्येतकिंतुपंचभूतगुणत्वमेवअन्यथाशब्दस्पर्शौ रूपरसौगंधोभूतगुणाअमी एकद्वित्रिचतुःपंचगुणाव्योमादिषु- क्रमात्इतितावकीनवचनंव्याकुप्येततथाचभेरीशब्दस्यपार्थि- वस्याकाशेउत्पत्त्यसंभवनतस्यप्रसरणशीलत्वमंगीकर्त्तव्यमेवंगं- धस्यापितथात्वेनदोषःनैयाकीयश्रवणप्रक्रियातुअनेकशब्देत- त्ध्वंसादिकल्पनयागुरुभूतेतिनचकस्यचिद्गंधस्यस्वल्पक्षालनेनिर्ग मनंकस्यचिन्मुहुःप्रक्षालनादिनापगमइतितारतम्यदर्शनेनगंधस्य सावयवत्वापत्तिरितिवाच्यंउत्कटत्वानुकटत्वयोरेवतद्धर्मयोरप- गमानपगमनियामकत्वस्वीकारेणदोषाभावात्वस्तुतस्तुसिद्धांते गंधादीनांभूतसूक्ष्मरूपत्वेनसावयवत्वेपिनदोषःगंधेनैवचंदनस्पृ- ष्टवायुसंपर्केशालिशालांतरशैत्यंनिंबतरुविशेषसंपर्कशालिवा- तसंसर्गजमुखतिक्तत्वमपिव्याख्यातंज्ञेयंअयमेवार्थो “ गुणाद्वा लोकवत् व्यतिरेकोगंधवत् अविरोधश्चंदनवत् ” इतिसूत्रै- र्व्यासैर्दर्शितःनचतादृशसूत्राणिपूर्वपक्षपराणीतिवाच्यंतेषांपूर्वप- क्षपरत्वमानाभावात्अतएव “ तथाचदर्शयती ” त्यनेनसूत्रेण- जीवस्याणुत्वमेवदृढीकृतंतदर्थस्तुजीवोणुरेवस्वगुणेनचैतन्येनश- रीरंव्याप्नोतीतिवेदोदर्शयतितथाचकौशीतकिब्राह्मणे“तंहोवाचा- जातशत्रुर्यत्रैषएतद्बालाकेपुरुषोशयिष्टयत्रैतदभूद्यतएतदागा”- दितिप्रतिज्ञाय “ हितानामपुरुषस्यनाड्योहृदयात्पुरीततमभि- प्रतन्वंतितद्यथे ” त्याद्युक्त्वा “ तासुतदाभवती ” तिहृदया- यतनत्वंतादृशनाडीषुस्थानेनाणुपरिमाणत्वंचाभिधायतस्यैवहृ- दयायतनस्याणोरात्मनः “ सएषप्राणएवप्रज्ञात्मेदंशरीरमात्मा-

नमनुप्रविष्टआलोमभ्यआनखाग्रेभ्य " इतिचैतन्येनगुणेनसमस्तशरीरव्याप्तिंदर्शयति अन्यथाअणोर्व्याप्तिर्नोपपद्येतातेणुबोधनपूर्वकंव्याप्तिबोधनाच्चैतन्यंगुणएवेतिज्ञेयं"प्रकाश्रयवद्वातेजस्त्वा" दितिसूत्रमत्रोपष्टंभकतयायदुक्तंतत्तदर्थापरिज्ञानात् । सूत्रार्थस्त्वणुभाष्यादितोऽवसेयःविस्तरभयान्नेहलिख्यते-तथाचविसर्पिगुणचैतन्योऽणुर्जीवइतिसिद्धं ॥

## टीका

सहस्राक्षे किंचात्मनोणुत्वमित्यादि जीवइतिप्रत्युक्तमित्यंतंभागंखंडयंति **ननुजीवस्येत्यादिनाऽणुर्जीवइतिसिद्धमित्यंतेन** ( अ० २ पा० ३ सू० २३ ) " अविरोधश्चंदनवदि " तिसूत्रभाष्यप्रकाशस्थंचंदनदृष्टांतेनसहदेवोजटादृष्टांतेन चसामर्थ्यविशेषाद्याभ्युपपादनमनुवदंतः समादधते । **यथाचंदनमित्यादिना** । ( अ० २ पा० ३ सू० २४ ) अवस्थितिवैशेष्यसूत्रावतरणप्रकाशमनुसृत्याहुः । **ननुचंदनेत्यादि** । अत्रांशे समाधानं तु चंदनस्यैकदेशे स्थितिः प्रत्यक्षतो यथातथा जीवस्य हृदयरूपैकदेशे स्थितिस्तत्सूत्रतस्तद्विषयश्रुतितश्च सिध्यतीति नदृष्टांतवैषम्यमिति ज्ञेयं । ( अ० २ पा०३ सू० २५ ) " गुणाद्वाऽऽलोकवत् " इतिसूत्रस्यावतरणं प्रकाशस्थं संक्षिप्यानुवदंति । **किंच चैतन्यमित्यादिना** । **सत्वेपीति** । व्याप्तेःसत्वे । वस्तुतस्त्विदमपि प्रायिकं । उत्कटस्योष्णस्पर्शस्यभेर्यादिशब्दस्य प्रभाख्यरूपस्य निंबतरुतिक्तत्वस्य गंधस्य चस्वाश्रयाधिकदेशवर्तितायाः सिद्धांते सूपपादत्वात् । इममेवारुचिमपिशब्दो द्योतयति । **मणिप्रवेकइति** । तस्य प्रभाख्यरूपविशेषइतिभावः । **मणिप्रवकस्तु** । मणिश्रेष्ठःक्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाइत्यमरःसाधारणमणौतथाविसर्पिप्रभायाअभावात्प्रवेकपदोपादानंपूर्वोक्तसूत्रप्रकाशं प्रकृतोपयोगिपाठभेदसंहितमक्षरशोऽनुवदंति । **ननु प्रभादृष्टांतइत्यादिना** । **अपिसंदेग्धुमितिअरुचिप्र**स्तं संदेहमात्रं तत् । वस्तुतस्तु सूर्यादिप्रभापि गुणएव । औष्ण्योपलंभस्तूत्कटोष्णस्पर्शादेरपि प्रसरणादिति वक्ष्यामः अतःसंदेहासंभवादरुचिद्योतकोऽपिशब्दः । **मणेस्तुपार्थिवत्वेनेति** पार्थिवस्यकिरणजनकत्वं सुदुर्घटमिति भावः । अतएव कालिदासादयः कवयोऽपि लोकाचवैक्षणलब्धनैपुण्याअभिज्ञानश-

कुंतलादिषु नप्रभातरलंज्योतिरुदेति वसुधातलातइत्यादिवर्णयंति । जीववत्त्वा दिति । चतुर्विधशरीरेषु वृक्षाणामुद्भिज्जं शरीरमितिश्रुत्यादिषु प्रसिद्धत्वात्कायिकपापविशेषैर्वृक्षयोन्यापत्तेर्मन्वादिभिः स्मरणात् । पुराणेषु कुबेरपुत्रादीनां शापतः स्थावरतायाः कीर्तनाच्चतथेत्यर्थः मणिस्तु न चतुर्विधशरीरेष्वंतर्भवितुमर्हति । रसा दिष्विति । अवच्छेदकावच्छेदेनानाधिकदेशवृत्तित्वमितिभावःप्रकृष्टेष्वितेष्वपि तदस्त्येवेतिदर्शयिष्यते । कथंचित्संदेह इति । वस्तुतस्तु दीपालोकोऽपि गुण एवप्रकृष्टरूपं हिसः । । रूपस्यापि तेजस्त्वं तु न विरुद्धं ( स्कं १२ अ- ४ श्लो- २३ ) दीपश्चक्षुःस्वरूपंचेतिभागवतोक्तेरितिहृदयं ॥ प्रकाशवदितीति । ( अ-

---

## सहस्राक्ष.

किञ्चात्मनोऽणुत्वे निदाघे सकलदेहव्याप्यौष्ण्यं युगपन्नप्रतीयेत एवं गङ्गान्हदनिमग्नस्य शैत्यम् ॥ नच यथा गुणिनोमण्यादेरेकदेशस्थत्वेऽपि तत्प्रभास्तद्गुणाअधिकं देशं व्याप्नुवन्ति एवं जीवस्याणोरेकदेशस्थस्यापिज्ञानं गुणः सर्वत्र देहे प्रसरति तेन तद्व्यापिशैत्यौष्ण्योपलब्धिर्भविष्यतीतिवाच्यम् ॥ प्रभाया विरलसंयोगवत्तेजोद्रव्यत्वेन गुणत्वे प्रमाणाभावात् ॥ यत्तु विद्वन्मण्डनटीकायाम् आलोकस्य द्रव्यत्वे व्योम्नि वर्तमानस्य तस्य तदतिरेकेण तद्रूपग्रहणापत्तिरित्युक्तं ॥ तन्न ॥ ज्वालादौ तददर्शनात् ॥ सचदीपजन्यइति दीपस्याऽऽलोकइत्युच्यते ॥ प्रदीपाद्यालोकस्य गुणत्वे प्रकाशवत्सूत्रविरोधः ॥ एवंच विशेषाभावान्मण्याद्यालोकोपि द्रव्यम् ॥ एवंच वस्तुतस्तु आलोकोऽत्र मणेरेव ग्राह्यइति कुशकाशावलम्बनमपि प्रत्युक्तम् ॥ ज्ञानस्य गुणत्वे पदार्थान्तरेण संयोगसमवाययोरसम्भवेन साक्षात्सम्बन्धान्तरस्य वक्तुमशक्यत्वेनाऽसंबद्धस्य भानेऽतिप्रसङ्गेनच शैत्यादिभानानुपपत्तिः ॥ एवंप्रभायागुणत्वमित्यादिनातस्याः संबन्धोदुर्वचः ॥ एवंच चक्षुषा भित्त्यादेर्ग्रहणमपिदुष्करं तेजः संबन्धाभावात् ॥ तथाऽऽलोकस्य चाक्षुषसत्त्वेन गुणचाक्षुषे स्वसंयुक्तद्रव्यद्वाराचक्षुषोहेतुत्वं व्याकुप्येत ॥ एतेन गन्धस्यापि निराश्रयस्य गमनं प्रत्याख्यातम् ॥ घ्राणेनासंबन्धेनाप्रत्यक्षत्वप्रसङ्गात् ॥ द्रव्यद्वारकस्य घ्राणहेतुत्वस्य भङ्गाच्च ॥ तस्माद्गन्धोऽप्यवयवैस्सहैव याति तेषां च यथाद्रव्यत्वभावमेव प्रसरणंद्रव्यैश्चाकर्षणमिति नातिदूरे गन्धभानं नवा द्रव्यस्य देशान्तरे गमनेऽवयवान्तरप्रसरणम् ॥ अतिसौक्ष्म्याच्च नतदपगमेऽपि द्रव्यस्य लघुत्वादिभानम् ॥ त्वयापि हि गुणभूतस्य गन्धस्यातिदूरगमनाभावाय न्यूनत्वाभावाय च तत्त्रितयं कल्पनीयमिति समं कल्पनागौरवम् ॥ सूक्ष्मावयवान्तरपूरणंवा कल्प्यते त्वयापि न्यूनताभयाद्गन्धान्तरोत्पत्तिः कल्पनीया ॥ एवमनेकचर्मपुटवेष्टितमृगमदादिषु गन्धस्येवावयवानामपगमापगमौ बोध्याविति सा-

३ पा० २ सू० ६५ ) " प्रकाशवच्चावैयर्थ्या " दिति सूत्रमित्यर्थः ॥ ( अ २ पा० ३ सू० २६ ) " व्यतिरेकोगंधवदि " तिसूत्रमनुसृत्यगंधस्यविसर्पितां स्वतःसाधयंति **तथागंधस्येत्यादिना नाद्य इति** । परमाणुरूपं द्व्यणुकरूपं वा तद्द्रव्यमिति द्विकोटिकोऽप्याद्यपक्षो नेत्यर्थः । लौकिकप्रत्यक्षाविषयमूर्तद्रव्यतयोभयोः साम्यादेकहेलया प्रथमपक्षे संग्रहः ॥ **समवायेत्यादि** । घटादिद्रव्यप्रत्यक्षे समवायेनमहत्त्वंहेतुः तद्गतरूपरसगंधादिप्रत्यक्षेच स्वसंयुक्तसमवायेन तत्तथा । एवंरूपत्वादिजातिप्रत्यक्षे स्वसंयुक्तसमवेतसमवायेन महत्त्वंतथेत्याद्यूह्यं **नापि द्वितीय इति** । लौकिकप्रत्यक्षविषयत्रसरेण्वादिरूपं तद्द्रव्यमिति पक्षोऽपि नेत्यर्थः । **चंपकाद्यवयवानामित्यादि** । वस्तुतश्चानुद्भूतरूपेषु रसादिवद्गंधस्याप्यनुद्भूतत्वनियमोऽस्त्येवेति चंपकाद्यवयवानामनुद्भूतरूपत्वेतद्गंधोऽपि नानुभूयेतानुद्भूतत्वाविशेषादित्यप्यत्र बोध्यं ॥ **चक्षुरादिवदिति** । यथा चक्षु-

---

ष्यम् ॥ कर्पूरेऽवयवानागमाल्लघुतैव ॥ गन्धमात्रापगमे सा कथं स्यादितिविचार्यम् ॥ परिमाणसाम्येऽल्पगन्धतातु पूर्यमाणावयवानामल्पगन्धत्वेन वक्तुंशक्या ॥ प्रसारितमुखस्य तद्रसानुपलंभस्तु रसनेन्द्रियस्याऽत्यल्पवस्तुरसाग्राहकताया दृष्टत्वात् ॥ अतएव कर्पूरसन्निधौ तद्गन्धज्ञानेऽपि नतद्रसज्ञानम् ॥ नच सकृत्स्पृष्टस्यापि लशुनादेर्हस्तादीनां क्षालनेऽपि गन्धोनापैतीति गन्धमात्रस्य करादौ संबन्धोनावयवानां तेषां सकृत्स्पर्शेनागतानां सकृत्क्षालनेनापगमस्यौचित्यादितिवाच्यं ॥ सकृत्स्पर्शेनागतस्य गन्धस्याऽपिसकृत्क्षालनेनापगमौचित्यात् यदितु गन्धे तदर्थं सामर्थ्यं किञ्चित्कल्प्यते तर्हि तत्तदाश्रयएव कल्प्यताम् ॥ यथावृक्षस्यसंपुष्पितस्यदूराद्गन्धोवात्येवंपुण्यस्यकर्मणोदूराद्गन्धोवातीतिश्रुतौ गन्धशब्दोगन्धवद्द्रव्यपरोलेशपरोवा ॥ गन्धःप्रतिवेश्यामोदलेशसंबन्धगन्धकेइतिमेदनीकोशात् ॥ दूरत्वतु वृक्षापेक्षया तस्योपात्तत्वात् नतु स्वाश्रयापेक्षया मानाभावात् ॥ पृथिवीं परित्यज्य गन्धस्यते-ः सर्वथाऽयुक्तत्वात् ॥ तथाचव्यासः ॥ उपलभ्याप्सुचेद्गन्धंकेचिद्ब्रूयुरनैपुणाः ॥ पृथिव्यामेवतंविद्यादपोवायुंचसंश्रितमिति ॥ यत्तु केचिच्छब्दवदनाश्रयस्य चैतन्यस्य गतिमाहुस्तन्न ॥ श्रोत्रेन्द्रियस्य गत्वा ग्राहित्वेन शब्दस्य चलनाभावात् ॥ यत्तु यथा चन्दनस्यैकदेशस्थस्य सर्वदेहव्यापिशैत्यसंपादकत्वमेवं जीवस्यापि त्वग्देशस्थस्य सर्वदेहव्यापिज्ञानसम्पादकत्वमिति ॥ तन्न ॥ चन्दनस्य सावयवत्वेन सूक्ष्मतदवयवप्रसरणेन देहव्यापिशैत्यापादकत्वसम्भवात् ॥ एतेनगुणाद्वालोकवत् व्यतिरेकोगन्धवत् अविरोधश्चन्दनवदितिसूत्राण्यपिसमाहितार्थानि ॥ तेषांपूर्वपक्षपरत्वात् ॥ कथमन्यथा प्रकाशाश्रयवद्वातेजस्त्वादित्यनेन विरुद्धं गुणाद्वालोकवदितिसूत्रकारोवदेत् ॥ अधिकजिज्ञासुभिस्तु शारीरके द्रष्टव्यम् ॥ तदेतदभिप्रेत्याह ॥ विसार्पिगुणतामुक्तेर्विरोधान्नतुइति ॥ एतेन विसर्पिगुणचैतन्योऽणुजीवइति प्रत्युक्तम् ॥

रादींद्रियस्यानुद्भूतरूपत्वान्न प्रत्यक्षंतथेत्यर्थः ॥ **अवयवरूपस्येति** । महत्वा-श्रयावयवरूपस्येत्यर्थः । तेन द्व्यणुकरूपस्य त्रसरेणुरूपारंभकत्वेऽपि नदोषः ॥ **नकोऽपि दोष इति** । किंच द्रव्यस्य गुणंप्रति कारणत्वाद्गंधनाशाग्रहेपि तदा-श्रयद्रव्यं सजातीयमेव गंधांतरमुत्पादयति । अतोऽपि न दोष इत्याद्यूह्यं ॥ एवं स्वतः स्वमतसमर्थनपुरःसरं परमतं दूषयित्वोक्तसूत्रभाष्यप्रकाशग्रंथं तत्रानूदित-विद्वन्मंडनभागं च कंचिदक्षरशः केनचित्पाठभेदेन चानुवदंति । **एवमनेकचर्म-पुटेत्यादिना** ॥ **विनश्यदवस्थेति** । पूर्वक्षणे घटादिद्रव्यं नश्यति तदुत्तरक्ष-णे तद्गुणा इति हि तार्किका मन्यंते ॥ **त्वयेति** । नैयायिकेन । तन्मतमव-लंब्यैवाक्षेरदूषणस्य प्रक्रमात् ॥ **कुतो न स्यादिति** । तदाश्रयद्रव्याभावेऽपि तद्गु-णस्थितेरेकत्रांगीकारेऽन्यत्रापि सास्यादेवेतिभावः । **यथावृक्षस्येति** । तैत्तिरीय-बृहन्नारायणप्रपाठकस्थंवाक्यमिदं । **निर्मूलेति** । वाच्यार्थानुपपत्त्यादिकं लक्ष-णायामूलं तद्रहितायाः ॥ **संगच्छतइति** । लेशास्तु स्थाण्वाद्यपुष्पितवृक्षाणाम-पि धूल्यादीनामपि च वाय्वादिवशाद्दूरंगच्छंत्येवेति लेशादिपरत्वे संपुष्पितपदं दूरपदं च व्यर्थमेव स्यादिति भावः ॥ **उक्तं व्यासैरिति** । इदं प्रायेण भारतव-चनं शारीरकभाष्यादिषूदाहृतं ॥ **तावकीनवचनमिति** । विद्यारण्यवचनं त-त्कृतपंचदश्यां महाभूतविवेकाख्ये द्वितीयप्रकरणे शब्दःस्पर्शोरूपरसाविति श्लोको द्वितीयः ॥ **व्याख्यातंज्ञेयमिति** । एतदंतोभाष्यप्रकाशोक्तार्थानुवादः स्वो-क्तार्थे आकरसंमतिं दर्शयितुं कृतः ॥ तदेवध्वनयंति । **अयमेवार्थइत्यादि-ना**अत्राक्रमेणसूत्रत्रयोपन्यासोवादिलेखानुरोधात् ( अ० २ पा० ३ सू० २७) " तथा चदर्शयति " इतिसूत्रस्यभाष्यादितो निष्कृष्यार्थं स्वयमाहुः । **तदर्थस्त्विति** । सूत्रे चशब्दोऽवधारणार्थः । तथापदेन ।णुरतश्रुतेरित्यादिपूर्वसूत्रोक्तप्रकारः परामृश्यते । एवं च जीवोणुपरिमाणकोनाडीषु स्वर्यावरहितमान् त्वग्वस्थितो देहं प्रभागंधवद्व्य तिरिच्यमानगुणश्चेतितेनैवप्रकारेण प्रागुक्तेन वेदोदर्शयतीति सूत्राक्षरार्थः उक्तसूत्र भाष्यप्रकाशमेव संक्षिप्याऽक्षरशोऽनुवदंति **कौशीतकिब्राह्मणइत्यादिचैत-न्यंगुणएवेत्यंतं** ॥ इदं हि कौशीतकिब्राह्मणे चतुर्थाध्याये बालाक्यजात-शत्रुसंवादोऽस्ति । तत्र गतगर्वेण बालाकिना ब्राह्मणेनापि ब्रह्मोपदेशार्थं प्रा-र्थितः क्षत्रमजातशत्रुर्नाहं गुरुत्वार्हः किंतु विज्ञापयिष्यामि त्वामितिप्रतिज्ञाय-तं करग्रहपुरःसरं रहसि नीत्वा तत्र सुप्तं कंचित्पुरुषं प्रथमं शब्दैरनुत्थितं यष्टिप्रहारेण बोधयित्वा बालाकिमाह । " क्वैष एतत् बालाके पुरुषोऽशयिष्ट क्वैतदभूत्कुत एतदागात् " इतिअर्थस्तु क्व कुत्र एषः प्राणाद्यतिरिक्त एतत् स-र्ववृत्तिशून्यं यथास्यात् तथा हेबालाके पुरुषो जीवः अशयिष्ट अस्वाप्सीत् क्व कस्मिन्प्रदेशे एतत्पूर्वोक्तं शयनमभूत् एवं स्वापकाले जीवस्य शयनक्रियाया-

श्वापारं पृष्ट्वा जागरणाधारं पृच्छति कुत इति कुतः कस्मात्स्थानात् एतत् जागरणस्थानं आगात् पुनरागमत् इतिविज्ञेयः । एतत्प्रश्नस्योत्तरमप्रतिपद्यमानं बालाकिं स स्वयमेव तदुत्तरमाह ॥ यत्रैष इत्यादि स्वापकाले यो जीवस्य शयनक्रियायाश्चाश्रयः पुनरागमनस्यचावधिभूतस्तं वदामीति भावः ॥ तदेवाह- **हिता इत्यादि**हिताः प्राणिनां हितकारितया हिताख्याः हृदयस्य हृत्पुंडरीक- स्य संबंधिन्यस्ततो निर्गत्य पुरीततं आंतरं वेष्टनविशेषं अभिप्रतन्वंति सर्वतः प्रकर्षेण विस्तारयंति वेष्टयंति तद्यथा यावत्परिमाणमित्यर्थः ॥ **इत्याद्युक्त्वे- ति** । आदिपदात् “ तद्यथाऽसहस्रधाकेशोविपाटितस्तावदण्व्य ” इत्यादिसंगृह्यते । विपाटितकेशसहस्रतमांशवदणुतमपरिमाणवत्यस्तानाड्य इत्यर्थः । अग्रेच “ तासु- तदाभवति ” तास्वणुतमासु नाडीषु तदा शयनकाले जीवो भवतीति तादृशना- डीषु स्थितेरणुत्वं विनानुपपत्त्या जीवस्याणुत्वमुक्तं भवति । तदा शयनकाल एव तासु स्थित्युक्त्या जीवस्य सर्वदा हृदयएवावस्थानं सिध्यति अतएव नाडीषु हृदयसंबंधस्य ततोनिर्गतत्वस्यच निरूपणं सार्थकं भवति हृदयायतनः सतादृ- शीषु तासु तदा विहरतीति अग्रेच यदा “ सुप्तःस्वप्नंनकंचनपश्यती ” त्यादिना- सुषुप्तिं प्रबोधं चनिरूप्य “ सएष प्राणएवप्रज्ञात्मेदंशरीरमात्मानमनुप्रविष्टआलो- मभ्यआनखाग्रेभ्य ” इत्यादिपठ्यते । अत्रप्राणनहेतुत्वात्प्राणोजीवएवप्रज्ञात्मा- विसर्पिस्वचैतन्यगुणरूपेणेदंशरीरमनुप्रविष्टोलोमानिनखाग्राणिचमर्यादीकृत्येत्यर्थः। एते नविसर्पिगुणतासिद्धा । तत्राग्रेक्षुराग्निदृष्टांतावपि तथैवगमयतःअन्यथा मध्यमप- रिमाणत्वमापद्येत । तत्राप्यग्निदृष्टांतऔष्ण्यवद्गुणविसर्पणबोधकः ॥ बृहदारण्य- कादिषु चेदं विस्तरेणनिरूपितमेवेति प्रकाशादितो ज्ञेयं । मयापिकिंचित्पुनर्व- क्ष्यते । प्रकाशाश्रयसूत्रार्थस्तुत्वदीयतुरीयश्लोकखंडनेनिर्मलोनिरणायि । तत्रापि प्रकाशस्य धर्मत्वेव प्रत्युतसिध्यति । नतु द्रव्यांतरत्वमितिविरुद्धइहतवतदुपन्यासः॥ **विसर्पिगुणचैतन्यइति** ॥ अत्रायमाशयोऽनुसंधेयः ॥ यत्तु ( निदाघगंगान्हृदनिम- ज्जनादिषुसर्वशरीरगतौष्ण्यशैत्याद्यनुभवानामसंभवःअणोःसर्वत्रसंबंधायोगादि) त्यभि हितं तन्न तस्याणुत्वेपि तद्गुणस्य चैतन्यस्य सर्वशरीरे प्रसरणेनतदनुभवोपप- त्तेः ॥ गुणस्य द्रव्याधिकदेशवृत्तित्वं तु प्रभादिवत् । दृश्यतेह्येकदेशवर्तिनाम- ल्पानामपि मणिदीपकादीनां तदधिकदेशवर्त्तिनी प्रभा अतएव मैत्र्युपनिषदि “ अनंतारश्मयस्तस्यदीपवद्यस्थितोहृदी ” ति सदृष्टांतं विसर्पिगुणत्वमुच्यते गी तायामपि यथाप्रकाशयत्येकःकृत्स्नं लोकमिमंरविः क्षेत्रं क्षेत्री तथाकृत्स्नं प्रकाश- यति भारतेति । एतत्सर्वमनुसंधाय भगवान्परमाचार्यःसूत्रयांबभूव “ गुणाद्वा- लोकवदि ” ति अत्राविरोध इत्यनुवर्तते वाशब्दश्चैवकारार्थः तथाचालोकवद्गु-

णादेव सकलशरीरगतौष्ण्याद्यनुभवस्याविरोध इत्यर्थः । औष्ण्याद्यनुभवस्य हेतुर्यदि विभुत्वेनात्मनः सकलशरीरेस्थितिरेवस्यात्तर्हि लोमनखाद्यादिष्वपि त-त्सत्वेन तत्र जलार्ककिरणादिसंयोगे शैत्यौष्ण्याद्यनुभूयेत ॥ नत्वनुभूयतेतोन-सविभुः ॥ मम " त्वालोमभ्यआनखाग्रेभ्य " इत्यादिश्रुतिभिरेव यथामत्यय-मिष्टसिद्धिः । एतावताऽऽलोकस्यगुणत्वे प्रमाणाभावःप्रत्युक्तः । न च शाब्द-मानोपन्यासस्यायमनवसर इति वाच्यं प्रकाशवत्सूत्रविरोधस्याप्यनुपन्यसनीयत्वा-पत्तेः । अविरोधस्तु दर्शयिष्यते । यच्च साधकमानमनुदाहृत्यैव प्रकाशस्य द्रव्यत्वमुक्तं तन्न युक्तिसहं ,यथाहुःप्रकाशकाराः " मणेःपार्थिवत्वेन तत्र कि-रणरूपद्रव्यजनकत्वस्य तत्प्रसारकत्वस्यवांगीकारे बहुकल्पनापत्तिः यदि जन-नं तदा पूर्वं मणितो बहिरागतानांबहिष्ठत्वात् मणिपिधानदशायामपि तदनुभ-वापत्तिर्मणिनाशेपि तत्स्थित्यापत्तिस्तदसमवायिनिमित्तयोरत्यंतापरिदृष्टयोः कल्प-नापत्तिस्तन्निर्वचनाशक्तिश्च । यदिप्रसारणंतदामणेश्चेतनत्वापत्तिःस्ततआकुंचनप्रसा-रणक्रिययोश्चेतनएवदृष्टत्वात् " इत्यादि ॥ किंच प्रभायाअपिद्रव्यत्वेतस्यांयत्प-रिमाणकंद्रव्यांतरंस्थाप्येततावत्याःप्रभायाअग्रिमप्रदेशेप्रसरणेनावश्यंभाव्यं आमुखंज-लपूरितेघटेवस्त्वंतरनिक्षेपेणतावज्जलनिःसरणस्यदर्शनात् । तावत्तन्नाशोत्पत्योः स्वीकारेऽत्यंतगौरवं । किंच नाशक्षणेतदारंभकावयवाः क्वनिविशेरन् ॥ मणावे-वावयवानांप्रवेशस्यततएवोद्गमस्यचकथनेप्रभानाशोत्पत्तिक्षणयोर्मण्यादेराधिक्यन्यौ-न्येगौरवलाघवेचापद्येतां । किंचकोशकाराअपिप्रभाशब्दस्यकांतिपर्यायत्वंदर्शयं-ति स्युःप्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयइत्यादौ एवमाद्यनेकदोषग्रासान्नप्रभा-याद्रव्यत्वंशक्यवचनंतस्मादत्युक्तदोषरूपाख्यगुणएवासौ । द्रव्यत्वेतुव्योम्निस्थिता-याश्चंद्रादिप्रभायाःशुक्लरूपव्यतिरिक्तंतदाश्रयभूतंकिंचित्स्वरूपमुपलभ्येततदनुपलंभा-च्चनद्रव्यमिति हरितोषिण्याविद्वन्मंडनटीकायांआशयः । ज्वालायांतुह्रस्वदीर्घपरि-माणस्यस्थूलमूलत्वसूक्ष्माग्रत्वदक्षिणाग्रवृत्तित्वाद्याकृतीनांचदर्शनेनरूपमात्रेतदसंभवेनच-पृथक्द्रव्यत्वंनिश्चीयतइति तस्याःशुक्लहरितलोहितादिविविधरूपाश्रयत्वंनतुरूपत्वं । अनेन ( ज्वालादौतददर्शनादि ) तिनिरस्तं । गुणगुणिभावेचसत्येवमणेरालोकोदी-पस्यालोकइतितत्संबंधित्वंयुज्येतजन्यत्वस्यनिराकृतत्वात् । तन्नात्वेपिनृनाशेऽपिपुत्र स्थितिवत्स्थितेर्दुर्वारत्वाच्च । नचानित्यसंयोगित्वादस्थित्युपपत्तिःप्रभायाघटादिसंयो-गासंभवप्रसंगात् सावयवत्वेनघटादिसंयुक्ततदवयवानांदोपादिसंयोगाभावात् अल्पप-रिमाणद्रव्ययोःसंयोगनित्यतायाःक्वचिदप्यदर्शनाच्च । नन्वन्यन्नादृष्टोऽप्यन्यथानुपप-त्यात्रनित्यसंयोगःकल्प्यतइतिचेदत्रगुणएवविसर्पित्वंतयाकल्प्यतांलाघवात् । धर्मिक-ल्पनातोधर्मकल्पनायांलाघवमप्यत्रानुसंधेयं नचप्रभायादीपसमवेतत्वेनसमवायिनाशा-त्तन्नाशोपपत्तिर्वाच्याप्रभाया· अधिकपरिमाणकत्वेनाल्पपरिमाणके एकस्मिन्दीपेतदा·

रंभकत्वासंभवात् । अन्यथाएकेनत्रसरेणुनाऽपिघटारंभप्रसंगात् । आश्रयावयवा-
नांतदारंभकत्वंतुप्रागेवापास्तं । एतत्पक्षेऽप्युक्तदोषःसुस्थएव । वृक्षनाशेऽपितदवय-
वारब्धपुष्पफलादिस्थितिदर्शनात् त्वयातुसंयोगिद्रव्यत्वमेव स्वमुखेनोच्यतेतोन-
समवायोक्तिप्रसंगोपीतिकिंतेन "प्रकाशवच्चावैय्यर्थ्यादि" तिसूत्रंतुयथासौरश्मां-
द्धमसोवाप्रकाशःस्वतोनव्यवहर्तुंशक्यः स्वतःसंपादयितुमकालेनुपयोगायस्वनिकटंस्था-
पयितुंचाशक्यत्वात् आगतेतुसूर्यादौभवतिव्यवहार्यः तथाब्रह्मधर्माअपितदिच्छया-
व्यवहार्याः स्वतश्चाव्यहार्या इत्येवंबोधयत् प्रकाशस्यधर्मत्वमेवसाधयतिनतुद्रव्यत्वं-
तस्माद्गुणत्वेतत्सूत्रविरोधोक्तिरभिलापमात्रंतद्भाष्यविरोधसंभवेतुमयासनपरिहरणीयः व-
स्तुतस्त्वत्रत्वद्भाष्येपिप्रकाशस्याकाराणांऔपाधिकत्वकथनेनवास्तवनिराकारत्वबोध-
नात् रूपवद्द्रव्यत्वेनवास्तवाकृतिमत्वेनचलोकेव्याप्तिदर्शनात् तवैवेदंसूत्रंद्रव्यत्वबाध-
कमेव आकाराभावेनरूपिद्रव्यत्वाभावसिद्धेः नीरूपतत्त्वेवाय्वादिवच्चाक्षुषाविषयत्व-
प्रसंगाच्च । अतस्तृतीयस्कंधस्यषड्विंशे ( श्लो० ४० ) द्योतनंपचनंपानमिति प्रकाशस्य
क्षुत्तृडादिवत्तेजोवृत्तित्वमुच्यतेनतुद्रव्यत्वं दीपादिप्रभायाद्रव्यत्वमसाधयित्वैव ( अविशे-
षान्मण्यालोकोऽपिद्रव्य ) मित्युक्तिस्तुवृथैव प्रभात्वाविशेषेण मणिसूर्यदीपाद्यादिसर्व-
प्रभाणांगुणत्वोक्तेरेवौचित्याच्चअतएवश्रीपुरुषोत्तमोऽपि ( अ० ७ श्लो० ८ ) रसोहम-
प्सुकौंतेयप्रभास्मिशशिसूर्ययोः । प्रणवःसर्ववेदेषु शब्दःखेपौरुषंनृष्विति गुणेष्वेवप्र-
भांगणयति ( स्कं० १० अ० ८५ श्लो० ७ ) कांतिस्तेजःप्रभासत्ताचंद्राग्न्यर्कर्क्षविद्यु-
तां । यत्स्थैर्यंभूभृतांभूमेर्वृत्तिर्गंधोर्थतोभवानिति एवमादौपुराणेष्वपिगंधादिवत् गु-
णत्वमेवदर्शितंरसशब्दादीनांगुणत्वंतुतवाप्यभिमतं प्रायःपाठस्यचनिर्णायकत्वमानंदम-
याधिकरणे शंकराचार्यैःस्वीकृतमेव । नचसिद्धांतरीत्या तत्रैवात्रापितद्बाधःशंक्यः
कर्मभेदाध्यायद्वितीयपादे जैमिनिनोक्तेषुशब्दांतराभ्यासादिषुअन्यतमभेदकस्येहादर्श-
नात् ननुवैश्वानरवासरकरप्रभयोरुष्णिमानुभवातगुणेगुणानंगीकाराच्चद्रव्यत्वमेवभव्य-
मनयोरितिचेन्नैवंतत्रमित्रवीतिहोत्रप्रभृतेःप्रकाशस्येवौष्ण्यस्यापिप्रसरणांगीकरणात्
अतएवान्धैःप्रकाशाप्रत्यक्षेप्यौष्ण्यमनुभूयतेअतएवचहेमन्तशिशिरयोर्मिहिरस्यदूरत्वे-
नाधिकोष्णिमानुभवः वन्हेरपिविप्रकर्षेरजनिर्दिनवदनयोरिनस्यचप्रकाशएवानुभूय-
तेनोष्णिमा ॥ प्रदीपस्यतुसमीपतमएवसमनुभूयत औष्ण्यंप्रकाशस्तुसमस्तेसद्मनि य
दितुप्रभाद्रव्यमेवौष्ण्यंस्यात् प्रभामात्रंतर्हि तथानुभूयेतअनलकमबन्धुसम्बन्धीप्रकाश
मात्रं वापात्रंस्यान्नियमेनोष्णिम्नः तपनातपउष्णइतितुयुगपदुभयोपलब्धिमूलकोभ्रमः
तार्किकाणांक्षारंवारीत्यादिवत् औष्ण्यस्यविसार्पित्वमपिवक्ष्यतेएतेनजैवातृकज्योत्स्ना-
जाड्यमपिव्याख्यातम् ॥ वस्तुतः प्रभायांस्पर्शस्याभावादेवमण्यादिप्रभायांसनोपल-
भ्यते । रूपिद्रव्यत्वेतुतत्रापिसोनुभूयेतव्यापकत्वात् । यत्रयत्रतादात्म्यापरपर्यायस-
मवायेनरूपंतत्रतत्रपरान्वयात्स्पर्शोपीतिव्याप्तिः ॥ यस्त्वंधैरौष्ण्यशैत्ययोरुपलंभो-

स्माभिस्तयोः प्रकाशावर्तित्वसाधकउक्तःसत्वादृशां गुणप्रत्यक्षेगुणिप्रत्यक्षंहेतुरित्य-
भिमानमभ्युपेत्य ॥ तपनातपतोयस्तोयतापः सोप्यौष्ण्यस्यविसर्पणएवोपपद्येतम-
तद्वयेपिप्रभायाः स्वाश्रयनित्यसंयोगितयाप्रभाविभागमागम्यपयः प्रविष्टेतिवक्तुमश-
क्यत्वात् प्रवेशेतुतिमिरेऽपितमतोयचाक्षुषमक्षुण्णमापद्येतालोकसंयोगात् ॥ अंतर्म-
ग्नमीनादीनामालोकजालौकसि विमलसलिलआलोक्यमानतयाजलेजातवेदोघात-
कत्वमिवप्रकाशनाशकत्वंनेतिनिश्चीयतेतेनतिमिरेतोयेनतस्याभिभवोशक्यवचनः ॥
तस्माद्भानुबृहद्भानुप्रभृतेरौष्ण्यमेवजलानिलादौसंक्रामति । अनलावयवानांसंक्र-
मेजलानिलाभ्यांतेऽवश्यंनाश्येरन्विस्फुलिंगप्रदीपादिरिव ॥ अतएवश्रीभागवतादिषु-
( स्कं० ५ अ० १० श्लो० २२ ) स्थाल्यग्नितापात्पयसोऽभितापइत्यादौ ताप-
मात्रस्यसंक्रमोनिरूप्यते तत्रसंक्रांतमप्यौष्ण्यंतेजोधर्मतयाशश्वन्नावतिष्ठते । अ-
भियुक्ताअपिऔष्ण्यसंक्रममेववर्णयंति ( रघु० स० ५ श्लो० ५४ ) उष्णत्वमग्न्यातप-
संप्रयोगाच्छैत्यंहिसायत्प्रकृतिर्जलस्येति तदेतत्सर्वमनुसंधाय " गुणाद्वालोकवदि-
त्यत्राभाष्यतभाष्यकारचरणैःप्रभायागुणत्वमेवस्पर्शानुपलंभात्उदकगतौष्ण्यवत्इति "
एवंचप्रभाकरप्रभापिवस्तुतोगुणएवतथापितत्रौष्ण्यप्रभयोरुभयोर्विभागउक्तचरसरणि-
कोपपादनसापेक्षइतितां विहायोक्तसूत्रेभाष्यकारैर्मणिप्रवेककांतिरेवदृष्टांतिता ।
एतावता ( एवंप्रवस्तुतस्तुआलोकोऽत्रमणेरेवग्राह्यइतिकुशकाशावलंबनमपिप्रत्यु-
क्तं ) इतितदुक्तिरेवकुशकाशावलंबनतामालंबते । यच्चोक्तसूत्रेप्रकाशे " सूर्या-
दिप्रभायांस्पर्शोपलंभाद्द्रव्यांतरत्वमपिसंदेग्धुंशक्य " मित्युक्तंतस्यापिवस्तुतस्तुसा-
पिनद्रव्यमित्येवाशयः औपरिष्टिकदृष्टिमतां संदेहोद्भवस्यैवकंठरवेणकथनात् अपि-
नातत्पक्षेनादरबोधनाच्च वस्तुविवेकेतुविभावसुविभायाअपिविभाव्यतेगुणत्वमेवातोगी
तादिषुसापिजीवचैतन्यस्योपमानीक्रियते ( अ० १३ श्लो० ३३ ) यथाप्रकाश-
यत्येकइत्यादौयत्तुज्ञानस्यगुणत्वइत्यादितन्न उक्तवक्ष्यमाणयुक्तिभिःप्रकाशगंधयोर्गु-
णत्वेसिद्धेप्रकाशवद्गृहंसुगंधवदुपवनमित्यादौसंयुक्तत्वव्यवहारादुत्कटगुणविशेषाणां-
स्वाश्रयद्रव्यातिरिक्तदेशसंयोगस्यदृष्टचरत्वेनज्ञानस्यापिसकलदेहसंयोगकथनेबाधका
भावात् ॥ नचसंयोगमात्रदर्शनात्द्रव्यमितिभ्रमितव्यं । उक्तरीत्यातदसंभवात्-
गुरुत्वाद्यनुपलंभाच्च यद्यालोकोद्रव्यंस्यात्तर्हिप्रकाशतिमिरस्थितैकैकफलकायाउत्तम
तुलायाःप्रकाशसंयोगिफलकंनमेत् केषांचिद्वेदांतिनांमते तेजोद्रव्यस्यापिगुरुत्वन्निय-
मादस्माकंतुनायमाग्रहः । तत्रापिद्रव्यस्यपरान्वयात्स्वभावाद्वा स्पर्शवत्वनियम-
स्तुसर्वसंमतः मणिदीपादिसर्वप्रभासुतुनियमेनस्पर्शोपलंभाभावादिकमपि द्रव्यत्वा-
भावसाधकमनुसंधेयं नचसंयोगस्यगुणत्वात्तद्वत्त्वंगुणांतरस्यदुर्वचंगुणेगुणानंगीकारा-
दितिवाच्यं । गुणस्यापिबुद्धेरिच्छाद्वेषसुखदुःखादिगुणवत्तायास्तद्गुणसारसूत्रविव-
रणे शंकराचार्यैरुररीकृतत्वेनत्वयातथावक्तुमशक्यत्वात् । तदुपपत्तयेयदितार्कि-
कसिद्धांतंतिरस्कृत्यएकंरूपंरसात्पृथगित्यादिप्रतीतेश्चप्रमात्वं स्वीकृत्यगुणेगुणांतरं-

स्वीक्रियेततदाप्रकृतेपितुल्यं । स्पर्शरहितेमणिप्रभादावत्यंतापरिदृष्टस्यतेजोद्रव्यत्वस्यत्वाश्रयमण्यादिनानित्यसंयोगस्यतदाच्छादनोद्घाटनाभ्यां मुहुर्नाशोत्पत्योःसंकोचप्रसारयोर्वामण्याद्यवयवैस्तदारंभप्रभृतेश्चानेकदोषदुष्टस्यकल्पनमतिगुरुतमंविहायउत्कटगुणस्यत्वाश्रयाधिकदेशसंयोगएवांगीकार्यः प्रत्यक्षसिद्धत्वेनकल्पनालेशस्याप्यभावात् ( गीताअ० २ श्लोक १४ ) मात्रास्पर्शास्तुकौंतेयेत्यादावनेकत्रशब्दादीनांसंयोगस्यकंठरवेणकथनादस्माकंतार्किकनियमविरोधोऽकिंचित्करः किंचशैत्यादिभानंप्रतिमनःसंयोगस्यैकारणत्वमस्तिनवा । नद्वितीयः निद्राक्षणेऽपितूलिस्पर्शानुभवप्रसंगात् । ( पृ० ९३ ) " अन्यत्रमेमनोऽभूदित्याह नाहमेतन्नामप्राज्ञासिषमिति . " एवमादिकौशीतकिब्राह्मणगतेंद्रप्रतर्दनसंवादस्यश्रुतिविरोधाच्च आद्येतुमनसोणुत्वात्कथं सर्वशरीरगतस्यतस्ययुगपदुपलब्धिः अथसूच्याशतपत्रभेदनकालवदत्यल्पकालेन सर्वत्रमनोभ्रमणाद्यौगपद्यप्रत्यय इतिचेदणुजीवस्यापितथाभ्रमणेनसोऽस्तु एवमपिपादेमेवेदनाशिरसिमेसुखमित्याद्युपपद्यतेवस्तुतस्तु गुणप्रसरणादेवसर्वोपपत्तिः श्रुत्यादिसिद्धोक्ताप्राक्भित्त्यादिचाक्षुषेत्वालोकसंयोगएवतंत्रंनतुतेजोद्रव्यसंयोगः तमसिसुवर्णमात्रसंयोगेपिभित्त्यादेःप्रत्यक्षापातात् प्रौढप्रकाशवत्तेजःसंसर्गस्तंत्रमितिचेल्लाघवात्प्रौढप्रकाशसंसर्गएवतदास्तां नत्वधिकं वैय्यर्थ्यादसंभवाच्च । नहिसूर्यचंद्रादिनाभित्त्यादिकंसंयुज्यतेअपितुतत्प्रकाशेनैव । एवंगृहेघटादिकमपिदीपादेःप्रभयैवयुज्यते नतुतेन ॥ ननुमन्मतेतत्स्यद्रव्यत्वाद्भित्तिघटादेस्तेजोद्रव्यसंसर्गोस्तीतिचेत्तर्हिप्रौढप्रकाशत्रदितित्यज्यतांप्रकाशे प्रकाशांतरवत्वासंभवात् तत्त्यागेच हेममात्रसंसर्गे प्रत्यक्षापत्तिरत्यागेचासंभवइत्युभयतःपाशारज्जुः पतत्तडिद्दर्शनिस्तनितबृहच्छतघ्नीमुक्तमहागुलिकादिशब्दैर्जीर्णभित्तिगुर्विणीगर्भादेःपातनस्यानुभवादपिविसर्पिगुणानांवस्त्वंतरैः संयोगआस्थेयएवेतिप्रभायाअपिभित्यादिनासउपपन्नःचक्षुषःक्वचिदाश्रयासंयोगेऽपि आलोकप्रत्यक्षंतुनानुपपन्नं । अविसर्पिगुणचाक्षुष एव तथानियमसंभवात् । स्पर्शएव प्रत्यक्षविषयत्वस्य वायौ चानुमेयतायाःकैश्चिदंगीकारेणाकाशस्याप्रत्यक्षविषयत्वेपिशब्दप्रत्यक्षानुभवेनचगुणप्रत्यक्षेगुणिप्रत्यक्षमेवकारणमिति नियमव्याघातात्स्पर्शादिप्रत्यक्षवदुपपत्तेः । संयोगसंयुक्तसमवायादिसंबंधाश्चतार्किकाणामेवपारिभाषिकाः समवायादिकं दूषयद्भिरौपनिषदैर्नशक्याःस्वीकर्तुमितिदिक् । एतेनगंधप्रत्यक्षमपिव्याख्यातं गुणगुणिप्रत्यक्षयोःकार्यकारणव्यभिचारप्रदर्शनेनत्वदभिमतव्याप्त्यसिद्धेःअवयवानांघ्राणेनयोगेतुचक्षुषापियोगाच्चाक्षुषंदुर्वारंस्यात् सूक्ष्मत्वादिंद्रियायोगित्वकल्पनेतुघ्राणेनापिसनस्यात् यथाद्रव्यंप्रसरणंतुबहूनांविभक्तानामिवैकस्य संहतस्यगंधस्यैवांगीकर्तव्यं लाघवात्प्रकाशस्थलेक्लृप्तत्वाच्च । अवश्यंदीपकलिकाकरदीपिकावन्ह्यादिप्रकाशतारतम्यस्यमणिविशेषप्रकाशानां तीव्रातीव्रत्वयोश्चोपपत्तयेतथांगीकर्तव्यंअवय-

वानांतुवृक्षावयवपत्रपुष्पफलादिवदतिदूरगमनेप्रतिबंधकाभावात् अतिदूरेपिगंधप्रतीतिर्दुर्वारैवकिंचगुणत्वादेव गंधस्तत्रतत्रनोयमानेनपुष्पादिना सहैवगच्छति दीपप्रकाशवत् अवयवप्रसरणपक्षेतुतथानस्यात् नचाकर्षणंकल्प्यं विभक्तावयवानांतदसंभवात् अन्यथापृथक्कृतानपिपत्रपुष्पादिस्थावयवान्वृक्षआकर्षेत् प्रतिक्षणंनवावयवप्रसरणे द्रव्यनाशप्रसंगः अवयवांतरोत्पत्तिस्वीकारेत्वत्यंतगौरवंस्यात् किंचैवंसतियेनमार्गेणपुष्पादिकंनीयेततस्मिन्सर्वस्मिन्तन्नयनोत्तरमपितत्समीपप्रदेशइवगंधउपलभ्येततथापुष्पसमीपे सहसामुद्रितायांमंजूषायां अवयवानांनिरुद्धत्वात् स्थलांतरेतदुद्घाटनेऽपिगंधोनुभूयेतगुणत्वेनप्रकाशवदाकर्षणोरीकारेतुसर्वमनवद्यं ॥ ननुलोहस्यचुंबुकेनेव विभक्तावयवानामाकर्षणं स्वीक्रियतेफलादेरनाकर्षणंतुभारवत्वादितिचेत्तर्हि सर्षपद्वयसेनापिमृगमदकणेनहरिचंदनकणेनवास्वावयवानामाकर्षणवत् अतिमहताचंदनतरुणा तच्चूर्णसमुदायस्यावश्यमेवाकर्षणंभाव्यं नत्वेवंदृश्यते किंचातिसूक्ष्माणामपिबहूनामेव सर्वदोद्गमोगंधोपलंभायत्वयावाच्यः तथासतिद्रव्यनाशस्तल्लाघवंचावश्यंभावि । मन्मतेतुतस्यैवगंधस्यरूपस्पर्शादिवन्मुहुरनुभवेऽपि न्यौन्यमेवनप्रसज्यतेयच्चसमंकल्पनागौरवमितितन्न । अतिदूरगमनप्रतिबंधाकर्षणादेस्त्वन्मते कथमप्युपपत्तेरेवाभावात् ममतूक्तरीत्यानिर्बाधासर्वसिद्धिः । किंचतवप्रभास्थलेद्रव्यांतरं गंधस्थलेचावयवाःशब्दस्थलेचेंद्रियस्यगत्वाग्राहित्वमित्यादिनानाकल्पनंतत्तद्दोषपरिहारायतत्रतत्रप्रकारभेदेनोत्पत्तिनाशादिकल्पनंचेतिमहदेवगौरवं ॥ ममतुप्रभादयोविसर्पिगुणाइत्येतावतैवनिर्वाहःअवयवांतरपूरणपक्षेतुस्थितहान्यस्थिताभ्यागमाभ्यांक्लेशः कर्पूरादावपिपूरणप्रसंगःकिंचद्रव्यमानप्रत्यक्षानुरोधात् यावतांगमनंतावतामेवोत्पत्तिरितिवाच्यं तत्रचहेतुर्दुर्वचः । अदृष्टमेवसइतिचेत्तर्हिमृगनाभिश्रीखंडखंडादेःकांश्चिदवयवान्सर्वतोमहत्यायस्पेटिकादौचिरंस्थापने पुनस्तावदेवमानमुपलभ्येत ततोऽवयवानां निर्गमाभावात् अदृष्टेनपूरणस्यतत्रापिसंभवात् मयातुनगंधोत्पत्तिःकल्प्येत्युक्तंप्राक्इत्थंचसएवायंगंधइतिप्रत्यभिज्ञाऽपिप्रमायोपपद्यते त्वसंसर्गिणःसौरभसंपादनेपिनकस्तूरिकादेस्तस्यापक्षयः उदकाद्यौष्ण्यसंपादनेऽपिवन्हिगतौष्ण्यस्यैवेतिकृप्तमखिलं । नचांभस्याग्नित्रसरेणुप्रवेशादौष्ण्योपलंभोवाच्यःअधिकजलस्य वन्हिनाशकत्वनियमेन प्रवेशोत्तरक्षण एव नाशायोगात् अंभसिभास्वररूपोपलंभप्रसक्तेश्च अधिकंतुप्रस्थानरत्नाकरादिष्ववधेयं तावकैरपिजलादौज्वलनौष्ण्यस्यैवसंक्रमोबहुत्रोच्यते । यथाहविषयानंदाख्येपंचदशिचरमप्रकरणेविद्यारण्यः ( श्लोक१० ) यद्वापिनिर्मलेनीरेवन्हेरौष्ण्यस्यसंक्रमः ॥ नप्रकाशस्यतद्वत्स्याच्चिन्मात्रोद्भूतिरेवचइतितथाउपरोधकावरणसत्वेसूक्ष्मावयवानामप्यनिर्गमस्यानेकत्रावलोकितत्वाद्गुणस्यचकाचपात्रविशेषावृतदीपप्रकाशादेर्बहिर्निर्गमदर्शनादनेकचर्मपुटवेष्टितमृगमदस्यापिगुणस्यनिर्गमनमुचितम् । कर्पूरमात्रेतुलाघवदर्शनादवयवोद्गमोपिनिश्चीयते । नैवंसर्वत्रसंभवतिहि

सौरदर्शनात् अवयवोद्गमे च सति गंधवत्तद्द्रव्यसंबंधिनो रसरूपस्पर्शा अपि प्रसारिता-स्येनानुपहतनेत्रत्वक्केनावश्यमनुभूयेरन् आश्रयभूतावयवानामतिसौक्ष्म्यात् र-साद्यनुपलब्धिरिति चेत्तर्हि तन्निष्ठो गंधोऽपि नोपलभ्येत गुणत्वतन्निष्ठत्वाभ्यामविशेषात् तस्माद्यत्रावयवोद्गमः प्रत्यक्षादिना निश्चीयेत तत्राप्युद्गच्छदवयवनिष्ठगंधस्य विसर्पि-त्वमेव वाच्यं अन्यथा तन्निष्ठरसादिवदननुभवप्रसंगात् । अतएव कर्पूराद्यवयवानामति-सौक्ष्म्येऽपि गंधमात्रमनुभूयते विसर्पित्वात् न तु रसादिकं तत्त्वाभावात् । न चावयव-स्याल्पत्वाद्विसर्पिणोऽपि गंधस्य तादृग्बाहुल्यानुपपत्तिः शंक्या भेरीदीपादिबहुत्वे शब्द-प्रकाशादिबाहुल्यवदवयवबाहुल्येन तदुपपत्तेः इत्थं च वन्हिविस्फुलिंगयोरुभयोरपि प्रकाशस्येव कर्पूराद्यवयवितदुद्गतावयवयोरुभयोरपि गंधस्य प्रसरणमुरीकरणीयं आ-पूर्यमाणावयवेष्वपि कांचिदल्पगंधतायाः क्वचित्तुल्यगंधतायाश्च कल्पनात्वत्यंतगुर्वी हेयै-व अस्मदुक्तविधया क्लेशं विनैव सर्वसिद्धेः द्रव्यसत्वेऽपि कचिद्गंधस्याल्पत्वाभावौ तु-कालादिनाप्रतिबंधात्संगच्छेते चातुर्मास्यमण्यादिना सरटवर्णवन्ह्यौष्ण्यादिवत् कुंकुम-श्चायं गंधप्रतिबंधः पैररपि सुरभ्यसुरभिसंघट्टनादौ किंच गोघृतादिना कुंकुमादिगंधाभिव्य-क्तिरवयवोद्गमपक्षे न संगच्छते चिक्कणस्य तस्य योगे प्रत्यक्षसिद्धात्सूक्ष्मावयवपिंडीभा-वादुद्गमप्रतिबंधेन प्रत्युत गंधानुपलंभसंभवात् एवं लशुनादिस्पर्शेऽपि ततः संक्रांते गंधे ए-वं किंचित्काल स्थायित्वसामर्थ्यं कल्प्यं । उदकगतौष्ण्यवत् न त्ववयवेषु सकृत्प्रोंछने ऽप्यपगमसंभवेनानौचित्यात् । न हि जलादौष्ण्यं प्रोंछनादिना सद्योपयाति शीतल-जलसंमेलने तदपगमवत्तत्रापि मृगमदादिस्पर्शे दुर्गंधापगमो दृश्यत इति सर्वमनवद्यं ॥ चू-र्णस्पर्शात्सूक्ष्मावयवानामिवोग्रगंधकुसुमादिस्पर्शात् करादौ गंधस्यापि स्वातंत्र्येण सं-क्रमादेव शुद्धिप्रकरणस्थेषु गंधलेपक्षयकरं शौचमाहुर्मनीषिण इत्यादिष्वनेकस्मृतिव-चस्सु लेपात् पृथग्गंधस्य ग्रहणं संगच्छते अवयवमात्रसंक्रमे तु लेपक्षयमेव वदेत् ॥ न-चातिसूक्ष्मावयवानामदृश्यतया गंधोपलंभानुपलंभाभ्यामवयवावस्थानापगमानुमाना-यैव पृथग्गंधग्रहणमिति वाच्यं ॥ तावतापि गंधप्रसरणासिद्धेः ॥ घ्राणतः किंचिद्दूरस्थे-ऽपि करे गंधानुभवात् करादिलिप्तावयवानामपि ततः प्रसरणांगीकारे मुहुः क्षालनादि-प्रयासोऽपार्थः स्यात् ॥ अतएव " यथा वृक्षस्य संपुष्पितस्य दूराद्गंधो वाती " ति श्रुत्या गंधस्य दूरगामित्वं बोध्यते न च गंधशब्दस्य गंधाश्रयद्रव्यपरत्वं वाच्यं लक्षणाप्रसंगात् । शक्यार्थाबाधे तस्या अयोग्यत्वात् नापि लेशपरत्वं एकवचनविरोधात् तस्य जात्य-भिप्रायकत्वकल्पने स्वरसभंगाच्च ईदृशस्थलेषु गंधशब्देन लेशबोधस्य संभवे प्रागुक्तस्मृ-तावपि गंधपदमात्रं ब्रूयात् उक्तवक्ष्यमाणबहुस्मृत्येकवाक्यतालाभाद्प्यस्मत्संमत ए-व श्रुत्यर्थो निश्चीयते । त्वदुक्तार्थद्वयं च त्वदाचार्यस्य विद्यारण्यस्याप्यनभिमतं-तेन नारायणप्रपाठकभाष्ये " लोके वृक्षस्योद्यानादौ स्थितस्य चंपकपाटलकेतकी-

पुन्नागादेः संपुष्पितस्य सम्यग्विकसितपुष्पोपेतस्ययोगंधः सुरभिरस्तिसोयं दूरा-
द्देशाद्वातिवायुनासहगच्छति " इतिव्याख्यानात् ॥ त्वदुक्तार्थेभिप्रेतेतुतथैवसस्पष्टंब्रू
यात्किंचधूल्यादेर्यस्यकस्यापिलेशस्यदूरगमनसंभवेनवृक्षसंबंधबोधनंतत्रसंपुष्पितत्व-
विशेषणंचव्यर्थंस्यात्कीर्तेश्चश्लाघाशब्दात्मकत्वादिनागुणरूपायागंधएवोपमानंभवितु-
मर्हति नतुद्रव्यं कीर्तेःस्वाश्रयानवयवत्वात् तस्मादुक्तएवश्रुत्यर्थः एवंश्रुत्यभिप्रा-
यादेवसाम्यवशात्सुयशःसुगंधइतिलोकेव्यवह्रियते । गंधशब्दस्यतदाश्रयपरत्व-
मंगीकृत्यापि गंधशब्दार्थस्यवृक्षापेक्षयैवदूरत्वं नतुस्वाश्रयापेक्षयेति कथनंतुपूर्वापरा-
ननुसंधानात् ॥ वस्तुतस्तुवृक्षतोदूरगमनेतद्वृत्तिपुष्परूपस्वाश्रयतोदूरगमनंसित्ध्यत्ये-
वयच्च अनिर्दिष्टाकरमपि तद्गुणसारसूत्रस्यत्वभाष्येदृष्टांव्यासवचनमुक्तं तत्तुकेचिद-
प्सुगंधमुपलभ्यापियेपृथिव्यामेवतंब्रूयुस्तेऽनैपुणाइतियोजयंति । वस्त्वंतस्त्वयेअप्सु-
गंधमुपलभ्यअप्सुतंब्रूयुःपृथिव्याइव जलस्यापिगुणोयमितितेऽनैपुणाः । वस्त्वंत-
स्त्वंतंपृथिवीगुणमेवविद्यात् वायुजलयोश्चतंसंक्रांतंविद्यात् नतुतयोर्गुणं भूतानामुत्त-
रोत्तरगुणाधिक्यक्रमभंगापत्तेरित्येवमर्थकंतत् ॥ तृतीयस्कंधेकोनत्रिंशे ( श्लो० -
२० ) यथावातरथोघ्राणमावृंक्तेगंधआशयात् । एवमादिषुव्यासचरणैरेवतत्प्रसरण-
निरूपणात् अतएव पृषदश्वोगंधवहोगंधवाहानिलाशुगाः इतिगंधवहादयोवायुप-
र्यायाः । नचेहगंधशब्दस्तदाश्रयपरःसंज्ञायामुपचारायोगात् । गंधंवहतीतिव्या-
ख्यासुधामुकुटादिकृताया एकवचनव्युत्पत्तेर्विरोधाच्चनापिलेशपरःअव्याख्यानात् ए-
कवचनविरोधात् लेशवहलववाहादीनां पर्यायत्वापत्तेःदुःखलेशइत्यादौगुणकर्मांशेपि-
प्रयोगदर्शनेनसंबंध्यनिर्देशेद्रव्यस्यैवेहलेशाइतिवक्तुमशक्यत्वात् । सर्वथाद्दुराग्रहेत्वदु-
क्तव्यासवचनेऽपिपृथिव्यामेवगंधाश्रयकणाजलादिषुतुगुणएवसंक्रामतीत्यर्थसंभवेनत्व-
दिष्टासिद्धेश्च इत्थंकारमस्यविसर्पिगुणत्वादेवसूत्रितं " व्यतिरेकोगंधवदि " ति । अर्थ-
स्तु जीवसंबंधिनश्चैतन्यगुणस्यव्यतिरेकःस्वाश्रयद्रव्यादधिकदेशवर्तित्वंगंधस्यैवेति ।
तथाशब्दोपिविसर्पिगुणएवभूतपंचकेशब्दगुणकत्वंवदतां वेदांतप्रभृतीनांभेर्यादिशब्द-
स्यदूरमुपलब्धिसिद्धयेतथांगीकारस्यावश्यकत्वात्श्रोत्रस्यगत्वाग्राहित्वोक्तिस्तुप्रमादा
द्घ्राणेऽपितथात्वस्यसुवचत्वेनकृतपूर्वमहाप्रयासवैयर्थ्यापातात् किंचश्रोत्रेंद्रियंशब्द-
उत्पन्नेसतिउत्पत्तिस्थलंगत्वागृण्हाति आहोस्विदुत्पत्स्यमानेतस्मिन्पूर्वमेवगत्वावतिष्ठते-
नाद्यः । गोलकस्थितेनतेनदूरेतदुत्पत्तेर्ज्ञानस्यासंभवेनगमनासंगतेः उत्पत्तिप्रत्यक्षस्या-
श्रयप्रत्यक्षमंतरानुपपत्तेः उत्पत्तिप्रत्यक्षार्थंशब्दप्रत्यक्षेंगीकर्तव्ये संयोगादिसन्निकर्ष-
मंतरातदसंभवेनगलेपादुकान्यायेन शब्देविसर्पितायाअंगीकरणीयत्वात् नाद्वितीयः
अनागतज्ञानानुपपत्तेःपरितःशब्दसंभवेसर्वत्रस्थित्ययोगाच्च । किंचशतघ्न्यादिमहाश-
ब्दाउत्पत्तिकालोत्तरकालेषुक्रमेणदूरदूरदेशेश्रूयंतइतिस्पष्टमेवतेषांविसर्पित्वं ॥ सघोषो-
धार्तराष्ट्राणांहृदयानिव्यदारयत्तदैवतस्मिन्निनदोऽतिभीषणोबभूवयेनांडकटाहमस्फु-

ढत् इत्यादिस्मृतिपुराणानिचशब्दस्यतथात्वंबोधयंति ( स्कं ३ अ० २५ श्लो० २७) नंनृत्वंद्रव्यशब्दयोरितिवाय्वाश्रयेणशब्दस्यसुदूरगामित्वमुच्यते । आकाशमात्रे- शब्दगुणकत्वंवदतांकेषांचिद्वीचितरंगन्यायेनकदंबमुकुलन्यायेनचशब्दांतरोत्पत्तिस्त्व- नेकनाशोत्पत्तिकल्पनागौरवादिदोषैरन्यत्रदूषितेति कृतंप्रासंगिकेन अपिचहरिचंदनव- ज्जीवस्यसामर्थ्यादपिसर्वदेहंचेतनोपपद्यते । तथाचसूत्रं " अविरोधश्चंदनव " दिति- अर्थस्तुदेहस्यैकदेशस्थितेनहरिचंदनबिंदुनातप्ततैलपूर्णमहाकटाहेनिक्षिप्तचन्छकलेन- वायथातत्सामर्थ्यात्सर्वत्रशैत्यं । तथाजीवस्यसामर्थ्यात्सकलशरीरेचेतनेतिसार्वत्रिका- नुभवस्याविरोधइति माध्वास्तुअणुमात्रोप्ययंजीवःस्वदेहंव्याप्यतिष्ठति यथाव्याप्यशरी- राणिहरिचंदनविप्रुषइतिब्रह्मांडवचनमप्युदाहरंति ॥ नचसूक्ष्मतदवयवानांप्रसरणाच्छै- त्यमितिवाच्यं ॥ तथासतिबिंदोर्लोपप्रसंगात् अत्यल्पसंख्यापरिमाणकानां तेषां- सकलशरोरपिधायकत्वासंभवेन सार्वत्रिकशैत्यानुपपत्तेश्च तैलशैत्येतु खंडस्याल्प- मानत्वलाघवयोरदर्शनात् नावयवगमनं शक्यवचनं उत्क्रांत्यादिदशसूत्र्याःपूर्वप- क्षत्वं तुप्रागेवानिरस्तं प्रकाशाश्रयसूत्रे प्रभायास्तेजस्त्वोक्तिर्गुणत्वबाधिकेति त- दाभिमतंस्यात् वस्तुतस्तु प्रकाशस्योत्कटरूपत्वात् ( अ० ४ श्लो २३ ) दीपश्च- क्षुश्चरूपंचज्योतिर्नपृथग्भवेदितिद्वादशस्कंधवाक्याद्गुणस्यापितेजस्त्वमस्त्येवेतिनसू- त्रयोर्विरोधः । पौराणमतेतु रूपतन्मात्रादेव तेजसउत्पत्तेश्च ॥ त्वंतु " गुणा- द्व " त्यस्यपूर्वपक्षस्थत्वमिवप्रकाशाश्रयसूत्रस्यमतांतरपरत्वं स्वतुर्यश्लोकएद्द- ष्टवानसीतिद्वयोरपि व्यासानभिप्रेतत्वात्तयोर्विरोधेपिकाक्षतिः तथाचाणोरपिजीव- स्यप्रभागंधादिवत् विसर्पिणोगुणस्यैवसंबंधात् तत्तदिंद्रियव्यापारःश्रूयते कौशीत- किब्राह्मणइंद्रप्रतर्दनसंवादे " प्रज्ञयावाचंसमारुह्यवाचासर्वाणिनामान्याप्नोतिप्रज्ञया- प्राणंसमारुह्यप्राणेनसर्वान्गंधानाप्नोती " त्यादिना एतेनजीवस्यस्वरूपातिरिक्तचैतन्य- गुणेस्पष्टतरंश्रौतमानमपिदर्शितंसूत्रितंचभगवता ( अ० २ पाद० ३ सू० २८ ) " पृथगुपदेशा " दिति अर्थस्तुप्रज्ञयाशरीरंसमारुह्येतिकरणत्वेन पृथकृतयोपदेशाच्चैतन्यंगुणइतिएवंविसर्पिगणत्वं । " स्थूलानिसूक्ष्माणिबहू- निचैव रूपाणिदेहीस्वगुणैर्वृणोति । क्रियागुणैरात्मगुणैश्चतेषां संयोगहेतुरपरोऽपि- दृष्टः " ( पृ० ३५७ ) इतिश्वेताश्वतरादिषुश्रूयतएव तत्रहिपंचमाध्यायेऽष्टम- चबुद्धिपरिमाणेनांगुष्ठमात्रत्वंस्वपरिमाणेनाराग्रमात्रत्वंचोक्त्वा ( ऋक् ९ ) " बालाग्रशतभागस्यशतधाकल्पितस्यच भागोजीवस्सविज्ञेय " इति स्पष्टतया- णुत्वं " सचानंत्यायकल्पते " इतिसामर्थ्यार्थकधातुप्रयोगाच्चंदनसहदेवोजटा- दिवत् सामर्थ्यादानंत्यमभिधायाणुमात्रेकथंतुस्त्रीपुरुषादिलिंगसंभवइत्याशंकायांजी- वस्यशरीरप्रयुक्तमेवस्त्रीत्वादिकंनतुस्वरूपतइति " नैवस्त्रीनपुमानेषनचैवायंनपुंस-

कः यद्यच्छरीरमादत्तेतेनतेनसरक्ष्यत " इतिदशमर्चिदर्शयित्वानानाविधदेहप्राप्तौ-
किन्निमित्तमित्याकांक्षायामेकादशर्चिसंकल्पादिप्रभवैःशुभाशुभकर्मभिरेवमनुष्यलो-
कदेवलोकादिस्थानेषुनानाविधशरीरप्राप्तितस्यनिरूप्याणुमात्रस्यतस्यातिस्थूलेष्वतिसू-
क्ष्मेषुचशरीरेषुकथंतुल्यसुखाद्यनुभवइत्याकांक्षायां ( ऋ० १२ ) स्थूलानीत्याद्यु-
च्यते । स्थूलानिपांचभौतिकानिसूक्ष्माणिलिंगशरीराणिअथवास्थूलानिहस्त्यादीनां-
सूक्ष्माणिदंशमशकादीनां चशरीराणिदेहीजीवःस्वगुणैश्चैतन्यप्रकाशैर्वृणोति । एवं-
चैकस्यैवदीपस्यस्थूलेषु गृहादिषुसूक्ष्मेषुघटादिषुचयथाऽधारपरिमाणंप्रकाशप्रसरणवत्
तत्तच्छरीरेषुनावत् स्वगुणप्रसरणादेवतस्यतदनुभवइतिभावः ननुएकादशर्चि " स्था-
नेषुरूपाण्यभिसंप्रपद्यते " इत्युक्त्याकर्मानुसारिदेहप्राप्तौजीवस्यस्वातंत्र्येसतिशुभकर्म-
लभ्यानेवतान्प्रपद्येत । एवंस्वचैतन्येनदेहावरणेष्वपिस्वातंत्र्येसतिनिद्राकालेऽपिसर्वम-
नुभवेत् । नत्वेवंतत्कुतइत्याकांक्षायामुत्तरार्धंपठ्यते । क्रियागुणैरिति क्रियागुणैःनाना-
विधशुभाशुभक्रियाणांजीवमात्रनिष्ठत्वेपितज्जन्यैर्गुणैःसुलोचनांधत्वादिधर्मैस्तथाऽऽत्म-
गुणैर्जीवसंबंधिज्ञानप्रकाशैश्चसहतेषांशरीराणांसंयोगहेतुर्नकेवलंजीवः किंत्वपरःपरमे-
श्वरोपिदृष्टः । एवंचसंचितकर्मणांबहुत्वेपिप्रारब्धनिर्माणंपरमेश्वराधीनं तथानिद्राका-
लेस्वस्मिन्नाडीविशेषेषुवाजीवस्यप्रवेशनंततोनिस्सारणंचतदधीनमतोनोक्तदोषः । अतो-
लोमनखेषुचैतन्यस्याव्याप्तावपि तदिच्छैवनियामिकेतिसंक्षेपः । तथाचसिद्धंशरीरेगु-
णप्रसरणं । एवंअणुत्वमप्यनेकत्रश्रुतिष्वभ्यस्यते यथाकठवल्लीप्रथमवल्ल्यां ( ऋ०
२१ ) " नहिसुविज्ञेयमणुरेषधर्मः " इति । एषजीवाख्योधर्मांशःपरमेश्वरस्याणु-
रित्यर्थः । दुर्ज्ञेयत्वपरत्वेतुनहिसुविज्ञेयमित्यनेनपौनरुक्त्यं । द्वितीयवल्ल्यां ( ऋ०
१३ ) " एतच्छ्रुत्वासंपरिगृह्यमर्त्यःप्रवृह्यधर्म्यमणुमेतमाप्य ॥ समोदतेमोदनीयंहिल-
ब्ध्वा " इति । अर्थस्तुजीवस्वरूपंगुरुतःश्रुत्वामननात्सम्यक्परितोयुक्तिभिर्गृहीत्वा-
निदिध्यासनात्प्रवृह्यउद्यम्यशरीरादितत्पृथक्कृत्याणुपरिमाणकमेतमात्मानंस्वयमनुभूया-
नंदांशाविर्भाववान्भवतीतिज्ञेयः । नचेदंवाक्यंब्रह्मपरंकल्प्यं " येयंप्रेतेविचिकि-
त्सामनुष्ये " इत्यादिनाजीवस्यैवप्रक्रांतत्वात् । अग्रे " अन्यत्रधर्मा " दित्यादि-
नापृथक्प्रश्नोत्तरंब्रह्मणोनिरूपणाच्च । स्पष्टीकृतंचेदंव्यासपादैरपिप्रथमस्यतुरीयपादे
( सूत्र ६ ) " त्रयाणामेवचैवमुपन्यासःप्रश्नश्च " इत्यत्र । किंचमैत्र्युपनिषदिद्वती-
यप्रपाठके " इदंशेनाणिष्ठेनैतद्विधमिदंचेतनवत्प्रतिष्ठापितं " इति । अणिष्ठेनअणुत-
मेन । व्यापकस्यकथमणुभावः शरीरप्रतिष्ठापनार्थंइत्याशयेनवालखिल्यैःपृष्ट " इहै-
वावर्ततेंशेन " इत्यादिनांशत्वनिरूपणेनअंशिनईश्वरस्यविभुत्वेपितदंशस्याणिष्ठ-
त्वं तेनशरीर निष्ठापनंचनविरुद्धमितिबोधितं । अग्रेपि ( ऋ० ५ ) " अनेनेद-
शेनाणिष्ठेन " इत्यादि ॥ वचनांतराण्यपिबहुश्रुतिस्मृतिपर्यालोचनरसिकैःशतशः
स्सुखेनलभ्यानात्यतिविस्तरभियाविरम्यते ॥ किंच जीवस्य विभुत्वे जलाद्या

दिषु सर्वत्र तत्सत्वेन सर्वदासर्वेषां शैत्यौष्ण्याद्यनुभवःप्रसज्यते नचमनःसंयोगस्यतत्र-कारणत्वाददोषः यावन्मूर्तद्रव्यसंयोगित्वस्यैव विभुलक्षणत्वेन स्वसंयुक्तेनमत्स्यादिमनसातत्संभवात् नचविलक्षणमनःसंयोगःकारणंसर्वेषांजीवानांसर्वत्रविद्यमानत्वेन कस्यकिंमनइतिसंशयस्यापरिहारेणवैलक्षण्यस्यैवनिर्वक्तुमशक्यत्वात् । नचतर्ह्यदृष्टं-हेतुः तस्यकर्मजन्यत्वेन तेषांच प्रयत्नजन्यत्वेन तस्यचमनःसंयोगजन्यत्वेनच सर्वेषां सर्वादृष्टवत्वोपपत्तेःनचप्रदेशभेदःकल्प्यः मनुष्यादीनां परिभ्रमणदर्शनेनतद-नियमात् । पूर्वपूर्वशरीरत्यागोत्तरमनियतदेशविशेषस्थदेहांतरप्राप्ते ध्रौव्येणापितद-नियमाच्च । अतो देवदत्तशरीरेणाम्ले चूषिते सर्वेषांतद्रसानुभवप्रसंगोदुर्निवारए-व । एवमेव परमाचार्यः ( अ० २ पा० ३ सू० ५१ । ५२ । ५३ ) " अदृष्टा-नियमादि " त्यादिभिस्त्रिभिःसूत्रै जीवविभुत्वंदूषितवान् नचैकजीववादःस्वीकार्यः उ-क्तदोषानिस्तारात् " सर्वएवात्मानः । तोयेनजीवान्व्यचसर्ज । विविधाःसोम्यभावा " इत्यादितद्बहुत्वबोधकमाध्यंदिनतैत्तिरीयमुंडकाद्यनेकश्रुतिव्याकोपात् । पापपुण्यनर-कस्वर्गादिव्यवस्थाभंगतद्बोधकशास्त्रोच्छेदाद्यनेकदोषैरन्यत्रदूषितत्वाच्च । बहुजीव-विभुत्वेच " सर्वस्यवशीसर्वस्येशान " इत्याद्यनेकश्रुतिस्मृतिपुराणप्रभृतिसिद्धमी-श्वरस्यशासकत्वमपिनघटेतउक्तंचैतत् श्रीभागवतेवेदस्तुतौ ( श्लो० ३० , अपरिमिता-ध्रुवास्तनुभृतोयदिसर्वगता इत्यत्र । स्यादेतत् । नित्यभिन्नानां जीवानां स्वातंत्र्येण-विभुत्वंतार्किकाद्यभिमतमेव सूत्रेषुप्रत्याख्यायते । ममतुमतेकदाचिदवच्छेदवादः कदा-चित्प्रतिबिंबवादइत्यनेकवादसमृद्धे ब्रह्मणएवोपाधिवशाज्जीवभावोतोन विभुत्वबाधइ-तिचेन्मैवं तथासति ब्रह्ममात्रेविभुत्वस्यजीवेषुचमध्यमपरिमाणतायाःसिद्धेः । त्व-न्मते उपाधिसंसर्गंविनाजीवशब्दवृत्त्ययोगाच्च । आकाशस्यविभुत्वेपिघटावच्छिन्न-तदेकदेशस्यजलेनभःप्रतिबिंबत्वेनत्वयाभिमतस्यप्रभामंडलप्रतिबिंबस्यचनविभुत्वं श-क्यवचनं । नचोपाधेर्ब्रह्मवद्विभुत्वात्तदुपपत्तिःउपाधेर्ब्रह्मैकदेशवर्तितायाःपंचदश्यादिषु-व्युत्पादितत्वात् । अन्यथा " अत्यतिष्ठद्दशांगुलंसर्वमावृत्यतिष्ठति । अधिकंतुभेदनि-र्देशा " दित्यादि श्रुतिस्मृतिन्यायव्याकोपात् किंच व्यापकस्योपाधेरेकतयैकजीवस्यै-वातिव्याप्तमुक्तादिदोषप्रसंगःतेषामपि नानात्वेतूपाधिसांकर्याज्जीवानामपिसांकर्यमदृष्टा-नियमादिदोषानिस्तारश्चेतिदिक् ।

सचब्रह्मणोंश " अंशोनानाव्यपदेशादन्यथाचापिदाश-कितवादित्वमधीयतएक " इतिसूत्रात्ननु " अंशोनानाव्यपदे-शा"दितिसूत्रेगनवास्तवमंशत्वमुच्यतेकिंतुगौणंअंशइवअंशइति-निरवयवस्यनिर्विकारस्यवास्तवांशासंभवात्सचावच्छेदवादेनप्र

तिबिंबवादेनवासंभवतिनचमुख्यार्थवाचकत्वेसंभवतिलाक्षणि-
कार्थकल्पनंनयुक्तमितिवाच्यं हस्तमात्रेऽयंदेवदत्तइतिव्यपदेश-
स्यमुख्यत्वाभावेनविप्रहस्तछेदनाद्ब्रह्महत्याया असंभवेनचावय-
वेमुख्यभेदव्यपदेशाभावेनगौणाभेदव्यपदेशस्यावयवत्वव्याप्या
तेनतत्साधनेतवापिमुख्यार्थस्यैकत्रत्याज्यत्वात् औपचारिकेप्य-
भेदांशेव्यभिचारात्सविशिष्यैवहेतुर्वाच्यःसचदुर्वचइत्यवयवसदृ
शोंशशब्देनग्राह्यस्तत्रचाभेदव्यपदेशोमुख्योभेदव्यपदेशस्तुगौ-
णस्तथाचाद्वैतश्रुत्यनुरोधेनांशइवांशइत्येवव्याख्यानंसुवचंएवं-
चविभुत्वप्रतिपादकश्रुतीनामपिसंगतिःममैवांशोजीवलोकेजी-
वभूतइतिगीतावाक्येप्यंशइवांशइत्येवव्याख्येयमिति चेत्सत्यंअं-
शोनानाव्यपदेशादितिसूत्रेणवास्तवमेवांशत्वंजीवस्यबोध्यतेय
तस्तत्सूत्रएवनानाव्यपदेशादितद्धेतुर्दृश्यतेतदर्थस्तुनानात्वेनव्यप-
देशोनानाव्यपदेशस्तस्मात् श्रुतौबहुत्वसंख्याविशिष्टत्वेनकथना
द्विस्फुलिंगवद्व्युच्चरणकथनाच्चेति " सर्वएवात्मानोव्युच्चरंती
" तिश्रुतिः " यथासुदीप्तात्पावकाद्विस्फुलिंगाःसहस्रशःप्र-
भवंतेसरूपाःतथाक्षराद्विविधाःसोम्यभावाःप्रजायंतेतत्रचैवापि
यंति " इतिश्रुतिश्चाग्नेस्सकाशाद्विस्फुलिंगवद्ब्रह्मणःसका-
शाज्जीवस्यव्युच्चरणंप्रतिपादयंतीजीवस्यभगवदंशत्वमेवप्रतिपा-
दयतिनतुप्रतिबिंबरूपमवच्छिन्नत्वरूपंगौणमंशत्वं येनांश-
इवांशइतिव्याख्यानंस्यात् ननुब्रह्मणोनिरवयवत्वात्कथंजि-
वस्यांशत्वंसांशस्यसावयवत्वनियमादितिचेन्नयदिब्रह्मनिरंशंसां
शंवालोकप्रसिद्धंस्यात्तदायमाक्षेपोपिस्यात्ब्रह्मतुवेदैकसमधि-
गम्यंसचयथोपपद्येततथातदनुल्लंघनेनतज्ज्ञानार्थंयुक्तिर्वक्तव्या-

सापिवैदिकीयथान्ययोधफलमाहरेति सानावगताचे " तपसाब्रह्मविजिज्ञासस्वे " तिश्रुतेस्तपोविधेयंगुरुशुश्रूषा वाकर्त्तव्या " श्रोत्रियंब्रह्मनिष्ठ " मित्यादिश्रुते श्रौतस्यब्र- ह्मणःश्रौतेनप्रकारेणैवविचारःकर्त्तव्योनत्वेकदेशमादायसर्वविप्लवः- कार्यःसचप्रकारःकीदृशइतिचेच्छृणु " अस्मादात्मनःस- र्वेप्राणाःसर्वेलोकाःसर्वेदेवाःसर्वाणिभूतानी " त्युक्त्वा " सर्व- एवात्मानोव्युच्चरंती " तिकथनात्तेपरस्परविलक्षणतयानिर्ग- ताःवैलक्षण्येक्रमेचविस्फुलिंगश्रुतिरेवप्रमाणं तत्रसदंशाज्जडा- नामुत्पत्तिःचिदंशाज्जीवानांमेतदेवभाष्यकारैरुक्तं ॥ सदंशेनज- डाःपूर्वंचिदंशेनेतरेअपि ॥ अन्यधर्मतिरोभावामूलेच्छातोऽ- स्वतंत्रिणइतिअन्यआनंदांशस्तस्यधर्मोविरुद्धधर्माश्रयत्वंतस्य- तिरोभावोयेषु तत्रहेतुर्मूलेच्छा " प्रजायेये " तीच्छा ततःस्वतं- त्रोब्रह्मभावस्तद्वंतंस्वतंत्रिणस्तद्भिन्नाइत्यर्थःतथाचनिरंशेपिब्रह्म- णिलोकविरुद्धस्यसांशत्वस्यव्युच्चरणश्रुतौप्रतिपादितत्वात्तद्बले- नतदप्यंगीकरणीयंविरुद्धधर्माश्रयत्वंयुक्तिरितितयाश्रुतिमूलक- युक्त्याब्रह्मवादेअंशपक्षएवाद्रियतेतंविहायकेवलंनिष्कलश्रुतिं- पुरस्कृत्यौपचारिकांशत्वकल्पनयासर्वश्रुतिविप्लवोनकर्त्तव्यःब्रह्म- णोऽलौकिकत्वात्ननु " ब्रह्मदाशाब्रह्मदासाब्रह्मेमेकितवाउ- ते " त्यादिश्रुत्याब्रह्मभिन्नत्वंदाशादीनांप्रतिपादितंतच्चतत्कार्य्य- त्वएवयुज्येतएवंचव्युच्चरणश्रुत्युक्तानांप्राणलोकादीनामिवजी- वानामपि कार्य्यत्वस्वीकारेऽपसिद्धांतःस्यादितिचेत्तत्राहसूत्र- कारः " अन्यथाचापिदाशकितवादित्वमधीयतएक " इ- ति ॥ एकेशाखिनःप्रकारांतरेणापिदाशकितवादित्वमधीयते-

तथाचयदिदाशादीननूद्यब्रह्मत्वंविधीयेततदातेषांकार्य्यत्वंस्या-
द्विधीयतेतुविपरीतमतोब्रह्मणएवशरीरत्वंतन्निविष्टत्वंच ॥ इ-
मइत्यनेनसजीवानामेवदेहानांपरामर्शात्तन्निविष्टत्वंचांशद्वा-
रैवसंभवतियथावन्हेरयःपिंडादिषु ॥ अतएवएकेशाखि-
नोब्रह्मणोदाशकितवादित्वंशरीरत्वेनअंशत्वेनचाधीयतेअतस्ता-
दृशोद्देश्यविधेयभावान्यथानुपपत्त्याअंशएवजीवःयदुक्तंहस्ता
मात्रेदेवदत्तइतिव्यपदेशोनमुख्योऽतएतन्मात्रछेदने न ब्रह्महत्या-
प्रायश्चित्तोपदेशइतितदपिनसमीचीनंगोपुच्छंकन्याहस्तंच-
गृहीत्वेमांगामिमांकन्यांतेददानीतिलोकप्रसिद्धव्यवहारस्यगौण
त्वकल्पनायानिर्युक्तिकत्वात् देवदत्तपदवाच्यतावच्छेदकधर्मा
वच्छेदेनप्राणवियोगएवतद्वधप्रायश्चित्तनिमित्तमितिहस्तमात्र-
च्छेदनेनदेवदत्तवधप्रायश्चित्तमितितस्यापिगौणाभेदव्यपदेश
साधकत्वंनसंभवतिप्रतिबिंबवादावच्छेदवादादीनांचदूषणगणग्र
स्तत्वेनासंभवेनगौणांशत्वस्यप्रतिबिंबवादेनावच्छेदवादेनसमर्थ-
नप्रत्याशायाअप्यसंभवात् ॥ दूषणानिचाग्रेवक्ष्यंते ॥ किं-
चेत्यादिनोक्तानिदूषणानितुपूर्वमेवनिरस्तानिभगवतोनिर्विकार-
त्वात्सर्वभवनसमर्थत्वाच्च " परास्यशक्तिर्विविधैवश्रूयतेस्वा-
भाविकीज्ञानबलक्रियाचेत्या " दिश्रुतेः ॥ नचतादृशीश्रुतिर्मा-
याविषयेतिवक्तुंशक्यतेलोकेमणिमंत्रादिसामर्थ्यएवदुर्घटघटना-
पटीयस्त्वदर्शनेननतदतिरिक्तायांमायायांप्रमाणाभावात्मायायाः
पूर्वंदूषितत्वाच्च ॥ तदेवसामर्थ्यंक्वचिदासुरव्यामोहादिलीलासुमा
याशब्देनापिव्यवन्हीयते ॥ क्वचिज्जीवेआनंदांशतिरोभावहे-
तुत्वेनाविद्याशब्देनापिव्यवन्हियतेअतएव " मायाचाविद्या-

चस्वयमेवभवती " त्यपिसंगच्छतेएवंचतादृशशक्त्यैवसर्वका-
र्य्यसंभवेतद्भिन्नभावरूपानिर्वचनीयाविद्याकल्पनेमानाभावः ॥
एतेनजीवानामीश्वरांशत्वेतस्यसावयवत्वंततोनिस्सरणेचतस्यस-
छिद्रत्वंस्यादित्यादिकमपास्तंएतस्याक्षेपस्य " श्रुतेस्तुशब्दमूल
त्वा "दित्यादिसूत्रैःपरिहृतत्वाच्च ॥ तस्मात्तादृशसूत्रार्थाज्ञानवि-
जृंभितएवायंप्रलापः ॥

## टीका

सहस्राक्षे यत्तु विसर्पिगुणेत्यादि श्रुत्यंतरविरोधाच्चेत्यंतं भागं निराकु-
र्वंति सचब्रह्मणोंशइत्यादिनाऽयंप्रलापइत्यंतेन । सहस्राक्षोक्तार्थंपूर्वपक्षत्वे-
नसंगृण्हंति । ननुअंशोनानेत्यादिना । अवयवत्वव्याप्तेति । यत्रयत्रगौ-
णाभेदव्यपदेशस्तत्रतत्रावयवत्वमितिभावः । तेनतत्साधनइति । गौणाभेदव्य-
पदेशेनांशत्वसाधने । . प्रयोगस्तु जीवोब्रह्मणःसाक्षादंशः गौणब्रह्माभेदव्यपदेशा-
त् । देवदत्तोऽयमिति व्यपदिश्यमानतत्धस्तवदितिज्ञेयः । एकत्रत्याज्यत्वादि-
ति । अंशत्वबोधकवाक्यस्य मुख्यार्थपरताऽऽग्रहेत्वयाऽभेदबोधकवाक्यार्थे मु-
ख्यार्थस्त्याज्यः । मयातुतत्रमुख्यार्थमादृत्यांशत्वबोधके सत्यज्यतइत्यन्यतरत्र
मुख्यार्थत्यागोद्वयोस्तुल्यइतिभावः । औपचारिकइत्यादि । मुखंचंद्रइत्यादौ-
चंद्राद्यनवयवेऽपिमुखादौ गौणाभेदव्यपदेशदर्शनेन केवलस्तद्व्यपदेशोनावयवत्व-
व्याप्यइतिव्यभिचारात्तन्निवारकविशेषणदानपूर्वकमेवगौणाभेदव्यपदेशोहेतुर्वाच्यः ।
विशेषणदुर्वचत्वात्सोपिदुर्वचइत्यर्थः । अवयवसदृशइति । अतएवविभिन्नां-
शवादिनस्तथामन्यंते । यथामाध्वानुयायीवनमालिदासः चंद्रमंडलाच्छतांशोगुरुमंडल-
मित्याद्युदाहरन् प्रकृतसूत्रादिकंतथैवव्याचष्टे । अथैतत्समाधातुं ( अ० २ पा० ३ सू०
४३ ) " अंशोनाने " तिसूत्रस्थंभाष्यप्रकाशंभाष्यंचैकीकृत्यानुवदंति नानात्वेने-
त्यादिना । सर्वएवेति । माध्यंदिनानांबृहदारण्यकस्थेयं । यथासुदीप्तादिति ।
इयमाथर्वणानांद्वितीयमुंडकस्था । सचयथेति । वेदश्चेत्यर्थः । न्यग्रोधफ-
लमिति । इयंयुक्तिश्छांदोग्येश्वेतकेतुविद्यायां ( खंड १२ ) " न्यग्रोधफल-
मतआहरेति " इत्यादिनानिरूपिता । अतआहरेतिक्वचित्पाठः । एवंलवणाच-
मनादिरूपाअपितायाह्याः । तपसेति । तैत्तिरीयाणांभृगुवल्लीस्थं । श्रोत्रिय-

**मिति** । प्रथममुंडकसमाप्तौ " तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियं-ब्रह्मनिष्ठं " इतिवाक्यमस्ति । आदिपदात् " आचार्यवान्पुरुषोवेद " इत्यादीनिछांदोग्यादिवाक्यानि । **एकदेशमिति** । पूर्वापरसंदर्भरहितंतत्त्वमसीत्यादिमात्रमादायांशत्वादिबोधकसर्वश्रुतीनांविप्लवानकार्यः सर्ववाक्यैकवाक्यतापरेणसूत्रकृता तादृशैकदेशेषुकथंचिदुपचारस्यतद्गुणसारसूत्रेस्वीकारादित्यभिसंधिः । एतेन ( एकत्रत्याज्यत्वा ) दितितदुक्तिः प्रत्युक्तासूत्रकारादतत्वेनातुल्यत्वात् । अंशत्वस्यौपचारिकत्वे तदभिप्रेतेनानाव्यपदेशमंत्रवर्णादीनुपचारविरुद्धान्प्रबलहेतुनुप-

---

## सहस्राक्ष.

यत्तु विसर्पिगुणचैतन्योऽणुर्जीवोंऽशोहरेः स्मृतइति यश्चाऽभेदोवास्तवः स्वांशाजीवाइतिनिजेमतेइति च जीवस्य ब्रह्मावयवत्वमुक्तम् तत्खण्डयति ॥ अंशत्वमित्यादिनातृतीयचरणेन ॥ अंशोनानाव्यपदेशादित्यत्रांशइवांशः सचावच्छेदवादेन प्रतिबिम्बवादेन वासमर्थनीयः ॥ नच सूत्रे मुख्यांशपरित्यागे प्रमाणाभावइतिवाच्यम् ॥ हस्तमात्रेऽयंदेवदत्तइति व्यपदेशस्य मुख्यत्वाभावेन च विप्रहस्तच्छेदनेब्रह्महत्याप्रायाश्चित्तस्यधर्मशास्त्रकृद्भिरनुपदेशेन च अवयवे मुख्याभेदव्यपदेशाभावेन गौणाभेदव्यपदेशस्यावयवत्वव्याप्त्यातेन तत्साधने तवापि मुख्यार्थस्यैकत्रत्याज्यत्वात् ॥ किञ्चौपचारिकोऽपि अभेदव्यपदेशोव्यभिचारवारणाय विशिष्यैवहेतुर्वाच्यः सच दुर्वचइत्यवयवसदृशोंऽशशब्देन ग्राह्यस्तत्रच मुख्योऽभेदव्यपदेशो भेदव्यपदेशस्तु गौणोव्याप्यः ॥ एवंचोक्तविधं विभुत्वमप्युपपन्नम् । ॥ एवमेव ममैवांशोजीवलोके इति गीतापिव्याख्येया ॥ सूत्रैकवाक्यतालाभात् ॥ अतएव निष्कलमिति ब्रह्मणि कलानिषेधश्रुतिःसंगता ॥ तत्र न्यायोपबृंहितश्रुतौ संकोचापेक्षयाऽन्यत्रसंकोचएव युक्तः ॥ नचावच्छेदवादेऽवयवसादृश्येऽपि प्रतिबिम्बवादे कथंतदितिवाच्यम् ॥ परिच्छिन्नोपाधिप्रतिबिम्बस्योपाधिपरिच्छेदेन परिच्छिन्नतयाऽवयवसादृश्योपपत्तेः ॥ किञ्च त्वदुक्तरीत्या ईशस्योपचयापचयाभ्यांविकारित्वापत्तिः ॥ जीवस्य तत्तद्देशगमनार्थं निस्सरणे हरेस्सच्छिद्रत्वापत्तिश्च ॥ सन्निहितावयवान्तराणां तत्र प्रसर्पणेतु शैथिल्यापत्तिः ॥ परास्यशक्तिर्विविधैवश्रूयतेइतिश्रुतिर्मायाविषयैव ॥ मायायामेवाघटितघटनापटीयसीत्वस्य लोके दृष्टत्वेन ततोऽतिरिक्तयाः शक्तेः सत्वे तस्यां तादृशसामर्थ्यवत्त्वकल्पने च प्रमाणाभावादितीयमपि श्रुतिर्जीवेशावाभासेनकरोति मायाचाविद्याच स्वयमेवभवति इत्यादिश्रुत्यन्तरोक्तमेवार्थं द्रढयति नत्वेतया श्रुत्या जीवानां तदवयवत्वेपितस्य निरवयवकत्वं ॥ तेषां ततोनिस्सरणेऽपि सच्छिद्रत्वाद्यभावं विचित्रशक्तिमत्वेनेशस्यबोधयितुं युक्तं ॥ लोकविरोधाच्छ्रुत्यन्तरविरोधाच्च ॥

श्यस्यैवंमधिकरणमेवनरचयेत् । एतत्पूर्वपक्षीकृत्यत्वदुक्तप्रकारंवास्पष्टंब्रूयात् न-
त्वेवमनौचित्यं नौपचारिकं । **अस्मादात्मनइति** । अत्रएतस्मादात्मनइतिक-
चित्पाठः । इदंहिवाक्यंकाण्वानांबृहदारण्यके चतुर्थाध्यायारंभेदृप्तबालाकयजात-
शत्रुसंवादरूपेप्रथमब्राह्मणे ( पृ० ३७२ ) " सयथोर्णनाभिस्तंतुनोच्चरेद्यथाग्नेः क्षु-
द्राविस्फुलिंगाव्युच्चरंत्येवमेवास्मादात्मनःसर्वेप्राणाः सर्वेलोकाःसर्वेदेवाः सर्वाणिभूता-
न्युच्चरंति " इतिश्रूयते । माध्यंदिनानांपाठेतु ( पृ० १०६१ ) " सयथोर्णा-
नाभिरितिपाठः । सर्वाणिभूतानीत्यस्याग्रे " सर्वएवात्मानोव्युच्चरंति " इतिपठ्य-
ते " सर्वएतआत्मान " इत्यपिपाठः । इहकाण्वपाठेभूतशब्दएवजीवपरः । तेषां
मैत्रेयीब्राह्मणादिष्वनेकत्रैवंतथादर्शनात् । माध्यंदिनपाठेतुभूतशब्दआकाशादिपरः ।
आत्मशब्देन जीवानांपृथगुपादानात् । नचस्वमतसुषुप्तिनिरूपणादत्र पंचम्यंतात्म-
शब्दो जीवपर इतिभ्रमितव्यं वाक्यार्थासंगतेः श्रुत्यंतरविरोधात् । " क्वैष-
तदाभूत् यएषविज्ञानमयःपुरुषःक्वैषतदाभूत् कुतएतदागात् इतिसुषुप्तिकाले जी-
वस्याधारे जागरणेपुनरागमनस्यापादाननिमित्तंचानुयुक्तमिति तदुत्तररूपेवब्र-
ह्मणएवप्रहणसंभवात् । इतः पूर्ववाक्ये " सयथाकुमारो वामहाराजो वामहा-
ब्राह्मणोवातिघ्नीमानंदस्यगत्वा शयीतैवमेवैषएतच्छेते " इति ब्रह्मणएवानंदात्मक-
स्यशयनाधारताबोधनात् । अतिशयेनदुःखंहंतीत्यतिघ्नी आनंदस्यावस्थेति तत्रार्थ-
सत्वात् । " यएषोंतर्हृदयाकाशस्तस्मिञ्छेते " इतिपूर्ववाक्येप्याकाशशब्दस्यब्र-
ह्मपरत्वात् । स्वाप्ययादिसूत्रतद्विषयवाक्याययोरपितथैवसिद्धेः । शंकराचार्यै र-
प्युपनिषद्भाष्यादिषु ब्रह्मणएवव्युच्चरणापादानतयाव्याख्यानाच्च । अन्यथा " ब्र-
ह्मतेब्रवाणि " इत्युपक्रमादिकं बाध्येतेतिसंक्षेपः ॥ **क्रमेचेति** । " समिधोय-
जतितनूनपातंयजतिइडोयजती " त्यादौपाठस्यापिक्रमनियामकतायाःपूर्वतंत्रे पं-
चमस्यप्रथमेपादे ( सू० ४ । ५ ) " क्रमेणवानियम्येतक्रत्वेकत्वेतद्गुणत्वा-
त् ॥ अशाब्दइतिचेत्स्याद्वाक्यशब्दत्वात् " इत्यादिचतुस्सूत्रेचतुर्थाधिकरणेसिद्धां-
तितत्वादिहापि " सर्वेप्राणा " इत्यादिनाप्राणलोकादीनांसर्वेषांजडानांव्युच्चरणमुक्त्वा
जीवानांव्युच्चरणंनिरूप्यतइतिक्रमेपीयमेवश्रुतिः प्रमाणमितिभावः नचैकयोभयस्यप्रमा
पणमशक्यमितिशंक्यं प्रयाजानांभेदस्येक्रमस्यचोक्तश्रुतितएवलाभस्यजैमिनिनाद-
र्शितत्वात् । परवैलक्षण्यसाधकस्तत्राभ्यासोत्रतुनाभ्यंतरमित्यादिप्रकारभेदस्तुनदृष्टां-
तनाधकः । पाठस्यक्रमनियामकत्वंन्यायमालायांमाधवोप्याहाप्रयाजेषुक्रमोना-
स्तिविधनेवानविद्यतेश्रुत्यर्थाभावतोनैवक्रमःपाठान्नियम्यतामिति ॥ पंचमस्थान्यु
दाहरणांतराणिचद्रष्टव्यानीत्यलं प्रासंगिकेन ॥ **ब्रह्मद्वाशाइति** । आथर्वणानां-
ब्रह्मसूक्तइदंवाक्यं । द्वितीयलैतुविपरीतमिति । मुहुर्ब्रह्मशब्दं प्रथममुक्त्वाद्वा-

शाइत्यादिकथनात्तथेत्यर्थः । यद्वृत्तयोगःप्राथम्यमेतदुद्देश्यलक्षणं ॥ तद्वृत्तयोगःपश्चा-त्त्वं स्याद्विधेयस्यलक्षणमितिमंजूषादिप्रसिद्धाभियुक्तोक्तेरितिभावः । तत्रचब्रह्मैवप्रकृ-तं नतुदाशादयस्ततोऽपितदनूद्यनेषांविधानमेवयुक्तं । **शरीरत्वमिति** । दाशादि-पदप्रवृत्तिनिमित्तयुक्ततत्तच्छरीरत्वं । **परामर्शादिति** । " इदमस्तुसन्निकर्षे " इत्युक्त्याप्रत्यक्षविषयास्तत्तद्देहाएव सजीवाइदमापरामृश्यंते । **श्रुतावुतशब्द-श्चाप्यर्थः** । तेनइमइत्यस्यसर्वत्रसंबंधोद्योत्यतेकेवलजीवपरत्वेदाशादिनानाशब्दो-पादानंबहुवचनंचनसंगच्छेत । दाशत्वादेर्देहैकनिष्ठत्वात् । **अंशद्वारेति**-" अनेनजीवेनात्मनानुप्रविश्ये " तिच्छांदोग्यादिषुतथाश्रावणात् । मैत्र्युप-निषदि ( प्रपा० २ पृ० २३ ) " इहैवावर्ततेंशेन " तिस्पष्टतयाम्ना-नाच्चतथेत्यर्थः । **अंशएवजीवइति** । सौत्रनानाव्यपदेशशब्दव्याख्यामार-भ्यैतदंतएकीकृतयोरंशानानेतिसूत्रस्थभाष्यतत्प्रकाशयोरेव यथायथमक्षरशोर्थत-श्चानुवादः । स्वोक्तावप्रामाण्यपरिहारायकृतः । **प्राणवियोगएवेति** । यदि-तुहस्तमात्रच्छेदनादेवदेवदत्तःप्राणै वियुज्येत तदाप्रायश्चित्तं भवत्यवेतिभावः । **नसं-भवतीति** । अन्यथाचांडालादिहस्तमात्रस्पर्शेस्नानादिनप्राप्नुयात् । तत्सर्वांग-स्पर्शस्यप्रायःकदाचिदप्यसंभवात् । काश्यादौ गंगैकदेशे स्नानेचतत्स्नानफलंनस्यात् । हिमगिरिमारभ्यासागरंसकलगंगायां स्नानानिष्पत्तेः । एवंचमुख्यगंगास्नानप्रयोगःक-दाचिदपिनशक्येत । एवमधिकमप्यूह्यं । **पूर्वस्येवेति** । तदीयतृतीयतुरीयश्लोक-योःखंडने ॥ **परास्येति** श्वेताश्वतरस्थं प्राक् व्याख्यातं ॥ **मायायाइति** । त्वदभिमतायास्तस्याइत्यर्थः । स्वाभाविकभगवत्सामर्थ्यरूपात्विष्टैवेतिभावः ॥ अ-यमस्यसंदर्भस्याशयोज्ञेयः । जीवविभुत्वबाधकानिकानिचित् प्रागुक्तान्येव । किंच विभुत्वे तस्यतोंशत्वमपिनसंगच्छेत । नचेष्टापत्तिः तद्बोधकश्रुतिस्मृतिन्यायपुराण-विप्लवापत्तेः । तथाहियाजुषाणांमैत्र्युपनिषदि द्वितीयप्रपाठके ( ऋक्५ ) " अथ-योहखलुवावैतस्यसोंशोयं यश्चेतामात्रः प्रतिपुरुषः क्षेत्रज्ञः संकल्पाध्यवसायाभि-मानालिंग " इत्यादि । गीतायां ममैवांशोजीवलोके जीवभूतः सनातनः । सूत्राणिच " अंशो नानाव्यपदेशादि " त्यादीनि प्रसिद्धानि श्रीभागवतेदशमे वे-दस्तुतौ ( श्लो० २० ) तत्रपुरुषंवदंत्यखिलधृतोंशकृतं । एकादशे एकादशाध्याये ( श्लो० ४ ) एकस्यैवममांशस्यजीवस्यैवमहामते इति । चतुर्थस्कंधस्यचतुर्विंशे-( श्लो ६४ ) सृष्टंस्वशक्त्येदमनुप्रविष्टश्चतुर्विधंपुरमात्मांशकेनेति ।षष्ठस्कंधषोडशाध्या-ये ( श्लो० २४ ) देहेंद्रियप्राणमनोधियोमीयदंशविद्धाःप्रचरंतिकर्मसु इत्यादि यत्तु-( अंशत्वंघटखांबुचंद्रवदि ) ति ॥ तन्न । यथासर्वाण्यणमात्राणि चक्षुरिंद्रियाण्येक-स्यसूर्यस्यांशभूतानि " आदित्य श्चक्षुर्भूत्वाक्षिणीप्राविश " दित्यैतरेयादिश्रुतिभ्यस्त-था सर्वेणुमात्राजीवाब्रह्मणोंशाइतिव्यासाशयात् ( अ० ४ श्लो० ३ ) यथाघनोर्कप्रभ-

बोर्कदर्शितोह्यकांशभूतस्यचचक्षुपस्तमः । एवंत्वहंब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्या
त्मनआत्मबंधनइतिद्वादशस्कंधवाक्येनतथाध्यवसायात् । अत्रांशकेऽत्यल्पार्थेक-
न्इत्यन्यदेतत् । घटाकाशांबुचंद्रादिवज्जीवस्यांशत्वमितिकाप्यकथनाच्चनतथा । उ-
क्तसूत्रस्यार्थस्तु । जीवोब्रह्मणोंशएवकुतः 'नानात्वेनव्यपदेशात् । " सर्वएतआ-
त्मानोव्युच्चरंती " त्यादौ बहुत्वसंख्याविशिष्टत्वेनकथनाद्ब्रह्मणःसकाशाद्विस्फुलिंग-
वत् विभागकथनाच्चेति ॥ ननुब्रह्मणोनिरवयवयत्वादंशसदृशःस्यात् । नानाव्य-
पदेशस्तुकथंचिदुपाधितोऽपियोजयिष्यतइत्याशंकां परिहर्तुंसूत्रद्वयमाह ( अ० २
पा० ३ सू० ४४।४५ ) " मंत्रवर्णात् । अपिचस्मर्यते " इति ॥ अर्थस्तु " पु-
रुषएवेदंसर्व " मित्युपक्रम्य " पादोस्यविश्वाभूतानी " तिमंत्रेभूतानांजीवानां पा-
दत्वंवर्ण्यते पादोंशोऽवयवइतिचनार्थांतरं । श्वेताश्वतरेच ( अ० ४ क्र० ११ )
" तस्यावयवभूतैस्तुव्याप्तंसर्वमिदंजग " दितिस्पष्टमेवावयवत्वंश्राव्यते । मैत्राय-
णीयादिभिश्चस्फुटमंशत्वमाम्नायते । अतोननिष्कलश्रुत्यैतद्बाधःशक्यः विपर्ययसं-
भवात् । किंतुविरुद्धधर्माश्रयत्वात् उभयसामंजस्यंयुक्तमतोमंत्रवर्णाज्जीवोंशएव
स्मर्यतेचास्यांशत्वं भगवतामम्मैवांशइति । इहममैवेत्येवकारेणकेवलमीश्वरस्यांशो
जीवोनतुस्वरूपनिर्वाहायोपाधिरपि तत्स्वरूपेऽतर्भवतीत्यन्ययोगोव्यवच्छिद्यते ।
असच्छद्मसांनिध्यत्वात्स्यात् । तेननानाव्यपदेशोनान्यथयितुंशक्यः । सूत्रेऽपि-
शब्दउक्तविपर्शंकानिरासार्थः । किंचस्वांशत्वेसत्येवजीवदुःखादिनादुःखित्वादिकं ब्र
ह्मणिमसज्यतइतितद्वारणायानुपदं " प्रकाशादिव " दित्यादि सूत्रमणयनंसंगच्छते
नतुमतिबिंबादिवादे । अंबुचंद्रेशकृत्प्रहारेण चंद्रभंगायोगात् । किंचांशसूत्रेऽग्निवि-
स्फुलिंगदृष्टांतः प्रकाशादिवत्सूत्रेचहस्तादिदृष्टांतोस्मदभिमतएवत्वद्व्याख्येप्युपात्तःननु-
त्वदुक्तदृष्टांतावतःप्रकृतेतवस्वभाष्यश्रुतहान्यश्रुताभ्यागमावपिप्राप्नुतः ॥ यत्तुसूत्रें-
शइवांशइतिव्याख्यायितन्न उक्तश्रुत्यादिबाधात् अंशत्वनिषेधकमानाभावाच्च ॥ य-
दिसूत्रकारस्तथाभिप्रेयात्तर्ह्युक्तादिश्रुत्यर्थंपूर्वपक्षीकृत्यनांशोनिरवयवत्वादिति । अं-
शसमोनिरवयवत्वादितिवासूत्रयेत् । सर्ववाक्येषुसंदेहान्वारयितुमेवहिभगवान्प्रवृत्तो-
नतुताञ्जनयितुं ॥ अतःपरमाचार्येण सप्रमाणंविस्तरमंशत्वस्थापनात् इहोपचारा-
देरस्पष्टत्वाच्च ब्रह्मस्वांशत्वमेवजीवेतदभिप्रेतं ॥ अवच्छेदप्रतिबिंबवादौच सम्यक्-
निराकरिष्येते मुख्यार्थत्यागेमानंदर्शयितुं हस्तमात्रेऽयमित्याद्युक्तिस्तुजलेमज्जतः
शैवालावलंबनमनुकुरुते मन्मते उपचारस्थापनस्य स्वाभीष्टे मानत्वायोगा-
त् । वस्तुतस्तु हस्तेदेवदत्तोयमितिव्यपदेशएवत्वयौपचारिकोवाच्यः । नतुतद्ध-
स्तेतस्यहस्तोयमितिव्यपदेशस्तथा ॥ अतःश्वेताश्वतरादिभिर्ब्रह्मांशत्वेनबोधितेजी-
वे तदंशोयमिति ममास्मत्परमगुरूणांव्यासपादानांचोक्तौ नोपचारगंधोऽपि ॥ किंचलो-
केहस्तेपादत्वस्यपादेचहस्तत्वस्याभावात् अवयवेष्ववयविव्यपदेशो गौणत्वमपि-

कथंचिदापद्येत । ब्रह्मणस्तु " सर्वकामःसर्वगंधः " इत्यादिश्रुतिभिः सर्वधर्माश्र-
यस्यसर्वतः पाणिपादं तस्यसूक्ष्मेंशपितत्वव्यपदेशोनभाक्तः । नहिशीकरोपिजलत्वं-
विस्फुलिंगोपिवाग्नित्वंव्यभिचरति ॥ इत्थंचतयोरग्निजलत्वादिव्यपदेशस्यतात्विकत्वा-
त् । गौणाभेदव्यपदेशस्यावयवत्वव्याप्तिःमत्युक्ता । अवयवेषुतद्व्यपदेशस्यसर्वत्रगौ-
णत्वांगीकारेभार्यापरिग्रहेहस्तमात्रग्रहणात्तद्धस्तमात्रेमुख्यंभार्यात्वं । सकलशरीरेत्वौ-
पचारिकमेवतत्स्यात् । तथाचमहान्धर्मशास्त्रविप्लवइत्याद्यूह्यं ॥ शिरोराहुत्वादिव्य-
पदेशानांमुख्यत्वेनव्यभिचारादिदोषोद्घाटनंतुविशेषानुपयोगात्परित्यज्यते ॥ ननुमा-
स्त्वेवंव्याप्तिः तथापिजीवेआनंदांशस्यैश्वर्यादीनांचतिरोधानान्मुख्याभेदव्यपदेशोन-
शक्यइतिचेद्बंधदशायांतद्गुणसारसूत्रानुसारादस्तुतत्वमसीत्यभेदोपदेशे कथंचिद्गौण-
त्वमपि मुक्तिदशायांतुतदाविर्भावेन पूर्वस्थितस्वरूपानाशेपिमुख्यएवसः ॥ एवमपि-
मन्मतेश्रुत्यंतरशतैकवाक्यतयातत्पदमात्रंतदंशपरं नवतुनत्वंपदयोरुभयोरपिलक्षणा ।
अंशत्वबोधकश्रुतिस्मृतिसूत्रादिषुत्तसेतिनतौल्यं यच्च ( तेनतत्साधन ) इतितत्तु-
अस्मन्मतापर्यालोचनात् मयानानाव्यपदेशमंत्रवर्णादिसौत्रहेतुभिरेवांशत्वसाधनात्
गौणाभेदव्यपदेशस्यतत्रहेतुत्वेनानुपादानात् । एतेनऔपचारिकोपीत्यादिदुर्वचइत्यंतं-
निरस्तं । शंकराचार्यैरपिप्रकृतसूत्रे नानात्वव्यपदेशादिकमेवहेतुत्वेनव्याख्यायि । न-
त्वकारछेदादियुक्त्याभेदव्यपदेशस्तत्वेन ॥ अथत्वत्तोषार्थंजीवोब्रह्मांशःअभेदव्यपदे-
शविषयत्वात्यदेवंतदेवंयथादेवदत्तंस्पृशामीत्यादि व्यपदेशविषयस्तत्धस्तादिकमित्य-
पिवदामः । गौणाभेदमादायकथंचिद्व्यभिचारोक्तौतुतद्वारणायाभेदेतात्विकत्वंविशेष-
णीयमितिससद्धेतुःसुवचएव नचपूर्वोक्तिविरोधःसमुद्रेस्नातिपृथिव्यामग्निश्चेतव्यो भूमि-
मभिमंत्र्येत्यादौ समुद्रादिशब्दानामिवतत्वमसीत्यादौतच्छब्दस्यतदंशपरत्वेप्यभेदेतात्वि-
कत्वानुच्छेदात् नहिहस्तेऽपिशरीरत्वमौपचारिकंशक्यंवक्तुं ॥ " यत्तुमुख्योऽभेदव्यपदे-
श " इतितत्तुतवदुर्वचं तत्त्वंपदशक्ययोरैक्यासंभवेनत्वयमुपचारांगीकारात् ॥ यच्च-
( विभुत्वमप्युपपन्न ) मितितदपिमनोरथमात्रंतथोक्तौब्रह्मणएववैभवसिद्धेः । उपहित-
चैतन्यस्यैवजीवशब्दार्थत्वेन तदवच्छेदकस्यप्रतिबिंबाश्रयस्य वोपाधेश्चपरिच्छेदेस्वयं-
स्वीकृतेसतिजीवेपरिछिन्नत्वस्यैवसिद्धेश्च॥ अतोमुख्यार्थत्यागेमानाभावात्तादृशसूत्रक-
रणस्यायोग्यतापातात् । अन्यथावासूत्रप्रणयनप्रसंगात् । यथाश्रुतपाठेसौत्रहेतूनांत्वद-
भिमतसाध्यासाधकत्वाच्चश्रुत्यादिषुमुख्यांशएवबोध्यः ॥ तथैवगीतावाक्येपि । श्रु-
त्याद्येकवाक्यतालाभात् । स्पष्टावयवत्वबोधकमंत्रवर्णहेतूकृत्य " अपिस्मर्यत "इतिसू-
त्रयताव्यासेनममैवेत्यस्यमुख्यांशबोधकतायाबोधितत्वाच्च ॥ एतेन ( सूत्रैकवाक्यता-
लाभा ) दितिप्रत्युक्तं । असंगतंसूत्रार्थंमनसाकंचित्कल्पयित्वा स्वसंमतक्लिष्टार्थैकवा-
क्यतयागीतायाअन्यथैतुमशक्यत्वात् ॥ एतेनैवएकस्यैवममांशस्येत्यादीनि श्रीभागव-
तादिवचांस्यपिव्याख्यातानि न्यायोपबृंहितानांबहूनामपिमैत्रायणीयादिश्रुतीनांतदनु-

पबृंहितैकनिष्कलश्रुत्यासंकोचस्वीकारे तुविपर्ययएवकिंनस्यात् । बहूनामनुग्रहस्य-
न्याय्यत्वाच्च ॥ कलानिषेधकस्यैकस्यापिन्यायस्याभावान्निष्कलश्रुतौ न्यायोपबृं-
हितत्वोक्तिस्तुदुर्बलछलनमात्रं॥ वस्तुतस्तुश्रुतित्वाविशेषाद्विरुद्धधर्माश्रयेब्रह्मण्युभयसा-
मंजस्यं । तत्रनिष्कलश्रुत्याशस्त्रादिसाध्यविभागोनिषिध्यते। श्रुत्यंतरैस्तुस्वेच्छयास्वां-
शानांव्युच्चारणंवन्हिस्फुलिंगन्यायेनबोध्यतइतिनविरोधः । उपाधेःपरिच्छेदोक्तिस्तु-
जीवविभुत्वबाधिका प्रतिबिंबवादश्चत्वदीयाष्टमश्लोकखंडनसमये सम्यक्खंडयिष्यते
किंचनहिब्रह्मसांशंनिरंशंवेतिलोकादवगम्यते " तंत्वौपनिषद " मित्यादिबृहदार-
ण्यकस्थशाकल्यब्राह्मणादिश्रुतिभिस्तस्यवेदैकवेद्यत्वसिद्धेः । वेदेषुनिष्कलत्वंतदंशो-
द्गमश्चाम्नायतइत्युभयमपिमंतव्यं ॥ अतएवव्यासोपि ( अ० २ पा० १ सू० २६ ) "
कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपोवे " तिनिष्कलश्रुतिविरोधमाशंक्य ( सू० २७ ) "
श्रुतेस्तुशब्दमूलत्वा " दित्येवमेवसमादधेएतत्सूत्रयोःपूर्वोत्तरपक्षरूपत्वंतुशंकराचार्यादि-
भिरप्यभ्युपागमि । अतोमन्मते ईश्वराद्बहुजीवोद्गमेपि नापचयः वन्हेःसकाशात्सह-
स्रशोविस्फुलिंगानांदीपसहस्राणांवाउद्भवेपि वन्हेरपचयलेशस्याप्यदर्शनात । तद्वदि-
हापिसामर्थ्यविशेषस्य परास्येत्यादिश्रुतिसिद्धत्वात् अतएवोद्गमनिरूपणेमुंडका-
दिषु " यथासुदीप्तात्पावका " दितिसदृष्टांतोक्तः ॥ तथासर्वेषां प्रतिसंक्रमेऽपि-
नोपचयः । कल्पारंभात्प्रभृतिबहुमहानदीप्रवेशेपिसमुद्रस्येव । अतएवयथा " स-
र्वासामपांसमुद्रएकायनं." यथानदीनांबहवोंबुवेगाःसमुद्रमेवाभिमुखाद्रवंति तथात-
वामीनरलोकवीराविशंतिवक्त्राण्यभिविज्वलंतीत्यादिश्रुतिस्मृतिभिःसदृष्टांततः वि-
स्तरात्तुविकारप्रसक्तिःप्रागेवनिराकारि एतेनसच्छिद्रत्वोक्तिरप्यपास्ताशैथिल्योक्ति-
स्तुप्रसर्पणानंगीकारपराहता । नचाविस्फुलिंगवत्पतनाश्रयदेशाभावःशंक्यः " हंत-
तिरोसानी " ति काण्वश्रुत्युक्तेच्छयाआत्मन्येवकस्मिंश्चिदंशेस्वांतर्धानेनसदंशका-
र्यस्याकाशस्यप्रथमतरमाविर्भावितत्वात् । स्पष्टंचेदंसर्वतःपाणिपादंतमित्यत्रतत्वप्र-
काशेशास्त्रार्थे ॥ आकाशोत्पत्तिश्चभगवतापरमाचार्येण ( अ० २ पा० ३ सू० १ )
"नवियदश्रुते " रित्यधिकरणेमीमांस्यतइतितद्भाष्यप्रकाशादिभ्यएवदर्शनांतरानुसा-
रिणां आकाशस्वतंत्रद्रव्यत्वाभिमानःपरिहरणीयः ॥ ब्रह्मणिस्वाभाविकविचित्रानंतश-
क्तिकत्वस्यश्रुतिसूत्रादिसिद्धत्वाच्चनकोपिविरोधगंधोपि ॥ दृश्यंतेहिमणिमंत्रौषधादीना-
मपिलोकेविचित्राःशक्तयः " परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकीज्ञानबलक्रिया-
चे." तिश्वेताश्वतरश्रुतिस्तुनत्वदभिमतमायामात्रनिरूपिका । तस्याअसत्वेननि-
त्यभिन्नत्वेनचतावकैरंगीकृततयास्वाभाविकीतिविशेषणायोगात् । अतोविवि-
धापदस्वारस्याच्छक्तिरितिजात्यभिप्रायादेकवचनं । तत्रैवतृतीयाध्यायारंभे "
यएकोजालवानीशतईशिनीभिः । सर्वांल्लोकानीशतईशिनीभिः यएवैकउद्भवेसं-
भवेचयएतद्विदुरमृतास्तेभवंती " ति शक्तिबहुत्वाम्नानात् ॥ " ईशिनीभिः

स्वशक्तिभि ” रितिव्याख्यानंतुशंकराचार्या अप्यभ्युपयंति तथाश्रीभागवतेऽपि- ( स्कं १० अ०२९ श्लो० ५५ ) श्रियापुष्ट्यागिराकांत्येत्यादि ( अ० ४०- श्लो० २९ ) ब्रह्मणे नंतशक्तये ( अ० ३२ श्लो० १० ) पुरुषःशक्तिभिर्यथा ( स्कं० ४ अ० ११ श्लो० २३ ) अव्यक्तस्याप्रमेयस्य नानाशक्त्युदयस्यचनवैचिकीर्षितं तातकोवेदाथत्वसंभवं ( श्लो० ३० ) त्वंप्रत्यगात्मनितदा- भगवत्यनंतआनंदमात्रउपसन्नसमस्तशक्तौ । दशमस्यैकोनषष्टितमे ( श्लो० २८ ) अजायजनयित्रेस्यब्रह्मणेऽनंतशक्तयेपरावरात्मन्भूतात्मन् परमात्मन्नमोस्तुते इति- ( स्कंध ६ अ० ४ श्लो० ३१ ) यच्छक्तयो वदतांवादिनांवैविवादसंवादभुवोभवंतीति । एवमादिषु अलौकिकशक्तिबाहुल्यंस्मर्यतेभगवान्बादरायणोपिसर्वशक्तिसाहित्यंपरस्यबोधयति ( अ० २ पा० १ सू० ३० ) “ सर्वोपेताचतद्दर्शनात् ” इति । अत्रशंकराचार्यैरपि “ एकस्यापिब्रह्मणोविचित्रशक्तियोगादुपपद्यतेविचित्रोविकारप्रपंच ” इत्युक्तं । तत्पुनःकथमुपगम्यतेविचित्रशक्तियुक्तं परंब्रह्मेति त- दुच्यते । सर्वोपेताचतद्दर्शनात्सर्वशक्तियुक्ताच परादेवतेत्यवगंतव्यं कुतः तद्दर्शनात् तथाहि दर्शयतिश्रुतिःसर्वशक्तियोगंपरस्यादेवताया ” इतिव्याकुर्वद्भिश्चित्रानंताशक्तिकत्वमूरीचक्रे अतोमायातिरिक्तशक्तिसत्वेप्रमाणाभावोक्तिरज्ञानादेव ( अ० २ पा० १ सू० २८ ) “ आत्मनिचैवंविचित्राश्चही ” ति सूत्रेणेश्वरशक्तिषुसाधारण्येनवैचित्र्यस्यसमर्पणात्सर्वत्राघटितघटनापटीयस्त्वमपि स्फुटमसंकटादेव जीवेशाविति श्रुतिस्तुप्राग्विस्तरेणव्याख्यातापतिबिंबवादनिराकरणावसरेचावश्यव्याख्येयासेतितत्रापिविवरिष्यते । एवमलौकिकशक्तियोगादेवसर्वेविरोधाःसुपरिहराइत्यभिप्रेत्यतवपुरुषंवदंत्यखिलशक्तिधृतोंशकृतमिति जीवस्यांशत्वंवदंत्यः श्रुतयोनुपदमेवाखिलशक्तिधृत्वेनभगवंतं विशिषंति ॥ एतेनपरास्येत्यादिर्युक्तमित्यंतोग्रंथोनिरस्तः लोकादिविरोधश्चपूर्वै व निराकृतः ॥

यत्तुजीवस्याग्निविस्फुलिंगन्यायेनव्युच्चरणस्वीकारेतथैवप्राणानामपितच्छ्रुतावेवतस्मादेवनिःसरणस्योक्तत्वाद्यथातेषामनित्यत्वंतथाजीवानामप्यनित्यत्वंस्यात्तथाचतेषामनित्यत्वेकृतहान्यादिदोषाःप्रसज्येरन्अपिचतेषामनित्यत्वेमुक्तानामपिनाशःस्यात्यदिमुक्तिकालेनाशस्तदास्वात्मनाशएवमुक्तिःस्यादिति तन्मंदं जीवस्यप्राणादिवद्ब्रह्मणःसकाशाद्व्युच्चरणेपितस्यव्युच्चरणंनो

त्पत्तिःप्राणादिवन्नामरूपसंबधाभावात् ॥ नचजीवस्यदेवद-
त्तयज्ञदत्तचैत्रादिनामरूपसंबंधात्कथंनामरूपसंबंधाभावइति-
वाच्यं देवदत्तादिनामदेहस्यैवनात्मनःतथैवश्रुत्यापिप्रतिपादितं
" अंगादंगात्संभवसिहृदयादधिजायसे आत्मावैपुत्रनामासित्वं-
जीवशरदःशत " मितितत्रांगेभ्यउत्पत्तिर्देहस्यैवनात्मनःसंभव-
ति अतएव " चराचरव्यपाश्रयस्तुस्यात्तद्व्यपदेशोभाक्तस्तद्भा-
वभावित्वा " दितिसूत्रमपिसंगच्छते ॥ ननुदेवदत्तादिनामर्यादि-
देहस्यैवतदादेहस्यदग्धत्वाद्देवदत्तादिनाम्नातदुद्देशेनगयाश्राद्धा
दिकरणानुपपत्तिरतोनामसंबंधो जीवस्यैववाच्यस्तथाचप्राणा
दितुल्यतयाकथंनतस्योत्पत्तिरितिचेन्नतत्रदेवदत्तादिनामसंबंधि
देहोपलक्षितजीवाभिप्रायेणैवश्राद्धादिकमुपपद्यतेकथमन्यथाद्वि
तीयजन्मनिचैत्रादिनाम्नाश्राद्धादितस्मान्नजीवस्यनामसंबंधःकिं
चवेदवादिनांवेदएवमुख्यःतेनचजीवस्यनित्यत्वंप्रतिपाद्यतेतथा-
चश्रुतयः " अयमात्माजरोऽमरो नजायतेम्रियतेवाविपश्चि-
त् ॥ नित्योनित्यानांचेतनश्चेतनानां अजोनित्यःशाश्वतोय "
मित्याद्यानित्यत्वमेवज्ञापयंतितस्माद्व्युच्चरणंब्रह्मणस्सकाशाद्वि-
भागएवनोत्पत्तिरिति ॥ उपाध्युद्गमनेनैवजीवोद्गमकथनंतुन-
सम्यक्उपाधेःपूर्वसत्वेद्वैतश्रुतिविरोधोऽसत्वेत्वनित्यत्वेनतदुपाधि
कस्यजीऽवस्यानित्यत्वेन " नात्माश्रुतेर्नित्यत्वाच्चताभ्य " इ-
तिसूत्रविरोधः ॥ नचजीवोब्रह्मव्यतिरिक्तोनस्वीक्रियतइतिवा
च्यं " नेतरोनुपपत्तेःभेदव्यपदेशाच्चान्य " इतिसूत्रविरोधा-
पत्तेः ॥ किंचजीवस्यब्रह्मत्वंप्रतिपाद्यतेवाजीवत्वंनिराक्रियते ॥
आद्येइष्टापत्तिः ॥ द्वितीयेजीवस्याविद्यकत्वमेवकल्पनीयंत-

थासति तुकात्वविद्यानाशे जीवत्वरूपनाश एवस्याद्‌ात्महानमपुरु-
षार्थस्त्वनभिमतेस्यात् ॥ किंच " नेनजीवेनात्मनानुप्रविश्यना-
मरूपेव्याकरवाणी " तिश्रुतिविरोधः अत्रह्यनुप्रवेशोजीवसा-
हित्यंतद्वारकनामरूपव्याकरणरूपंकार्य्यं चश्रूयते तद्वयमपिजी
वस्यकल्पितत्वेबाध्येत ॥ नचानादिरयंजीवब्रह्मविभागोबुद्धि-
कृतइतिवाच्यंप्रमाणाभावात् नह्यनादित्वेबुद्धिकृतत्वेवाप्रमाणम-
स्ति जीवभावस्यकल्पितत्वेनतत्प्रत्यक्षस्यस्वामिकमायिकपुरुष-
प्रत्यक्षवत्प्रामाण्यायोगात् अतएवनानुमानादिरपि ॥ श्रुतय-
स्तुनैषांविस्फुलिंगवद्युच्चरणंब्रह्मण्यप्ययंचवदंत्योजीवब्रह्मविभा
गस्यसादित्वमेववदंति ॥ नाच " नकर्माविभागादितिचेन्नाना-
दित्वा " दितिसूत्रेकर्मानादित्वबोधनेनसंसारस्यजीवब्रह्मवि-
भागस्यचानादित्वमितिवाच्यंतथासतीश्वरस्यानीशत्वं „ सदे-
वसौम्येदमग्रआसीदेकमेवाद्वितीय " मितिश्रुतिविरोधश्चसंसा-
रहेतुभूतकर्मणामविद्यायाजीवानांचतदानींसत्वात् ॥ तस्माद्वि-
स्फुलिंगाइवाग्नेर्हि जडजीवाविनिर्गताःसर्वतःपाणिपादांतात्सर्वतो
क्षिशिरोमुखात् ॥ निरिंद्रियात्स्वरूपेणतादृशादितिनिश्चयः ॥
जडचिदानंदयोस्तुचिन्यानंदस्यसर्वशः तिरोधानंहरीच्छातोनि-
बंधादिषुवर्णितंननुयदिजडेचिदानंदयोस्तिरोधानंतदाघटोभाती-
तिप्रतीतिर्नस्याद्यदिजीवेआनंदांशस्यतिरोभावस्तर्हितत्रप्रीतिप्र-
तीतिःकथंस्यात्नहितिरस्कृतस्यभानंसंभवतिकिंचचिदानंदौस-
तोभिन्नावभिन्नौवाआद्येऽपसिद्धांतःचिदानंदयोरसत्वापत्तिश्च-
द्वितीयेनुतेषुतिरोभावातिरोभाववैलक्षण्यानुपपत्तिरितिचेन्मैवंजडे-
ज्ञानसुखयोस्तिरोभावएवसन्घटइतिप्रतीतिवद्‌ज्ञानंघटःसुखंघटः

ज्ञानातिघटःसुखीघटइत्यादिप्रतीतीनामभावात् ॥ ज्ञातेघट-
इतिप्रतीतिसत्वेपिनतस्याघटेचिदंशाविर्भावसाधकत्वं ज्ञानविष-
यत्वस्यैवघटनिष्ठस्यतद्विषयत्वात्ज्ञानविषयत्वस्यचज्ञानत्वाव्या
प्यत्वात् ॥ नचप्रियोघटइतिप्रतीतेरपिघटादावानंदांशाविर्भा-
वसाधकत्वं यद्यानंदस्यैवप्रीतिविषयत्वंस्यात्तदातस्यापितत्सा-
धकत्वंस्याद्यथानंदस्यप्रीतिविषयत्वंतथैवानंदसाधनस्यापिप्री-
तिविषयत्वंदृश्यतेनतावतातेषामानंदरूपतैवकेनचित्स्वीक्रियते ॥
अतएवत्वन्मताभिज्ञैरपिसुखसाधनतोपाधेरन्नपानादयःप्रियाइ-
त्येवोक्तंनतुसुखत्वादित्युक्तं जीवेतुनिरतिशयानंदस्यैवतिरस्कृति-
र्नत्वानंदमात्रस्य तस्यापिविषयेंद्रियसंयोगादिरूपभगवदिच्छा-
नियम्यकारणवशादेवाविर्भावोनसर्वदा अतएवाहंसुखीस्यामि-
तितस्याभिलाषःसंपद्यतेऽन्यथा सिद्धेइच्छाविरहात्सनस्यात् नि-
रतिशयानंदाविर्भावस्तुज्ञानभक्तिसमवधानकालिकभगवदि-
च्छयाकुत्रचित्केवलेच्छयैवेतिनकोपिदोष ॥ चिदानंदौसतोभि-
न्नावभिन्नौवेत्यादिदूषणंतूभयमतएवतुल्यंतुल्यसमाधानंच ॥
त्वन्मतेपिब्रह्मणःसच्चिदानंदरूपत्वाद्घटादौसत्तैवव्यज्यतेनचिदा-
नंदौअव्यज्येते अत्रकिंविनिगमकं तेषांभिन्नत्वेब्रह्मस्वरूपमपिभि-
द्येत अभिन्नत्वेपरस्परंवैलक्षण्यानुपपत्तिः ॥ भगवदिच्छाया-
स्तच्छक्तिविशेषस्यवानियामकत्वकल्पनेप्रकृतेपितेनैवसकल-
दोषतिरस्कारसंभवोकिंवृथालापेन परंतुदोषवारणंनसंभवतित्व-
याजडेजीवेचमाययैवानंदस्यतिरोभावोवाच्यःतथासतिजीवेस-
च्चितोजडेसदंशस्यतिरोभावःकथंनेतिवक्तव्यं मायायाअघटन-

घटनापटीयस्त्वान्नैवमितिचेन्मुक्तानामपिपुनरुत्पत्तिःकथंनस्या-
त्वेदमार्गानुसरणेचवेदेभगवदिच्छायाएवजगत्कारणत्वमुक्तंन-
मायायाइति ॥ अपिचास्तिभातिप्रियमित्यनुभवानुसारेणज-
डेपिचिदानंदयोर्भानोपगमे सत्ताचितिःसुखंचेतिस्वभावाब्रह्मण
स्त्रयः ॥ मृच्छिलादिषुसत्तैवव्यज्यतेनेतरद्द्वयमित्यादिवचनवि-
रोधस्तवस्यात्श्रुतौब्रह्ममात्रतःप्राणभूतजीवादीनांव्युच्चरणंयद्य-
पितुल्यतयैवप्रतिपादितंतथापिममैवांशोजीवलोकइतिभगवद्वा-
क्याज्जीवस्यैवांशत्वंनान्येषांतत्साधकप्रमाणाभावात् ॥ एते-
नश्रुतौतुअंशांशिभावमनादृत्येत्यादिकमपास्तं ॥

## टीका

सहस्राक्षे इदानीमशैरित्यादिवस्तुस्थितिस्तूक्तेत्यंतं भागंखंडयति यत्तुजीव-
स्याग्नीत्यादिना।ऽनादृत्येत्यादिकमपास्तमित्यंतेन । ( अ० २ पा० ३
सू० १५ ) " अंतराविज्ञानमनसी "त्यादिसूत्रत्रयस्यभाष्यात्प्रकाशाच्चकंचिदंश-
मर्थतोऽनुवदतःसमादधते । जीवस्येत्यादिना । नारदपंचरात्रे तदनुरोधेननिबंधभा-
ष्यादिषुचानित्येजननमित्यादिनानिरूपितमाविर्भावत्रैविध्यमभिप्रेत्याहुः । तस्यव्यु
च्चरणमिति ॥ नोत्पत्तिरिति । व्याकृतनामरूपसंबंधात्मिका जननरूपोत्पत्तिर्नै-
त्यर्थः । समागमरूपातुसातस्याप्यस्त्येव । ब्रह्मणःसकाशाद्विभागस्याविशिष्टत्वात्
अंगादंगादिति । अयंमंत्रस्तैत्तिरीयाणांमंत्रप्रश्नाख्येप्रपाठकद्वयेप्रथमप्रश्नेपठ्य-
मानःप्राय.सर्वेषांजातकर्मणिसुप्रसिद्धः । सर्वांगेभ्योहृदयतश्चैकीभूतंरेतएवाहितंपुत्रश-
रीरतयापरिणमतीत्यत्रात्मशब्दोपिदेहादिपरएवफलति आत्मायत्नोधृतिर्बुद्धिःस्वभावो-
ब्रह्मवर्ष्मचेत्यमरोक्तेः । चराचरेत्यादि । द्वितीयस्यतृतीयेपादे ( सू० १६ ) एकं
सूत्रमिदमधिकरणं सूत्रार्थस्तु चरंजंगमं अचरंचस्थावरं शरीरं तादृशशरीरयो
र्जीवस्य विशेषणापाश्रयस्तत्तत्कर्मानुसारेणावस्थानंतुस्यादेव । तद्व्यपदेशःजन्ममरणा-
दिशरीरधर्मव्यपदेशः जीवेभाक्तोलाक्षणिकःकुतः तद्भावभावित्वात् तद्भावेनशरी-
रभावेनतदभिमानेनभवति व्याप्तस्तिष्ठति तादृशत्वादितिज्ञेयः । अन्यथेति । तदुप-
लक्षितजीवाभिप्रायेणश्राद्धादीत्यनंगीकारे द्वितीयजन्मनिजाते सतिपूर्वनाम्नोस्मरणा-

स्तेनव्यवहाराभावाच्च तदानींप्राक्तनपुत्रादिनातन्नाम्नाक्रियमाणंश्राद्धादिकथमुपपद्ये-
तेत्यर्थः ॥ नाम्नोजीवसंबंधित्वेतु सर्वजन्मसुचैत्रेत्याहूतः सप्रतिवदेत् । तन्नाम्ना-
सकलव्यवहारश्चापद्येतेतिभावः ॥ एतावता ( अ० २ पा० ३ सू० १७ ) "ना-
त्माश्रुतेर्नित्यत्वाच्चताभ्यः " इतिसूत्रस्यप्रथमांशंआत्माजीवः नोत्पद्यते देहस्येवत-
स्यनामरूपसंबधात्मकोत्पत्तेरश्रवणादित्यर्थकंसंगृह्यतदुत्तरांशं भाष्याद्यनुसारेणसंगृण्हं-

---

## सहस्राक्ष.

इदानीमग्नेर्यथाविस्फुलिङ्गास्तथाजीवोद्गमः स्मृतइति तदुक्तं जीवस्योद्गमनं खण्डयते ॥
अजोजीवइति ॥ प्राणवज्जीवस्य व्युच्चरणे समानश्रुत्या तद्वदेवोत्पत्तौ नाशोऽपि तस्य-
स्यात् ॥ उत्पन्नस्य नाशध्रौव्यात् ॥ जातस्यहिध्रुवोमृत्युरितिभगवदुक्तेः ॥ नन्वस्तु त-
था येतु ज्ञानैकसन्निष्ठास्तेषांतुलयएवहीत्यस्मदीयैर्मुक्तौ लयस्यैवोक्तत्वादितिचेत्सुव्याख्या-
तमात्मविनाशार्थंयतामहेइतिवदता ॥ अधिकमुत्तरभागे वक्ष्यते ॥ तस्मादुपाध्युद्गमेनैव
जीवोद्गमः ॥ अतएव काण्वानां सर्वएतआत्मानइति पाठोनास्ति उपाध्युद्गमेन तदुद्गमस्य
सिद्धत्वात् ॥ माध्यंदिनानान्तु उपाधिनिर्गमेनात्मनिर्गमइति स्पष्टप्रतिपत्त्यर्थं तथापाठः ॥
अतएव नात्माऽश्रुतेर्नित्यत्वाच्चताभ्यइतिसूत्रंसंगतं ॥ नजायतेम्रियतेवाविपश्चित्इतिश्रु
तिर्नजायतेम्रियतेवाकदाचिदितिस्मृतिश्चसंगता ॥ २७ ॥ इदानीं जडेचिदानन्दयोस्तुतथा
ऽऽनन्दस्यसर्वशः तिरोधानंहरीच्छातोनिबन्धादिषुवर्णितम् ॥ आविर्भावेतुसर्वंहिब्रह्मैवेति-
नसंशयः इतिखण्डयति ॥ अत्रकस्येति ॥ अत्र जीवे कस्य सुखस्य ति-
रस्कृतिर्यदि तदा प्रीतिप्रतीतिःकथम् अपरे जडे ज्ञानसुखयोर्यदि सा तदा भा-
नप्रीतिप्रतीती कथमित्यन्वयः ॥ नहितिरस्कृतस्य भानं संभवति ॥ यच्चाऽनुभवयो-
ग्यत्वंवर्तमानस्यवस्तुनः आविर्भावःसविज्ञेयस्तिरोभावस्ततोऽन्यथा इति त्वदुक्त्या भाना-
योग्यत्वस्यैव तिरस्कारपदार्थतया त्वया स्वीकारात् ॥ किञ्च चिदानन्दौ सतोभिन्नाव-
भिन्नौ वा ॥ आद्येऽपसिद्धान्तः ॥ चिदानन्दयोरसत्त्वापत्तिश्च ॥ द्वितीये तु त्रिषु
तेषु तिरोभावातिरोभाववैलक्षण्यानुपपत्तिः ॥ किञ्च जीवजडयोर्ब्रह्मणाऽत्यन्ताभेदेन ए-
तयोः सुखादितिरोभावे ब्रह्मणोऽपि सस्यात् ॥ एतेन जीवस्यानन्दतिरोभावेन ब्रह्म-
णोभेदइत्यपि प्रत्युक्तम् ॥ पूर्वमभेदसत्त्वेनातिरोभावतिरोभावयोः समानयोगक्षेमत्वात् ॥
किञ्च व्युच्चरणसाम्ये प्राणादिजडे ज्ञानस्याऽपि तिरोभावे किं कारणम् ॥ ईश्वरेच्छां
प्रति तुवक्ष्यते ॥ तर्कस्तु त्वया श्रौतेऽर्थे नाश्रीयते ॥ श्रुतौतुअंशांशिभावमनादृत्य
ब्रह्ममात्रतएव व्युच्चरणमुक्तम् ॥ तस्मात्सर्वत्राऽस्तिभातिप्रियमितिप्रतीत्या ब्रह्मणः सर्वत्र
सर्वदा सर्वथैकरसत्वेन समानैवोत्पत्तिर्वाच्या वस्तुस्थितिस्तूक्ता ॥ २८ ॥ ७ ॥

ति **किंचैवेदित्यादिना** ॥ **अयमात्मेति** काण्वानांबृहदारण्यकेषष्ठाध्यायेचतुर्थब्राह्मणे ( पृ० ९१७ ) " सवाएषमहानजआत्माजरोऽमरोऽमृतोऽभयोब्रह्म " इतिश्रूयते ॥ माध्यंदिनानांतु ( पृ० १० ९१ ) " आत्माऽजरोऽमरोऽभयोऽमृतोब्रह्म " इतिपदव्यत्ययघटितःपाठः ॥ अस्याःश्रुतेरेवायमार्थिकोनुवादोभाष्यादाविति भातिशंकराचार्यैरपि नात्माऽश्रुते रितिसूत्रेउक्तचरंकाण्ववाक्यमेवोपन्यस्तं । **नजायतइति** । इदं कठवल्लीषुद्वितीयवल्लीस्थं । अजो नित्यइतितु अस्यैवोत्तरार्धं । प्रकाशानुवादबोधनाय पृथगनूदितं स्पष्टतयानित्यपदघटितत्वेन सौत्रपदानुग्रहायच । **नित्योनित्यानामिति** । इदमपितत्रैवपंचमवल्ल्यां ( ऋ० १३ ) " नित्योनित्यानांचेतनश्चेतनानामेकोबहूनां योविदधातिकामान् " । इति वाक्यं नित्यश्चेतनएकःपरमेश्वरःनित्यानां चेतनानांबहूनां जीवानां स्वधामादौ कामान्विदधातीत्यर्थक जीवनित्यतांगमयति **अद्वैतेति** " सदेवसोम्येदमग्रआसी " दित्यादिविरोधः । **सूत्रविरोधइति** । सूत्रपदंतद्विषयश्रुतीनामप्युपलक्षणं । **नेतरइति** प्रथमस्यप्रथमेपादे आनंदमयशब्दार्थःपरमात्मैवेतिसाधयित्वा जीवस्यतत्वनिषेधार्थमिदसूत्रं ( अ० १ पा० १ सु० १५ । १६ ) " भेदव्यपदेशाच्चे " तिसूत्रंचेतिद्वयं ॥ अंतस्तद्धर्माधिकरणे ॥ सूर्यमंडलांतवर्तिहिरण्मयःपुरुषःपरमात्मैवेतिसाधयित्वा नतुसजीवइतिनिर्णयार्थं ( अ० १ पा० १ सु० २० ) " भेदव्यपदेशाच्चान्य " इतिसूत्रं । प्राथमिकत्वादेतत्सूत्रद्वयमुक्तं । एवमग्रेपितत्तदधिकरणेषु ( अ० १ पा०१ सू०३० ) " जीवमुख्यप्राणलिंगान्नेतिचेन्न " ( पा०२ सू०३ ) " अनुपपत्तेस्तुनशारीरः " इत्यादीनि तत्तद्वाक्यस्यब्रह्ममात्रपरतासाधनाय जीवपरतानिवारकाणि सूत्रांतराण्यप्यनुसंधेयानि ( अ०२ पा०१ सू०२२ ) " अधिकंतुभेदनिर्देशात् " इत्यत्रचेदमतिस्पष्टंजीवस्याणुत्वांशत्वादिधर्मवत्वादेवपरस्य विभुत्वांशित्वादिनाधिक्यं । अंशांशिभावव्युच्चरणाद्यनंगीकारेतुविभुजीवातिरिक्तब्रह्माभावात्धिताकरणादिदोषप्रसक्तिर्दुर्वारैवस्यात् । **साहित्यमिति** करणत्वेनसाहित्यं । **प्रमाणाभावादिति** । विभाजिकाबुद्धिर्जीवस्यब्रह्मणोवा । आद्येआत्माश्रयादिकं द्वितीये निर्विशेषत्वभागादिकं । किंच सापिकल्पितानवा । आद्येजीवकल्पितत्वेऽन्योन्याश्रयःब्रम्हकल्पितत्वेज्ञानघनताहानिः । द्वितीयेत्वद्वैतश्रुतिसहस्रविरोधः इत्याद्यनेकयुक्तिविरुधेतत्पक्षेग्राहकश्रुत्यादिप्रमाणस्याभावात् ॥ **नहीत्यादि** । अनौपचारिकानादित्वकृतत्वयोःसामानाधिकरण्यासंभवादितिभावः ॥ **अतएवेति** । ब्रह्मणोनिर्विशेषत्वेनजीवस्यचांशत्वादिनातदतिरिक्तस्याभावेन प्रमातुरेवाभावादित्यर्थः ॥ प्रत्यक्षाभावादपितदुज्जीवकानुमानादेरसंभवः ॥ **श्रुत्यस्त्विति** । " प्रजायंतेतत्रचैवापियंति " इत्याद्यामुंडकादिस्थाः ॥ अनाशत्वमिति । कर्मणैवसृष्टिप्रलयादिसर्वकार्यावश्यंभावात्

कर्मणोऽनादित्वाच्चकिमीश्वरेणेतिभावः । एवंचानीश्वरवादापत्तिः । ( अ० २ पा० १ सू० ३५ ) " नकर्माविभागा " दितिसूत्रंतुकल्पबहुत्वात्तदवांतरसृष्टिप्रलयादिविषयावेदकतयाप्राग्वैषम्यनैर्घृण्यनिरासेनिर्णीतं । अन्यथामूलोक्तादिदूषणगणप्रसात् ( अ० ३ पा० २सू० ३८ ) " फलमत " इत्यादिबह्वधिकरणविरोधाच्च तथैवव्यासाभिप्रायावसायात् ॥ **विस्फुलिंगाइवाग्नेर्हीति** । इयंनिश्चयइत्यंतासार्धकारिकांशोनानेतिसूत्रभाष्यस्था । **सर्वतःपाणिपादांतादित्यादि** । श्वेताश्वतरादिबहुश्रुत्यर्थसंग्रहोयमितिप्रकाशादिभ्योज्ञेयं ॥ **जडेचिदानंदयोस्त्विति** । इयंकारिकाशुद्धाद्वैतमार्तंडस्था तत्खंडनाभाससहस्राक्षखंडखंडनायेहोपन्यस्ता ॥ अर्थस्तु जडेद्वयोस्तिरोधानं चितिजीवेसर्वंशआनंदस्य ब्रह्मवदखंडानंदस्य तिरोधानंचशास्त्रार्थनिबंधाविरोधाध्यासभाष्यादिषुवर्णितमितिध्येयः ॥ सर्वशःपदाद्ब्रह्मानंदमात्राभूतस्य परिच्छिन्नसातिशयलौकिकानंदस्य जीवेसत्वेप्यदोषोदर्शितोभवति । **आनंदरूपतैवेति** । एवकारःसदादियोगव्यवच्छेदकः वस्तुषसत्तायाःप्रत्यक्षसिद्धतयातथास्वीकारोशक्यः । तेनसांख्यादिभिःप्रमदादिवस्तुजातस्य सुखदुःखमोहात्मकतायाःस्वीकारेऽपिनक्षतिः । **सुखसाधनतोपाधेरिति** । विद्यारण्यस्वामिकृतपंचदशप्रकरण्यां आत्मानंदाख्येद्वादशेप्रकरणे ( श्लो० २३ ) इदमस्ति । **अन्यथेति** । जीवेसर्वदानंदांशस्याविर्भावांगीकारे । **भगवदिच्छयेति** । " एषएवानंदयाति " इत्यादिश्रुतिभ्यो ज्ञानभक्तिकालेप्यानंदरूपफलदातासएवेतिभावः । **कुत्रचिदिति** । प्रलयकालजडेस्वाप्ययकाले जीवेचतथेत्याशयः । **उभयमतएवेति** । उभयोर्मते । एवकारोऽप्यर्थे । **विनिगमकमिति** । नियामकमित्यर्थः । **सत्ताचितिःसुखंचेति** । विद्यारण्यपंचदशप्रकरण्याविषयानंदाख्येचरमप्रकरणे विंशोयंश्लोकः । तत्रैव ( श्लो० ९ ) घोरमूढासुमालिन्यात्सुखांशश्चतिरोहित इतिजीवेष्वपि घोरमूढवृत्तिष्वानंदांशतिरोभावः स्वीकृतः। **नान्येषामिति** । जडानांजीववत्स्वांशत्वंनेत्यर्थः । तेनांतर्यामिणांस्वांशत्वेप्यदोषः । अत्रायंसंदर्भाशयोनुसंधेयः । अंशत्वज्ञापकंव्युच्चरणंचानेकश्रुतिसिद्धं यथाबृहदारण्यकेदृप्तबालाकिब्राह्मणे " यथोर्णनाभिस्तंतुनोच्चरेद्यथाग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेवास्मादात्मनःसर्वेप्राणाःसर्वेलोकाःसर्वेदेवाः सर्वाणिभूतानिसर्वाएत आत्मानोव्युच्चरंति " मुंडकोपनिषदिद्वितीयमुंडकारंभे " यथासुदीप्तात्पावकाद्विस्फुलिंगाःसहस्रशःप्रभवंतेसरूपाः॥ तथाऽक्षराद्विविधाःसोम्यभावाःप्रजायंतेतत्रचैवापियंति" बृहन्नारायणोपनिषदि " यतःप्रसूताजगतःप्रसूतीतोयेनजीवान्व्यचसर्जभूम्यां " छांदोग्येश्वेतकेतुविद्यायां"सन्मूलाःसोम्येमाः सर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाः" भृगुप्रपाठके " यतोवाइमानिभूतानिजायंते"छांदोग्येशिलकदाल्भ्यप्रवाहणकथायां " सर्वाणिहवाइमानिभूतान्याकाशादेवसमुत्पद्यंतेआकाशंप्रत्यस्तंयंति " इहप्रजाभूतशब्दाभ्यांप्राणादिविशिष्टाजीवाउच्यंते ॥

नचमुंडकश्रुतौ भावशब्दोजीवातिरिक्तपरस्त्वयावक्तुंशक्यःशंकराचार्यैरुपनिषद्भाष्ये " भावाजीवा " इत्येवव्याख्यानात् यत्तुप्राणवज्जीवस्यव्युच्चरणेसमानश्रुत्या तद्वदेवोत्पत्तौनाशोपितस्यस्या ) दित्यभाषि तदसत्प्राणादेरप्याविर्भावतिरोभावौवदतामयंजीवस्यापितयोःतुल्यकथत्वात् । किंचव्युच्चरणंहिनोत्पत्तिःकिंतूद्गमएव अतोव्युच्चरणेउत्पत्तावित्युभयोक्तिरसंगतैव । किंचैककारणजन्यत्वंयुगपदुत्पन्नत्वंवा ननाशादिसालक्षण्यप्रयोजकंभवति सोदरेषुयुगपदुत्पन्नघटादिषुवयुगपन्नाशनियमादर्शनात् एकश्रुतिविषयेषुयुगपदुत्पद्यमानेषु दीक्षाऽऽधानादिधर्मेषुकेषांचिदवांतरेनिवृत्तेःकेषांचिद्यावद्ववभृथंस्थितेःकेषांचिद्यावदाधानप्रयोगं केषांचिद्यावज्जन्मस्थायितायाश्चदर्शनात् ॥ तेनजीवानांमनःप्रभृतीनांचयावत्प्रलयंस्थितौदेहानांचविविधानांलब्धनेहसाविर्भावतिरोभावयोरपिनदोषः ॥ जातस्यहीतिवाक्यंतुनोत्पत्तिमतोनाशनियामकं ध्वस्तस्यपुनरुन्मज्जनानंगीकारेण ध्रुवंजन्ममृतस्यचेत्यस्यासंगतेःप्राणत्यागार्थकमृङोनिष्पन्नस्यमृत्युशब्दस्यनाशपर्यायत्वाभावाच्च । अन्यथाघटोमृतःपटो मृतइत्यादिप्रयोगापत्तेः । पुनरुन्मज्जनांगीकारेत्वाविर्भावतिरोभाववादएवप्रवेशः ॥ तस्माच्छरीरसंयोगवियोगपरंपरायाएवध्रौव्यबोधकमिदं । शंकराचार्यश्रीधरस्वाम्यादिभिरपिअथचैनमितिश्लोकद्वयस्यतथाभिप्रायकतयाव्याख्यानेनत्वयापिनान्यथैतुंशक्यं ॥ एतेन ( जातस्यहिध्रुवोमृत्युरिति भगवदुक्ते ) रितिप्रमाणोपन्यासःप्रत्युक्तः । ननुएवंसतिप्राणादितौल्यंतुजीवस्यापद्यतएवेतिचेदन्नब्रूमः मन्मतेब्रह्मकार्यस्य सर्वस्यब्रह्मरूपतया वस्तुतोनित्यत्वेऽपिशास्त्रीयनित्यानित्यत्वव्यवहारबीजमस्त्याविर्भावस्यत्रैविध्यं । तच्चनारदपंचरात्रे अनित्येजननंनित्येपरिच्छिन्नेसमागमः ॥ नित्यापरिच्छिन्नतनौप्राकट्यंचेतिसात्रिधेत्यादिनाप्रपंचितं । एकस्यामेवसृष्टौमुहुराविर्भावतिरोभावशालित्वादनित्यतयाव्यवह्रियमाणे जडेजननरूपोत्पत्तिः । सृष्टेःप्रभृत्याऽऽप्रलयमतिरोभाविन्यणुत्वात्परिच्छिन्नेजीवेसमागमरूपासा । नित्यविभुस्वरूपेपरात्मनितुप्राकट्यरूपासेत्यर्थः । जननंतुव्याकृतनामरूपसंबंधोनत्वसतस्सद्भावःनासतोविद्यत इत्यादिविरोधादितिसमर्थितंप्राक् । तच्चनामरूपविशेषसंबंधरूपंजननं जडएवसंभवति नजीवे " अनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणी " तिश्रुतौजीवस्यकरणतोक्त्याव्याकरणात्पूर्वमेवतत्स्वरूपसिद्धेः । अतएवद्वितीयस्यतृतीयेपादे ( सू० १५ ) " अंतराविज्ञानमनसीक्रमेणतल्लिंगादितिचेन्नाविशेषा " दित्यधिकरणेतैत्तिरीयादिषुविज्ञानमनोमयादिशब्दोक्तयोर्जीववेदयोर्जननमाशंक्यनामरूपविशेषाभावादेवतत्परिहृतं । अतएवव्युच्चरणश्रुतौव्याकरणश्रुतौचात्मशब्दःप्रयुक्तः । व्याकृतनामरूपसाक्षात्संबंधादेवप्रश्नोपनिषदिषष्ठप्रश्ने " सप्राणमसृजत " द्वितीयमुंडकेप्रथमखंडे ( ऋ० ३ ) " एतस्माज्जायतेप्राणो मनःसर्वेंद्रियाणिच " ऐतरेये " सइमांल्लोकानसृजत "

एवमादौ प्राणादीनांजननमाम्नायते किंच सूत्रकृता ( अ० २ पा० ३ सू० १८ ) " ज्ञोतएव " त्याद्यधिकरणैर्विस्तरेणापादपरिसमाप्ति जीवस्यगुणःस्वरूपंचनिर्णीतं अतोन सर्वांशतःप्राणादितौल्यशंकावकाशः । अधिकंप्रकाशादिभ्योज्ञेयं । नन्वेवमपिव्युच्चरंतीतिसमानश्रुतावपि केषांचिज्जननंकेषांचित्समागमइतिवैषम्यंतदवस्थमितिचेत्तर्हितवापि प्राणादीनामनौपचारिकंसाक्षाद्व्युच्चरणं जीवानांतूपाधिद्वारौपचारिकंतदितिवैषम्यंतदवस्थं । तद्वारणायप्राणादीनामप्युपाध्यंतरद्वारकंतत्सर्वेषांवानौपाधिकंतत्स्वीकुरु वस्तुतस्तुमन्मतेप्राणादेरपि व्युच्चरणोत्तरमेव नामादिसंबंधातोव्युच्चरतीत्यत्रनवैषम्यगंधः । किंतुतत्रैववैषम्यं । प्रलयेतुजीवानांस्वकारणेप्ययोस्त्येवं " तत्रचैवापियंति । यत्प्रयंति । आकाशंप्रत्यस्तंयंती " त्यादिश्रुतिभ्यः ॥ इदमपिविभुत्वावच्छेदप्रतिबिंबवादानामनादरेस्वांशत्वेचसत्येवानुपचारेणसंगच्छते विश्वादीनांप्रवेशासंभवात् । जलमीनादिवदनंशनिवेशेद्वैतानपायाच्च । तथामोक्षेपि " यत्प्रयंत्यभिसंविशंति । लक्ष्यंतदेवाक्षरंसोम्यविद्धीति " तैत्तिरीयमुंडकादिश्रुतिभिः यदक्षरंवेदविदोवदंतिविशंतियद्यतयोवीतरागा इतिस्मृत्याचप्रवेशः । " ब्रह्मैवसन्ब्रह्माप्येति ॥ सयथासैंधवखिल्यउदकेप्रास्तउदकमेवानुविलीयेतनाहास्योद्ग्रहणायेवस्या " दित्यादितैत्तिरीयबृहदारण्यकादिश्रुतिभिरेकीभवरूपोलयश्चाम्नायतेसोपितथैवसंगच्छेत । अयंचलयोनध्वंसरूपः पूर्वस्थितयोःसच्चितोरनुच्छेदात् । प्रत्युताधिकानामानंदैश्वर्यादीनामाविर्भावेनाधिकंतत्रेतिन्यायावताराच्च ॥ अतोनास्मात्वात्मनाशदोषप्रसंग : ॥ मोक्षेलयत्वव्यवहारस्तु " अप्येतिअनुविलोयेते " त्यादिश्रुतिभ्यः ( अ० ४ श्लो० ३३ ) तमाहुरात्यंतिकंमंगसंप्लवमितिद्वादशस्कंधादिवचनेभ्यश्च ॥ तस्माद्युक्त उक्तोज्ञानिनामक्षरेलयोयेतुज्ञानैकसंन्निष्ठास्तेषांतुलयएवहि इतिकारिकयामार्तंडकारैः ॥ येषांतुमतउपाधौब्रह्मप्रतिबिंबएवजीवशद्वार्थः तेषांमोक्षेउपाधिनाशादात्मनाशरूपत्वप्रसक्तिः दर्पणनाशेप्रतिबिंबनाशस्य दृष्टत्वात् । तथाचतस्यापुरुषार्थता आत्महानमपुरुषार्थइत्युक्तेः ॥ एवमवच्छेदपक्षेऽपिद्रष्टव्यं । अवच्छेदस्यैवजीवस्वरूपघटकतयावच्छेदकनाशे जीवस्वरूपनाशावश्यंभावात् ॥ विस्तरेणोत्तरभागेनिरूपयिष्यामः एतेनन्वस्तुतथेत्यादिवक्ष्यते इत्यंतंदत्तोत्तरं ॥ यच्च ( उपाध्युद्गमेनैवजीवोद्गम ) इतितन्निर्मूलं ॥ तत्रावोधकमानाभावात् । बहूपाधीनांपृथक् युच्चरणनिरूपणैरर्थक्यापाताच्च ॥ काण्वपाठे अश्रवणमात्रंतुनमानं शाखांतरीयपाठस्यबाधायोगात् । अन्यथा " नैनमूर्ध्वंनतिर्यंच " मितिश्रुत्युत्तरार्धेतैत्तिरीयाणां " नतस्येशेकश्चने " तिपाठेसर्वत्रसिद्धेऽपि " नतस्यप्रतिमाअस्ती " तिश्वेताश्वतरादिपाठस्यादरणं विष्णुनामसहस्रभाष्येशंकराचार्याणांनयुज्येत तथाछंदोगानांपंचाग्निविद्यायां काण्वाद्युक्तषष्ठाग्नेःप्राणविद्यायां पंचमरूपरेतसश्चोपसंहारोपिनसंगच्छेत । विद्यासाम्यात्सइतिचेदत्रा

पिनश्चास्तु । तस्मात्सामशाखीयाग्निहोत्रादिवच्छाखांतरश्रुतस्यात्मव्युच्चरणस्यका-
ण्वपाठे समुच्चयएवोचितः नतुमाध्यंदिनस्पष्टप्रतिपत्त्यर्थताउक्तहेतुद्वयात् ॥ मुंड-
कादौतुनपाठभेदोप्यस्ति किंच काण्वपाठेपि बृहदारण्यकभाष्ये " सर्वाणिभूतानि
ब्रह्मादिस्तंबपर्यंतानि प्राणिजातानी" तिव्याचक्षाणैः शंकराचार्यैर्भूतशब्देनजीवाः स्वी-
कृताःभूतशब्दस्य तद्विषयत्वंच " अहिंसन् सर्वभूतान्यन्यत्रतीर्थेभ्य " इति
प्रयोगोदर्शोनानोव्यत्रमत्रवर्णादिसूत्रैस्तैरंगीकृतं ॥ अतःकाण्वपाठेऽपिजीवव्युच्चरणंनि-
रवद्यंमाध्यंदिनपाठेतुभूतशब्द आकाशादिवचनःआत्मशब्दोवांतर्यामिवचनःस्यात् ।
वस्तुतस्त्वाकाशादिवचनएवोभयत्रसइत्यन्यत्रविस्तरः किंचमाध्यंदिनपाठेव्युच्चरंती-
त्येकस्यैवपदस्यकोचिदभिधया क्वचिदुपचारेणचप्रवृत्तिरशक्यावक्तुं युगपद्वृत्तिद्वया-
योगात् । अन्यथागंगायांघोषमीनावित्यादिरपि सुप्रयोगःस्यादितिदिक् । मन्म-
तेतुव्युच्चरणंविभागः सचसर्वेषुशक्यःस्तौल्यात् । विभागोत्तरंतूर्णनाभितंतुवत्स्वका-
रणकर्तृकक्रियाविषयाणां प्राणादीनांनामरूपविशेषसाक्षात्संबंधः । अग्निविस्फुलिं-
गवत्क्षद्राणांस्वांशानांजीवानांतुनसइतिविवेकः एवमेवश्रुतौदृष्टांतद्वयस्यसार्थक्यं अ-
न्यथैकनेववदेदितिप्रकाशाद्याशयः । नात्माश्रुतेरितिसूत्रंतु देहवन्मुहुराविर्भावति-
रोभावौनिषेधति तथाहिइतोऽव्यवहितपूर्वे ( अ० २ पा० ३ सू० १६ ) " च-
राचरव्यपाश्रयस्तुस्यात्तद्व्यपदेशोभाक्तस्तद्भावभावित्वादि " तिसूत्रेचराचराणां स्था-
वरजंगमशरीराणां संबंधस्तुजीवस्यस्यात् तद्व्यपदेशःशरीरनिष्ठजन्मादिव्यपदेशोऽस्य-
लाक्षणिकः शरीरधर्माभिमानित्वात् । नतुजीवस्यप्रतिशरीरंवास्तवं जन्माद्यस्ती-
त्युक्तं तत्रजातकर्मादीनांचेतनविषयकत्वात् जीवोप्युत्पद्यतां किमितिभाक्तत्व
निर्बंधइति शंकांवारयितुंसूत्रितवान् ( अ० २ पा० ३ सू० १७ ) " ना-
त्माश्रुतेर्नित्यत्वाच्चताभ्य " इतिअर्थस्तुआत्माजीवोनोत्पद्यते कुतःअश्रुतेः तत्र-
तत्रदेहस्यैवतस्योत्पत्तेरश्रवणात् । ताभ्यः " अयमात्माजरोमरः । नजायतेम्रि-
यतेवे " त्यादिश्रुतिभ्यःएवनित्यत्वाच्चेति अतोऽनेनप्रतिशरीरंजन्माद्येवनिषिध्यते
नतुश्रुतिशतसिद्धंब्रह्मणःसकाशाद्व्युच्चरणं ॥ यदितथाभिप्रैष्यत् तर्हिविपर्ययेणेतिसू-
त्रोत्तरमेवैतदपठिष्यत् । व्युच्चरणश्रुतीश्चत्वदुक्तविषयासूत्रांतरेणायोजयिष्यत्तन-
स्त्वाहत्यैवाश्रुतेरित्यवक्षत् प्रत्यक्षश्रुतिसत्वात् । " नजायतेम्रियते " इतिकठ-
श्रुतिस्तु " अन्यत्रधर्मा " दितिप्रश्नोत्तरं " सर्वेवेदायत्पद " मित्युपक्रांतेब्र-
ह्मप्रकरणेस्तीनितस्यैवजननादिनिषेधिकास्पष्टीकृतश्चात्रभगवतासूत्रकृता प्रकरणवि-
भागआनुमानिकाधिकरणे ॥ अथस्मृत्यैकवाक्यतयाजीवपरत्वमप्यस्याअस्त्वि-
तिचेत्तथापिदेहसंबंधिजन्ममरणयोःप्रसक्तिजीवेनिषेधति प्राणत्यागार्थकम्रियतिप्र-
योगात् उत्तरार्धे " नहन्यतेहन्यमानेशरीरे " इतिस्फुटंतथैवोक्तेश्च ॥ ए-
तेनगीतापिव्याख्याता देहिनोऽस्मिन्यथादेहेकौमारंयौवनंजरा । तथादेहांतर

ग्निरित्युपक्रांतानां यएनंवेत्तिहंतारमित्यंतपूर्ववाक्यानां कंघातयतिहंतिकंत-थाशरीराणिविहायजीर्णानि नैनंछिंदंतिशस्त्राणीत्यादिपरवाक्यानांचविचारेऽपिन-जायतेइतिवाक्यस्यदृश्यमानेमुहुर्जन्ममरणेदेहस्यैवनतुजीवस्यैत्येवंबोधकतासिध्यात-त्रापसक्तस्यब्रह्मनस्तदुद्गमादेः प्रतिषेधकतायास्तस्मिन् नशक्यवचनत्वात् ॥ नचै-वमप्यजइतिसमाख्याबलात् उद्गमाद्यभावःशंक्यः स्पष्टतच्छ्रुत्यांशत्वलिंगेनचासिध्य-स्यबाधनेसमाख्यायाअप्रभुत्वात् श्रुतिलिंगाद्यपेक्षयासमाख्यादौर्बल्यस्यपारदौर्बल्य-सूत्रेजैमिनिनासिध्धांतितत्वात् । अतस्तदनुरोधेनमर्त्यवन्मरणाभावाभिप्रायकामरादि-समाख्यावत् व्युच्चरणोत्तरमाप्रलयस्थायिनोजीवस्यदेहसदृशजन्माभावाभिप्रायिका-सा ॥ परमेष्ठिकामदेवयोरिवअकारोवासुदेवःस्यादित्येकाक्षरकोशोद्भगवतोजायते-इत्यर्थवतीवेत्येवमंतव्यं ॥ एतेनटीकायामनुक्तोपि ( अजोजीव ) इत्यजशब्दोपादा-नत्वरसोदत्तोत्तरः ॥ यच्च ( उपाध्युद्गमेनैवजीवोद्गम ) इत्युक्तंतन्नयुक्तिसहं । तथाहि तदुपाध्युद्गमावधित्वेनकिंब्रह्मविवक्ष्यतेआहोस्विदुपाध्यंतरं नाद्यःब्रह्मणोविभुत्वादग्नि-विस्फुलिंगन्यायेनततउद्गम्यपतनार्थस्थलालाभात् स्थलकल्पनेचविभुत्वभंगप्रसंगात् । तिरोभावशक्तेरनंगीकारेणोक्तरीतिकतिरोधानस्यस्थलसाधकस्यत्वयावक्तुमशक्यत्वा-त् । तदतेबाह्यांतराभावेनोद्गमप्रवेशयोरेवनिर्णेतुमशक्यत्वात् । अथप्राणादीनामपित-योरौपचारिकत्वान्न देशाद्यपेक्षेतिचेत्तर्हि प्राणादेरप्युपाध्यंतरंकल्पनीयंयन्निष्ठउद्ग-मस्तत्रोपचर्येततथाचानवस्था ॥ तदभावायक्वचिद्ब्रह्मावधिकसाक्षादुद्गमांगीकारेतूक्तदो-षतादवस्थ्यादुद्दकुटीप्रभातं । अनंगीकारेचोपचारस्याप्यसंभवः अन्यत्रस्थितधर्मस्या-न्यत्रारोपस्यैवोपचारत्वात् ॥ उपाधिवशाद्देशादिकल्पनेतूद्गमसिद्धिरुपाधितंत्रा उ-पाधिसिद्धिश्चोद्गमतंत्रेत्यन्योन्याश्रयः अथानाद्यविद्ययोद्गमनिर्वाहायब्रह्मणिदेशादिकं-कल्प्यतइतिचेन्न तथाबोधकमानाभावात् निर्विशेषेब्रह्मणितत्संबंधरूपविशेषस्याश-क्यवचनत्वेनत्वदुक्तासिध्देश्च तत्रतत्संबंधस्य जीवकल्पितत्वेतुचक्रकापत्तिः जीवो-द्गमस्यप्राणाद्युद्गमापेक्षत्वात् तदुद्गमस्यचदेशाद्यपेक्षत्वात् तस्यचाविद्याब्रह्मसंबंधापेक्ष-त्वात् ॥ किंचानादिःसासत्यामिथ्यावा । नाद्यः । द्वैतापत्तेः “ सदेवसोम्येदमग्र-आसीत् ॥ आत्मावाइदमेकएवाग्रआसी ” दित्यादिश्रुतिशतव्याकोपाच्च ॥ नेत-रः । मिथ्यारजतादिन्यायेनततःप्रदेशादिरूपकार्यासिद्धेः । किंचतथासति रज्ज्वहि-त्वमादिवद्द्रष्टृधीनस्थितिकत्वंवक्तव्यं ।सचद्रष्टानजीवः जीवभावस्यतत्साध्यत्वेनान्यो-न्याश्रयात् ॥ नापिविशुध्धचित् निर्विशेषत्वभंगप्रसंगात् ॥ नापीश्वरः । अन्योन्या-श्रयात् । भ्रांतत्वापत्त्या “ यःसर्वज्ञःसर्वविदि ” त्यादिश्रुतिबाधाच्च ॥ नापितस्याःस-दसद्विलक्षणत्वंकल्प्यं तथाग्राहकस्पष्टश्रुत्याद्यभावात् । नसत्तन्नासदुच्यते इतिलक्ष-णप्रवेशेन ब्रह्मातिरेकासिध्देश्च॥ अपिचवैलक्षण्यग्राहकगायसद्वस्तुकिंचिन्मंतव्यं । तच्च

ब्रह्मान्यद्वा । आद्येतस्यसविशेषत्वं श्रौतसत्यादिपदवाच्यत्वंचापद्येत । द्वितीयस्मिन्द्वैत मपंसित्थांतश्च । अतःसद्वैलक्षण्यंदुर्वचं एवंप्रतियोग्यऽसित्थ्यासत्प्रतियोगिकभेदवत्वम सत्वमपिनसित्थ्यतीति तद्वैलक्षण्यमपितथा ॥ एवंकारंतदभिमतमविद्यास्वरूपंपुरैवनिरा कृतंनिराकरिष्यतेच॥ किंच प्राणादीनां मिथ्यात्वादप्युद्गमोदुरुपपादः॥ख्यातिस्थलेशु- क्त्यादितोरजताद्युद्गमस्यानंगीकारात् । तथासत्यभ्रांतस्यापितदानींरजतादिचाक्षुषप्र- संगात् । अथरजतादिवत्प्रतीतिरेवप्रकृतिश्रुतौव्युच्चरणत्वेनोपचर्यतइतिचेन्न । उपा- ध्युद्गमस्यजीवेउपचारइतिबोधकस्वोक्तिविरोधात् । अग्निविस्फुलिंगादिश्रौतदृष्टांतबा- धात् उक्तरीत्याशक्यार्थस्यनिर्बाधत्वेनउपचारक्लेशादरानौचित्याच्च नद्वितीयःउद्गमा- वधिभूतोपाधेरुद्गतत्वेऽनवस्थादीनां अनुद्गतत्वेद्वैतप्रसंगादीनांचदोषाणांदुरुत्धरत्वात् । मिथ्यात्वेत्ववधित्वस्यापिदुःकथत्वाच्च । किंचतथांगीकारे ब्रह्मणोव्युच्चरणावधित्व- बोधिकाः " तस्मादात्मनः । तथाक्षराद्विविधाः सौम्यभावा " इत्यादिश्रुत- यः पीड्येरन् । अविद्यावधित्वबोधकश्रुत्यनुपलंभेनतासामकस्मादन्यथानयनप्र- ध्यरोचिष्णु श्रुतहान्यश्रुतकल्पनापत्तिश्च । अपिचतस्याःसावयत्वात् प्राणादिप्रवेशो द्गमयोरुपचयापचयौसच्छिद्रत्वापत्तिरवयवांतराणांतत्रसमर्पणंशैथिल्यापत्तिश्चेतित्वदु- क्तदोषास्त्वन्मतएवप्रसज्येरन् शक्तावपित्वमनसाविचित्रानंतशक्तिकत्वांगीकारात्तु " परास्यशक्ति " रित्यादिश्रुतिसिद्धोब्रह्मण्येवतदंगीकारोज्यायान् ॥ इतरच्च अ- विद्यायाउद्गमावधित्वमुच्यतउतपतनदेशत्वं उभयत्रान्यतरत्वंब्रह्मणएववाच्यमितिस- विशेषत्वप्रसक्तिः । अविद्यायामेवोभयत्वकल्पनंतुदृष्टांतविरुद्धं । तस्यांविचित्रश- क्तिकत्वानुमानेनतत्कल्पनेतुब्रह्मण्येवोभयरूपत्वंकल्प्यतांतस्यावधित्वविभुत्वाविर्भाव तिरोभावाद्यनेकविचित्रशक्तिकत्वादीनांश्रुतत्वात् श्रुतानुमितयोःश्रुतस्यबलीयस्त्वा- त् ॥ तस्मात्त्वन्मतेप्राणाद्युपाध्युद्गमोशक्यवचनइतिनतेनजीवेउद्गमोपचारसिद्धिः । एतावता तस्माद्रुपाध्युद्गमनेत्यादिकंस्मृतिश्चसंगतेत्यंतं निराकृतं ॥ अतःस्पष्टानेक- श्रुतिसिद्धत्वात् प्रायपाठाच्चप्राणादिवज्जीवानामपि ब्रह्मतोव्युच्चरणंवैदिकैरास्थेयं इ- यान्परंविशेषः ॥ जडेसदंशःप्रकटश्चिदानंदौतिरोहितौ प्रकटेसच्चितावेव जीवेंतस्थे- प्ययंस्फुटं ॥ तथाहि नृसिंहतापनीये उत्तरभागेनवमखंडे " तस्मादात्मनएवत्रैवि- ध्यंसर्वत्रयोनित्वमपि " इत्येकस्यैवब्रह्मणःकार्यभेदेनत्रैविध्यंसर्वत्रोपादानत्वंचो- क्ता " सर्वंसर्वमयंसर्वेजीवाःसर्वमयाःसर्वावस्थासुतथाप्यल्पा " इतिवस्तुतस्तुसर्व- स्यापिब्रह्मरूपत्वाज्जडप्रपंचस्यजीवानांच सर्वमयत्वंतथात्वेऽपिजीवानांस्वरूपतोऽ- णुत्वंचोक्तासर्वत्रसर्वमयत्वप्रत्यये कार्यवैचित्र्यानुभवोनस्यादितितद्वैचित्र्यनिर्वाहकं- तत्रतत्रतत्तदंशतिरोभावंदर्शयितुमुच्यते " सत्तामात्रंहीदंसर्वंसदेवपुरस्तात्सिद्धंहिब्र- ह्म " इति ॥ अत्रमात्रपदंचिदानंदव्यावर्तकंतेनजडप्रपंचस्यसर्वस्येदानींसदंशमा- त्ररूपतापूर्वंब्रह्माभेदेनैवसत्ताचदर्शिताअग्रेपि " पश्यतेहापिसन्मात्र " इत्यादिना-

तथैवनिर्णीतंतत्र " पश्यतेहापिसन्मात्रंसदन्यत्सत्यंहीत्थंपुरस्तादयोनिःस्वात्मस्थमानंदचिद्घनंसिद्धंह्यसिद्धंतद्विष्णुरीशानोब्रह्मान्यदपिसर्वंसर्वगंसर्वम् ॥ " इत्यादिना इहशारीरेपिपूर्वोक्तंसन्मात्रंसदंशमात्राविर्भाववज्जगत् " सर्वभूतानिचात्मनी " तिस्मृत्याद्यनुसारेणपश्यतसदन्यत्सदंशमात्रप्राकट्यादेवसतोब्रह्मणोन्यदिदंसृष्टिदशायांपश्यत वस्तुतस्तुसर्वंसत्यंहिनिश्चयेनइत्थंपूर्वोक्तप्रकारेण ॥ असदन्यदितिपाठंस्त्वन्तरासर्गपरोदीपिकायांव्याख्यातः ॥ पुरस्तात्सृष्टेःप्राक्अयोनिःघटादिस्वस्वकार्यानुत्पादकंस्वात्मस्थंस्वमूलरूपेब्रह्मण्येवस्थितमितितदानींचिदानंदातिरोभावान्नसत्तामात्रंकिंत्वानंदचिदेकरसंसिद्धंनतुसाध्यंहियुक्तंततएवासिद्धंसर्वप्रमाणाविषयः । असित्यर्थपदार्थस्तावकभाष्येप्ययमेव । तदेवविष्णुःशिवोब्रह्माअन्यदपिप्रापंचिकंसर्वंतदेवपूर्वप्रस्तुतंब्रह्मैव । अतोविविधाकारत्वेपिअहिकुंडलन्यायेनसन्मात्रावगतिर्नविरुध्यतेअतएवसर्वगंसर्वं ॥ एतेन " योमांपश्यतिसर्वत्रसर्वंचमयिपश्यती " त्यादिवाक्यानुसारेणब्रह्मदृष्टौसिद्धायामिदानीमपिसर्वत्रसच्चिदानंदानुभवोबोधितः । एवमादिदर्शितंततोज्ञेयं ॥ अग्रेचप्रपंचस्यनिरात्मकत्वंनिराकृत्य " नहीदंसर्वंकदाचित् " इत्यादिनानित्यत्वंनिर्णीय अंतरासर्गस्यैवाविद्यकत्वंबोधितं ॥ अग्रेच " यूयमेवस्वप्रकाशाःइदंहिसत्संविन्मयत्वात् " इत्यादिनासच्चिदंशमात्रप्रचुरत्वंजीवानांदर्शयित्वाग्रे " ततोयूयमेवस्वप्रकाशाइतिहोवाचनचसत्संविन्मयाःएतौहिपुरस्तात्सुविभातमव्यवहार्यमेवाद्वयं " इत्यादिनाब्रह्मात्मताभानेतुजीवानसच्चिन्मात्रप्रचुराःहियतएतौद्वावेवांशौपुरस्तात्जीवदशायामेवसत्यांभवतोब्रह्मभावेतुसच्चिदानंदरूपाएवतइत्यासमाप्तिसिद्धांतितं ॥ अतएवमध्ये " तद्वाएतद्ब्रह्माद्वयं " इत्युपक्रम्य " सदानंदचिन्मात्रमात्मैव " इत्याद्युक्तं ॥ एतच्चदीपिकाव्याख्यासंभवेविस्तरात्तत्रैववक्ष्यामः ॥ एवंचसृष्टिदशायांव्यवहारसिद्ध्यर्थंजडेसदंशस्यैवप्राकट्यंजीवेचसच्चितोरेवतत्ब्रह्मभावेतुसर्वमेवसच्चिदानंदपूर्णमितिश्रुतितस्सिद्धं ॥ प्रतीतिबलादपितथैवसिध्यति ॥ तथाचेमेप्रयोगाःविमतोघटःसदंशात्मकःअस्तीत्यबाधितप्रत्ययगोचरत्वाद्यदेवंतदेवं पटवज्जीववद्वा यन्नैवं तन्नैवं यथातुच्छं अबाधितत्वंचेहभ्रमत्वप्रकारकप्रमात्मकानुव्यवसायविषयतानर्हत्वं तुच्छेऽस्तीतिप्रत्ययस्याधिष्ठानपरामर्शादिनाबाधदर्शनान्नव्यभिचारः घटादौतिरोभावोत्तरंनास्तीति प्रत्ययेऽपिनासीदितिप्रत्ययानुदयान्नपूर्वज्ञानस्यभ्रमत्वेनग्रहः तुच्छविषयकास्तित्वप्रत्ययस्य अप्रमात्वंप्रातिभासिकव्यावहारिकसत्ताभेदमूरीकुर्वतात्वयापि स्वीकार्यं ॥ विमतस्तिरोहितचिदंशकः जानातीच्छतीत्याद्यबाधितप्रत्ययागोचरत्वात् ॥ हिताहितप्रवृत्त्यनुकूलचेष्टाप्रयत्नरहितत्वात् । यन्नैवंतन्नैवंजीववत् । विमतस्तिरोहितानंदकःप्रीयतइतिप्रमित्यविषयत्वात् ब्रह्मात्रव्यतिरेकदृष्टान्तः ॥ तथाविमतोजीवःसच्चिद्रूपःअस्तिजानातीत्याद्यबाधितप्रतीतिविषयत्वात् योयत्प्रकारकाबाधितप्रतीतिविषयःसतत्प्रकारकःपृथ्वीत्वप्रकारकप्रमितिगोचरपृथ्वीरूपघटादिवत् ॥ विमते-

स्तिरोहितपरमानंदकःसर्वदाप्रीयतइति प्रमित्यविषयत्वात् व्यतिरेकेब्रह्मवत् ॥ जडा-
पेक्षयाकश्चिदानंदस्यांशांशोजीवेस्थापितोस्तिअन्यथा आनंदवस्तुनएवबोधानुदयात्
अबोधेचलिप्सानुद्भवेनमोक्षतच्छास्त्राद्युच्छेदः ॥ किंचसर्वथानंदाभावेजीवनानुपप-
त्तिः " कोह्येवान्यात्कःप्राण्यात् यदेषआकाशआनंदोनस्या " दितिश्रुतेःलौकि-
कानंदश्चनपरमानंदःदुःखसामानाधिकरण्यात्सगुणत्वात् सातिशयत्वात् असार्वदि-
कत्वात् सर्वत्रब्रह्मानंदोव्यतिरेकदृष्टांतः तत्रसामानाधिकरण्यंपुत्रान्मेसुखंपशोर्मेदुः-
खमित्याद्यनभवसिद्धं सगुणत्वंचसुखंत्विदानींत्रिविधंमित्यादिगीतायांस्फुटं सांत-
शयत्त्वासार्वदिकत्वेचवेदेप्यानंदमीमांसादौ ( छांदोग्यअ० ९ ) " सोहंभगवः
शोचामी " त्यादौचप्रसिद्धे अंशांशस्त्वयंब्रह्मानंदस्यैव काण्वानां बृहदारण्यके-
षष्ठाध्यायेतृतीयब्राह्मणे ( पृ० ८१६ ) " एषोस्यपरमआनंदएतस्यैवानंदस्यान्या-
निभूतानिमात्रामुपजीवंति " इतिश्रावणात् । एतद्ग्रेचानुपदंमनुष्यानंदादीन्निरू-
प्य " अथयेशतंप्रजापतिलोकआनंदाःसएकोब्रह्मलोकआनंदो यश्चश्रोत्रीयोऽवृ-
जिनोकामहतोऽथैषएवपरमआनंदः " इतिब्रह्मानंदस्यैवपरमानंदत्वमाम्नातं तस्य-
तदंशत्वंचतावकाअपिमन्यंते यथाहपंचदश्यांविषयानंदाख्यपंचदशप्रकरणारंभे वि-
द्यारण्यस्वामी ( श्लो० १।२ ) अथात्रविषयानंदोब्रह्मानंदांशरूपभाक् ॥
निरूप्यतेद्वारभूतस्तदंशत्वंश्रुतिर्जगौ ॥ एषोस्यपरमानंदोयोखंडैकरसात्मकःअन्या
निभूतान्येतस्यमात्रामेवोपभुंजते इति ॥ शंकराचार्याअपि " अविदितपरमानं-
दोवेत्तिनरोविषयमेवरमणीय " मित्याहुः विद्यमानस्यावेदनंचतिरोभावएव ।
एवंतिरोहितानंदत्वादेव परमाचार्येण परमात्मनआनंदमयत्वंनीर्णीय ( अ० १
पा० १ सू० १५।१६ ) " नेतरोनुपपत्तेः । भेदव्यपदेशाच्चे " तिसूत्र-
द्वयेनजीवस्यतत्त्वंप्रतिषिद्धं तथा " रस ॅ ह्येवायंलब्ध्वानंदीभवति । समोदतेमो-
दनीय ॅ हिलब्ध्वे " त्यादयः साधनोत्तरमानंदाविर्भावबोधिकाःश्रुतयोप्येवमेवसं-
गच्छेरन् साधनप्रतिपादिकाश्वता एवंसत्येवसफलप्रयत्नोपदेशिकाभवेयुः तथा-
( अ० ३ पा० २ सू० ५ ) " पराभिध्यानात्तुतिरोहितंततोह्यस्यबंधविपर्य-
या " वितिसूत्रेपराभिध्यानात् भगवदिच्छातोजीवेआनंदांशस्यैश्वर्यादेश्चतिरोभा-
वएवबंधविपर्ययहेतुत्वेनोच्यतेयदिसनस्यात्तदाबंधादिरपिनस्यात् ॥ तथादहराधिकरणे-
( अ० १ पा० ३ सू० १९ ) " उत्तराच्चेदाविर्भूतस्वरूपस्तु " इतिसूत्रे-
अमृतादिशब्दाभिधेयस्यब्रह्मस्वरूपभूतानंदादेराविर्भावे जीवस्यसाक्षाद्ब्रह्मभावोबो-
ध्यते तिरोभावाभावेत्वाविर्भावस्याप्यशक्यवचनतयासूत्रबाधः दहरविद्याया जीव-
समन्वितत्वप्रसक्तिश्च ॥ तथाउपकोसलविद्यायां " यएषोऽक्षिणिपुरुषोदृश्यते-
" इतिश्रूयमाणस्यपुरुषस्यानंदवैशिष्ट्यमेव जीवजडत्वव्यावृत्तिपूर्वकब्रह्मतागमकं-
( अ० १ पा० २ सू० १५ ) " सुखविशिष्टाभिधानादेवचे " तिसूत्रेभि-
धीयते एवकारश्चास्यमुख्योपपत्तित्वबोधकः यदिजीवजडयोरप्याविर्हितएवानंदः-

स्यात्तर्हिसौत्रोहेतुर्नयुज्येतव्यभिचारात् ॥ नन्वेवंतत्तिरोभावेसत्यस्तिभातिप्रिय-
त्वप्रतीतिः कथमितिचेदस्यसच्चिदानंदरूपब्रह्मसमवायिकत्वादेवेतिजानीहि स्पष्टंचे-
दं ( अ०१पा०१सू०३ ) " तत्तुसमन्वया " दित्याद्यधिकरणेषुभाष्येतत्रजडेतिरोहिता-
वपिचिदानंदौभानप्रियत्वेजनयतः दारुणितिरोहितोपिवह्निः तत्प्रविष्टंक्रकचादेस्ता-
पमिव स्वरूपेणानुभवायोग्यत्वात्तिरोहितत्वं अथचजडेलेशतश्चिदानंदयोर्जीवेआनंद-
मात्रायाश्चाविर्भावेप्यपरिछिन्नयोस्तयोरनुपलब्ध्यातिरोभावोवाच्यएव अतिरोभावेतु
जीवेनसर्वदानिरवध्यानंदोनुभूयेतदुःखंचनानुभूयेत संसृतिश्चनस्याद्भयंचनभवेत्
"आनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चने " तिब्रह्मानंदानुभावितुर्भयाभावश्रावणात् । इ-
दानींतनप्रतीतिविषयप्रीतेरेवत्वदुच्यमानरीत्यापरमानंदत्वस्वीकारेतुअलंत्वदाचार्यादि-
नामपिसाधनोपदेशप्रयासैः कृतंचसंन्यासादिना अतःप्रीत्यनुभवानुरोधादानंदमात्रा-
यास्सत्त्वमिवदुःखाद्यनुभवानुरोधादपरिछिन्नतत्तिरोभावोप्यंगीकर्तव्यः । नचतर्हि-
जीवेपरमानंदाभावएवास्तुकिंतिरोभावेनेतिवाच्यं ब्रह्मस्वरूपभूतस्यतस्यध्वंसानुपपत्तेः
( अ० २ पा० ३ सू० ३१ ) " पुंस्त्वादिवत्वस्यसतोभिव्यक्तियोगा " दितिसू-
त्रविरोधाच्च । अत्रहिसतःपूर्वंविद्यमानस्यैवाभिव्यक्तिःसाधनैरनुभवयोग्यताभवती-
त्युच्यतेऽतोयच्चानुभवयोग्यत्वमित्युक्तलक्षणकावेवाविर्भावतिरोभावौप्रकृतेनिर्विचिकि-
त्सौ ॥ तथाजडेजीववज्ज्ञानेछाद्यदर्शनात् तत्रचित्तिरोभावस्त्वयाप्यूरीकार्यः अ-
न्यथातद्विभागासिद्धेः नचेष्टापत्तिः सत्यंज्ञानमनंतंब्रह्मेत्यादौतत्तद्वैलक्षण्यबोधकस-
त्यादिपदवैय्यर्थ्यप्रसंगादितिदिक् एतावता ( त्रकस्यापरेज्ञानस्यापितिरस्कृतिर्यदितदा-
प्रीतिश्च भानंकथ ) मितिसव्याख्यंनिरस्तं यत्तु ( चिदानंदौसतोभिन्नावभिन्नौवे )
त्यादितत्रेदंमत्यनुपुरुषः अस्तिभातिप्रियाणांतुब्रह्मरूपत्वंस्वीकुर्वाणस्यतवमते अ-
स्तित्वात्भानप्रियत्वेभिन्नेनवा आद्येतयोरसत्वापत्त्याऽब्रह्मत्वापत्तिः तथाचास्तिभाति-
प्रियंरूपंनामचेत्यर्थपंचकं आद्यंत्रयंब्रह्मरूपमितिसिध्धांतबाधः नित्यद्वैतापत्त्यास्वमत-
भंगश्च ॥ स्वाभाविकनित्यविभागविशेषवत्तयानिर्विशेषतालोपश्च अस्तित्वस्यजडदुः-
खरूपतापत्त्याब्रह्मणोपितत्वापत्तिरभानाप्रियत्वेचस्यातां ॥ द्वितीयेतुत्रित्वसंख्याविरो-
धः तत्रतत्रशब्दत्रयोपादानवैयर्थ्यंच ॥ अथालौकिकेर्थेशुष्कतर्कानादरादिन्यायेनस्वम-
तंसमर्थयेस्तेनैवसमाधिनामन्मतमपिसाध्वेवगच्छ ॥ वस्तुतस्तुसदाद्यशांनामन्योन्यातिर-
क्तत्वेपिदीपचक्षूरूपेषुतेजस्त्वमिवब्रह्मत्वमविशिष्टं ( अ० ३ पा० २ सू० २८ ) " प्रका-
शाश्रयवद्वातेजस्त्वा " दितिन्यायात् । अतोनकोपिशंकावकाशः ॥ " यजेतददातिजु-
होती " त्यादाविवभेदंविनाशब्दत्रयवैयर्थ्यानपायात् । शब्दांतरस्यचभेदकत्वंस्पष्टीकृतं
जैमिनिनाद्वितीयस्यद्वितीयेपादे ( सू० १ ) " शब्दांतरेकर्मभेदःकृतानुबंधित्वा " दित्य-
धिकरणे ॥ यथासैंधवघनेतदीयरसघनत्वक्षारिमश्वैतिमादयःपरस्परविलक्षणाअपिबा-
ह्याभ्यंतरेकृत्स्नेसर्वत्रैवावतिष्ठंते धर्मधर्मिणोरभेदाच्चतेलवणाभिन्नाएव । एवंसन्मात्रे-

भज्ञानघनआनंदघनेब्रह्मणिसदादयःपरस्परविलक्षणाअपिसर्वेत्रैवसंति । प्रकाशाश्रयाद्यधिकरणोक्तरीत्याचतेसर्वेब्रह्मैव । ब्रह्मत्वादेवचनकस्याप्यंशस्यासत्वजडत्वादिप्रसक्तिः नचतेषांपरस्परभेदांगीकारादर्पासत्धांतःशंक्यः । तादृशभेदस्यापि " यदेकमव्यक्तमनंतरूपं ॥ एकोनैकःसवःकःकिं " इत्यादिश्रुतिस्मृत्यनुरोधेनब्रह्मधर्मतयाब्रह्मत्वमवश्यंस्वीकार्यमितितावताशुद्धाद्वैतस्याबाधात् । तत्तदंशवैलक्षण्यस्याभिव्यक्तिस्तु जतुघृतगतद्रवत्वस्यतेजःसंयोगेनेवतदिच्छाविशेषरूपनिमित्तेनैवेतिविस्तरात्पुरानिरणायि ॥ तेनसृष्टीछायांतत्तत्कार्याविर्भावायतत्तदंशान्पृथक्करोतीतिद्वितीयस्कंधसुबोधिन्यांस्फुटं ॥ अतस्तत्रतत्रतत्तत्तिरोभावातिरोभाववैलक्षण्यंनिरवद्यं ॥ वन्हौसर्वत्रैवावस्थितास्त्वपिदाहप्रकाशादिशक्तिषुदाहकत्वमात्रस्यमणिसमवधानेन तिरोधानेपियथातदितरधर्माणांनतिरोभावः । यथावा गंधोभूतसूक्ष्मरूपइतिपौराणमतेनगुणसमुदायोद्रव्यमितिमहाभाष्यादिमतेनच पृथिव्यभिन्नस्यापिगंधस्यपाषाणादिरूपायांपृथिव्यांतिरोभावेऽपिनतत्रपार्थिवगुणांतरस्यतिरस्कारस्तथात्रेतिदिक् । यत्तु ( जीवजडयोर्ब्रह्मणात्यंताभेदेने ) त्यादि तन्न सदेवसोम्येत्यादिश्रुतिभिः पूर्वमत्यंताभेदेपिसर्वशक्तिरीश्वरोव्युच्चारणेनजडादीन्स्वतःपृथक्कृत्य तत्रतत्रतंतमशंतिरोभावयतीतिनेश्वरेतत्संबंधः । महाग्निचयात्कांश्चिदग्न्यंशानपृथक्कृत्यमणिसन्निधापनेनतेषुदाहशक्तौतिरोभावितायामपीतिनमहाग्निनिष्ठासातिरोधत्ते ॥ अंशमात्रधर्माणामंशिन्यसंबंधश्चसूत्रकृता ( अ०२ पा०३ सू०४६ ) " प्रकाशादिवन्नैवंपर " इत्यादिनासमर्थितः अतएवचक्षुरिंद्रियाणांसूर्यांशत्वेबहुश्रुतिस्मृत्यादिमानसिद्धेऽपितेषुकुत्रचिच्छापरोगादिनादर्शनयोग्यतातिरोधानेपिनभानौसातिरोधत्ते ॥ अयमेवार्थःकठवल्ल्यादिषु " सूर्योयथासर्वलोकस्यचक्षुः " इत्यादिनातद्दृष्टांतपुरःसरंजीवगतनिरानंदत्वादेरंशिन्यसंबंधआम्नायते ॥ स्मृतिषुच । तत्रयःपरमात्माहिसनित्योनिर्गुणःस्मृतः । नलिप्यतेफलैश्चापिपद्मपत्रमिवांभसा । कर्मात्मात्वपरोयोसौमोक्षबंधैःसयुज्यते । ससप्तदशकेनापिराशिनायुज्यतेपुनः । एवमादिषुअपरभावोत्तरमंशासाधारणधर्माणामंशिन्यप्रसक्तिःस्मर्यते । एवमर्थपराःश्रुतिस्मृतयश्च सूत्रकृता ( अ०२ पा०३ सू० ४७ ) " स्मरंतिचे " तिसूत्रेविषयीकृताः ॥ तस्मादंशांशिभावमनादृत्य विभुंजीवंमन्यमानस्यतवमते तस्यब्रह्मणात्यंताभेदात्तन्निष्ठाधिसंबंधेपरस्मिन्नुपाधेरौपाधिकधर्माणांचसंबंधोदुर्निवारःस्यान्नतुव्युच्चरणमंशत्वंचमन्यमानस्यममते तत्प्रसंगइत्यलं ॥ जीवस्यानंदतिरोभावादेवभेदइतितुनवदामः । व्युच्चरणोत्तरमेव तत्रतत्रतत्तदंशतिरोभावांगीकारात् । स्पष्टंचेदमस्माकं निबंधादिषु ( प्र० १ श्लो० ३१-३२ ) तदिच्छामात्रतस्तस्माद्ब्रह्मभूतांशचेतनाः ॥ सृष्ट्यादौनिर्गताःसर्वेनिराकारास्तदिच्छया विस्फुलिंगाइवाग्नेस्तुसदंशेनजडाअपीत्यादिस्थले ॥ जडादौन्युनाधिकांशतिरोधानेव्युच्चरणसाम्यमात्रंतुनप्रतिबंधकं युगपद्व्युच्चरितवत्स्वपिविस्फुलिंगषुकेषांचिज्ज्वलादि

योगात्तत्क्षणमेव निर्वाणतायाः केषांचित्क्षणमवस्थानस्य केषांचि तृणकार्पासा-
दियोगेनाधिक्यस्यच दर्शनेनकार्याग्निमव्यवस्थायांव्युच्चरणसाम्यस्याप्रयोजकत्वा-
ध्यवसायात् ॥ तिरोभावेहेतुस्त्वीश्वरेच्छैव । " हंततिरोसानि । पराभिध्या-
नात्तुतिरोहित " मित्यादिश्रुतिसूत्रैस्तथैवसिद्धेः ॥ यच्चश्रुतिसूत्राण्युल्लंघयतात्व-
यातांप्रतिवक्ष्यते तन्मया निराकरिष्यते. ॥ उक्तरीत्यालौकिकालौकिकमानसिद्ध-
तिरोभावस्यहेत्वंतरेणानिष्पादात् तद्धेतुःसैववाच्या ॥ नचपराभिध्यानसूत्रीयस्व-
भाष्यानुरोधेनाविद्यायास्तिरोधायकत्वंमंतव्यं । वास्तवयोर्ब्रह्मात्मकज्ञानानंदयो
मिथ्याभूतयातयातिरोधानायोगात् तथात्वेपरस्यानीश्वरत्वपराभाव्यत्वादिप्रसंगा
च्च ॥ किंच यानिष्कारणंस्वसामर्थ्येन नित्यज्ञानादिकंतिरोभाव्यब्रह्मणोजीवत्व-
मापादयेत्सातज्ज्ञानमात्रेणैवकथंनश्येत् । निखिलमृगोपमर्दीमृगेंद्रोनह्निमृगज्ञानमात्रे-
णाभिभवितुंशक्यः । तथाचसति अनिर्मोक्षप्रसंगः " तमेवविदित्वातिमृत्युमेति । त-
मेवंविद्वानमृतइहभवती " त्यादिश्रुतिविरोधश्च ॥ किंचोपाधित्यागेचैतन्यात्यंता-
भेदस्यत्वदभिमतत्वात्त्वदुक्तदोषास्त्वन्मतएवप्रसरंति ॥ तत्रापिजीवविभुत्वनिर्वाहा-
यकृत्स्नस्यब्रह्मणोविद्ययाज्ञानादितिरोभावितमितिवक्तव्यंतथाचसतिशुद्धब्रह्माभावप्रस-
क्तिः । ब्रह्मैकदेशेतयातस्यतिरोधानांगीकारेतुब्रह्मणःसांशत्वापत्तिर्जीवमध्यमपरि-
माणवादापत्तिश्च ॥ ( यस्तर्केस्तुत्वयाश्रौतैर्थैनाश्रीयत ) इति तदज्ञानात् ( अ०
१२ श्लोक १०५ १०६ ) प्रत्यक्षंचानुमानंचशास्त्रंचविविधागमं ॥ त्रयंसुविदि-
तंकार्यंधर्मशुद्धिमभीप्सता ॥ आर्षधर्मोपदेशंचवेदशास्त्राविरोधिनायस्तर्केणानुसंधत्ते-
सधर्मंवेदनेतरइत्यादिवचनानुसारेणश्रौतैर्थैश्रुत्यनुकूलतर्कस्यास्माभिराद्रीयमाणत्वात् ॥
श्रुतौअंशांशिभावानादरोक्तिस्तुदान्हतचरमैत्र्युपनिषदाद्यदर्शनात् ॥ किंचविस्फु-
लिंगश्रुतावप्यग्निविस्फुलिंगदृष्टांतेनदार्ष्टांतिकेंशांशिभावःसमर्प्यते । अतएवांशोनाने-
त्यादिसूत्रव्याख्यानेत्वद्भाष्येपिसएवश्रौतदृष्टांतउपन्यस्यते । यद्येतद्दृष्टांतेनअंशांशि-
भावोनसिध्येत्तर्हितादृशस्थलेभाष्येतदुपन्यासोसंगतःस्यात् ॥ अथ ( ब्रह्ममात्रतएव-
व्युच्चरण ) मितीतरव्यवच्छेदकंमात्रपदंतुप्रियंनः । षडनादित्वसिद्धांतस्यसदेवेत्यादिश्रु-
तिशतबाधितत्वेनकेवलब्रह्मणः सकाशादेवव्युच्चरणस्वीकारात् ॥ यैस्तुब्रह्मणोऽनि
र्विशेषतयाकर्तृत्वादिविशेषसमर्पकोपाधिसंबंधेन तस्यव्युच्चरणावधित्वमुच्येत ते-
षामियंयुक्तिःस्वपादेकुठारप्रहारः ॥ तिरोभावेऽप्यस्तित्वादिप्रत्ययस्तुसमार्थितः तत्र-
ब्रह्मधर्माणां तिरोभावोनामलौकिकानुभवायोग्यत्वमेव नतुतत्तत्कार्यावच्छेदेनसस-
ब्रह्मधर्मोनश्यतितततोपसर्पतिवा । अतोब्रह्मणःसर्वत्र सर्वदैकविधत्वान्नैकरसत्वव्या-
घातः ॥ त्वदभिमतवस्तुस्थितिश्चदूषितैव ॥ एतेनकिंचजीवजडयोरित्यादि स्थि-
तिस्तूक्त्यंतं-परिस्तृतंवेदितव्यं ॥ एतावतायंनिष्कर्षस्सिद्धः ॥ सच्चिन्मात्रश्चित्प्र-
धानोब्रह्मस्वांशोत्वदिस्थितः । विसर्पिचैतन्यगुणोणुर्जीवःश्रुतितःस्मृतेः ॥ ॥ इति
सप्तमश्लोकखंडनं

यत्तु ( जीवस्यपरसंमतमंशत्वंनिराकृत्यस्वसंमतंपंथानं-निष्कंटकंचिकीर्षु " यथाह्ययंज्योतिरात्माविवस्वानपोभिन्ना-बहुधैकोऽनुगच्छन्नुपाधिनाक्रियतेभेदरूपोदेवः क्षेत्रेष्वेवमजो-यमात्मा ॥ रूपंरूपंप्रतिरूपोबभूवएकधाबहुधाचैवदृश्यतेजल-चंद्रवत् „ दित्यादिश्रुतिसंमतं " आभासएवच अतएवचो-पमासूर्यकादिवत् " दित्यादिसूत्रसंमतंचजीवस्यब्रह्मप्रतिबिंब-त्वमाह ) त्यादिनास्वमतव्यवस्थापनंकृतंतदपिनकिंचित् माया-याभवद्भिस्तमस्तुल्यत्वांगीकारेणतमसिप्रतिबिंबादर्शनेनमायायां प्रतिबिंबांगीकारेमायाचेयंतमोरूपातापनीयेतदीरणादितिकथनं विरुद्ध्येतनचमायायास्तमोरूपत्वमावरकत्वरूपसाधर्म्येणतच्चमा-यायामस्त्येवंस्वच्छत्वस्याधिकस्यस्वीकारेपिनतावतासादृश्यहा-निरन्यथामुखेपिचंद्रतुल्यत्वंनस्यात् तत्रापिपार्थिवत्वस्यचंद्रावृ-त्तिधर्मस्यसत्वादितिवाच्यं मायायाःस्वच्छत्वेब्रह्मावरकत्वानुपप-त्तेः नहिदर्पणादिस्वच्छद्रव्यंकस्याप्यावरकंभवति नचरजतादि-पात्रस्यावरकस्यापिप्रतिबिंबग्राहित्वंदृष्टमितिवाच्यं रजतादिकं-यस्यावरकंतस्यैवप्रतिबिंबंगृह्णातीत्यत्रमानाभावादन्यथातन्म-ध्यस्थितस्यापिप्रत्यक्षत्वापत्तिःकिंचप्रतिबिंबग्राहकत्वंसावयवपदा र्थएवदृष्टंतथाचमायायांसावयवत्वाभावेनतत्रप्रतिबिंबग्राहकत्वं नसंभवतिप्रतिबिंबग्राहकत्वस्यसावयवत्वव्याप्यत्वेनव्यापकाभा वस्यव्याप्याभावव्याप्यत्वात्तेनतस्यानुमितिसंभवात् एवंरू-पाभावेनापिप्रतिबिंबाभावानुमानंबोध्यं एवंरूपिद्रव्यस्यसाव-यवस्यपरिच्छिन्नस्यैवप्रतिबिंबदर्शनेनात्मनोनीरूपस्यनिरवयव-स्यापरिच्छिन्नस्यप्रतिबिंबंनसंभवतीत्यपिबोध्यं यत्तुमायायाः

सत्वरजस्तमोरूपगुणत्रयात्मकतयासत्वात्संजायेतज्ञानमितिभग-
वद्वाक्यात्सत्वस्यस्वच्छत्वेनमायायाःस्वच्छत्वमित्युक्तंतत्तुच्छंता
दृशवाक्यात्सत्वस्यज्ञानजनकतयाऽप्रकाशस्यप्रकाशेऽपादानत्वा-
संभवेनप्रका शत्वस्वीकारेपिज्ञानादिप्रकाशस्यप्रतिबिंबग्राहक
त्वादर्शनेनप्रतिबिंबाधारत्वोपयोगिस्वच्छतायाःकल्पयितुमशक्य-
त्वात्सजलकज्जललिप्तपात्रेदीपप्रतिबिंबंजलएवेतिनतस्यदृष्टां-
तत्वसंभवःआकाशेप्रतिबिंबाभावेनतत्प्रतिबिंबरूपफलेनस्व-
च्छत्वानुमानेस्वरूपासिद्धिःस्यात् नचशब्दप्रतिबिंबंप्रतिध्वनि-
रूपंआकाशेदृश्यतएवेतिकथंस्वरूपासिद्धिरितिवाच्यंभवन्मते-
प्रतिध्वनेराकाशगुणत्वेनांगीकृतस्यशब्दप्रतिबिंबरूपत्वस्वीका-
रेऽपसिद्धांतापत्तेःप्रतिध्वनिर्बिंबच्छब्दोवायौवीसीतिशब्दनमि-
तिविद्यारण्योक्तिविरोधश्च ॥ नचैवमपिमायायास्त्रिगुणात्मक-
त्वेनसावयवत्वस्वीकारेणसावयवत्वाभावेनप्रतिबिंबग्राहकत्वा-
भावसाधनेस्वरूपासिद्धिरितिवाच्यंमायायाःसावयवत्वस्वीका-
रेसावयत्वस्यावयवसमवेतत्वरूपस्यावयवजन्यत्वरूपस्यैवव-
क्तव्यतयातस्यचजन्यत्वव्याप्यत्वेनमायायाऽपिजन्यत्वापत्तिः
तथाचानादित्वाभावेनापसिद्धांतःस्यात् ॥ संसारस्यापिसादित्वं-
स्यादितिवृद्धिमिच्छतोमूलमपिनष्टमितिमहत्कौतुकं गगनेप्रति-
बिंबाभावस्यपूर्वमेवसाधितत्वेनतमादायव्यभिचारप्रदर्शनंतेनैव-
निरस्तं अतएवसावयवत्वपरिच्छिन्नत्वयोर्गगनेऽस्वीकारेपिनव्य-
भिचारः मायायाः सावयवत्वेपरिच्छिन्नत्वेचतयोर्जन्यत्वाऽ-
विनाभूतयोर्जन्यत्वानुमापकतयाऽनादित्वहानिरितिस्वरूपासि-
द्धिप्रदर्शयतोऽपसिद्धांतः नन्वित्यादिनाप्रदर्शितेशंकासमाधा-

नेत्त्वस्मदसंमतेस्वकपोलकल्पितेचेत्युपक्षिते ॥ स्वच्छत्वस्यप्रति-
बिंबग्राहकत्वप्रयोजकत्वेप्रभादिगतस्वच्छत्त्वात्पृथिवीजलगत-
स्यान्यूनानतिप्रसक्तस्यतस्यदुर्वचनतयाप्रभायामपिप्रतिबिंबाप-
त्तिरात्मनोपिज्ञानस्वरूपत्त्वादज्ञानस्यपूर्वंस्वच्छत्वेनत्वयैवस्वी-
कृततयातस्मिन्नपिप्रतिबिंबंस्यादिति ॥ किंचकिंतत्स्वच्छत्वं-
यत्प्रतिबिंबग्राहकत्वेहेतुतयास्वीक्रियतेकिंजातिविशेषोवाउपा-
धिर्वानाद्यः संकरप्रसंगात् ॥ सचजातिविशिष्टत्वंजातिवि-
शिष्टत्वंच समानाधिकरणत्वस्वाभावसामानाधिकरण्यस्ववृत्ति
त्वैतत्त्रितयसंबंधेन स्ववृत्तित्वंस्वसमानाधिकरणभेदप्रतियोगि-
तावच्छेदकत्वसंबंधेनबोध्यं तथाचस्वच्छत्वस्यपृथिवीत्वसा-
मानाधिकरण्यंदर्पणाद्यवच्छेदेन पृथिवीत्त्वाभावसामानाधि-
करण्यंचजलाद्यवच्छेदेनपृथिवीत्वाधिकरणघटादिनिष्ठाभेदप्र-
तियोगितावच्छेदकत्वात्त्रितयसंबंधेनस्वच्छत्वेपृथिवीत्वस्य-
विद्यमानत्वात् ॥ अत्रद्रव्यत्वस्यापिस्वसामानाधिकरण्य-
स्वाभावसामानाधिकरण्योभयसंबंधेनपृथिवीत्वादिजातिवि-
शिष्टत्वात्तत्रापिजातित्वंनस्यादतःस्ववृत्तित्वनिवेशः ॥ पृथिवी-
त्वादीनामपिद्रव्यत्वसामानाधिकरण्यस्ववृत्तित्वोभयसंबंधेनद्र-
व्यत्त्वविशिष्टत्वात्तद्वारणायस्वाभावसामानाधिकरण्यनिवेशः
जलत्वस्यापिपृथित्वाभाववद्वृत्तित्वतद्वन्निष्ठभेदप्रतियोगिताव-
च्छेदकत्वसंबंधावच्छिन्नस्ववृत्तित्वोभयसंबंधेनपृथिवीत्वावि-
शिष्टत्वात्तद्वारणायस्वसामानाधिकरण्यनिवेशःतथाचस्वच्छ-
त्वंनजातिः ॥ नाप्युपाधिःतस्यप्रतिबिंबग्राहकत्वरूपत्वेच-
आत्माश्रयप्रसंगात् नचप्रकाशकत्वंतदितिवाच्यंजलादौप्रति-
बिंबाभावप्रसंगात् तस्मात्स्वच्छत्वस्यनिर्वक्तुमशक्यत्वान्नतेन-

रूपेणप्रतिबिंबहेतुत्वसंभवः नापि“आभासएवच अतएवचो-
पमासूर्यकादिव ” दितिसूत्रानुसारेणमायायांप्रतिबिंबोजीव-
इतिसंभवतिततस्तादृशार्थाप्रतीतेः ॥ तथाहिननुसच्चिदानंदस्य
ब्रह्मणःसच्चिदानंदएवांशःसंभवतीतिकथंतस्यप्रवाहेप्रवेशआनं-
दांशतिरोभावश्चेत्यतआहआभासएवचेतिआभासएवजीवःव्या
पकत्वनिरतिशयानंदादिरूपभगवद्धर्माभावात् यथाऽनाचा-
रिब्राह्मणोब्राह्मणाभासःसूत्रधारकत्वेपिब्राह्मण्याख्यदेवतायास्त-
त्रतिरोभावात् ॥ नन्वे “ कएवहिभूतात्माभूतेभूतेव्यवस्थितः
एकधाबहुधाचैवदृश्यतेजलचंद्रवदि ” तिश्रुत्यनुसारेणप्रतिबिंब
मेवजीवइतिचेन्नतादृशश्रुतेर्यथाचंद्रस्यांशुद्वाराजलप्रवेशेनना-
नात्वंतथाब्रह्मणोप्यंशद्वारातत्तद्देहहृदयप्रवेशेनानात्वमित्यर्थक-
त्वेनप्रतिबिंबभावासाधकत्वात् ॥ तत्रमुक्तियोग्यत्वायब्रह्मरू-
पतोच्यतेअहंब्रह्मोपासनायाःप्रकृतत्वात् ॥ बुध्युपाधिकोजीव-
भावइतितुसर्वथैवनसंभवति मुक्तानामपिबुद्धिसंयोगसत्वेनजी
वभावापत्तेःनचमुक्त्यवस्थायांबुद्धेर्नष्टत्वात्कथंतत्संयोगइतिवा
च्यंब्रह्मणोबुद्धौप्रतिबिंबएवजीवभावःसचएकबुद्धिनाशेपि द्वि-
तीयबुद्धौपुनरपिस्यादेवनचसद्वितीयएवेतिवाच्यंब्रह्मणएकत्वे-
प्रतिबिंबस्यबिंबरूपत्वेन द्वितीयत्वायोगात् ॥ प्रतिबिंबस्यो-
पाधिपक्षपातित्वेनोपाधिभेदेनभेदांगीकारेसुषुप्तावुपाधेर्नाशेन-
मोक्षापत्तिःनचतत्रोपाधेर्लयएवनविनाशइतिवाच्यंकार्य्यस्यका-
रणावस्थापन्नस्यापियदिनाशोनस्वीक्रियतेचेत्तदाघटस्यमुद्गरा-
दिनाचूर्णीकृतस्यापिलयएवस्यान्ननाशः इष्टापत्तिरितिचेन्मु-
क्तानामपिबुद्धेर्नाशोनस्यात्तत्रापिलयस्यैववक्तुंशक्यत्वात्तथाच

तेषांपुनरुत्पत्तिर्दुर्वारैवेतिबोध्यं ॥ " अतएवचोपमासूर्य्यकादि-
व " दितिसूत्रमपिनजीवःप्रतिबिंबरूपइतिप्रतिपादयति किं-
तुजडजीवधर्माब्रह्मणिउपचारादुच्यंतेनवस्तुतःतत्रदृष्टांतप्रदर्शन-
परं ॥ " नस्थानतोपी " तिसूत्रेतद्विचारस्यैवप्रकृतत्वात् ॥
सूत्रार्थस्तुयतोब्रह्मणिप्रापंचिकधर्माउपचारादुच्यंतेअतएव "
समःप्लुषिणासमोनागेनसमोमशकेनसमएभिर्लोकैःसमोनेनसर्वे-
णे " तिवेदोक्ताउपमापिउपचारादेवतत्तद्धर्मसंबंधात् अ-
न्यथा " नतत्समश्चाभ्यधिकश्चदृश्यते " इत्यादिनाउपमानो
पमेयभावराहित्येनप्रतिपादितेपुनरुपमानोपमेयत्वेनप्रतिपादनं-
विरुद्धंस्यात् तत्रदृष्टांतःसूर्यकादिवत् सूर्येणसहितंजलंसू-
र्य्यकंयथाकिरणद्वाराजलादिसंश्लिष्टस्यसूर्य्यादेर्ब्रह्मोपमानत्वं-
" यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोनुगच्छ-
न् उपाधिनाक्रियतेभेदरूप " इतियथेतरसंश्लिष्टस्योपमान-
त्वं एवं " समःप्लुषिणे " त्यत्रापितत्तत्संश्लिष्टस्योपमेय-
त्वमपीतिनतत्सूत्रंजीवस्यप्रतिबिंबरूपतांप्रतिपादयति ॥ प्रति-
ध्वनेराकाशगुणत्वस्याद्वैतसिद्धांतविद्भिःस्वीकारेणतदनभिज्ञस्य-
स्वमतमेवखंडयतः आकाशेशब्दप्रतिबिंबदर्शनेनेत्यादिकःप्रला-
पःप्रकृतानुपयुक्तत्वादुपेक्षितः

## टीका

सहस्राक्षे जीवस्य प्रतिबिंबत्वसाधकं मायायांप्रतिबिंबते चितिरिति तदी-
याष्टमश्लोकं एवंजीवस्यपरसंमतमित्यादिना इहमतायतइतिदिगित्यंतेन व्याख्याने-
न सहितं यत्तुजीवस्येत्यादिना तत्पक्षाणामप्रतिपादनान्नकीयतइत्यं-
तेन निराकरिष्यंतः प्रथमं एवंजीवस्येत्यादि दर्शनेनव्यभिचारित्वाच्चेत्यंतं भा-
गमुत्तरयंति यत्त्वित्यादिनाप्रकृतानुपयुक्तत्वादुपेक्षितइत्यंतेन ॥ परोप-

ण्यस्तश्रुतीनामर्थंतुतदुदाहृतसूत्रद्वयस्य सिद्धांतभाष्याद्यनुवादद्वाराऽपेवक्ष्यंति ॥
अतःपूर्वंप्रतिबिंबत्वाभावसाधकानुमितिहेतुसप्तकेदोषभासानुद्धरिष्यंतोयुक्त्यैवाहुः ॥
**तदपिनकिंचिदित्यादि** ॥ **मायाचेयमिति** । इदंपंचदशप्रकरण्यांचित्रदीपा-
ख्येषष्ठप्रकरणे ( श्लोक १२५ ) " ,मायाचेयंतमोरूपातापनीयेतदीरणात् ।
अनुभूतिंतत्रमानंप्रतिजज्ञेश्रुतिःस्वयंइतिपद्यमस्ति । तापनीयेतदीरणंतु प्रागुक्ते-
नृसिंहोत्तरतापनीयनवमखंडे " मायाचतमोरूपानुभूते " रितिकथनं । एते-
नतत्रप्रतिबिंबादरे एतच्छ्रुतिव्याकोपोऽपिध्वनितः **सावयवत्वव्याप्यत्वेनेति** य-
द्यत्प्रतिबिंबग्राहकंतत्तत्सावयवं यथाजलदर्पणादिकं यत्रयत्रसावयत्वाभावः तत्र-
तत्रप्रतिबिंबग्राहकत्वस्याप्यभाव एव यथाकाशकालदिगादिषु अतोव्यापकस्य-

---

## सहस्राक्ष.

मायायां प्रतिबिम्बते चितिरसौ स्वच्छा हि सत्त्वे
न सागाम्भीर्यस्य जले रवस्य गगने भानान्नभः
शब्दयोः ॥ छाया तत्र परैस्तिरस्कृतिवशात्पञ्चीकृ
तौ चाम्बरे रूपं नोद्भवतीत्यतोनियमनं सामान्य
तोबाधितम् ॥ ८ ॥

एवं जीवस्य परसंमतमंशत्वं निराकृत्य स्वसंमतं पन्थानं निष्कण्टकं चिकीर्षुः
यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोनुगच्छन् उपाधिनाक्रियतेभेदरूपोदेवःक्षेत्रेष्वेवम-
जोयमात्माजीवेशावाभासेनकरोतिविद्याचस्वयमेवभवति छायातपौब्रह्मविदःरूपंरूपंप्रतिरूपोबभूव
एकएवतुभूतात्माभूतेभूतेव्यवस्थितः एकधाबहुधाचैवदृश्यतेजलचन्द्रवदित्यादिश्रुतिसंमतम् आ-
भासएवच अतएवचोपमासूर्यकादिवदित्यादिसूत्रसंमतं च जीवस्यब्रह्मप्रतिबिम्बत्वमाह ॥
मायायामिति ॥ अत्र कश्चित्प्रत्यवतिष्ठते ॥ मायात्वेनाभिमता नप्रतिबिम्बभाक् अस्व-
च्छत्वात् १ दारुवत् ॥ निरवयवत्वात् २ रूपाभावात् ३ रूपवत् ॥ अपरिच्छि-
न्नत्वात् ४ आत्मवत् आकाशवद्वा ॥ एतेषु प्रतिबिम्बापत्तिरेवविपक्षेबाधकस्त-
र्कः ॥ एवम् आत्मा न प्रतिबिम्बते अनवयवत्वात् ५ अपरिच्छिन्नत्वात् ६ आ-
काशवत् ॥ अरूपत्वात् ७ तद्वत् वायुवच्च ॥ एतयोः प्रतिबिम्बापत्तिरेव विपक्षे
बाधकस्तर्कः ॥ एवंच स्वच्छे सावयवे रूपवति परिच्छिन्नएवोपाधौ सावयवस्य रूप-
वतः परिच्छिन्नस्य प्रतिबिम्बनियमेन तर्कपराहतत्वान्नेमानि वाक्यानि प्रतिबिम्बत्वपरा-
णि किन्त्वंशत्वप्रतिपादकवाक्यवदन्यथाव्याख्येयानि इति ॥ तत्र अजामेकां सत्त्वंरजस्त-
मइतिप्रकृतेरित्यादिवचनैः स्रष्टृयाःप्रकृते- सत्त्वगुणकत्वेन -मायांतुप्रकृतिमितिश्रुत्या तस्याए-

सावयवत्वस्यभावः व्याप्यस्यतद्ग्राहकत्वस्यभावेनव्याप्यः । **तेनतस्येति** । सावयवत्वाभावेन तद्ग्राहकत्वाभावस्य । **अनुमिनोति** । माया प्रतिबिंबग्राहकत्वाभाववती सावयवत्वाभावात् । आकाशादिवदित्यनुमितिसंभवादित्यर्थः । **रूपाभावेनेति** । अत्रापिवाय्वाकाशादयएवदृष्टांताः तथाचमाया नप्रतिबिंबभाक् रूपाभावात् वायुवदित्यनुमितिः । **अप्रकाशस्येत्यादि** । एतेनवन्हिदीपादेः प्रकाशरूपस्यैवप्रकाशगुणंप्रत्युपादानत्वमपीत्युक्तंभवति ॥ सत्वस्यतादृशत्वंतुसांख्यार्यासु " प्रीत्यप्रीतिविषादात्मकाःप्रकाशप्रवृत्तिनियमार्था " इति " सत्वंलघुप्रकाशक " मितिचोक्तमेव एवंचप्रकाशात्मकत्वेऽपि दीपतत्प्रकाशादेः प्रतिबिंबाधारत्वादर्शनात् सत्वांशस्यापिनतदाधारत्वंसंभवति । **जलएवेति** । नतुम-

---

व मायाशब्दवाच्यत्वेन विद्वद्व्यवहारात्सत्त्वात्संजायतेज्ञानमितीश्वरवाक्याच्च सत्त्वस्य स्वच्छत्वेन आत्मावरकतयाऽस्मदीयैस्तमस्साऽदृश्यस्य तत्र स्वीकृतत्वेपि स्वपृष्ठगतघटावरकरजतादिपात्रवत्प्रतिबिम्बग्रहप्रयोजकस्वच्छतायाः प्रत्याख्याने प्रमाणाभावेन सजलकज्जलादिलिप्तपात्रादौ दीपादिप्रतिबिम्बदर्शनात्तदनुगतस्य मायाव्यावृत्तस्य स्वच्छत्वस्य वक्तुमशक्यत्वेनच प्रतिबिम्बग्रहरूपफलकल्प्यस्वच्छतायाअदृश्यआकाशादाविव तत्र कल्पने बाधकाभावेनचाद्योहेतुःस्वरूपासिद्धइत्याह ॥ स्वच्छाहिसत्त्वेनेति ॥ २९ ॥ द्वितीयोपि मायायास्त्रिगुणात्वेन गुणानांसावयवत्वेनचस्वरूपासिद्धोहेतुरित्यपिअनेनैवसूचितम् ॥ सव्यभिचारश्चेत्याह ॥ रवस्यगगनेइति ॥ अतएवतृतीयचतुर्थावपिसव्यभिचारौ ॥ आकाशे सावयवत्वस्योत्पत्तिमत्वेन परिच्छिन्नत्वस्यचपादोस्यविश्वाअत्यतिष्ठदशाङ्गुलम् एकशोनस्थितोजगत् विकारावर्तिचेत्यादिवाक्यैः स्वीकारे तु उक्तरीत्या सावयवत्वस्यश्रुत्यादिभिरेव परिच्छिन्नत्वस्य च मायायामपि सत्त्वेन स्वरूपासिद्धिरेवद्वितीयचतुर्थयोर्बोध्या ॥ ३० ॥ ननुस्वच्छत्वमात्रस्यैवोपाधौ प्रतिबिम्बग्रहप्रयोजकत्वे स्वच्छरूपेऽपि प्रतिबिम्बः स्यादितिचेन्न ॥ रूपस्य स्वच्छत्वे प्रमाणाभावात् ॥ अस्वच्छद्रव्यगतरूपस्य स्वच्छत्वाभावेन स्वच्छगतस्य तत्त्वेऽपि स्फाटिकपात्रस्थजलप्रतिबिम्बस्य तादृक्पात्रगतप्रतिबिम्बादपृथक्त्ववद्रूपप्रतिबिम्बस्य द्रव्यप्रतिबिम्बादपृथक्त्वात् ॥ आधाराधेयगतयोः प्रतिबिम्बयोर्व्यतिरेकात् ॥ रूपस्य द्रव्यादपृथक्त्वाच्च ॥ एवं गुणान्तरे क्रियादिषुचसमाधेयम् ॥ अस्वच्छत्वादेव वायुकालदिशासु न प्रतिबिम्बाशङ्का ॥ आत्मनि प्रतिबिम्बाभावस्तु प्रभायामिव प्रतिबिम्बग्राहिविजातीयस्वच्छत्वाभावने बोध्यः ॥ नचास्मन्मते जलक्षित्योरेव प्रतिबिम्बस्वीकारात्प्रभायां तदतिप्रसक्तेरभावेन तादृग्वैजात्यस्वीकारोव्यर्थइतिवाच्यम् ॥ ईदृशनियमस्वीकारस्य श्रुत्यादिप्रामाण्याकल्पनलाघवेनैव ततोलघुत्वात् आकाशे शब्दप्रतिबिम्बदर्शनेन व्यभिचारित्वाच्च ॥

लिनेकजलाद्यंशे ॥ स्वच्छसत्ववत्यांप्रतिबिंबमितिप्रसङ्गवादेऽपिसत्वांशमात्रे ब्रह्मप्रति-
बिंबंस्यान्नतुमायायां । अतोरजस्तमोभ्यां घोरमूढवृत्तिषु जीवोपलब्धिरेवनस्यादिति-
भावः । **विद्यारण्योक्तेति** । पंचदशीद्वितीयप्रकरणस्थतद्विरोधइत्यर्थः । **नचैव-
मित्यादि** । त्रिगुणात्मकत्वं सावयवत्वस्वीकारेहेतुः तत्स्वीकारश्चस्वरूपासिद्धौ-
हेतुः । सावयवत्वाभावस्तु साधन एव हेतुरितिविवेकः । **तस्यचेति** । सावयव-
त्वस्य । यत्रयत्रसावयवत्वंतत्रतत्रजन्यत्वं यथापृथिव्यादिष्वितिव्याप्तिस्तन्मतसि-
द्धा । अतएवाजन्यस्यपरमात्मनस्तन्मतेनिरवयवत्वं । **जन्यत्वापत्तिरिति** ।
विमतामायाजन्या सावयवत्वाद्घटवदितिप्रयोगः । **अपसिद्धांतःस्यादिति** । षु-
डस्माकमनादयइतिसिद्धांतभंगः । **अस्वीकारेऽपीति** । तार्किकादिदर्शनमनुसृ-
त्याऽस्वीकारे अपिशब्दो गौणताद्योतकः वस्तुतःसिद्धांतेतुगगनेतयोःस्वीकारएव "
अत्यतिष्ठद्दशांगुल ". मित्यादिशब्दानुरोधात् । स्पष्टश्चाकाशंसावयवत्वादिस्वीकारो-
वृद्धिन्हासभाक्सूत्रादौनिबंधेच ( प्र० १ श्लो० २८ ) आकाशवद्व्यापकंहीत्यादि-
स्थलेअत्र " लोकदृष्ट्यादृष्टांत " इतितत्वप्रकाशेकथनात्परिच्छिन्नत्वं । **जन्यत्वा-
विनेति** । तन्मतमनुसृत्येदमुक्तं । **जन्यत्वानुमापकतयेति** । विमतामाया
जन्यापरिछिन्नत्वात्सावयवत्वात् । पटपरात्मानौअन्वयव्यतिरेकदृष्टांतौ इतिज्ञेयं-
**प्रभागतेत्यादि** । प्रभायामपिस्वच्छत्वस्यप्रत्यक्षसिद्धत्वात्केवलंभूमिजलयोरेवस्वच्छ-
त्वमितिवक्तुमशक्यमितिभावः । **ज्ञानस्वरूपत्वादिति** । " सत्यंज्ञानमनंतंब्रह्म ।
भारूपःसत्यसंकल्पः " इत्यादितैत्तिरीयछांदोग्यादिश्रुतिभ्यःज्ञानंज्ञेयंज्ञानगम्यमि-
त्यादिस्मृतिभ्यश्चतथात्वात् । एवंचस्वच्छत्वेविजातीयत्वकल्पनंनिर्मूलं किंचात्मनि-
तादृशस्वच्छत्वस्यात्यंताभावे मायायामेवनियमेनतत्सत्वेच मायोपादानकेषु सर्वेष्वे-
वावश्यंतदनुवर्तेत । त्रिगुणात्मकत्ववत् ॥ तथाचसर्वत्रैवप्रतिबिंबप्रतीतिरशक्यवारणे-
तिमायिकतयाभिमतेषुवायुकालदिगादिषु तद्वारणप्रयासोव्यर्थः ॥ **नाद्यःइति** । संक-
रस्यजातिबाधकत्वेनतत्प्रसंगेसति जातिविशेषत्वंनशक्यंवक्तुमितिभावः । जाति-
बाधकसंग्रहंतूदाहरंतितार्किकाः ! व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः । रू-
पहानिरसंबंधो जातिबाधकसंग्रहइति ॥ प्रकृतेसंकरंस्फुटंदर्शयितुंतल्लक्षणपुरःसर-
माहुःस्वचेत्यादिनासंकरश्चेत्यर्थः । **एतत्त्रितयसंबंधेनेति** । स्वसामानाधिक-
रण्यं स्वाभावसामानाधिकरण्यं स्ववृत्तित्वंचेतिसंबंधत्रयरूपोयःसंबंधविशेषस्तेनजा-
तिविशिष्टत्वं संकरइतियोजना ॥ अत्रसर्वत्रस्वंजातिरेव । इहविवक्षितंस्ववृत्ति-
त्वं स्फुटयंति । **स्वसमानाधिकरणेनेति** । यथाशरीरत्वंनजातिः उक्तत्रितय-
रूपसंबंधेन पृथ्वीत्वजलत्वादिजातिवैशिष्ट्यात् । तथाहि आस्माकादिशरीरेषुपृथि-
वीत्वजातिसामानाधिकरण्येनशरीरत्वस्य तद्वैशिष्ट्यं । नैयायिकरीत्यावरुणलोकस्थ-
जलीयशरीरेषु पृथिवीत्वाभावसामानाधिकरण्येनतस्यतद्वैशिष्ट्यं । घटादिषुपृथिवी

त्वसमानाधिकरणी जलीयादिशरीरनिरूपितोयो भेदस्तत्प्रतियोगितावच्छेदकत्वसं-बंधेनपृथिवीत्ववृत्तित्वंच शरीरत्वेस्त्येवेतिप्रकृतसांकर्यान्नजातित्वं ॥ एवंत्वच्छ-त्वेपिसंगमयंति **तथाचेत्यादिना** । **विद्यमानत्वादिति** । अयंसंकरप्रसंगादि-तिपूर्वोक्तहेतौहेतुः । ननुत्रिष्वन्यतमसंबंधमात्रेणोभयरूपसंबंधमात्रेणवा जातिवै-शिष्ट्यमस्तु किंत्रितयरूपेणतेनेति चेत्त्वसामानाधिकरण्येनव्यापकजातिवैशिष्ट्यं व्याप्यजातीनां । त्वाभावसामानाधिकरण्येन तद्वैशिष्ट्यंव्यधिकरणजातीनां । नियतव्यधिकरणजातिसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वंचतासामस्त्येवेत्यन्यतम-मात्रोपादाने प्रायेणजातिमात्रोच्छेदप्रसंगादिदूषणंसुगममेवेति तदनुक्तोभयमात्रग्रह-णेदोषानाहुः **अत्रद्रव्यत्वस्येत्यादिना** । द्रव्यत्वंहिपृथिव्यांपृथिवीत्वसामाना-धिकरण्येनजलादिषुतदभावसामानाधिकरण्येनचवर्ततएव । पृथिवीत्वसमानाधिक-रणभेदप्रतियोगितावच्छेदकंतुतन्न भवतिपृथिव्यांद्रव्यप्रतियोगिकभेदस्यासत्वादिति-भावः ॥ **पृथिवीत्वादीनामित्यादि** पृथिवीत्वंहिपृथिव्यांद्रव्यसमानाधिकरणंद्रव्य-त्वाधिकरणजलादिनिष्ठभेदप्रतियोगितावच्छेदकंचास्त्येव । द्रव्यत्वाभावसामाना-धिकरणंतुनैवभवितुमर्हतीतिभावः एवंजलत्वादिष्वपिबोध्यं । **जलत्वस्येत्यादि** । जलत्वंहिपृथ्वीत्वाभावाधिकरणजलवृत्तिभवति । पृथिवीत्ववन्निष्ठोजलप्रतियोगि-कोयोभेदःतत्प्रतियोगितावच्छेदकंचभवति । पृथ्वीत्वसमानाधिकरणंतुतत्सर्वथानभ-वितुमर्हतीतिभावः । एवंचनियतव्यधिकरणताकपृथ्वीत्वजलत्वादिजातिषु पृथ्वी-त्वादिषुव्याप्यजातिषु द्रव्यत्वादिषुव्यापकजातिषुचक्रमेणजातित्वबाधवारणाय स्व-सामानाधिकरण्यादित्रितयनिवेशइतिनिगर्वः । आत्माश्रयप्रसंगादितिप्रतिबिंबग्राह-कत्वरूपमेव स्वच्छत्वं प्रतिबिंबग्रहेहेतुरित्यात्माश्रय उद्देशतावच्छेदकविधेयता-वच्छेदकयोरैक्यात्स्फुटएव । **प्रकाशत्वकमिति** । मण्यादिषुतथादर्शनादितिभावः । **प्रतिबिंबाभावप्रसंगादिति** इहदीपादौ प्रतिबिंबापत्तिप्रसंगादित्यधिकमनुसंधेयं ननुप्रागुक्तत्रतस्तद्विषयश्रुतितश्चप्रतिबिंबत्वंस्यादित्यतआहुः **नापीत्यादि** । त-त्रप्रथमं ( अ० २ पा० ३ सू० ५० ) " आभासएवचे " ति सूत्रस्यभाष्यात्त-त्प्रकाशाच्चकंचिदंशमेकीकृत्यानुवदंति **ननुसच्चिदानंदस्येत्यादिना** । " एक-एवहिभूतात्मे " तिश्रुत्यर्थं निर्मलयितुं स्वयंशंकंते **नन्वेकइति** । ( अ० २ पा० ३ सू० ३० ) " यावदात्मभावित्वाच्चनदोष " इतिसूत्रप्रकाशादिभ्यःकंचिदंशमर्थत आनुपूर्वीतश्च यथोचितमनुवदंति **यथाचंद्रस्येत्यादिना** । **मुक्तानामित्या-दि** । अपिशब्दाद्ब्रह्मणोऽपि । तस्यतेषांचविभुत्वात्सर्वबुद्धिसंयोगोऽवश्यवाच्यइतिप्र-काशाशयः । **उपाधेर्नाशेनेति** । छांदोग्याष्टमाध्यायबृहदारण्यकद्वितीयाध्याया-द्यब्राह्मणकौषीतकिब्राह्मणचतुर्थाध्यायादिषुसुषुप्तिकालेजीवस्य सकलतदुपाधीनांच-ब्रह्मणिप्रवेशास्याम्नानात् " सुषुप्तिकालेसकलेविलीने " इत्यादिश्रुत्यंतराच्चतथै-

तिभावः । नचबुद्ध्यतिरिक्तोपाधीनामेवतदाप्रवेशादिकंकल्प्यं । तथासति तत्र-
त्ये आत्मव्युच्चरणवाक्ये बुद्धिव्युच्चरणादात्मव्युच्चरणोपचारइति स्वव्याख्यातार्थ-
व्याघातापातात् । एवमन्यदप्यूह्यं **तद्विचारस्यैवेति** । तृतीयस्यद्वितीयेपादे
( सू० ११ ) " नस्थानतोऽपिपरस्योभयलिंगंसर्वत्रही " तिसूत्रमारभ्यब्रह्म-
धर्मविचारएवसविशेषनिर्विशेषश्रुतिवाक्यानिविषयीकृत्यप्रक्रांतो नतुजीवस्वरूपवि-
चारस्यतत्रगंधोऽपि । परस्येत्युक्तयातद्व्यावृत्तेर्दर्शितत्वात्द्वितीयस्यतृतीयेपादेजीववि-
चारस्यविस्तरेणकृतत्वाच्च । अतोब्रह्मणिधर्मविचारस्यैवात्रप्रकृतत्वमिति नैतेन-
जीवस्यप्रतिबिंबताशक्यवचना । ( अ० ३ पा० २ सू० १८ ) " अत-
एवचोपमासूर्यकादिवदि " तिसूत्रस्यभाष्यात्तत्प्रकाशाच्चकंचिदंशमर्थत आनुपूर्वीले-
शतश्चानुवदंति । **सूत्रार्थस्त्वित्यादिना** । **समःप्लुषिणेति** बृहदारण्यकतृती-
याध्यायेतृतीयब्राह्मणे ( पृ० १११ ) " यद्वेवसमःप्लुषिणासमोमशकेनसमोना-
गेनसमएभिस्त्रिभिर्लोकैःसमोनेनसर्वेण " इतिकण्वैपठ्यते ॥ माध्यन्दिनानामपि-
( पृ० १०४९ ) तुल्यःपाठः ॥ अर्थस्तुप्लुषिणापुत्तिकादेहेनातिसूक्ष्मेणसमः-
इत्यादिस्तुल्यः ॥ मशकस्ततोऽधिकः नागःसर्पोदीर्घकुंडलाद्यनेकाकारोमध्यमः-
गजोवातिस्थूलः ततोधिकास्त्रयोलोकाःसर्वसंपूर्णब्रह्मांडस्थंचराचरंतेनतेनतुल्यः ॥
वस्तुतस्त्वाकाशइवसर्वपरिमाणश्चयइतिवृद्धिह्रासभाक्त्वसूत्रेवक्ष्यते **उपचारादेव-**
**तत्तद्धर्मसंबंधादिति** उपचारोत्र प्रपंचधर्मसंबंधेहेतुर्नतुपूर्वत्र । **नतत्समद्ध-**
**ति** । श्वेताश्वतरवाक्यमिदं **उपमानोपमेयत्वेनेति** । उपमानैःप्लुष्यादिभिस्तथा-
त्वेन । **जलमिति** । सौत्रकशब्दस्यार्थोयं । पुंसिकःकंशिरोम्बुनोरित्यमरोक्तेः । **तत्त-**
**त्संश्लिष्टस्येति** । प्लुष्यादिसर्वसंश्लिष्टस्य । अत्रैतावत्संदर्भाभिप्रायमनुसंधाय-
किंचिद्ब्रूमः तदीयसप्तमश्लोकस्यखंडन एवंजीवस्याणुत्वमंशत्वंव्युच्चरणादिकंचसि-
द्धं अथतस्यप्रतिबिंबत्वापादक एकदेशिनोष्टमः श्लोकःसव्याख्यः खंड्यतेतत्रते-
नप्रतिबिंबत्वसाधनायश्रुतिवाक्यपंचकंसूत्रद्वयंचादावुपन्यस्तंतदर्थः प्रथमंनिर्णीयते-
तत्र " यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोनुगच्छन् । उपाधिनाक्रि-
यतेभेदरूपोदेवःक्षेत्रेष्वेवमजोयमात्मे " तिवाक्यंतु एकस्यापिब्रह्मणोनानात्वेनप्रत्य-
येदृष्टांतंवदतिनतुजीवस्यप्रतिबिंबत्वं । तथाहियथा अयमेकोविवस्वान्सूर्यः भिन्नाः-
स्वपःपृथग्भूताः परस्परप्रतियोगिकभेदवतीश्च अपोजलानि ज्योतिरात्माअनुगच्छन्-
स्वांशुज्योतीरूपेणानुप्रविशनउपाधिनाजलादिरूपेणभेदरूपःक्रियते नानात्वप्रकारक-
प्रतीतिविषयतामानीयते एवंदेवः जगन्निर्माणक्रीडामोद प्रकाशादिमान्अयमात्मा-
परमेश्वरः पृथक्कृतेषुक्षेत्रेषुस्वांशजीवरूपेणानुप्रविशन् नानात्वप्रतीतिविषयः क्रि-
यतइत्यर्थः ॥ सूर्यादिर्हिदर्पणजलादौप्रतिबिंबने तेजोंशेनप्रविशतिचमंडलाकारादि-

साक्षात्कारात्उष्णस्पर्शानुभावात् चक्षुःपराहतिदर्शनाच्च ॥ प्रतिबिंबमात्रेतु सत्युष्णस्पर्शादिकंनानुभूयेत न हिमहाज्वरार्तपुरुषस्यातितप्तपयःप्रभृतेर्वाप्रतिबिंबमुष्णंभवति अतएवश्रुतावप्यनुगच्छन्नित्युच्यते नतुप्रतिबिंबमानइति ॥ ब्रह्मणोजीवरूपेणप्रवेशस्तु " अनेनजीवेनात्मनानुप्रविश्य " त्यादिश्रुतिप्रसिद्धः ॥ किंचआपोहितेजोजन्या " अग्नेरापः ॥ तदपोसृजते " इत्यादितैत्तिरीयच्छांदोग्यादिश्रुतिभ्यः ॥ इदानीमपिवृष्टिद्वारासूर्यादाविर्भवंति " याभिरादित्यस्ताभिःपर्जन्योवर्षति " आदित्याज्जायतेवृष्टिरित्यादिश्रुतिस्मृतिभ्यः ॥ अतःस्वतआविर्भूतेष्वपिविजातीयतयाप्रतीयमानेषुजलेषुसूर्यस्तेजोंशेनप्रविष्टःसन्यथानानादृश्यते तथातस्मादाविर्भूतेष्वपिचिदानंदतिरोधानेनविजातीयतयादृश्यमानेषुजलेषुशरीरेषुजीवरूपेणप्रविष्टं ब्रह्मनानेवभातीतिबहुतरंसाधर्म्यं इदमेवाभिप्रेत्यमणिमुकुराद्यपहायश्रुतावापएवदृष्टांतउपात्ताः एतदेवचोपबृंहितंप्रथमस्कंधे यथाह्यवहितोवह्निःदारुष्वेकःस्वयोनिषु ॥ नानेवभातिविश्वात्मा भूतेषुचतथापुमानितिवस्तुतस्तुतत्रतत्रप्रविष्टास्तेजोंशायथाभासांनिधेरनतिरिक्तास्तथैवजीवाब्रह्मणः अयमेवैतच्छ्रुत्याशयोभगवताबोध्यते क्षेत्रज्ञंचापिमांविद्धिसर्वक्षेत्रेषुभारतेति अत्रस्मृतौचकारेणक्षेत्रांतर्गतभूतेंद्रियादिकंसमुच्चीयतेतेनविजातीयतयाप्रतीयमानान्यपिजलानि यथास्वोपादानतेजःप्रतियोगिकतात्विकभेदवंतिनभवंति तथाक्षेत्राण्यपिनब्रह्मभेदवंतीतिफलति अतएवक्षेत्रक्षेत्रज्ञयोर्ज्ञानंयत्तज्ज्ञानंमतंममेत्युभयज्ञानस्यतत्त्वज्ञानत्वंस्मर्यते. इदंप्रसंगादुक्तं ॥ यदितुत्वदभिमतंश्रुतिरभिप्रेयात्तर्हिविवस्वतोजलइवमायायांब्रह्मणः प्रतिबिंबजीवइत्येवब्रूयात् । तथाअ..थनात् भेदरूपःक्रियतइतिकथनाच्च ॥ प्रतीयमानभेदस्यावास्तवत्वबोधनमेवश्रुत्याशयगोचरः किंचजलस्थानापन्नतयात्वयामायोच्यते तथाचसतिश्रुतौदार्ष्टांतिककोटौ तस्याअनुपादानं क्षेत्राणामुपादानंचत्वन्मतबाधकं । नचक्षेत्रशब्दोमायापरोवाच्यःतथाग्राहकवेदांतिसंमतमानानुपलब्धेः । दृष्टांतदार्ष्टांतिकयोर्बहुवचनविरोधाच्च ॥ नचमायाबहुत्वंवाच्यं मायास्त्वितिवक्तव्येमायायांप्रतिबिंबतइतिस्वोक्तेर्विरोधात् । सर्वासांविभुत्वाविभुत्वाद्यनेकविचारैर्व्याकुलीभावापाताच्च । अतःइदंशरीरंकौंतेयक्षेत्रमित्यभिधीयते इतिभगवद्वाक्यानुसारेणैवार्थोयोग्यः ॥ एतेन " एकएवहिभूतात्माभूतेभूतेव्यवस्थितः ॥ एकधाबहुधाचैवदृश्यतेजलचंद्रव " दित्याथर्वणब्रह्मोपनिषत्श्रुतिरपिव्याख्याता ॥ तथाहिकिमत्रभूतात्मशब्देनजीवोभिप्रेयेत आहोस्विद्ब्रह्म । नाद्यः ॥ जीवानांप्रतिशरीरभिन्नत्वंनएकएवहिभूतंभूतेव्यवस्थितइत्युक्तिविरोधात् एकस्यैवजीवस्य एकधाबहुधादर्शनयोरयोगाच्च । एकजीववादस्तु पूर्वोक्ताद्यनेकदोषग्रस्तः प्रसह्यांगीकारेत्वेकधादर्शनस्यवास्तवत्वात् जीवभावनित्यताप्रत्यापत्त्यांतोऽद्वैतमोक्षयोरुच्छेदश्च ॥ द्वितीयश्चेद्युज्यते भूतात्माभूतभावनःएकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः ॥ त्रींल्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्यय इति-

भारतीयनामसहस्रवाक्यैकवाक्यतयातथैवसिद्धेः । परमेवंसतिजलचंद्रतौल्यंब्रह्मणः प्राप्तमितिनतावताजीवस्यप्रतिबिंबत्वसिद्धिः नन्वत्रमनोहिद्विविधप्रोक्त ” मित्युपक्रमेण “ मनोग्रहणालिंगाज्जीवप्रकरणमेतत् अतोनास्य मंत्रस्यब्रह्मपरत्वमितिचेन्मैवं अ-न्यथानुपपत्याप्रकरणबाधात् ॥ वस्तुतस्तुतत्रकामसंगरहिततयाशुद्धमनसोमंत्रत्रये-णमुक्तिमुक्तामोक्षेकीदृशंस्वरूपमित्याकाङ्क्षायां “ तदातत्परमंपद ” मित्यक्षरं “ नैवचिंत्यंनचाचिंत्यमचिंत्यंचिंत्यमेवचे ” त्यादिनाविरुद्धधर्माश्रयत्वादिकंचोक्त्वा “ ब्रह्मसंपद्यतेतदा तदेवनिष्कलंब्रह्मनिर्विकल्पंनिरंजनंतद्ब्रह्माहमितिज्ञात्वाब्रह्मसंप-द्यतेध्रुव ” मित्यादिनाविस्पष्टंब्रह्मणोनिरूपणात् । जीवानांब्रह्माभेदबोधनायप्रवृ-त्तस्य “ एकएवही ” तिमंत्रस्यब्रह्मपरत्वे ॥ नप्रकरणविरोधगंधोऽपि । एते-नास्यजीवेसमन्वयंवदंतःप्रत्युक्ताः । अर्थस्तुएकएवभूतात्मापरमेश्वरोभूतेभूतेप्रति-शरीरंव्यवस्थितःविशेषाकारेणांशेनावस्थितःसन् एकधाबहुधाचैवदृश्यते एकस्या-नेकधावस्थानेदर्शनेचदृष्टांतमाहजलचंद्रवदिति यथाजलेचंद्रमाअंशरूपेणांशेनस्थि-तः । एकधाचंद्ररूपेणबहुधानेकसंख्याकंपादिरूपेणचदृश्यते इतिव्याख्यातः ॥ अतोऽत्राप्येकस्यनानात्वप्रतीतिपूर्वश्रुतिदृष्टांतार्थस्सिध्यति ॥ यदितुत्वदभिमतंश्रु-तिर्विवक्षेत् तर्हिमायायांप्रतिबिंबितइत्येवब्रूयात् । नतुतद्विरुद्धं भूतेभूतेव्यवस्थि-तइतिएकधाबहुधेतिच । भूतानांजलस्थानापन्नतानूरीकारात् । अतोजलेचंद्रस्यै-वमायायांब्रह्मणः प्रतिबिंबाजीवाइतित्वेतद्वाक्याक्षरेभ्योनलभ्यते ॥ यत्त्वागामिग्रं-थेचंद्रमंडलेजलप्रवेशाभावादितिवक्ष्यते तदप्येतेननिराकृतं । तेजोंशप्रवेशमंतरासू-र्यचंद्रयोःप्रतिबिंबप्रकाशानुभवस्य औष्ण्यशैत्यानुभवस्यचायोगात् ॥ वर्णयंति चतेजःप्रतिबिंबस्थलेप्राञ्चः यथाहवराहमिहिरः । “ सलिलमयेशशिनिरवेर्दीधि-तयोमूर्छितास्तमोनैशं ॥ क्षपयंतिदर्पणोदरनिहिताइवमंदिरस्यांत ” रिति मा-घोप्याहतुर्यसर्गे “ दर्पणनिर्मलासुपतितेघनतिमिरमुषिज्योतिषिरौप्यभित्तिषुपुरःप्रति-फलतिमुहुः ॥ व्रीडमसंमुखोऽपिरमणैरपहृतवसनाःकांचनकंदरासुतरुणीरिहनयतिर-वि ” रिति ॥ यच्चद्वितीयं “ जीवेशावाभासेने ” तिवाक्यमुपन्यस्तंतदपि-नतदिष्टसाधकं ॥ तन्नहिदेवैःपृष्टःप्रजापतिः “ उपद्रष्टानुमंतैषआत्मे ” त्याद्युप-दिदेश तत्र “ उपद्रष्टानुमंतैषआत्मे ” तिजीवस्वरूपमुक्त्वा “ सिंहश्चिद्रूपएवे ” तिब्रह्माभेदंबोधयित्वा “ अविकारोह्युपलब्धासर्वत्रे ” तिब्रह्मणएवस्वांशभूतसर्व-जीवरूपेणसर्वत्रोपलब्धृत्वंनिरूप्य “ नह्यस्तिद्वैतसिद्धिरात्मैवसिद्धोऽद्वितीयोमायया-ह्यन्यदिवे ” त्यादिनासर्वेषांब्रह्मात्मकत्वंद्वैतस्यतद्भ्रमजनकजडत्वतुच्छत्वानेकत्वादी-नांशक्तिमायाहेतुकत्वंचवदन् सर्वस्यैकत्वेकथंनानादेहाभिमानः कथंचनियम्यनिया-मकभावादीतिशंकांवारयन्आह “ एषामायास्वाव्यतिरिक्तानिपरिपूर्णानिक्षेत्राणिद-र्शयित्वा जीवेशावाभासेनकरोतिमायाचाविद्याचस्वयमेवभवनी ” ति ॥ अत्रजीवश-

ब्देनमनुष्यादयःकार्यजीवाः जीवोजीवंविहायमांजीवोजीवेननिर्मुक्तःअहस्तानिसह-
स्तानां अपदानिचतुष्पदां ॥ फल्गुनीतत्रमहतांजीवोजीवस्यजीवनमित्यादौप्रसिद्धाः ।
ईशशब्देनचब्रह्मादयःपृथगीशमानिनोलोकेनियामकत्वेनप्रसिद्धाः तथाचत्वाऽविना-
भूतानि नानाविधक्षेत्राणिप्रदर्श्य आभासेनदेहोहमितिमिथ्याज्ञानेन जीवेशौकरोति
अयंजीवोऽयमीश्वरइतिसंपादयति । करोतेरर्थश्चेदृशमायस्त्वयाऽपिवाच्यः अन्यथा-
कार्यत्वापत्त्याजीवेश्वरयोः स्वातंत्र्येणानादित्ववादोभज्येत " अजोनित्य " इ-
त्यादीनिचविरुध्येरन् ॥ अग्रेच " सर्वंसर्वमथंसर्वेजीवाःसर्वमयाःसर्वावस्थासुतथा-
प्यल्पा " इतिवस्तुतोब्रह्मात्मकत्वेनसर्वस्यसर्वात्मकत्वंजीवानांव्युच्चरणोत्तरमल्पत्वं-
चोच्यते । नहीदंप्रतिबिंबपक्षेपूर्वोत्तरंसंगच्छते ॥ अनुपदंचाग्रे " सवाएषभूता-
नींद्रियाणिविराजंदेवताःकोशांश्चसृष्ट्वाप्रविश्यामूढोमूढइवव्यवहरन्नास्तेमाययैवे " ति-
परब्रह्मणएवभूतादिनिर्माणं " अनेनजीवेनात्मनानुप्रविश्ये " तिश्रुत्यंतराच्चा-
नस्तत्रप्रवेशः लीलयाजीवस्यमोहोव्यवहरणंअत्रसर्वत्रमायायाएवकरणत्वंचश्राव्यते-
अतोऽप्युक्तमेवयुक्तं । अग्रेच " तस्माद्द्वयएवायंमात्मे " त्यादिनात्मस्वरूपंनि-
रूप्य " सत्तामात्रंहीदंसर्वंसदेवपुरस्तात्सिद्धंहिब्रह्मे " तिजगतोऽप्याविद्यकत्वभ्र-
मंवारयति । विस्तरशस्तु अविरोधाध्यायषष्ठसूत्रभाष्यप्रकाशेउपनिषद्भाष्येचश्री-
पुरुषोत्तमचरणैर्निरणायिनिखिलेयंश्रुतिरितिकिमिहबहुना यत्तुएतछ्रुत्यर्थेविद्वन्मंडनटी-
कोक्तमनूद्य ( तन्नयुक्तंतादृशयोरपिप्रतिबिंबत्वेनियममात्रभंगापत्त्याऽतेरंडाविवाह-
श्चेदादावेवकुतोनहीतिन्यायापातात् हिरण्यगर्भादेरीश्वरत्वेमानाभावाच्च ॥ जीवो-
जीवमित्यस्यत्वयमर्थः जीवःजीवात्माजीवंजीवनकरणं लिंगशरीरंविहायमांसंप-
द्यते तथाचकुतोजीवांतरस्यप्रमिति ) रित्यग्रेवक्ष्यते तत्तुछंउक्तरीतिकेआस्मा-
कीनानांव्याख्यानेकार्यजीवेश्वरयोरपिप्रतिबिंबत्वासिद्ध्यारंडाविवाहन्यायानवतारात्
अत्रकार्यजीवस्याविकृतब्रह्मरूपतोक्तिःत्क्वाश्रुतिश्च ॥ इहहि " क्षेत्राणिदर्शयि-
त्वा " इतिपूर्वकालविहितक्त्वाप्रत्ययश्रुत्यामायाप्रयोजककर्तृकंक्षेत्रप्रदर्शनंजीवेश-
करणात्प्राक्कालिकंनिश्चीयते । तस्यकःसाक्षात्कर्तास्यात् । त्वन्मतेविवर्ततयोक्ता-
नां क्षेत्राणांद्रष्टृत्वस्य विशुद्धचित्यऽसंभवाज्जीवेश्वरयोश्चतदानीमनिष्पादात् ॥ त-
स्माण्णिजर्थव्यापारेणाक्षिप्यमाणानांक्षेत्रद्रष्टॄणांचिदंशकाणुजीवानांपूर्वमेवविद्यमान-
तायाअर्थापत्तिसिद्धत्वात् कृतिविषयौजीवेशावन्यावेववाच्यौ । अन्यथामाया-
याकार्यत्वापत्त्यातेषांनित्यत्वब्रह्माभेदादिबोधकानेकश्रुतिविप्लवः । कार्यत्वेनचतवाना-
दिजीवेश्वरवादोपिभज्येत । एवंहिरण्यगर्भादीनांकार्येश्वरत्वेमानं " योब्रह्माणंविद-
धातिपूर्वं ॥ हिरण्यगर्भः समवर्तताग्रेभूतस्यजातः पतिरेकआसीत ॥ ब्रह्मादेवानां-
प्रथमःसंभूवविश्वस्यकर्ताभुवनस्यगोप्ता ॥ सवशरीरीप्रथमः " एवमादिश्रुतिवा-
क्येषुपरमात्मकार्यत्वस्यअवरनिरूपितेश्वरत्वस्यचश्रवणमनुसंधेय ॥ तेषांदेहाद्या-

भामश्चाष्टमदशमस्कंधादिषु ( स्कं० ८ ( अ० ३ श्लो० ३० ) ब्रह्मादयोत्रिवि-
धलिंगभिधाभिमानाः ( स्कं० १० अ० १४ श्लो० १० ) अतःक्षमत्वाच्यु-
तमेरजोभुवोत्यजानतस्त्वत्पृथगीशमानिनइतिस्पष्टं । जीवोजीवमित्यस्यव्याख्या-
नंतुजीवशब्दस्यार्थांतरेपिवृत्तिमेवसमर्थयतीतिनास्मत्प्रतिकूलांकिंचप्रहिलतयाजीवेश-
पदयोस्त्वदभिमतार्थकत्वादरणेपिनानेनतयोः प्रतिबिंबत्वंसित्यतितृतीयानिर्दिष्टाभा-
सपदार्थस्यजीवेशकरणतयाहेतुतयावाऽन्वयस्यैवप्रतीत्यातयोराभासतायाऽलाभात् ।
अभेदतृतीयादरेतुमूलविवरणावसरेवक्ष्यते तथाप्याभासपदंब्रह्माभासादिवन्मुख्यब्रह्म-
धर्मतिरोभावाभिप्रायमेवसूत्रैकवाक्यतालाभादिति ॥ एकादशस्कंधपंचविंशाध्याय-
स्थस्य (श्लो० ) ३५ ) संपद्यतेगुणैर्युक्तोजीवोजीवंविहायमां ॥ जीवाजीवेन-
निर्मुक्तोगुणैश्चाशयसंभवैः ॥ मयैवब्रह्मणापूर्णोनबहिर्नांतरश्चरेदितिवाक्यस्याप्यर्थंपु-
रतोमूलविवरणावसरेव्याख्यास्यामः ॥ अथतदुदाहृतं तृतीयवाक्यंकठवल्लीषु “
तृतीयवल्यारंभेऋतंपिबंतौसुकृतस्यलोकेगुहांप्रविष्टौपरमेपरार्धे । छायातपौब्रह्मविदो-
वदंति पंचाग्नयोयेचत्रिनाचिकेता ” इतिपठ्यते । तदपिन प्रतिबिंबत्वसाधकं-
भवतिछायाप्रतिबिंबयोर्भेदात् । छायाहिपुरुषादेर्यद्दिगवच्छेदेनसूर्यादिर्भवतितत्संमुख-
दिश्येवनियमेनभवति प्रतिबिंबंतुसर्वत्र । साचसर्वतःप्रकाशेसतिनोत्पद्यते यथापरितः-
प्रदीपपंक्तिप्रभासितेसदने । साधारण्येनमलिनेनिर्मलेचाश्रयेश्यामरूपाप्रतीयतेतेजसः
सान्निध्यविप्रकर्षप्रौढयऽप्रौढयादिनाऱ्हस्वदीर्घत्वेचापद्यते । महत्विनोमिहिरादेश्चसानै-
वभवति ॥ प्रतिबिंबंतु परितः प्रकाशेपि दृश्यते । निर्मलएवाश्रये बिंबसरूपमेवा-
नुभूयते । नाप्युक्तहेतुभ्यो ऱ्हसतिदैर्घ्यंवाप्नोति । महत्विनोऽपितद्भवति । एवंछाया-
प्रतिबिंबयोरतिरेकादेव श्रीभागवते भगवान् भेदेननिर्दिशति ( स्कं ११ अ०२८
श्लो० ५ ) छायाप्रत्याह्वयाभासाइति ॥ आभासशब्दसाजात्यात्प्रतिबिंबस्याप्युप-
लक्षकः । प्रतिबिंबत्वंसाधयितुं आभासएवचेतिसूत्रमाभासपदघटितश्रुतिंचोपन्य-
स्यताभवतात्वाभासशब्दस्यैवप्रतिबिंबवाचकत्वंवाच्यं ॥ शब्दांतरादेभेदकत्वंतुपूर्व
तंत्रे “ शब्दांतरे कर्मभेद ” इत्याद्यधिकरणेपुस्पष्टं ॥ अतःप्रतिबिंबत्वसाधनाय
छायात्वबोधकवाक्योपन्यासोधाष्ट्यात् ॥ किंचछायाहिसूर्यचंद्रदिपाद्यातपादेवभव-
ति॰अतः प्रकृतेपुरुषच्छाया तदाश्रयस्थानापन्नब्रह्मजीवाविद्यातिरिक्त आतपस्था-
नीयःकश्चित्धेतुः स्वीकार्यःसचाप्रसिद्धः अपिचातपेपुरुषादेरेवछायाभवतिनतुकदा-
चिदप्यातपस्यातोत्रब्रह्मणएवातपत्वोक्त्या तस्यब्रह्मप्रतिबिंबत्वमपिमनोरथमात्रं किं-
च प्रतिबिंबत्वे ऋतंपिबंतावितिपानमपिनोपपद्येत भुंजानपुरुषस्यप्रतिबिंबस्यभुंजा-
नवत्प्रतीयमानत्वेपिवस्तुतः पुरुषएवभुंक्तेनतुतत् तथात्रब्रह्मण एवपानादिक्रिया-
वास्तवी नतुजीवस्येति महानेवापसिद्धांतः ॥ तथाद्वितीयपादोक्तो गुहाप्रवेशोपिन-
संगच्छेत । इहगुहाशब्देनाविद्यांतःकरणं वावाच्यं तयोर्जीवकल्पितत्वेन जीवोपजी

व्यकत्वात् जीवस्यचतदधिष्ठानकप्रतिबिंबत्वेनतदुपजीव्यकत्वादन्योन्याश्रयेनैकतर-
स्याप्यनिष्पत्तेः । तथाजीवस्यछायाप्रतिबिंबान्यतरत्वेप्यलीकत्वाविशेषेणब्रह्मवि-
दांतद्दर्शनायोगाद्ब्रम्हविदोवदंतीत्यंशोपिनार्थतायुज्येत ॥ एवंएतद्वाक्यतांग्रे "
आत्मानंरथिनंविध्दी त्यादीना " यच्छेद्वाङ्मनसीप्राज्ञः इत्यंतेतोक्तारथित्वव-
श्यात्वश्येंद्रियत्वपरपदप्राप्तिप्रभृतयोधर्माः प्रतिबिंबत्वेसतिनोपपद्येरन् बिंबेतदभा-
वात्उपाधेःसर्वजीवेषुसाधारणत्वाच्च । अतोत्रजीवस्यानंदादिनिरोभावेनपिहितप्रका-
शत्वाच्छायात्वमुच्यते ब्रह्मणस्तुतदभावादातपत्वं ॥ अथत्वदुक्तंतुयंवाक्यमपित-
त्रैवपंचमवल्ल्यां „ अग्निर्यथैकोभुवनंप्रविष्टोरूपंरूपंप्रतिरूपोबभूव एकस्तथासर्वभू-
तांतरात्मारूपंरूपंप्रतिरूपोबहिश्च, वायुर्यथैकोभुवनंप्रविष्ट " इति पादत्रयंतदेवए-
वंद्विरुक्त्वःपठ्यते । तदपिवाक्यार्थस्यपूर्वोत्तरवाक्यानांचविचारेनजीवस्यप्रतिबिंव-
तासाधकंभवितुमर्हति । इहजीवस्यनाम्नोऽप्यनुच्चारणात् । प्रतिरूपशब्दस्यकथंचि-
त्प्रतिबिंबार्थकत्वांगीकारेपिप्रत्युतब्रह्मणस्तथात्वापत्तेः मूलरूपार्थत्वेत्वत्रप्रतिबिंबवा-
दगंधस्याप्यसिद्धेः । नचात्रवाक्येजीवः प्रतिरूपशब्दार्थइतिशंक्यंएकत्वसर्वभू-
तांतरात्मत्वाऽदिव्याकोपात्" एषतआत्मांतर्याम्यमृतः । अंतस्तद्धर्मोपदेशादंतर्या-
म्यधिदैवादिष्वि „ त्यादिश्रुतिसूत्रानुरोधेनवाक्यस्य ब्रह्मपरतायाएवसिद्धेः शं-
कराचार्यैरपितथैवांगीकारेणत्वयान्यथयितुमशक्यत्वाच्च „ । तदेवशुक्रंतद्ब्रह्मतदेवामृ-
तमुच्यतेतस्मिंल्लोकास्थिताःसर्वेतदुनात्येतिकश्चने „ त्यव्यवहितपूर्ववाक्येन "
सूर्योयथें " त्यादिभिः „ नयत्रसूर्योभाती „ त्यंतैरुत्तरवाक्यैरपितथैवनिश्चया-
च्च ॥ तथाचायंवाक्यार्थःयथाएकोप्यग्निःभुवनंलोकंप्रविष्टःसन्रूपंरूपं दार्वादितत्त-
त्स्वाश्रयवस्तुप्रतिसप्रतिरूपस्तत्तदनुरूपाकारोनानाविधोभवति वस्तुतस्त्वग्निरेकएव
तथापरमात्माएकोपि „ तत्सृष्ट्वातदेवानुप्राविश " दितिश्रुत्यास्वरूपतः सृष्टेष्वपिसर्व-
भूतेषुतत्तत्कार्यनिर्वाहायानुप्रविष्टोनानारूपोभाति मूलरूपेणत्वेकएव । एतदेव ( स्कं-
१ अ० २ श्लो० ३२ ) यथाह्यवहितोवन्हिरित्यादिश्रीभागवतादिवचनेषुस्फुट
ति ॥ यथाचएकोपिवायुर्देहंप्रविष्टःसन् त्वादिप्राणोमुदेपानइतिनानाभावमापद्यतेतु-
ल्यमन्यत् ॥ यदिश्रुतिः प्रतिबिंबमभिप्रैष्यत् नहितार्हिवायुर्दृष्टांतत्वेनावक्ष्यत्तस्य-
प्रतिबिंबाभावात् ॥ अतएवत्वदाचार्यैस्तुकठभाष्ये „ रूपंरूपंप्रतिदार्वादिदाह्यभेदंप्रती-
त्यर्थः प्रतिरूपस्तत्रतत्रप्रतिरूपवान्दाह्यभेदेनबहुविधोबभूवएकएवे „ तिव्याख्या-
यि ॥ एतदपिपरोक्तमभ्युपेत्यब्रूमः अस्मदीयास्तुरूपंरूपमितिणमुलंतमाश्रित्य रूप-
यित्वारूपयित्वाप्रतिपुस्तकन्यायेनमूलरूपोबभूवेत्यपिव्याचक्षते एवंसर्वोपादानत्वादे-
वप्राप्तं अंशगत्तदुःखादेःपरस्मिन्संबंधशंकां अव्यवहितोत्तरयासूर्योयथेति ऋचावार-
यित्वाप्रवेष्टव्यान्यपिसृष्टिकालएवततोभिद्यंतेवस्तुतस्तुतदभिन्नान्येवेतिबोधयितुंपठ्य-
ते " एकोवशीसर्वभूतांतरात्माएकंरूपंबहुधायःकरोतितमात्मस्थंयेनुपश्यंतिधीरास्ते-

षांसुखंशाश्वतंनेतरेषा " मिति ॥ एतेनविद्वन्मंडनटीकोक्तमनूद्य ( तन्नयुक्तंरू-
ढयशस्यवाक्यांतरत्वारस्यस्यचभंगापत्तेःमूलरूपत्वोपपादनस्यास्मदुक्तार्थकत्वेऽपिसं-
भवाच्चे ) त्यादिर्वक्ष्यमाणग्रंथोऽपिनिरस्तोवेदितव्यः ( स्कं ६ अ० १४
श्लो० ५४ ) यआत्मसृष्ट्यनिरूपमीहसेइत्यादिव्यवहारात् । सदृशाद्यर्थकप्रतिरू-
पशब्दस्यलक्षणादिनाप्रतिबिंबार्थकत्वकल्पनापेक्षयायौगिकार्थस्यज्यायस्त्वात् । त-
दर्थकत्वेऽपिवाक्यार्थासंगतेःआचार्यैरनंगीकाराच्च ॥ यत्रयोगरूढःशब्दोरूढिमनाद-
त्यकेवलयौगिकार्थेप्रयुज्येतयथापंकजादिशब्दःकीटाद्यभिप्रायेणविशेष्यभूतस्तत्रैवरूढि-
भंगोदोषः । यस्तुशब्दोर्थांतरेरूढोर्थांतरेचयौगिकःतत्रप्रयोगेकामचारः यथामंडपो-
बाल इत्यादिप्रयुज्यते । एवंप्रकृतेरूपंरूपमित्यस्यणमुलंतत्वाश्रयणमप्यदुष्टं वाक्या-
तराणितुस्वरसतोव्याख्यातानिमूलरूपताचसर्वोपादानत्वलक्षणैवश्रुतेरभिमता " ए
करूपंबहुधायःकरोती " त्युक्तेः नतुबिंबत्वस्वरूपा अनभिधानात् तथासतिप्र-
तिबिंबगतकंपादेर्बिंबेअसंबंधेनअंशांशिभावदृढीकरणपूर्वकतच्छंकापाकारिणः " सू-
र्योयथासर्वलोकस्यचक्षु " रित्यस्य । प्रतिबिंबस्यालोकत्वेनबिंबरूपत्वाभावाद्द्ब-
हुत्वेपिबिंबैक्यानपायाच्चै " करूपंबहुधे " त्यस्य । प्रतिबिंबेबिंबस्थित्वयोगेनत-
मात्मस्थमित्यस्य तादृशज्ञानफलस्यचबाधप्रसंगाच्च ॥ ऋक्संहिताकाण्वब्राह्मणादि-
गतंरूपं रूपमितिवाक्यमपितावकतुरीयश्लोकखंडनावसरेविवृतंप्राक् । अथ ( अ०२
पा० ३ सू० ५० ). " आभासएवचेति " सूत्रंविचार्यते तत्रजडजीवपादेजी-
वस्य देहादिवदन्नित्यत्वाभावं चिद्रूपत्वचिद्धर्मत्वे उत्क्रांत्यादिमत्वाणुत्व वि-
सर्पिगुणकत्वानि आनंदाद्यभिव्यक्तौ ब्रह्माभेदव्यपदेशस्यानौपचारिकत्वंतस्यैव
विहितप्रतिषिद्धकर्तृत्वंनतुबुध्यादिरूपोपाधेरिति " नात्माश्रुतेरित्याद्यधिकरणपं-
चकंनक्रमादुपपाद्य " परात्त्व " त्यधिकरणेनभगवदधीनक्रियत्वं समर्थ्य सां-
ख्यनैयायिकादिवत्तस्यनित्यत्वेविभुत्वेचतात्विकाभेदोदुर्घटइतितन्निराकरणाय " अं-
शोनाने " त्यधिकरणंभगवानारब्धवान् ॥ तत्रसूत्रत्रयेण स्वांशत्वंनिर्धार्य-
तेनप्राप्तांतद्गतदुःखादेःपरस्मिन् सबंधशंकांसूत्रद्वयेनव्युदस्यभगवदंशस्यकथमनुज्ञाप-
रिहारविषयत्वमित्याशंकायां चिताग्निहोत्रादिसंबंधात्तस्यतावदितिसूत्रद्वयेनसाधयि-
त्वाभगवदंशस्यप्रश्नमतएवकथंदुःखपापादिप्रवाहेप्रवेशइत्याशंकायामुच्यते " आ-
भासएवचे " ति । यथाऽनाचारिब्राह्मणःसूत्रधारणादिसाम्येऽपिब्राह्मणाभासएव-
ब्राह्मण्यदेवतायास्तत्रतिरोहितत्वात्तद्विरुद्धमद्यादिसंबंधाच्च । तथाजीवश्चेतनत्वसा-
साम्येपि ब्रह्माभासएवआनंदैश्वर्यादितिरोधानात् तद्विरुद्धाद्ध्यासलक्षणाद्देहसंबंधा-
च्च ॥ अत्रहिचकारेणदेहसंबंधादित्यनुवर्तते (अ० १ पा० ३ सू० ४ ) "
प्राणभृच्चे " त्यादावतच्छब्दादित्यादिवत् । इदंचनिबंधे " सदंशस्फूर्ताचाभास-
स्त्व " मित्यादिवदद्भिराचार्यपादैरेतत्सूत्रव्याख्यानेतेदत्तचानुवदद्भिःप्रकाशकारचरणैश्च

ध्वनितं नचासंततिसूत्रेणव्यवधानान्नानुवृत्तिरितिशंक्यंतस्यानुज्ञापरिहारविषयकर्मा-
व्यतिकरोपपादकत्वेन पूर्वसूत्रशेषतयासाक्षाज्जीवस्वरूपधर्मनिरूपकसूत्राणामर्थव्य-
वधानाभावात् । अन्यथापक्षवाचकमात्मपदमपिनानुवर्तेतअसंततिसूत्रेणप्रकाशा-
दिवन्नैवमित्यादिसूत्रैश्चव्यवधानात् । अतआनंदादि तिरोभावाद्देहाध्यासाच्चाभास-
त्वंनतुस्वरूपंतथा ॥ ततएवचद्वैतप्रत्ययोदुःखादिप्रवाहश्च " देवःक्षेत्रेष्वेवमजोयमा-
त्मा भूतेभूतेव्यवस्थित " इत्यादावपिदेहसंबंधादेवनाना·वप्रत्ययउच्यते ॥ विपर्य-
यं प्रतितिरोभावस्यदेहसंबंधस्यचकारणत्वं पराभिधानसूत्रे ( अ०३ पा०२ सू०६ )
" देहयोगाद्वासोपी " तिसूत्रेचस्पष्टं । यथाचब्राह्मणःकर्मणाब्राह्मणाभासतामा-
पन्नोपि प्रायश्चित्तेनब्राह्मण्यनिरुद्धदुरितक्षयात्पुनःसंस्कारादिना ब्राह्मण्यदेवताया
आविर्भावाच्चभूयस्तथैव ब्राह्मणःसंपद्यते । तथ.जीवउक्तहेतोराभासतांप्राप्तोपि शा
स्त्रीयसाधनैरध्यासक्षयादानंदाद्याविर्भावाच्च पुनर्ब्रह्मभावमापद्यतइतिभावः ॥ श्रूय-
तेचेदं " ब्रह्मवेदब्रह्मैवभवती " त्यादौ ॥ प्रतिबिंबपक्षेतूपाधिनाशेतन्नाशध्रौव्या-
त्तस्यब्रह्मभावोदुर्वचः तथाचानेकश्रुतिव्याकोपः अनेनसूत्रेणाभासत्वभ्रमजनकपु-
राणादिवचनान्यप्येवमाभासत्वबोधनपरतयाव्यवस्थापि·ानिवेदितव्यानि । किंच-
स्वरूपतआभासत्वांगीकारे "नात्माश्रुते " रित्यादिपूर्वसूत्रैः समर्थितंसर्वमपिविरु-
ध्यतेप्रतिबिंबस्यालीकत्वेननित्यत्वचिद्रूपत्वयोरयोगात् बिंबस्याक्रियत्वेनोपाधेर्जड-
त्वेनोभयोर्विभुत्वेनजीवस्यात्मनोक्रांत्यादेरणुत्वादेश्चासंभवात् । सत्यालीकयो-
र्भेदेनप्रतिबिंबेनद्गुणसारत्वस्य आनंदाद्यभिव्यक्तेस्तात्विकाभेदस्यचासंगतेः कर्तृत्व-
स्याप्यसिद्धेः " परात्तुतच्छ्रुते " रितिबिंबस्य सक्रियत्वापत्तेः अनुपचारतोंशत्वा-
निष्पत्तेश्च ॥ नचकानिचिदणुत्वादिसूत्राण्यन्यथानीयंतइत्यदोषःशंक्यः तद्व्याख्या-
नस्यसविस्तरंदूषितत्वात्बहूनामनुग्रहस्यन्याय्यत्वात् । अनन्यथानीतविरोधतादव-
स्थ्याच्चयदिचसूत्रकारस्तथाभिप्रेयात् । प्रतिबिंबमेवचेत्येकमेवसूत्रमसंदिग्धशब्द-
घटितंवदेत् नात्माश्रुतेरित्यादीनिनैवसूत्रयेत् । नाणुनंशिइत्याद्येववातदभिप्रेतहेतू-
क्तिपूर्वकंसूत्रयेत् ॥ किंचक्वायमाभासइतिसंदेहानपाय्यान्मायाऽविद्यांतःकरणादिष्वन्य-
तमंतदाधारमपिस्वयंनिर्धारयेत् येनभवादृशांनानाविकल्पानस्युःसंतिह्यधिष्ठानविषये-
त्वन्मतप्रसिद्धाअनेकेपक्षाः तेचावरणभंगसुवर्णसूत्रादिषुसंगृहीतानिराकृताश्च । किं-
चाभासशब्दोनेत्रेऽगुल्यादिसंपर्केणप्रतीयमानबहुचंद्रादिषुप्रसिद्धः । क्वचित्प्रतिबिंबेपि-
दृष्टः । तत्रद्वाभ्यादिषुचोभयविधमप्याभासत्वंतस्योच्यतइत्यनिर्णयः । तथासूत्रा-
र्थात्यंताभिनिवेशवच्छेदवादोच्छेदश्चसूत्रानारूढत्वात् । कथंचित्तस्यापिप्रामाणिक-
त्वसाधनेतुवादानांपरस्परविरोधात्पराहतिर्जीवस्वरूपानिर्धारश्च ॥ ( अ० ३ पा०
२ सू० १८ ) " अतएवचोपमासूर्यकादिव " दितिसूत्रंतु " ( अ० २ पा०
२ सू० ११ ) नस्थानतोपिपरस्योभयलिंगंसर्वत्रही " तिपरस्यब्रह्मणःसविशे-

ष्त्वांनिर्विशेषत्वविचारप्रक्रमेऽस्ति । त्वन्मतेतु " दर्शनाच्चे " त्यंतमेकादशसूत्र-
मेकमेवाधिकरणंअतस्तद्ब्रह्मणएवसूर्यकतौल्यंब्रूते । नतुजीवस्यपूर्वापरसूत्रेषुतदुल्ले-
खाभावात् . ॥ वस्तुतस्तु " अतएवचोपमे " त्येकदेशिमतंसिद्धांतंवदन् स्वय-
मेवानुपदंसूत्रकारोनिराकरोति ( अ० ३ पा० २ सू० १९ ) " अंबुवदग्र-
हणात्तुनतथात्व " मिति । अत्रविशेषस्त्वग्रेवक्ष्यते इहपरेषांव्याख्याने वत्युपमा-
पदयोरन्यतरवैय्यर्थ्यंसूर्यकादिवदित्युपमेतियोजनेपिवैय्यर्थ्यानपायः इतिशब्दाध्या-
हारक्लेशः श्रुतौतादृशानुपूर्व्यभावात्स्वरूपव्यवस्थापकेतिशब्दस्यासंगतिश्चेत्यादि-
ध्येयं । अतोजोवप्रतिबिंबवादे नकाचिदपिश्रुतिःसूत्रंवामानमस्ति ॥ अथ ( अ-
त्रकश्चि ) दित्यादिप्रत्यवस्थानोल्लेखस्त्वविरुद्धप्रायः । इहद्वितीयहेतुभूतंनिरवय-
वत्वंतुस्वारंभकावयवशून्यत्वंविवक्षणीयंतेजःसंयोगेजलनिष्ठशैत्यस्यक्रमिकतिरोधान-
दर्शनेन तन्मात्रा सावयवत्ववादेतुद्वितीयहेतावाकाशोदृष्टांतीकार्यः । निरवयवत्वप-
क्षेनिरवयवाण्वपिरूपादोनिप्रतिबिंबंतइतिव्यभिचारवारणाय पंचमहेतौइतरत्रासम-
वेतत्वे इति गुणक्रियाभेदेइति वा सत्यंतंदेयं सप्तमेऽपितद्वारणायतद्देयं चक्षु-
र्योग्यत्वंवारूपशब्दार्थोविवक्षणीयः तथाचचक्षुरयोग्यत्वादित्येवनिष्कृष्टोहेतुः । एवं-
चोपाधावनवयवारब्धत्वंद्वितीयंविशेषणं । बिंबस्यप्रथमविशेषणे पूर्वोक्तसत्यंतार्थ
सामानाधिकरण्यंविशेषणं । तृतोयविशेषणंचचक्षुर्योग्यत्वमितिज्ञेयं । यत्तुप्रत्यव-
स्थाने ( अंशत्वप्रतिपादकवाक्यवदन्यथाव्याख्येयानी ) तितदसत् । युष्माकंतत्रअं-
शइवांशइत्युपचारादत्यंतक्लेशस्येवयथाह्ययमित्यादिवाक्यव्याख्यानेऽस्माकंक्लेशलेश-
स्याप्यभावात्तत्र" एकस्यनानात्वंदृष्टांतार्थ "इतिव्याख्यानस्य " भेदरूपःक्रियतेबहु-
धादृश्यत " इत्यादिश्रुत्यक्षरैरेवस्वरसतःसिद्धेः ॥अथप्रकृतेस्त्रिगुणात्मकत्वसाधनाया-
जामितिवाक्योदाहरणंतुधाष्टर्यात् इदंवाक्यंहिश्वेताश्वतरचतुर्थाध्याये तैत्तिरीयाणां
नारायणोपनिषदिचकिंचित्पाठभेदेनदृश्यतेतत्र " लोहितशुक्लकृष्णा " मिति लो-
हितादिपदैरजःसत्वतमांसि तवाभिप्रेतानिस्युः । तथाचसति सांख्यमतस्यापिवै-
दिकत्वमापद्येत ॥ वस्तुतस्त्विहलोहितादिपदैस्तेजोऽबन्नान्येवक्रमेणविवक्षितानिअ-
जाशब्देनचाग्न्यादित्यचंद्रविद्युद्रूपं ज्योतिरेवेतिसमर्थितंभगवता ( अ० १ पा० ४
सू० ९ ) " ज्योतिरुपक्रमात्तुतथाह्यधीयतएके " इतिसूत्रे ॥ रोहितादिपदा-
नां तत्तद्वर्णपरत्वंतुश्वेतकेतुविद्यायां " यथातुखलुसोम्येमास्तिस्रोदेवतास्त्रिवृत्त्रि-
वृदेकैकाभवतितन्मेविजानीहि " इतिप्रतिज्ञाय " यदग्नेरोहितंरूपंतेजसस्तद्रूपंयच्छु-
क्लं तदपांयत्कृष्णंतदन्नस्ये " त्यादिनास्पष्टंदर्शितं तच्चवाक्यंशंकराचार्यैरपिलो-
हितादिपदानां गुणपरत्वंपूर्वपक्षीकृत्यतेजोबन्नपरतामेव सिद्धांतयद्भिःशारीरकभा-
ष्ये श्वेताश्वतरभाष्ये चतथैवव्याख्यायतइतितानतिक्रम्यतद्वाक्येत्रिगुणात्मकत्व-

साधकत्वस्योक्तिं धार्ष्ट्यादेव । सत्वंरजइतिप्रथमस्कंधवाक्यात्त्वविशेषेणगुणत्रयं त-
स्याःसित्ध्यतिनतुप्राधान्येनसत्वगुणकत्वं अथ (स्रष्ट्र्याःप्रकृतेरितिकथयतासृष्टिका-
लावच्छेदेन तथात्वंतस्याविवक्ष्यतइतिचेन्न ( स्कं १ अ० २ श्लो० २३ ) स-
त्वंरजस्तमइतिप्रकृतेर्गुणास्तैर्युक्तःपरःपुरुषएक इहास्यधत्ते ॥ स्थित्यादयेहरिविरिं-
चिहरेतिसंज्ञा इतिसत्वस्य स्थितिहेतुत्वकथनात् प्रत्युतरजउद्रेकात्सृष्टिकथनेन
तस्यचात्स्वच्छत्वेनतदाप्रतिबिंबासित्ध्या सृष्टिकालेजीवानुद्भवप्रसंगाच्च । मायांत्विति-
श्रुतिस्तु पूर्वोपक्रांतांदेवात्मशक्तिमेवमायात्वेननिरूपयतिनतुत्रिगुणां अन्यथासां-
ख्यमतस्यवैदिकत्वप्रसंगात् शंकराचार्यैरपितथैवशारीरकभाष्यादौव्याख्यातं । वस्तुत-
स्तुविस्तरेणव्याख्यातामाक् ॥ सत्वेप्रतिबिंबग्रहानुकूलस्वच्छत्वंतुत्वन्मतानुगातिरिक्त-
विदुषांव्यवहारस्याविषयः ॥ गीतास्थमीश्वरवाक्यंच सत्वस्यज्ञानजनकत्वमात्रंब्रूते-
नतुस्वच्छतां नापितज्जनकत्वेनस्वच्छत्वेनच व्याप्तिरस्तियतोन्यथानुपपत्त्यातदनुमी-
येत स्वसंयोगादिसंनिकर्षद्वाराज्ञानजनकताया दार्वादिमलिनविषयेपितत्तज्ज्ञानकर-
णेच दर्शनेनव्यभिचारात् । अतस्तत्रसत्त्वंनिर्मलत्वादितीश्वरवाक्यमुदाहर । व-
स्तुतस्तुतत्रापिप्रकाशानुकूलंनैर्मल्यमेवहेतुहेतुमद्भावनिर्देशाद्बोध्यतेनतुप्रतिबिंबौपयि-
कं मानाभावात् । प्रकाशानुकूलवैमल्यवत्सुवन्हिप्रदीपादिषु प्रतीच्छायायाअदर्श-
नाच्च ॥ नापिनिर्मलपदप्रवृत्तिमात्रेण प्रतिछायानुकूलस्वच्छतैवावगंतुंशक्या सा-
त्विकेनिर्मलंफलमित्यादौ सुखादिषुतत्पदप्रवृत्तिदर्शनेऽपिप्रतिबिंबाग्राहकत्वात् ॥
यच्चात्मावरकत्वंसत्वस्यस्वीक्रियतेतत्रात्मशद्बेनजीवईश्वरोवा । नांत्यः “ अनश्न-
न्नन्य ” इत्यादिश्रुतीनांअनादित्वान्निर्गुणत्वात्परमात्मेत्यादिगुणप्रकरणीयवचसांच-
विरोधेनतत्रसुखसंगज्ञानसंगादीनामशक्यवचनत्वात् ॥ आद्यश्चेदावरणासंभवःप्रति-
बिंबत्वासिद्धिर्वा । रजतपात्रादेः स्वगतप्रतिबिंबानावरकत्वात् । तदावरणीयघटा-
देश्चतद्गतप्रतिबिंबत्वाभावात् । तथाअविद्याप्रतिबिंबभाक्मलिनत्वेपिकेनचिदंशेनशु-
द्धत्वात् सजलकज्जललिप्तपात्रादिवदित्यनुमानेपिदृश्यत्वस्योपाधित्वेनहेतोर्व्याप्यत्वा-
सिद्धिः ॥ प्रतिध्वनेःप्रतिबिंबत्वंतुनिराकरिष्यामः तेनाकाशस्यप्रतिछायानाश्रयत-
यानोक्तोपाधेः साध्याव्यापकत्वं । वस्तुतस्तुतत्रापिजलमेवप्रतिछायाश्रयोनतुकज्जला-
दीतितत्रापिनमलिनेप्रतिबिंबं । तद्वदिहापिसत्वांशमात्रस्यतदाश्रयत्वेतुगुणांतरेतदुपमर्दे-
जीवनाश प्रसंगः आश्रयाभिभवेतदभिभवौचित्यात् ॥ गुणानामन्योन्याभिभावक-
त्वंतुरजस्तमश्चाभिभूयेत्यादिस्मृतिसिद्धं । किंचसत्वमात्राधिष्ठानकस्य जीवस्यस-
त्त्वंसुखेसंजयतीतिवाक्यात्सुखमेवस्यान्नतुकर्मदुःखादिकं प्रमादमोहादिकंवा तथा-
गुणानेतानतीत्यत्रीन् सगुणान्समतीत्यैतान् ब्रह्मभूयायकल्पतेतंभजन्निर्गुणोभवेत् ।
नैर्गुण्यस्थारमंतेस्मगुणानुकथनेहरेःयत्धिपश्यंतिमुनयोगुणापायेसमाहिता इत्यादीनि-
गुणत्रयापायोत्तरमपि जीवस्थितिबोधकानितादृशस्यब्रह्मसंपत्त्यदिबोधकानिच गो-

ताभागवतादिवचांसिपीड्येरन् उपाधिनाशेप्रतिबिंबस्थित्ययोगात् ॥ एवंमायामेतां-
तरंतितइत्यादिविरोधोप्यनुसंधेयः किंचप्रहिलतयातस्यांप्रतिच्छायौपयिकत्वच्छेता-
भ्युपगमेसदंशभूतानां प्रतिबिंबार्हसवर्वस्तूनां तत्रप्रतिबिंबोद्भवोदुर्निवारः नहिदर्पणा-
दिकंमनुष्यप्रतिछायाश्रयोभवतीतिगवाश्वादीनिप्राण्यंतराणिघटादयोजडावातत्रनप्र-
तिबिंबंते । तथाचसतिसर्वस्यसर्वदाप्रत्यक्षापत्तिः तस्याविभूत्वात् अतिदवीयसिभागे-
प्रतिबिंबानंगीकारेपिघटनिकटदेशेषुपरितस्तत्प्रतिबिंबोपलंभेबाधकाभावात् ॥ नचत-
स्याअदृश्यत्वमेवतद्गततत्प्रतिबिंबोपलंभेबाधकंशंक्यं त्वन्मतेआकाशस्याप्रत्यक्षत्वेपि
तत्रप्रतिछायातयातत्त्वाभिमतस्यप्रतिध्वनेरिवमायागतघटादिप्रतिबिंबानांप्रत्यक्षत्वोप-
पत्तेः शब्दवद्बिंबभूतस्यघटादेः प्रत्यक्षयोग्यत्वेनतत्प्रतिबिंबेषुतद्योग्यतावश्यंभावा-
च्च नचाकाशस्यससाक्षिकप्रत्यक्षविषयत्वान्नतौल्यमितिशंक्यं तथासति दर्पणप्र-
त्यक्षेतद्गतप्रतिबिंबप्रत्यक्षनियमवदाकाशस्यतादृशावसर एव प्रतिध्वनिप्रत्यक्षनिय-
मआपद्येतेतितमस्तोमसमवरुद्धगिरिगुहाकूपादिषुप्रतिशब्दानुभवानुपपत्तिः ॥ क-
थंचित्ससाक्षिकप्रत्यक्षंचमायायामपिशक्यवचनं एवंतत्रसर्वप्रतिबिंबावश्यंभावे स-
र्वेषां सर्वज्ञतास्यात् यथाहुरावरणभंगकाराः " अरूपस्यज्ञानस्यप्रतिबिंबोविद्या-
बुद्ध्योः शुद्धत्वांगीकारेणाभ्युपगतश्चेत्स्वरूपाणां सदंशानांबाह्यानांघटादीनामांतरा-
णांशिरांत्रादीनांचतत्रतत्रप्रतिबिंबोनिर्बाधःनिर्बाधेचप्रतिबिंबेतत्समानाधिकरणानामवि-
द्यायांप्रतिबिंबितानांव्यापकानां जीवानां सर्वेषां सर्वसंसर्गेद्विगुणीकृत्य जातेसर्व-
तादात्म्यापन्नस्यब्रह्मणइवैतेषामपिसर्वसंसृष्टत्वात्साक्षित्वाच्च वृत्तिविनैवस्वरूपचैतन्ये-
नसर्वावभासकतायाः शक्यवचनत्वेनब्रह्मवत्सर्वेषां सर्वज्ञतास्यात् नचांतःकरणभेदे-
नप्रमातृभेदात्तदनापत्तिःव्यापकत्वेनसर्वेषांसर्वांतःकरणसंसृष्टतयाप्रमातृभेदस्याशक्य-
वचनत्वात्संसर्गतौल्येएकस्यैवांतः करणवैशिष्ट्यंनापरस्येत्यत्रहेतोरभावात् अदृष्टादी-
नांहेतुनाकल्पनस्य पूर्वप्रकरणएवनिरस्तत्वात् " इत्यादि ॥ विस्तरस्तुतत्रैवाव-
धेयः एतावताप्रथमहेतोःस्वरूपासिद्धिःपरिहृतावेदितव्या ॥ द्वितीयहेतुश्चस्वारंभकाव-
यवशून्यत्वंविवक्ष्यते । स्वंचपक्षसपक्षौ । अतोमायायास्त्रिगुणत्वेऽपिब्रह्मवदनादि-
त्वांगीकारेण दर्पणादिषुस्वावयवारब्धत्ववत्तस्यांगुणारब्धतायावक्तुमशक्यत्वात् तादृ-
शहेतुसत्वंतस्यामस्त्येव तस्मान्नायमपिस्वरूपासिद्धः ॥ प्रतिध्वनेः प्रतिबिंबत्वाभा-
वाच्चद्वितीयतृतीयचतुर्थानसव्यभिचाराः । स्वारंभकावयववैशिष्ट्यरूपंविवक्षितसाव-
यवत्वंतुमायाकाशयोर्नैवास्तिवाय्वादिवत्तदारंभकपरमाण्वाद्यभावात् ॥ घटमठाद्युपा-
ध्यवच्छेदेनआकाशांशानामनुभवात्स्वीक्रियमाणंतस्यसांशत्वंतु प्रतिबिंबग्रहेअप्रयो-
जकं एकांशेनस्थितोजगदित्यादिभिर्ब्रह्मणोऽपितथात्वेनतत्रतत्प्रसंगात् । व्योम्नउत्प-
त्तिमत्त्वंतु ( अ० २ पा० ३ सू० १ ) " नवियदश्रुते " रित्यधिकरणसिद्ध-
त्वादिष्टमेव । तथाप्रकृतेरपि ( स्कं ११ अ० २४ श्लो० ३ ) वाङ्मनोगो-

परानीतंद्विधासमभवद्वृहत् तयोरेकतरोत्यर्थः प्रकृतिःसोभयात्मिका ज्ञानंत्वन्यतमो-
भावः पुरुषःसोभिधीयतेइतिश्रीभागवतैकादशस्कंधादिवचनानुरोधादुत्पत्तिरंगीकार्या ।
तथाचानादित्ववादभंगः ॥ तुरीयहेतुतयोक्तमपरिच्छिन्नत्वंचसकलमूर्तद्रव्यसंयोगित्वं-
वातद्वन्निष्ठात्यंताभावाप्रतियोगित्वं इतिपराभिप्रेतमेवविवक्ष्यते नतुदेशकालवस्त्वप-
रिछिन्नत्वलक्षणं । अतोब्रह्मापेक्षयाव्याप्यत्वेपितयोरुक्तरीतिकापरिछिन्नतायाःसुस्थि-
रत्वाद्वितीयचतुर्थयोर्नस्वरूपासिद्धिरपि । यद्यपिविकारावर्तिसूत्रमन्यार्थकं तथापित्व
द्भाष्यानुसारेण नवतदुपन्यासोयोग्यइतिकृतंप्रासंगिकेन ॥ स्वच्छत्वस्यैवोपाधौप्रति-
बिंबग्रहप्रयोजकत्वे स्वच्छरूपेपिप्रतिबिंबापत्तिर्दुर्निरसा ॥ मात्रपदैवकारयोरुभयो-
र्ग्रहणंपुनरुक्तियासाश्चित्यं । तस्यस्वच्छत्वे प्रमाणंतु तद्विशेष्यकस्वच्छत्वप्रका-
रकानुभवएव । अन्यथामलिनत्वेऽपिकिंप्रमाणंस्यात् । अतएवस्वच्छद्रव्यगतस्य
तस्यतथात्वंस्वमुखेनांगीक्रियतेनचाधाराधेयगतयोः प्रतिबिंबयोर्व्यतिरेकनियमः शं-
क्यः महामुकुरस्यैकदेशेऽल्पदर्पणस्थापनेतत्रोभयत्रप्रतिबिंबदर्शनात् । यावांस्त्वाधार-
मुकुरांशआधेयमुकुरांशेनाछाद्येततावत्येवनप्रतिबिंबं एवंस्फटिकभाजनांतर्भागस्यां-
भसाछादनाज्जलमात्रे तत्रप्रतिबिंबं नतथाद्रव्यरूपयोरन्यतरस्यान्यतराछादकत्वंसं-
गच्छते आच्छन्नस्याप्रत्यक्षप्रसंगात् । नचाच्छादकद्रव्यस्यस्वच्छतयानदाच्छन्नरू-
पस्योपलब्धिर्जलपिहितपात्रतलस्येवस्यादितिवाच्यं मलिनयोर्दार्वादितद्रूपयोराच्छन्ना-
न्यतराप्रत्यक्षप्रसंगस्यदुर्निवारत्वात्। मलिनयोस्तयोरनाच्छादकत्वंस्वच्छयोरेवाच्छा-
दकत्वमितिनियमेमानाभावात् अतःस्फाटिकपात्रभागवद्रूपस्याच्छन्नत्वाभावात् । त-
त्रापिप्रतिच्छायाकिंनस्यात् । रूपस्यद्रव्यादपृथक्त्वंतुनतवसुवचं द्रव्यत्वेनगुणत्वेनच-
भेदात् । अन्यथात्वदिष्टाधाराधेयभावस्याप्यसिद्धेश्च प्रभादावधिकदेशवृत्तित्वस्या-
पिदर्शनाच्च । एतेनगुणांतरक्रियादिषुचतदापत्तिर्दर्शिताज्ञेया ॥ अथस्वच्छत्वमात्र-
स्यप्रयोजकत्वमपहायगुणाश्रयनिष्ठस्यतस्यतथात्वंनतुगुणक्रियानिष्ठस्येतिवद । ते-
नगुणत्वादेवप्रभायांतदप्रसंगेप्रभायामिवेतिदृष्टांतोकिंचित्करः । सत्वगुणेचप्रतिबिंबाप्रस-
क्तिर्गुणत्वाविशेषात् गुणाश्चतुर्विंशतिरेवेतितार्किकोक्तपरिभाषायाद्रव्यत्वपरिभाषावत्
त्वयानादरणीयत्वात् ॥ वायुकालदिशानांप्रत्यक्षाविषयत्वेनतत्रस्वच्छत्वास्वच्छत्व-
योरेकतरस्याप्यनिर्णयात् । तत्रास्वच्छत्वोक्तिर्निर्मूला नचफलबलेन तत्कल्प्यंनी-
रूपत्वादेव प्रतिबिंबाभावसिद्धेः प्रतिबिंबग्रहप्रयोजकस्वच्छतायाआत्मन्यनंगीकारे
तयान्यथानुपपत्याकल्प्यमानेनत्वाश्रयेणद्वैतापत्तिः । ननुतस्याभ्रमकल्पितत्वान्नायं-
दोषइतिचेत्कस्यासौभ्रमः । नतावद्ब्रह्मणः ज्ञानघनत्वात् नापिजीवस्य स्वच्छतांवि-
नाप्रतिबिंबरूपस्यतस्यासंभवेनतंविनाचतस्याअसंभवेनउभयासिद्धिप्रसक्तेः नापितद-
तिरिक्तस्यअचेतनत्वान्मिथ्यात्वाभिमानाच्च ॥ जलक्षित्योरितिघ्यंतस्यपूर्वनिपाता-
भावोविचार्यः ॥ पृथ्वीजलयोरेवतदाश्रयत्वमितिमतंतुप्रत्यक्षानुरोधात नभःप्रभृती-

नांप्रतिबिंबग्राहिताबोधकश्रुत्याद्यनुपलंभेनश्रुत्याद्यविरुद्धत्वाच्चत्वन्मतापेक्षयारमणीय मेववियदादिषुविजातीयास्वच्छता आत्मादिषुचतद्विजातीया सावायुकालदिगादिषु-चनोभयविधापिसेत्यादिनिर्मूलानेकनियमक्लेशगौरवविरहात् ॥ प्रतिध्वनेःप्रतिबिंबत्वे-मानाभावान्नव्यभिचारः नचसादृश्यानुभवएवमानमितिशंक्यं गोगोगो इतिमुहु-र्मुहुरुच्चारणे उत्तरोत्तरगोशब्दानांपूर्वपूर्वप्रतिबिंबत्वापत्तेः । तथाचसति ( अ० १ पा० १ सू० २० ) " संख्याभावा " दित्यादिजैमिनिसूत्रा-दिविरोधः ॥ किंचप्रतिबिंबंहियावद्बिंबसान्निध्यंदर्पणादौप्रतीयतेनतुतन्नाशोत्तरप्र-तिध्वनिश्च शब्दस्थितिकालेनैव प्रतीयते तत्ध्वंसोत्तरमेवचप्रतीयतइति बिंबस्थि-त्यधीनस्थितिकत्वस्यप्रतिबिंबताविनिगमकस्याभावान्नास्यतथात्वंशक्यं ॥ नच-प्रतिशब्दकाले शब्दस्थितिवाच्यात्रिक्षणावस्थायित्वाभिमानभंगात् शब्दद्वयश्रवण-प्रसंगाच्च ॥ नित्यत्ववादिनामपिशब्दतिरोधानेनतत्प्रतिबिंबानुपपत्तिः किंचमृदं-गादेरुपर्यास्फालनेतस्यांतः वीणादेरुपरितनधातुतंतुवादने तद्दंडतुंबिफलादिष्वंतरुप-रितनशब्दसजातीयःकंचित्कालंस्थायीशब्दोनुभूयतेसप्रतिध्वनिर्नवा आद्येचर्मकाष्ठा-दिना व्यवधानात्तदनुदयप्रसंगः बिंबदर्पणयोःकुड्यादिनाव्यवधानेतदसंभवनिय-मदर्शनात् तवशब्दविसर्पित्वासहिष्णुतयातत्रतत्प्रवेशस्यवक्तुमशक्यत्त्वात् ॥ द्विती-येतुतत्रसदृशतमशब्दांतरवत्कूपादावपि सदृशतरं शब्दांतरमेवोपपत्स्यते । नचस-रूपोपाधिस्थलएवाव्यवधानं कारणमितिवाच्यं अप्रयोजकत्वात् द्वयैरेवोपाधित्व-वादिना नीरूपेप्रकृतोपाधितया एवानभ्युपगमाच्च ॥ एवंप्रतिबिंबत्वाभावादेवभ-गवान् ( स्कं० ११ अ० २८ श्लो० ५ ) छायाप्रत्याव्हयाभासा असंतो-प्यर्थकारिणइतिप्रत्याव्हयंप्रतिबिंबाद्भेदेन निर्दिशति ॥ तस्मान्मायिकंशब्दांतरमेवप्र-तिध्वनिः असत्वनिर्देशात् ऋतेर्थंयत्प्रतीयेतेतिलक्षणानुमतेश्च । नचशब्देमायिकत्वम-दृष्टचरं नटकल्पितपारावतादीनांपुराणवर्णिताऽसुरमायोत्पन्नरक्षसांस्वामिकगजा-दीनांचशब्देषुतथात्वनिश्चयात् अतएवसंध्यसृष्टेर्मायामात्रत्वंसिद्धांतितंसूत्रकृता । प्र तिध्वनिविषयेविस्तरस्तु साधनाध्यायप्रकाशसर्वार्थनिर्णयावरणभंगादिषुद्रष्टव्यः ॥

किंचयदिप्रतिध्वनिराकाशेप्रतिबिंबएवेत्येवतवाग्रहस्तर्हिगगने-प्रतिबिंबग्रहोपयोगिस्वच्छत्वमपित्वयावश्यमेवस्वीकरणीयंत-थाचघटादीनामपिप्रतिबिंबंतत्रकुतोनस्यात् नहिदर्पणादिषु-घटस्यैवप्रतिबिंबंनपटस्येतिवक्तुंशक्यतेयदिचाकाशेगुणग्रहोप-योगिस्वच्छत्वंविजातीयमेवस्वीक्रियतेतदारूपादीनामपिप्रति-

विंबं तत्र कुतो न स्यात् नच तद्वृत्तिगुणस्यैव तत्र प्रतिबिंबमिति वाच्यं यदि शब्दस्याकाशगुणत्वस्वीकृतं तर्हि तथैव प्रतिध्वनेरप्याकाशगुणत्वसंभवे प्रतिबिंबत्वस्वीकारो निरर्थकः नच प्रतिध्वनेर्वर्णस्य प्रतिबिंबत्वमंतरानुपपत्तिरिति वाच्यं तत्रापि ध्वनेरेव वर्णाभिव्यंजकतासंभवे प्रतिबिंबत्वस्वीकारो निरर्थकः नचा " ष्टौ स्थानानि वर्णाना " मिति पाणिनीयशिक्षाविरोध इति वाच्यं तस्य प्रथमाभिव्यक्तिप्रतिपादनपरत्वात् तेषां चिरंकालावस्थितौ ध्वनेरेवोपयोगात् यथानुभवस्य संस्कारजनकत्वेपि तस्य चिरकालस्थितावभ्यासादीनामुपयोगः वागिंद्रियस्य शब्दनिमित्तत्वं नतूपादानत्वं एतेन वागिंद्रियस्य निष्फलत्वापत्तिः प्रत्युक्ता नच स्वस्मात् पूर्वतो भेर्यादिध्वनिसमुत्पत्तौ नियमतः पश्चिमदेशप्रतिध्वनिः श्रूयते तदुत्पत्तिपक्षे तन्न संगच्छते यदि प्रतिध्वनिरुत्पद्यते तर्हि किंचिद्देशावच्छेदेनैवोत्पद्यत इति वक्तव्यं तर्हि तद्देशात्पश्चिमतःस्थितस्य पूर्वतस्तत्प्रतीतिः स्यान्न चैवमस्ति प्रतिबिंबपक्षे तु स्वव्यवहितदेशे तत्कल्पनानुपपत्तिरिति वाच्यं तादृशनियमे मानाभावात् उत्पत्तिपक्षेपि कल्पनासंभवाद्दोषाभावः ॥ किंच प्रतिबिंबं व्यवधानेन जन्यत इत्यत्रापि यदि बिंबव्यवधाने जन्यत इत्युच्यते तदा ब्रह्मप्रतिबिंबं जीव इत्युक्तिरसंगता ब्रह्मणो व्यापकत्वेन तद्व्यवहितस्य कस्याप्यभावात् अन्यस्य व्यवधाने जन्यत इति चेत् कुड्यादिव्यवहितोपि दर्पणादौ प्रतिबिंबापत्तिः एवं च गगने शब्दप्रतिबिंबसंभवात् नीरूपस्य निरवयवस्य प्रतिबिंबं संभवति ॥ नच नीरूपस्यापि रूपस्य प्रतिबिंबदर्शनान्नैवमिति वाच्यं रूपस्य द्रव्यानतिरेकात् केवलरूपस्य प्रतिबिंबाभावाद्रूपवद्द्रव्यस्यैव सर्वत्र-

प्रतिबिंबदर्शनात् ॥ तथाचरूपवद्द्रव्यत्वाभावादेवात्मानप्रतिबिं-
बते नचजलेआकाशस्यप्रतिबिंबदर्शनात्तादृशनियमोव्यभिचा-
रीतिवाच्यं प्रभामंडलस्यैवसकलगगनव्याप्तस्यरूपवतः प्रतिबिं-
बसंभवेतत्राकाशप्रतिबिंबकल्पनायांमानाभावात् ॥ नचगांभी-
र्य्यप्रतीतिरेवमानमितिवाच्यंप्रभायाअपिगगनव्याप्तायागंभी-
रत्वात्गांभीर्य्यविशिष्टप्रभामंडलप्रतिबिंबेनजलेपिगांभीर्य्यप्रती-
तिसंभवात्अतएवकुड्यादिलग्नप्रभामंडलेस्यजलेप्रतिबिंबेपि-
नगांभीर्य्यप्रतीतिःकिंतुगगनप्रसृतस्यैव कुड्यादिलग्नस्यागंभीर-
त्वादन्यस्यचगंभीरत्वात्त्वन्मतेचाकाशप्रतिबिंबस्यतत्रापिसत्वे-
नकुतोनगांभीर्य्यंप्रतीयते ॥ तथाचानयाकुसृष्ट्यापिनगगन-
स्यप्रतिबिंबसंभवः किंचात्मनोमायारूपप्रतिबिंबोपाधेरंतर्बहि-
श्चसर्वत्रव्याप्तत्वान्मायायांतत्प्रतिबिंबंकथंस्यात्अन्यथाजलग-
र्भितसिकताराशेरपिस्वमध्यस्थितजलेप्रतिबिंबापत्तिस्तथाचा-
यंप्रयोगः आत्मानप्रतिबिंबते स्वव्याप्तप्रतिबिंबोपाधिकत्वात्
यद्यत्स्वव्याप्तप्रतिबिंबोपाधिकंभवति तत्तदुपाधौनप्रतिबिंबते
यथाजलगर्भितसिकताराशिः स्वव्याप्तमायारूपप्रतिबिंबोपा-
धिकंचब्रह्म तस्माद्ब्रह्मनप्रतिबिंबतेइत्यनुमानेनापिब्रह्मणःप्रतिबिंबा-
भावसिद्धिः ॥ एतेनदूरत्वादीनांप्रतिबिंबंप्रतिपादयन्नपास्तः त-
त्रापिबहुतरमूर्त्तप्रत्यक्षाधीनबहुतरमूर्त्तसंयोगवद्द्रव्यज्ञानकालि-
कद्रव्यस्यैव परत्वादिव्यवहारजनकत्वेन तादृशव्यवधायक-
मूर्त्तद्रव्यसहिततत्पदार्थप्रतिबिंबेनैव दूरत्वादिव्यवहारोपपत्तौ
तद्भिन्ने दूरत्वादिप्रतिबिंबे मानाभावात् आकाशवदात्मनोप्यप-
रिच्छिन्नत्वादात्मनः प्रतिबिंबं न युज्यते नचाकाशस्यापि

परिच्छिन्नत्वाद्दृष्टांते हेत्वभावात्साधनवैकल्यमिति वाच्यं आकाशस्य परिच्छिन्नत्वे परिच्छेदत्रयशून्यत्वेन ब्रह्मणः प्रतिपादनं न संगच्छेत तथाहि यदि गगनमपरिच्छिन्नं तदा देशपरिच्छेदशून्यत्वप्रतिपादने यथा देशपरिच्छेदशून्यस्याकाशस्यानित्यत्वं तथैव ब्रह्मणोप्यनित्यत्वापत्तिरतःकालपरिच्छिन्नत्वमपि सार्थकं भवति यदि चतस्य परीच्छिन्नत्वं स्वीकृतं तदा देशापरिच्छिन्नस्य कालपरिच्छिन्नस्य कस्यचिदप्यसंभवाद्दृष्टांतासिध्द्या ब्रह्मणि कालपरिच्छिन्नत्वप्राप्त्यसंभवात्तन्निषेधोनिरर्थक एव स्यात् प्राप्तं हि प्रतिषिध्यत इति न्यायात् ॥ किं च " आकाशवत्सर्वगतश्च नित्य " इति श्रुतिविरोधोप्याकाशस्य परिच्छिन्नत्वस्वीकारे स्यात् तत्र सर्वपदसंकोचे प्रमाणाभावात् ॥ यत्तु आलानप्रतिबिंबतेअपरिच्छिन्नत्वादित्यनुमानेस्वयमेवाकाशस्यप्रतिबिंबंस्वीकृत्यव्यभिचारस्योद्भावनंतथैवाकाशपरिच्छिन्नत्वंस्वीकृत्यसाधनवैकल्यसाधारण्ययोरुद्भावनंतदपिकथकसंप्रदायविरुद्धं नहिप्रतिवादिमतप्रसिद्धिमात्रेणहेत्वाभासोद्भावनेहेतोर्दुष्टतासंभवतिअन्यथात्वयामिथ्यात्वसिध्यर्थंप्रयुक्तेविमतंमिथ्यादृश्यत्वात्परिच्छिन्नत्वाद्वेत्यनुमाने परेणमिथ्यात्वाभाववत्वेननिश्चितेजगतिदृश्यत्वस्यसत्वेनसाधारण्यस्य अपरिच्छिन्नत्वेननिश्चितेगगनेपरिच्छिन्नत्वहेतोरभावेनचस्वरूपासिध्देरुद्भावनेचतवापिमिथ्यात्वासाधनप्रत्याशाजगतिदत्ततिलांजलिःस्यात्

## टीका

सहस्राक्षे नचत्वन्मतइत्यादिं हेत्वभावोसाधारण्यं चेत्यंतं भागंनिरस्यंति । **किंच-यदिप्रतिध्वनिरित्यादिना तिलांजलिःस्यादित्यंतेन** अत्रप्रायेणसर्वंनिगदव्या-ख्यातं विशेषंतुवक्ष्यामः **रूपवद्द्रव्यस्यैवेति** ॥ वस्तुतस्तुचक्षुर्योग्यस्यैवप्रतिबिंबमि-तिवक्ष्यामः तेनास्माकीनग्रंथकृतां रूपवदेवप्रतिबिंबते नीरूपंनप्रतिबिंबतं इत्या-द्युक्तौरूपवन्नीरूपशब्दौचक्षुर्योग्यतदयोग्यपरावेववेदितव्यौ । एवंसतिनैयायिकसम-तद्रव्यत्वपरिभाषानादरेऽपि रूपादेः प्रतिबिंबसत्वेऽपिचनक्षतिः । **रूपवतइतिचा-क्षुर्योग्यस्यवस्तुतः** प्रभायारूपाविशेषत्वात् ॥ **तत्रापिबहुतरेत्यादि** । जलादौप्र-तिबिंबितप्रभामंडले दूरत्वप्रत्ययेसत्यपिदूरत्वंदैशिकपरत्वमेव ॥ त्वांस्मिस्तव्द्यवहार-श्वबहुतरमूर्तविषयकप्रत्यक्षाधीनंयद्दूरवस्त्वनुयोगिकबहुतरमूर्तप्रतियोगिकसंयोगव-त्तयाताद्दशद्रव्यस्यज्ञानं तज्ज्ञानकालिकद्रव्येणैवजन्यतइत्यर्थः । **तत्पदार्थेति** । प्रभामंडलादिपदार्थेत्यर्थः **तद्भिन्नइति** । बहुतरमूर्तसंयोगितया प्रतीयमानप्रभा मंडलप्रतिबिंबादतिरिक्तइत्यर्थः । **आकाशस्यपरिछिन्नत्वइत्यादि** । यद्यपि-सिद्धांतेवस्तुतआकाशस्यपरिछिन्नत्वमेवनिबंधादिषु तस्यचलोकदृष्टयाब्रह्मदृष्टांतता-

---

## सहस्राक्ष.

नच त्वन्मते वाय्वादावपि शब्दस्य सत्वेन शब्दान्तरस्य वाय्वादिगुणत्वेन प्रतिध्वनेरेवा-काशगुणत्वं तथाच तस्याकाशेएव समुत्पत्या कथं प्रतिबिम्बत्वमिति वाच्यम् ॥ नैयायिकादि-रीत्या अङ्गीकारे द्वितीयादिशब्दानांसामान्याकाशस्यतस्याअनंगीकारेवर्णात्मकशब्दानां वाग्रू-पाकाशस्य गुणत्वात् ॥ दन्ताद्यभिघातजन्यशब्दानामनभिव्यक्तत्वेन वर्णानां दन्तादिजन्यत्वा-योगात् ॥ शास्त्रविरोधाच्च ॥ नच वागिन्द्रियं नाकाशःकिन्तु तद्विकारइतिवाच्यम् ॥ प्रकृ-तिविकृत्योरभेदात् ॥ प्रतिबिम्बशब्दस्यैवाकाशगुणत्वस्वीकारे बाधकाभावाच्च ॥ नहि प्रतिबिम्ब-त्वप्रयोजकसामग्र्याजन्यत्वे तत्रोत्पत्तिमात्रेण तद्गुणत्वेनवा प्रतिबिम्बत्वाभावःशक्यनिश्चयः ॥ प्रतिवर्णस्य प्रतिबिम्बत्वमन्तराऽनुपपत्तेश्च ॥ नच वर्णाभिव्यञ्जकध्वनिनिमित्तकप्रतिध्वने-र्मूलध्वनिवदेव वर्णाभिव्यञ्जकत्वेन तदुपपत्तिरितिवाच्यम् ॥ अष्टौस्थानानिवर्णानामिति पाणिनीयशिक्षाविरोधात् ॥ तत्प्रामाण्येन तत्तस्थानेवाय्वाभिघातजन्यध्वनेरेव वागिन्द्रिये वर्णाभिव्यञ्जकत्वात् ॥ तन्निमित्तकध्वनेरपि व्यञ्जकत्वे प्रमाणाभावात् ॥ वागिन्द्रियस्य निष्फलत्वापत्तेश्च बहिराकाशवदन्तराकाशएव वर्णोत्पत्तिसंभवात् ॥ किञ्च स्वस्मात्पूर्वतोभे-

कथनेनस्वीक्रियतेतथापि तन्मतेतदसंगतमितिप्रदर्शकएवायंग्रंथः । **ब्रह्मणःप्रतिपादनमिति** । " सत्यंज्ञानमनंतंब्रह्म " त्यादिस्थलेतावकोपनिषद्भाष्यादिषुप्रतिपादनमित्यर्थः । **अकालपरिच्छिन्नत्वमिति** अनंतपदादिनाब्रह्मणिकालपरिच्छेदस्यापि निबंधनमितिभावः । **तस्यपरिच्छिन्नत्वमिति** । आकाशस्यतदस्मद्रीत्यास्वीकृतंस्यादित्यर्थः । **प्रासंहीत्यादि** । अतएवजैमिनिनाऽर्थवादाद्यधिकरणेषु" नांतरिक्षेनदिवी " त्यादावभागिप्रतिषेधोदोषआक्षिप्यते । किंचेत्यादिनाश्रुतिविरोधोऽपियक्षबलिन्यायादेवोपन्यस्तः वस्तुतस्तुलोकबोधनायतद्बुध्यनुसारेणैवदृष्टांतःश्रुत्योपात्तः नन्वेवंसिद्धांते व्योम्नःपरिच्छिन्नत्वे अपरिच्छिन्नत्वादितिषष्ठहेतुर्दृष्टांताभावादसन्स्यादितिचेन्न कालस्यतत्रदृष्टांततासंभवात् व्यतिरेकदृष्टांततोऽप्यसाधारणता-

---

र्थादिध्वनिसमुत्पत्तौ नियमतः प्रतिध्वनिः पश्चिमतएवश्रूयते तदुत्पत्तिपक्षे नसंगच्छते ॥ तथाहि ॥ यद्याकाशे प्रतिध्वनिरुत्पद्येत तर्हि किञ्चिद्देशावच्छेदेनैव तद्वाच्यं तथाच तद्देशात्पश्चिमतः स्थितस्य पूर्वतस्तत्प्रतीतिः स्यान्नचैवमस्ति प्रतिबिम्बत्वे तु स्वव्यवहितदेशे-एवतत्कल्पनान्नानुपपत्तिः ॥ किञ्च प्रतिबिम्बातिरिक्तं कार्यं मणिमन्त्रादिभिन्नसामग्र्या व्यवहितदेशे न जन्यतेइति कथंप्रतिध्वनिर्नशब्दस्यच्छाया ॥ ३१ ॥ गगने शब्दप्रतिबिम्बदर्शनादेव पञ्चमोपिव्यभिचारी ॥ रूपादेःप्रबिम्बदर्शनाच्च ॥ नच द्रव्यत्वे सतीतिहेतोर्विशेषणान्नव्यभिचारइतिवाच्यम् ॥ आत्मनोगुणाद्यभावेनद्रव्यत्वासिद्धौस्वरूपासिद्धेः ॥ द्रव्यत्वपरिभाषायानिर्मूलत्वेनशास्त्रार्थाव्यवस्थापकत्वाच्च ॥ जले आकाशप्रतिबिम्बदर्शनाद्दृष्टान्ते हेतोरसिद्धेश्च ॥ यत्तु तद्गतप्रभामण्डलस्य जले प्रतिबिम्बोनाकाशस्येति ॥ तन्न ॥ गाम्भीर्यबुद्ध्यभावप्रसङ्गात् ॥ नहि गाम्भीर्यमवकाशविशेषातिरिक्तं जानुदघ्ने जले वक्तुं शक्यते ॥ प्रमाणाभावात् ॥ बहुदेशावच्छिन्नप्रभाप्रतिबिम्बेन गाम्भीर्यव्यवहारइतिचेन्न ॥ देशस्योपलक्षणत्वे यत्रयत्र प्रभामण्डलप्रतिबिम्बस्तत्रतत्रगाम्भीर्यप्रतीत्यापत्तिः ॥ नचैवमस्ति ॥ ममतुयत्राकाशप्रतिबिम्बस्तत्र गाम्भीर्यभानं यत्रतु नतत्प्रतिबिम्बस्तत्र नतद्भानमितिनान्यवस्था ॥ प्रतिबिम्बाभावप्रयोजकंतु स्वगतमुपाधिगतं वाकिञ्चिदुभाभ्यांकल्पनीयम् ॥ देशस्य विशेषणत्वे घट्टकुटीप्रभातन्यायः ॥ देशस्याकाशानतिरिक्तत्वात् ॥ दिग्रूपत्वे तु तत्कुड्यन्तरप्रभातन्यायः ॥ सएववा ॥ दिशआकाशानतिरिक्तत्वात् ॥ एवं दूरत्वधीरप्याकाशप्रतिबिम्बेनैव समर्थनीया ॥ तदेतदाह ॥ गाम्भीर्यस्येति ॥ इदं दूरत्वस्याप्युपलक्षणम् ॥ ३२ ॥ अतएव षष्ठोऽपिव्यभिचारी नचोपाध्यनन्तर्गतस्यैव प्रतिबिम्बइति कथं विभोराकाशस्यात्मनश्च प्रतिबिम्बइतिवाच्यम् ॥ अप्रयोजकत्वादनन्तर्गतत्वस्य ॥ तद्विकारस्य न तत्र प्रतिबिम्बइति नियमेनैव रेखा प्रतिबिम्बाऽनवकाशात् ॥ आकाशस्योक्तरीत्या परिच्छिन्नत्वे तु दृष्टांन्ते हेत्वभावो ऽसाधारण्यंच ॥

वारणसंभवाच्च । किंचलौकिकप्रत्यक्षदृष्ट्याऽपरिच्छिन्नोप्याकाशोयदिसर्वथानैवप्रति-
बिंबते कथंतर्हितत्त्वतोऽपरिच्छिन्नः परमात्माप्रतिबिंबेतेत्याशयादंबुन्यंबरप्रतिबिंबमेव-
प्रत्यषेधन्प्रतिषेत्स्यंतिच **परेणैवेति** । वैशेषिकादिना ॥ शिष्टंस्पष्टं ॥ अत्रापि-
मूलाशयप्रकाशनायकिंचित्स्वातंत्र्येणोच्यते ॥ तत्रप्रतिध्वनेः प्रतिबिंबत्वेबाधकानि-
कानिचित्प्रागेवमयात्वतंत्रतयापिदर्शितानि ॥ अथपरोक्तंविमृश्यतेतत्रत्वयांपूर्वपक्षेरू-
प्यमाणंप्रतिध्वनेरेवाकाशशब्दत्वंतुत्वदीयाएवसिध्धांतयंति यथाहविद्यारण्यः प्रतिध्व-
निर्वियच्छद्बोवायौबीसीतिशब्दनमित्यादि ॥ व्याचक्षतेच " आकाशेतावच्छब्दएवगुणः
सचप्रतिध्वनिरूप " इति अतस्तद्दूषणंनास्माभिरवश्यंसमाधेयं तथाप्युक्तं
निरस्यते तत्रवीचितरंगन्यायेनकदंबमुकुलन्यायेनचनैयायिकाभिमताशब्दांतरोत्प-
त्तिस्तुनावयोः संमतेतिकृतंप्रासंगिकनिरासेन वर्णात्मकशब्दानांबाभूपाकाशगुण-
त्वोक्तिरसंगता तालुदंतादिषुजायमानत्वेनतद्गुणत्वस्यशक्यवचनत्वात्अन्यगुणस्यान्य-
त्रोत्पत्त्यसंभवात् । तत्रभवत्वाभावेदंत्यतालव्यत्वादिव्यपदेशायोगात् " शरीरावय-
वाद्य " दित्यस्यतदधिकारस्थत्वात् ॥ दंताद्यभिघातजन्यशब्दानांतु ॥ आ-
त्माबुद्ध्यासमेत्यार्थान्मनोयुंक्तेविवक्षया ॥ मनःकायाग्निमाहंतिसप्रेरयतिमारु-
तम् ॥ मारुतश्चोर्ध्वगमितोमंद्रंजनयतिस्वरमितिपाणिनीयादिशिक्षोक्तवायुविशेषा-
भिघातजन्यत्वस्य तत्रवागिंद्रियव्यापारस्यचाभावादव्यक्तत्वं वर्णानांदंतादिषू-
त्पत्तिमरोचयन्स्वोक्तमपि " अष्टौस्थानानिवर्णाना " मितिशिक्षाविरोधंकुतोनानुसं-
धत्से तत्रानुत्पत्तौतेषां वर्णस्थानत्वासिध्धेः । नचाकाशस्यविभुत्वाद्दंतादि-
षुजायमानानामपिवर्णात्मकशब्दानामाकाशगुणत्वंवक्तव्यं वाय्वादिशब्दतयाभिमता-
नांबीसीभुगभुगबुलबुलादिशब्दानामपिनभोगुणत्वापत्तेः । शास्त्रविरोधस्तु " तदेववा
चावदती " त्यादिश्रुतिमनुस्मृत्योक्तःस्यात् । वस्तुतस्तुकरणत्वंब्रुवत्तद्दशशास्त्रंदंता
दिषुवर्णानामभिव्यक्तौवाग्व्यापारनिमित्तकत्वमेवबोधयतीतिनतद्विरोधः । आका
शविकारतयोक्तेपिश्रोत्रेशब्दगुणकत्वस्य वागवत्कर्मेंद्रियत्ववत्यपिवाय्वादिविकारत्वे
नाभिमतेकरचरणगुदोपस्थे उद्भूतानां स्पर्शादितत्तद्भूतगुणानांचादर्शनाद्वागिंद्रियमा
त्रस्यशब्दगुणकत्वमसंभवि । गोलकानांतुपांचभौतिकत्वेन तेषुशब्दस्पर्शाद्युपलब्धिर
दोषः इंद्रियाणांगोलकेभ्यः पृथक्त्वाणुत्वरूपत्वादिकंतु (अ० २ पा ४ सू० १) " त
थाप्राणा " इतिपादेस्फुटं । अथकथंचिद्वर्णानांवागिंद्रियगुणत्वमनोरथेसत्यपिप्र
कृतिविकृत्योरभेदमाश्रित्यतैरंतरिक्षस्यशब्दवत्तासाधनमशक्यं पयोविकृतेर्दध्नोम्लत्वेऽ
पि पयसोम्लत्वाभावात् । तद्विकृतितयोक्तस्यश्रोत्रस्य गत्वाग्राहित्वांगीकारेण प्रकृति
भूतमहाकाशस्यापिचलत्वापाताच्च यदिच तयोर्भेदमाश्रित्यविकृतेरेवचलत्वं नतुप्रकृ
तेरित्यभिधीयेततर्हिवागिंद्रियस्यैवशब्दवत्त्वंनत्वंतरिक्षस्येत्यपिसुवचं नचेष्टापत्तिः
तस्यशब्दगुणकत्वबोधकानामार्षवचसांग्रंथानांचव्याकोपात् । किंच " अग्नि-

वाग्भूत्वामुखंप्राविशत् ॥ अन्नमयंहिसोम्यमनआपोमयःप्राणस्तेजोमयीवागिति ॥ वाचांवन्हेर्मुखंक्षेत्रं ” मित्यादिश्रुतिस्मृतिभ्योवाचस्तेजोमयत्वेनवर्णानांतद्गुणत्वक-ल्पनेऽपितैजसशब्दत्वंस्यान्नत्वाकाशगुणत्वम् ॥ प्रतिबिंबशब्दस्यैवाकाशगुणत्वंतुनस्वी कर्तुंशक्यं प्रातिभासिकस्यव्यावहारिकवस्तुगुणत्वायोगात् । नहिस्वच्छतयैकतयाच-निश्चितेमंकूरेप्रतिबिंबितानिनीलरक्तादिरूपाणिद्वित्वत्रित्वादिसंख्यादैशिकपरत्वापरत्वा-दीनिचकुर्वंदिदगुणाभवितुमर्हंति । नाप्यभास्वरशुक्लरूपशालितयातयागृहीतेजलेसमवि-धान्यपिरूपाणिप्रतिबिंबंतइति तस्यसर्वविधरूपवत्तासर्वविद्वत्संमता । प्रतिबिंबत्वात्प्रा-तिभासिकेनापिसुरवर्त्मनः शब्दगुणकत्वसंभवेच रूपगुणकत्वमापतस्योरीकार्यं तत्रप्रा-तिभासिकनीलरूपप्रतीतेः सर्वजनीनत्वात् । प्रतिबिंबत्वप्रयोजकसामग्रीतुनेह निर्णीता । तत्राविरुद्धसामग्रीचास्माभिःपुरैवोपपादितेतिप्रतिबिंबत्वाभावस्तत्रनिश्चीयतएव ॥ य-च्चप्रतिवर्णस्यप्रतिबिंबत्वमुक्तंतत्रवदंति “ नापिवर्णरूपप्रतिशब्दस्यपूर्ववर्णप्रतिबिंब-त्वंव्यंजनाक्षराश्रवणात् । नचस्वराक्षरस्यैव प्रतिबिंबइतिवाच्यं नियामकस्याशक्य-वचनत्वात् युगपदुभयस्वरग्रहणाभावात् पूर्वध्वनिवर्द्धितोयस्यप्रतिध्वनेरपिपूर्ववर्णव्यं-जकतायाःशक्यवचनत्वाच्चे ” ति ॥ एवंप्रतिध्वनौव्यंजनानामप्रत्ययादेवप्रतिबिं-बत्वं अष्टौस्थानानीतिशिक्षाविरोधश्च परिहृतोज्ञेयः नियमेनतत्तत्स्थाने आंतरवा-य्वभिघातेनाऽभिव्यक्तस्यैवविसर्पिध्वनेस्त्वन्मतेवागिंद्रियेइवबाह्याकाशेप वर्णाभि-व्यंजकतायाः संभवदुक्तिकत्वेनस्थानबोधकशिक्षावचसोबाधगंधस्याप्यभावाच्च अ-न्यथावागिंद्रियेवर्णाभिव्यक्तिवदतस्तवापितद्विरोधोदुष्परिहरः ॥ मायिकशब्दत्व-पक्षेतुसुतरांनविरोधः । शिक्षायांवास्तवानांनित्यानामेवाभिव्यक्तिस्थाननिरूप-णात् स्वामिकेषुशरीरेषुघटपटादिषुचशुक्रशोणितसन्निपातजन्यतायाघृतत्वादिजन्यता-याश्चाभावेपिवास्तवेषुशरीरादिषु तत्तज्जन्यतायाअव्यभिचारित्वेन तद्बोधकशास्त्र-स्येवनित्यवर्णानांतत्तत्स्थानाभिव्यज्यमानताया नियतत्वेनस्थानबोधकशिक्षावचन-स्यबाधायोगात् ॥ शिक्षाप्रामाण्येनतुदंतादिष्वेवाभिव्यक्तिः सिध्यतिनतुवागिंद्रिये अनभिधानात् । किंच “ वाचावदती ” त्यादिषुसर्वत्रकरणत्वमेवेंद्रियाणांश्रूय-ते नत्वधिकरणत्वमतोवाचः शब्दाधिकरणत्वकल्पनंनिर्मूलं । नहिदंडोघटाविर्भा-वस्याधिकरणंसंभवति ॥ प्रतिवर्णस्थलेवर्णाभिव्यंजकस्यैवध्वनेर्वा तन्निमित्तक-ध्वनेर्वाव्यंजकत्वे प्रमाणंतुप्रतिवर्णेषुनियमेनवर्णाभिव्यक्तिकालोत्तरकालिकत्वानुभवा-दिकंशक्यवचनं । नचवागिंद्रियस्यनिष्फलत्वंशंक्यंयावत्कारणसमवधानेसत्येव-कार्यसंभवात् । तस्यचकरणत्वेनदंडादिव्यापारमंतराघटादेरिवतद्व्यापारमंतरेणवर्णा-नामभिव्यक्तेरयोगात् क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनंतरमितिवाक्यपदीयेतल्ल-क्षणात् ध्वनिमात्रस्यकारणत्वेनवागिंद्रियस्यान्यथासिद्धत्वांगीकारेमूकानामपिवर्णो-च्चारणप्रसक्तेश्च । अभिव्यक्तिस्तुस्थानेष्वेव अतएवमुद्रितोष्ठपुटस्य पवर्गोच्चारण-

प्रशक्यं । नचैवंवृद्धानांसर्वथातवर्गानुच्चारणप्रसंगः शेखरकारादिभिर्दंतशब्देनत-
त्सन्निहितप्रदेशानामादरणात् ॥ इत्थमांतराकाशमात्रस्यकारणतानूरीकारेणैव ( ब-
हिराकाशवदंतराकाशएववर्णोत्पत्तिसंभवा ) दितिनिराकृतं किंचास्यायमाशयःस्यात्
यदिबाह्याकाशप्रतिवर्णोत्पत्तिर्वागिंद्रियनिरपेक्षांगीक्रियते तर्हिमुखस्यांतरपि तन्निर-
पेक्षावर्णोत्पत्तिरुच्यतां तथाचतस्यनैष्फल्यमिति । तन्न साफल्यस्यदर्शितत्वात् बा-
ह्याकाशेपित्वन्मते दूरस्थशब्दग्रहणार्थंश्रोत्रस्यैवदूरेप्रतिवर्णोत्पादनाय वागिंद्रियस्या-
पिगमनस्यशक्योक्तिकत्वात् वस्तुतस्तुयथाआदानादिशक्तहस्तेंद्रियंस्वगोलकद्वा-
रासाक्षाद्ग्रहणादिनिमित्तंभवति दीर्घसं॰शोपवेशादिनाविषधरांगारादेर्ग्रहणेपितदेवपरंप-
रयासाधकतमम् । तथासाक्षाद्वर्णोच्चारणेकरणंवागिंद्रियंतदभिव्यंजकविसर्पिध्व-
निद्वाराबाह्याकाशेप्रत्यक्षरोत्पादेपितदेवपरंपरयानिमित्तमितिनिखिलंनिरवद्यं ॥ प्र-
तिबिंबत्वपक्षेच बाह्यवदांतरांतरिक्षेपिप्रत्यक्षरप्रत्यक्षप्रसंगः आकाशस्यैवोपाधि-
त्वेनवर्णानांवदनांतरांबरेपिप्रतिबिंबने प्रतिबंधकाभावात् ॥ यच्च किंचत्वन्मादि-
त्यादि नानुपपत्तिरित्यंतं तदरमणीयं । प्रतिबिंबपक्षेपिभेर्यादिसन्निहितनभोवि-
भागएव प्रतिबिंबौचित्येनभेर्यादिसमर्यादएवप्रतिस्वननिशमनप्रसक्त्यादोषस्यतौ-
ल्यात् । नहिदर्पणरचितधरणीचरःपुरुषः स्वचरणसमभ्यर्णभागमतिहायदवीय-
सितत्तलविभागेप्रतिफलति ॥ यदिचनेदीयसिनभसिप्रतिबिंबानुद्भवेदवीयसि तदु-
द्भवेचकिंचित्कारणंकल्प्येत तदातदेवोत्पत्तावपिकल्प्यतां ॥ वस्तुतस्तुसर्वत्रव-
र्तमानः पवमानः पटहादिप्रकटध्वानतःक्षुभ्यन्शब्दं क्षोभानुरूपंदूरंहरन्यत्रप्रतिब-
ध्यतेतत्रैव मायिकंशब्दांतरमुत्पद्यते अतएवगिरिगव्हरकूपविवरसरःप्रवरशिखरव
त्सुरनिलयप्रभृतिषुप्रतिशब्दाःश्रूयंते । त्वत्पक्षेत्वंतरिक्षस्यविभुत्वेनाल्पस्यमहतश्च-
शब्दमात्रस्यनियमेन प्रतिस्वनेनभाव्यंनतुतथानुभूयते । किंचपूर्वतोभेर्याद्याघाते
तत्पूर्वतोऽ तिनेदिष्टगव्हरादिसत्वेभेर्यादितः पश्चिमस्थेनपुंसाशब्दप्रतिशब्दावुभाव-
पिअनुभूयेतेअतोन त्वदभिमतःप्रतिध्वनेः शब्दसंमुखदिक्त्वनियमः संगच्छते ॥ यद-
पि प्रतिबिंबातिरिक्तमित्यादि शब्दस्यच्छायेत्यंतं तदप्यसत् । दर्पणादेर्भित्त्यादिनाव्य-
वधाने प्रतिबिंबस्याप्यजननेनतौल्यात् मणिमंत्राभिन्नेभ्यः सिंहमित्रतीर्थादिभ्योव्यव-
हितेभ्योपिभयहर्षपुण्यादिजननाच्च यदिचतानिमणिमंत्रादित्यादिशब्देन संगृण्ही-
यास्तर्हि शब्दमपितेनसंगृहाणअपिचजलाशयतलाश्रयस्यपुंसःफूत्कुर्वतोजलोपरिभागे-
बुद्बुदोत्पादकत्वंदृश्यतेतत्रवायोर्द्वारत्वमितिचेदत्रापिसमानं एवंप्रतिध्वनेः प्रतिबिंबत्व-
निरासेन पंचमस्यापिव्यभिचारित्वशंकापास्ता सत्यंतनिवेशाच्चरूपादेः प्रतिबिंबसंभवे-
ऽपिनव्यभिचारःनचसत्यंतनिवेशे प्रकाशाश्रयन्यायेन पंचमेस्वरूपासिद्धिः शंक्यापरै
स्तथानंगीकारात् । तन्मतरीत्यातदुक्तेरयुक्तत्वख्यापनायैवपंचमसप्तमयोरुपन्यासात् ॥
यच्चनचद्रव्यत्वइत्यादिशाब्दार्थान्यथास्थापकत्वाच्चेत्यंतंतत्तुतादृशसत्यंतमनिवेशयद्भिः

कणादोक्तरीतिकद्रव्यपरिभाषामनाद्रियमाणैश्चास्माभिर्नैवोत्तरणीयं पंचमादिलिंगका-
नुमानेकालोदृष्टांतीक्रियतेऽतोनतत्रहेत्वसिध्धिः नाप्याकाशेव्यभिचारः तस्यसावय-
वतायास्त्वयोक्तत्वात् ॥ वस्तुतस्तुजलेप्रभामंडलस्यैवसप्रतिबिंबः गांभीर्यदूरत्वबु-
ध्दिस्तुप्रभायाबाहुल्यप्रासूमरकत्वमूलिका । नचगुणेषुबाहुल्याद्यनुपपत्तिः छोटिका-
शब्दोल्पोभेरीशब्दोमहानितिशब्दगंधादिषुविसर्पिभूतगुणेषुस्वातंत्र्येणाप्यल्पबहुलभा-
वयोर्दर्शनात् । प्रभायाद्रव्याभिमानिनस्त्वाद्दशान्प्रतितुतत्परिमाणेनैवप्रतिबिंबमानेन-
गांभीर्यबुद्धिरितिसुवचं । जानुदघ्नेपिजलेतिसंनिहिततरुपुरुषादेरुपरिस्थापितदीर्घयष्टि-
कादेश्चतावत्परिमाणकेएवाधोधः प्रतिबिंबोनुभूयते एवमेवाधांगुलस्थूलिमन्यपिमुकुर-
भूमौ । अतोवस्तुत्वभावात्तात्रत्यप्यंबुनिप्रतिबिंबमानंबहुलतमंप्रभामंडलमेवतादृशाव-
काशभ्रमंजनयन्ति । यत्रयत्रचयावतीप्रभाप्रतिबिंबते तत्रतत्रसर्वत्रसलिलमणिमुकु-
रादिषुतावद्गांभीर्यप्रतीयतएवेतिकुततंदापत्तिंवभीषिकयायदिचोपाधिभेदादगांभीर्यप्रती-
तेस्तारतम्यमनुभूयेत तत्रतत्प्रयोजकमुपाधिगतमेवावधेयं एकस्यापिबिंबस्योपा-
धिवैलक्षण्येनप्रतिबिंबवैलक्षण्यदर्शनात् आकाशस्यप्रतिबिंबार्हत्वेचक्वचित्तत्प्रतिबिंबं-
क्वचिच्चतदभावइतिकल्पनंनिर्मूलं तदतिरिक्तस्याबिंबस्यतथादर्शनात् । यदिचदृष्टा-
नुरोधादुभयोःकिंचित्कल्पनमावश्यकंस्यात्तदापिनभःप्रभावलययोरुभयोःप्रतिच्छायां-
स्वीकृत्यत्वयातत्कल्प्यं मयातुद्वितीयस्यैव तांस्वीकृत्यतत्कल्प्यमितिआकाशप्रतिबिंब-
वादोव्यर्थगौरवग्रस्तः । देशावच्छिन्नत्वंतुनवयंविशिश्मइतिनघट्टकुटीप्रभातादिप्रसं-
गः । वस्तुतस्तु तथाविशेषणेपिनक्षतिःप्रातर्मध्यंदिनादिकालावच्छिन्नविल-
क्षणसूर्यप्रभायाःप्रतिबिंबनेपितदवच्छेदककालस्य देवदत्तस्यप्रतिबिंबनेपिचक्षुरयो-
ग्यस्यब्राह्मण्यपांडित्यादिरूपतद्विशेषणस्य समीरणाहिततृणपर्णादेःप्रतिबिंबनेपित-
दाधारस्यसमीरस्यचप्रतिबिंबानुदयात् अतोदेशस्यविशेषणत्वेपिचक्षुरयोग्यविशेषण-
स्यप्रतिबिंबादर्शनेनतद्वदेवाकाशरूपस्यदिग्रूपस्यवादेशस्यप्रतिबिंबाभावःशक्यवचनः।-
अन्यथाबहुदेशावच्छिन्नाप्रभाचक्षुषागृह्यतइतिविशेषणस्याकाशस्यचाक्षुषत्वमपिस्वी-
कार्यंनचेष्टापत्तिः तद्दृष्टांतेनब्रह्मणोपितथात्वापत्त्या "नचक्षुषागृह्यते पराञ्चिखानि ।
नतत्रचक्षुर्गच्छतो " त्यादिमुंडककठतलवकारप्रभृतिश्रुतिप्रतिरोधात् शारीरकादौ-
व्योम्नःसाक्षात्प्रत्यक्षाविषयत्वांगीकाराच्च तेनोक्तदोषद्वयप्रसरस्यसंभावनाप्यपास्ता ॥
दिशआकाशानतिरिक्तत्वोक्तिस्तुश्रुत्यादिविरुध्दा " नाभ्याऽआसीदंतरिक्षं । पद्भ्यां-
भूमिर्दिशः श्रोत्रात् । योन्तरिक्षेतिष्ठन् योदिक्षुतिष्ठन् ॥ द्यौःशीर्षमाशाश्रुतिरंघ्रिरुर्वीन-
भस्थलंनाभिसरोगृणंतीत्यादिश्रुतिभिस्तयोर्भेदावगमात् एवंदूरत्वसामिप्यधीरप्युपाधि-
बिंबयोरांतरालिकप्रभायादीर्घादीप्रसारहेतुकावगंतव्या । नत्वाकाशप्रतिबिंबंतदिति-
भ्रमितव्यंनिरवयवस्यनीरूपस्यापिप्रतिबिंबसंभवेकालादेर्वायोश्चकुतोनतत्स्यात् काला-
दिषुस्वच्छतायास्त्वयांगीकृतत्वेनतत्प्रतिबिंबावश्यंभावात् दार्वादेःप्रतिबिंबदर्शनात् ।

नापिस्वमतेत्वच्छतावदत्वच्छतायामपिविजातीयत्वंकल्प्यं अप्रयोजकत्वात् नो-
रूपत्वेनैवतत्सिद्धेः ॥ एवमंबरप्रतिबिंबप्रतिविधानेनषष्टस्यापिव्यभिचारःपरिहृ-
तः ॥ उपाध्यंतरगतंनप्रतिबिंबतइतिदूषणंतुविवरणकाराद्यभिमतेबिंबेश्वरवादएव-
मुख्यतयादत्तमास्माकीनैरितिशुद्धचित्प्रतिबिंबवादेतदनुवादोधौत्यात् ॥ तथापिअनू-
दितत्वात् सर्वपक्षेष्वेतच्छक्यप्रसरंसमर्थ्यते उपाध्यंतर्गतत्वादात्माकाशयोःप्रति-
बिंबमशक्यवचनं दर्पणतद्गतरेखादेर्जलेतत्स्थमीनतन्निमग्नपुरुषादेश्चप्रतिबिंबादर्शना-
त् ॥ यत्तु ( तद्विकारस्यनतत्रप्रतिबिंब ) इतिनियमादप्रयोजकत्वमुक्तंतदप्येते-
ननिरस्तं अन्वयव्यतिरेकव्यभिचारग्रस्तत्वात् मीनपुरुषादेर्वारिविकरत्वाभावात् त-
द्विकारस्यापिहिमकरकादेःपृथग्भूतस्यतत्रप्रतिबिंबदर्शनाच्च ॥ एवमेकदर्पणमणिप्र-
णीतधरणीरुहप्रनिकांतिप्रभृतिषुसल्लग्नानांतद्विकाराणामपिफलप्रवालादीनांतदालवाला-
दौप्रतिफलनमपिनियमभञ्जकमनुसंधेयं ॥ व्याप्यवृत्तेरपिप्रतिबिंबांगीकारेस्फटिका-
द्यवच्छिन्नाकाशस्यदर्पणगतरूपादेश्चतत्रतत्रप्रतिबिंबापत्तिः । किंचजलावच्छिन्न-
एवाकाशस्तत्रप्रतिबिंबतइतिस्वीकारेतवगांभीर्यबुध्यनुदयःप्रसंगः तावदाकाशांश-
स्यतथात्वात् ॥ अथतत्रस्थितोंशोनप्रतिबिंबतेकिंतूपरितनएवमहांशइतिस्वीकारेतुतद्दृ-
ष्टांतेनआत्मनोप्यंशविभागापत्यानिरवयत्वशब्दकोपोबिंबेश्वरवादस्यचमूलतएवोच्छे-
दः ॥ अस्माकंप्रभामंडलंतूपरिष्टमेवप्रतिबिंबतेनतुतत्प्रविष्टमित्यदोषः । यच्च ( आ-
काशस्योक्तरीत्यापरिच्छिन्नत्वेतुदृष्टांतेहेत्वभावोऽसाधारण्यंचे ) तितदपिकिंचित्करंप-
क्षेदृष्टांतेचानुगतस्यापरिच्छिन्नत्वस्यप्रागेवलक्षितत्वात् ॥

एवंचाकाशस्यप्रतिबिम्बासंभवेन ( अत्राकाशस्यजलाधार-
त्वंतत्रप्रतिबिंबितत्वंचेत्यवच्छेदभेदेनद्विधाजलेस्थितिरितिब्रह्म-
जीवयोरप्येकत्रतथास्थितौनबाधक ) मित्यादिनास्वमतमा-
त्रप्रसिद्धंदृष्टांतंवदन्नुपेक्ष्यः किंचातिसमीपदर्पणादिगतरेखादी-
नांदर्पणेप्रतिबिंबादर्शनेनजलनिमग्नमुखादीनांचजलेप्रतिबिंबा-
दर्शनेनमायांतर्वर्तिब्रह्मणोमायायांप्रतिबिंबासंभवेन " द्वासुप-
र्णासयुजासखाया " इत्यादिश्रुते " गुहांप्रविष्टावात्मानौहि-
तद्दर्शना "दितिसूत्रस्यचविरोधस्त्वन्मतेस्यात् ॥ गगनप्रतिबिं-
बासंभवस्यासकृत्प्रतिपादितत्वेना ' ( काशवदेवोपपत्ते )
रित्यादिनाविरोधंपरिहरन्नुपेक्षणीयः यत्त्वित्यादिनाविद्वन्मंड-

नोक्तंकिंचिदनूद्य ( तदपिनसम्यगित्याद्युक्त्वा ) ( विभ्वोर-
संयोगेप्रमाणाभावा ) दित्युक्तंतदपिनयुक्तिसहं तथाहिविभुद्व-
यसंयोगमंगीकुर्वतासंयोगःकीदृशइतिवक्तव्यं अन्यतरकर्म-
ज उभयकर्मजोवा संयोगजोवा नाद्यः विभ्वोःकर्माभावा-
त्तनत्वाकाशेकालेवाकश्चित्कर्माभ्युपैति अतएवद्वितीयोपिन
नापितृतीयःसचयथाहस्ततरुसंयोगात्कायतरुसंयोगःहस्तक्रि-
ययातरुणाहस्तसंयोगेजातेऽवयविनाकार्यस्यापिस्वावयवसं-
योगजन्योभवतिसंयोगस्तथात्रापियदिकालस्याकाशस्यवासा-
वयत्वंस्यात्तदातदवयवक्रियाजन्यस्तत्संयोगोपिस्यात् नचत्व-
न्मतआकाशादीनांसावयत्वंयेनतादृशसंयोगमंगीकुर्याः ॥
तथाचनदीयविशेषाभावकूटस्यतत्सामान्याभावव्याप्ततयात-
द्विशेषाभावकूटस्यैवविभुद्वयसंयोगसामान्याभावेमानस्यवि-
द्यमानत्वेमानाभावकथनंसाहसमात्रमेवमायायाःपरिच्छिन्न-
त्वांगीकारेप्यसंयुक्तस्यैवप्रतिबिंबदर्शनेननब्रह्मणस्तत्रप्रतिबिंबं-
संभवति नचसंयोगस्याव्याप्यवृत्तित्वादसंयुक्तत्वमप्यस्त्येवेति-
वाच्यं तथासत्यंत्यंतदर्पणसन्निकृष्टरेखादीनामपितत्रप्रतिबिंबाप
त्तिः आकाशप्रतिबिम्बस्यसर्वथैवासंभवेन ( आकाशेव्यभि-
चारादेवनसत्तमः ) इत्यसंगतं अतएव ( प्रथमदृष्टांतेसाध्या-
प्रसिद्धेश्चे ) त्यप्यसंगतंप्रथमदृष्टांतस्योभयवाद्यसंमतत्वादिति-
सुवक्तव्यंत्वन्मतेगगनप्रतिबिंबस्यास्मन्मतेबिंबस्यस्वीकारात् किं-
चस्वमतानुसारेणव्यभिचाराद्युद्भावनेपरार्थानुमानमात्रोच्छेदः
तवाभिमतस्याप्यसिद्धिश्चस्यात्परेणस्वमतानुसारेणासिद्ध्या-
देरुद्भावयितुंशक्यत्वात् ॥

## टीका

सहस्राक्षिअत्राकाशस्येत्यादिसाध्याप्रसिद्धेश्चेत्यंतं भागंदूषयंति **एवंचाकाशस्येत्यादिनाउद्भावयितुंशक्यत्वादित्यंतेन** ॥ **स्वमतमात्रप्रसिद्धमिति** । उभयवादिसंमतनिमंतरातादशस्यदृष्टांतत्वायोगात्तंवदन्तपेक्ष्यएवेतियुक्तं । गौतमेन-(अ० १ आ० १ सू० २५) " लौकिकपरिक्षकाणांयस्मिन्नर्थेबुद्धिसाम्यं-सदृष्टांत " इतितल्लक्षणस्योक्तत्वातबुद्धिसाम्यानधिकरणस्यदृष्टांतत्वंनैवयुज्येतेतिभावः ॥ **द्वासुपर्णेति** इदंतृतीयमुंडकवाक्यं । सूत्रंचेदंप्रथमस्यद्वितीयपादस्थं •अत्रविशेषमग्रेवक्ष्यामः । **कर्माभ्युपैतीति** । संयोगजनकंनैय्यायिकपरिभाषाप्रसिद्धोत्क्षेपणाद्यन्यतमं तत्रनकोपिस्वीकरोति । तेनावकाशदानादिमत्वचेष्टाहेतुत्वादेर्वियत्समयप्रभृतौ स्वीकारेपिनातिप्रसंगः **अतएवेति** अन्यतरत्रापिकर्मणोसंभवेउभयत्रतदसंभवस्यकैमुतिकसिद्धत्वादेव । **तदीयविशेषाभावेत्यादि** यत्रयत्रवायुतेजःप्रभृतौमधुरक्षारादिरसविशेषाणामभावकूटं तत्रतत्ररससामान्याभावोप्यस्त्येवेतितथाव्याप्तिःस्पष्टा । अतःसंयोगविशेषाणांत्रयाणामप्यभावकूटमेवविशुध्दसंयोगसामान्याभावेमानं ॥ **अत्यंतदर्पणेत्यादि** दर्पणात्यंतसन्निकृष्टेत्यर्थः ॥

---

### सहस्राक्ष.

अत्राकाशस्य जलाधारत्वं तत्र प्रतिबिम्बितत्वं चेत्यवच्छेदभेदेन द्विधा जलेस्थितिरिति ब्रह्मजीवयोरप्येकत्र तथास्थितौ नबाधकम् ॥ एतेन लोकेबिम्बप्रतिबिम्बयोरेकत्रस्थित्यदर्शनेन द्वासुपर्णा गुहांप्रविष्टौ इत्यादिश्रुतेर्गुहांप्रविष्टावितिसूत्रस्य च विरोधइति आत्मनः सर्वगतस्य सर्वगतायां मायायां सत्वेन कथं प्रतिबिम्बः स्यादितिच विद्वन्मण्डनोक्तंमप्युक्तम् ॥ आकाशवदेवोपपत्तेः ॥ मायायाः परिच्छिन्नत्वस्योपपादितत्वात् ॥ यत्तु विद्वन्मण्डने नचसंयोगसंबन्धेन तत्र वर्तमानत्वमप्रतिबिम्बेप्रयोजकम् एतयोश्च न संयोगोविभुत्वात् अतोनानुपपत्तिरितिवाच्यम् ॥ संयुक्तस्याऽपि प्रभामण्डलस्य तथाप्रतीतेः ॥ नच यदंशे संयोगस्तदंशे न तथेतिवाच्यम् ॥ बिसिनीसूत्रमात्रान्तरिताङ्गुलीतलभागस्यप्रभाया अपि दर्पणे प्रतिबिम्बादित्युक्तं ॥ तदपिनसम्यक् ॥ संयोगस्याव्याप्यवृत्तितयाततोऽल्पान्तरितस्यायाश्चांशकल्पनायाःसम्भवेन चासमाधानत्वात् ॥ विभ्वोरसंयोगे प्रमाणाभावान्मायायाः परिच्छिन्नत्वस्योक्तत्वात् पूर्वपक्षोप्याकिंचित्करः ॥ ३२ ॥ आकाशे व्यभिचारादेव न सतमः ॥ प्रथमदृष्टान्तेसाध्याप्रसिद्धेश्च ॥

**सुवक्तव्यमिति** अनयैवारुच्याप्रतिबिंबतादूषकानुमानप्रयोगेवायुवच्चेतिद्वितीयदृष्टां-
तोपादानं ॥ अत्रापीदमधिकमवधेयंयच्च अत्राकाशस्येत्यादि उपपादितत्वादित्यंतं
तदपि विहायसःप्रतिच्छायाप्रतिषेधेनैवप्रतिहतंवेदितव्यं । द्वासुपर्णागुहांप्रविष्टावि-
त्यादिश्रुतिसूत्रविरोधस्तुतवदुष्परिहरः । तथाहिप्रतिबिंबस्यालीकत्वेनद्वित्वसंख्याया-
बाधः । इदानींबिंबतयात्वदभिप्रेतायाः शुद्धचितोनिराकारत्वेनसादृश्यनिर्वाहकध-
र्मराहित्येनचसुपर्णत्वसखित्वयोस्ततएवसायुज्यस्यचासंगतिः । बिंबप्रतिबिंबयोःस-
हयोगानिष्पत्तेश्चब्रह्मांडकारणमायाबहिर्भूतायाश्चितःसमानवृक्षपरिष्वंगासंभवः । "
तयोरन्यःपिप्पलंस्वाद्वत्ती " तिप्रतिबिंबक्रियाया " अनश्नन्नन्य " इतिबिंबेतू-
ष्णींभावस्यचानुपपत्तिः बिंबक्रियांविनाप्रतिबिंबतददर्शनात् उपाधेर्जडत्वेनस्वाह्ल-
दनाद्ययोगाच्चएवमेतदग्रिमर्क्षु " अस्यमहिमान " मिति श्रूयमाणंजीवस्यब्रह्म-
विभूतित्वंबिंबस्यचितःकर्तृत्वादिकंतत्साम्योपायनादिकंचविरुध्यते प्रतिबिंबस्याबिं-
बानंशत्वात्चितोनिर्विशेषत्वात् उपाधिनाशेप्रतिबिंबनाशनियमेननिरुपाधेःसाम्यो-
पायनाद्ययोगाच्च मायांतर्गतस्यैवबिंबत्वांगीकारेतुबिंबेश्वरवादापत्त्या आकाशदृष्टां-
तबाधएकत्रस्थित्याप्रतिबिंबत्वस्याप्यसिद्धेश्च किंचाकाशतत्प्रतिबिंबयोरन्यतरोपिन-
जलंप्रविशति प्रकृतेच " गुहांप्रविष्टावात्मानौहितद्दर्शना " दित्यादिषुतयोरेकत्रस-
हप्रवेशउच्यतेनहिबिंबप्रतिबिंबयोरेकत्रसहप्रवेशादिदृष्टचरं नचप्रतिबिंबस्योत्पत्तिरे-
वप्रवेशत्वेनोपचर्यतइतिवाच्यं तथाक्लेशमानाभावात्सूत्रेतथैववक्तुमौचित्येनसंदेहवार-
केपितत्रप्रवेशोपपादनस्यायोग्यतापत्तेः " अनेनजीवेनात्मनानुप्रविश्ये " तिप्रवे-
शात्पूर्वंजीवसत्ताबोधकश्रुतिविरोधाच्च । मन्मतेतुद्वासुपर्णेत्यादिवाक्यानिभगवदंश-
योर्जीवांतर्यामिणोःस्थितिप्रवेशादिनिरूपकाणि ॥ सर्वप्रपंचकारणत्वेनसर्वगतायां-
मायायांचविभुचितःप्रतिबिंबंसुतरांदुर्वचं । बिंबस्यतस्याश्चैकत्वेनबहुप्रतिबिंबासिध्या-
जीवानेकत्वबोधिकानां " सर्वेजीवाःसर्वमयाः । तथाक्षराद्विविधाःसोम्यभावाः।
सर्वएवात्मन " इत्यादितापनीयमुंडकबृहदारण्यकादिश्रुतीनांव्याकोपात् पुण्यपापा-
दिशास्त्रीयव्यवस्थाभंगात् । एकमुक्त्यासर्वमुक्तिप्रसंगात् उपाधिबिंबयोर्विभुत्वेनस्व-
स्यापिविभुतयाशरीरंयदवाप्नोतियच्चाप्युत्क्रामतीत्यादीनामपिविरोधाच्च ॥ नचांतःकर-
णनानात्वेनेष्टंसाधनीयं जीवनैरर्थक्यप्रसक्तेःतदेवबन्धंतदेवचसाधनैर्मुक्तमित्यापत्त्याशा-
स्त्रस्यजीवाधिकारकत्वबाधाच्च । विस्तरस्त्वन्यत्रावधेयःयच्च ( यत्तुविद्वन्मंडन) इत्या-
दि ( अकिंचित्कर ) इत्यंतं तद्भ्रमसात् । संयोगेअव्याप्यवृत्तितायाःप्रायिकत्वात् ।
परमाणूनांनिरवयत्वेनतद्द्वयसंयोगेव्यभिचारात् घटादिष्वाकाशसंयोगस्यापिव्याप्य-
वृत्तित्वात् । किंचसंयोगस्याव्याप्यवृत्तित्वंसार्वत्रिकमभिप्रायन् अनुपदमेवविभ्वोर-
संयोगप्रमाणाभावंचवदन्प्रतिमानसि विभ्वोःसंयोगांगीकारेतस्मिन्नव्याप्यवृत्तिताया-
अशक्यवचनत्वात् अन्यथाविभुत्वाभावप्रसक्तेः । अतोत्यंतसूक्ष्मायांप्रभायामप्यसं-

युक्तांशंपरिकल्प्य तावन्मात्रस्यप्रतिबिंबितत्वकल्पनेमानाभावः ॥ अत्रहिब्रह्मणोव्या-
प्यवृत्तित्वेनप्रतिबिंबानुदयापत्तिं पूर्वग्रंथप्राप्तामुद्धर्तुंप्रवृत्तस्य उपाधिबिंबसंयोगस्यै-
वाप्रतिबिंबप्रयोजकत्वनियमेनप्रकृतेचसंयोगाभावाददोषइतिपूर्वपक्षस्याशयः । संय-
क्तस्यापिप्रतिबिंबप्रदर्शनेनतथानियमोशक्योतोव्याप्यवृत्तित्वतदंतस्थत्वेएवाप्रतिबिं-
बप्रयोजकेततश्चप्रकृतेप्रतिबिंबानुपपत्तिर्दुरुद्धरेत्युत्तरपक्षाशयः । विभ्वोरसंयोगेमानं-
तुकेषांचित्संयोगाव्याप्यवृत्तित्वाभिमानः परेषांकालाकाशादिषुपरस्परसंयुक्तत्वव्य-
वहाराभावश्च । संयुक्तव्यवहारहेतुगुणत्वस्यैवसंयोगलक्षणत्वात् विभ्वोरसंयोग-
स्यचबहुदर्शनसंमतत्वात् तावकैः क्वचिदविद्याब्रह्मणोःस्वरूपसंबंधस्यांगीकाराच्च
तथापूर्वपक्षोपिनिरवद्यः ॥ ( यत्तुमायायाःपरिच्छिन्नत्वस्योक्तत्वा दित्युक्तं
तस्यायमाशयः स्यात्घटाकाशवदविद्याब्रह्मणोरपिसंयोगःसुवचइतिअत्रब्रूमः किं-
मायायाबहिर्भूतस्य "अत्यतिष्ठद्दशांगुल" मित्यादिश्रुतिवेद्यशुद्धब्रह्मणस्तयास-
हसंयोगमभिप्रैषि उततदंतर्गतस्यैवनाद्यः निर्विशेषत्वभंगप्रसंगात् । द्वितीयश्चे-
द्घट्टकुटीप्रभातं मायासंयोगोत्तरंप्रतीतानांधर्माणांमायिकत्वकथनस्यकथंचित्संभवे-
पितत्संयोगस्यशुद्धनिष्ठतायाअवश्यवक्तव्यत्वात् संबंधभंतरावच्छिन्नतानुपपत्तेः । किं-
चांतस्थमायातुल्यपरिमाणकत्वेनद्वयोस्तुल्यविभुत्वात् "सर्वगतब्रह्मणोऽविद्याया-
मपिसर्वगतायाः" मितिग्रंथोक्तदोषस्तदवस्थः । किंचतस्याःपरिच्छिन्नत्वेतत्रप्र-
तिबिंबस्यजीवस्यापिपरिच्छिन्नत्वावश्यंभावात्तद्विभुत्वासिद्धिः अणुत्वंचनैवांगीक्रि-
यतइतिमध्यमपरिमाणमुररीकुर्वन्नार्हतसोदरीभवसि ॥ अयंदोषोवच्छेदवादेपिस-
मानः यच्च ( आकाशेव्यभिचारादेवनसप्रम ) इति तत्रकेचित्तावकाएवनीलंन-
भइतिप्रतीत्याआकाशस्यप्रातिभासिकरूपवत्त्वेनप्रतिबिंब॰ ब्रह्मणस्तुसर्वथारूपाभावा-
न्नसोतोवच्छेदवादएवश्रेयानितिवदंति । नचैवंप्रथमदृष्टांतेहेत्वसिद्धिः पंचमादिलिंग-
केनुमानत्रयेस्माभिः कालस्यदृष्टांतीकरणात् । नचब्रह्मणोप्यारोपितरूपवतएवप्रति-
बिंबमितिवाच्यं स्वोदाहृतशुद्धचित्प्रतिबिंबपक्षापक्षयात् नीलिमवदारोपितानांजगत्क-
र्तृत्वेशितृत्वसर्वज्ञत्वादीनांजीवेपिप्रतीतिप्रसक्तेः जीवेश्वरयोस्तुल्यविभुत्वेनैकत्रस्थित्य-
नुपपत्त्यादिदोषाणांपोषाच्च ॥ प्रातिभासिकस्यापिनीलिम्नःप्रतिच्छायातुअनीर्वचनीय-
ख्यातिस्वीकारेणतस्यमायिकरूपत्वेनव्यथायथंप्रतद्वितयेपिवस्तुत्वभावादुपपादितैवे-
तिकिंप्रासंगिकेन वस्तुतस्त्वंबरप्रतिबिंबनिराकरणादेवनसप्तमोपिव्यभिचारी ॥

यत्त्वित्यादिनाशुद्धाद्वैतमार्तंडटीकाकृदुक्तं किंचिदनूद्यतन्नेत्यादि-
ना ( सामग्र्याविशेषाभावेनैकत्रोद्भूतमन्यत्रानुद्भूतमित्यत्रग-
मकाभावा ) दित्यादिदूषणोद्भावनंकृतंतदपिनसाधीयःदूषण-

स्यतुल्यत्वात् ॥ त्वन्मतेपिपंचीकरणस्योक्तत्वेनवाय्वादौ रूपवद्द्र-
व्यत्रयसंबंधस्यसत्वेनरूपोत्पत्तिःकथंनस्यात्नचांशांतरैःप्रतिबं-
धान्नरूपोत्पत्तिरितिवाच्यं एवंसत्यंशद्वयेनप्रतिबंधात्तेजस्यपिरू-
पोत्पत्तिर्नस्यात्नचांशत्रयस्यैवप्रतिबंधकत्वमितिवाच्यंअंशत्र-
यस्यप्रतिबंधकस्यसत्वाद्यथावायौरूपोत्पत्तिर्नभवतितथैववायौ-
स्पर्शवदंशत्रयस्यसत्वेनस्पर्शोत्पत्तिरपिनस्यात्विनिगमकस्या-
भावात् ॥ सामग्र्याअविशेषेपिस्वभावविशेषस्यैवविनिगमकत्वे-
नैकत्ररूपोत्पत्तिरन्यत्रनेतिव्यवस्थास्वीकारेतादृशस्वभावविशेष-
स्यवायावनुद्भूतरूपत्वस्यगगनेउद्भूतरूपवत्वस्यचप्रयोजकस्यापा-
कर्त्तुमशक्यत्वात् अतएव " अच्छंवियन्मरुत्कृष्णोरक्तो-
ऽग्निर्विशदंपय " इतियोगशास्त्रसिद्धांतोपिसंगच्छते ॥ नचगग-
नउद्भूतरूपस्वीकारेप्रत्यक्षहेतूनामुद्भूतमहत्वालोकसंयोगचक्षुःसं-
योगादीनांसत्वेनतच्चाक्षुषंस्यादितिवाच्यं इष्टापत्तेःअवकाशात्म
नाकाशस्यप्रत्यक्षत्वात्अन्यथाऽत्रावकाशोस्त्यत्रस्थातव्यमिति-
व्यवहारस्यसर्वजनीनस्यविलोपापत्तिः नचाकाशेरूपस्वीकारे-
सन्निहितावकाशेरूपप्रतीतिःस्यादितिवाच्यं नीहाररूपवत्सन्निधा-
नेऽप्रत्यक्षेपिदूरेतस्यैवप्रत्यक्षसंभवात् । नचसाप्रतीतिर्भ्रमरूपैवे-
तिवाच्यं तदुत्तरंकदापिबाधादर्शनेनभ्रमत्वस्यवक्तुमशक्यत्वात्
बाधबुद्धिंविनापिभ्रमत्वस्वीकारेसर्वबुद्धीनामप्रामाण्यज्ञानाव-
स्कंदितत्वसंभवेनकुत्रापिविषयनिश्चयोनस्यादेवंचजलेगंधाभा-
वस्यपृथिव्यांस्नेहाभावस्यचप्रतीतिसत्वेपितत्रगंधस्नेहयोःप्रती-
त्यापत्तिर्भ्रमत्वज्ञानस्यसंशयनिश्चयसाधारणस्यैवोत्तेजकत्वेना-
प्रामाण्यशंकास्कंदितस्यापितादृशनिश्चयस्यप्रतिबंधकत्वासंभ-

बादनाहार्याप्रामाण्यज्ञानानास्कंदितविरोधिनिश्चयस्यैवप्रति-
बंधकत्वादित्यलमप्रकृतविचारेण ॥ अथाकाशस्यरूपवत्वं
प्रत्यक्षत्वंचयदास्वीक्रियेततदातस्यप्रतिबिंबोपिकुतोनस्यात्‌रूप-
वतः प्रतिबिंबनियमादितिचेन्मैवंयथारूपवतः प्रतिबिम्बोभव-
त्येवेतिनियमस्तथारूपहीनस्यप्रतिबिम्बोनभवत्येवेतिनियमो
ऽपिस्वीकार्यःतादृशनियमविरोधेपियथाकाशप्रतिबिंबोभवद्भिः-
स्वीक्रियतेतथास्माभिस्तादृशनियममनादृत्यरूपवतापिप्रतिबि-
म्बस्यास्वीकारेपिकोविरोधःतस्माद्यथाकाशस्यरूपवत्वंतथैव-
प्रतिबिम्बमपिनसंभवतीतिबोध्यं वायोःप्रतिबिम्बंस्वीकुर्व-
ताकालादीनामपिप्रतिबिम्बमंगीकर्त्तव्यंतदग्रहस्तुकालादीना-
मतींद्रियत्वेनसमाधातुंशक्यःयत्तु ( सावयवेएवप्रतिबिंबइत्या-
दिरूपंनियमकरणंश्रुतियुक्तिभ्यांबाधित ) मित्युक्तंतदपिनिरव-
यवस्यप्रतिबिम्बप्रतिपादकश्रुत्यदर्शनेनयुक्तेश्चखंडितत्वेनतद्विरो
धशंकायाअप्यभावेनदूरतोनिरस्तं ॥ "अंबुवदग्रहणा" दित्या-
दिसूत्रंतुनपूर्वपक्षपरं किंत्वेकदेशिनाप्रतिपादितस्यजडजीवधर्म-
संबंधेनसर्वकर्मत्वादीनांब्रह्मण्युपचारस्यनिषेधपूर्वकस्वसिद्धांत-
व्यवस्थापनपरं अतएवंतादृशसिद्धांतव्यवस्थापनार्थमेकदेशि-
प्रतिपादिततादृग्गौपचारिकत्वनिराकरणार्थस्तुशब्दःसूत्रेप्रयुक्तः
तुशब्देनोच्यतेएकदेशिप्रतिपादितंनसम्यक्‌कुतःअंबुवदग्रहणात्‌
सर्वस्मात्परस्यब्रह्मणःप्रतिबिंबेसतिअधिकरणधर्मवत्वमेकदेशि-
नासिद्धांतितंतत्रतन्मतेनिराकर्तव्येरूपरहितंतत्रविद्यमानंचनप्र-
तिबिंबतइतिदूषणंवक्तव्यंब्रह्मणोजगद्वैलक्षण्यंवदताएकदेशि-

नाब्रह्मणिनीरूपत्वस्यव्यापकत्वस्यचतत्रांगीकारात् तथाप्येव-
मुक्तौसिद्धांतिनमपिपर्य्यनुयुंजीत सिद्धांतेपिविरुद्धधर्माश्रय-
त्वांगीकारेणतयोरंगीकारात् अतःस्वमतविरोधात् प्रतिबिंबाधि-
करणस्वभावमादायतन्मतदूषकंहेतुमाहसूत्रेअंबुवदग्रहणमि-
तिअंबुस्वच्छंतस्माद्दर्शेनसंश्लिष्टस्यसूर्य्यादेःप्रतिबिंबंगृण्हातिन-
हितथाधर्मापिग्रहीतुंशक्नुवंतियतोधर्मामनोभवादिशब्दैकदेशो-
क्तानिपृथिव्याघटादयइवब्रह्मणउपादेयानिमनःप्रभृतीनिका-
र्य्याणिअस्वच्छानि "जलादिवद्दर्शेनसंश्लिष्टस्यब्रह्मणः प्रति-
बिंबंग्रहीतुंनशक्नुवंति" अस्वच्छेहिप्रतिबिंबंनसंभवतिकिंचस-
मवेतंहिकार्य्यंकारणस्यावस्थाविशेषरूपत्वात्तद्धर्मभूतंस्यात्न-
हिसमवेतेकार्य्यसमवायिनःप्रतिबिंबःक्वापिदृष्टचरोनाप्यस्वच्छे
कस्यापि ॥ अतःसमवायिव्यतिरिक्तस्यसमवायिनश्चब्रह्मणोग्र-
हीतुमशक्यत्वबोधनायांबुवदग्रहणादित्युक्तंननुमास्तुधर्माणा-
मुपाधिभूतानांप्रतिबिंबग्राहकत्वंब्रह्मणःसर्वाधारतयाब्रह्मण्येव-
मनःप्रभृतीनांमनोमयत्वादीनांचप्रतिबिंबोस्तुतथासतितेषांधर्मा-
णामौपचारिकत्वमेवसेत्स्यतीतिचेन्मैवं रूपरहितस्यसर्वेंद्रिया-
विषयस्यब्रह्मणःप्रतिबिंबग्राहकत्वेमानाभावात् । किंच तद्ध-
र्माश्रयत्वमेवचेद्ब्रह्मणःस्वीकृतंतदाकथंतेषा तत्रप्रतिबिंबः । न-
हिदर्पणगतरूपादेर्दर्पणेप्रतिबिंबंसंभवतिननुयदिद्वयोरयोग्यतैव-
तदातेश्रुतौजलचंद्रादिदृष्टांतासंगतिरितिचेन्न एकस्यैवोपाधि-
भेदेननानात्वबोधनार्थंतथाकथनात् । अतएव "एकधाबहु-
धाचैवदृश्यत" इत्युक्तं तस्माद्ब्रह्मधर्माएव सर्वकामत्वादयो
ननूपाधिसंबंधादौपचारिका इति सिद्धांतप्रतिपादकमेव त-

त्सूत्रं न प्रतिबिम्बं प्रतिपादयति ॥ " आभासएवचे "
तिसूत्रार्थस्तुप्रागेवोक्तः तेनचयत्त्वित्यादिकंनिरस्तं " रूपंरू-
पंप्रतिरूपोबभूवे " त्यपिनप्रतिबिम्बप्रतिपादकंकिंतु " सूर्यो-
यथासर्वलोकस्यचक्षु " रित्यादिदृष्टांतानुसारेणांशपक्षमेवप्र-
तिपादयतिप्रतिपुस्तकन्यायस्यविद्वन्मंडनटीकाकृदुक्तस्याप्यत्रै-
वतात्पर्य्यं अस्यपुत्रोस्यप्रतिरूपइतिलोकव्यवहारदर्शनाद्रूप-
पप्रतिरूपशब्दयोर्बिम्बप्रतिबिम्बरूपार्थएवंरूढिर्नान्यत्रेत्यत्रापि
विनिगमकाभावा ( द्रूढ्यर्थस्ये ) त्याद्यसंगतं चंद्रमंडल-
स्यजलेप्रवेशाभावेपितत्किरणस्यापितदवयवत्वात्तत्प्रवेशोप्यं-
शत्वंसंभवति ॥ तथाचजीवस्यांशत्वेपि " एकधाबहुधाचै-
वदृश्यतेजलचंद्रव " दितिदृष्टांतस्यसंगतत्वाद्यच्चेत्यादिकमपा-
स्तं यदपियच्चेत्यादिनाअस्मद्ग्रंथोक्तं " जीवेशावित्यत्रका-
र्यजीवेशग्रहणंहिरण्यगर्भादीनांकार्य्यैश्वरत्वाजीवोजीवंविहा-
यमामित्येकादशेकार्य्यजीवस्याऽभिधानाच्चे " त्यनूद्य ( त-
न्नयुक्त ) मित्युक्त्वा ( तादृशयोरपिप्रतिबिम्बत्वेनियममात्रभं-
गापत्त्या ऽतेरंडाविवाहश्चेद्द्वादावेवकुतोनहि ) त्यादिकुतर्काणा-
मापादनंतदपिपराभिप्रायमबुध्वैव ॥ नहि "जीवेशावाभासेनक-
रोती " तिश्रुतेःप्रतिबिम्बरूपौजीवेशौकरोतीत्यर्थस्तेषांसंमतो-
ऽयेनपश्चात्प्रतिबिम्बपक्षःस्वीकर्त्तव्यश्चेत्पूर्वमेवकथंनस्वीक्रिय-
तइत्याक्षेपःस्यात् किंतुभगवच्छक्त्यायत्किंचित्तिरोहितानंद-
सर्वलोकनियंतृत्वादीशोहिरण्यगर्भईशः । जीवश्चात्यंततिरो-
हितानंदस्तिरोहितज्ञानशक्तिश्च । अतएवआभासः हिरण्य-
गर्भोप्याभासएवयथाराजभृत्योराजवत्प्रतीयमानोप्याभासः ।

एवंचमायाभगवतः सामर्थ्यविशेषअभासेनेतितृतीयाःभेदबो-
धिका तथाचाभासरूपोजीवंशौकरोतीत्यर्थः। यथानाचारी-
ब्राह्मणोब्राह्मणाभासस्तद्वत् जीवंविहायेत्यत्रजीवपदमपिकार्य्य
हिरण्यगर्भरूपजीवपरमेवतव "सवैशरीरीप्रथम" इत्यादिवा-
क्येनतस्यैवमुख्यजीवत्त्वकल्पनात्जीवपदस्यजीवनकरणलिंग-
शरीरपरत्वेमानाभवात् ( जीवोजीवात्मे ) त्यादसंगतंआभा
साएवेत्यादिपाठस्तुसूत्रभाष्याद्यदृष्टःस्वकपोलकल्पितएव ॥

टीका

सहस्राक्षेयत्तुशुध्धाद्वैतमार्तंडेत्यादिविशृंखलत्वादित्युपेक्ष्यइत्यंतंभागंपरिहरंतियत्वि-
त्यादिनेत्यादिनास्वकपोलकल्पितएवेत्यंतेन। वाय्वादावित्यादि वायावा-
काशेचापिरूपवतांपृथिव्यपूतेजसांसंबंध एकैकभूतस्यपंचभूतात्मकताकरणलक्षणेपंची-
करणेस्त्येवेतितयोरपिरूपोत्पत्तिःस्यादेव नचांशांतरैरित्यादि एतत्सर्वंस्थूलमानेन-
पंचसुपंचानांसत्वमात्रमभिप्रेत्योच्यते। एवंचनोरूपयोर्द्वित्वात् रूपवतांत्रित्वाच्च तयोर-
पिरूपोत्पत्तिःस्यात् अंशद्वयस्यापिप्रतिबंधकत्वादरेतेजस्यपितदुत्पत्तिर्नस्याद्व्याका-
शांशाभ्यांप्रतिबंधात्। अथतेजःप्रभृत्यंशत्रयमेव वाय्वाकाशयोस्थितंसत् तत्रत्व-
गुणोत्पत्तिप्रतिबंध्नातीत्युच्येत तदावायौस्पर्शोत्पत्तिमपितत्प्रतिबध्नीयात् । एतत्सर्वंस्थू-
लमानादुक्तंवस्तुतस्तुतेषांपंचीकरणप्रकारःपंचदश्यादिषु ( प्र० १ श्लो० २७ )
"द्विधाविधायचैकैकंचतुर्धाप्रथमंपुनःस्वस्वेतरद्वितीयांशैर्योजनात्पंचपंचते" तिप्रसि-
द्धः एवंचाकाशादिषुपंचसुचत्वारःस्वस्वांशाः चत्वारश्चभूतांतरांशाः इतिप्रतिभूतमष्टाष्टां-
शाभवंतीतिनभस्वन्नभसोःपंचनीरूपांशसत्वादधिकैस्तैर्न्यूनानां रूपवदंशानांत्रयाणा-
मुपमर्दःस्यात् अतोनतयोरूपोत्पत्तिरितिचेत्तन्नायंनियमोयदेकीभूतेभूतेऽधिकांशैर्न्यूनां-
शानांबाधएवेति। व्रीहिगोधूमचणकादि चूर्णपूर्णसिताघृतानेकप्रिमलप्रवेकमिश्रणप्रणी-
तपक्वान्नानांभक्षणेपृथक्कृतत्तद्रसानुभवात् शाकपाकविशेषेषुअत्यल्पानामपिदधिहिंगु-
मरीचलवणशर्करादीनांयथासंभवंरूपरसगंधाद्यनुभवाच्च ॥ अथतथैवेहपृथिव्यांच
तुर्भिःस्वांशैर्गंधस्योत्पत्तिवदगंधैश्चतुर्भिरितरांशैस्तस्यप्रतिबंधोपिकुतोनस्यात्एवंदेव-
वर्त्मनिचतुर्भिःस्पर्शरहितैःस्वांशैःस्पर्शप्रतिबंधवत्स्पर्शवद्भिश्चतुर्भिरितरांशैःस्पर्शोत्पत्ति-
रपिकुतोनस्यात्अतः प्रागुक्तदिसर्वानुभवनिर्वाहायतत्रतत्रतत्तदुद्भवानुद्भवयोर्भगवदि-

च्छावस्तुस्वभावोवाहेतुरवश्यमभ्युपेयःक्वचिदपिकस्यचिदुद्भवानंगीकारेपंचीकरण-
स्वीकरणमप्यपार्थं तार्किकादिवत्तत्तद्गुणमात्रेणनिर्वाहेऽप्यर्थगौरवानपायात्। त-
देतदाहुः। **सामग्र्या अविशेषइत्यादिना** ॥ तत्रतद्रूपविशेषसंभवादेवयो-
गशास्त्रस्वरोदयादिषु तत्तद्भूतेतत्तद्वर्णविशेषवर्णनंसंगच्छतइत्याशयेनाहुः। **अत-
एवेति**। वृत्तिभिन्हासभाक्सूत्रभाष्यतत्प्रकाशावनुसृत्याहुः। **अवकाशात्मनेत्या-
दि** किंचभट्टमतेप्याकाशस्यचाक्षुषविषयत्वंस्वीकृतमेवेतिव्यवहारेभट्टनयमेवानुसरता-
त्वयापितत्स्वीकार्यमेव । अतएवश्रीधरस्वामिनापिचतुर्थस्कंधे ( अ० २३

---

## सहस्राक्ष.

यत्तु शुद्धाद्वैतमार्तण्डटीकाकृत्पञ्चीकरणेन तेजआदेरंशस्याऽऽकाशेऽपि सत्त्वेन रूप-
वत्त्वोपपत्त्या तत्र शब्दप्रतिबिम्बाङ्गीकारेऽपि रूपवत्येव प्रतिबिम्बइति नियमाव्यभिचा-
रः ॥ वायौतु नातिप्रसङ्गोरूपस्याऽनुद्भूतत्वात् ॥ उद्भूतरूपवत्येव प्रतिबिम्बनियमादि-
त्याह ॥ तन्न ॥ सामग्र्याविशेषाभावेनैकत्रोद्भूतमन्यत्राऽनुद्भूतमित्यत्र गमकाभावात् आ-
काशस्य चाक्षुषत्वापत्तेश्च स्पर्शवत्त्वप्रसंगाच्च ॥ तस्मादस्य स्पर्शवत्त्वेऽपि स्पर्शानुत्प-
त्तिवद्वायाविवांऽशत्रये रूपसत्त्वेऽपि अंशपञ्चके तदभावेतत्प्रतिबन्धात्स्थूलाकाशे न रू-
पोत्पत्तिरित्याह ॥ परैरिति ॥ अंशान्तरैरित्यर्थः ॥ प्रतिबिम्बस्याऽज्ञाततास्वीकारे आ-
स्तां वायोः प्रतिबिम्बस्तद्ग्रहस्तु त्वचः प्रतिबिम्बाग्राहकत्वादेवोपपद्यते ॥ चक्षुषा तु
सन गृह्यते ॥ वायोस्तदयोग्यत्वात् ॥ नचैवमाकाशप्रतिबिम्बोपि तेन न गृह्येत आ-
काशस्येन्द्रियागोचरत्वात ॥ अतएवाप्रत्यक्षेऽपि. ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ती-
तिभाष्यं संगच्छते इतिवाच्यम् ॥ आकाशे बलाकाउड्डीयंतइति प्रत्यक्षबलेनाकाशस्य
साक्षिवेद्यतया तत्प्रतिबिम्बस्यापि साक्षिवेद्यत्वाङ्गीकारात् ॥ तस्मादिन्द्रियान्तरस्य प्रति-
बिम्बग्राहकत्वाऽदर्शनेनतत्सामर्थ्याभावाद्वाह्येन्द्रियेषु चक्षुषः श्रोत्रस्य च तदस्तीति बो-
ध्यम् ॥ सर्वाचेयं कल्पनातत्तच्छुत्याद्यनुगृहीता परोक्तातु तद्बाधिताइत्याह ॥ इत्यतोनि-
यमनमिति ॥ सावयवे एव प्रतिबिम्बतइत्यादिरूपं नियमनं नियमकरणं श्रुतियुक्तिभ्यां
बाधितमित्यर्थः ॥ एवञ्च अम्बुवदग्रहणात्तुनतथात्वमिति पूर्वपक्षसूत्रमपि लब्धपदम्
॥ १४ ॥ यत्तु आभासएवचेत्यस्य यथाऽनाचारीब्राह्मणोब्राह्मणाभासस्तथा तिरोहिता-
नन्दांशोब्रह्माभासइत्यर्थमाह ॥ तत्तु जीवेशावाभासेनकरोति इत्यादिश्रुतिहृदयमपर्यालो-
च्य ॥ यत्तु विद्वन्मण्डनटीकायां रूपंरूपमित्यत्ररूपंरूपंरूपयित्वाप्रतिपुस्तकन्यायेनमूलरू-
पोबभूवेतिव्याख्यातं ॥ तन्नयुक्तं ॥ रूढ्यर्थस्य वाक्यान्तरस्वारस्यस्यच भङ्गापत्तेः ॥
मूलरूपत्वोपपादनस्यास्मदुक्तार्थकत्वेपि सम्भवाच्च ॥ यच्च तत्रैव एकधाबहुधेत्यत्रचन्द्र-

श्लोक १७ ) इंद्रियेषुनभस्तानीत्यत्र " भट्टादीनांमतेनभश्चाक्षुषं केषांचिन्मानसं आनुमानिकत्वमतेपीद्रियव्यापारोस्त्येव " इत्युक्तंतत्रइंद्रियेषुमनइतिपाठस्तुपूर्वश्लोकक्रमविरुध्योनभसोलयाभावापादकश्चेतिप्रामादिकोभातीत्यन्यदेतत् एतेन ( आकाशस्यचाक्षुषत्वापत्ते ) रित्यवक्तव्यमेव **साप्रतीतिरिति** नीहाररूपप्रतीतिः । **बाधादर्शनेनेति** । नेदंरजतमित्यादिवत् नेदंनीहाररूपंनायमवकाशआकाशोवेत्यादिबाधाननुभवेन । **अस्वीकारेऽपीति** । अपिशब्दात् आकाशस्यावकाशात्मनाचाक्षुषं तत्रतादृशोद्भूतरूपवत्वंचयदित्वयास्वीक्रियेत तर्हास्तांतस्यतद्रूपात्मनाप्रतिबिंबमपिसहप्रभामंडलप्रतिबिंबेन । तावतापिरूपवतएवप्रतिबिंबमित्यस्माकंनियमस्याव्याहतेः । त्वन्मतेपरमात्मनि रूपचाक्षुषत्वयोरभावेनतवेष्टस्यानिष्पत्तेश्चेतितत्स्वीकारपक्षेपिविरोधाभावोद्योत्यते । अस्वीकारपक्षेतुरूपवतएवप्रतिबिंबमितिनियमशरीरं नतुतद्वतः प्रतिबिंबंभवन्त्येवेतितत् ॥ **समाधातुंशक्यइति** उपहासोयं वस्तुतस्तुतत्सत्वेमानाभावः । **इत्यादिसूत्रमिति** ( अ०३ पा.२ सू. १९ ) " अंबुवद्ग्रहणात्तुनतथात्व" मितिसूत्रं एतदर्थं कंचिदग्रेविचारयिष्यामः ॥ **अतएवेति** सूत्रस्यपूर्वपक्षपरत्वाभावादेव भाष्याद्याशयावलंबादाहुः । **तादृशसिद्धांतेत्यादि**यदीदंसूत्रं पूर्वपक्षपरं सूत्रकारोऽभिप्रैष्यत् तर्हत्रतुशब्दमनुत्क्वोत्तरसूत्रएवतन्निरासकेतमवक्ष्यत् । नत्वेवमतोनतथेत्याशयः ॥ तत्सूत्रस्थंभाष्यप्रकाशमेवस्वोक्तिदार्ढ्यायाक्षरशः प्रकृतोपयोगिनाल्पेनानुपूर्वीभेदेनसंगृण्हंति **सर्वस्मात्परस्येत्यादिना** । **तयोरिति** " अशब्दमस्पर्शमरूपमव्ययं । व्याप्यनारायणःस्थितः " इतिश्रुतिसिद्धयोः नीरूपत्वव्यापकत्वयोः । **मनोमयादीति**छांदोग्यपंचमप्रपाठकस्थ-

---

दृष्टान्तेनांशप्रवेशोविवक्षितइत्युक्तं ॥ तदपिनयुक्तं ॥ चन्द्रमण्डलांशस्य जले प्रवेशाभावात् ॥ यच्च तत्रैव जीवेशावित्यत्र कार्यजीवेशग्रहणं ॥ हिरण्यगर्भादीनां कार्येश्वरत्वाज्जीवोजीवंविहायमामित्येकादशेकार्यजीवस्याऽभिधानाच्चेत्युक्तं ॥ तन्नयुक्तं ॥ तादृशयोरपि प्रतिबिम्बत्वे नियमप्रमाणभङ्गापत्त्याऽन्तरण्डाविवाहश्चेदादावेवकुतोनहीतिन्यायापातात् ॥ हिरण्यगर्भादेरीश्वरत्वे मानाभावाच्च ॥ जीवोजीवमित्यस्यत्वयमर्थः ॥ जीवः जीवात्मा जीवं जीवप्रकरणलिङ्गशरीरं विहाय मां संपद्यते ॥ तथाच कुतोजीवान्तरस्यप्रमितिः ॥ येतु आभासएवचेतिसूत्रस्थाने आभासाइतिपाठं प्रकल्प्यअभेदयुक्तयआभासाइत्याहुस्तेतु सर्वं वक्तुं शक्नुवन्ति ॥ सर्वत्रपाठमन्यथाकर्तुं समर्थत्वात् ॥ किञ्चानेकेनैवमन्त्रेण स्वप्रतिकूलंसर्वमाभासयितुं शक्नुवन्ति ॥ अभेदबोधकवेदानामेव तथाकरणे इतरत्र तत्संपादने प्रमाभावात् ॥ किञ्चैवमन्योप्यनेनैवतदुक्तस्यसर्वस्य आभासत्वं कुर्यादित्ययं पाठोप्यनर्थश्च विश्वासभञ्जकएवविशृङ्खलत्वादित्युपेक्ष्यः ॥

शांडिल्यविद्यादिविचारस्यतत्रोपक्रांतत्वात्तत्र "मनोमयः प्राणशरीरः " इत्यादिशब्दल-भ्यमनः प्राणशरीरादीनि । तान्येवेहप्रभृतिशब्देनसंगृह्यंते ॥ एकदेशिमतेप्रतिबिंबाधार-तापि " देवःक्षेत्रेष्ववमजोयमात्मा । भूतेभूतेव्यवस्थितः " इतिश्रुत्यनुरोधात्तेषामेव । तेषुक्षेत्रादिशब्दप्रवृत्तेः भगवद्गीतादौस्मर्यमाणत्वात् ( मायायांप्रतिबिंबतेचितिरसा ) वित्यादिकल्पनं त्वश्रौतं नूतनंचेति तस्यसाक्षान्निरासोपिसूत्रादौदुर्लभः तथा-पितुल्ययुक्त्यात्रसूत्रकृतातदपिनिरस्तंभवति । **ब्रह्मणउपादेयानीति** । एत-स्माज्जायतेप्राणोमनःसर्वेंद्रियाणिच खंवायुर्ज्योतिरापः पृथिवीविश्वस्यधारिणी " त्यादिमुंडकादिश्रुतिभ्यस्तथा ॥ **समवायिव्यतिरिक्तस्येति** " पादोस्यविश्वाभू तानि एकांशेनस्थितोजगत् । अधिकंतुभेदनिर्देशात् " इत्यादिश्रुतिस्मृतिभ्यश्चे-श्योब्रह्मणःसमवायिव्यतिरिक्तत्वमेकांशेनसमवायित्वंचबोद्धव्यं । **सेत्स्यतीति** । स्फटिकेजपादिप्रतिफलनात्प्रतीयमानस्यलौहित्यादेरिवौपचारिकत्वंसेत्स्यति ॥ एत-द्दंतः प्रायशःप्रकाशग्रंथः । अग्रेच तदाद्याशयावलंबो स्वीकृतः ॥ **द्वयोरि-ति** । प्रतिबिंबाधारस्यकार्यस्यबिंबस्यब्रह्मणश्चेतिद्वयोः ॥ एवंप्रकारामर्थतोऽनूद्यां-ते भाष्यस्थं निष्कर्षमनुवदंति । **तस्मादित्यादिना** । **सर्वकामत्वादयइति** ॥ " सर्वकामः सर्वगंधः सर्वरसः " इतिशांडिल्यविद्यादिश्रुत्युक्ताः ॥ विद्वन्मंडनव्या-ख्यानसुवर्णसूत्रादिसंमतयुक्तिभीरूपंरूपमितिवाक्यार्थादिकं समादधते **रूपंरूपमि-त्यादिना** । **सूर्योयथेति** ॥ इदंवाक्यद्वयमपिकठवल्लीस्थम् ॥ चक्षुषिसूर्यांशतायाऐ-तरेयादिबहुश्रुतिप्रभृतिसंमतत्वात् ॥ स्वांशत्वमंतरातद्गतदुःखादेरंशिनिप्रसक्त्ययोगाच्च-चक्षुर्दृष्टांतोपन्यासादिना जीवस्यांशत्वमेवात्रफलति ॥ **अंशत्वेपीति** । अपिरेवार्थः अंशत्वेमेवेत्यर्थः विशदतरस्तु " रूपंरूपंप्रतिरूपः । एकधाबहुधे " त्यादिवाक्यार्थ-विचारः पुरैवप्राकाशि ॥ **अस्मद्ग्रंथान्तरमिति** । मार्तंडविद्वन्मंडनटीकादिषूक्तम् ॥ **य त्किंचित्तिरोहितानंदइति** । आनंदमीमांसादौ इंद्रप्रजापत्यादेरानंदाधिक्यश्राव-णाद् ब्रह्मवदखंडानंदस्यतेष्वप्यभावाच्च तथेत्यर्थः ॥ **जीवश्चेति** ॥ कार्येश्वरहिरण्य-गर्भादिभिन्नःसाधारणःपराभिध्यानात्तथेतिभावः ॥ श्रुताबाभासेनेतितृतीयाहेतौकरणे-वेतिप्राग्विवृतम् । प्रकृत्यादित्वादभेदेपितृतीयामाश्रित्यव्याचक्षते ॥ **आभासेनेत्या-त्यादिना** ॥ अयमेवपक्षोद्वितीयाध्यायप्रकाशे ( अ० २ पा० १ सु० ६ ) "दृश्य तेतु " इतिसूत्रे " किंचक्षेत्रप्रदर्शनोत्तरंद्वयोराभासेन करणोक्त्याभासभूतयोर्जीवे-शयोर्नद्वयत्व " मिति कथनेन तापनीयदीपिकायांच " तयास्वात्मकक्षेत्रदर्शन पर-मात्मनश्चेंद्रस्येवतत्रात्मांशप्रवेशनेतस्यकार्यजीवकार्येश्वरभावोभवति " इतिकथनेन दर्शितः । अत्राप्याभासपदंब्राह्मणाभासादिवन्मुख्यब्रह्मधर्मतिरोभावाभिप्रायमेव सूत्रै-कवाक्यतालाभादितिसारः ॥ यक्षबलिन्यायेन परोक्तेःकुंठीकरणायैवाकिंचिदाहुः ॥ **जीवोजीवामित्यादि असंगतमित्यंतम्** ॥ अस्मिन्पक्षेजीवो जीवं हिरण्यगर्भ-

विहाय मांसंपद्यतइत्यर्थः । ब्रह्मलोकांतवैभवेषुविरागात्परांतकाले ब्रह्मणा सहमोक्षा-द्वांतर्थेतिभावः॥वस्तुतो हिरण्यगर्भादयस्तु कार्यश्वरतयैवात्रश्रुतौ व्याख्यातृभिर्दर्शिताः कार्यजीवतयाचलौकिकाः शरीरविशेषाएवातोनायंसिद्धांत इत्याशयेनाहुः ॥ अस्तु-वेत्यादि ॥ तथजीवोजीवमितिवाक्ये प्रथमांतभिन्नजीवशब्दो वस्तुतोलिंगादिशरीरप-रोस्तु ॥ आदिपदादिहस्थूलमपिगृह्यते ॥ एषचेतनयायुक्तोजीवइत्यभिधीयत इत्याद्यु-क्त्या लिंगशरीरे अहस्तानिसहस्तानामित्याद्युक्त्या स्थूलशरीरेच जीवशब्दस्यशक्ते-र्ग्रहात् । तस्मात् ( स्कं० ११ अ० २५ श्लो० ३५ ) संपद्यतेगुणैर्युक्तोजीवोजीवं-विहायमाम् । जीवोजीवेननिर्मुक्तोगुणैश्चाशयसंभवैः ॥ मयैवब्रह्मणापूर्णानबहिर्नांतरश्च-रेन्नित्यत्रमुमुक्षुर्जीवः जीवं इंद्रियादिसमुदायरूपंसूक्ष्मं पांचभौतिकं स्थूलंचदेहंविहाय तत्कारणभूतैर्गुणैश्चमुक्तःसन्मांनिर्गुणं परमफलं संपद्यतइत्यर्थः । एवमुत्तरत्रापिज्ञेयम् ॥ इतःपूर्वं ( श्लो० ३३।३४ ) तस्माद्देहमिमंलब्ध्वाज्ञानविज्ञानसंभवम् । गुणसंग-विनिर्धूयमांभजंतुविचक्षणाः ॥ निःसंगोमांभजेद्विद्वानप्रमत्तोजितेंद्रियइत्युक्त्यापिदेहें-द्रियादिरूपएवहेयजीवपदार्थः सिध्यति ॥ सूत्रे “ आभासएवचे ” तिपा-ठस्तु श्रीभाष्यादिसंमतोस्माकंतुसूत्रभाष्येतद्विवरणेषुचसनैवास्तीत्यस्मासुतादृशपाठ-कल्पकत्वारोस्तत्कपोलकल्पितइत्यभिप्रेत्याहुः । आभासइत्यादिना ॥ यच्चय-सुशुध्दाद्वैतेत्यादि इत्यर्थइत्यंतं तदसत्अस्मदुक्तचरयुक्तिभिः फलबलदेवैकत्रो-द्भूतमन्यत्रानुद्भूतमितिकल्पनसंभवात् मार्तंडव्याख्यातृरामकृष्णभट्टानांत्वयमाशयः भट्टादिमतेनभसश्चाक्षषत्वात् शंकराचार्यैर्व्यवहारेभट्टनयस्यैवानुसरणात् तस्यचा-क्षुषविषयत्वंत्वयाभ्युपगंतव्यं संयोगसन्निकर्षजन्यचाक्षुषंचोद्भूतरूपनियतमिति तद-र्थंतत्ररूपोद्भवोपिस्वीकार्यः तथाचसतिप्रहिलतयावियत्प्रतिच्छायाभ्युपायेपिरूपवतएव-प्रतिबिंबान्नव्यभिचारइति एतेन ( आकाशस्यचाक्षुषत्वापत्ते ) रितिप्रत्युक्तं ॥ संगृहीतानिचाकाशविषयकमतानिचतुर्थस्कंधत्रयोविंशाध्यायव्याख्याने ( श्लो० १७ ) इंद्रियेषुमनस्तानीत्यत्रश्रीधरस्वामिना ॥ नापिस्पर्शवत्त्वप्रसंगः स्पर्शशून्या-यामपिमणिदीपप्रभायांत्वन्मतेउद्भूतरूपत्ववदत्रापितस्योपपत्तेः वस्तुतस्त्वयंसर्वोप्य-भ्युपेत्यवादएवतत्त्वंतुपूर्वमवोचाम यच्चप्रतिबिंबस्येत्यादि साक्षिवेद्यात्वांगीका-रा इत्यंतं तदप्यसमंजसं अस्माभिःप्रत्यक्षानर्हप्रतिबिंबस्यानंगीकारात् । नापि-वायोःप्रतिबिंबं शक्यवचनं तत्प्रत्यक्षस्यानिवार्यत्वात् तस्यचक्षुरयोग्यत्वेन चक्षु-षातत्प्रतिबिंबस्याग्रहणेपिशब्दग्राहकश्रोत्रेणतत्प्रतिबिंबतयात्वयाभिमतस्यप्रतिध्वनेरिव-त्वचावश्यंतद्ग्रहसंभवात्अग्रहणेहेत्वभावात् अनुमेयत्वपक्षेपिबिंबस्येवप्रतिबिंबस्या-पिगुणप्रत्यक्षप्रतिबंधकाभावात् सर्वथाप्रमित्यविषयत्वंतत्सत्वस्यैववक्तुमशक्यत्वा-त् । नचवायुःप्रतिबिंबते द्रव्यत्वात्पृथ्वीवादित्यनुमानेनतत्सिद्धिः चक्षुर्योग्य-त्वस्योपाधित्वेनहेतोर्व्याप्यत्वासिद्धेः । त्वन्मतेसूर्यप्रतिबिंबतेजोंशप्रवेशानुपगमे-नतत्प्रतिबिंबनिष्ठौष्ण्यस्यचत्वचाग्रहणानुभवेनतस्यांसर्वथाप्रतिबिंबाग्राहकतानवक्तुं-

शक्यार्किचैवंसत्याकाशस्यापिप्रतिबिंबंनचक्षुषागृह्येतबिंबेनीरूपतायाअनुद्भूतरूपताया
वाअविशेषात् । पूर्वपक्षेतस्येंद्रियागोचरत्वोक्तिस्त्वयुक्तामानसिकत्वानुमानिकत्व-
मतयोरपितत्रेंद्रियव्यापारविषयतायाअनपायात् । नत्वाकाशेबलाकाउड्डीयंतइतिप्र-
त्यक्षबलेनाकाशस्यसाक्षिवेद्यतयातत्प्रतिबिंबस्यापिसाक्षिवेद्यत्वमंगीकार्यंबलाकादि-
वस्त्वभावेऽभ्रसिगंभीरताबुध्यभावप्रसंगात् वायौतृणपर्णान्युड्डीयंतइतिप्रत्यक्षबलेन-
साक्षिवेद्यतायावायावपिसमानयोगक्षेमत्वाच्च । अतोदेशस्यविशेषणत्वेपिचक्षुरयो-
ग्यविशेषणस्याप्रतिबिंबान्नानुपपत्तिःकाचित् ॥ यच्चतस्मादिंद्रियांतरस्येत्यादि बा-
धितमित्यर्थइत्यंतं तदप्येतावतानिरस्तं त्वन्मतरीत्यात्वचोपितद्ग्राहकतायादर्शित-
त्वात् वस्तुतस्तुबाह्येंद्रियेषुचक्षुषएतद्ग्राहकतायावक्तुंयुक्तत्वात् । नहिनीरूपस्यापि-
शब्दाकाशादेः प्रतिबिंबत्वबोधकंकिंचिच्छ्रुत्यादिकमस्ति “ यथाह्ययंज्योतिरात्मे ”
त्यादयस्तुसर्वश्रुत्येकवाक्यतयाअनुपचारेणव्याख्याताः । अतस्त्वत्कल्पनैव अंश-
त्वसत्यत्वादिश्रुतिबाधितानियमनमप्याम्नायानुकूलयुक्तिभिर्निर्मलीकृतमेव ॥ यत्तु-
( एवंच अंबुवद्ग्रहणात्तु नतथात्वमिति पूर्वपक्षसूत्रमपिलब्धपथ ) मितित-
त्रोच्यते तृतीयस्यद्वितीयपादे ब्रह्मधर्मविचारे अरूपवदादिपंचसूत्रं ब्रह्मणिसर्वका-
मत्वादिधर्माणामौपचारिकत्वबोधकैकदेशिमताधिकरणमस्तितत्रेदंचरमंसूत्रं ( अ० ३
पा०२सू १८ ) “ अतएवचोपमासूर्यकादिव ” दिति अर्थस्तुअतइतिल्यब्लोपेपं-
चमीएतमेवनिर्णयमाश्रित्यपृ० १११ ) “ समःप्लुषिणासमोमशकेनसमो नागेने ”
तिनिरूपमस्यापिभगवतोबृहदारण्यकतृतीयाध्यायतृतीयब्राह्मणादावुपमा । अत्रगमकं-
श्रौतमुपमांतरमाह सूर्यकादिवदिति । जलप्रविष्टेसूर्यचंद्रादौ प्रतीयमानमांपकं
पादिकं वस्तुतोजलनिष्ठमेवनतुतन्निष्ठं एवंक्षेत्रादिषुप्रविष्टआत्मनिप्रतीयमानाः स-
र्वकर्मकामगंधरसादयो वस्तुतउपाधेरेवधर्मानत्वात्मनइत्याशयेन “ यथाह्ययं-
ज्योतिरात्माएकधाबहुधे ” त्यादौश्रुत्यंतरेयथाधर्माणामौपचारिकत्वायसूर्यका-
द्युपमोच्यतेतथेयमपीति ॥ एवंसिद्धएकदेशिमतेस्वविरुध्धांशंदूषयितुंमुख्यसिध्धां-
तंचवक्तुं अंबुवदित्यादिचतुःसूत्रमधिकरणांतरमारब्धवान्भगवान् । तत्रातए-
वेतिसूत्रोक्तंदूषयति ( अ० ३ पा० २ सू० १९ ) “ अंबुवदग्रहणात्तुनत-
थात्व ” मिति । तुशब्दःपूर्वपक्षंव्यावर्तयतितथात्वंसूर्यादिदृष्टांतेन असमवायिनोब्र-
ह्मणऔपाधिकधर्मवत्त्वंनकुतः अंबुवदग्रहणात्यथान्धस्यैकदेशिनासूर्यादिवद्रूपादेरनं-
गीकारेणउपाधीनांचास्वच्छत्वेनतैरंबुनेवग्रहणस्यासंभवादित्यर्थः एवमेकदेशिमतेदू-
षितेश्रौतानांविभुत्वांगुष्ठमात्रत्वप्लुषिनागादिसमत्वाकर्मत्वासंगत्वसर्वकर्मत्वसर्वकामत्व-
त्वादीनांसिध्धांतेकथंविरोधपरिहारइत्यतोग्रेपठति ( अ० ३ पा० २ सू० २० ) “
वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेव ” मिति । अयमर्थःविरोधोहिलौ-
कवेदाभ्यांपरिहरणीयः तत्रविभोरपिशतपंचाशदित्यन्यायेननसर्वपरिमाणाश्रयस्या-

काशस्यतत्तत्परिमाणंलोकेघटमठाद्यंतर्भावादभिव्यज्यते वेदेच आसादनविषये " यथा वकाशंदशचमसा " नित्यादि एवंचयनेपि " एतैरग्निंचिन्वीते " ति " चित्तिःस्रु " गित्यादमंत्रैश्चयनंत्रिधायप्रकारप्रदर्शनावसरेचतसृषुदिक्षुतत्तद्धातृमंत्रैश्चयनं द-र्शयित्वा " यथाकाशंग्रहान्यथावकाशं प्रतिग्रहा " निति " वाचस्पतेविधे नाम " न्नित्यादिमंत्रोपधेयानांग्रहसंज्ञकानां " देवस्यत्वे " त्यादिमंत्रोपधेया-नां प्रतिग्रहसंज्ञकानामिष्टकानांतद्दिङ्म्येयोवकाशस्तदविरोधेनोपधानमाह । अव-काशश्चाकाशएव तत्रयथापदेनाल्पत्वमहत्वादिकंसूच्यतइतिव्याचक्षते । एवंब्र-ह्मणोपिवृद्धिन्हासभाक्त्वं तत्तत्परिमाणकत्वं पुंस्याद्यंतर्भावात् । कामगंधर्-सादिकंचजीवपृथ्वीजलाद्यंतर्भावात्स्फुटीभवति । वृद्धिन्हासपदाभ्यामुपलक्षण-विधयातेतेविषयवाक्योक्ताधर्माःसंगृह्यंते अनाम्नाता अपि त्वन्मतेचलनभेदना-दयइव । एवंसतिउभयसामंजस्यात् विभुत्वाल्पत्वादिनामुभयविधश्रौतधर्माणामबा-धात् एवं यथाश्रवणंसर्वधर्माश्रयोब्रह्मेत्यर्थः एवंकारेण सर्वत्रहीतिपूर्वोक्तंविषयवा-क्योक्तं चपरामृश्यते । परंसर्वंचैतत् विषयवाक्ये " आकाशात्मे " तिकथनात् " आकाशशरीरं ब्रह्मे " तिश्रुत्यंतराच्चयुक्तं । तेनपूर्वमर्भकौकस्सूत्रे " व्योमवच्चे " त्युक्तमिहस्मारितं ॥ नचांबुवदितिपूर्वपक्षसूत्रं । तुशब्दघटितत्वात् ॥ नहि ब्रह्मसूत्रेष्वे-कमपिपूर्वपक्षारंभसूत्रं तुशब्दघटितंदृश्यते । यावंतिचतद्घटितानिसूत्राणितत्तुसमन्वया-दित्यादीनितानिसिद्धांतनिरूपकाण्येव ॥ नचाभिमानिव्यपदेशिसूत्रेव्यभिचारः । मु-ख्यपक्षेतस्यापिसिद्धांतसूत्रत्वात् । स्पष्टंचैतत्प्रकाशे प्रथमपक्षेप्यारंभसूत्रत्वाभावाच्च तत्साधितस्य " मृदब्रवी " दित्यादौदेवताव्यपदेशस्यवैदिकसर्वतंत्रसिद्धांतत्वेनप्रथम-पक्षे अस्यपूर्वपक्षोपष्टंभकत्वेपिसिद्धांतबोधकतानपायाच्च अतएवोत्तरपक्षेवैलक्षण्य-स्यैवाप्रयोजकत्वंस्थाप्यतेनतुतथाव्यपदेशोपिप्रतिविधीयते । नापिवृद्धिन्हासेतिसूत्रं पूर्वसूत्रखंडकंत्वपीवादितथात्वसूचकशब्दाघटितत्वात् यदिचसूत्रकृत्तथाभिप्रेयात् नां-बुवद्ग्रहणादित्येवसूत्रयेत् तावतैवसिद्धेः " नप्रयोजनवत्वात् । नविलक्षणत्वादस्यत-थात्वंचशब्दा " दित्यादिवत् ॥ यथान्यासमक्तिस्तुपंचसूत्र्युक्तपरामृश्यदूषणायैवेति ज्ञायते । उत्तरसूत्रएव च तुशब्दं वदेत् लोकवत्तुलीलाकैवल्यं दृश्यतेत्वि " त्यादि-वत् नापिवृद्धिसूत्रार्थविचारेणाप्ययंबुवत्सूत्रार्थोदूषितोभवति तथाहिशारीरकभाष्ये वृ-द्धिन्हाससूत्र " युक्तएवत्वयंदृष्टांतः विवक्षितांशसंभवात् नहिदृष्टांतदार्ष्टांतिकयोः क्व-चित्किंचिद्विवक्षितमंशं मुक्त्वासर्वसारूप्यं केनचिद्दर्शयितुंशक्यतेकिंपुनरत्रविवक्षितं-सारूप्यमितितदुच्यते वृद्धिन्हासभाक्त्वमितिजलगतंहि सूर्यप्रतिबिंबंजलवृद्धौवर्द्धते ज-लन्हासेन्हसतिजलचलनेचलतिजलभेदेभिद्यतेइत्येवंजलधर्मानुविधायिभवति नतुप-रमार्थतः सूर्यस्यतथात्वमस्ति एवंपरमार्थतोऽविकृतमेकरूपमपिसत्ब्रह्मदेहाद्युपाध्यं-तर्भावात् भजतइवोपाधिधर्मान्वृद्धिन्हासादीन् एवमुभयोर्दृष्टांतदार्ष्टांतिकयोःसामंज-

स्यादविरोध ” इतिव्याख्यातं तत्रमहत्यपिजलाशयेसूर्यप्रतिबिंबस्यतावत्तएवोपल-
ब्ध्याजलवृध्यातद्वृद्धिश्चेत्यान्नहितत्प्रतिबिंबंग्रीष्मेन्हसतिवर्षासुचवर्धतेजलेतेजोंशप्रवे-
शानंगीकारिणात्वयाविभोर्ब्रह्मणइवसूर्यादेरूपब्रध्यंतर्भावोशक्यवचनइतिदृष्टांतेहेत्व-
सिद्धिः सूत्रस्यजीवेशारीरधर्मौपचारिकत्वबोधकत्वेतुप्रक्रमविरोधश्चरगचरव्यपाश्रय-
सूत्रेणगतार्थताचउभयसामंजस्यादित्यत्रचदृष्टांतासामंजस्यादितिवाउभयसाम्यादित्ये-
ववावक्तुमुचितंकिंचांबुवत्सूत्रेप्रतिबिंबबाधकतयात्वयंव्याख्यातमुपाधिबिंबयोःत्रिप्रकृ-
ष्टत्वामूर्तत्वादिकंएतत्सूत्राक्षरैर्नप्रत्युच्यते किंतुसारूप्येविवक्षितः प्रकारविशेषएवबो-
ध्यतइतिपूर्वसूत्रेणनिराकृतचरःप्रतिबिंबवादीनानेनसमर्थितोभवतियदिचसूत्रकृत्तथा-
भिप्रैष्यत् तर्हि ( स्वच्छाहिसत्वेने ) त्यादिनात्वयोक्तंप्रकारंस्वयमेतत्रानुपदमव-
दिष्यत् तस्मादंबुवदितिसूत्रंनपूर्वपक्षरूपंनापिलब्धपर्थीनियमनस्यसमर्थितत्वात् अथ
यत्तुआभासएवेत्यादिः जीवांतरस्यप्रमितिरित्यंतो ग्रंथस्तु पूर्वप्रतिबिंबभ्रमजनक-
श्रुतिसूत्रव्याख्यानेनिरस्तः आभासाएवचेतिपाठस्तुरामानुजभाष्यादावस्ति नत्वा-
स्माकीनग्रंथेष्वतोयेतुआभासएवचेति सूत्रस्थानेइत्यादिः उपेक्ष्यैइत्यतोग्रंथो ना-
स्माभिरुत्तरणीयः ॥ तथापाठोपि अदृष्टानियमादित्यग्रिमेसाध्यसमर्पकत्वान्नायुक्तो-
भाति विश्वासभंजकःपाठभेदस्तु “ भावेचोपलब्धे ” रित्यादौप्रसह्य “ भावा
च्चोपलब्धे ” रित्यादिः स्वभाष्येदृष्टव्यः ।

यत्तु ( प्रतिबिंबस्यचबिंबोत्पत्तिविनाशाभ्यामुत्पत्तिविनाशौ-
उपाधिसमवधानेनप्रतिबिंबस्याविर्भावस्तत्रबिंबाभेदतिरोभा-
वश्चजायते तथाप्रतिबिंबत्वबिंबत्वयोरुत्पत्तिः उपाधिसमव-
धाननाशेनच तादृगाविर्भावतिरोभावयोर्बिंबत्वप्रतिबिंबत्वयोश्च-
नाशोजायते ) इत्याद्युक्तंतदप्ययुक्तं बिंबोत्पत्तिविनाशाभ्यां-
प्रतिबिंबोत्पत्तिविनाशौस्वीकुर्वता प्रतिबिंबस्याबिंबाभेदोविवक्षि-
तो बिंबोपादेयत्वंवानाद्यः प्रतिबिंबस्यबिंबाभेदेबिंबज्ञानकाले-
प्रतिबिंबस्यापिज्ञानंस्यात् प्रतिबिंबतिरोभावेबिंबस्यापितिरोभा-
वःस्यात्प्रतिबिंबचलनेबिंबस्यापिचलनंचस्यात् । उपाधिसम-
वधानेप्रतिबिंबस्याविर्भावः बिंबोत्पत्तिकालेप्रतिबिम्बोत्पत्ति-

रित्यपित्वन्मतविरुद्धं आविर्भावतिरोभावावुत्पत्तिप्रलयौमता-
वितित्वत्समतोक्तेः ॥ उपाधिसमवधानेप्रतिबिंबत्वस्योत्पत्तिरि-
त्यप्यसंगतं नहिव्यक्त्युत्पत्तौसत्यामपितद्धर्मोनोत्पद्यते व्यक्ति-
सत्वेपितद्धर्मोनश्यतीतिकस्यचिदपिसंमतंप्रमाणतोवगतंवा न-
हिघटउत्पन्नेपिघटत्वंतत्रनास्तिवापश्चाद्भविष्यतीतिवक्तुंशक्यं
किंचप्रतिबिंबत्वंमुखउत्पद्यतेदर्पणसन्निधानेन वादर्पणएवो-
त्पद्यतइतिवक्तव्यं आद्येव्यवहितस्यदर्पणस्यकार्य्योत्पादकत्वा-
योगः उपाधिसन्निधानस्यधर्मोत्पत्तौहेतुत्वकल्पनेधर्मानंत्यंधर्मे-
णधर्म्यनुगमाभावश्चधर्मस्याननुगतत्वात् द्वितीयेतुप्रतिबिंबत्व-
स्यव्यधिकरणत्वेन प्रतिबिंबधर्मतानस्यात् उपाधिधर्मताच-
स्यात् व्यधिकरणस्यधर्मत्वेघटत्वस्यपटधर्मतापत्तिः नापिद्वि-
तीयः मुखस्यप्रतिबिंबोपादानत्वासंभवात् समानकालीनयो-
रुपादानोपादेयभावासंभवात् उपादानस्योपादेयपूर्ववर्त्तित्व-
नियमात् अनन्यथासिद्धनियतपूर्ववर्त्तिनएवकारणत्वात् उ-
पाधिसमवधाननाशप्रतिबिंबाविर्भावतद्भेदतिरोभावयोर्बिंबत्व-
प्रतिबिंबत्वयोश्चनाशोजायतइत्यपिनकिंचित् दर्पणसमवधाने-
प्रतिबिंबत्वंमुखउत्पद्यते दर्पणेवा प्रतिबिंबेवा नाद्यः मुखेप्र-
तिबिंबत्वस्वीकारेमुखंप्रतिबिंबमितिप्रतीत्यापत्तिः किंचबिंबत्व-
मपितत्रैवोत्पद्यतइतिस्वीकरणीयंतथाचबिंबत्वप्रतिबिंबत्वयोर्वि-
रुद्धधर्मत्वंनस्यात् नचेष्टापत्तिःतर्हिघटत्वकलशत्वयोरिवतुल्य-
व्यक्तिवृत्तिधर्मप्रतिपादकतयाबिंबप्रतिबिंबशब्दयोःपर्य्यायतताप-
त्तिः द्वितीयेतुदर्पणस्यप्रतिबिंबत्वेन भानापत्तिः दर्पणंप्रतिबिं-
बइतिप्रतीतेःप्रमात्वंचस्यात् प्रतिबिंबेचेदुत्पद्यतेतदाप्रतिबिंब-

स्यत्वन्मतेमुखाभिन्नतयामुखएवोत्पद्यतइत्येवायातं तथाचमु-
खपक्षउद्भाविताःदोषाःप्रसज्येरन् तस्माद्बिंबप्रतिबिंबयोरभेदःबिं
बत्वप्रतिबिंबत्वयोरुत्पत्तिविनाशौचेतिकथनंसर्वथानसंभवतिय
त्तु ( एवंचसत्कार्य्यवादेतंतुसंयोगस्योत्पत्तेःपूर्वं नाशात्पश्चाच्च-
पटस्यतन्तुमात्रत्वव ) दित्यादिनासत्कार्यवाददृष्टांतो दर्शितःसो
पिविषमःतत्रसंयोगोत्तरंपटस्तंतुष्वेवप्रतीयतेनत्वन्यत्रेतिपटस्यतं-
तुसंयोगोत्तरमप्रत्ययात्पूर्वोत्तरकालयोरपितंतुमात्रत्वंप्रतिबिंबो-
पियद्युपाधिसंन्निधानेसतिमुखएवप्रतीयेततदातस्यापिमुखमात्र
त्वंयुक्तंस्यात् । प्रतीयतेतूपाधौ तस्मात्तस्यमुखमात्रत्वंनसंभव-
ति एवंचअविद्यायांब्रह्मप्रतिबिंबोजीवइत्यसंगतमेव ॥ किंचा-
विद्यायांप्रतिबिंबस्यजीवत्वेऽविद्यानाशएवमोक्षस्त्वयास्वीकर्त्त-
व्यस्तदाजीवस्वरूपनाशएवमोक्षःस्यात् । तथासतिपुरुषार्थ
तानस्यात्प्रवृत्तिस्तत्रकस्यापिनस्यान्नह्यात्मनाशार्थंकश्चिद्यतते
तस्यनिरतिशयप्रेमविषयत्वात् .उपाधिनाशेप्रतिबिंबविनाश-
स्यप्रत्यक्षसिद्धत्वादविद्यानाशेतत्प्रतिबिंबरूपजीवनाशस्यावर्ज-
नीयत्वात् ॥ यत्तु ( सतएवपदार्थस्याविर्भावसंभवाद्भेदावि-
र्भावस्योपाधिनास्वीकारेबिंबप्रतिबिंबभेदःस्वीकृतःस्यात् अभे-
दतिरोभावस्यैवतेनस्वीकार). इत्यादिप्रलपितंतदपितुच्छतरं बिंब
प्रतिबिंबयोर्भेदस्यप्रत्यक्षसिद्धस्यापलापेमानाभावादनुभववि-
रोधाच्च । " विभेदजनकेऽज्ञानेनाशमात्यंतिकंगत " इत्यादिवा
क्यविरोधाच्च तस्यलक्षणस्याऽन्यथार्थकल्पनेऽविश्वास. ॥ किं-

च्चाभेदस्यतिरोभावेतत्प्रतीतिर्माभूत् भेदप्रतीतिःकेनभवतीतित-
द्धेतोरनुक्तत्वात्साकस्मिक्येवस्यात् उपाधिनाशेऽभेदतिरोभा-
वनाशेपिभेदस्यानाशात्पूर्ववद्भेदप्रतीतिःस्यात् अभेदतिरोभा-
वनाशादभेदप्रतीतिरपिस्यात् " वृद्धिन्हासभाक्त्वमंतर्भावादुभ-
यसामंजस्यादेव " मितिसूत्रमपिन ( उपाधेर्जलस्यधर्मावृ-
द्धिन्हासादयोयथाप्रतिबिंबेऽप्यस्यन्तेतथाप्रकृतेपी ) तिप्रति-
पादयति येनत्वदुक्तोपर्ष्टभसंगतिःस्यात् । किंतु " नस्थानतो-
पी " त्यादिसूत्रेणपरध्धोयोब्रह्मस्वरूपविचारस्तदुपयोगितयाक्रि-
यमाणोयोब्रह्मणिवेदबोधितजडजीवधर्माणांविधिनिषेधाभ्यां-
प्रतीयमानस्यविरोधस्यपरिहारःसएवानेनसूत्रेणसिद्धांतिनाक्रि-
यते पूर्वमेकदेशिकृतोविरोधपरिहार " स्त्वंबुवदग्रहणात्तु-
नतथात्व " मित्यनेनखंडितः यथालोकेमहानवकाशोल्पो-
वकाशोवेदेपि " यथावकाशंदशाचनसान् यथावकाशंयहा "
नित्यादिनास्वल्पत्वमहत्वादिकमवकाशात्मकस्याकाशस्यसू-
च्यते तत्रयथापदस्यमहत्वाल्पत्वबोधकत्वात् तत्राकाशस्यव्या-
पकत्वेनव्यापकेचाल्पत्वमहत्वयोर्युगपत्समावेशासंभवाद्विरोधः॥
एवंचयथाकरकेप्रविष्टआकाशोल्पतया व्यपदिश्यते मठेप्रविष्ट-
श्चमहत्त्वेन उपाध्यंतर्भावेनोपाधिवृद्धिहासाभ्यामाकाशेपि-
वृद्धिन्हासभाक्त्वमेवंब्रह्मणोप्युपाध्यंतर्भावात्तदभिव्यंग्यसर्वका-
मादिधर्मवत्त्वं अत्रबीजंतुविषयश्रुत्युक्तआकाशदृष्टांतस्तस्य-
प्रकृतश्रुत्यनुसारित्वेनतेनतत्तदुपाधिप्रविष्टंब्रह्मापितत्तद्धर्मवद्वक्त-
व्यं नत्वेकदेश्युक्तरीत्या ॥ नन्वेवमपितेषांधर्माणामौपाधि-
कत्वेनौपचारिकत्वमेवेतिचेन्न ॥ स्यादौपचारिकत्वं यदि

जपाकुसुमलौहित्यवदन्यधर्मत्वंस्यादन्यानुविधायित्वेपिस्वध-
र्माएवतेश्रुतिलिंगादिप्रमाणाभावेनान्यधर्मत्वस्यवक्तुमशक्य-
त्वात् ! तथाचयथाकाशस्यवृद्धिह्रासभात्क्वंकरकाद्यंतर्भावा-
त्तथैवोभयसामंजस्याद्बलणोपीतिनकोपिविरोधःपद्मादधाति
जलवृद्धिर्ह्रासाभ्यांप्रतिबिंबवृद्धिर्ह्रासकथनंतुनसत् भूय
सिस्वल्पेपिजलेसूर्य्यादिप्रतिबिंबस्यतुल्यतायाएवग्रहणात् ॥
किंचलोकेपरिच्छिन्नस्यरूपवतउपाधिविप्रकृष्टस्यप्रतिबिंबदर्श
नादपिप्रतिबिंबपक्षोऽसंगतः ॥ नचमायायाअघटितघटनापटी
यस्त्वाल्लोकेऽसंभावितमपितत्प्रभावेणभवतीतिवाच्यं ॥ तर्हिमु-
क्तानामपिपुनरुत्पत्तिःस्यात् सुकृतिनांनरकप्राप्तिश्चस्यात्माया
यादुर्घटघटनापटीयस्त्वात् ॥ एवंमायावच्छिन्नोजीवइत्यादि-
पक्षाअपिनसंभवंति श्रुतियुक्तिविरुद्धत्वात् ॥ तत्खंडनेयत्न-
स्तुपरेणतत्तत्पक्षाणामप्रतिपादनान्नक्रियते ॥

## टीका

सहस्राक्षे प्रतिबिंबस्यचबिंबोत्पत्तीत्यादिमिहमतायतइत्यंतं भागंनिरस्यंति ॥ **यत्तुप्रतिबिंबस्यचेत्यादिना** ॥ **नाक्रियतइत्यंतेन** बिंबत्वप्रतिबिंबत्वयोरि ति ॥ बिंबेप्रतिबिंबेचयथायथंतयोरुत्पत्तिरित्यर्थः ॥ **ताहगिति** ॥ प्रतिबिंबावि र्भावस्यबिंबाभेदतिरोभावस्यचेत्यर्थः ॥ **नाद्यइति** ॥ बिंबाभेदपक्षोनेत्यर्थः । अयमे वतदाशयगोचरोमुख्यइतिप्रथममुपन्यस्तः ॥ **ज्ञानंस्यादिति** । नचेष्टापत्तिः प्र तिबिंबंपश्यामीत्याद्यनुव्यवसायानुदयात् ॥ **प्रतिबिंबतिरोभावइति** । उपाधि समवधाननाशात्त्वयास्वीकृतेतस्मिन् नचाविर्भावनाशएवमयास्वीक्रियतेनतिरोभा वइतिवाच्यम् । आविर्भावनाशोत्तरंप्रतिबिंबसत्त्वांगीकारेतस्यदर्शनायोग्यतयातिरोभा वस्यार्थादेवापत्तेः ॥ तदसत्त्वस्वीकारेतु तन्नाशएवस्वीक्रियतां कृतंकंठगडुनात दाविर्भावनाशेन ॥ **प्रतिबिंबचलनइति** ॥ इदमुपलक्षणं तेन प्रतिबिंबभेदना शोबिंबेऽपितत्तदापत्तिर्ध्येया ॥ एतेन तदीयंवृद्धिर्ह्रासभाक्सूत्रभाष्यंसमारितंज्ञेयं ॥

**त्वन्मतविरुद्धमिति** । सिद्धांतवत्सांख्यादिवद्वा उत्पत्तिनाशविलक्षणयोराविर्भाव-तिरोभावयोरस्वीकारात् प्रत्युतोत्पत्त्याविर्भावादिशब्देषुपर्यायत्वांगीकाराच्च । एकदेशेऽप्याविर्भावादिस्वीकारेऽपसिद्धांतस्यास्मन्मतप्रवेशस्य चतुल्यत्वात्सर्वत्रतौकुतो न स्वीक्रियेते इति भावः ॥ विरोधंदर्शयितुंतन्मतग्रंथसंमतिमाहुः **आविर्भावेति** । पंचदश्यांश्चित्रदीपाख्ये षष्ठप्रकरणइयं ( श्लो ० १८२ ) कारिकाऽस्ति ॥ **समतोक्तेरिति** । समानं मतंयस्यस समतो विद्यारण्यः ॥ **तद्धर्मइति** । व्यावर्तकोऽसाधारणधर्मः ॥ **दर्पणसंनिधानेनेति** । अयंपूर्वत्रहेतुः ॥ **आद्यइति** । मुखएव प्रतिबिंबत्वमुत्पद्यतइतिपक्षे ॥ **व्यवहितस्येति** । अव्यवहितस्यवालुकादेर्जलादौप्रति-बिंबादर्शनेनोपाधिबिंबयोर्व्यवधानेसत्येवप्रतिबिंबप्रतीतिनियमस्यप्रागुपपादितत्वात्तथे-तिभावः॥ स्यादेतत्व्यवहिस्यापि चुंबकस्यसंनिधानमात्रेणलोहपरिभ्रामकत्वमिवेत्यरु-च्यादूषणांतरमाहुः**उपाधिसंनिधानस्येत्यादिना** ॥ **धर्मानंत्यमिति**। एकदादर्प-णसंनिधानेप्रतिबिंबत्वादिकमुत्पन्नंतत्संनिधाननाशेच नष्टमेवंमुहुस्तत्संन्निधानासंन्निधा-

---

## सहस्राक्ष.

॥ ३५ ॥ प्रतिबिम्बस्य च बिम्बोत्पत्तिविनाशाभ्यामुत्पत्तिविनाशौ उपाधिसमवधानेन प्रति-बिम्बस्याविर्भावस्तत्रबिम्बाभेदतिरोभावश्चजायते तथा प्रतिबिम्बत्वबिम्बत्वयोरुत्पत्तिः उपाधि समवधाननाशेनच तादृगाविर्भावतिरोभावयोर्बिम्बत्वप्रतिबिंबत्वयोश्चनाशोजायते ॥ प्रतिबिम्ब-स्यबिम्बस्वरूपेणस्थितिरितियावत् ॥ बिम्बस्यच प्रतिबिम्बोत्पत्तिनाशप्रयोजकोत्पत्तिनाशप्र तियोगित्वं नबिम्बत्वेनकिन्तु स्वरूपेण ॥ उत्पत्तिरपि प्रतिबिम्बस्य तादात्म्येन ॥ इदंच सा-दिबिम्बे ॥ बिम्बस्यानादित्वेतु तदुत्पत्तिविनाशयोरभावेन प्रतिबिम्बोत्पत्तिविनाशयोरप्यभावः ॥ उपाध्यसन्निधानेऽसन्नपि प्रतिबिम्बोबिम्बरूपेणैव गृह्यते नतुप्रतिबिम्बरूपेण॥ तादृक्स्वरूपस्या नाविर्भावात् ॥ अभेदस्याऽतिरोभावाच्च ॥ बिम्बत्वादेरभावाद्बिम्बादिपदैर्व्यवहारोऽपि न ॥ एवंच-सत्कार्यवादे तन्तुसंयोगस्योत्पत्तेः पूर्वं नाशात्पश्चाच्च पटस्य तन्तुमात्रत्ववत्तन्तुसंयोगका-ले वाचारम्भणपरिणाहायामशालिद्रव्यस्वरूपत्वतन्तुभेदवत्त्ववच्च प्रतिबिम्बस्यापि उपाधेरसमव-धाने बिम्बमात्रत्वं तत्समवधाने तादृशप्रतिबिम्बत्वबिम्बत्ववत्त्वं बिम्बभेदवत्त्वं च भवति ॥ आविर्भावकोपाधिकृता देशान्तरसंबन्धप्रतीतिः प्रतिबिम्बेपदादितोऽधिका ॥ एतेन अविद्यायां ब्रह्मप्रतिबिम्बोजीवइतिमोक्षश्चाविद्यानाशइति वदतस्तव मते जीवस्वरूपनाशएव मोक्षइ-तिसंपद्यते तथाचात्महानमपुरुषार्थइति मोक्षस्यापुरुषार्थत्वमापद्येत जीवस्याऽलीकत्वं च स्यात्तथासति कोऽपि पारलौकिकप्रयत्नं न कुर्यात् इति विद्वन्मण्डनोक्तं सर्वमत्युक्त-म् ॥ उपाधिनाशेन प्रतिबिम्बस्यनाशात् ॥ सतएव पदार्थस्याविर्भावसम्भवाद्भेदाविर्भा-

नयोर्नवंनवमुत्पद्यते नश्यति चेत्येकस्मिन्नेवप्रतिबिंबेप्रतिबिंबत्वानामानन्त्यम् । एवंबिंबत्वेपिबिंबत्वानाम ॥ **अननुगतत्वादिति** । स्वाश्रयेष्वन्यूनानतिरिक्ततयास्थित्यंभावात् ॥ **द्वितीयेत्विति** । दर्पणादावुपाधावेव प्रतिबिंबत्वमुत्पद्यतइतिपक्षे ॥ **नापिद्वितीयइति** । प्रतिबिंबस्यबिंबोपादेयत्वमितिपक्षो ऽ पिनेत्यर्थः । नचतेनतयोरभेदस्यैवोक्तत्वात्कथमस्य पक्षस्योत्थानमितिशंक्यम् । पूर्वं ( उत्पन्निरपि प्रतिबिंबस्यतादात्म्येन ) इतितदुक्तिमग्रेतदुक्तंतंतुपटदृष्टांतंचावलंब्यैवास्योत्थापनात् ॥ **भानापत्तेरिति** । यस्मिन्धर्मिणियोधर्मउत्पद्यते तद्विशेषणतयैवतद्भानमुचितमितिभावः ॥ नचबालादेः कदाचित्तथाभानंजायतएवेतिचेत्तादृग्भानंभ्रमएवा नोऽकिंचित्करमित्याशयेना ऽऽ पत्त्यंतरमाहुः**प्रमात्वंचस्यादिति** ॥ **संयोगप्रत्ययादिति** । संयोगस्यापिपरमसिद्धांत आविर्भावांगीकारात्प्रत्ययपदम् । संयोगस्यापिनित्यत्वंतुकार्यमात्रस्यब्रह्मरूपत्वात्सर्वरूपब्रह्मणोयावन्मूर्तद्रव्यादिरूपकार्येषुसंयोगस्यतद्विभुत्वनिर्वाहायावश्यवाच्यत्वाच्चसिध्यतीत्यन्यत्रविस्तरः ॥ **पूर्वोत्तरकालयोरपीति** । अपिशब्दात्संयोगप्रतीतिकालेऽ पिपटस्तंत्वभेदंनव्यभिचरतीतिद्योतितं परं पूर्वोत्तरकालयोःकार्यस्यानाविर्भूतत्वात्परिणाहायामादिकार्यासाधारणधर्मानानुभूयंते ॥ एतेन ( सत्कार्यवादेतंतुसंयोगस्योत्पत्तेः पूर्वं नाशात्पश्चाच्चपटस्यतंतुमात्रत्ववत्तंतुसंयोगकालेवाचारंभणपरिणाहायामशालिद्रव्यस्वरूपत्वतंतुभेदवत्त्ववच्चप्रतिबिंबस्यापिउपाधेरसमवधानेबिंबमात्रत्वंतत्समवधानेतादृशप्रतिबिंबत्वंबिंबभेदवत्त्वंचभवति ) इत्यादिनिरस्तम् । संयोगस्याप्युत्पत्तिनाशयोः सत्कार्यवादेऽगीकर्तुमशक्यत्वात् । तस्यापितयोरंगीकारे-

---

बस्योपाधिना स्वीकारे बिम्बे प्रतिबिम्बभेदः स्वीकृतः स्यादिति अभेदतिरोभावस्यैव तेन स्वीकारइति तन्नाशेऽपि नभेदनाशः किन्तु अभेदतिरोभावनाशएव ॥ विभेदजनकेऽज्ञानेइत्यादौ विभेदादिपदैरभेदतिरोभावएवोच्यते इति नकश्चिद्विरोधः ॥ उपाधर्जलस्यधर्मास्तु वृद्धिन्हासाद्याः प्रतिबिम्बेऽध्यस्यन्ते ॥ तथाच पारमर्षसूत्रम् ॥ वृद्धिन्हासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ एवंचलौकिकप्रतिबिम्बविलक्षणं यदि किञ्चिज्जीवाख्ये प्रतिबिम्बे तवप्रतीयेत लोकेच तथास्वीकारआवश्यकःस्यात्तर्हि अत्राऽघटितघटनापटीयस्यामायायाः प्रभावेण तत् स्वीकार्यम् ॥ तादृशवैलक्षण्येऽपि प्रतिबिम्बत्वं नापन्हवनीयम् ॥ यत्किञ्चिद्वैलक्षण्यस्यसर्वत्र सत्त्वेनानिवारणीयत्वात् ॥ यद्यपिचावच्छेदवादोपि भगवत्पादमुनेः सम्मतोस्ति पक्षान्तराणिचभाष्यादिसम्मतानि तत्रप्रतीयन्ते तेषां च वस्तुतो नविरोधइति वार्तिककारपादैः सिद्धान्तलेशकृदादिभिश्चोपपादितम् तथापि तत्रपरस्यातिमत्यवस्थानाभावान्नतदस्माभिरिह प्रतायते इतिदिक् ॥ ९ ॥३६ ॥

तुपटादेःकार्यस्यैवकुतोनोररीक्रियेताम् । पटप्रतीतिकालेऽपितस्यातंतुमात्रत्वं स्वीक्रियतेनेनतुपूर्वापरकालयोरेव । अतः परिणाहायामाद्यवस्थाविशेषोऽपितंतूनामेव । तादृशावस्थाविशेषविशिष्टास्तंत्वादयएवपटादिनामधेयैर्व्यवह्रियंतेनतुपटाद्याविर्भावकालेऽपितेषुतंत्वादिभेदोंऽगीक्रियते । तंत्वाद्यतिरिक्तस्थलेपटादीनामप्रत्ययात् । तस्मात् ( भेदवत्त्ववच्च ) इत्यंतोदृष्टांतोऽस्मत्सिद्धांताज्ञानमूलकउभयवादिसंमतत्वाभावादसंगतः॥ तेनैवदार्ष्टांतिकमपिनिःशेषमपास्तम् । बिंबप्रतिबिंबयोस्तंतुपटादिवदुपादानोपादेयभावमस्वीकृत्यप्रतिबिंबस्योपाध्यसमवधाने बिंबमात्रत्वमित्यादेरशक्यवचनत्वात् ॥ ( प्रतिबिंबस्योपाधिसमवधानेतादृशप्रतिबिंबत्वबिंबत्ववत्त्वंबिंबभेदवत्त्वंचभवति ) इतिकथनंतुपुनरामसंगतम् । प्रतिबिंबेबिंबत्वोत्पत्तेः स्वयमप्यस्वीकारात् । बिंबएवतस्याःस्वीकारात् । अन्यथाप्रतिबिंबमेवबिंबतयाप्रतीयेत मुखंबिंबमितिचनप्रतीयेत ॥ एवंस्वयमभेदतिरोभावस्यवांगीकारेणभेदमनंगीकृत्य " विभेदजनकेज्ञान " इतित्वसंमतवाक्यस्याप्यन्यथानयनेन चेदानींबिंबभेदवत्त्वमितिकथनेपूर्वापरत्वग्रंथविरोधः ॥ नचेहत्वोक्तावपिभेदपदमभेदतिरोभावपरतया व्याख्येयम् । तथासत्यग्रे ' भेदाविर्भावस्ये ) त्यादावपिभेदपदस्यतादृशतिरोभावपरत्वप्रसंगात् ॥ अन्यथात्वनिर्णयापातात् ॥ **पुरुषार्थतानस्यादिति** " आत्मज्ञानमपुरुषार्थ „ इत्यभियुक्तोक्तेरात्मज्ञानरूपस्यमोक्षस्यसानस्यादितिभावः ॥ **तस्यनिरतिशयप्रेमविषयत्वादिति** । बृहदारण्यके ( अ० ४ ब्रा० ३ पृ० ४४७ ) " नवाअरेपत्युःकामाये " त्यारभ्य " आत्मनस्तुकामायसर्वंप्रियंभवती " त्यंतेनजीवस्यपरमप्रेमास्पदत्वंश्राव्यते ॥ एतदेवाभिप्रेत्यपंचदश्यांविद्यारण्योऽप्याह । ( प्रकरण १ श्लो० ८ । ९ ) " इयमात्मापरानंदःपरप्रेमास्पदंयतः । मानभूवंहिभूयासमितिप्रेमात्मनीक्षते ॥ तत्प्रेमात्मार्थमन्यत्रनैवमन्यार्थमात्मनि । अतस्तत्परमंतेनपरमानंदताऽऽत्मन " इति ॥ **प्रत्यक्षसिद्धत्वादिति** । अनेकोत्पत्तिनाशाविर्भावतिरोभावकल्पनापेक्षयालाघवात्प्रत्यक्षानुरोधाच्चप्रतिबिंबस्यैवोत्पत्तिनाशौसुवचावितिभावः ॥ **अविश्वासइति** । भेदादिशब्दैःक्वचिद्भेदएवक्वचिच्चाभेदतिरोभावइत्यनिर्णयात्विभेदशब्दवद्वाक्यस्थशब्दांतराण्यपिकिंस्वार्थपराण्याहोस्विल्लक्षणादिनाऽर्थांतरपराणीतिसंशयाच्चाविश्वासइत्यर्थः तेनत्वोक्तोपष्टंभार्थकनंवृद्धिह्रासमूत्रोपन्यासंदूषयंति **वृद्धिह्रासभाक्त्वमित्यादिना** ॥ **वेदबोधितेति** । विषयश्रुतौ भारूपसर्वकामादिपदै जीवधर्माःसर्वगंधसर्वरसादिपदैश्चजडधर्माबोध्यंत इतिभावः ॥ प्रकृतसूत्रस्यभाष्यंप्रकाशंचैकीकृत्यकंचित्तद्भागमर्थतः कंचिदक्षरशश्चसंगृह्णंति **यथालोकइत्यादिना** ॥ **अल्पत्वमहत्वयोरिति** । अल्पत्वमात्रस्यमहत्त्वमात्रस्यचेत्यर्थः । तेनव्यापकेशतेपंचाशदितिन्यायादल्पादियावत्परिमाणाश्रयत्वेऽप्यदोषः ॥ **अल्पतयेति** । करकप्रवेशाभिव्यक्तया त्वनिष्टयैवतया ।

एवंमहत्त्वमपिमठादिप्रवेशाभिव्यक्तंज्ञेयम् ॥ **वृद्धिन्हासभाक्त्वमिति** । उपाध्यभिव्यंजितस्वनिष्ठतत्तत्परिमाणव्यपदेशाश्रयत्वं ॥ **तदभिव्यंग्येति** । वस्तुतोब्रह्मधर्माएवतेलौकिकैःपृथिव्याद्युपाधिभिर्लौकैभिव्यज्यंतइतिभावः ॥ **विषयश्रुत्युक्तइति** । चिंत्यमानेशांडिल्यविद्यावाक्ये " आकाशात्मा ". इतिश्रावितइत्यर्थः ॥ **प्रमाणाभावेनेति** । अत्तद्धर्मबोधकवाक्येष्वौपाधिकधर्मपरत्वरूपतात्पर्यनिर्णायकानांजैमिनीयप्रसिद्धश्रुतिलिंगादिप्रमाणानामभावेनेत्यर्थः ॥ **ग्रहणादिति** । एतदंतेनप्रकृतसूत्रस्थभाष्यतत्प्रकाशयोराशयोऽर्थतःशब्दतश्चप्रायशोऽनूदितः ॥ अतःपरंस्वातंत्र्येणवदंति **किंचेत्यादिना** । **दर्शनादिति** । अत्रापिशद्बः प्रागुक्तानामुक्तदिशोऽन्नेतुंशक्यानांचप्रतिबिंबत्वदूषकयुक्तीनांसमुच्चायकः ॥ **मुक्तानामित्यादि** । ब्रह्मैकदेशेऽनादिमायायाःसत्त्वस्यस्वीकाराच्छ्रुतिसिद्धसृष्टिपौनःपुन्यनिर्वाहान्यथानुपपत्त्याऽग्रेऽपिब्रह्मणिसर्वांशतोमायानिवृत्तेःकदाचिदपिवक्तुमशक्यत्वाच्च सर्वथाब्रह्माभिन्नेषुमुक्तेषुविभाजकलेशस्याप्यभावेनतेषुविद्यमानासाशबलवदिच्छाप्रयत्नादिकंतद्द्वारापुनःसंसारावेशंचपुनःकुतोनसंपादयेदितिभावः । उत्पत्तिशब्दोऽत्रजननाद्यभिमानरूपसंसारपरोविवक्षितः ॥ **सुकृतिनामित्यादि** । अमुक्तदशायांतस्याःसत्त्वस्यत्वशक्यवारणतयास्वभावानुरोधात्सासुकृतिदुष्कृतिनांनियतफलविपर्ययादिकंकुतोनजनयेत् । चकारोऽत्रविविधानांश्रुत्यादिसिद्धमर्यादाभंगानांसमुच्चयार्थः॥ यदितुशास्त्रादिनियतमर्यादातिरिक्तस्थलएवाघटितघटनापटीयस्त्वंतस्याअभ्युपगम्येततर्हिप्रतिबिंबवस्तुमर्यादाऽपिनतयाभंक्तुंशक्या ॥ अतोजीवस्यप्रतिबिंबत्वमाहत्यनापादयितुंशक्यं ॥ **श्रुतियुक्तीति** । श्रुतयश्चयुक्तयश्चेत्यर्थः । श्रुतिशास्त्राननुरोधितर्कास्त्वप्रतिष्ठानाद्देदांतेष्वनिर्णायकाइत्याशयेनश्रुतीनांप्रथमनिर्देशः ॥ **परेणेति** । खंडनीयसहस्राक्षकारेण । तेनाप्पय्यदीक्षितादिभिःप्रतिपादनेऽपिनविरोधः । तेषांखंडनंचश्रीपुरुषोत्तमचरणादिग्रंथेष्वस्त्येवातोऽत्रनक्रियतइत्याशयः॥ अत्रायंसारोऽवगंतव्यः ॥ यच्चप्रतिबिंबस्यचबिंबेत्यादिव्यवहारोपिनेत्यंतंतन्निर्मूलं नहिकाचिदपिप्रतिबिंबस्ययावृद्धिंबसत्त्वंसत्तायाबोधिका तदाविर्भावादिबोधिकावाश्रुतिस्मृतिर्वोपलभ्यते यद्बलात्तथाकल्प्यंनाप्यविप्रतिपन्नालौकिक्यपिकाचित्तादृशी युक्तिरस्ति ययोपाधीनांसमवधानासमवधानयोःप्रतिबिंबस्योत्पत्तिनाशावकल्पयित्वाव्यर्थंकंठगडूयमानौतस्यतादृग्बिंबाभेदस्यचाविर्भावतिरोभावौतेषांचोत्पत्तिनाशौबिंबप्रतिबिंबसाधारणधर्मयोश्चमुहुर्मुहुस्तौस्वीक्रियेतांनचोक्ताश्रुत्यादयएवात्रमूलं तासुप्रतिबिंबस्यनाम्नोप्यनुच्चारणात् स्वरसतोव्याख्यातत्वाच्च । किंचप्रतिबिंबस्यालीकत्वंमायिकत्वंचैकादशस्कंधे द्वितीयस्कंधेचाहश्रीपुरुषोत्तमःच्छायाप्रत्याव्हयाभासाअसंतोप्यर्थकारिणइति तद्विद्यादात्मनोमायांयथाभासोयथातमइतिच बिम्बभूतघटादीनांसत्यत्वंत्वनेकश्रुतिसूत्रादिसिद्धंप्रागेवदर्शितं अतोपितयोरभेदोऽशक्यवचनः किंचोपाधिसमवधानेनतदाविर्भावनिय-

मेदर्पणस्यपृष्ठतःस्थित्वाकरस्यपुरस्तात्करणेसमवधानस्यजातत्वात्संपूर्णेनप्रतिबिम्बेन-
दृग्गोचरीभवितव्यंनतुकरमात्रस्यतेन ननुयावतोवयवस्यतत्समवधानंतावानेवप्रतिबि-
म्बावयवोप्याविर्भवतीचेत्तस्यापिसावयवत्वाज्जन्यत्वाच्चबिंबवत्तस्याप्युपादानंकिंचि-
द्वाच्यंतत्रनपृथिव्यप्तेजांसितत्स्पर्शाभावात् अतएवनवायुः रूपोपलंभाच्चअतएवना-
काशः अशब्दगुणकत्वाच्च नापिकालदिङ्मनांसिरूपाद्युपलंभात् तेषामनारंभकत्वाच्च-
अतःकारणाभावात्कार्यमप्यशक्यंबिंबेनसहोत्पन्नमितिवक्तुं किंचकिंघटप्रतिबिंबस्य-
निमित्तंस्यात्दंडादिरेवेतिचेत् घटाभावेप्युपाधिसमवहितेनतेन सशक्येतोत्पादयितुं
घटस्यापितत्रनिमित्तत्वमितिचेत् समानोत्पत्तिकत्वायदीयतांतिलांजलिः कारणस्य-
पूर्ववृत्तित्वनियमात् निरुपादानंनिमित्तकंच प्रातिभासिकभिन्नंजन्यमप्रसिद्धं प्राति-
भासिकस्याप्युपादानएवाविवादःसन्निमित्तकत्वंतुतस्यापिबहुसर्वसंमतं किंचबिंबेन-
सहकतिप्रतिबिंबान्युत्पद्यते एकमेवेतिचेत् अनेकदर्पणसमवधानेयुगपदनेकतत्प्रतीति-
र्नोपपद्येत बहूनीतिचेत्संख्याया अनियमोदोषःतस्माल्लाघवाच्चक्षुर्योग्यस्यसमवधाने-
नमत्युपाधितद्रूत्पत्तिस्वीकारएवश्रेयान् किंचबहूनांतेषांबिंबेनसहोत्पन्नत्वे एकदर्प-
णसमवधानेपिसर्वेतआविर्भवेयुः नचैकोपाधिसमवधानमेकस्यैवतस्याविर्भावनेशक्त-
मितिवाच्यं गौरवाधिक्यात् परस्पराभिमुखस्थितदर्पणद्वयेप्रतिबिंबपरंपरानुभवानुप-
पत्तेः एवंप्रतिबिंबानामपिप्रतिबिंबदर्शनात् उत्तरोत्तरप्रतिबिंबपरंपरायाःस्वस्वबिंबभूत-
प्रतिबिंबैः सहोत्पत्त्यादिकमुपाधिसमवधानेचाभेदतिरोधानानितन्नाशेचतन्नाशाःक-
ल्प्याइतिमहत्येवाव्यवस्था बिंबेनसहप्रतिबिंबोत्पत्त्यादिकल्पनमात्रेणानिर्वाहात् किं-
चप्रतिबिंबाविर्भावोत्तरंशस्त्रादिनातच्छेदनादिशक्यतेकर्तुंशारीरकभाष्येपितृतीयस्यद्विती
येपादे ( सू० २० ) वृद्धिह्राससूत्रेजलचलनेचलतिजलभेदेभिद्यतइत्यभिहितं तथाच-
जलेप्रतीयमाने प्रतिबिंबेतरवार्यर्धप्रवेश्यबिंबस्यापसारणेतत्क्षणमभेदतिरोभावनाशा-
त् कृपाणच्छिन्नस्येवप्रतिबिंबस्यबिंबाभेदसिध्याबिंबेच्छेदनादिकमनुभूयेत किंचप्रति-
बिंबस्यसर्वथाबिंबाभिन्नत्वे आविर्भावेसत्यपि बिंबभिन्नदिङ्मुखत्वेनसव्यासव्यविप-
र्ययेणचनभवितव्यं दृश्यतेतुप्राङ्मुखस्यपुंसःप्रत्यङ्मुखःप्रतिबिंबः वामपाणिप्रणयिकं-
कणंकिणगणाश्चदक्षणपाणौप्रतिबिंबस्य तथापूर्वस्थितस्यप्रतिबिंबआविर्भूतेपश्चाद्रुप-
वेशनेहसनेहस्तादिचालनेचप्रतिबिंबेतत्तत्क्रिययानभाव्यंतदाविर्भावोत्तरमभेदतिरोभा-
वांगीकारात् मन्मतेतुमायिकपदार्थांतरत्वांगीकारात् सर्वमुपपद्यते किंचबिंबसमानो-
त्पत्तिनाशमात्राभ्युपगमेननिर्वाहः बालस्यप्रतिबिंबेल्पिष्ठोमेदस्विनस्तस्मिन्स्थूलिष्ठः
पुनरपक्षोणस्यतस्मिन्नपक्षीणतायाश्चानुभवात् बिंबस्यशरीरादेर्वृद्ध्यपक्षयौतुतत्तत्परमा-
णुप्रवेशनिर्गमाभ्यांभवतः नहिपरमाणुप्रवेशनिर्गमौतावपांचभौतिकेप्रतिबिंबेसंगच्छेतेइ-
तिबिंबवृध्यादिनाप्रतिबिंबेतस्यानुपपत्तिः एवंबिंबस्यतरोः पांचभौतिकावयवच्छेदने-
प्रतिबिंबेतदवयवराहित्यानुभवोनस्यात् नापिबिंबस्यावयवाएव प्रतिबिंबस्यापितइ-

तिकुशकाशावलंबनंशक्यं अदर्शनंस्वशिरसःप्रतिरूपेषुसत्त्वपीत्यादिदशमस्कंधादिव-
चनेबिंबेऽवयवसत्वेपिकचित्प्रतिबिंबेतदनुपलब्धेः एतेनप्रतिबिंबनाशस्यप्रयोजकं-
ताऽपास्ताअनष्टेसमवहितेपिबिंबावयवेप्रतिबिंबावयवनाशात्‌ अनित्यत्ववादेवर्णध्वंसो-
त्तरमेवप्रतिध्वनिश्रवणेनबिंबध्वंसस्याप्रयोजकतायास्त्वयोरीकार्यत्वाच्च अपिच प्र-
तिबिंबतदभेदयोराविर्भावतिरोभावौस्वीकृत्यतयोरुत्पत्तिनाशौयथाब्रूषे तथातदुत्पत्ति-
नाशौस्वीकृत्यतयोरेवाविर्भावतिरोभावावपिसंभवदुक्तिकौ निर्णायकविरहात्‌ कार्य-
सिद्धेरुत्पत्त्याविर्भावाद्युभयाभ्युपगमगौरवस्यचतौल्यात्‌ अतःसंशयएवपर्यवसन्नं व-
स्तुतस्तुतयोराविर्भावतिरोभावौनविकल्पसहौतथाहिप्रतिबिंबंकतिरोधत्ते उपाधौबिं-
बेवानाद्यः उपाध्यंतरसमवधानेतदनाविर्भावप्रसंगात्‌ नद्वितीयःउपाधिपरित्यज्यतस्य-
बिंबपर्यंतंगमनस्यादर्शनात्‌ तथाप्रतिबिंबंकाविर्भवति नोपाधौ अन्यत्रतिरोहितस्यत-
दभिन्नस्यकारणमंतरेणतत्राविर्भावायोगात्‌ नापिबिंबेबिंबहित्वोपाधिंप्रतिप्रयाणस्या-
प्रेक्षणात्‌ नचतिरोहितस्यैवगमनागमनेवाच्ये मानाभावात्‌ दृष्टानुसारिमतांतरेणान्य-
थानुपपत्तिपरिहारात्‌ उपाधिबिंबांतरालिकक्षणिकनिराश्रयतत्स्थित्यसंभवाच्च किं-
चाभेदःकिंप्रतिबिंबप्रादुर्भावात्प्रागेवतिरोधत्ते तदुत्तरंवा नाद्यः अनाविर्भूतस्यतस्य-
तत्तिरोभावाधिकरणत्वायोगात्‌ नचाबिंबमात्रंतदाश्रयःतद्वयप्रतीत्यापत्तेः द्वितीयश्चे-
त्‌बिंबगमनादिकमंतरातस्योपाधिदेशगमनादिकमसंभवि अभेदस्यातिरोधानात्‌ ति-
रोधानोत्तरंगमनंचेद्दृश्येत तथातत्तिरोभावनाशः प्रतिबिंबतिरोभावात्‌ पुरस्ताद्भव-
तिपरस्ताद्वानाद्यः क्षणिकव्यवधानभेदप्रत्यययोरयोगात्‌ द्वितीयेतुतिरोभावोत्तरमदृ-
श्यस्यप्रतिबिंबस्यक्षणंभेदेनस्थितिवत्‌ सार्वदिक्यपिसा तथाजाघटोतीत्युत्तरक्षणे अ-
भेदस्यमुहुस्तत्तिरोभावतन्नाशयोश्चकल्पनंनिरर्थकं प्रतिबिंबतिरोधानक्षणावच्छेदे-
नाभेदतिरोभावःक्वतिष्ठेत्‌उत्तरक्षणेतन्नाशश्चाधिकरणाभावात्क्वस्यात्‌ एवमन्यदपिश-
क्यमूहितुं वस्तुतस्तुविवर्तवादिनस्तेमतउत्पत्त्याविर्भावयोर्वैलक्षण्यानूरीकारान्नकिं-
चिदेतत्‌ एवंबिंबप्रतिबिंबत्वयोरुत्पत्तिनाशावपिनयुक्तिसहौ तथाहिप्रतिबिंबत्वंप्रति-
बिंबएवोत्पद्यतेन्यत्रवानांत्यः अन्यत्रान्यधर्मोत्पत्त्यसंगतेः यत्रोत्पद्येततस्यैवप्रतिबिं-
बतयाप्रत्ययापत्तेश्च आद्यश्चेत्तदाविर्भावात्‌ प्राक्तदुत्पद्यतेनंतरंवा नप्रथमः अधिक-
रणासिद्ध्योत्पत्त्यसिद्धेः द्वितीयश्चेत्तादात्म्यापरपर्यायेसमवायसंबंधावच्छिन्नतन्निरू-
पिताधिकरणतावच्छेदकंतत्प्रतियोगिकप्रागभावाधिकरणतावच्छेदकंचकिंस्यात्‌ प्रति-
बिंबत्वमेवेतिचेदात्माश्रयः नाप्यन्यदप्रसिद्धेः आविर्भावश्चकेनरूपेण नप्रतिबिंबत्वे-
नव्याघातात्‌ तथाभेदतिरोभावात्पूर्वंतदुत्पद्यतेतदुत्तरंवा आद्येबिंबत्वार्हघटाद्येव-
तदधिकरणंवाच्यमितितत्रप्रतिबिंबत्वप्रतीतेः प्रतिबिंबेतदप्रतीतेश्चप्रसक्तिः द्वितीयेतिरो-
भावाधिकरणतावच्छेदकस्यानिर्णयः तथाप्रतिबिंबतिरोभावात्पूर्वंतन्नश्यतिपश्चाद्वा

आद्येतिरोभावः केनरूपेणद्वितीयेतिरोहितेपिप्रतिबिंबेकंचित्कालंतुप्रतिबिंबत्वंतिष्ठत्येवे-
तिअयेतन्नाशकल्पनंनिष्फलं उभयत्रप्रतिबिंबत्वप्रतियोगिकध्वंसाधिकरणेनावच्छे-
दकानिर्धारश्चएवमभेदतिरोभावात् प्राक्तनन्नाशेतिरोभावध्वंसाधिकरणतावच्छेदका-
निश्चयः नागृहीतविशेषणेतिन्यायेनतद्रहितश्चप्रतिबिंबपदार्थएवबोधुमशक्यः तदनं
तरंतन्नाशेतुक्षणंपरस्परनिरूपितबिंबत्वप्रतिबिंबत्वयोः सामानाधिकरण्यापत्तिः । सं-
भवतिचसामानाधिकरण्येसदैवतदास्तांप्रतिबिंबस्यापिप्रतिबिंबेसति प्रथमप्रतिबिंबे-
निरूपकाभेदादुभयोःसामानाधिकरण्यंदृश्यतेतःपरस्परनिरूपितत्वंविशेष्यते एवंबिं-
बत्वोत्पत्त्यादावपिएतएवविकल्पायथायथमूह्याः इतरश्च तिमिरमपिप्रतिबिंबतेत
च्चप्रौढप्रकाशकतेजोऽभावएव आभावेचधर्मांतरोत्पत्तिध्वंसयोरप्रसिध्यातत्रबिंबत्वस्य-
तावशक्यवचनौतत्प्रतिबिंबेचप्रतिबिंबत्वस्यतौ अभावरूपेतत्प्रतिबिंबेश्यामत्वादेःस्व-
प्रतियोगितेजःकदंबेप्रतीतेश्चविरोधःयदितु “ यथाप्रासोयथातम ” इत्यादिप्रमाणसि-
द्धंतस्यमायिकपदार्थांतरत्वंस्वीकृत्यसर्वंसाधयेस्तर्हिघट्टकुटीप्रभातं ततएवप्रतिबिंब-
स्यापितथात्वसिद्धेः एतेनअनादिबिंबेप्रतिबिंबस्यानादित्वमपिप्रत्युक्तं अवच्छे-
दकस्यमुहुरुत्पत्तिध्वंसांगीकारे तदवच्छिन्नस्यनित्यत्वानिष्पत्तेःअतःप्रतिबिंबाविर्भा-
वादीनांबहूनामुत्पत्तिनाशाभ्युपगमक्लेशापेक्षयालाघवाद्दृष्टानुसारात् प्रमाणानुग्रहाच्चप्र-
तिबिंबमात्रस्यतौवक्तुंयुक्तौ ॥ एतावतैवएवंचसत्कार्येत्यादिः नकश्चिद्विरोधइत्यंतो-
ग्रंथोपिनिराकृतोवेदितव्यः ॥ प्रतिबिंबस्याप्याविर्भावाद्यंगीकारेअंतेरंडाविवाहइति-
न्यायेनसत्कार्यवादमेवस्वीकुरु ॥ सर्वंकार्यंब्रह्माभिन्नंतस्यानादित्वादनादित्वंसृष्टि-
कालोपाधिसमवधानेतदाविर्भवतितत्राभेदश्चतिरोधत्ते तदतिक्रमेचसर्वंतिरोभवतीतिक-
थनेबाधकाभावात् सत्कार्यवादिनश्चपटादिवत् पटत्वादिकमपिनित्यंमन्यंतेऽतस्तत्र-
नोक्तदोषप्रसरः विशेषस्तुसत्कार्यविवेचनस्थलेप्रागुक्तोद्रष्टव्यः किंचैवंसत्तात्रयमपिन-
स्वीकार्यं रजतादीनिहिशुक्त्यादिनासहैवोत्पद्यंते तामसबुद्धिसमवधानेचतत आवि-
र्भवंतीत्यादिकल्पनस्यत्वज्जल्पनसमानयोगक्षेमतयातत्र तावकपर्यनुयोगायोगात् अ-
तःप्रतिबिंबालीकतायाः प्रमाणसिद्धत्वात् युक्तिसिद्धत्वाच्चउपाधेःप्रतिबिंबत्वस्यच-
नाशेप्रतिबिंबनाशावश्यंभावाच्च विद्वन्मंडनोदितंदूषणद्वितयमप्यशक्योद्धारं अभेद-
तिरोभावस्येव भेदस्यैवोत्पत्तिध्वंसांगीकारेणैवसर्वंसिध्यतिनवेत्यपिविचारणीयंतथास-
तिविभेदजनकइत्यपिवाक्यमनुपचारादगृहीतंभवेत् वृद्धिह्राससूत्रंतुपुंवत्तारसि-
कविवरणवारिणाविमलितं यच्चएवंचलौकिकेत्यादिअनिवारणीयत्वादित्यंतमवादिसो-
यमपूर्वोवाक्स्तंभनमंत्रोभ्यूहितोभवता यदघटितघटनापटीयस्त्वंमायायाइति अ-
नेनैवसर्वंसिद्धौअस्वच्छत्वादिहेतुसमकनिरासप्रयासोप्यायुष्मतस्तोयताडनसगंधः
अथप्रतिबिंबत्वबाधकप्रामाणिकयुक्तीनामियन्मात्रेणाप्रतिविधानात्तत्सार्थक्यमिति-
चेत्संप्रत्युक्तंप्रत्युक्तमेव बहूनिचप्रतिबिंबवादसाधकानिविद्वन्मण्डनव्याख्यायामुत्तरो-

न्तरकोऽव्यवतरणतयोपन्यस्तान्येवादाययद्भवानुयुक्तिलाभवान्संवृत्तः तदेतच्चौर्यंचातुर्यंसव्याख्यंतत्प्रक्षिप्तवद्भिः प्रेक्षावद्भिः स्वयमेवावगंस्यतइति कृतमतिशयेन किंचमायायाविभुत्वेन तत्रप्रतिबिंबस्यापिविभुत्वेतस्यचलनाद्यसंभवात् ( छांदोग्यअ० ६ खं० ११ ) "अस्ययदेकांशाखांजीवोजहात्यथसाशुष्यतिद्वितीयांजहात्यथसाशुष्यतितृतीयांजहात्यथसाशुष्यतिसर्वंजहातिसर्वः शुष्यती" त्यादिश्रुतयःपीड्येरन् नचजलकंपेनतद्गतप्रतिबिंबकंपवन्मायापसरणेनतदपसरणंशंक्यं आकाशादिसर्ववस्तूनांतद्व्याप्यत्वनियमेनतदपसरणायोगात् जगतोमायिकत्वेनतदपसरणे शुष्कशाखादीनामप्यनुपलंभप्रसक्तेश्च एवमुत्क्रांत्यादेरात्मनागत्यागत्योश्चविरोधोऽप्यनुसंधेयः नचांतःकरणसंयोगवियोगाभ्यांहरितत्वशोषणेकल्प्येअणुमात्रस्यतस्यव्याप्यवृत्तित्वासंभवेनतत्कर्तृकस्यसर्वशाखाजीवनस्यैकतरतत्यागस्यचाशक्यवचनत्वात्तस्मात्प्रदीपोदर्शयतीत्यादिवत्स्वाभिन्नविसर्पिचैतन्यद्वारासएवजीवइतिजहातिचेत्येवंवक्तुंयुक्तंअन्यथामध्यमपरिमाणापत्तेः एतेनांतः करणेब्रह्मप्रतिबिंबःसइतिपक्षोऽप्यपास्तःअतएव "संकल्पाहंकारसमन्वितोय" इत्यादयस्तत्संयोगबोधकश्रुतिस्मृतयःसंगच्छंतेनहिदर्पणयुक्तःप्रतिबिंबइतिव्यवहरंति अस्मिन्पक्षेउपाधेरल्पतयाजीवस्यविभुत्वमपिनस्यात् नचबिंबविभुत्वेनतत्संभवः आकाशस्यतथात्वेपितत्प्रतिबिंबतयाभिप्रेतप्रभाप्रचयप्रतिच्छायायांविभुत्वाभावात् एतेनांतःकरणावच्छिन्नत्वपक्षोप्याक्षिप्तः वस्तुतस्तुमायायाअपिपरिच्छिन्नत्वेनतत्रप्रतिबिंबत्वतदवच्छिन्नत्वपक्षयोरपिनतत्सिद्धिः एकस्मिन्नुपाधौव्याप्यवृत्त्यनेकप्रतिबिंबानामप्यसंभवश्च आहत्यतथांगीकारेसांकर्यं सर्वेषांसार्वज्ञ्यं ( अध्या० २ पा० ३ सू० ५१ ) "अदृष्टानियमा" दित्यादिसूत्रोक्तदोषाश्चप्रसज्येरन्नित्युक्तंप्राक् किंचमायायांप्रतिबिंबोजीवश्चेदीश्वरःक्वप्रतिबिंबः तत्रैवेतिचेन्नउपाधिव्यापकानेकप्रतिबिंबानुपपत्तेः अपिचैवंसति किंतस्यतेषांचव्यावर्तकंबिंबस्योपाधेश्चाविशेषात् तत्रैवदेशभेदेनेतिचेत् उभयोरपिविभुत्वंनसिध्येत् शरीरादावीश्वरसत्ताचनस्यात् तथाचव्याप्यनारायणस्थितइत्यादीनांत्वन्मतरीत्या सवाएषमहानजइत्यादीनांचव्याकोपः एवंविधानुपपत्तिभयादेवत्वदीयामायायांब्रह्मप्रतिबिंबईश्वरोऽविद्यायांचसजीवइत्युपाधिभेदंकल्पयंति यथोक्तं ॥ जगतोयदुपादानंमायामादाय तामसीम् निमित्तंशुद्धसत्वांतामुच्यतेब्रह्मतद्गिरा ॥ ४४ ॥ यदामलिनसत्वांतांकामकर्मादिदूषितां आदत्तेतत्परंब्रह्मत्वंपदेनतदोच्यते ॥ ४५ ॥ इति ॥ मायाऽविद्येविहायैवमुपाधीपरजीवयोः ॥ अखंडंसच्चिदानंदंपरंब्रह्मैवलक्ष्यतइतिच ॥ इत्थंचमायायांप्रतिबिंबनेचितिरसाविति कथनंजीवोपाधौसत्वशुद्ध्युपपादनंचत्वयंथविरुध्धं वस्तुतस्तूपाधिभेदोप्यकिंचित्करः यथाहुः श्रीपुरुषोत्तमचरणाः उभयोर्मायाविद्ययोर्व्यापकत्वेरजस्तमोनभिभूतत्वाभिभूतत्वयोःसार्वत्रिकत्वेनमायाविद्याविवेकासंभवात्प्रतिबिंबयोरप्यविवेकेन जीवेश्वरविभागस्यदुरुपपादत्वं ॥ अव्यापकत्वेजीवेश्वरयोर्व्याप-

कर्ताहानिप्रसंगश्च अथमायायाव्यापकत्वेबहिःसर्वतः स्वच्छत्वमविद्यायाश्चतदंत-स्था।यामलिनस्वच्छत्वमुपगम्यते तदापिव्यापकेप्रतिबिंबादर्शनादीश्वरोदुरुपपादः ब-हिष्टायाश्रितोमायांशरजस्तमोभ्यामविद्याव्यवधाने तत्प्रतिबिंबासंभवाज्जीवोपितथा-निकटचितस्तुनैकट्यादेवतदसंभवइति तथा।किंचिद्दूरत्वावकाशादिकल्पनेतुईश्वरस्य-चितश्चप्रादेशिकत्वापत्तिर्व्यापकत्वहानिर्निराकाशसंभवश्रुतिविरोधश्चेत्यादि ॥ तस्मा-दात्मनःप्रतिबिंबरूपत्वज्ञानमासुरविद्यायामेव एतच्चच्छांदोग्ये इंद्रविरोचनप्रजा-पतिसंवादेस्फुटमितिदिक् विशेषतश्चप्रतिबिंबत्वप्रतिविधायिकाः प्रमाणप्रकरप्रसूता-युक्तयः ...चामाचार्याणांवाचामाचांतामृताचाराणांगोचराश्चिराद्दोचंतएवेत्यलंताभिर्दु-रंताभिः किंचकचिल्लोचनांगुलिसंपर्केण प्रतीयमानद्विचंद्रादिवदाभासोजीवः कचि-न्मायायांप्रतिबिंबःसः कचिच्चाविद्यायांकचिच्चांतःकरणेकचिच्चावरणशक्तिमद्भूत-प्रकृतिभागेषुकचिच्चांतःकरणावच्छिन्नेश्वरस्य अज्ञानेप्रतिबिंबः सः कचिच्चांतः-करणावच्छिन्नंचैतन्यमेवसः कचिच्चाविद्यावच्छिन्नमित्यादयोबहवस्त्वन्मतप्रसि-द्धाः परस्परविरुद्धाःपक्षाःश्रीमदाचार्यचरणादिभिरनूद्यसुरेश्वरापैयदीक्षिताद्युक्ताशे-षयुक्तिपेषणपूर्वकंसर्वेव्युदस्ताएव तेनयद्यपिचावच्छेदवादइत्यादिइतिदिगित्यंतंखंडि-तंवेदितव्यं ॥ एवंपराभितंजीवस्वरूपंनिराकृतं इत्यष्टमश्लोकखंडनं ॥

यदपिनन्वेकाकीनरमतेसद्वितीयमैच्छदित्यादिश्रुत्याब्रह्मणःक्री-डार्थंजगन्निर्माणमित्यादिनाशुद्धाद्वैतमार्त्तंडोक्तंकिंचिदनूद्यतत्र-वैषम्यनैर्घृण्यरूपदोषापादनंतदपिन पूर्वंवैषम्यनैर्घृण्यरूपाणां-दोषाणामुधृतत्वात्तन्मतएवतेषांसंभवस्याधस्तान्निरूपितत्वाच्च-ननु ( लोकेक्रीडास्वानंदफलादृष्टानचाप्तकामस्याविर्भूतनित्या-नंदस्वरूपस्यानंदापेक्षास्तिनहितदानंदोन्यूनोयतोधिकार्थंसास्या-त्प्रलयेन्यूनानंदप्रसंगश्चे ) तिचेन्मैवं "लोकवत्तुलीलाकैवल्य" मितिसूत्रेणव्यासैरेवास्यपूर्वपक्षस्यपरिहृतत्वात् तत्र"नप्रयोज-नवत्वा" दितिसूत्रेणनब्रह्मजगत्कारणंकुतःप्रयोजनवत्वात्कार्य्यं-हिप्रयोजनवद्दृष्टंलोके ब्रह्मणिपुनःप्रयोजनवत्वंनसंभावयितुम-पिशक्यंआप्तकामश्रुतिविरोधादितिपूर्वपक्षेसमादधतेलोकवदित्या-दितुशब्दःपूर्वपक्षंव्यावर्त्तयतिलोकवद्देवलीलानहिलीलायांकिं-

चित्प्रयोजनमस्तिलीलायाएवप्रयोजनत्वात् यथालोकेराजभि-
र्मृगयादिक्रियतेनतत्रमांसाद्याहरणमन्यद्वाप्रयोजनंभृत्यादिभिरपि-
तत्संभवात् किंतुलीलैवनहिराज्यसुखंमृगयासुखान्न्यूनंयेनाधि-
क्यात्तस्मिन्प्रवृत्तिःस्यात् एवंलोकेपिप्रयोजनंविनैवईश्वरोपिली
लांकरोतितथैववेदेनप्रतिपादनाच्चनात्रपर्य्यनुयोगावकाशईश्वर
त्वादेवनलीलापर्य्यनुयोक्तुंशक्यासालीलाकैवल्यंमोक्षःईश्वरे-
च्छायांफलंचिंतयन्व्यासाभिप्रायानभिज्ञत्वादुपेक्षणीयः ॥

## टीका

अथश्रुत्यादिसिद्धेप्रपंचाविर्भावनस्यक्रीडार्थकत्वादौप्रत्यवस्थायिनंक्रीडायानफल
मितितदीयंनवमश्लोकंसव्याख्यंयदपिनन्वेकाकीत्यादिनाब्रह्मविदोमतिरित्या-
युक्तमित्यंतेनखंडयिष्यंतः प्रथमंनन्वित्यादिईश्वरेच्छेत्यंतंभागंखंडयंते **यदपिन-
न्वित्यादिना उपेक्षणीयइत्यंतेन** ( अ०२ पा०१ सू० ३२) “ नप्रयोजनवत्वादि-
तिपूर्वपक्षसूत्रस्यलोकवदिनिसिद्धांतसूत्रस्यचभाष्येप्रकाशेस्थितमेकीकृत्यानुवदंतःप-
रोक्तंसमादधते**मैवमित्यादिनासालीलेत्यादि** मोक्षंप्रतिनियतकारणत्वान्मोक्षरूपे-
त्यर्थः ॥ तस्यास्तथात्वं जन्मकर्मचमेदिव्यमित्यादौस्पष्टं अनादौसृष्टिप्रलयपरंपरायां-
प्रलयेस्वस्मिन्लीनानांजीवानांपुनः प्रपंचक्रीडामंतरास्वतोमोक्षस्यासंभवादपितथा ॥
अत्रेदंबोध्यं ॥ प्रपंचनिर्माणस्यक्रीडार्थकत्वबोधिकाः श्रुतयःकाण्वानांबृहदारण्यके
तृतीयाध्याये पुरुषविधब्राह्मणाख्यचतुर्थब्राह्मणे ( पृ १२७) “ सवैनैवरेमेतस्मादेका-
कीनरमतेसद्वितीयमैच्छत् सहैतावानास ” इतिपठ्यते ॥ माध्यंदिनानांत्विदं द्विती-
यब्राह्मणं ( पृ० १०५१ ) मंत्र पाठस्तुतुल्यः ॥ याजुषाणांमैत्र्युपनिषदिद्वितीय-
प्रपाठके ( पृ० २५० ) प्रजापतिर्वाएकोग्रेतिष्ठत्सनारमतैकःसात्मानमभिध्या
त्वाबह्वीःप्रजाअसृजत ” इति ॥ अग्रे प्राणजीवादिरूपेण प्रवेशकथनात् शांडिल्यवि-
द्यासंवादिधर्मांतरकथनाच्चेहप्रजापतिः परमात्मा ॥ ( अध्याय २ पाद १ सूत्र ३३ )
“ लोकवत्तुलीलाकैवल्यं ” इति ॥ श्रीभागवतेचप्रथमस्कंधेत्रयोदशाध्याये ( श्लोक
४२ ) यथाक्रीडोपस्कराणांसंयोगविगमाविह ॥ इच्छयाक्रीडितुः स्यातांतथैवेशेच्छ-
यानृणाम् ॥ चतुर्थस्कंधेसप्तमाध्याये ( श्लो० ४३ ) अंशांशास्तेदेवमरीच्यादयएते-
ब्रह्मेंद्राद्यादेवगणारुद्रपुरोगाः ॥ क्रीडाभांडंविश्वमिदं यस्यविभूम तस्मैनित्यंनाथनम-

स्तेकरवाम ॥ अष्टमस्कंधे ( अ ० २२ श्लो० २० ) क्रीडार्थमात्मनइदंत्रिज- गत्कृतंतेस्वाम्यंतुतत्रकुधियोपर्ईशकुर्युः ॥ कर्तुप्रभोस्तवकिमस्यत आवहंतित्यक्त- न्हियस्त्वदवरोपितकर्तृवादाः ॥ एकादशे ( अ० ९ श्लो० २१ ) यथोर्णनाभिर्हृद- याद्धूर्णोसंतत्यवक्त्रतः॥ तयाविहृत्यभूयस्तांग्रसत्येवमधीश्वरः ॥ महेश्वरइत्यपिक्वचि- त्पाठः ॥ एवंक्रीडार्थत्वंजगन्निर्माणस्यश्रुतिस्मृतिन्यायसिद्धं यत्तुनन्वेकाकीत्यादि - अजेच्छाईश्वरेच्छेन्यतं अगादितत्रोच्यते क्रीडार्थजडादिषुचिदादितिरोधानंयुक्तमेव वैचित्र्यंविनातदनुपपत्तेः अतएव " बहुस्यांप्रजायेय हंततिरोसानी" त्यादिश्रूयते चि- दादितिरोभावस्यसप्तमश्लोकखंडनेसमर्थितत्वेननिरस्तत्वादितिहेतुः प्रत्युक्तः तृतीय- श्लोकखंडनेसिद्धांतेवैषम्याद्यप्रसक्तेस्तन्मतएवतत्प्रसक्तेश्चदर्शितत्वेनद्वितीयोहेतुस्तथा- च इयंक्रीडाभगवत्धर्मत्वादलौकिकी जन्मकर्मचमेदिव्यमित्यलौकिकत्वस्मरणात् दिव्योह्यमूर्त्तइतिवत् अतएवनित्याअनुच्छित्तिधर्मेतिकाण्वश्रुतेर्नित्यायत्रमहागुणाइ- ति प्रथमस्कंधभूमिवाक्याच्च अतएवभगवदभिन्ना प्रकाशाश्रयन्यायात् नचनित्यत्वे- सतिसर्वदासृष्टिप्रसक्त्याप्रलयानुपपत्तिःशंक्या आत्मरतिवहीरतिभेदेनतस्याद्वैविध्यात् तत्रात्मरतौप्रलयः बहीरतौसृष्टिरितिव्यवस्था अतएवतृतीयस्कंधाष्टमाध्यायश्लो० (१०) उदाप्लुतंविश्वमिदंतदासीत् यन्निद्रयामीलितदृङ्न्यमीलयत् अहींद्रतल्पेधिशयान- एकः कृतक्षणः स्वात्मरतोनिरीहइति एतेनैवपुरुषविधब्राह्मणादिसिद्धाबहीरतिरपिव्या

---

## सहस्राक्ष.

क्रिडायानफलं ततोऽस्ति विफलाऽजेच्छा तथाऽहे
तुका श्रुत्यर्थोभवतोदितोनघटते किञ्चश्रुतौतत्प
दं ॥ न ब्रह्माऽपितुवक्तितत्प्रकरणाज्जीवं तथाऽऽ
त्माहेरज्ञानाद्धीयदि कं ससर्ज नहिचेन्नलोकिमिदिष्टा
नते ॥ ९ ॥

नन्वेकाकीनरमतेसद्वितीयमैच्छदिति श्रुत्या ब्रह्मणः क्रीडार्थं जगन्निर्माणमितिभाति ॥ क्रीडाचवैषम्यमन्तरा नघटतइत्यास्तामभेदेऽपि प्रयोजनानुसारेण चैतन्याद्यंशतिरोभावादिव- लक्षण्यमितिचेन्न ॥ निरस्तत्वात् ॥ वैषम्यनैर्घृण्यापत्तेरुक्तत्वाच्च ॥ किञ्चलोके क्रीडा स्वा- नन्दफला दृष्टा ॥ नचाऽऽप्तकामस्याऽऽविर्भूतनित्याऽऽनन्दस्वरूपाऽऽनंदापेक्षास्ति ॥ न- हि तदानन्दोन्यूनोयतोऽधिकार्थंसा स्यात् ॥ प्रलयेन्यूनानन्दप्रसंगाच्चेत्याह ॥ क्रीडायाने- ति ॥ निरर्थकक्रीडाकल्पनं तु दृष्टविरुद्धमितिभावः ॥ एवंच क्रीडेच्छायाअपि फलं चिन्त्यमित्याह ॥ ततइति ॥ अजेच्छा ईश्वरेच्छा ॥

स्यातासर्वैर्नैवेतिप्रमित्यर्थकवैशद्धेनापितथानिश्चयात्‌यच्चक्रीडाफलमनुयुक्तंतत्राभ्युपे-
त्यापिब्रूमःअस्त्वानंदएवतत्फलंनचप्रलयेतन्न्यूनत्वापत्तिःतस्यानित्यत्वेनफलस्यापिनि-
त्यत्वात्‌अयंचधर्मभूतआनंदः " आनंदंब्रह्मणोविद्वा " न्निति श्रुतेः नचैवंफलावि-
शेषेबहीरिरंसायाःकिंप्रयोजनमित्यनुयोक्तव्यंईश्वरेच्छायाअपर्यनुयोज्यत्वात्तुल्यतर्वा-
दिसर्वाभ्युदययोरप्युक्तनयोरन्यतरविजिहीर्षुराजादिलौकिकेश्वरोपिनविहारोति-
रिक्तप्रयोजनोभवतिनचानंदस्येतरप्रयोज्यत्वादनीश्वरत्वापत्तिर्वाच्याउक्तन्यायेनत-
स्याःस्वाभिन्नत्वात्‌अन्यथाब्रह्मभूतस्यच्छांदोग्यदहरविद्यादिषुश्रूयमाणमात्मक्रीडत्वा-
त्मानंदत्वादिकमपिदोषंनातिवर्ततेवस्तुतस्तुक्रीडैवफलरूपानतुतस्याअपिफलांतरमस्ति॰
अतएवभगवान्सूत्रकारोदोषसहस्रमुदासपुरःसरंश्रुतिबलात्‌ब्रह्मणएवजगदुपादानत्वं-
स्वेच्छयाकर्तृत्वंचराद्धांतयित्वापूर्वपक्षमाह ( अ० २पा०१ सू०३२ ) " नप्रयोजनव-
त्वा " दितिअर्थस्तुब्रम्हनजगत्कारणंकार्यस्यप्रयोजनवत्वात्प्रयोजनमनुद्दिश्येतिन्या-
यात्‌ब्रम्हणस्तथात्वेत्वाप्तकामश्रुतिविरोध " इतिएवंप्राप्तेनिराकरोति सू०३३ " लोक-
वत्तुलीलाकैवल्य " मितितुशब्दःपूर्वपक्षंव्यावर्त्तयतिलीलैवप्रयोजनंनतुतस्याःप्रयोजनांतरं
लोकेमहाराजादीनांमृगयादिलीलास्वयमेवप्रवृत्तेःप्रयोजनंमांसाहरणादेर्भृत्यद्वारापिसंभ-
वात्‌बालानामपिलीलासुप्रवृत्तिः प्रयोजनानुद्देशेनदृश्यतेनहितेद्यूतकारादिवत्प्रयोजनम-
नुसंधायक्रीडासुप्रवर्ततेकिंचक्रीडामात्रस्यानंदफलकत्वंननियतंद्यूतादिक्रीडायाद्रव्य-
लाभादिप्रयोजनकत्वदर्शनात्‌ नापिसप्रयोजनकत्वं ॥ तथा ॥ दीपावल्यांशास्त्रसि-
द्धगोक्रीडनेक्रीडितुर्गोवर्गस्यप्रयोजनविशेषानुपलंभात्प्रत्युततस्यकोपनदर्शनात्‌ इत्थ-
मश्ववक्रपरिभ्रमादिक्रीडाअप्यनुसंधेयाःनचविपश्चित्प्रवृत्तौप्रयोजनानुसंधानंनियामकं
निमेषोन्मेषणादिप्रवृत्तौव्यभिचारात्‌ ॥ मैत्रेयोब्राह्मणादौब्रम्हणोपिनिश्वसितन्यायेन-
सर्गविशेषस्यपुराणेषुसृष्ट्याश्रयेद्विपरार्धाख्यकालेउन्मेषणनिमेषणरूपताख्याश्चकथनात्‌
श्वासोश्वासवन्मुक्तानामपिलोकेबालकवत्क्रीडायाःपुराणेषुबुधोबालकवत्क्रीडेदित्या-
दौप्रसिद्धेश्चनहितेषांक्रीडयानंदाधिक्यंसुवचंएतेननिरर्थकक्रीडाकल्पनंतुदृष्टविरुद्धमि-
तिकथनंपरास्तंलोकवदितिसूत्रकारोक्तिप्रतिकूलत्वात्ननुराजक्रीडायामपिसुखंफलम-
स्त्येवेतिचेन्नप्रियत्वप्रकारकप्रत्ययविषयत्वेनतस्याएवसुखरूपत्वनिश्चयात्‌त्वयाप्य-
दासौतथैवानंदरूपतायाःस्वीकारात्‌यद्यज्जनकंतत्तद्गुणकंयद्यद्गुणकंतत्तदात्मकमितिव्या-
प्त्योःसांख्यादितंत्रांतरेसाधितत्वात्‌एतदाश्रित्यैववाचस्पतिमिश्रःसांख्यतत्वकौमुद्यांयथै-
कास्त्रीरूपयौवनशीलसंपन्नापत्युःसुखदासपत्नीनांदुःखदापुरुषांतरस्यमोहदेतिप्रदर्शने-
नवस्तूनांत्रिगुणात्मकत्वंसाधयतितस्माल्लौकिकक्रीडानामप्यंशतःसुखरूपत्वंतारतम्यानु-
भवात्‌सुखरूपत्वान्नाऽस्याःप्रयोजनांतरंमृग्यंअन्येच्छानधीनेच्छाविषयत्वस्यैवसुखल-
क्षणत्वात्भगवल्लीलायांतुतदभिन्नत्वादानंदात्मकत्वमसंदिग्धंअभेदान्नित्यत्वाच्चनाप्त-
कामश्रुतिविरोधःनापिप्रयोजनांतरापेक्षाअन्यथालोकेसुखस्यापिप्रयोजनमनुयुज्येतअ-

तईश्वरस्वभावरूपेयंनित्यधर्मभूतातदभिन्नाक्रीडेतिनपर्यनुयोगार्हा ॥ अतएवशंक-
राचार्यपरमगुरुभिर्गौडपादाचार्यैरपिसृष्टिविचिंतने ( कारि० ७ ) इच्छामात्रंप्रभोः
सृष्टिरितिसृष्टौविनिश्चिताइति ( कारि० ९ ) देवस्यैषस्वभावोयमाप्तकामस्यकास्पृहेति-
चोक्तंक्रीडार्थमितिचापरइतितुकेवलनिमित्तत्ववादिनामनुवादःअन्यथासूत्रविरोधात् ॥
यदिचक्रीडाया अपिकिंचित्प्रयोजनंस्यात्तर्हिसर्वदर्शीनिष्प्रयोजनंपूर्वपक्षंसमादधानः-
शेषाम्नायचतुष्टयीदेशिकोब्रह्मभूतशिरोमणिर्भगवानाचार्योवश्यंतद्ब्रूयात्लीलावादंवाना-
भ्युपेयात्प्रत्युतदूषयित्वाप्रकृतसूत्रविषयवाक्यानित्वद्रीत्यान्यथानयेत्नवसूत्रमन्य-
थाव्याख्येयंस्वभाष्यविरोधापातात्यथैतद्व्याख्यानेशंकराचार्याः ॥ “ यथालोकेकस्य-
चिदाप्तैषणस्यराज्ञोराजामात्यस्यव्यतिरिक्तंकिंचित्प्रयोजनमनभिसन्धायकेवलंलीला-
रूपाःप्रवृत्तयःक्रीडाविहारेषुभवंतियथाचोच्छ्वासप्रश्वासादयोऽनभिसन्धायबाह्यंकिंचि-
त्प्रयोजनान्तरंस्वभावादेवभवन्तिएवमीश्वरस्याप्यनपेक्ष्यकिंचित्प्रयोजनान्तरंस्वभा-
वादेवकेवलंलीलारूपाप्रवृत्तिर्भविष्यति । नहीश्वरस्यप्रयोजनांतरंनिरूप्यमाणंन्यायतः-
श्रुतितोवासंभवतिनचस्वभावःपर्यनुयोक्तुंशक्यतइति ॥ यदिनामलोकेलीलास्वपिकिंचि
त्सूक्ष्मंप्रयोजनंतूत्प्रेक्षेततथापिनैवात्रकिंचित्प्रयोजनमुत्प्रेक्षितुंशक्यतेआप्तकामश्रुतेःना-
प्यप्रवृत्तिःउन्मत्तप्रवृत्तिर्वासृष्टिश्रुतेः सर्वज्ञश्रुतेश्चेतिचाहुः नामरूपसृष्टेराविद्यकत्वंतुनैत-
त्सूत्रांतरलभ्यंनाप्यस्याःस्वप्नवन्मायामात्रत्वबोधकंकिंचिदधिकरणमस्त्यतस्तथात्वो-
क्तिरुपेक्ष्यैव तथाचप्रहिलतयासुखरूपत्वमनादृत्यक्रीडायास्तत्फलकल्पनेप्यस्तुति-
रोहितपरमानंदानांक्रीडास्वेवसनियम आनंदरूपस्यक्रीडायांतुस्वतः फलत्वमेवोचि-
तं नतुश्रुतिस्मृतिसिद्धासाप्रतिषेद्धुंशक्यानचक्रीडात्वानुपपत्तिः आयासानाधायक-
कृतित्वेनतथात्वस्यसौस्थ्यात् एवमनूरीकारेतुजन्माद्यधिकरणसाधितस्यजगन्नि-
र्माणस्यलीलातिरिक्तंप्रयोजनमुपपादयत्वायुष्मान् किमीश्वरस्यतत्स्वार्थंपरार्थंवानाद्यः
नित्यतृप्तिविरोधात् तस्यापिप्रयोजनप्रश्नेसुखएवविश्रांतिसंभवेनस्वोक्तदोषनिरासा-
च्च नद्वितीयः पाचकादिवदनीश्वरत्वापत्तेः किंचांततःस्वार्थमंतरापरार्थव्यापारेपि-
स्वीकारमात्रशरणः ऋत्विगादिव्यापारेषुदक्षिणालाभादिस्वार्थपर्यवसायित्वदर्शनात्
नचकारुणिककृतौव्यभिचारः तस्याअपीतरदुःखासहनात्मकमानसभीतिनिवृत्तिरूप-
स्वार्थफलत्वात् नप्रयोजनवत्त्वादितिसूत्रेरत्नप्रभाकारोप्येतदेवाहनचैवंसर्वत्रस्वात्मगा-
मित्वेस्वरितञितांपरस्मैपदोच्छेदप्रसंगःशंक्यःफलव्यापारयोर्धातुरित्युक्त्यायजत्यादिप्र-
कृतधात्वर्थस्यमुख्यफलस्यपरगामित्वेतदुपपत्तेः एतदर्थमेवसूत्रेप्रोपसर्गस्यक्रियाश-
ब्दस्यचग्रहणात् स्पष्टंचैतत्स्वरितञितइतिसूत्रेमहाभाष्येअतःपरार्थपक्षेपिप्रवृत्त्युपपत्तये-
ऋत्विगादिवदीश्वरस्यकश्चित्स्वार्थोवक्तव्यःतस्यापिप्रयोजनविचारेपरंपरयानंदफल-
कःस्यादितित्वन्मतेत्वदुक्तदोषस्तदवस्थःकिंच सृष्टेःप्राक्परंवस्त्वेवाद्वैतवादेदुर्वच-
मितिकुतःपरार्थःइत्थंकालोद्बोधितकर्मफलदानार्थंसृष्टिरितिकल्पनेप्याप्तकामस्यफलदा-

नैप्रयोजनमन्वेष्टव्यंतस्मात्सृष्ट्याप्तकामत्वरमणादिबोधकसर्वश्रुतिस्मृतिसांमंजस्यात्सू-
त्रकारोक्तंसिद्धांतएववैदिकैरादरणीयःएवंक्रीडायाःस्वाभाविकत्वस्वतःफलरूपत्वसमं-
र्थनेनतदिच्छायाःसफलत्वमपिव्याख्यातं ॥

ईश्वरेच्छायानित्यत्वात्तत्रकारणापेक्षैवनास्तिएतेन ( कारणमं-
तराकार्य्यानुद्भवात्त्वयाऽदृष्टस्यानंगीकारात्कथंक्रीडेच्छे ) त्या-
दिकमपास्तंनन्वेकाकीनरमतेसद्वितीयमैच्छदितिश्रुतौक्रीडार्थं-
जगन्निर्ममेइत्यर्थबोधकपदाभावात्कथंक्रीडार्थमसृजदित्युच्य
तेनान्यार्थमितिचेन्न यथाकेनचिदुच्यतेदंडंविनानघटउत्पद्यतेऽ
तोदंडमानयतंश्रुत्वाप्रयोज्योवदतिघटोत्पत्त्यर्थमयंदंडमिच्छति-
तत्रतादृशार्थबोधकपदाभावेपितादृशवाक्यार्थोयथानुभवसि-
द्धएवमत्रापिवाक्यार्थेबाधकाभावात्द्वितीयपदस्यजगद्वाचि-
त्वंचलक्षणयावाबोध्यंनचद्वितीयेनैवक्रीडायाःसंभवेनतादृशल-
क्षणायांमानाभावइतिवाच्यंश्रौतस्यार्थस्यश्रुत्यैवनिर्णेतव्यत्वा-
च्छ्रुतौतु "तदात्मानंस्वयमकुरुत॥सच्चत्यच्चाभवत् निरुक्तंचानिरु-
क्तंच निलयनंचानिलयनंच ॥ तस्माद्वाएतस्मादात्मनआकाशः
संभूत " इत्यादिनासर्वसृष्टिरेवोक्तानतुद्वितीयमात्रसृष्टिरितिता-
दृशश्रुतिप्रामाण्यादेवलक्षणावास्वीकार्य्याप्रामाणिकगौरवस्या-
दोषत्वात्एतेनाकिंचेत्यादिकमपास्तंयत्तु ( तदानीमिच्छादेःसद्भा-
वात्कथमेकाकित्व ) मित्युक्तंतत्तुच्छतरमेवएवंसत्येकाकीहय-
मारुह्यजगामगहनंवनमित्यादिपुराणवाक्यमप्ययुक्तंस्यात्तत्रा-
पिद्वितीयस्यतदीयज्ञानस्येच्छायाश्वसत्वात्शस्त्रादीनांवस्त्राणां-
चसत्वात्किंचायमत्रफलमेकंभुंजानस्तिष्ठतिफलमेकंभुंक्तेएका

कीभुंक्तइत्यादिवाक्यानामयोग्यत्वंस्यात्तत्रापिफलगतरूपरसा-
दिगुणानांक्रियाजात्योश्चसत्वेनैकत्वासंभवात्तस्मादेकाकिप-
दमसहायवाचकमेवऔदासीन्येलक्षणायांप्रमाणाभावात् ॥

## टीका

सहस्राक्षेकिंचकारणमित्यादिश्रुत्यर्थइतीत्यंतंभागंपरिहरंति **ईश्वरेच्छायाइ-
त्यादिनाप्रमाणाभावादित्यंतेन** अयंभावः यच्च किंचकारणमित्यादितथेतीत्यंत-
मुक्तंतदविमर्शात् नित्येच्छावादिनंप्रतीच्छाकारणस्याननुयोज्यत्वात् जडस्याप्यदृष्टस्ये-
च्छाजनकत्वेतस्यनित्यत्वात्सर्वदेच्छास्यात्तस्याऽनित्यत्वेतत्कारणपरंपराविचारेंततई-
श्वरेच्छायांविश्रांतिःस्यादितिचक्रकापत्तिःक्वाप्यविश्रांतावनवस्थाकालविशेषोद्बोधित-
स्यैवतस्यतज्जनकत्वेतत्तद्विशेषस्यैवतत्तदुद्बोधकत्वेनियामकःकश्चिच्चेतनोपेक्षितःसचे-
श्वरएवेच्छाविशिष्टोवाच्यःईश्वरसृज्यानांतदधीनानांजीवानांजगद्व्यापारायोगात्बहू-
नामन्योन्यवैसंमत्येनकार्याव्यवस्थापातात् ॥ (अ० १ पा० १ सू० १५) " नेतरोनुपपत्तेः
" (अ० १ पा० २ सू० २ ) " अनुपपत्तेस्तुनशारीर " इत्यादौप्रतिषेधाच्चजडस्यापिकाल-
विशेषस्यादृष्टस्यचत्तभावादेवकारणत्वेत्वदृष्टमेवफलदानार्हकल्प्यतांकृतंप्राकृतवत्का-
लकर्माधीनेनेश्वरेणेत्यनीश्वरवादःप्रसज्येत इच्छाविर्भावंप्रतित्वीश्वरमात्रंकारणंप्रपंचं-
प्रतिचेच्छाविशिष्टःसः सृष्टिश्रुतिभिस्तथानिश्चयात् जीवाअपिघटादिनिर्माणइच्छामपे-
क्षंतेइच्छाकरणेतुनस्वातिरिक्तंकारणं नचजीवेच्छाकारणत्वंब्रह्मेच्छायास्त्वयावाच्यंत-

---

## सहस्राक्ष.

किञ्च कारणमन्तरा कार्यानुद्भवात्त्वयाऽदृष्टस्याऽनङ्गीकारात्कथंक्रीडेच्छेत्याह ॥ तथे-
ति तस्मान्नोक्तश्रुतेर्भवत्संमतोर्थः ॥ किञ्च तत्र क्रीडार्थमितिपदाभावात्तदर्थं द्वितीयमैच्छ-
दिति कुतोलभ्यते ॥ समभिव्याहारादितिचेन्नोक्तयुक्त्याबाधितत्वात् ॥ किञ्च द्वितीयमन्तरै-
व तदनुपपत्त्युक्त्या तत्सृष्टौ क्रीडोपपत्त्या तृतीयादिसृष्टिर्नस्यात् ॥ द्वितीयपदेन स्वान्यल-
क्षणायामसहायार्थे साधितेनैकाकिपदेन बहुसहायशून्यलक्षणायां च गौरवम् ॥ किञ्च
तदानीमिच्छादेः सद्भावात्कथमेकाकित्वम् ॥ इच्छादिः स्वरूपभूतइतिचेत्किमन्यन्नस्वरूप-
भूतम् ॥ ओमितिचेत् अपसिद्धांतः ॥ तस्मादेकाकीनरमतेइति सृष्टेः प्रागौदासीन्यमात्र-
मुक्त्वा सद्वितीयमित्यनेन सृष्टिरेवोक्ता इत्याह ॥ श्रुत्यर्थइति ॥

स्याजीवेच्छाजन्यसदसत्कर्मजन्यादृष्टजन्यत्वांगीकारेणचक्रकापत्तेः वैषम्यादितादव-
स्थ्याल्लोकविरोधाच्च लोकेराजापापकारिणंदंडयति नतुभूयस्तेनपापंचिकीर्षयतिप्रलय-
करणसमयेइयतास्वात्मककालेनभूयः सर्गंकरिष्यामीतिपूर्वपूर्वेच्छाप्युत्तरसर्गहेतोर्बहु-
स्यामित्याकारस्वरूपेणब्रह्मणोभवनेहेतुः इदंचसर्वंतृतीयश्लोकखंडनेप्रपंचितमितिकृ-
तंबहुना यच्चनस्मान्नोक्तश्रुतेरित्यादि श्रुत्यर्थइतीत्यंतं तत्रब्रूमः तत्रसवाइतिश्रुतेरर्थ-
स्तावत् सपूर्वोपक्रांतोऽद्वितीयः परमात्मावैप्रसिद्धंनैवरेमेवहीरतिंनकृतवान् एकाकि-
नोरमणाभावसिध्यर्थंतस्मात्तस्यैकाकिनोरमणाभावादेवेदानींचएकाक्यसहायोनरमते-
सोरममाणः परमात्मारमणार्थंद्वितीयमैच्छत् रमणोपयोगिवस्त्वकामयत सइच्छामा-
त्रविशिष्टः परमात्माहस्पष्टमाविर्भावेन एतावानासपरिदृश्यमानसर्वप्रपंचरूपोबभूवेति-
ज्ञेयः अत्रक्रीडार्थंजगन्निर्माणेनाद्रियमाणेमध्येरमणाभावोक्तेनैरर्थक्यादसंगतिर्द्विती-
येच्छायानैष्फल्यंचापद्येतेतिसमभिव्याहारबलात् क्रीडार्थमात्मनइदंत्रिजगत्कृतंतेइ-
त्यादिषुतदुपबृंहकपुराणवाक्येषुस्पष्टतादृशपददर्शनाच्चरमणार्थमेवनिर्माणंनिश्चीयते-
त्वदुक्तयुक्तिस्तुपुरैवदूषिता शंकराचार्यैःपञ्चासनपरतयाव्याख्यानेप्यरतेरपनोदायैव-
द्वितीयेच्छाव्याख्यातानचद्वितीयेच्छाश्रवणात्तृतीयादिसर्गानर्थक्यंशंक्यं सहैतावानि-
त्यनुपदंपरिदृश्यमानसर्वप्रपंचरूपेणभवनोक्तेर्महिम्नाद्वितीयशब्दस्याभिन्नार्थकत्वनिश्च-
यात्एवमेवबहुस्यामितिश्रुत्यंतरैकवाक्यतासिद्धेश्च नचलक्षणाप्रसंगः सर्वेषांपदार्थानां-
स्त्वमारभ्याव्यवहितपरिगणने द्वित्वसंख्यापूरणत्वोपपत्त्यात्तस्यपूरणइत्यनुवर्तमानेद्वे-
स्तीयइतिविहिततीयांतस्यशक्यार्थस्याबाधात् अन्यथाएकमेवाद्वितीयमित्यादौ द्विती
यमात्रप्रतिषेधेनतृतीयादिवस्तूनामप्रतिषेधप्रसंगः नचद्वितीयासत्वेतृतीयत्वाद्यनुपप
त्तिःतदानीमसत्वेपिदेवदत्तस्यायमाद्यःपुत्रोयंचतृतीयोद्वितीयस्तुनास्तीत्यादाविवभूतपूर्व-
गत्यातदुपपत्तेः तथाबहुपदार्थनित्यतावादिवैशेषिकादिप्रतितंत्रार्थोप्यद्वैतसिद्धांतोभि-
लप्यतांद्वयोरेवांगीकरणाभावेनतत्रद्वैतानुपपत्तेः तृतीयादिनिर्माणप्रयोजनंचश्रुतेः प्रजा-
पतिपरत्ववादिनापिनिरूपणीयमेव एवमेकाकिशब्दोपि एकादाकिनिच्चासहाये इत्य-
सहायार्थेसाधितोबहुसहायशून्यत्वादरागेपिनलाक्षणिकः नहिबहुघटाभावाभिप्रायेणा-
प्रयुक्तंघटाभावपदंलाक्षणिकंमन्यन्ते एकादिशब्दस्यैकसहायशून्यएवशक्तत्वेबहुसहा-
यविशिष्टोप्येकाक्युच्येत एकसहायशून्यत्वात् इच्छादिसत्वेप्येकाकित्वंतु प्रकृतेच्छा-
देः साक्षाद्भगवद्धर्मत्वेन प्रकाशाश्रयवदभेदात् प्रपंचस्तुकार्यमैच्छिकभेदाश्रयस्तिरो-
भावमूलकापकर्षवैचित्र्यवांश्चेतोदानीमिवव्याकृतरूपेणतत्स्थितिरेकाकित्वंबाधेत लो-
केतदैकोदेवदत्तएवासीदेकंबीजमेवासीदित्यादौतद्धर्मानव्यावर्तन्ते किन्तुपुत्रवृक्षादिक-
मेवेति स्वरूपत्वेपीच्छादिधर्मकार्ययोस्तारतम्यान्नकाप्यनुपपत्तिः श्रुतेःसृष्टितः प्रागौ-
दासीन्यमात्रपरत्वाश्रयणेतुमहानेवलक्षणाक्लेशइतिवृश्चिकभियापलायमानस्याशीविषमा-
शीविषमुखेनिपातः मूलेलक्षणोक्तिस्तुतुष्यतुदुर्जनइतिन्यायात् अतएवलक्षणायः

स्यनादरार्थोवाशब्दः एकाकीह्ययमिति इदंमार्कंडेयपुराणेअ० ८१ समशत्यां-
अ० १ श्लो० ८ ॥ सुरथस्यराज्ञोवार्णनं

यत्तुसद्वितीयमैच्छदित्यादिश्रुतौतत्पदेनब्रह्मणोनग्रहणंकिंतुहिर-
ण्यगर्भस्यैवेत्याद्युक्तंतन्मंदंसिद्धेइच्छाविरहेणहिरण्यगर्भादेर्द्वि-
तीयस्यब्रह्मणएवतदानींसत्वेनद्वितीयेच्छानुत्पत्तेः ब्रह्मणः पूर्वस-
त्वाद्धिरण्यगर्भस्यैकाकित्वानुपपत्तिश्चकिंच " सदेवसोम्येद-
मग्रआसीत्तदैक्षतआत्मावाइदमेकएवाग्रआसी " दित्यादिश्रु-
तावपिहिरण्यगर्भस्यैवग्रहणंस्यात्तत्रैकपदविरोधश्चेदत्राप्येका-
किपदविरोधस्तुल्यएवयदपि ( ब्रह्मणोनित्यत्वेनतत्सत्वेतदभिन्न-
स्यजगतोपिसत्वेनसर्वभवनतदिच्छयोरयोगा ) दित्यादिप्रल-
पितंतदपिस्वमतेदोषमदृष्ट्वैवतन्मतेपीच्छानसंभवतिनहिसर्वज्ञ-
स्याप्तकामस्यमिथ्याभूतपदार्थेशशश्रृंगसदृशइच्छासंभावितायः-
दिचजीवकर्मभिरिच्छोत्पत्यनंतरंपदार्थानांसत्वमभ्युपगम्यतेत-
दातेषांत्रैकालिकनिषेधाप्रतियोगितयामिथ्यात्वानुपपत्तिःकिं-
चोत्पत्तेरुत्पत्यंतरंवृत्तेनवाआद्येतत्रापिपर्य्यनुयोगेऽनवस्थाद्वि-
तीयेतुतस्यानित्यत्वापत्तिरुत्पत्तिमतएवजन्यत्वेनानित्यत्वात् किं-
चेश्वरेच्छायांकर्मणोहेतुत्वेपूर्वंदोषाः प्रतिपादितास्तस्मादीश्वरे-
च्छानित्यैवसायदाकारतयैवजातातथैवतावच्चकार्य्याविर्भावंक-
रोतिपुनश्चतिरोभावंनचाविर्भावोनित्योऽनित्योवाययद्यनित्यस्त-
र्हिआविर्भावतिरोभावौपदार्थानांयतस्ततः ॥ नानित्यतातुवि-
ज्ञेयाशास्त्रविद्भिर्विचक्षणैःतिरोभावेतुकार्य्यंहिवर्त्ततेकारणात्म-
नाइत्यनेनविरोधइतिवाच्यंआविर्भावस्यनित्यत्वमेवसिद्धांते-

स्वीक्रियतेनचनित्यत्वेप्यनवस्थापदार्थाविर्भावस्यैवाविर्भावावि-
र्भावपदार्थत्वात्नहिपदार्थाविर्भावादतिरिक्तआविर्भावस्यावि-
र्भावःसंबंधसंबंधभेदभेदादिवत्अन्यथातत्राप्यनवस्थास्यात् ॥

## टीका

सहस्राक्षेकिंचात्रेत्यादिनैष्फल्यंचेत्यन्तंभागंदूषयन्ति ॥ यत्तुसद्वितीयमित्यादि
नानवस्थास्यादित्यन्तेनअयंभावः यत्तुकिंचात्रेत्यादि प्रथमइतिश्रुतेरित्यन्तंतन्नइदं-
हिवाक्यंबृहदारण्यके (अ०३ब्राह्म०४पृ०१२५)"आत्मैवेदमग्रआसीत्पुरुषविधस्सोनुवी-
क्ष्यनान्यदात्मनोपश्य"दित्युपक्रम्यपठ्यते नात्रमध्येप्रजापत्युत्पत्तिराम्नातानापितत्र"-
सइममेवात्मानंद्वेधापातय „ दित्यादिनोक्तामिथुनसृष्टिः परमात्मनोविरुध्यतेप्रकृतिपुरु-
षादिनिर्मातृत्वात् एकादशस्कन्धेचतुर्विंशेवाङ्मनोगोचरातीतंद्विधासमभवद्बृहत् तयोरे-
कतरोत्यर्थः प्रकृतिःसोभयात्मिका ज्ञानंत्वन्यतमोभावः पुरुषस्सोभिधीयतइत्यादौत-
त्प्रसिद्धेः मुख्योत्रत्याशयस्तुनारदपंचरात्रद्वितीयरात्राद्बोद्धव्यः किंचात्मशब्दोवेदान्ते-
षुनिर्गुणपरब्रह्मवाचकतयाप्रसिद्धइति ( अ० १ पा०१ सू०५ )" गौणश्चेन्नात्मश-
ब्दा "दित्यत्रसिद्धं इदमग्रआसीदित्यव्याकृतप्रपंचात्मकत्वोक्तिरपिपरब्रह्मनिरूपणमेव-
गमयतिअन्यथा " आत्मावाइदमेकएवाग्रआसीत्सदेवसौम्येदमग्रआसीत्" इत्यादी-
न्यपिप्रजापतिपराण्येव स्युः ओंकारेऽपसिद्धान्तोबह्वधिकरणविरोधश्चनचपुरुषविधइ-
तिविशेषणात्भ्रमितव्यं " अव्यक्तात्पुरुषःपरः„ दिव्योह्यमूर्तःपुरुष.। सहस्रशीर्षापुरुषः
तेनेदंपूर्णंपुरुषेणसर्वं"मित्यादिकठमुंडकपुरुषसूक्तबृहन्नरायणप्रभृतिश्रुतिभिःपुरुषःसप-
रःपार्थेत्यादिस्मृतिभिश्चभगवतस्तथात्वात् आनंदमयंपरमात्मानं प्रकृत्यसवाएषपुरु-
षविधएवेत्याम्नानात् तत्पुरुषविधतयैवान्येषांपुरुषविधत्वश्रावणाच्च आनंदमयस्यपर-
मात्मत्वंत्वानंदमयाधिकरणभाष्येतत्प्रकाशादिषुचपरंसमर्थितंपुच्छब्रह्मवादंसमूलंनिर-
स्यनिर्णीतमितिततोऽवधेयंतथात्मातिरिक्तदर्शनाभावोपिपरसमुद्राकाशादिकंपश्यतःस्व-
कारणमन्विच्छतःपरासनस्यासंगतःब्रह्मज्ञत्वेतुभयाद्यनुपपत्तिःकिंचाग्रे ( पृ० १२२ )"
सयत्पूर्वस्मात्सर्वस्मात्सर्वान्पाप्मनऔषत्तस्मात्पुरुष"इतिअपहतपाप्मत्वमपिभगवद्धर्मः
"तस्योदितिनामसएषसर्वेभ्यःपाप्मभ्यउदितउदेतिहवैसर्वेभ्यःपाप्मभ्योयएवंवेद „ ति-
च्छान्दोग्यादिषुश्रवणात् एतद्धर्मोपदेशादादित्यांतर्वर्तिनः परत्वंसाधितमंतस्तद्धर्माधिक-
रणेसाधकानांसर्वपाप्मदाहोपिब्रह्मभावतन्निर्लेपत्वज्ञानाभ्यामेवउपकोसलविद्यादिश्रुति
भ्यःइतिमांयोभिजानातिकर्मभिर्नसबध्यतेइत्यादिस्मृतिभ्यश्च विधातुश्चस्वसुताकामना-
पार्वतिविवाहादौपाप्मसंबंधःप्रसिद्धः सोबिभेदिततुद्वैतदर्श्येकाकिनांभयव्यवहारसिद्ध-

येभयरूपेणभवनं अतएव " तस्मादेकाकीबिभेती " तिहेतुभावःश्रूयते भयस्यतद्रूपस्वमिच्छावत् बृहदारण्यक ( पृ०१६९ ) " प्राणन्नेवप्राणोनामभवतिवदन्वागि " तिन्यायात् " यदिदंकिञ्चजगतसर्व्वंप्राणएजतिनिःसृतंमहद्भयंवज्रमुद्यत,,मितिकठश्रुतेश्च तस्मात्सर्वैनैवरेमइत्यत्रपूर्वोपक्रांतःपरमात्मैतच्छब्देनपरामृश्यतेनत्वककस्मात्कमलभवः सशब्देनेत्यत्रतुसइतिशब्देनेतितच्छब्देनेतिवावक्तुमुचितंतत्रचमैत्रायणश्रुतौप्रजापतिशब्ददर्शनात् भ्रमितव्यं "शुक्रेणज्योतींषिसमनुप्रविष्टः प्रजापतिश्चरतिगर्भेअंतःयस्मिन्निदंसंचविचैतिसर्वं ॥ प्रजापतिश्चरतिगर्भेअंतः अजायमानोबहुधाविजायत " इत्याद्यनेकश्रुतिषुपरब्रह्मणिप्रजापतिशब्दस्यदृष्टत्वात् किंचतत्र ( प्रपाठ०२ पृष्ट१८) " ऊर्ध्वरेतसोवालखिल्याइतिश्रूयंतेअथक्रतुंप्रजापतिमब्रुवन्नि " तिप्रजापतिवालखिल्यसंवादस्योपक्रांतत्वात्प्रजापतिनानिरूप्यमाणः स्वान्यःप्रजापतिः परमात्मैवपरिग्रहीतुमुचितः तथापूर्वं ( पृष्ठ२० )" योहखलुबावोपरिस्थःश्रूयतेगुणेष्ववोर्ध्वरेतसःसवाएवशुद्धः पूतःशून्यःशांतोप्राणोनिरात्माऽनंतोक्षय्यःस्थिरःशाश्वतोऽजःस्वतंत्रःस्वेमहिम्नितिष्टती"त्यादिनापरब्रह्मधर्माएवोपदिश्यंतेतथाचेतयितुरणिष्ठस्यक्षेत्रज्ञस्यतदंशत्वकथनमपिपरब्रह्मैवगमयतिक्षेत्रज्ञंचापिमांविद्धिममैवांशः अंशोनानाव्यपदेशादित्यादिस्मृतिसूत्रेभ्यः। एवमश्मवदचेतनप्रजानांबोधनायप्राणरूपेणभवनादिकमपितथा " एतस्माज्जायतेप्राण " इतिमुंडकश्रुतेः लिंगोपपत्त्यादितात्पर्यनिर्णायकसत्वेपिप्रजापतिशब्दस्यचतावकैरपिश्रुतिसहस्रेपरब्रह्मपरत्वेंगीकृतेप्यत्रैवदुराग्रहस्तूपेक्ष्यःएतेनशुन्धाद्वैतमार्तंडस्थं ( का० १२ ) रमणार्थमिदंसर्वंब्रह्मैवस्वेछयाभवदितिसमर्थितं । अत्रस्वेच्छया

---

## सहस्राक्ष.

किञ्चात्र सशब्देन ब्रह्मणोन ग्रहणं किन्तु संसारिणोहिरण्यगर्भस्य तदुत्पत्तिमुक्त्वा प्रवृत्तत्वात अग्रेच मिथुनसृष्टेरेवोक्तत्वादित्याह ॥ किञ्चेति ॥ श्रुतौ तत्पदं ब्रह्म न वक्ति अपितु जीवमित्यन्वयः ॥ जीवोहिरण्यगर्भः ॥ सवैशरीरीप्रथमइतिश्रुतेः ॥ एतेन रमणार्थमिदं सर्वं ब्रह्मैवस्वेच्छयाऽभवदिति प्रत्युक्तम् ॥ ब्रह्मणोनित्यत्वेन तत्सत्त्वे तदभिन्नस्य जगतोऽपिसत्त्वेन सर्वभवनतदिच्छयोरयोगाच्च प्रलयेऽनाविर्भूतस्येच्छयाऽऽविर्भावइतिचेत् आविर्भावोनिऽत्योनित्योवा ॥ यद्यनित्यस्तर्हि आविर्भावतिरोभावौपदार्थानांयतस्ततः नाऽनित्यतातुविज्ञेयाशास्त्रविद्भिर्विचक्षणैः तिरोभावेतुकार्यंहिवर्ततेकारणात्मना आविर्भावेतुकार्यंहियथामृदिघटादय इत्यनेन विरुध्यते ॥ आविर्भावस्यापि पदार्थतया शास्त्रविचक्षणैरनित्यतायाअज्ञेयत्वोक्तेः ॥ यदि नित्यस्तर्हि तस्याविर्भावेऽनवस्था ॥ यत्रैवचानित्यत्वमङ्गीक्रियते तत्रैवोक्तविरोधः पूर्वोक्तनित्यत्वाङ्गीकारनैष्फल्यंच ॥ ३७ ॥

" बहुस्यांप्रजायेयेती " त्यादिश्रुतिप्रसिद्धया ॥ स्वपदंपरप्रेरणाव्यावर्तनाय ॥ एवका-
रोमध्यमणिवदुभयत्रवान्वेतु ॥ तथाचबहुश्रुतिविचारेतदाब्रह्मातिरिक्तवस्त्वभावात्
इच्छातिरिक्तनिमित्ताभावात् आप्तकामस्यप्रयोजनांतराभावाच्चेश्वरस्वभावसिद्धंरमण-
मेवसर्गप्रयोजनंसिद्ध्यतीतिकृतमांम्रेडितेन॥ यस्तुब्रह्मणोनित्यत्वेनतत्सत्त्वेतदभिन्नस्य-
जगतोऽपिसत्त्वेनसर्वभवनतदिच्छयोरयोगउक्तःसप्रमादात् नित्यत्वेऽपिपूर्वंतिरोहित-
त्वादव्याकृतत्वेनाभेदेनवर्त्तमानत्वात्बहीरमणस्यचाविर्हितैच्छिकाभेदाश्रयवस्तुभिरेव-
निर्वाहात् तदर्थंसर्वभवनतदिच्छेयुज्येतेएव ॥ स्वात्मकत्वान्नित्यस्यापिप्रपंचस्यस्वस्मा-
दाविर्भावनमेवसृष्टिःस्वस्मिन्तिरोभावनंचसंहारइतिश्रुतिसिद्धांतः ॥ श्रूयतेचभूमविद्या-
प्रभृतिषु " आत्मतआविर्भावतिरोभावावात्मतोन्नमित्यादिउपबृंहितंचैतन्मार्कंडेयपुरा-
णेचतुर्थाध्यायेजैमिनिंप्रतिवदद्भिःद्रोणपक्षिभिः ( श्लो.६९ ) आविर्भावतिरोभावदृष्टा-
दृष्टविलक्षणं वदंतियत्सृष्टमिदंतथैवांतेचसंत्यक्तमितितृतीयस्कंधेचतन्निरोधोस्यशयनमा-
विर्भावस्तुसंभवइति दशमेऽक्रूरस्तुतौयन्नाभिजातादरविंदकोशाद्ब्रह्माविरासीद्यतएषलो-
कइतिनवमस्यचतुर्थाध्यायेचचतुर्मुखंप्रति ( श्लो०५३ ) स्थानंमदीयंसहविश्वमेतत्क्री-
डावसानेद्विपरार्द्धसंज्ञे भ्रूभंगमात्रेणहिसंदिधक्षोःकालात्मनोयस्यतिरोभविष्यतीति दश
मोत्तरार्द्धेचवसुदेवंप्रतिभगवता ( अ०८४श्लो०२५ ) खंवायुर्ज्योतिरापोभूस्तत्कृतेषुय-
थाशयं आविस्तिरोल्पभूर्येकोनानात्वंयात्यसावपीतिब्रह्मणएवाकाशाद्यात्मनाविर्भाव-
तिरोभावौताभ्यामल्पत्वभूरित्वनानात्वैकत्वानिचोक्तानितस्माद्बहीरमणार्थं आविर्भा-
वशक्त्यानानारूपेणभवनं तदिच्छाचनानुपन्ना अन्यथानद्बोधकश्रुतिव्याकोपापातात्-
नह्यसतएवोत्पत्तिमंगीकृत्यश्रुतिः शक्याव्याख्यातुं शून्यवादस्यार्द्धवैनाशिकवादस्य-
वाप्रसक्तेःकथमसतःसज्जायेतनासतोविद्यतेभावइत्यादिश्रुतिस्मृतिविरोधाच्च अद्वैतसि-
द्ध्याद्युक्तरीत्याप्रलयेअविद्यायांसूक्ष्मरूपेणस्थित्यंगीकारेतुत्वदुक्तदोषतादवस्थ्यंवस्तुत
स्तुकारणाद्बहिर्भवनमेवोत्पत्तिपदार्थइतिसर्वमनवद्यं किंचैवंवदतस्तवजगतिब्रह्मभेदःप्र
तिपिपादयिषितस्तदभेदोवानाद्यःअद्वैतभंगात् स्वातिरिक्तेच्छायामनाप्तकामत्वानपाया-
नूतदात्मानमिति स्वस्यसर्वरूपेणभवनोक्तिविरोधात्" सर्वंखल्विदंब्रह्म " त्यादिव्याको-
पाच्च पदार्थानांमिथ्यात्वमाश्रित्यभेदाभावरूपेद्वैतस्यादरे त्वभ्रांतस्येश्वरस्यतज्ज्ञाना-
योगादिच्छानुपपत्तिःज्ञातस्यैवेच्छानियमात् सर्वज्ञश्रुतिविरोधःसर्वस्यैवाभावात्मिथ्या-
त्वेनज्ञानेसुतरांतदसंभवःनहिमृगतृष्णात्वेनतांजानंस्तांपातुंशशविषाणंवाऽऽदातुंकश्चि-
दिच्छतियततेवा एतेन " इदंसर्वमसृजत,, इत्यादेरपिविरोधोनुसंधेयःअर्धवैनाशिप्रक्रि-
यादिशोत्तरकालेपदार्थसत्तास्वीकारेपसिद्धांतः त्रैकालिकप्रतिषेधप्रतियोगितयामि-
थ्यात्वानुपपत्तिश्चेतिदिक् द्वितीयश्चेदोंकुर्मः तथासतिश्रुतिसिद्धोर्णनाभितंत्वादिदृ-
ष्टांतेनजडादिस्वांशानामाविर्भावतिरोभावावेवश्रुत्यादिसिद्धावास्थेय।वितिसर्वमनाकुलं
यच्चप्रत्ययइत्यादिनैष्फल्यंचेत्यंतंतत्तुश्रुत्यादिसिद्धपरमतानवगमात् नित्यावेवास्माकंतौ

अतोनमार्त्तंडकारिकाबाधः नचानवस्थाशंक्याउत्पत्तिवादेपितौल्यात् तथाहिउत्पत्त्यादे-रुत्पत्त्यादिकमस्तिनवाआद्येघटोत्पत्तेरप्युत्पत्तिस्तस्याआपिसेत्यनवस्था घटध्वंसकाले-ध्वंसस्याप्युत्पत्तिर्घटोत्पत्तेर्नाशस्तस्याप्युत्पत्तिरित्याद्यनवस्था उत्पत्तेर्नाशानंगीकारे-ध्वंसेप्युत्पन्नइतिव्यवहारापत्तिः अंततोयत्रनित्यत्वंस्वीक्रियेततत्रैवस्वोक्तिविरोधः-पदार्थानित्यतांगीकारनैष्फल्यंच द्वितीयश्चेदुत्पत्तेर्नित्यतापातस्तदनित्यतासिद्धांतोभ-ज्येतं घटोत्पत्तेर्नित्यतयाघटनित्यत्वञ्चाक्षिप्येत उत्पत्त्यादेराविर्भावाद्यंगीकारेवस्तु-नष्टवतौलाघवादास्थेयौ मिथ्यात्वादुत्पत्तिरेवनास्तीतिचेत्कथंप्रतीतिः भ्रांतिरेवसे-तिचेत्साप्युत्पद्यतेनवा आद्येप्रागुक्तानवस्था द्वितीयेतन्नित्यतया मोक्षोच्छेदः उ-त्पत्त्याद्यभावायभ्रांतेरपिमिथ्यात्वेजगतः सत्यत्वसिद्धिः एवमविद्यातत्कार्ययोर्ध्वं-सस्याप्युत्पत्त्यादिकंविचार्यं उत्पत्तिध्वंसयोराविर्भावतिरोभावयोश्चोभयोरप्यस्वी-कारेसृष्ट्यादिबोधकबहुश्रुतिविप्लवश्च । एवंव्यवहारदशायामुत्पत्त्याद्यंगीकारेप्युक्तदो-षानिरुन्मोषाः उत्पत्त्यादेरानंत्येतस्यतस्यकारणांतरकलापकल्पनागौरवंच यदितुसंबं-धस्यसंबंधोभेदाद्भेदइत्यादिन्यायेनैवोत्पत्त्यादेस्तदनंगीकृत्यकथंचित्समाधीयेत तदा-विर्भावपक्षेपिसएवसमाधिः सुगमइतियत्रोभयोः समोदोषइतिन्यायावतारः वस्तुत-स्तूत्पत्तिरपिधर्मइतिधर्मिसत्तामाक्षिपतितथाचकारणाद्बहिर्भवनमेवसाविस्तरस्तुसर्वार्थ-निर्णयेआविर्भावतिरोभावौशक्तीवैमुरवैरिणइत्यादिकारिकाप्रकाशावरणभंगयोर्द्रष्टव्यः-किंचवस्तुतस्तुतयोरिच्छाविषयत्वयोग्यत्वतदविषयत्वयोग्यत्वस्वरूपत्वान्नकापिनित्य-तानुपपत्तिरित्यनुपदंवक्ष्यते **पूर्वमिति** तृतीयश्लोकखंडनादौ ॥ **नित्यैवेति** बृहदारण्यके " अनुच्छित्तिधर्मे " तिसर्वेषांब्रह्मधर्माणांनित्यत्वाम्नानात् ॥ **तयेति** ये-नप्रकारेणकार्यनिर्माणंयावत्कालपर्यंतंस्थापनंचेच्छाऽकारस्यविषयोभवतीतिभावः ॥ **अन्यथातत्रेति** संबंधस्यापिसंबंधांतरंभेदादपिभेदश्चान्योस्तीतिस्वीकारेतेषुसंबंधभेदा-दिषु ॥ पदार्थःस्वाश्रयेकेनचित्संबंधेनतिष्ठति । ससंबंधोपिसंबंधांतरेणसंबंधांतरमपिसं-बंधविशेषेणेत्यनवस्था । एवंभेदेप्यूह्यं ॥ अंततःस्वरूपसंबंधत्वंभेदभेदादीनांप्रथमभेद-स्वरूपत्वंचस्वीकृत्यतद्वारणेआविर्भावाविर्भावोपिपदार्थाविर्भावस्वरूपइतिसमःसमाधिः॥ इदंतुपिशाचःपिशाचभाषयैवबोधनीयइतिन्यायादिदमुक्तं । तत्वंतुवक्ष्यते ॥

ननुसर्वंकार्य्यजातमीश्वरोवेत्तिनवा अंत्येब्रह्मणःसर्वज्ञत्वहानिःप्र-थमेसृष्टिकरणंकिमर्थंपदार्थानामाविर्भावएवसृष्टिःसचज्ञानार्ह-त्वस्वरूपएवतस्यचसर्वदैवसत्वेनतत्रकृत्यादीनामनुत्पादात्इतिचे-त्सत्यंनहिज्ञानार्हत्वमाविर्भूतस्यलक्षणंकिंतुतत्तत्कार्य्यकारित्वं ॥

यथाजलहरणादिकार्य्यकारित्वं मृद्रूपेणावस्थितेऽनाविर्भूतेत-
त्कार्य्यकारित्वाभावात्त्वन्मतेज्ञानार्हत्वमेवआविर्भावइतिवक्तुं-
नशक्यतेतथासतितमसिस्थितस्यघटस्याविर्भावार्थंप्रतिपाद्यान-
यनंनिरर्थकंस्यात्यदितमोव्याप्तस्यघटस्यज्ञानंनास्तितर्हितदर्थं-
यत्नएवनसंभवतिअज्ञातेर्थेयत्नस्यादृष्टत्वात्यदिज्ञानंतर्हिज्ञान-
विषयत्वरूपस्याविर्भावस्यसत्वात्तदर्थंयत्नोनिरर्थकएवेतित्वया-
पिपूर्वोक्तमेवलक्षणमादरणीयंईश्वरस्यसृष्टेःपूर्वमाविर्भूतत्वेनज्ञा-
नाभावेप्यनाविर्भूतत्वेनज्ञानसत्वान्नसर्वज्ञत्वहानिः किंचक्री-
डार्थंसृष्टिःसाचाविर्भूतैरेवपदार्थैःसंभवतिनाऽनाविर्भूतैरतएव-
योगिनांयोगजधर्मेणव्यतीतान्नादिज्ञानेपिनतैस्तेषांक्षुदपनयना-
दिकर्त्तुंशक्यते सृष्टिस्तुरमणार्थमेवनजीवानांतत्पदार्थज्ञानार्थंते-
ननचेत्यादिनापूर्वपक्षंकुर्वन्नपास्तः जीवानांक्रीडोपयोगित्वान्न-
जीवमात्रार्थंसृष्टिशंकापिसंभवति क्रीडायांनित्यानित्यत्वप्रश्ने-
नित्यैवेत्युच्यते तत्रदोषपरिहारस्तूत्तरभागेवक्ष्यते नचजीवस्ये-
श्वराभिन्नत्वेजीवस्यसकलपदार्थज्ञानंनास्तीश्वरस्यास्तीतिकथं-
संगतं त्वन्मतेऽविद्याया अस्वीकारेणाविद्ययापिव्यवस्थाया अ-
संभवादितिवाच्यं " पराभिध्यानात्तुतिरोहितंततोह्यस्यबंधविप-
र्यया,,विति सूत्रेणव्यासैरेवास्यदोषस्यपरिहृतत्वात् तत्रयदिजी-
वस्येश्वरत्वेनेश्वराभिन्नत्वंतदाकथंतत्रदुःखित्वमल्पज्ञत्वादिक-
मितिपूर्वपक्षआह अस्यजीवस्यैश्वर्यादितिरोहितं तत्रहेतुःपरा
भिध्यानात्परस्यभगवतोभिध्यानंक्रीडेच्छा तथाचईश्वरेच्छ-
याजीवेभगवद्धर्मतिरोभावः ऐश्वर्य्यतिरोभावाद्दीनत्वंपराधीन-

त्वं वीर्य्यतिरोभावात्सर्वदुःखसहनं यशस्तिरोभावात्सर्वहीन-त्वंश्रीतिरोभावाज्जन्मादिसर्वापद्विषयत्वं ज्ञानतिरोभावाद्देहादिष्व-हंबुद्धिः सर्वविपरीतज्ञानंचापस्मारसहितस्येववैराग्यतिरोभावा-द्विषयासक्तिः। आनंदांशतिरोभावाज्जीवत्वंकामभयत्वं यद्येवंन-स्यात्तदाभगवतऐश्वर्य्यादिलीलानिर्विषयास्यादिति ॥ जीवेश्व-रयोर्भेदस्तुनस्वीक्रियतेजीवेभगवद्धर्मतिरोभावेनैवसर्वदोषनि-रासंभवात् अतएवप्रागभावादिचतुष्टयमेवनस्वीक्रियतेआ-विर्भावतिरोभावाभ्यामेवसर्वव्यवहारसंभवात् उक्तंचप्रागभा-वादयोनांगीकार्य्याआभ्यांयतोखिलमिति ॥ तत्रप्रागभावः-कार्य्यस्यकारणावस्थातोनातिरिच्यते ॥ एवंध्वंसोपिकार्य्य-स्यतिरोभावः घटःपटोनेत्यत्रापिघटेभगवदिच्छयापटत्वस्यति-रोभावाद्भेदोनातिरिच्यतेएवमत्यंताभावोनामकारणातिरिक्तेघ-टादीनांसामयिकस्तिरोभावएव ॥ एवंचाभ्यामेवसर्वव्यवहा-रोपपत्तौकिंप्रागभावादिस्वीकारेण ॥ यच्च ( एतेनभेदःका-र्य्यतयाजातः क्रीडार्थंतुहरीच्छया ॥ प्रलयेकारणेतस्यस्थि-तिर्दृष्टायथामृदिइतिपूर्वापरव्याकुलंवाक्यंप्रत्युक्त ) मित्या-दिप्रलपितं ॥ तदप्यज्ञानात् तादृशभेदपदस्याविर्भावपरत्वात्-अतएवाग्रेतिरोभावबोधकंप्रलयपदमपिसंगच्छते कारिकायां-तुपश्चाल्लयेकारणेहीतितृतीयचरणपाठः नचघटःपटोनेत्यत्रघ-टेपटत्वस्यतिरोभावएवभेदइतिपूर्वोक्तिविरोधइतिवाच्यंविकृ-तौप्रकृतिभेदआविर्भावःविकृतीनांपरस्परभेदस्तिरोभावएवेत्य-भिप्रायात् त्वन्मनःसिद्धभेदस्वीकार “ आत्मैवेदंसर्वंब्रह्मैवे-दंसर्वं„मितिश्रुतीनांविरोधःस्यात् अतएवयथामृदीतिदृष्टां-

तोपिसंगतः ॥ नचेत्यादिकंत्वनंगीकारनिरस्तं ॥ कार्य्याव-
स्थायामाविर्भावेपिनकारणस्यकार्येभेदः " सर्वंखल्विदंब्रह्म-
तज्जला " नित्यादिश्रुतेः ॥ अतएवोक्तंसर्वंब्रह्मात्मकं विश्व-
मिदमावोध्यते पुरः ॥ सर्वशब्देनयावद्धिदृष्टंश्रुतमदोजगत् ॥
बोध्यतेतेनसर्वंहिब्रह्मरूपंसनातनं ॥ कार्य्यस्यब्रह्मरूपस्यब्रह्मैव-
स्यात्तुकारणंतत्रदृष्टांतोपादानमपिसुवर्णस्यचयेखंडामुद्रिकाकु-
टकादयः ॥ सुवर्णत्वेनगृह्णातितथाब्रह्मविदोमतिरित्याद्युक्तं ॥

## टीका

सहस्राशीकिंचसर्वमित्यादिंइत्यन्तमित्यंतंभागंपरिहरति ननुसर्वमित्यादि-
नाइत्याद्युक्तमित्यंतेन अयंभावः यत्तुसर्वंकार्यमित्यादितथात्मेतीत्यंततदकिं-
चित्करं सर्वकार्यंहरिर्वेत्त्येवेतिनाज्ञः इदंवदनमपिप्रत्युतकार्यनित्यतांसाधयति अ-
विद्यमानस्यशशशृंगादेरिवप्रत्यक्षासंभवात् तस्याभ्रांतत्वाच्च नचार्द्धवैनाशिकम-
क्रिययाकथंचिन्निर्वाहोवाच्यः असतः सत्तायाः श्रुतिस्मृतिविरुद्धत्वात् त्वया-
प्यनंगीकारात्अविरोधाध्यायेसंम्यक्निरस्तत्वेनप्रकृतेतन्निरासप्रयासप्रयोजनाभावा-
च्च ॥ ईश्वरप्रत्यक्षविषयत्वेनसिद्धेनित्यत्वेप्युच्चरितंबद्धजीवानुभवयोग्यताऽऽ-
पादनरूपआविर्भावएवतत्तत्पदार्थस्यसृष्टिरितिसिध्यति ॥ यदानुभवयोग्यत्वंवर्त-
मानस्यवस्तुनः आविर्भावःसविज्ञेयस्तिरोभावस्ततोऽन्यथेतिमार्तंडकारिकायामनुभ-
वपदमुक्तविधजीवानुभवपरं अतःस्वात्मस्थितस्यतत्ताभिन्नस्यकार्यस्येश्वरज्ञानविष-
यत्वेप्यदोषः उक्तयोग्यत्वमेवलौकिकैःकार्यकारित्वमितिव्यवह्रियते अतःपिशाच-
भाष्येतिन्यायान्मूलेतदेवोक्तंअनाविर्भूतघटाल्लौकिकमर्यादयाजलाहरणादिकार्यस्या-
संभवादाविर्भूताद्विवतत्संभवाच्चोक्तयोग्यत्वरूपआविर्भावस्ततत्कार्यकारित्वमित्यपि-
शक्योव्यपदेष्टुं कारित्वंचकरणशीलत्वंतद्धर्मत्वंवातेनकस्यचिद्घटस्यातिरोभावदशायां
जलानयनाद्यऽकारित्वेपिनाव्याप्तिः सिद्धांतेसामान्यतोज्ञानार्हत्वमात्रं नलक्षणंकिंतू-
क्तविधजीवज्ञानार्हत्वमित्येवमूलेत्वन्मतइत्यादिप्रपंचस्यनिष्कर्षः यदानुभवयोग्यत्व-
मितिमार्तंडकारिकायांयोग्यत्वपदंतिमिरमंजूषादिस्थिततयातदानीमननुभूयमानेषुकेना-
प्यननुभूतदरीविवरांकुरादिषुचाव्याप्तिवारणार्थंवस्तुतश्चअस्मिन्कालेऽस्मिन्देशेएतद्द्वा-
रैवमिदंलौकिकमर्यादयाजीवानुभवगोचरंकरिष्यामीतीच्छाविषयत्वमेवाविर्भावःतद्

विषयत्वंतिरोभावः तेनोभयोर्नित्यत्वेपिनयुगपत्कार्योपलंभानुपलंभप्रसंगः तत्तत्काल-एवतदौचित्यात् महाहीरकाभरणान्यस्मिन्नवसरेऽस्मिन्देशेसर्वान्दर्शयिष्यामिपुनरस्मि-न्कालेदर्शनागोचरीकरिष्यामीतिराजादेरिच्छायाश्चिरंतनत्वेपितत्तत्कार्यंतत्तदवसरए-वभवतिनतुयुगपत्‌एतेनापीश्वरस्यसर्वदासर्ववस्तुवेदनंसिध्यतिअज्ञातइच्छानुदयात् । नचस्वरमणार्थमितिसिद्धांतविरोधः जीवानामेवरमणस्यनिष्पत्तिर्वाशंक्या आभरणा-निधृत्वाप्रदर्शयतोराजादेरपिरमणस्याप्रत्यूहत्वात् किंचासौक्रीडाजीवैस्तस्यतस्यपदार्थ-स्यानुभावनरूपैव ॥ एवंचयथाबालक्रीडासुपांचालिकापुरुषकादेरेवविवाहादौवि-धीयमानेपिबालानां बुद्धिबलादिषुधीमतांक्रीडासुदार्वादिखंडानांजयपराजययोरपि-क्रीडितॄणांमृगशावाप्रमृगप्रभृतिचेतनक्रीडास्वपिक्रीडयितुर्द्रष्टुश्च क्रीडामुख्यतयासिध्य-त्येव ॥ नतुपांचालिकादीनांमृगादीनामेववा ॥ अन्यथामल्लमहिषमातंगादिक्री-डासुमल्लादीनामेवताः सिध्येयुर्नतुराजादीनां ॥ वस्तुतस्तुतद्द्वारालौकिकेश्वराणा-मवतद्रमणमितिसुप्रसिद्धं ॥ तथात्रभगवतएवमुख्यतयारमणंश्रुत्यादिसंमतमप्रत्यूहं जीवानामपिक्रीडोपस्करत्वाविशेषात् । अतएवश्रीभागवतादिषुयथादारुमयीयोषाय-थायंत्रमयोमृगः एवंभूतानिभगवन्नीशतंत्राणिविद्धिभोःयथाक्रीडोपस्कराणांसंयोग-विगमाविह इच्छयाक्रीडितुः स्यातांतथैवेशेच्छयानृणाम्‌एवमादयोदृष्टांताउच्यंते

---

## सहस्राक्ष.

किञ्च सर्वं कार्यं यदि हरिर्नवेत्ति तदाऽज्ञः स्यात् यदिवेत्ति तर्हि सृष्टिर्मुधा ज्ञानार्ह-स्वरूपाविर्भावस्यैवत्वया कार्येऽङ्गीकारात् ॥ नच स्वस्वरूपेण स्थितस्य स्वयंज्ञातत्वेपि जी-वानां तज्ज्ञानाभावात्तज्ज्ञानार्थं सृष्टिरितिवाच्यम् ॥ स्वरमणार्थमितिसिद्धान्तविरोधात् ॥ जी-वानामेव रमणस्य निष्पत्तेः ॥ क्रीडायानित्यत्वानित्यत्वयोरुक्तदोषावतारोऽनुसन्धेयः ॥ अधि-कन्तूत्तरभागे वक्ष्यते ॥ तदेतदाह ॥ तथात्मेति ॥ भिदृष्टेति ॥ जीवस्येश्वराभिन्नत्वेनेशस्य ज्ञानं न जीवस्येत्युक्तिरेव नसंगता ॥ प्रागभावादयोनाङ्गीकार्याआम्नायतोऽखिलमितिश्लोक-व्याख्यायामभावचतुष्टयस्याऽपितट्टीकाकारेण दूषितत्वात् ॥ एतेन भेदःकार्यतयाजातःक्री-डार्थंतुहरीच्छया प्रलयेकारणेतस्यस्थितिर्दृष्टायथामृदिइतिपूर्वापरव्याकुलं वाक्यं प्रत्युक्तम् ॥ नच भेदस्योत्पत्तिर्नाविर्भावइति नित्यत्वाभावाभिप्रायेण खण्डनमितिवाच्यम् ॥ तत्रत्यटीका-यास्पष्टंखण्डितत्वात् ॥ भेदोत्पत्तेःप्राग्जीवस्य तथाज्ञानसत्त्वेन सृष्ट्यभावदोषस्य तादवस्थ्यात्स-त्त्यपि सर्वंखल्विदमैतदात्म्यमिदमितिसामान्येनाभेदबोधने भेदोऽनित्यइतरन्नित्यमित्युक्तिः किंनिबन्धनेतितु चिन्त्यम् ॥ विभेदजनकेऽज्ञाने इतिवदेतस्माज्जायते इत्यस्य जागरूकत्वाच्चे-त्यलम् ॥ ९ ॥ ३८ ॥

तस्माद्बद्धजीवज्ञानायोग्यस्यतद्योग्यतापादनमेवाविर्भावइतिस्वीकारेपिक्रीडैवसृष्टेर्मु-
ख्यंप्रयोजनं नतुजीवज्ञानमात्रंतत्प्रयोजनं ईश्वरःसृष्टेःपूर्वमपिस्वलीनानुच्चाभिन्नान्प-
दार्थाननुजानात्येवतेषुजीवानुभवायोग्यतांचजानात्येवेतिसार्वज्ञ्यस्यजीवानुभवार्थमा-
विर्भावस्यचनबाधः उक्तरीतिकंबहीरमणंहिजीवानुभवायोग्यैरेवपदार्थैःसंभवति सं-
सारिजीवानामनुभवाभावेपिवस्तुतः पदार्थानांब्रह्मात्मकतयानित्यत्वादेवाश्रांतानां
योगिनांसर्वदानदनुभवःश्रीभागवतादिषु अनागतमतीतंचवर्तमानमतींद्रियं विप्रकृष्टं
व्यवहितंसम्यक्पश्यंतियोगिनइत्यादावुच्यते क्रीडायानित्यत्वंतुप्रागिहैवोक्तं परब्रह्म
तत्लयोबहीरतौ सृष्टिरितिनाव्यवस्था अतएवश्रीमदाचार्यचरणैः ( प्रकरणं१ कारिका
७२ ) कदाचिद्भगवतेस्वस्मिन्प्रपंचेपिक्वचित्सुखमित्युक्तं अत्रावरणभंगेविस्तरोगौडवा-
लिकविचारश्चावधेयः आविर्भावादिकमधिकमुत्तरभागेसमर्थयिष्यतेयत्तुभिदिष्टेत्यादि-
इत्यलमित्यंततन्न अग्निविस्फुलिंगन्यायेनव्युच्चरणोत्तरंअंशेषु ( अ· १ पा· १ सू·१५)
“ नेतरोनुपपत्तेः ( अ-२ पा ३ सू· ३१ ) पुंस्त्वादिवत्त्वस्यसतोभिव्यक्तियो
गात् ” इत्यादिषुसाधितादानंदांशतिरोभावाज्जीवभावेपराभिध्यानसूत्रोक्तरीत्या तेष्वै
श्वर्यादिब्रह्मधर्माणांतिरोभावः ॥ तदतिरोभावेऽविद्ययाबंधायोगात् ॥ ईशितव्याद्यभा
वेनभगवतऐश्वर्यादेर्निर्विषयतापाताच्च॥सूत्रेतिरोहितमितितुनपुंसकेभावेक्तः ततोभगव-
दिच्छयाऽविद्ययास्वरूपाज्ञानादिपंचपर्ववशाद्बंधेहंताममतारूपसंसारमत्यये चक्रे तेषामे-
वसकलपदार्थाज्ञानं भगवद्दिदर्शयिषितानामेवज्ञानंचसंभवति नतुब्रह्मणः ज्ञानानंदरूप-
त्वात्ऐश्वर्यादिमत्वात्स्वायत्तसर्वशक्तिकत्वाच्च ॥ अंशस्यजीवस्यैवाज्ञानं अंशिन-
स्तुसकलज्ञानंनिर्बाधमितितुसूर्यांशेचक्षुषितिमिराद्युपघातेपिसूर्येतदसंबंधवत्सूर्योयथे-
त्यादिकठादिश्रुतिभिस्तादृशस्मृतिभिश्चसूत्रकृता ( अ॰ २ पा॰ ३ सू॰ ४६ ।
४७ ) “ प्रकाशादिवन्नैवंपरः ॥ स्मरंतिच ” इतिसाधितं ॥ तत्रैवात्राप्यंशां-
शित्वमभेदश्चनविरुध्यते तयोर्भेदस्तुनस्वीक्रियतेतस्मिन्नंशेआनंदस्यधर्माणांचतिरोभा-
वादेवबंधाज्ञानादिसंभवात् ॥ प्रागभावादिखंडनविस्तरस्तुसर्वार्थनिर्णयनिबंधावरण-
भंगयोरनुसंधेयः ॥ तमेवाभिसंधायमार्तंडे प्रागभावादयोनांगीकार्याआभ्यांयतोखिल-
मित्युक्तं ॥ प्रागुक्तरीत्याऽवश्यमंगीकरणीयाभ्यामाभ्यामाविर्भावतिरोभावाभ्यामे-
वाखिलव्यवहारोपपत्त्यातेनांगीकार्याइत्यर्थः तत्रसर्वस्यापिकार्यस्यब्रह्मरूपतयासर्वत्र-
सर्वधर्माश्रयत्वेपिजलाहरणाद्यर्थमेवाविष्कृतेघटाख्येब्रह्मरूपेपटादिधर्माणां आवरणा-
द्यर्थमेवाविष्कृतेपटाख्येब्रह्मरूपेघटादिधर्माणांचतिरोभावादेवघटःपटोनपटोघटोनेत्या-
दिरन्योन्याभावाख्योभेदोऽविद्याबद्धैर्जीवैर्गृह्यते ॥ वस्तुतस्तुतिरोभावादेवतथाप्रती-
तेःसर्वत्रसर्वधर्मादिर्भावेतदप्रतीतेश्चसनैवस्वीकार्यः ॥ एवमभावत्रयानंगीकारेप्युपप-
त्तेर्दिङ्मात्रंमूलेदर्शितं भेदःकार्यतयाजातःक्रीडार्थंतुहरीच्छया पश्चाल्लयेकारणेहिस्थि-
तिर्दृष्टायथाप्रदीतिमार्तंडकारिकात्वनाकुलैव घटादावितरधर्मतिरोभावात्कार्यतयाहेतु-

नाभेदःकारणावस्थातोवैलक्षण्यप्रतीतिरूपः बहुस्यांप्रजायेयेतीच्छयैवजातः अन्यथा-क्रीडनानिष्पत्तेः अतोघटादिपरिच्छिन्नरूपेणाविर्भावःक्रीडार्थंबहुभवनेच्छयैवजातःते-नतेनकार्येणबहीरमणोत्तरंलयेतिरोभावेसतिकारणेकार्यस्यैतिशेषःस्थितिर्दृष्टा हियुक्त-मिदं यथातिरोभावेघटादीनांमृदिस्थितिः त्वय्ययमासीदित्यादिवाक्यानुरोध्येषदृष्टांतः इतिकारिकार्थः ॥ इहमूलेविकृतिप्रकृतिशब्दावुपादेयोपादानकार्यकारणपरौ ॥ त्व-त्संमतभेदांगीकारेतुमिथ्यासत्ययोरैक्यासंभवात्सर्वंखल्वित्यादिश्रुतयःश्रौतामृदादिदृष्टां-तश्चापोड्येरन् ॥ नचभेदस्येत्यादिकंत्वनभ्युपगमपराहतं ॥ अतःकार्यावस्थायाम-पिघटोऽयंनमृदित्यादिभेदोवाङ्मात्राल्लब्धः तदवस्थायामपिश्रुतिभिःसर्वस्यब्रह्मतायाबो-धनात् सुवर्णार्थिभिःसुवर्णकटकादीनामुपादीयमानत्वाच्च एतदर्थिकाएवमार्तंडकारि-काउदाहृताः त्वन्मतेचभेदस्याब्रह्मत्वेऽवश्यवाच्येकथंनश्रुतिविरोधः विभेदजनकइ-तितृतीयश्लोकखंडेनोचितितं एतस्माज्जायतइति मुंडकवाक्यंतुप्राणादिप्रादुर्भावप-रमएतदेवानुसंधायप्रपंचितंमूलेघटस्याविर्भावार्थमिति आविर्भावोत्रलौकिकचाक्षु-षरूपो नतुसिद्धांतसंमतः ॥ **ज्ञानंनास्तीत्यादि** ॥ अतोज्ञानार्हत्वमात्रमाविर्भावल-क्षणमसंगतमितिभावः ॥ **जीवानांतत्पदार्थज्ञानार्थमिति** सर्ववाक्यंसावधारणमि-तिन्यायादब्भक्षोवायुभक्षइत्यादिवदवधारणंविवक्षितं । तेनज्ञानमात्रार्थमित्येवार्थः ॥-एवंरमणार्थमेवेत्यत्रैवकारोपितादितरस्यमुख्यप्रयोजनत्वंव्यवच्छिनत्ति ॥ तथाचबही-रमणमेवमुख्यसृष्टिप्रयोजनंपरमनाविर्भूतैःपदार्थैस्तन्नसंभवतीतितदर्थंप्रागुक्तरीतिक-जीवानुभवयोग्यत्वलक्षणआविर्भावःपदार्थानांसर्वदास्वानुभवगोचराणामपिहरिणाक्रि-यतेइतिभावः ॥ **वक्ष्यतइति** विशेषतोवक्ष्यते ( अध्याय ३ पाद २ सूत्र ५ )-"पराभिध्यानात्तु „ इतिसूत्रस्यभाष्यात्किंचिदंशमनुवदंति ॥ **अस्यजीवस्येत्या-दिना ऐश्वर्यादितिरोहितमिति** ऐश्वर्यादेस्तिरोभावइत्यर्थः । फलितार्थकथनं-वेदं ॥ "अभितोध्यानंत्वस्यएतस्यचसर्वतोभोगेच्छे„ तिभाष्यस्यफलितार्थमाहुः॥ **क्री-डेच्छेति** आनंदांशतिरोभावादित्यादिस्त्वार्थिकानुवादः इतरत्तुप्रागेवविवृतमस्माभिः-एवमेतच्छ्लोकखंडेनक्रीडायाएवसृष्टिप्रयोजनत्वं रमणश्रुत्यर्थः एवंच किंचिदाविर्भा-वतिरोभावविचारश्चसिद्धः ॥ **इतिनवमश्लोकखंडनं** ॥

**ननुसर्वात्मकत्वंचेद्ब्रह्मणस्तदाजीवस्येश्वरत्वमीश्वरस्यजीवत्वंच-स्यात् एवंतदभिन्नाभिन्नस्तुतदभिन्नएवेतिन्यायेनब्रह्महत्या-ऽप्यभिन्नेश्वराभिन्नोयागोपिब्रह्महत्यारूपःस्यात् एवंब्रह्मह-त्यादिरपियागरूपः स्यात् एवंविधिनिषेधादिरपिसंकीर्येत**

प्रायश्चित्तादिशास्त्रंचव्यर्थंस्यादितिचेन्मैवं ॥ " सर्वंखल्विदं-
ब्रह्म " तिश्रुत्यासर्वस्यब्रह्मात्मकत्वेपिकार्याणांपरस्परंतद्व्यक्तित्वे
ननैकताब्रह्मरूपेणैकत्वेपितद्रूपेणैकत्वाभावान्नघटेनपटकार्या-
पत्तिः ॥ किंचत्वन्मतेपिसर्वस्यमायाकार्यत्वाविशेषात्तदभि-
न्नाभिन्नस्यतदभिन्नत्वनियमानुरोधाद्ब्रह्महत्यायागयोरविशेषः
कुतोनस्यात् विधिनिषेधशास्त्रमपिव्यर्थमेवस्यात् यदिचब्र-
ह्महत्यात्वेनयागत्वेनतेषांभेदःस्वीक्रियेतत्तदाप्रकृतेपितुल्यं ॥ व-
स्तुतस्तुब्रह्मणस्तत्तत्कार्यनिष्पत्त्यर्थंच तत्तद्रूपेणाविर्भावःस्वी-
क्रियतेतद्रूपेद्वितीयरूपस्यतिरोभावः सएतयोर्भेदत्वेनव्यवह्रि-
यते तथाचाविर्भूतेनैवरूपेणकार्यनिष्पत्तिर्नानाविर्भूतेना-
न्यथासृष्टेःपूर्वमपिसकलकार्यनिष्पत्तिःस्यात् ॥ एवंचब्रह्म-
हत्ययाकथंयागादिकार्यनिष्पत्तिः ॥ अतएवमत्स्यादिरूपे-
णाविर्भूतेनापिभगवताहिरण्यकशिपुवधादिकार्यस्यानिष्प-
त्तेर्नृसिंहरूपेणाविर्भावःसंगच्छतेएवंतत्तल्लीलार्थंतत्तद्रूपेणावि-
र्भावः ॥ अत्रचरमणेच्छैवप्रमाणमितिनकोपिदोषः ॥ त्व-
न्मतेचयागस्यमिथ्यात्वाद्ब्रह्महत्याया अपिमिथ्यात्वाद्यागेऽप्र-
वृत्तिर्ब्रह्महत्याभयंचनस्यादतोबलवद्विष्टसाधनताज्ञानरूपप्र-
वृत्तिप्रतिबंधकस्याभावेनरागादिवशेनसर्वएवत्वद्गोष्ठीनिरतःपा-
पेप्रवर्त्तेत यागादीनांचमिथ्यात्वात्तत्कालिकसुखाजनकत्वा-
च्चततोनिवर्त्तेत ॥

## टीका

सहस्राक्षे सर्वात्माचेदितिदशमश्लोकं सव्याख्यानंननुसर्वात्मकमित्यादिनाहा-
स्यास्पदत्वमित्यंतेनखंडयिष्यंतः यत्तुतेनेत्यादिव्यर्थंस्यादित्यंतंभागंव्युदस्यंतिननुस

**वेत्यादिनानिवर्त्ततेत्यनेन** प्रतिबंदीमाहुः॥ **किंचत्वन्मतइत्यादिना** यद्यपिप्रतिबं-दीनोत्तरंनथापितदुत्तरेण स्वपक्षाक्षेपोत्तरंसंपद्यत इतिपुरस्ताच्चपरस्ताद्वहुत्रतदुपादानम दुष्टं॥एवमेवाभिप्रेत्यद्वितीयाध्याये व्यासपादैरपितस्या उपन्यासाच्च॥ **विधिनिषेधेति** मायिकानांविहितनिषिद्धसर्वकर्मणां मायाऽभिन्नतया परस्पराभिन्नत्वात् फलेष्वपित-यैव दिशा अविशेषापाताच्चतद्बोधकनानाशास्त्रस्यवैय्यर्थ्यमुचितमेव ॥ ननुसर्वेषांमा-यिकत्वाविशेषेपियागत्वब्रह्महननत्वादिना कर्मणांस्वर्गनरकत्वादिना फलानांचविशेषो स्त्येवेत्यदोषइतिचेत् अस्माकंब्रह्मरूपत्वाविशेषेपितेनतेन रूपेणपरस्परप्रतियोगिकभे-दादेदोषमवगच्छेत्याहुः ॥ **यदिचेत्यादिना** ॥ **द्वितीयरूपस्येति** घटेघटत्वातिरि-क्तानांपटादीनांसर्वेषामित्यर्थः ॥ **अन्यथेति** तिरोहितैरपि व्यवहारनिष्पत्तिस्वीकारे ॥ एवंचसृष्टिप्रलययोरविशेषएवापद्येत ॥ तद्बोधकशास्त्रव्यांकोपोलक्षणभंगाद्ब्रह्माज्ञानंच प्रसज्येत ॥ **मत्स्यादिरूपेणेत्यादि** इदंगुणोपसंहारभाष्यादिषुप्रपंचितं ॥ अयंभावः तदनूदितासुमार्तंडकारिकासुप्रथमचरणारंभेयच्छब्दस्त्यक्तः वेद्यतइत्यत्रतुबोध्यतइतिमा-क्तनःपाठः बुध्यतेतेनेत्यत्रतुबोध्यतइतिपाठः यत्रयेनेतिदशमस्कंधवाक्येयस्मैयद्यदिति-कर्मादिसंग्राहकेवास्तवपाठेपियतः पदेनपौनरुक्त्यापादकोयस्मादितिपाठः कल्पितः मु-द्रिकाकटकादयइतिपाठोविपर्यस्तः खंडनेचात्रश्लोकेमार्तंडटीकायामुपन्यस्ताः सार्वा-त्म्यसाधिकायथासोम्ययत्रयेनेत्याद्याः श्रुतिस्मृतीः विस्तरेणविचारितंतत्त्वमसीतिवा-क्यंचासमाधायैवलौकिकन्यायमात्रबलेनाकिंचिद्दूषणं स्वचरणोपरिकुठारप्रहारप्रभमुद्भा-

---

## सहस्राक्ष

सर्वात्माचेत्सजीवेशकार्याकार्यविपर्ययः ॥ अवि
रोधेऽव्यवस्थास्यात्तथेष्टेहेतुतामते ॥ १० ॥

यत्तुतेन सर्वंहिखल्विदंब्रह्मतज्जलानितिपठ्यते सर्वंब्रह्मात्मकंविश्वमिदमावोच्यतेपुरःस-र्वशब्देनयवाद्धिदृष्टंश्रुतमदोजगत् बुध्यतेतेनसर्वंहिब्रह्मरूपंसनातनम् कार्यस्यब्रह्मरूपस्यब्र-ह्मैवस्यात्तुकारणम् इति तथा यत्रयेनयतोयस्ययस्मैयस्माद्यथायदा स्यादिदंभगवान्साक्षात्प्र-धानपुरुषेश्वरः इतिभागवतेपद्येसर्वस्यब्रह्मताश्रुता श्रुतिमंत्रैःस्मृतिगणैर्दृष्टिःस्वर्णार्थिनोयथा सुवर्णस्यचयेखण्डाःकटकामुद्रिकादयः सुवर्णत्वेनगृह्णातितथाब्रह्मविदोमतिः यथासौम्येत्या-दिश्रुतौस्पष्टमेवनिरूपितम् तथातत्त्वमसीत्यत्राभेदोंशांशिविचारतः इतिसार्वात्म्यमीशस्यवर्णितम् तन्नयुक्तमित्याह ॥ सर्वात्मेति ॥ यदि हरिः सर्वात्मा तर्हिजीवईशईशश्चजीवउच्येत एवं त-दभिन्नाभिन्नस्तदभिन्नएवेतिन्यायेन ब्रह्महत्याद्यभिन्नेश्वराभिन्नोयागोऽपि ब्रह्महत्यादिरूपः स्यात् ॥ एवं ब्रह्महत्यादिरपि यागरूपः स्यादिति तद्विधिनिषेधधीः संकीर्येत एवंच त्व-याकार्यमेव क्रियेत विधिनिषेधप्रायश्चित्तादिशास्त्रं च व्यर्थंस्यात् ॥ २९ ॥

वयन्नुपहसनीयः तथाहि हरेःसार्वात्म्याज्जीवस्त्वीश्वरांशत्वादीशइतिशक्योवक्तुं उच्यतेचतथा तत्वमस्यादिवाक्यैः ईशस्तुसर्वज्ञःसर्वशक्तिमान्पूर्णानंदः सजीवएवेतिनशक्योवक्तुं सूत्रकृताजीवस्याभेदव्यपदेशात्परस्मिन्हिताकरणादिदोषप्रसंगमाशंक्य ( अ० २ पाद० १ सू० २२ ) " अधिकंतुभेदनिर्देशात् " इत्याधिक्यस्यसमर्थनात् ॥ " पादोस्यविश्वाभूतानि " विष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगत् इत्यादिश्रुतिस्मृतिभिस्तथैवबोधनाच्च सर्वतरंगाणांतरंगमाल्यभिन्नत्वेपिनहिनदीनाथस्तरंगमात्रत्वेनशक्योव्यपदेष्टुं नापिघटादयःपार्थिवाइतिपृथ्वीघटमात्रंएवंकरचरणादयःस्वांशाइतिनदेवदत्तकरमात्रं इत्थंकारमंशिनःजीवमात्रत्वव्यपदेशायोग्यादेवश्वेताश्वतरे " तस्यावयवभूतैस्तुव्याप्तंकृत्स्नमिदंजगत् " ममैवांशोजीवलोकेजीवभूतः सनातनः " अंशोनानाव्यपदेशात् " तवपुरुषंवदंत्यखिलशक्तिधृतोंशकृतं एकस्यैवममांशस्यजीवस्यैवमहामते ब्रह्मांशकस्यात्मनआत्मबंधनः एवमादिश्रुतिस्मृतिन्यायपुराणवचोभिर्जीवस्यतदंशत्वमेवबोध्यते नतुब्रह्मणएवजीवत्वं यच्चसर्वस्यब्रह्मात्मकत्वेतदभिन्नाभिन्नइतिन्यायेन यागब्रह्महत्यादेरभेदापादनं तदन्यविचारचारवमसारवत् सर्वेषुब्रह्मरूपेषुसर्वशक्तिकत्वेपि यथामत्स्यादिरूपेषु तत्तदवतारनियतकार्यमेव तेनतेनरूपेणप्रणीयते नत्ववतारांतरकार्यं तथैवसतिवैचित्र्येणलीलासंभवात् अन्यथा प्रथमतरावतारएकएवाऽऽसंवर्तंसर्वमखर्वंनिर्वहेत् तथानीरानयनादिनियतकार्योपयोग्येवघटादिरूपमितरसर्वधर्मतिरस्करणपुरःसरमाविष्क्रियतइति एकैकस्मिन्कार्यरूपेसकलकार्यांतरधर्माकारादितिरोधानमेवभेदइतिकैश्चिदन्योन्याभावइतिचव्यपदिश्यतेएवंचसर्वेषांब्रह्माभिन्नत्वेपिपरस्परप्रतियोगिकतादृशभेदस्यसृष्टिदशायांप्रतीयमानतयाउक्तन्यायमात्रेणयागब्रह्महत्यादेरैक्यमशक्यवचनं इदानींपरस्परव्यावृत्तयागत्वादिधर्माणांतत्रतत्रस्पष्टंप्रतीतेःउक्तन्यायस्थैसर्वत्राप्रतिबद्धप्रसरत्वेघटपटादीनांपार्थिवत्वाविशेषात्घटस्यपटरूपतयातेनप्रावरणंसर्वरूपतयातेनैवसर्वकार्याणिपटादेरपितथात्वात्सर्वकार्याणिचापद्येरन् तथाहिसर्वेषुघटादिष्वस्तिभातिप्रियाणांब्रह्मरूपत्वेननामरूपयोः सर्वत्रमायिकत्वेनचत्वद्रीत्यापिसर्वत्रतन्न्यायप्रसरस्याशक्यनिरोधत्वात् नचैवं प्रत्यक्षविरोधात् ॥ सर्वस्यैकमायोपादानकतयातवयागब्रह्महत्ययोरैक्यंतेनविधिनिषेधयोःसांकर्यं स्वर्गनरकादिफलसांकर्यंतवाकार्यप्रवृत्तौस्वाच्छंद्यंविधिनिषेधप्रायश्चित्तशास्त्रवैयर्थ्यंचस्यादेव नचैवंयुक्तं सर्वशास्त्रव्याकोपात् अथोक्तन्यायात्कारणरूपतयासर्वेषामभेदेपिसृष्टिदशायांघटादित्वेनयागादित्वेनच प्रतीयमानंभेदमाश्रित्यप्रागुक्तदोषाप्रसंगमंगीकुर्यास्तर्हिममापिसमःसमाधिः न्यायस्यप्रत्यक्षविरोधेसर्वत्रादर्तुमशक्यत्वाच्छ्रुत्यादितस्तस्यातिदौर्बल्यात् एकोपादानकानांपारमार्थिकभेदवारणेनतद्विषयकाभस्यासंदिग्धत्वाच्च ॥

अप्रमेयत्वित्यादिनासर्वभवनसमर्थत्वाद्विरुद्धधर्माश्रयत्वंब्रह्मणो·
लक्षणमितिशुद्धाद्वैतमार्तंडटीकाकारोजगादलोकस्यब्रह्माभि-
न्नत्वेनलोकेपितल्लक्षणसत्त्वेविरोधकथामात्रोच्छेदप्रसंगइत्यादि·
यदुक्तं तदपिनसम्यक् वेदप्रतिपादितविरुद्धधर्माश्रयत्वंब्रह्मणो·
लक्षणंवेदेतेच " आसीनोदूरंव्रजति अपाणिपादोजवनोग्रही·
ता " इत्यादिनाकारणएवविरुद्धधर्माःप्रतिपादितानकार्य्येनहि
कारणस्यसर्वेधर्माःकार्य्येगच्छंतीतिकस्यापिसंमतमन्यथात्व-
न्मतेपिब्रह्मणःसच्चिदानंदरूपत्वात्तत्कार्य्यस्यघटादेरपिसच्चिदा·
नंदत्वापत्तिरिष्टापत्तौचतेषांजडत्वंनस्यात् मृच्छिलादिषुसत्त्वैव·
व्यज्यतेनेतरद्वयमितिवचनविरोधश्च एतेनब्रह्मानित्यमज्ञमित्य·
पिस्याद्विरोधस्यब्रह्मण्यदूषणत्वादित्यादिकमपास्तं॥वेदेब्रह्मणि·
तादृशधर्माणामनुक्तत्वात् वेदविरुद्धतर्कश्चोपेक्षणीयएव॥किं·
चसर्वंखल्वित्यादिश्रुत्यनुरोधेनब्रह्मणिमिथ्यात्वंतवनयेपिकुतो·
नस्यात्॥ किंचब्रह्मभिन्नस्यसर्वस्यापिमिथ्यात्वात्सांख्यसौगता·
दिसमयानांवेदस्यचत्वन्मतेमिथ्यात्वेनतेषांपरस्परंविरोधपरिहा-
रार्थंयत्नस्तावकीनानांव्यर्थएवस्यात् ॥ विरोधस्यापिमिथ्या·
त्वात् ॥ किंचकार्य्याकार्य्ययोरुभयोरपिसमानत्वात्तुल्यत·
याप्रवृत्तिःस्यात् ॥ ननुदृश्यतएवमिथ्यात्वेनजानतांज्ञानिना·
मुभयत्रप्रवृत्तिर्वानिवृत्तिर्वेतिचेत्तर्हित्वन्मतेकिंप्रवर्त्तकमितिव·
क्तव्यमीश्वरेच्छाकर्मवारागादिकंवास्वभावोवा ॥ नाद्यः त्वदु·
क्तदोषाणांत्वय्येवनिपातःस्यात् किंचत्वन्मतइच्छायाःप्रवर्त·
कत्वंनसंभवति जीवस्तत्कार्य्येप्रवर्त्ततामितीश्वरेच्छायाःप्रव·
र्त्तकत्वंत्वयावाच्यं तत्रजीवोयदीश्वरदृष्ट्यास्तितदातदज्ञान·

कल्पितएवत्वयावाच्योन्यथातस्यमिथ्यात्वानुपपत्त्याऽद्वैतहा-
निस्यात्तथाचेश्वरस्यभ्रांतत्वापत्तिः ॥ नचेश्वरोमिथ्याद्रूपं-
जीवादिकंमिथ्यात्वेनैवजानातीतिनोक्तानुपपत्तिरितिवाच्यं ॥
मिथ्यात्वज्ञानस्यबाधाधीनत्वादसतिचबाधेज्ञाननाश्यतत्कल्पि-
तवस्तुनएवाभावात्किंविषयकंज्ञानंतस्यस्यात् नहिशुक्तिरजतं-
मिथ्यात्वेनजानतांशुक्तिरजतमेवस्यादितीच्छाजायते तस्मा-
त्सर्वथैवत्वन्मतइच्छानसंभवति ॥ एवंबहुभावस्यापिमिथ्या-
त्वाद्बहुस्यांप्रजायेयेतीच्छायाअप्यनुपपत्तिः ॥ नचवस्तुतइ-
च्छादिकंनास्त्येव किंतुवेदेअध्यारोपापवादन्यायेनजगदुत्पत्त्या-
दिकंप्रदर्श्यते उक्तंचननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकः ॥
नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थतेतीतिवाच्यं ॥ तर्हितवपरमत-
स्यचमिथ्यात्त्वात्परमतखंडनार्थंत्वत्प्रयासोनिरर्थकएव माध्य-
मिकमतानुयायित्वात्सद्भिरुपेक्षणीयश्चासीत्यास्तांविस्तरः ॥ क-
र्मणप्रिवर्त्तकत्वेज्ञानिनांप्रवृत्त्यनुपपत्तिः सर्वस्यत्वन्मतेऽज्ञानोपादे-
यत्वात्ज्ञानेनाज्ञाननाशउपादाननाशात्कार्य्यनाशस्यावश्यकत्वे-
नकर्मणामपिनाशात् ॥ नचज्ञानेनाविद्यानाशेपितच्छेषोस्त्येवे-
तितन्मूलकस्यप्रारब्धकर्मणःसत्त्वेनप्रवृत्तावविरोधइतिवाच्यं ॥
ज्ञानेनाविद्यानाशोत्तरंतल्लेशसत्त्वेप्रमाणाभावात् तन्नाशार्थंका-
रणांतरंकल्पनीयमिति ॥ तृतीयेतुज्ञानिनिरागादिसत्त्वात्तस्यज्ञा-
नंनिष्फलंस्थितप्रज्ञत्वाभावात् अतएवोक्तंभगवताप्रजहाति
यदाकामान्सर्वान्पार्थमनोगतान् ॥ आत्मन्येवात्मनातुष्टःस्थि-
तप्रज्ञस्तदोच्यतेइति ॥ नापिचतुर्थः नास्तिकमतप्रवेशापत्तेः
" परात्तुतच्छ्रुते " रितिश्रुतिसूत्रविरोधश्च अस्मन्मतेचईश्वरएव-

प्रवर्त्तकः अतएवएषह्येवेत्यादिश्रुतिरपिसंगता ॥ मर्यादामा- ङ्गीकृतेभ्यः कर्मकारयित्वातत्तत्फलंददाति नचैतावताकर्म- णांहेतुत्वमीश्वरेच्छायाएवमुख्यत्त्वात् ॥ किंचेत्यादिनाआपा- दितदोषस्तुपूर्वमेवनिरस्तः किंवाकर्मकीदृशमपिकरोतुफलमवि- नियमेनस्वेच्छयाददातीत्यादिपक्षस्त्वनंगीकारेणैवपरास्तः ॥ मोक्षमार्गस्तुवेदगुरुशिष्याणांमिथ्यात्वंवामदेवशुकादीनामप्यमु- क्तिजीवानांस्वमजीवतुल्यत्वंईश्वरस्यापितत्तुल्यत्वंचप्रतिपाद- यतात्वयैवनाशितः किंचैवंसर्वत्रानाश्वासेनभक्तिमार्गस्याप्यु- च्छेदस्त्वयासंपादितःकुमार्गप्रवृत्त्यापत्तिश्च ॥ ननुवेदस्यमि- थ्यात्वेपितत्प्रतिपादितस्यमोक्षस्यसत्त्यत्वान्नमोक्षमार्गोच्छेदःन- हिशब्दस्यक्षणिकत्वेपितत्प्रतिपाद्यघटादीनांक्षणिकत्वंसंभवति ॥ भक्तेर्मोक्षोपयोगित्वादेवनभक्तिमार्गोच्छेदः कुमार्गप्रवृत्तेर्निंदा- हेतुत्वान्नतत्रेच्छा उक्तंचबुद्धाद्वैतसतत्वस्ययथेष्टाचरणंयदि ॥ शुनांतत्वदृशांचैवकोभेदोशुचिभक्षणइतिचेन्न वेदप्रतिपाद्य- स्यस्वर्गादेर्जगतश्चमिथ्यात्वदर्शनेनत्वन्मतानुयायिभिर्यद्वेद- प्रतिपाद्यंतत्तन्मिथ्येतिव्याप्त्याब्रह्मणस्तत्स्वरूपावाप्तिरूपमोक्ष- स्यापिमिथ्यात्वंकुतोनानुमीयेतयुक्तेस्तुल्यत्वात् ॥ तस्माद्वेद- विरुद्धकुतर्केणदोषापादनंस्वमतहानिकरमेवेति ॥

## टीका

सहस्राक्षे यत्तुसर्वेत्यादिदोषानिरस्तारइत्यंतंभागंपरिहरति **अयमित्यादिना हानिकरमेवेतीत्यंतेन** अयमभिप्रायः सर्वभवनसमर्थत्वादेव ब्रह्मणोविरुद्धध- र्माश्रयत्वमित्युक्तं लोकस्यब्रह्माभिन्नत्वेपियावद्ब्रह्मधर्माणांकार्यत्वावच्छेदेन प्रकाश- स्यानंगीकारात्घटादौसर्वभवनसामर्थ्याभावेन लोकेतल्लक्षणस्यवक्तुमशक्यतयाविरो-

धकथामात्रंनोच्छिद्यते किंतु जलानलादीनामन्योन्यविरुद्धधर्मत्वेपिब्रह्मणस्तत्तद्रूपेण-
भवनस्यश्रुतिसूत्रादिसिद्धतयातस्यैवतल्लक्षणंयुक्तंयथापृथ्वीकार्याणांलवणशर्करादी-
नांहिंगुकुरंगनाभिप्रभृतीनांचपरस्परविरुद्धरसगंधादिसंधायित्वेपिपृथिव्याएवतत्तद्रूपेण-
परिणामात्तस्याएवषड्विधरससर्वविधगंधाद्याश्रयत्वंननुलवणादिकार्याणां तेषुरसांतरगं-
धांतरादितिरोधानात् तथात्रापि कार्येषुशीतस्पर्शोष्णस्पर्शादितत्तद्धर्माणां परस्परव्य-
धिकरणताऽवधारणात्तेष्वेवतेषांविरोधकथा ब्रह्मतुसर्वकार्यरूपेणभवनसमर्थंसर्ववि-
रुद्धधर्माश्रयश्चेत्यनवद्यं नचेदंकैवलयौक्तिकं अपितु " आसीनो दूरं अपाणिपादः त
देजतितन्नैजति " इत्यादिकठश्वेताश्वतरेशावास्यादिश्रुतिशतैर्बोध्यते तच्चतुरीयश्लो-
कखंडनेप्रपंचितं अतोलवणादिवत्कार्यदृष्ट्यैवविरुद्धानांवस्तुतोविरोधरहितानांधर्मा-
णामाश्रयस्तदितिसारः एतदेव त्वदिकृत्वाश्रीमदाचार्यचरणैस्तत्वदीपेभिहितं ( प्रकर-
ण १ कारिका ७१ ) प्रापंचिकपदार्थानांसर्वेषांतद्विलक्षणमिति व्याख्यातंच " यद्यपि-

---

## सहस्राक्ष.

यत्तु सर्वभवनसमर्थत्वाद्विरुद्धधर्माश्रयत्वस्य ब्रह्मणोलक्षणत्वमिति तट्टीकाकारोजगाद तन्नेत्याहाविरोधइति ॥ लोकस्य ब्रह्माभिन्नत्वेन लोकेऽपि तस्य लक्षणत्वे विरोधकथा-मात्रस्योच्छेदप्रसङ्गात् ॥ किञ्च ब्रह्मानित्यमब्रह्मनित्याद्यपि साक्षात्त्वयाऽङ्गीक्रियेत सर्वंख-ल्वित्यादिश्रुतिबलात् विरोधस्यब्रह्मण्यदूषणत्वात् ॥ एवंच कथं त्वमेव प्रमाणविरोधोद्भाव-नेन परान्विजिगीषेथाः कथंच द्वितीयाध्यायस्योब्रह्मपरवाक्यानां श्रुतियुक्तिविरोधोद्धारः संगतः कथंवात्वद्गुरोर्द्वितीयाध्यायस्थताद्दशसूत्रव्याख्या युज्येत तववाविरोधपरिहारयत्नः ॥ किञ्चैवमविरोधेऽप्यकार्ये प्रवृत्तिर्नपरिहृता ॥ ४० ॥ नन्वीश्वरेच्छैवसर्वत्रकारणं तथाच त-स्यैवाकार्ये ममाप्रवृत्तिः यदाच तस्येच्छा मदीयाऽकार्यकरणविषया जायते तदा क्रियत-एव तदितिचेन्नेत्याह ॥ तथेति ॥ अयमभिप्रायः ॥ किं हरीच्छावशान्न्यायान्यायौ कुर्वन्नि-यमेन सुखदुःखे भुंक्ते किंवा कर्म कीदृशमपि तदिच्छया करोतु फलमप्यनियतमेव स-स्वेच्छया ददातीति ॥ नाद्यस्तृतीयश्लोकोक्तरीत्याकर्मणोहेतुत्वापत्तेः ॥ किञ्च यदिदं सुकृ-तादिकारयति तस्येत्करीत्या दुष्कृतादितोऽनन्यत्वानपायादुक्ताऽनुपपत्तिर्दुरुद्धरा ॥ नाद्वि-तीयोऽनाश्वासेनाप्रवृत्त्यापत्त्या भक्त्यादिमार्गोच्छेदप्रसङ्गात् ॥ एवं निश्चितवतः कस्यापि प्रवृ-त्त्ययोगात् ॥ दृष्टएव मोक्षमार्गध्वंसः पुष्टिमार्गस्थस्येतिचेत्सहैव पुष्टिमार्गेण मोक्षमार्गं नाश-येथाः ॥ न्यायस्य तुल्यत्वेनतत्रापि शङ्कया प्रवृत्त्यभावप्रसङ्गात् ॥ न्यायाद्यविरोधेतूक्तं वक्ष्या-मश्च ॥ कुमार्गेप्रवृत्त्यापत्तेश्च ॥ इष्यते इतिचेद्बाह्योसि ॥ कृतप्रयत्नापेक्षइत्युक्तस्तत्रविरोधोप्यत्र पक्षेज्ञेयः ॥ तस्मादिच्छाया अनियामकत्वात्कर्मणानिवतत्त्वंवाच्यं ॥ तथाचोक्तदोषानिस्तारः ॥

कारणधर्माएवकार्येभवंतितथापिकार्यगतत्वेनान्यथाप्रतीतेस्तद्व्यावृत्त्यर्थमाह " इति ॥ अत्रश्रीपुरुषोत्तमचरणाः " ननुपूर्वंत्रितयपरिच्छेदरहितत्वंब्रह्मणिसाधितं तथासतिजगतोब्रह्माभिन्नत्वंसिद्धं तेनप्रापंचिकजडत्वादयोपिब्रह्मणिप्रसज्येरन्नित्याशंकांत्दिक्त्वाहुः यद्यपीत्यादिसमादर्धते तथापीति अन्यथाप्रतीतेरितिक्रीडेच्छयानंदतिरोधापितेतेधर्मा अनेजनत्वादयोजडत्वादिरूपेण प्रतीयंतइतिकारणरूपेणजडत्वादिरूपेणताव्यावर्तयितुमाहेत्यर्थःइदमेवचदश्यतेत्वित्यधिकरणेसाधितं " इतिव्याचक्षते एतेनब्रह्मानित्यमज्ञमित्यादिप्रलापाःपास्तः जीवस्यैवाज्ञत्वात् एकस्यैवममांशस्येतिवाक्यात् मृदश्मादिषुचिदानंदतिरोभावपूर्वकसत्तामात्रप्रत्ययेनापितत्रैवजडत्वप्रतीतिरुचितानतुप्रकृष्टसच्चिदानंदेसर्वज्ञेब्रह्मणितच्छक्यंवक्तुंविद्यारण्येनापिपंचदश्यां ( प्रक० १५ श्लो० २० ) सत्ताचितिःसुखंचेतिस्वभावाब्रह्मणस्त्रयः॥मृच्छिलादिषुसत्तैवव्यज्यतेनेतरद्वयमितितदेवस्वीकृतं ॥ अनित्यत्वंतुब्रह्मोपादानकत्वेकापिनास्त्येव स्वप्नशुक्तिरजतादयस्तुमायिकाइतितत्तुच्छतायाब्रह्मणिप्रसंग इतिदिक् लोकेविरोधकथायाअनुच्छेदाप्रमानाधीनाप्रमेयसिद्धिरितिसिद्धयंतात्प्रमाणविरुद्धेषुविरोधोद्भावनमुचितमेवयतोविरुद्धधर्माश्रयत्वादिकं श्रुतिसंमतमविप्रतिपन्नंसिद्ध्येत् अन्यथात्वादृशैरेकतरप्रमाणबाधेननिर्विशेषतादिकमेवापाद्येत एवंतादृशब्रह्मप्रमाणायतन्मात्रश्रुतिविप्रतिषेधादिपरिहारोद्वितीयाध्यायेभगवतआचार्यस्यनासंगतः अन्यथावाक्याभासावष्टंभात्कार्येविलक्षणत्वदर्शनादितःप्रकृत्यादिवादमादायैकदेशिभिर्ब्रह्मण्युपादानत्वादिकंनिवारितमेवस्यात् कुतस्तदा तस्यतादृशत्वसित्थ्याशा यथाचतैत्तिरीयेआकाशादिसृष्टिराम्नायतेछांदोग्येचतेजःप्रभृतिसृष्टिःविरुद्धधर्माश्रयत्वमात्रेणकस्तत्रविप्रतिषेधपरिहारोयदि ( अ० २पा० ३सू० १ )" नवियदश्रुतेः " इत्याद्यधिकरणानिनस्युः एतेनैवास्मदाचार्याणांतद्भाष्यप्रणयनप्रयासोपिसफलःसिद्धः यत्तुकिंचैवमित्यादितन्नलोकेकार्येषुविरोधस्यांगीकारेणशास्त्रनिष्ठानांनिषेधशास्त्रबलात्तेष्वप्रवृत्तेः तन्मतेचसर्वंखल्वित्यादिश्रुतिबलाद्ब्रह्मणिमिथ्यात्वंसांख्यादिसिद्धांतानांवेदस्यचमिथ्यात्वेनद्वितीयाध्यायादेः शशविषाणेनव्योमसुमसमुत्पाटनप्रायप्रयत्नत्वंसत्कर्मदुष्कर्मणोर्मिथ्यात्वाविशेषेणरागात्प्रवृत्तिःस्याच्छंदंचाविरुद्धमेवस्यादित्यादिशक्यंसुधीभिरधिकमूहितुं यच्चनन्वित्यादि पक्षेज्ञेयइत्यंतं तत्प्रलापमात्रं तत्रद्वितीयपक्षाकांडतांडवमनंगीकारपराहतं आद्येकर्मणामवांतरकारणत्वेपिभगवदिच्छायाएवमुख्यंसर्वहेतुत्वंनव्याहतं तद्धेतोरेवेतिन्यायात् " एषउएवएषह्येवसाधुकर्मकारयति " इत्यादिश्रुतिस्मृतिन्यायैस्तस्याएवकर्माणिफलानिच प्रतिबोधितायाहेतुतायाअबाह्येनबाधायोगात् तपःशब्दवाच्यतत्कृतपर्यालोचनानुरोधि कर्मणामवांतरकारणत्वंतुनतांबाधितुमीष्टे पित्रादेर्दंडकुलालादेश्चपुत्रघटादिकंप्रतितथात्वंजगत्रतोजगत्कारणतामिवेतिसंक्षेपः इदंच तृतीयस्यद्वितीयेसू० (३८) फलमतइत्यधिकरणेस्फुटंतत्रसू० (४०) " धर्मंजैमिनिरतएवे " तिपराभिमतंकर्मणांहेतुत्वमनूद्यसू० (४१)

" पूर्वंतुबादरायणोहेतुव्यपदेशात् " इतिसिध्धान्तकथनात् सिद्धमधिकं तृतीयश्लोकखंडने यच्चसुकृतदुष्कृतयोरनन्यत्वमुक्तं तत्त्विहैवापास्तमतोनफलसांकर्यं तदंभिन्नन्यायस्यसर्वत्रानन्यतापादकत्वे भवतांमुखादेरधोपघनानांचभवच्छरीराभिन्नतया-परस्परानन्यत्वंततोभक्षणादिकार्यसांकर्यंचापद्येत अत्रतवशंकामत्रभ्यबाह्योसीत्यं-ताः स्वानुरूपदुर्वादाः संसर्गदोषात्परानपिवाचाटयंतीतिकिंचित्तथोच्यतेद्वितीयपक्षा-रक्षणान्नभक्तिमार्गस्यमोक्षमार्गस्यचध्वंसःकुमार्गप्रवृत्तिर्वाप्रसज्यतेकृतप्रयत्नापेक्षसू-त्रार्थस्तुसमर्थितःप्राक्समर्थयिष्यतेचोत्तरभागे एवमिच्छायानियामकत्वसाधनादकस्मादित्यादिव्युदस्तं अन्यथाज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुतेतथेतिनष्टकर्मणांज्ञानिनांशुकवामदेवादीनांप्रवृत्तिहेतुःकःस्यात् अविद्याध्वंसेतत्कार्यप्रारब्धशेषासंभवस्य-समर्थितत्वरत्वात् प्रारब्धरहितानांघटपटादीनांचप्रतिव्यक्ति विच्छिन्नाप्रवृत्तिव्यवस्था कथंस्यात् उक्तानंगीकारेत्वन्मतेप्रवर्तकं दुर्वचं इच्छाबोधकश्रुत्यादेस्तन्मतेर्थानुपप-त्त्यातद्विप्लवस्त्वदुक्तसर्वदोषाणांत्वद्वादएवापादश्चेत्याहुः तर्हित्वन्मतेकिंप्रवर्तकमि-त्यादिना अर्थोनिगदव्याख्यातः ॥

यत्त्व यस्त्वित्यादिनातत्रोत्तमामध्यमाश्चकनिष्ठाह्यधिकारिणः ॥ सर्वंब्रह्म सर्वंब्रह्मसदृशं सर्वंब्रह्मणोभिन्नं तदर्थेचमध्यमपक्ष-स्यस्वसंमतत्वमित्यादिनाशुद्धाद्वैतमार्त्तंडोक्तंकिंचिदनूद्यतट्टी-काकृदुक्तमपिकार्यात्मनाभेदःकारणात्मनाऽभेदइत्युक्त्वातन्नयु-क्तमित्यादिनादोषापादनंतदभिन्नइतिन्यायेनकार्य्याणामप्यभे-दापत्त्याकार्य्यात्मनाभेदासिद्धेर्भेदाभेदयोःसमसत्ताकयोरप्यविरोधेलोकेविरोधकथांमात्रोच्छेदप्रसंगाच्चेत्यादिनाकृतंतदपिनस-म्यक्‌यतस्तद्भिन्नाभिन्नस्यतदभिन्नत्वमितिन्यायस्तुमूलप्रकृति विकारस्यविकारःसमूलप्रकृतिरूपएवेत्यभिप्रायकःयथाप्रकृ-तिकार्यस्यमहत्तत्वस्यविकारोहंकारादिःप्रकृत्यात्मकएवेतिअ-तस्तादृशस्थलएवसप्रवर्त्तते नतुविकाराणांपरस्परमभेदस्तेनन्यायेनापादयितुंशक्यते अन्यथाराजसाहंकाराभिन्नमहत्तत्वा-

भिन्नस्यतामसाहंकारस्यापिराजसत्वापत्तिरेवंचसर्वस्याभिन्न-
त्वेकार्थ्यमात्रविलोपापत्तिरितिपूर्वमेवोक्तं एकपदार्थप्रतियो-
गिकयोर्भेदाभेदयोरविरोधोविपरपदार्थप्रतियोगिकयोस्तयोर्न-
विरोधाभावसंपादकःकपिसंयोगितद्भेदयोरविरोधेपिहृतद्भेदयो-
र्विरोधस्यसर्वजनप्रतीतिसिद्धत्वात् सामान्यतोभेदाभेदयोर्वि-
रोधस्तुनास्त्येवभेदस्यकेवलान्वयित्वात्घटाभिन्नेपिघटेपटभेद-
स्यसत्त्वात् ॥ भेदाभेदयोःसमसत्ताकत्वंयदुक्तंतदपिदुर्वचंतथा-
हिकिंसमसत्ताकत्वंसमानकालिकत्वंवासमानदेशत्वंवापारिभा-
षिकंवानाद्यःघटाभेदतद्भेदयोरेककालावच्छेदेनप्रतीयमानत्वा-
त् घटाभेदपटभेदयोर्घटरूपैकदेशेविद्यमानयोरविरोधेपिघटत-
द्भेदयोर्विरोधस्यजागरूकत्वात्तृतीयोपितादृशपरिभाषायानि-
र्युक्तिकत्वादेवनसंभवतिपारमार्थिकसत्तातिरिक्तयोर्व्यावहारि-
कपारिभाषिक्योःसत्तयोरसंभवात् तत्स्वीकारेभ्रांत्याशशशृंग-
स्यापिप्रतीतेस्तस्याधिप्रातीतिकीसत्तास्यात् तथासतितुच्छानि-
र्वचनीययोर्वैलक्ष्यण्यानुपपत्तिः नचेष्टापत्तिरितिवाच्यं तथास-
तिमिथ्यात्वलक्षणेसद्विलक्षणत्वविशेषणस्य ब्रह्मप्रमातिरिक्ता-
बाध्यत्वेसतिसत्त्वेनप्रतीत्यर्हंचिद्भिन्नंप्रतिपन्नोपाधौत्रैकालिकनि-
षेधप्रतियोगीनवेत्याकारिकायांविप्रतिपत्तौसत्वेनप्रतीत्यर्हत्ववि-
शेषणस्यचवैयर्थ्यापत्तिःमतद्वयस्वीकारेहास्यास्पदत्वंयदुक्तंतद-
पिप्रतिबिंबावच्छेदाभासवादरूपमतत्रयंस्वीकुर्वतःस्वस्यततोप्य-
धिकहास्यास्पदत्वमनवलोक्यैव किंचाचार्यैर्मध्यमपक्ष-
स्यस्वाविरोधित्वमुक्तंतेनस्वमततन्मतस्यविरोधोनास्तीत्येवोक्तं
नतुतन्मतंस्वकीयत्वेनप्रतिपादितं त्वदीयैस्तुमतत्रयमेवस्वकीय-
त्वेनप्रतिपादितमतोभवतामेवहास्यास्पदत्वं ॥

सहस्राक्षियत्तुतत्रोत्तमाइत्यादि एवेत्यलमित्यंतंभागंनिराकुर्वंति यच्चयत्त्वित्यादिना एवहास्यास्पदत्वमित्यंतेन अत्रेदंज्ञेयं प्रथमस्कंधपंचमाध्याये ( श्लो० २० ) इदंहिविश्वंभगवानिवेतरोयतोजगत्स्थाननिरोधसंभवाइत्यत्रइदंविश्वंहिसर्वंखल्वित्यादिश्रुतिनिश्चयेनभगवान् इत्युत्तमानांप्रत्ययः इदंविश्वंभगवानिवब्रह्मोपादानकत्वाद्ब्रह्मसदृशमितिमध्यमानां इदंविश्वंभगवांस्तुइतरस्ततोभिन्नोघटात्कुलालइवेतिनिकृष्टानां इतिपक्षत्रयं श्लोकपदयोजनयैवदर्शितंनतुकल्पनया तत्रतृतीयस्यसर्वथानादरस्तु "यदाह्येवैषएतस्मिन् द्वितीयाद्वैभयंभवति" इत्यादिश्रुतिविरोधात् द्वितीयस्तुसूत्रस्यैकदेशिमतानुगुण्यात् श्रुतिसूत्रगीताद्यभिप्रेतोमुख्यसिद्धांतःप्रथमएव स्वानुरोधितयामध्यमपक्षस्यांगीकारस्तुप्रथमपक्षस्यशीघ्रंसर्वेषांबुद्धावनारोहात् तादृशानांबुद्धिसौकर्यार्थः नयुक्तमित्यादिनोक्तदोषास्त्वकिंचित्कराः तद्यथा तदभिन्नन्यायस्तुवस्तुतोब्रह्माभिन्नपृथिव्यभिन्नघटादेर्ब्रह्माभिन्नत्वस्यलोके पृथिव्यभिन्नतंत्वभिन्नपटपृथिव्यभिन्नत्वस्यचसाधकः नतुकार्येषुपरस्परप्रतियोगिकभेदप्रतीतिबाधकः अतः कार्यात्मनाभेदःसिध्येत् यच्चभेदाभेदयोःसमसत्ताकयोरित्यादितत्तुनामार्थादितादात्म्यवादिवैयाकरणादिराद्धांतेमायायाःसदसत्त्वाभ्यामनिर्वाच्यत्वबोधकेत्वन्मतेस्त्वोक्तदोषप्रसरमविचार्यैव वस्तुतोस्माकंतु अभेदएववास्तवोभेदश्चतिरोभावरूपतया बद्धजीवप्रतीतिसिद्धइत्येनतौल्यान्नैकाधिकरण्यविरोधः किंतुतवैवोक्तादिस्थलेषुसः अन्यतरस्यप्रातीतिकतायाः अशक्यवचनत्वात् मायायांसत्त्वस्यतथात्वेविशुद्धचितः कल्पकत्वादज्ञत्वं असत्त्वस्यतथात्वेऽनादिद्वैतंचापद्येतेति । भेदाभेदयोःसमसत्ताकयोरित्यादितदुक्तिंदूषयितुमानमध्याहुः एकपदार्थेत्यादिना वृक्षादावेकस्मि-

---

## सहस्राक्ष.

यत्तु तत्रोत्तमामध्यमाश्चकनिष्ठाद्यधिकारिण इत्यादिना सर्वंब्रह्म सर्वंब्रह्मसदृशं सर्वंब्रह्मणोऽभिन्नं तत्कार्यभूतमित्यधिकारिभेदेनेदंहिविश्वमिति भागवतश्लोकटीकारूपसुबोधिनीस्थस्वगुरुसंमत्यापक्षत्रयमुपन्यस्यान्तिमपक्षस्य •भेदपरत्वेन दुष्टत्वमुक्त्वा मध्यमपक्षस्य मध्यमत्वं स्वानुरोधित्वेन स्वसंमतत्वं चोक्तं॥यच्च भेदाभेदप्रतीतिस्तुमध्यमानांप्रकीर्तितेत्येतद्व्याख्याने कार्यात्मनाभेदः कारणात्मनाऽभेदइति तट्टीकायामुक्तं ॥ तत्तुनयुक्तं ॥ तदभिन्नाभिन्नइतिन्यायेन कार्याणामप्यभेदापत्त्या कार्यात्मनाभेदासिद्धेः भेदाभेदयोः समसत्ताकयोरप्यविरोधेविरोधकथामात्रोच्छेदप्रसङ्गाच्च ॥ किञ्चैवं मतद्वयं स्वीकुर्वता त्वद्गुरुणा किं वस्तुन्यपि विकल्पस्स्वीक्रियतेऽत परप्रतारणायेतरःपक्षः ॥ उभयमपि विज्ञातशास्त्रहार्दहास्यास्पदमेवेत्यलम् ॥ १०॥ ४१ ॥

न्यपदार्थेऽग्रावच्छेदेनकपिसंयोग्यऽभेदः मूलावच्छेदेनतत्संयोगिप्रतियोगिकभेदश्चाविरो-
धेनतिष्ठति वृक्षस्यैकस्यैवानुयोगिप्रतियोगित्वात्परपदार्थप्रतियोगिकयोस्तुतयोःसामा
नाधिकरण्यमसंभवि नीलाभिन्नोघटइतिप्रत्ययेतत्रनीलभेदस्यपटाद्भिन्नइतिप्रत्ययेन-
त्रपटाभेदस्यचाप्रतीतेरित्यर्थः **सामान्यतइति** यतःकुतश्चिदभिन्नेयत्किंचित्प्रतियो-
गिकोभेदःध्रुवचइतिभावः **केवलेति** सृष्टिदशायांप्रपंचेतत्तदंशतिरोभावरूपस्यतस्य
तथात्वात् यच्चसमसत्ताकयोस्तयोर्विरोधएवेतिदर्शितंतत्रसमसत्ताकत्वंविकल्प्यदूषयं-
स्तदुक्तौन्यौन्यंदर्शयंति **तदपितुर्वचमित्यादिना** अनूदिताविप्रतिपत्तिस्तुअद्वैत-
सिद्ध्यारंभस्था यच्चार्कंचैवमित्यादिइत्यलमित्यंतंतन्नभेदाभेदपक्षस्यमध्यमाधिकारि-
बोधनार्थतायाउक्तचरत्वात् किंतुतन्मतेप्रतिबिंबादिपक्षस्वीकारात्किंजीवेश्वरवस्तु-
नोःप्रत्येकंनैरूप्यमाहोस्वित्परप्रतारणामात्रंतत् उभयथापितदेवहास्यास्पदमित्याहुः
**मतद्वयेत्यादिना** किंचप्रतिबिंबवादेप्यवांतरास्तन्मतग्रंथप्रसिद्धाःषट्पक्षाःप्राक्त-
नैरुक्ताः यथा " अनादिरनिर्वाच्याभूतप्रकृतिश्चिन्मात्रसंबंधिनीमायातस्यांचित्प्रति-
बिंबईश्वरः । तस्याएवपरिच्छिन्नानंतप्रदेशेष्वावरणविक्षेपशक्तिमदविद्याभिधानेषु-
चित्प्रतिबिंबोजीवइत्येकंमतं ॥ १ ॥ त्रिगुणात्मिकायामूलप्रकृतेर्मायाचाविद्या-
चस्वयमेवभवतीतिश्रुतिसिद्धंस्वरूपद्वयंतत्ररजस्तमोनभिभूतशुद्धसत्त्वप्रधानामायातस्यां-
चित्प्रतिबिंबईश्वरः ॥ तदभिभूतमलिनसत्त्वप्रधानाऽविद्यातस्यांचित्प्रतिबिंबोजीवइ-
त्यपरं ॥२॥ विक्षेपशक्तिप्राधान्येनमायाशब्दितायांमूलप्रकृतावेवचित्प्रतिबिंबईश्वरः ॥
आवरणशक्तिप्राधान्येनाविद्यादिशब्दितायांतस्यामेवचित्प्रतिबिंबोजीवइतितृतीयं ॥३॥
अविद्यायांचित्प्रतिबिंबईश्वरः अंतःकरणेचित्प्रतिबिंबोजीवइतितुरीयम् ॥४॥ घटाका-
शजलाकाशमहाकाशमेघाकाशवत् कूटस्थजीवब्रह्मेश्वरभेदेनचैतन्यचातुर्विध्यवादि-
नांतुब्रह्माश्रितमायातमसिस्थितासुसर्वप्राणिनांधीवासनासुप्रतिबिंबितचैतन्यमीश्वरः ॥
स्थूलसूक्ष्मदेहावच्छिन्नचैतन्यस्थितेमायाकल्पितेंतःकरणेप्रतिबिंबितंचैतन्यंजीवइति-
पंचमं ॥५॥ एवंप्रतिबिंबेश्वरवादिनां पंचपक्षाः । षष्ठेबिंबेश्वरवादिमतेतुजीवोपाधि-
नांतःकरणादिनाऽवच्छिन्नंचैतन्यमीश्वरोबिंबभूतः । अज्ञानेनतत्प्रतिबिंबोजीवस्तत्रा-
प्यज्ञानपरिणामभूतमन्तःकरणं जीवस्यविशेषाभिव्यक्तिस्थानमित्याहुः " एवमन्ये-
पिविशेषाग्रंथेषुदृश्यंतेइत्थमवच्छेदाभासपक्षयोरप्यवांतरपक्षबाहुल्यंद्रष्टव्यं तथासति
तन्मतेजीवेश्वरवस्तुनोरनेकरूपत्वंप्रतारणामात्रत्वंवाआपद्यतएव **स्वानुरोधित्वमिति**
अतोहिमध्यमःपक्षः शुद्धाद्वैतानुरोधतइत्यादिषुमार्तंडादिभागेषुएतत्स्फुटं एवमस्यश्लो-
कस्यखंडनेब्रह्मणःसार्वात्म्येपिकार्याणामसांकर्यंतस्यविरुद्धधर्माश्रयत्वं इच्छायाः सर्व-
हेतुत्वेव्यवस्थासामंजस्यं अधिकारिविशेषबोधानुरोधात्क्वचिद्भेदाभेदपक्षस्यशुद्धाद्वै-
तसिद्धांताविरोधतः कथनेप्यदूषणंचसिद्धं ॥ इतिदशमश्लोकखंडनं ॥

योपिशुद्धाद्वैतमार्त्तंडोक्तंशाक्तानांतुमतेब्रम्हविश्वोपादानमेवहि॥
निमित्तकारणंशक्तिर्विकारित्वभयादत्तइत्यादिनाशाक्तमतंतत्खं-
डनंचोपन्यस्यतत्रभ्रमइत्यादिनानत्रमायांतुप्रकृतिमित्यादिश्रुति-
मार्कंडेयपुराणाद्यनालोचनमूलकंतद्दूर्णनाभावकथनमित्यादि-
दोषउद्भावितः सोपिमायांत्वित्यादिश्रुतिमार्कंडेयपुराणाद्यभि-
प्रायमबुध्वैव नहितत्रशक्तिःकाचिदतिरिक्तास्वतंत्राप्रतिपादि-
ता किंतुब्रम्हणःसामर्थ्यरूपैवसाचब्रम्हणोऽभिन्नाअतएवतत्रा-
पितस्याईश्वरीयत्वेनैवमायिनंतुमहेश्वरंमहामायाहरेश्चैतत्तया-
संमोह्यतेजगत् यादेवीसर्वभूतेषुविष्णुमायेतिशब्दिता त्वंवैष्ण-
वीशक्तिरनंतवीर्य्येत्यादिनावर्णनंकृतं व्यासैश्चब्रम्हभिन्नस्यज-
गत्कारणत्वंनिराकृतं॥नचव्यासैःसांख्यमतसिद्धायाःप्रकृतेःप्रधा-
नपदवाच्यायाजगत्कारणत्वंनिराकृतं नशाक्तमतसिध्दायाःश-
क्तेरितिवाच्यं यदिशाक्तानांमतेशक्तिपदप्रतिपाद्यंशुद्धंब्रम्हैवत-
दानविरोधोयदितद्भिन्नंकिंचित्तदाब्रम्हणएवोपादानत्वंतस्यैवनि-
मित्तत्वंचप्रतिपादयद्भिर्व्यासैरधिष्टात्रीश्वराणामपिकारणत्वं"प-
त्युरसामंजस्या" दित्यादिसूत्रैःखंडयद्भिःकथंनखंडितं विष्णवा-
दिपदानांचशुद्धब्रम्हवाचकत्वंनतुकिंचिद्विशिष्टवाचकत्वं तथा-
सत्युपाधेर्विशेषणरूपस्यनित्यत्वेसदेवेत्यादिश्रुतिविरोधस्तत्रसजा-
तीयविजातीयव्यावृत्तेरुक्तःस्यात् अनित्यत्वेचविष्णवादीनांजी-
वतुल्यत्वापत्तिः तस्माद्यदिचेत्याद्युक्तदृष्टांतदार्ष्टांतिकयोरसंग-
तिः यदुक्तं ( मुक्तिस्तुनिष्कृष्टतत्स्वरूपात्मकतत्पदार्थेनत्वंपदा-
र्थस्याभेदज्ञाना ) दिति तदपिनसाधीयः तादृशाभेदज्ञानं-
मात्रस्यमुक्तिहेतुत्वेश्रुताभेदप्रतिपादकशास्त्राणांसर्वेषामेवमोक्ष-

प्रसंगः नचाभेदसाक्षात्कारस्यैव मोक्षहेतुत्वं नाभेदपरोक्षज्ञानस्य-
शाब्दरूपस्येति वाच्यं शब्दादपरोक्षज्ञानासंभवात् तथासति श्र-
वणादीनां तत्र हेतुत्वानुपपत्त्या दर्शनोद्देशेन श्रवणाद्यनुष्ठानं निरर्थ-
कं स्यात् तस्मादीश्वरज्ञानेन तद्भक्त्या च मोक्ष इति प्रपंचितं भाष्य-
प्रकाशादिषु ग्रंथगौरवभयान्नेह लिख्यते ॥ यत्तु ( विष्णुभागव-
तं न व्यासकृतं किंतु देवीभागवतमिति मन्यमानांस्तान्प्रति विष्णुभा-
गवतविरोधोद्भावनं तूपहासावह ) मित्याद्युक्तं तदप्यविचारित-
रमणीयं नहि वादिमतसिद्धेनैव प्रमाणेन तदसंमतं साधनीयं तत्स-
म्मतं वा निराकरणीयमिति नियमः नाप्रत्यक्षं प्रमाणमिति वदंतं ना-
स्तिकं प्रत्यनुमानेनेश्वरसिद्धिप्रदर्शनमपि हास्यास्पदं स्यात् वस्तुत-
स्तु विष्णुभागवतं नाष्टादशपुराणांतर्गतं न च व्यासप्रणीतमित्येव-
हास्यास्पदं सर्वसंमताष्टादशपुराणांतर्गतपद्मपुराणे तन्माहात्म्यस्य
सम्यक्तया प्रतिपादितत्वात् व्यासप्रणीतसूत्रसंमतार्थस्य तत्रैव प्र-
तिपादितत्वात्तदेव व्यासकृतमिति निश्चीयते व्यासैर्ब्रह्मव्यतिरि-
क्तस्य जगत्कारणत्वं निषिद्धमतस्तत्तत्प्रतिपादकं तु व्यासमतविरु-
द्धत्वादुपेक्षणीयमेव किंच यदि तन्मतसिद्धस्यैव प्रमाणस्य विरोध-
स्तं प्रत्युद्भावनीय इत्येव नियमस्तदा बौद्धसिद्धस्य प्रमाणस्य तन्मते-
विरोधाभावात्तन्मतं सर्वसंमतं कुतो न स्यात् यदि च तन्मतस्य तत्सं-
मतप्रमाणविरुद्धत्वाभावेपि वेदविरुद्धत्वान्न शिष्टोपादेयत्वमि-
त्युच्यते तदा शक्तेर्निमित्तकारणत्वं किं वेदसंमतं येन तन्मतमुपादे-
यं स्यात् ॥

## टीका

सहस्राक्षे साकारध्यानत इत्येकादशश्लोकं सव्याख्यानं योपि शुद्धाद्वैतेत्यादिना-
ऽलमत्यावेशेनेत्यंतेन खंडयिष्यंतः प्रथमं यत्तु शाक्तानामित्यादिमनुस्मृ यादि चेत्यंतं-

भागंदूषयंति **योऽपिशुद्धेत्यादिना उपादेयंस्यादित्यंतेन** अयंभावः शुद्धाद्वै-
तमार्तंडे शांकरशैवभास्करभैक्षवादीनांबहूनांमतानांखंडितत्वेपिस्वमतातिरिक्तंशैवादि
मतं तेनशैवसुधाकराख्यग्रंथनिर्माणतोबहुतरदुराग्रहरूपतदनुरूपाचरणतश्च महा
शैवंमन्यतामनन्यसामान्यामुपन्यस्यताप्यनुद्धृत्ययच्छाक्तमतमात्रमुद्धर्तुमत्रप्रयत्यते
तेननिश्चीयते अंतःशाक्तएवायमिति तंपरिचितवतांकिंवदंतीयथार्थैवेति ॥ स्वस्य-
भाष्यस्थ्यप्रदर्शनंतुसंगोपनमात्रफलकं अनुवादेऋग्वेदस्थदेवीसूक्तवाक्यं अहमेवस्व-
यमिदंवदामीत्यादिदेव्याःसमुद्रशायिविष्णुजन्यताबोधनेनतन्मतबाधकंमार्तंडे सप्रपंचं-
विवृतंतदत्रयौत्यान्नैवोपात्तं नास्तिशक्तेरित्यस्यपूर्वार्द्धंसर्वौपनिषदोयाहिब्रह्मतत्वनिरू-
पिकाइतिनेहानूदितं ब्रह्मतत्त्वनिरूपिकासुसर्वासूपनिषत्सुत्वदभिमतरीतिकशक्तेर्वर्णन-
मपिनास्ति कुतस्तरांतासुब्रह्मणोमृदादिवदुपादानत्त्वभान्नंतस्याएवस्यात्तंत्र्येणकर्तृत्वंचे-
ति एवंकारिकाभिप्रायेसत्यपियत्मायांतुप्रकृतिमित्यादिश्रुतिमार्कंडेयपुराणाद्यनालोच-

---

## सहस्राक्ष.

साकारध्यानतोध्येयं ध्यातारः शास्त्रतत्पराः ॥ प्र
च्छन्त्युपाधियोगाद्यद्वदते साकृतिश्चितिः ॥ ११ ॥

यत्तु शक्तानांतुमतेब्रह्मविश्वोपादानमेवहि निमित्तकारणंशक्तिर्विकारित्वभयादतइति शाक्त
मतमुपन्यस्य तत्रात्मनोविकारित्वं श्रुतिशास्त्रविरोधिहि प्रकृतिर्ह्यस्योपादानमाधारःपुरुषःपरः
सतोऽभिव्यञ्जकःकालोब्रह्मतत्त्रितयंत्वहम् इतिभागवतेपद्यउपादानत्वमीरितम् तद्विरुध्येतममतु-
ब्रह्मतोनपृथक्त्वसा इति तन्मते भागवतविरोधं स्वमतेप्रकृतेरीशादभिन्नत्वेन तदभावं चोपन्यस्य
शङ्कराचार्यदुर्वासोवाक्यविरोधमुक्त्वा नास्तिशक्तेर्वर्णनंहिकारणत्वंतुदूरतः व्यासैस्तुप्रकृतेःसर्व-
कारणत्वंतिरस्कृतम् ब्रह्मणःसमवायित्वनिमित्तत्वेनिरूपिते इत्युक्तं ॥ तत्रब्रूमः ॥ मायांतुप्रकृति-
मित्यादिश्रुतिमार्कण्डेयपुराणाद्यनालोचनमूलकं तद्वर्णनाभावकथनम् ॥ व्यासानां तुसाङ्ख्य-
सम्मतप्रधानहेतुवादखण्डने तात्पर्यं ॥ मायायायथा हेतुत्वं तथोक्तमस्माभिस्तृतीयश्लोके॥ यदितु
शाक्तैःशक्तिशब्देन मायोच्येत ततोऽतिरिक्तं तत्वं नस्वीक्रियेत तदा स्यादेवदोषः ॥ यदितु स्मा-
र्तरीत्या विष्ण्वादिशब्दैरिव शक्तिशब्देनापिकेनचिदुपाधिना विशिष्टाचितिरेवोच्येत उपादानत्वे-
तु विवर्तोपादानत्वम् आकारस्तु ध्यानार्थोध्यानेन ध्येयमात्रप्राप्तिर्मुक्तिस्तुनिष्कृष्टतत्स्वरूपात्मक-
तत्पदार्थेन त्वम्पदार्थस्याभेदज्ञानात्तर्हि न दोष इत्याह ॥ साकारेति ॥ परंतु दुर्वासःशङ्कराचा
र्यवाक्यविरोधेन तेषां हानिर्भवति नवेति ते प्रष्टव्याः ॥ विष्णुभगवतं नव्यासकृतं किन्तु देवी-
भागवतमिति मन्यमानांस्तान्प्रति विष्णुभागवतविरोधोद्भावनन्तुउपहासावहम् ॥ नन्वेवंबौद्धादी-
नामपीश्वरप्राप्तिः स्यादतआह ॥ शास्त्रतत्पराः ॥ शास्त्रं वेदस्तन्मूलकमनुस्मृत्यादिच ॥४२ ॥

नमूलकं तद्वर्णनाभावकथनम् इत्युक्तं तन्मार्तंडानावलोकित्वामोहनार्थं मायांत्विति-श्रुतेर्दैवीपरत्वेतस्याएवोपादानत्वं ब्रह्मणएवनिमित्तत्वंचान्ग्वेतेतिसुतरांतन्मतभंगप्रसं-गः वस्तुतस्तुप्रकृतेर्भगवच्छक्तित्वविधायिकासा नचयच्छद्वयोगप्राथम्यमेतद्दुद्देश्यलक्ष-णमित्यस्यविरोधः तस्यप्रायिकत्वात् अन्यथामायिनंतुमहेश्वरमित्यत्रापिविरोधापत्तेः विस्तरस्तुदर्शितः तृतीयतुरीयश्लोकखंडने आत्मनोविकारित्वंश्रुतिशास्त्रविरोधीतिमा-र्तंडयदुक्तंतदपिनसमाहितं मार्कंडेयपुराणेतुनोक्तशाक्तमतगंधस्यापिसंबंधः तत्रयद्यो-गिभिर्भवभयार्तिविनाशयोग्यमासाद्यवंदितमतीवविविक्तचित्तैः तद्वः पुनातुहरिपादसरो-जयुग्ममाविर्भवत्क्रमविलंघितभूर्भुवःस्वः ॥ पायात्सवःसकलकल्मषभेददक्षःक्षीरोद-कुक्षिफणिभोगनिविष्टमूर्तिः ॥ श्वासावधूतसलिलोत्कणिकाकरालःसिंधुःप्रनृत्यमि-वयस्यकरोतिसंगात् ॥ नारायणंनमस्कृत्येत्यारंभात्प्रभृत्यासमाप्तिब्रह्मवादएवधर्मादि-परिकरसहितःश्रुतिसंमतोनिरूप्यते ॥ यच्चतत्रैकाशीतितमाध्यायात्प्रभृति त्रयोद-शाध्यायैर्दैवीमाहात्म्यंनिरूप्यते तदपिशक्त्यंशदुर्गारूपस्यभगवतएवमाहात्म्यं ॥ दुर्गास्वरूपसंग्रहस्तुप्रमवेदांतचिंतामणौ ॥ ( प्रक० १२ श्लो० ३२ ) गुणात्मकम-चिद्रूपंप्रकृतिःसृष्टिकालिकं ॥ शक्तिप्रकृत्योर्दुर्गातुविभूतिःकार्यमिष्यते॥ रत्यैविभित्सुना सर्वास्तिरोभाव्यापितेनताः ॥ तदंशास्त्वबिभूतिश्योदत्ताकेचनकेचन ॥ ३३ ॥ आ-द्यायामरशक्तीनामंशान्सानिर्मितापुरा ॥ महिषासुरनाशायेत्यस्यास्तच्छक्तिकार्यता ॥ ३४ ॥ मुख्यत्वेनगुणाश्चांशास्त्रिगुणोपाधिधारिणाम् ॥ त्रयाणामागतातत्रेत्यस्याःप्र-कृतिकार्यता ॥ ३५ ॥ कार्य्यांशिकार्यरूपायांशक्तीनांप्रकृतेरपि ॥ ततोऽस्या-मुपचर्य्यंतेमाहात्म्यंख्यायतेक्वचित् ॥ ३६ ॥ उक्तंद्वितीयेध्यायेतत्सप्तशत्याःस-माहितः ॥ प्रथमाध्यायवृत्तान्तस्तट्टीकायांमयापुनरितितत्रप्रकृतेःप्रथमकार्यत्वं-तस्याअपिमायापदाभिधेयत्वंब्रह्मरूपत्वंतदीयसत्त्वादिगुणयोगात्परस्यविष्ण्वादिनाम-धारणंचश्रीभागवतेद्वितीयप्रभवद्बृहत् कालवृत्यातुमायायां प्रकृतिर्यस्योपादानंसत्त्वं-रजस्तमइतिप्रकृतेर्गुणास्तैरित्यादौबहुस्थलेषुविष्णुपुराणादौचसुप्रसिद्धंश्वेताश्वतरमै-त्रायणीयादिश्रुतिष्वपितदनुरोधात्तथासिध्यति दुर्गामूर्तेःप्रकृतिरूपत्वंतु विष्ण्वादी-नांसत्त्वाद्युपाधिकानांत्रयाणामेवतेजसःशक्तिरूपस्यतदाविर्भावार्थंमुख्यतयैकीभावात् स्पष्टंचेदंसप्तशतीद्वितीयाध्याये ( श्लो० ९ ) ततोतिकोपपूर्णस्यचक्रिणोवदनात्त-तः ॥ निश्चक्रामप्रमहत्तेजोब्रह्मणःशंकरस्यचेत्यादिसंदर्भेअतएवसर्वस्याद्यामहालक्ष्मी-स्त्रिगुणापरमेश्वरीतिरहस्यादिषुतत्रतत्रतस्यास्त्रैगुण्यंभण्यते। सर्वशक्तिनाभगवताक्रीडा-र्थंतत्तत्कार्येषुसकलस्वशक्त्यंतरतिरस्करणपुरःसरंपरिच्छिन्नतत्तच्छक्त्यंशानांस्थाप-नाद्ब्राह्म्यादिशक्तयोपिवस्तुतोभगवच्छक्तयएव अतएवश्रीभागवतादिषुविश्लिष्टशक्तिर्ब-हुधेवभासीत्यादिवचनानि तस्माच्चत्र ( श्लो० १० ) अन्येषांचैवदेवानांशक्रा-दीनांशरीरतः निर्गतंसुमहत्तेजस्तच्चैक्यंसमगच्छतेत्यादिनादेवशक्तीनामपितस्यामेको-

भावस्याख्यानेपिभगवच्छक्तित्वंसुस्फुटं अतएवतत्रप्रथमाध्याये ( श्लो० ४१ ) तन्मात्रविस्मयःकार्योयोगनिद्राजगत्पतेः ॥ महामायाहरेश्चैततया संमोह्यतेजगदिति- ततःसुरथेनतदुद्भवादिप्रकारेपृष्टे ( श्लो० ४७ ) नित्यैवसाजगन्मूर्तिस्तयासर्वमिदंतत- मित्यादिना जगत्परिणामिभगवदंशप्रकृतेः सर्वव्यापकभगवच्छक्तेर्नित्यत्वंभगवदि- च्छयादुर्गादिरूपेणतदाविर्भावनंचोक्तं ( श्लो० ४९ ) योगनिद्रांयदाविष्णुः ( श्लो० ५३ ) निद्रांभगवतींविष्णोः ( श्लो० ५४ ) सुधात्वमक्षरेनित्येत्रिधामात्रात्मि- कास्थितेत्यादौभगवच्छक्तित्वमुक्तंतेन ( श्लो० ५६ ) त्वयैतद्धार्यतेसर्वमित्या- दौत्वयेतिकरणेतृतीयाअतोनुपदं ( श्लो० ५७ ) विसृष्टौसृष्टिरूपात्वंस्थितिरूपा- चपालने ॥ तथासंहृतिरूपांतेजगतोऽस्यजगन्मयइतिसृष्ट्यादिशक्तितांवक्ति जग- न्मयेहरौ अन्यथाऽटित्वान्ङीप्स्यात्ततः ( श्लो० ५९ ) प्रकृतिस्त्वंचसर्वस्यगुण- त्रयविभाविनीतिप्रकृतित्वमुक्त्वा ( श्लो० ६३ ) यच्चकिंचित्क्वचिद्वस्तुसदसद्वाऽ- खिलात्मके ॥ तस्यसर्वस्ययाशक्तिःसात्वंकिंस्तूयसेतदेतिपुनःशक्तितामुक्त्वाविष्णुःशरी- रग्रहणमितिप्रकृतिगुणोपाधिकत्वाभिप्रायेणवर्णयित्वानारायणवपुषोबहिर्भूतायायद्द- र्शनंनिरूपितंतत्समुद्रशायिनस्तस्मात्तन्महिमवर्धनेच्छयातथाकारितवतस्तदानींतस्या- उद्भवरूपं अतएवऋग्वेदे (अष्टक ८ अध्याय ७ व० ११ ऋ० ५) "अहमे- वस्वयमिदंवदामिजुष्टंदेवेभिरुतमानुषेभिः यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमे- धां " इतिरुद्रादिनिर्माणमुक्त्वानाभिपद्मजस्यब्रह्मणः कथंत्वयानिर्माणमित्याकांक्षा- यांनारायणशक्तित्वात्तदभिन्नयामयैवसम्प्रसूतोमत्कारणंचहरिरेवेतिदेव्योच्यते " अ- हंसुवेपितरमस्यमूर्द्धन्ममयोनिरप्स्वंतःसमुद्रे " इति अत्रास्येतिउग्रःशिवःपरामृश्य- ते " अहंरुद्रायधनुरातनोमि " तिवाक्यांतराच्चेत्यन्यदेतत् तस्याभगवच्छक्ति- त्वंतुतत्रपंचमाध्याये ( श्लो० ६ ) विष्णुमायांप्रतुष्टुवुः ( श्लो० १२ ) विष्णुमाये- तिशब्दिता एकादशाध्याये ( श्लो० ४ ) त्वंवैष्णवीशक्तिरनंतवीर्या एवमादा- वाम्रेडितमेव ॥ एवंदुर्गायाभगवच्छक्तित्वंतदाज्ञयाविर्भावादिकंचनारदपंचरात्रप्र- थमरात्रेद्वादशाध्याये पार्वत्यैवोच्यते ( श्लो० ५७ ) तवाज्ञयाचदेवानामावि- र्भूताचतेजसि ॥ निहत्यदैत्यान् देवारीन्दत्वाराज्यंसुरायच ॥ ५७ ॥ तत्प- श्चाद्दक्षकन्याहमधुनापार्वतीहरे ॥ तवाज्ञयाहरक्रोडेत्वद्भक्ताप्रतिजन्मनि ॥ ५८ ॥ नारायणप्रियाशश्वत्तेननारायणीश्रुतौ ॥ विष्णोरहंपराशक्तिर्विष्णुमायाचवैष्णवी ॥ ५९ ॥ अनन्तकोटिब्रह्माण्डंमयासंमोहितंसदा ॥ विदुषांरसनाग्रेचप्रत्यक्षंहिसरस्वती ॥ ६० ॥ महाविष्णोश्चमाताहंविश्वानियस्यलोमसु ॥ रासेश्वरीचसर्वाद्यासर्वश- क्तिस्वरूपिणीति एतेनमार्कंडेयपुराणोक्तंप्रायःसर्वमप्यनुसंहितं अतोभगवच्छक्ति- त्वात्तद्रूपविशेषत्वाच्चदेवीतुमान्यैवकिंतुवेदतदनुकूलबहुतरशास्त्रविरुद्धं शाक्तंमतमेव- मुमुक्षुभिरुपेक्षणीयं पंचमकारादितत्साधनेषुवेदविरोधस्यसुबोधत्वात् विस्तरस्तु निबं-

धमहस्तादिषुममचंद्रोदयादौचावधेयः यच्चव्यासानामित्यादिश्लोकइत्यंतं तन्नउक्त-
पूर्वादिभिर्मार्कंडेयादिवचनैस्तस्याःप्रकृतित्वेत्रिगुणात्मकत्वेसिद्धेतादृशप्रकृतेःकारणत्वे-
व्यासैर्व्युदस्तेतस्यास्तथात्वमर्थादपास्तं ॥ किंचव्यासैस्तदभिमेतंब्रह्मणउपादान-
त्वमात्रंतस्याएवस्वातंत्र्येणनिमित्तत्वंचनसमर्थितं । किंतु " जन्माद्यस्य प्रकृतिश्च-
प्रतिज्ञा " इत्याद्यधिकरणेषुब्रह्मणएवोपादानत्वनिमित्तत्वंचसमर्थितमित्यर्थसिद्धंत-
न्मतदूषणं यच्चयदित्वित्यादि साकारेतोत्यंतं तत्तुच्छं शाक्तैर्निर्विशेषचितेरुपाधि-
वादस्यचानंगीकारात् उपादानत्वमेवतैस्तस्यानोच्यते क्वविवर्तोपादानत्वकथामुक्ति-
श्चतेषांश्रीनग्नरावास्यादिरूपावांतरमतभेदाद्द्विविधाऽन्यथैवातस्तन्मततत्वाज्ञानमूलकम-
कांडतांडवमेतत् ॥ विष्ण्वादिरूपाणिचशुद्धब्रह्मणएवलीलावतारा लीलयातत्प्रकृ-
तिगुणयोगवंतोनतुत्वद्रीत्यानिर्विशेषचितेराकारप्रत्यायकमिथ्योपाधिभूतानितानि ॥
उपाधेर्नित्यत्वेमिथ्यात्वानुपपत्त्याऽद्वैतस्यसदेवेत्यादिश्रुतीनांचबाधःतदनित्यत्वेकल्प-
कांतराभावादनुपहितचैतन्यस्यैवकल्पकत्वापत्त्यानिर्विशेषत्वभंगः विष्ण्वादीनांजीव-
तौल्यं जीववत्तेषामुपाधिध्वंसकसाधनानामश्रवणात् तेषामनिर्मोक्षाज्जीवतआधम्यं-
चप्रसज्येत ॥ निर्मोक्षेपुनःसर्गाद्यसंभवोन्यथापुनःपुनर्विष्ण्वंतरादिकल्पना ॥ तन्नि-
त्यताबोधकश्रुत्यादिविरोधोजीवस्य " नजायतेम्रियतेवा । " ( अ०२ पा० ३
सू० १७ ) " नात्माऽश्रुतेः " इत्यादिषुसिद्धेनित्यत्वेपितेषामनित्यत्वादाधम्यं-
चतदवस्थमितिदिक् ॥ तत्वमसीत्यादिवाक्यार्थज्ञानादेवमुक्तिरितितुश्रीमदाचार्यच-
रणैःश्रीपुरुषोत्तमचरणैश्चतत्रतत्रविस्तरतोनिरस्तं ॥ उपाधियोगाच्चितेःसाकृतित्वघ-
टनातुविस्तरान्निराकृताभाक् ॥ अतोब्रह्मणोवस्तुतः साकारत्वात्तत्ध्यानतोध्येयं-
तदेवशास्त्रतत्परागच्छंतीत्येतत्त्ववत्तुसंमतं ॥ दुर्वासःकृतस्यलळितास्तवरत्नस्यशाक्तै-
रत्यादरात्तत्रत्यस्य " पवनमयिपावकमयिक्षोणीमयिगगनमयिकृपीटमयि ॥ रवि-
मयिशशिमयिदिङ्मयिसमयमयि प्राणमयिशिवेपाहि " इतिसार्वात्म्यबोधकवा-
क्यस्य शंकराचार्यकृतसुंदरलहर्याअपितथात्वात्तैस्तस्याव्याख्यानाच्च तत्रत्यस्य-
" मरुत्त्वं व्योमत्वं महदसिमरुत्सारथिरसित्वमापस्त्वंभूमिस्त्वयिपरिणतायांनहि-
परं ॥ त्वमेवस्वात्मानंपरिणमयितुंविश्ववपुषाचिदानंदाकारं शिवयुवतिभावेनविभृ-
षे " इतिपरिणामबोधकवाक्यस्यचकेवलनिमित्तत्ववादेविरोधतोहानिःस्फुटैव शं-
कराचार्याः षण्मतप्रवर्तकदक्षिणमार्गस्तत्संमतएवातएवतदनुकूलस्तोत्रंनिर्मितवंतइतिन
सिद्धेश्चतेनपरंत्वित्यादिनिरस्तं यच्चविष्णुभागवतमित्यादि अबुध्वोद्धानरूपत्वात् तदे-
वउपहासावहंभागवतंमहापुराणेष्वष्टादशसुपंचमंदेवीपुराणंचोपपुराणविशेषइतिवैदि-
काः एतद्विपरीतंशाक्ताः वादेबीजंतु प्रणिपत्याशिवांदेवींशिवंभागवतंतथा ॥ पुरा-
णंसंप्रवक्ष्यामीतिदेवीपुराणस्थंवाक्यं तत्रभागवतमितिपुराणविशेषणंशाक्तामन्यंते शि
वविशेषणंतुवैष्णवाः अतस्तयोर्महापुराणोपपुराणभावएववादोनतुअन्यतरंनव्यासकृ-

त्वमितिप्राक्तनः कोपिवैदिकोवाशाक्तोवाप्रामाणिकोलिखति उभयप्रामाण्यस्वीकारादे-
वास्माकंधर्मशास्त्रनिबंधेषुहेमाद्रिकृत्यकल्पतरुनिर्णयसिंध्वादिषु उभयवचनानिसंगृह्यंते
शाक्तग्रंथेष्वपिश्रीभागवतदशमस्कंधजन्मप्रकरणस्थानि गच्छदेविव्रजंभद्रे दुर्गेतिभ-
द्रकालीतिएवमादिवाक्यानि ( अ०२९श्लो०१ ) योगमायामुपाश्रितः ( अ०३४श्लो०
२ ) आनर्चुरर्हणैर्भक्त्यादेवींचनृपतेंबिकां ( अ०५६श्लो३५ । ३६ ) उपतस्थुर्महामा-
यांदुर्गांकृष्णोपलब्धये ॥ तेषांतुदेव्युपस्थानात्प्रत्यादिष्टाशिषासच प्रादुर्बभूवसिद्धार्थः-
सदारोहर्षयन्हरिः इत्यादीनिस्थलांतरवाक्यानिचमानतयोपन्यस्यते महापुराणत्वाग्र-
होपिदेवीपुराणविषयकएव देवीभागवतंत्वतितराम्अर्वाचीनतमं अतएवचास्माकंनापि-
शाक्तानांप्राचाम्आचारादिबोधकग्रंथेषुक्वापितद्वचनमस्ति देवीभागवतंत्विदानींवर्तमान-
विक्रमशकस्यैकान्नविंशेशतकेकेनचित्सप्तशत्यागुप्तवत्याख्यां व्याख्यांविहितवताभा
स्कररायाख्येनकाश्यांगुप्ततयानिर्मातुमारब्धंतदसमाप्यैव सन्नशरीरंसमापितवान् त-
तःकाशीनाथभट्टइतिप्रसिद्धेनतन्मित्रेणावशिष्टतद्भागंयथामतिनिर्माय निर्मापयतामनाश्र-
यता तेननारायणभट्टवंश्यानां काश्यामग्रपूजामाप्नुवतांप्रायेणदिवाकरभट्टशर्मणां-
हस्तेतत्पुस्तकशोधनार्थं बहुशोधनार्थार्पणपुरःसरमर्पितं तैश्चयथासंभवंपरिशोधितं
तान्येवभास्करादिकरलिखितपत्रकाणितत्रसंति अतएवप्राक्तनप्रबंधेषुनक्वाप्येकमपि-
देवीभागवतवचनमुपलभ्यते किंतुकृत्यकल्पतर्वादौक्वचिद्देवीपुराणस्यैववचनानि ॥
पूर्वेषामुक्तविधविवादाभ्यासितेगायत्र्यासमारंभवृत्रासुरवधाद्यभावादेवश्रीधरस्वाम्या-
दयः यत्राधिकृत्यगायत्रीमित्यादिवचांसिस्वमतस्यभागवतत्वसाधकतयोदाहरंति ।
छलककल्पितस्यतदवसरेसत्त्वेतत्र सर्वचैतन्यरूपांतामाद्यांविद्यांचधीमहि बुद्धिंयानः
प्रचोदयात् इतिचतुर्विंशत्यक्षरत्रिचरणश्लोकेनारंभादेस्तत्कर्त्राश्रीधरस्वाम्याद्युक्त-
वचनसिद्धलक्षणस्यतत्ग्रंथेसमावेशार्थंधौर्त्यात्स्पष्टमेवकृतत्वेन तदव्यावर्तकानिताहश-
वचांसितेवृथाकिमित्युदाहरेयुः शंकराचार्यप्रभृतयःप्राञ्चःप्रसिद्धभागवतस्यैववासना-
भाष्यादीनिव्याख्यानानिकथंकुर्युः देवीभागवतव्याख्यातानीलकंठस्तुनभारतव्याख्या
ता किंत्विदानींप्रवर्तमानेविक्रमशकस्य विंशेशतकेसकथंचित्समयंजीवन्नेवकाश्यामा
सीत् तंचव्याचक्षाणंसाक्षाद्दृष्टवंतोद्यापिसंतोबहवोजीवंति चतुर्धरनीलकंठेनतुभारतप्रदी-
पेनक्वापिकल्पितपुराणग्रंथोप्याम्नातः तदानींतदभावात् किंतु प्रसिद्धश्रीभागवतस्यत-
द्व्याख्यातुः श्रीधरस्वामिनश्चानुसरणंबहुस्थलेषुकृतं प्रसिद्धश्रीभागवतदशमस्कंधस्थ-
श्रीकृष्णचरित्रेश्रौततांसमर्थयितुंवेदमंत्रानुत्धृत्य मंत्रभागवतंचतेनैवकृतं व्याख्यातंच-
स्वयमेव अपरार्कशिवतत्वविवेकादिषुबहुष्वेवप्राचीनार्वाचीनप्रामाणिकग्रंथेषुश्रीभाग-
वतस्यैवप्रामाण्यंतदीयतत्तद्वचनोपन्यासादिनानिश्चीयतेनतुतावकस्य ॥ तत्तद्ग्रंथस्थ-
तत्तत्स्थलादिप्रदर्शनपूर्वकमधिकंतुमयाश्रीभागवतशंकानिरासवादविवरणउपपादनीय-

मित्यलमिहप्रासंगिकेन अभ्युपेत्यवादेनसमाधिस्तुमूले **नहिवादिमतेत्यादिनाद-र्शितः पद्मपुराणइति** इदमुपलक्षणं तथाहिस्कांदेश्रीभागवतमाहात्म्येपरीक्षिच्छु-कसंवादोयांसौव्यासेनवर्णितः ॥ ग्रंथोष्टादशसाहस्रःसोसौभागवताभिधःपाद्मेभागव-तमाहात्म्ये श्रीभागवतकथाश्रवणायागतानांसंख्याने ( अध्याय ३ श्लो० १५ ) वेदांतानिचवेदाश्चमंत्रास्तंत्राणिसंहिताः दशसप्तपुराणानिषट्शास्त्राणितथाययुः इतित-द्भिन्नानांसप्तदशत्वोक्तिस्तस्यैवाष्टादशांतर्भूतत्वनिश्चायिका किंचनारदीयेब्राह्मादीनां-व्यासकृताष्टादशपुराणानामनुक्रमतोनिरूपणे मरीचेशृणुवक्ष्यामिवेदव्यासेनयत्कृतं-पांडवानांतथैवचेत्यादिनाद्वादशस्कंधसारानुक्रमणिकादर्शिता साचात्रैवसंगच्छतेनता-वके एवमन्यानिमात्स्यादिवचांस्यन्यत्रवक्ष्यामः भवांस्तुश्रीभागवत्प्रामाण्यमत्रसं-दिग्धवदन् शैवसुधाकरेचदेवीभागवतस्यैवप्रामाण्यंदर्शयन्बहुस्थलेष्वत्रतद्वचांसिशै-वसुधाकरप्रथमकिरणादौचतच्चतुर्थस्कंधादिवचांसिस्वानुकूलतयाधौर्त्यादुदाहरन्ननुपा-देयवचनः ॥ शंकराचार्यैस्तदनुयायिभिर्मधुसूदनसरस्वत्यप्पय्यदीक्षितादिभिश्चस्वी-कृतंतत्प्रामाण्यंदूषयन्स्वप्रथमश्लोकोक्तरीत्याशप्तकोटिचस्वयमेवाभिनिविशतेबौद्धाद-यस्तुनिरीश्वराइतितन्मतेसाकारध्येयाभावादत्रश्लोकेनन्वेवमित्यादिशंकातत्समाधानं-चश्रीमतांसर्वत्रसर्वज्ञत्वात् ॥

एवंचास्मन्मतेवेदाःश्रीकृष्णवाक्यानिव्याससूत्राणिचैवहि ॥ स-माधिभाषाव्यासस्यप्रमाणंतच्चतुष्टयं ॥ एतद्विरुद्धंयत्सर्वंनतन्मा-नंकथंचन ॥ अतएतद्विरुद्धानितंत्राणिनप्रमाणं ननुभागवतेय-आशुहृदयग्रंथिंनिर्जिहीर्षुःपरात्मनः ॥ विधिनोपचरेद्देवंतंत्रो-क्तेनसकेशवमित्यादिनातंत्रोक्तार्चायाअपिभागवतोक्तत्वात्कथं तंत्रस्याप्रामाण्यमितिचेद्भ्रांतोसि नहिवयंसर्वस्यतंत्रस्याप्रामाण्यं ब्रूमः किंतुपूर्वोक्तमानचतुष्टयविरुद्धांशस्य विरोधेत्वनपेक्षंस्या-दसतिह्यनुमानमितिन्यायात् यत्तु ( शुद्धाद्वैतावलंबेनयाद-शंहरिपूजनंत्वत्संमतंतादृशंसक्रमंलिखित्वाखंडयिष्याम ) इ-त्युक्तं तत्तुयुक्तमेव आसुरप्रकृतिकत्वात् परंतुशुद्धाद्वैतमार्गज्ञानां-र्थंतन्मार्गविदउपास्यंतां विनाज्ञानंखंडनस्याशक्यत्वात् भावा-

नवबोधविहितस्यदोषस्यानादरणीयत्वात् ॥ उक्तंचदीधिति-
कृद्भिर्मान्यान्प्रणम्यविहितांजलिरेषभूयोभूयोविधायविनतिं-
विनिवेदयामि ॥ दूष्यंवचोममपरंनिपुणंविभाव्यभावावबो-
धविहितोनदुनोतिदोषइति ननुवेदादिषुचतुर्षुयस्यवर्णनंनास्ति
तद्विरुद्धंचयत्तन्नप्रमाणमित्युक्तं तत्रवेदादित्रयप्रामाण्येनास्ति
विप्रतिपत्तिःभागवतंचेच्छाक्ताअप्रमाणमितिब्रूयुस्तर्हितत्रत्वया-
किंवक्तव्यमितिचेत्तर्ह्यस्माभिस्तेप्रष्टव्याः किंभागवताप्रामा-
ण्यंभवद्भिःकेनचिद्धेतुनासाध्यतेवा केनचिच्छब्दरूपप्रमाणे-
नाध्यवसीयते वाङ्मात्रेणवानाद्यः तादृशहेतोस्तैस्त्वयावाऽनुक्त-
त्वात् किंचपरार्थानुमानस्यउचितानुपूर्वीकप्रतिज्ञादिपंचकस-
मुदायरूपन्यायप्रयोगाधीनत्वान्नप्रतिज्ञामात्रेणसाध्यसिद्धिरन्य-
थासर्वप्रमाणानामप्रामाण्यंस्यात् नापिद्वितीयस्त्वत्संमतेषुप्रमाणे-
षुवेदादिषुभागवतमप्रमाणमितिवादस्यानुपलब्धेः तृतीयोपि-
न वादिनःपरंप्रत्यनाप्तत्वेनतद्वाक्यस्याप्रमाणत्वात् एवंचवैष्णवं-
नारदीयंचतथाभागवतंशुभं ॥ गारुडंचतथापाद्मंवाराहंशुभ-
दर्शने ॥ षडेतानिपुराणानिसात्त्विकानिमतानिमइतिपद्मपुरा-
णवाक्याद्भागवतस्यसात्त्विकत्वनिश्चयाद्विष्णोश्चसत्त्वमूर्तित्वा-
द्विष्णुभागवतमेवाष्टादशपुराणांतर्गतंव्यासकृतंचेत्यध्यवसीयते॥
वैष्णवपुराणसाहचर्याच्चभागवतंवैष्णवमेवतत्रगणितं नदेवीभा-
गवतं साहचर्य्यस्याभिधानियामकत्वात् उक्तंचसंयोगोविप्र-
योगश्चसाहचर्य्यंविरोधितेत्यादिनासाहचर्य्यस्याभिधानियाम-
कत्वं अतएवरामलक्ष्मणावित्यत्रनपरशुरामस्यबलदेवस्यग्रहणं
किंतुदाशरथेरेव ॥ एतेन (तत्रविशिष्यनामनास्तिदेवीभागवत-

स्यतत्रांतभ्रांतेणसंदिग्धंचतस्यप्रामाण्यमित्यादि ) प्रलपन्क-
र्मंदिवेषोऽपास्तः ॥ स्वगुरुवाक्यमित्यादिप्रलापस्त्वस्मदभिप्राय-
मबुध्वैव ॥ यत्तुनन्वित्यादिनापुराणन्यायमीमांसाधर्मशास्त्रांग-
मिश्रिताइतियाज्ञवल्क्यमवतार्ग्यतत्रन्यायपदेनतर्कशास्त्रग्रहणं-
वाच्यं तत्रचपरमाणुकारणवादादिवेदविरुद्धंदृश्यतइत्याद्युक्तं-
तदप्यविचारविजृंभितमेव तत्रन्यायपदस्यपंचावयववाक्यपर-
त्वात् अतएवसत्पक्षप्रसरःसतांपरिमलप्रोद्बोधबद्धोत्सवोविम्ला-
नोनविमर्दनैरमृतरसप्रस्यंदमाध्वीकभूः॥ ईशस्यैषनिवेदितःपद-
युगेभृंगायमाणभ्रमन्चेतोमेरमयत्वविभ्रमनघन्यायप्रसूनांजलि-
रितिन्यायकुसुमांजलिश्लोकव्याख्यायांएषोऽनघोन्यायःसम-
स्तरूपोपपन्नलिंगप्रतिपादकवाक्यंसएवकुसुमांजलिरित्युक्तंसं-
गच्छते नतुपरमाणुकारणवादादिन्यायपदप्रतिपाद्यं ॥ अ-
न्यथातस्यधर्मस्थानत्वात्तत्खंडनमनुचितंस्यात् अतएवन्याय-
चर्चेयमीशस्यमननव्यपदेशभाक् ॥ उपासनैवक्रियतेश्रवणा-
नंतरागताइत्याद्यपितत्रैवोक्तं यत्तुकिंचेत्यादिनाप्रतिपादितं (
पुराणांतरस्यभागवताज्जघन्यत्वेत्वदीयैर्विष्णोर्नैवेद्यंनभुज्येत अ
पिदीपावलोकंमेनोपयुंज्यान्निवेदितमितिभागवतेतन्निषेधात् )
तदपिनसाधीयः तस्यत्वेवमर्थःदीपावलोकमपिनिवेदितंमेपूजा-
यांनोपयुंज्यात्निवेदितंपुनर्ननिवेदयेदित्यर्थः नतुस्वयंनोपयुं-
ज्यादित्यर्थः तत्प्रतिपादकबहुतरवाक्यसत्त्वात् अतएवत्वोपभु-
क्तस्रग्गंधवासोलंकारचर्चिताः॥उच्छिष्टभोजिनोदासास्तवमायांज-
येमहीत्यपितत्रैवोक्तं ॥ अन्यथाभक्तानांतादृशवचनंकथंस्यात्
नैवेद्यप्रशंसापिसर्वत्रप्रतिपादितासंगताभवति ॥नचउच्छिष्टभो-

जिनोदासाइत्यस्यलिङ्गादिशून्यत्वात्लिङ्गिषेधाभ्यांसहितेन-
तेनविरोधान्नविधिस्तेनकल्पयितुंशक्यतइतिवाच्यं ॥ पूर्वो-
क्तार्थेनविरोधाभावात् नचतादृशार्थेपूर्वमित्यध्याहार्य्यम-
न्यस्मैवेतिगौरवं, पूर्वनिवेदितस्यहरयेनिवेदनप्राप्त्यभावश्चेतिवा
च्यं॥त्वत्कल्पितेर्थेपित्वयमित्यध्याहारस्यकल्पनीयत्वात् परस्मै-
पदमपित्वदुक्तार्थेबाधकं प्राप्निश्चविष्वक्सेनोच्छिष्टगणपतिदृ-
ष्टतिनाज्ञस्यद्रव्याभावेनवास्यादेव ॥ नचैवंविष्णोर्निवेदननिषे-
धेपितदुपभोगेबाधकाभावेनत्वयान्यनिवेदितंभुज्यतेतिवाच्यं ॥
अनन्यभक्तानामन्यध्यानस्यान्यपूजनस्यान्यकथालापादी-
नांनिषेधेनान्यनिवेदितभोजनस्यसुतरांदूषितत्वात् दीपावलो-
कमपीत्यादिनादीपावलोकेनानुज्ञा किंतुदीपावलोकस्यतैज-
सत्वादन्यत्रतदुपयोगस्यागर्हितत्वेपिअन्ननतदुपयोगः॥ "यद्वैम-
नुरब्रवीत्तद्भेषजम्मितिश्रुत्यामनुस्मृतेरपिप्रामाण्यमस्त्येव वेदमू-
लकत्वाद्वेदापेक्षयाजघन्यत्वंतुसर्वत्रसिद्धमेव॥एतेनआस्तांताव-
दित्यादिदत्तोत्तरं ॥" यदुक्तंअस्माकंशास्त्रमात्रेपक्षपातोनान्यत्रे-
तितदप्यसत्यमेव यदिशास्त्रमात्रेपक्षपातस्तदाशास्त्रविरुद्धंराजसे-
वादिखंडनमंडनादिकंचकिमर्थमाचरितं गालिप्रदानंशिष्टग-
र्हितमितिनिश्चितंचेच्छत्वादिकंग्रंथादावेवकथंनिबद्धमित्यपि
विचारणीयं ॥

## टीका

संहस्राक्षेएतेनेत्यादिपक्षपातोनान्यत्रेत्यंतंभागंखंडयंति **एवंचास्मन्मतखंडनेत्या
दिना विचारणीयमित्यंतेन** अयंभावः अस्मद्ग्रथान्निबंधादीननालोच्यैवायं-
प्रलापः निबंधेहिश्रीमदाचार्यचरणाःवेदाःश्रीकृष्णवाक्यानिव्याससूत्राणिचैवहि स-

माधिभाषाव्यासस्यप्रमाणंतच्चतुष्टयं उत्तरंपूर्वसंदेहवारकंपरिकीर्तितं अविरुद्धंतुय-त्त्वस्यप्रमाणंतच्चनान्यथा एतद्विरुद्धंयत्सर्वनतन्मानंकथंचनेतिसाधकदशायांप्रमाण-मुक्त्वासिद्धदशायांसर्वस्यापिवाक्यजातस्यप्रामाण्यमुपपाद्य ब्रह्मवादेप्रागुक्तमेवमुख्यं-प्रमाणं धर्मेतुश्रुतिर्मन्वादिस्मृतिश्चोभयमपिप्रमाणमेवेत्याहुः ॥ द्वापरादौतुधर्म-स्यद्विपरत्वाद्द्वयंभ्रमेत्यादिना अत्रप्रथमकारिकायां चकाराज्जैमिनिसूत्राणिउत्तरंपूर्व-मित्यत्रपूर्वस्मिन्पूर्वस्मिन् जीवानांसंदेहसंभवेउत्तरोत्तरस्यतद्वारकत्वमेव चतुर्णामावि-र्भावेतेनक्रमेणाविर्भावेचहेतुतयोक्तं नतुपूर्वपूर्वस्यजघन्यत्वगंधोपि संदेहवारकत्व-मात्रोक्त्यातस्यापादनेत्वद्रीत्यात्वदाचार्यग्रंथानां उपनिषत्सूत्रादिसंदेहवारकत्वादुपनि-षदादिषु त्वदाचार्यग्रंथतोजघन्यत्वंवयोच्येत । अतउत्तरोत्तरेणसंदेहनिवृत्तौ तच्चतुष्ट-यमेकवाक्यतापन्नंप्रमाणं निगदमात्रात्संख्यालाभेप्यतएवपुनस्तच्चतुष्टयमितिप्रमाणमि-त्येकवचनंचोक्तं ॥ इतिहेतुस्तदुद्भवइत्यादिवत् ॥ अविरुद्धंत्वित्यत्रएकस्तुरवधार-

---

## सहस्राक्ष.

एतेन तन्त्रशास्त्रेणचेद्ब्रूषेतदवैदिकसंमतम् इत्युक्त्वा वेदाःश्रीकृष्णवाक्यानिव्याससूत्राणिचैवहि समाधिभाषाव्यासस्यप्रमाणंतच्चतुष्टयम् एतद्विरुद्धंयत्सर्वंतन्मानंनकथंचन इतिश्रीमन्निजाचार्यैरु-क्तंतन्त्राणिनप्रमा श्रीमदाचार्यचरणैरतएवनिरूपितम् शाक्तास्तांश्चेत्ततोब्रूयुस्तेसन्मार्गाद्बहिष्कृताः इतिसर्वेषुमार्गेषुदोषाःसन्तिततोहरिम् शुद्धाद्वैतावलम्बेनभजेतसुविनिश्चितम् इतिप्रत्युक्तम् ॥ श्रीम-द्भागवते एकादशस्कंधे यआशुहृदयग्रन्थिंनिर्जिहीर्षुःपरात्मनः विधिनोपचरेद्देवंतन्त्रोक्तेनचके-शवमित्यादिना तन्त्रानुसारेणार्चायाविहितत्वाच्च ॥ शुद्धाद्वैतावलम्बेनयादृशंहरिपूजनं त्वत्संमतं तादृशं लिखित्वा सक्रमं खण्डयिष्यामोऽनुपदम् ॥ किञ्च वेदादिषु चतुर्षु यस्य वर्णनं ना-स्ति तद्विरुद्धंच यत्तद्दोषवदिति ते संमतम् ॥ तत्र वेदादिप्रामाण्यमुभयसंमतं ॥ भागवतंचे-त्तेऽप्रमाणंब्रूयुस्तर्हि तत्र त्वं किंब्रूयाः ॥ स्वगुरुवाक्यमितिचेन्न ॥ स्वगोष्ठीमात्रे विश्वास्य-त्वात् ॥ अन्यथा तेऽपि भागवतमप्रमाणं तन्त्रंप्रमाणमिति कंचित्स्वगुरुं कृत्वाऽपि तद्वाक्येन-ब्रूयुः ॥ ननु पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः इत्याद्येव भागवतप्रामाण्ये प्रमाणमिति-चेत् ॥ तत्र मीमांसायाअतिरिक्ततयोपात्तत्वेन न्यायपदेन तर्कशास्त्रग्रहणंवाच्यं तत्रच परमा-णुवादादि वेदविरुद्धंदृश्यते तद्दिव पुराणमपि कस्मिंश्चिदंशे प्रमाणं वेदविरुद्धांशोऽप्रमाणमिति-चेत्स्यात्तर्हितादृशभागवतांशविरुद्धंचेदन्यत्र व्यासादिभिः सर्वज्ञैरिदानींतनैरदृश्यमानवेदमूल-कंप्रोक्तं स्यात्तत्कथमप्रमाणं त्वद्गुरुवाक्येनोच्यते ॥ किञ्च विष्णुभागवतस्य तत्र विशि-ष्यनामनास्ति ॥ पुराणेष्वन्तर्भावेणप्रामाण्यं कौर्मादिभिःसमम् ॥ देवीभागवतस्य तत्रा-न्तर्भावेण संदिग्धंच ॥ किञ्च पुराणान्तरस्य भागवताज्जघन्यत्वेत्वदीयैर्विष्णोर्नैवेद्यं न-

णद्वितीयःशंकानिरासेचोप्यर्थे तथाच चतुष्टयातिरिक्तस्यसकलस्पुराणेतिहासादेःका-
ष्ठ्यवस्थेत्याशंकानिरासार्थमिदमुच्यते यत्तुपुराणादिकं अस्यवेदादिप्रमाणास्याविरु-

---

भुज्येत ॥ अपिदीपावलोकमेनोपयुञ्ज्यान्निवेदितमिति भागवते तन्निषेधात् ॥ प्रकरणान्तरेऽपि
तद्विधिर्नोपलभ्यते यतो विकल्पादिकल्पनाऽवतरेत् ॥ निवेदितंतद्भक्तायदद्याद्भुञ्जीतवास्वय-
मितितु विकल्पः ॥ किञ्च नैवेद्यप्रतिपत्तिरियंभक्तालाभे स्वयमिति ॥ वाशब्दोऽनास्थायाम् ॥
एवंच भक्तः सात्वतः ॥ तथाच नैवेद्यप्रतिपत्त्यर्थंसात्वतश्चेन्नलभ्यते ग्रासमात्रंसमुद्धृत्य-
जलेऽग्नौवाविनिक्षिपेत् इति पुराणान्तरवचनार्थः सङ्गृहीतः ॥ अतएव ब्राह्मणभोजनादूर्ध्वं
भुञ्जीततैरनुज्ञातःशेषंसेष्टःसभाजितैरित्यवशिष्टभोजनं पृथग्विहितम् नतु नैवेद्यभोजनमेव ॥
अतएवाग्रे त्रयोदश्यामृत्विगादिबहुविप्रादिभोजनमनैवेद्येनैव विहितम् ॥ नैवेद्यंचातिगुणवद्-
द्यात्पुरुषतुष्टिदम् इति पुरुषतुष्टिदस्यैव नैवेद्यत्वात् ॥ अग्रे भुक्तवत्सुचसर्वेषुदीनान्धकृपणेषुच
विष्णोस्तत्प्रीणनंविद्वान्भुञ्जीतसहबन्धुभिरित्यत्र तत् दीनादिभोजनोत्तरं भोजनं विष्णोःप्रीण-
नमित्यर्थः ॥ यद्वा तदन्नाद्यं भुञ्जीत ॥ विष्णोःप्रीणनमिति क्रियाविशेषणम् नतु तच्छब्देन
नैवेद्यपरामर्शोऽतिव्यवधानात् ॥ पुरुषतुष्टिदस्य सबहुबन्धूदरपूरकत्वासम्भवाच्च ॥ किञ्चेदं सर्वं
काम्यव्रतप्रकरणस्थमिति ज्योतिष्टोमपशुसमानयोगक्षेमतामावेदयेत् ॥ उच्छिष्टभोजिनोदासा-
इत्यादितु लिङादिशून्यमिति लिङ्ङभ्यासहितेनानेन विरोधान्नविधिंकल्पयितुं प्रभवति ॥
एतेन यज्ञशिष्टाशिनःसन्तोमुच्यन्तेसर्वकिल्बिषैरित्यपिव्याख्यातम् ॥ गीतायास्तन्मते भागव-
तादनुत्कृष्टत्वात् ॥ किञ्चाऽत्रयज्ञभोजनशिष्टाशिनः यज्ञभुक्तांशातिरिक्तांशिनइत्यर्थप्रतीत्या-
न तेन तत्प्राप्तिः ॥ पुराणान्तराणि स्मृतयश्चैतद्विरोधेऽप्रमाणानीतितत्र यदि तद्विधायकं व-
चनं स्यात्तर्हि एतद्विरोधादप्रमाणमेवस्यादिति विशेषपरत्वं तद्बलान्नसम्भवति॥ श्रुतिः सूत्रं-
च तादृशंनास्त्येव यन्निवेदितोपयोगं विदध्यात् इति वैदिकान्पृष्ट्वा निश्चिनु ॥ यदि का-
चिच्छ्रुतिः कस्यां चिच्छाखायामुपलभ्यते तर्हि इत्थंनिश्चिनु ॥ सति समानविषयत्वे वि-
कल्पःविषमविषयत्वे यावानंशस्तत्राऽस्तिविहितस्तावानेवग्राह्योनेतरोऽन्यथा भागव-
तवाक्याचारितार्थ्यप्रसङ्गात् ॥ नच भागवतवाक्यएव अन्यस्मै निवेदितं दीपावलोकमपि
मे नोपयुञ्ज्यादित्यर्थइतिवाच्यम् ॥ अन्यनिवेदितस्य हरावुपयोगाप्राप्त्या निषेधानर्हत्वात् ॥
विष्णोर्निवेदननिषेधेऽपि त्वदुपभोगे बाधकाभावेन त्वयाऽन्यनिवेदितं भुज्येत ॥ अपिश-
ब्देन दीपावलोकेऽनुज्ञाप्रतीत्या तत्त्वया विष्णवे उपयोज्येत ॥ किञ्च अन्यस्मैपदाध्याहारे
मानमन्वेष्यं तच्च यदिपुराणान्तरादि तर्हि दुर्बलत्वान्नभागवतीयस्वारसिकार्थं संकोचयेत् ॥
वेदादिकंतु नास्तीत्युक्तम् ॥ दत्त्वाचमनमुच्छेषंविष्वक्सेनायकल्पयेदिति भागवतविरुद्धश्चा-
यमर्थः ॥ आस्तांतावदेतत् ॥ किञ्चपुराणान्तरस्य यद्वैमनुरब्रवीत्तद्भेषजमितिश्रुत्यादिस्तुतमनु-
स्मृतेश्चजघन्यतायां किंमानम् ॥ सन्मार्गाद्बहिष्करणन्तु स्वगुरुवाक्यैस्तैरपित्वाभ्युच्यते तं-
स्माच्छास्त्रगन्धसत्त्वे शास्त्रेणैववाच्यं ॥ गालिप्रदानन्तुशिष्टगर्हितम् ॥ एवं शैवादिमतेष्वपि ऊह-
नीयम् ॥ अस्माकंतु शास्त्रमात्रे पक्षपातोनान्यत्र ॥ ४२ ॥

द्धमेवतद्विरुद्धार्थांप्रतिपादकतयैवव्याख्यायमानंतदपिप्रमाणमेव. अन्यथाकाल्पनि-
कव्याख्यानवशात्तद्विरुद्धार्थकतयाप्रतीयमानंतुनप्रमाणमितितदर्थः एवंचपुराणादिषु
औपरिष्टिकप्रतीतिविषयाणामर्थांतराणामेवानुपादेयत्वंसिध्यतिनतुपुराणादीनां ॥ न-
नुतर्हिशाक्यस्मृत्यादिकमपिकथंचित्प्रसह्यतदविरोधतोव्याख्यायमानंप्रमाणंस्यादत-
आहुः एतद्विरुध्यमिति सर्वं चार्वाकार्हतबौद्धादिनास्तिकदर्शनं आस्तिकदर्शनतया-
व्यवह्रियमाणंकाणादादिकंचकथमपिव्याख्यानक्लेशतोपिनप्रमाणंवेदविरोधार्थमेवबु-
द्धादिप्रवृत्तेरसंदिग्धतयाश्रीवेदव्यासखंडितत्वेन, कणभक्षादिप्रवृत्तेरपितथात्वावसि-
त्याचतादृशार्थैवक्तुस्तात्पर्याभावनिश्चयात् . पुराणादिषुतुतत्रतत्रवेदाद्यनुकूलमिदमि-
तिप्रतिपदंकथनात्तदनुकूलेनैववक्तृतात्पर्येणभाव्यमप्रतारकस्वस्यतेषुसद्भिरादरणादि-
तिभावः अतोवेदविरुद्धतंत्राण्येवपंचमकारमोक्षसाधनत्वप्रतिपादकान्यप्रमाणानि त-
दविरुद्धानितुनारदपंचरात्रादीनिप्रमाणान्येव एवमर्थमुक्तकारिकाणामबुध्वापरेणकृतः
प्रलापएतावतैवनिरस्तः तथापिवैशद्यार्थंकिंचिदुच्यते यद्धिश्रीमद्भागवतइत्यादिवि-
हितत्वाच्चेत्यंततन्न एकादशस्यतृतीयाध्याये ( श्लो. ४१ ) कर्मयोगंवदतनः पुरुषोये-
नसंस्कृतः॥विधूयेहाशुकर्माणिनैष्कर्म्यंविंदतेपरमितिविदेहप्रश्नेआविर्होत्रः (श्लो० ४३)
कर्माकर्मविकर्मेतीत्यादिना विहितप्रतिषिद्धविहिताकरणानांवेदैकगम्यत्वाद्वेदस्यचेश्व-
रात्मतयादुर्ज्ञेयत्वात्तत्रसूरिमोहंत्वाभाविककर्ममोक्षायालौकिककर्मविधानरूपंस्वाभि-
प्रेतंवेदतात्पर्यंचोक्त्वा ( श्लो० ४५ ) नाचरेद्यस्तुवेदोक्तंस्वयमज्ञोऽजितेंद्रियः ॥ विकर्म-
णाह्यधर्मेणमृत्योर्मृत्युमुपैतिसः ( श्लो० ४६ ) वेदोक्तमेवकुर्वाणोनिःसंगोर्पितमीश्व-
रे । नैष्कर्म्यांलभतेसिद्धिंरोचनार्थाफलश्रुतिरितिवेदोक्तानाचरणेमोक्षाभावरूपंदुष्फलं
तांत्रिकासमुच्चितवेदोक्तमात्राचरणेनसिद्धिंचवर्णयित्वासर्वजनसाधारणंसर्वसुगमंवक्ति
( श्लो० ४७ ) यआशुहृदयग्रंथिंनिर्जिहीर्षुःपरात्मनः।विधिनोपचरेद्देवंतंत्रोक्तेनचकेशव
मित्यादिना अत्रपरमात्मनोविधिनावेदसिद्धेनकेवलपुष्टिमार्गेण तत्राशक्तौ तंत्रोक्तवि-
धिनाचउपचरेदित्यर्थः॥ वस्तुतस्तुवैदिकप्रकारेतंत्रोक्तराजोपचारादीनामपिवेदाविरुद्ध-
त्वाद्यथासंभवंसमुच्चयस्तंत्रोक्तेनचेतिचकारेणबोध्यते तथैवसत्याशुहृदयग्रंथिनिर्वारः ।
तानिचतंत्राणितंत्रंसात्वतमाचष्टनैष्कर्म्यंकर्मणांयतइत्यादिप्रथमस्कंधादिवचःसंमतानि
नारदपंचरात्रादीनि अग्रेवर्ण्यमानरीतिककेशवपूजाप्रकारस्यपंचरात्रगौतमतंत्रादिष्वेव-
दर्शनात्नतुशाक्तादिसंमतानिचतुःषष्टिः तेषुतदभावात्तेनवेदादिविरुद्धानांतेषामप्रामाण्य-
कथनेबाधकंकिमेतावतापादितंभवता एकादशेसप्तमविंशाध्यायेपिभगवदाराधनक्रि-
यायांगेपृष्टेभगवान् ( श्लो० ७ ) वैदिकस्तांत्रिकोमिश्रइतिमेत्रिविधोमखः इतित्रैविध्य-
मुक्त्वापिकेवलवैदिकेसर्वेषामनधिकारात्केवलतांत्रिकस्यपरंपरयासाधकत्वेपिसाक्षात्प-
रमफलसाधकत्वाभावाच्चैवर्णिकस्यकेवलतांत्रिकापरिग्रहं (श्लो० ८) यदास्वनिगमेनो-
क्तमित्यादिनादर्शयन् ( श्लो० १० ) उभयैरपिचस्नानमिति (श्लो० २६) उभाभ्यांवेदतं-

न्नाभ्यांमहांतूभयसिद्धयेइति उपसंहारेच (श्लो० ४९) एवंक्रियायोगपथैःपुमान्वैदिक-
तांत्रिकैः । अर्चन्नुभयतःसिद्धिमत्तोविंदत्यभीप्सितामितिसमुच्चयपक्षमेवमुख्यंमन्यते
अविरुद्धानांतंत्रादीनांप्रामाण्यं त्वाचार्यैःस्वीकृतमेव अतएवनिबंधाद्यप्रकरणे(श्लो०३)
भगवच्छास्त्रमाज्ञायेऽत्र " भगवच्छास्त्रंगीताभागवतंपंचरात्रंच " इतिव्याख्यातं-
प्रकरणसमाप्तौच अर्थोयमेवनिखिलैरपिवेदवाक्यैरामायणैःसहितभारतपंचरात्रैः। अन्यै-
श्चशास्त्रवचनैःसहतत्वसूत्रैर्निर्णीयतेसहृदयंहरिणायदैवेत्युक्तं सर्वार्थनिर्णयेचसर्वप्रा-
माण्यंविस्तरेणविचारितं वेदादिविरुद्धानामप्रामाण्यंतुकौर्मपूर्वखंडेद्वादशाध्यायेहिमा-
चलंप्रतिदेवीवाक्येषुषोडशाध्यायेदेवदारुवनस्थमुनिप्रसंगेपाद्मोत्तरखंडेगुणत्रयविवर-
णाध्यायेऽन्यत्रचपुरुषपुराणेतिहासादिषुमन्वादिस्मृतिषुचसिद्धमेवविस्तरजिज्ञासुभिर्म-
मचंद्रोदयेतंत्रकिरणेद्रष्टव्यं पूर्वतंत्रे ( अ० १ पा० ३ सू० ३ ) विरोधेत्वित्यधिकर-
णेप्ययमेवराद्धांतः शुद्धाद्वैतेत्यादिरनुपदमित्यंतस्तुप्रलापएव सकलस्यास्मत्संमतहरिसे-
वाविधेस्तेनदूषितत्वाभावात् यदिचपैशाच्यमवलंब्यदूषयिष्यसितर्ह्युद्धरिष्यामः यच्च-
वेदेत्यादिब्रूयुरित्यंतंतत्तर्किंचवेदेत्याद्युक्तिः अविरुद्धंतुयत्त्वस्येतिकारिकार्थाबोधात्.
श्रीभागवतप्रामाण्यंदेवीभागवतस्वरूपंचदिङ्मात्रेणदर्शितंप्राक् स्वगुरुवाक्यमित्यादिकं
तुवल्गनामात्रं तथाकथाया अस्माभिराश्रितत्वाभावात् यच्चननुपुराणेत्यादिसंदिग्धंचे-
त्यंतं तन्न श्रीभागवतप्रामाण्यं नसामान्यवचनमात्राद्वयंवदामः किंतूक्तचरविधैर्विशि-
ष्टवचोभिरपिस्पष्टंतत् ( अ० १ उपोद्घातप्रकरणे श्लो० ३ ) पुराणन्यायमीमांसा-
धर्मशास्त्रांगमिश्रिताः ' वेदास्थानानिविद्यानांधर्मस्यचचतुर्दशेतियाज्ञवल्क्यवचनेन्या-
यपदेन पंचावयवं वाक्यमितिसमाधिर्मूलेयक्षबलिन्यायमनुसृत्योक्तः तेनवेदार्थ-
निश्चयदार्ढ्यसंभवात् आर्षंधर्मोपदेशंचवेदशास्त्राविरोधिना यस्तर्केणानुसंधत्तेस-
धर्मंवेदनेतरइतिमनुनातर्कावश्यकतायाः स्मरणाच्चेदमविनायुक्तं वस्तुतस्तु तत्रन्या-
यपदेननीतिशास्त्रमेवमन्यामहे अतएवतत्रत्यंन्यायशब्दार्थमाहुः सर्वार्थनिर्णये श्री-
मदाचार्याः ( कारिका ८४ ) न्यायस्तुनीतिशास्त्रंहितर्कोमीमांसयायुतः ॥ मो-
हार्थान्यन्यशास्त्राणिबुद्धेःकृष्णेनतदिच्छया । देवांशैःकल्पितान्येवतदुक्तंसर्वशास्त्रेति
तत्त्वे " पुराणन्यायेत्यत्रनीतिशास्त्रमेवन्यायशब्देनोच्यते नतुलोकप्रसिद्धं यस्तर्केणा-
नुसंधत्तइति तर्कशब्दोवेदानुकूलतर्कवाचकमीमांसापरः " इत्यादिनास्वयंव्याच-
क्षते नीतिशास्त्रंचलक्षाध्यायंब्रह्मणाकृतंदंडनीत्याख्यंअयुताध्यायंशिवेनकृतंवैशाला-
क्षनामकंपंचसहस्राध्यायमिंद्रेणकृतंबाहुदंतकाख्यं त्रिसहस्राध्यायंबार्हस्पत्यमेवमा-
दिरूपंबोध्यं तच्चमहाभारते शांतिपर्वणिराजधर्मेषुएकोनषष्टितमाध्याये (श्लो०२९)
ततोध्यायसहस्राणांशतंचक्रेस्वबुद्धिजमित्यारभ्य ( श्लो० ७४ ) यैर्यैरुपायैर्लोकस्तु-
नचलेदार्यवर्त्मनः तत्सर्वंराजशार्दूलनीतिशास्त्रेभिवर्णितं इत्यंतेनआद्यंत्राह्मं संप्रमेयं-

निरुप्य ( श्लो०७८ ) दंडेननीयतेचेदंदंडंनयतिवापुनः दंडनीतिरितिख्यातात्रींल्लोकानभिवर्ततइतितन्नामनिरुच्य ( श्लो०८० ) ततस्तांभगवान्नीतिंपूर्वंजग्राहशंकरइत्यादिना ( श्लो० ८५ ) अध्यायानांसहस्रेणकाव्यः संक्षेपमब्रवीत्तच्छास्त्रममितप्रज्ञोयोगाचार्योमहायशाइत्यंतेननैशालाक्षादीनितत्रोक्तानि आग्नेयेन्यायसारंप्रवक्ष्यामीतिप्रतिज्ञायनीतिशास्त्रसारस्यैवकथनात् मत्स्यतृतीयाध्याये मीमांसान्यायविद्याचप्रमाणाष्टकसंयुतेत्यष्टप्रमाणयोगलिंगाच्च नाक्षपादप्रणीतंपुराणन्यायेत्यत्रविवक्षितंपरमाणुकारणवादेश्वरकेवलनिमित्तत्वनित्यजीवेश्वरभेदादिवेदाविरुद्धवादैस्तस्यधर्मस्थानत्वासंभवात् कौर्मेपूर्वखंडे ( अ० १२ ) नहिवेदादृतेकिंचिच्छास्त्रंब्रह्माभिधायकं धर्माभिधायकमितिकचित्पाठः ( अ० १६ ) नवेदबाह्येपुरुषेधर्मलेशोपिशंकर ॥ संगच्छतेमहादेवधर्मोवेदाद्विनिर्बभौइत्यादिवचनशतेभ्यः अंगानिवेदाश्चत्वारोमीमांसान्यायविस्तरः ॥ पुराणंधर्मशास्त्रंचविद्याएताश्चतुर्दशेतिमनुवचनेप्येवमेवसतिविस्तरपदंत्वरसतः संगच्छते । अन्यथाकाणादाद्यपेक्षयामीमांसयोःधर्मशास्त्रस्यपुराणस्यचविस्तीर्णत्वात्तावन्मात्रेतन्नसंगच्छेत "प्रतिपदमनुपदं छंदोभाषाधर्मोमीमांसान्यायस्तर्कइत्युपांगानी,, तिचरणव्यूहेपिमीमांसान्यायरूपस्तर्कइत्यर्थः उपांगानांसंख्यानियमाभावात् संख्याधिक्येविद्याधिक्यप्रसक्त्यामनुयाज्ञवल्क्यादिविरोधापातात् उक्तदिशावेदविरुद्धस्यतस्य " नैषातर्केणमतिरापनेया" इतिश्रौतानिंदयातर्काप्रतिष्टानादिसूत्रैःपरमाचार्येणखंडिततयाचशिष्टापरिग्रहविषयेतस्मिन्वेदोपांगताधर्मस्थानतयोरशक्यवचनत्वाच्च ॥ अन्यथापरिग्रहसूत्रंबाधितार्थंस्यात् अतोनिगमकल्पतरुफलभूतेबहुपुराणैःप्रशस्यमानेश्रीभागवतेवेदविरोधगंधोपिनास्त्येव अत्यक्षश्रुतिविरुद्धंतन्निर्णायकानुच्छिन्नगीतासूत्रादिविरुद्धंचयत्तंत्रादिकंदृश्येत तदपिउच्छिन्नवेदमूलकतयायदिप्रमाणंमन्येथास्तर्हिबौद्धचार्वाकादिशास्त्राण्यपितथासंभावनयाश्रद्धत्त्व ॥ तद्ग्रंथेषुसर्वज्ञश्रीकृष्णप्रसिद्धमहर्षिप्रभृतीनांनामलेखपूर्वकंतैस्तथागतधर्मोनुष्ठितउपदिष्टश्चेत्यादिस्पष्टमेवलिख्यते यदितत्तेषांसाकपोलकल्पनेतिमन्येत । तर्हिप्रत्यक्षविरुद्धतंत्रादिष्वपितुल्यं ॥ यच्चकिंचेत्याद्यवतरेदित्यंतंतदबोधात् भारतांतग्रंथाजनितस्यकृतिभारतांतव्यासमनस्तोषस्यजनकेश्रीभागवतेमुख्यतयासंदेहवारकत्वमेवब्रूमोनतुपुराणांतरेषुप्रामाण्यापादकंचजघन्यत्वं येनभगवन्नैवेद्यभक्षणादिकमप्रमाणकंस्यात् तत्रबहुभिः श्रौतस्मार्तपौराणवचनैर्भगवन्नैवेद्यस्यावश्यभक्ष्यत्वंतन्निषेधाभासवचसांसमूलानिःसंदेहाव्यवस्थाचमयासत्सिद्धांतमार्तंडेपंचमाष्टकावांतरसप्तमप्रश्नोत्तरेदर्शितेतिसुधीभिः कृपयातत्रावलोक्यएतत्कृतकोलाहलस्यकेवलविफलत्वमत्रधारणीयं तथापिदिङ्मात्रमत्रोच्यते तत्रश्रुतिःमहोपनिषदि ( पृ० २९७ ) एकएवनारायणआसीत् नब्रह्मानद्यावापृथिवीसर्वेदेवाःसर्वेपितरःसर्वेमनुष्याःविष्णुनाशितमश्नंति विष्णुनाऽऽघ्रातंजिघ्रंतिविष्णुनापीतंपिबंतिविष्णुनारसितंरसयंतितस्माद्विद्वांसोविष्णूपहृतंभ-

क्षयेयुरिति । गीतायांयत्करोषियदश्नासियज्जुहोसिददासियत् ॥ यत्तपस्यसिकौंतेयत-त्कुरुष्वमदर्पणमित्यशनीयस्य।प्यर्पणमुक्तंतच्चतैर्दत्तानप्रदायैभ्यइतितत्रोक्तन्यायात्तंस्प-ष्टवचनशतबलाच्चानानात्पूर्वमेवसिध्यति आचारप्रकाशभगवत्पूजानिरूपणेब्रह्मांडे (पृ० ३१२) पत्रंपुष्पंफलंतोयमन्नंपानीयमौषधं । अनिवेद्यनभुंजीतयदाहारा-यकल्पितम् । कौर्मेपि । अनर्पयित्वागोविंदयैर्भुक्तंधर्मवर्जितं । शुनोविष्ठासमंचान्नं-नीरंचसुरयासममिति ॥ दूषणोद्धारेचसदाचारचंद्रोदयेचेदमेवोपन्यस्तं (पृ० ३१५) तैत्तिरीयब्राह्मणे (कांड० २ प्रपा० ८ अनुवा० ८) श्रूयते " केवलाघोभव-तिकेवलादी ॥ अहमेघःस्तनयन्वर्षन्नस्मी"त्यादि । भगवतएवमेघरूपेणवृष्टिकर्तृत्वात् अग्रे " मदादित्याअधिसर्वेतं ती " तितस्यैवसूर्यातपप्रवर्तकत्वाच्चवृष्ट्यातपाभ्यांते-नैवोत्पादितमन्नंतस्माअनिवेद्यभुंजानःकेवलंपापरूपएवभवतीत्यर्थः ॥ अत्रैव " मा-मदंत्यहमद्म्यन्यान् अहं सदमृताभवामी"तिश्रावितःभगवतएवान्नात्तृभावस्तुआचा-रमाधवप्रथमाध्यायविष्णुपुराणेपिदर्शितः । विष्णुरत्तातथैवान्नंपरिणामश्चवैतथेति । सूत्रमपिभक्तिमीमांसायां (अ०२ सू०६८) " स्वयमर्पितंग्राह्यमविशेषात्" इति अ-त्रत्यमर्पदस्यार्पितपदेनग्राह्यपदेनवान्वयविचारस्तद्भाष्यादिभावश्चमार्तंडेद्रष्टव्यः॥श्रीभा-गवतेचनवमस्कंधचतुर्थाध्याये (श्लो० १९) मुकुंदलिंगालयदर्शनेदशौतद्भृत्यगात्र-स्पर्शेऽगसंगं । घ्राणंचतत्पादसरोजसौरभेश्रीमत्तुलस्यारसनांतदर्पिते॥ अत्ररसनांतदर्पि-तइतिसदानैवेद्यस्यैवभक्षणमुक्तं अतएवैतद्व्याख्यायां " तदर्पितेतस्मैनिवेदितेन्नादौ " इतिश्रीधरस्वामी एकादशस्कंधेषष्ठाध्यायउद्धवः (श्लो० ४५) शय्यासनाटनस्था-नस्नानक्रीडाशनादिषु ॥ कथंत्वांप्रियमात्मानंवयंभक्तास्त्यजेमहि॥त्वयोपभुक्तस्रग्गंध-वासोलंकारचर्चिताः॥ उच्छिष्टभोजिनोदासास्तवमायांजयेमहीतिभगवदुच्छिष्टंभोजन-स्यमायाजयसाधनत्वंवक्ति यत्तुतत्रैवैकादशाध्याये (श्लो० ४०) अमानित्वमदंभित्वं कृतस्यापरिकीर्तनं॥अपिदीपावलोकंमेनोपयुंज्यान्निवेदितमितिवाक्यमुक्तं (पृं० ३०८) तत्रनैवेद्यभक्षणविचारकारः अपिदीपावलोकमित्यत्रअपिशब्दस्यपूर्वार्द्धेनसंगतिः नै-वेद्यपरत्वेपूर्वापरग्रंथविरोधादित्याह । तस्यायमाशयः कृतस्याप्यपरिकीर्तनमि-मितियोज्यं । तेननिवेदितंदीपावलोकमपिनोपयुंज्यात् किमुतान्यदितिकैमुतिकान्या-श्रयणात् दीपावलोकमात्रनिषेधइति ॥ विपक्षेपूर्वापरग्रंथविरोधस्तुदास्येनात्मनिवेदनं-सर्वलाभोपहरणं यद्यदिष्टतमंलोकेयच्चातिप्रियमात्मनः तत्तन्निवेदयेन्मह्यंतदानंत्याय-कल्पतइतिपूर्वापरवाक्यानामसंगतिरूपः । आत्मनोप्यग्राह्यत्वापत्तेः सर्वलाभोप-हरणेनजीवनासंभवात् जीवनोपयोगिलाभभिन्नलाभस्यैवार्पणेसर्वतदुपहरणासिद्धेश्च लोकेष्टत्वातिप्रियवस्तुजातयोरपिभगवतएवनिवेदनीयत्वेनस्वस्यतदलाभापत्तेश्च तस्मा-द्दासभूतैर्मोक्षप्रतिबंधकमायांजिगीषुभिस्तन्महाप्रसादबुध्याभोक्तव्यमेव । अथैतामपि-शब्दयोजनांक्लिष्टांमन्यमानः श्रीधरस्वामी "त्विहत्वयमन्येनवानिवेदितंनस्वीकुर्यात् ॥

एतच्चसाधारणंस्थावरविषयंरागमात्रविषयं वा । भक्त्यातु ग्राह्यमेव ॥ षड्भिर्मासोपवा-
सैस्तुयत्फलंपरिकीर्तितं । विष्णोर्नैवेद्यसिक्थेनपुण्यंतद्भुंजतांकलौ ॥ त्वदिदरूपंमुखे-
नामनैवेद्यमुदरेहरेः ॥ पादोदकंचनिर्माल्यंमस्तकेयस्यसोऽच्युतइत्यादिवचनेभ्यः ।
यद्वाअन्यस्मैनिवेदितंमेनोपयुंज्यात् मह्यंननिवेदयेदित्यर्थः ॥ विष्णोर्निवेदितान्नेनयष्ट-
व्यंदेवतांतरं । पितृभ्यश्चैवतद्देयंतदानंत्यायकल्पते ॥ पितृशेषंतुयोदद्याद्धरयेपरमात्म-
ने । रेतोधाः पितरस्तस्यभवंतिक्लेशभागिनइत्यादिवचनेभ्य „ इतिव्याचख्यौ । अत्र-
स्थावरप्रतिमानैवेद्यभक्षणस्याप्यनेकत्रशास्त्रसदाचारसिद्धत्वात्प्रथमपक्षाऽरुच्याराग-
मात्रविषयंवेतिपक्षांतरमुक्तं । तदेवसारसंग्रहेभृगुसहितायांस्फुटीकृतं । उपवासव्रतानां-
चभक्तानांब्रह्मचारिणां । विष्णुतीर्थंप्रसादंचस्वीकुर्याद्भक्तियोगतः ॥ रसगंधादिलो-
भेनस्वीकुर्याद्भक्तिकंटकइति । अत्रपूर्वार्द्धेहस्तादितिशेषः तृतीयार्द्धेतु यःस्वीकुर्यात्सभ-
क्तिकंटकइत्यर्थः । तथातत्रैवविष्णुरहस्ये मंत्रपूतंहिनैवेद्यंनिषिद्धायददातियः सिद्धो-
पिपातकीनित्यमारुरुक्षुस्तुकिंपुनः ॥ निषिद्धास्तुभक्तिहीननास्तिकचांडालादयः ॥ मं-
त्रपूतमित्यनेनाऽमंत्रांनवेदितदानेतुनदोषइत्यन्ये । पुनस्तत्रैवभारते ॥ अंत्यजायतुयो-
दद्याद्विष्णुशेषंहविःस्वयं ॥ निरयंसमहाघोरंरौरवंप्राप्नुयान्नरः ॥ भगवद्भक्तिहीनस्यनै-
वेद्यंविषमुच्यते ॥ भगवद्भक्तियुक्तस्य तदेवत्वमृतंभवेत् ॥ वाराहे विष्णूच्छिष्टंनदातव्यं
नभक्तायकदाचन दाताप्रतिग्रहीताचउभौनरकभागिनौ ॥ अतोनिषेधा भक्तिहीन-
साधारणानबुद्धिरागमात्रभोजिविषयाः विधयश्च तदतिरिक्ताऽऽस्तिकचातुर्वर्णिकवि-
षयाइतिश्रीधराद्यभिमतव्यवस्था । अथमहाप्रसादबुद्धोनांभक्तानांतुरागतोभोजनेपि-
पापनाशोभवत्येव । भक्त्यालोभात्कौतुकाद्वाक्षुधासंशमनेपिवा । आकंठभक्षितंतद्धै-
पुनातिसंकलादघादित्यादिवचनेभ्यः । अनयैवाऽरुच्याचश्रीधरस्वामिना यद्वेत्यादि-
नाव्याख्यानांतरंकृतं । उचितंचैतत् । नारदपंचरात्रे चतुर्थरात्रैकादशाध्यायेद्वात्रिंशदप-
राधनिरूपणे ॥ ( श्लो० १५ ) शक्तौगौणोपचारश्च अनिवेदितभक्षणं ॥ तत्तत्कालभ-
वानांचफलादीनामनर्पणं । विनियुक्तावशिष्टस्यप्रदानंव्यंजनस्यचेतीतरदेवादिविनियु-
क्तावशिष्टवस्त्वर्पणस्याऽपराधत्वकथनात् । भागवततत्वभास्करेतु इदमेवप्रदानंव्यंजना-
दिकमितिपाठभेदेनपाठवचनत्वेनचोपन्यस्तं अथचदीपावलोकमपिमेनिवेदितं पुनर्मे-
नोपयुंज्यादितिवार्थः परस्मैपदप्रयोगस्वारस्यात् मामिस्तुमूलोक्तयुक्त्याआचारप्रका-
शादिषुनिवेदितपूर्ववस्त्राभरणादीनांपुनःपुनर्निवेदनेपिदोषाभावबोधकवचनदर्शनतोन्ना-
द्यावपितन्यायभ्रमाद्वा त्वदभिमतस्तुनैवार्थः स्वयंपदाभावात् बहुतरविधिवाक्यव्या-
कोपापाताच्चअतस्तद्भक्षणस्यविधेरेवनतुनिर्मूलाविकल्पादिकल्पना यच्चनिवेदितंत-
द्भक्तायेत्यादिआवेदयेदित्यंतंतत्तु अष्टमस्कंधषोडषाध्यायवचसांपयोव्रताख्यव्रतविशे-
षविषयकतयाप्रकृतेनुपयोगादुपेक्ष्यं तथापितद्वचसामन्यथार्थवारणायब्रूमः । तत्रपूजा-
यांप्रक्रांतायांनैवेद्यसमर्पणांतमेवोक्त्वा ( श्लो० ४१ ) निवेदितंतद्भक्तायेनिमध्येप्रतिपत्ति

मुक्त्वाऽनुपदं दत्वाचमनमर्चित्वेत्यादिनाशिष्टःपूजाप्रकारउच्यते तत्रपूजायाअसमाप्त-
त्वात्मध्येभोजनस्यानौचित्यात्पयोमात्रभक्षणनियमवतःशाल्यन्नादिभोजनस्यायोग्य-
त्वाच्च निवेदितंतद्भक्तायदद्यादिति आचमनात्पूर्वमेवहोमसमनंतरंदानंविधीयते अन्य-
त्राभक्तायदानस्यनिषेधात् जलादिप्रक्षेपस्यात्रानभिप्रेतत्वाच्च अथसर्वथास्वयमभोजने-
ऽवहेलनमित्यरुच्यापक्षांतरमुच्यतेभुंजीतवास्वयमितिनिवेदितंपयोमात्रमपिपूजादिसमा-
प्तौस्वश्रेयसेभुंजीतेत्यर्थः यदितुविकल्पंहित्वानास्थामिहवाशब्दार्थंकल्पयेथास्तर्हिप्र-
त्रैः मरौवामेरौवाभगवतिसमंवर्षतिघनइत्यादाविवसमुच्चयःसंनियोगशिष्टानांसहवाप्रवृ-
त्तिरित्यादाविवावधारणंवातदर्थः शक्योनिरूपयितुं । भगवदुपभुक्तं तत्प्रसादत-
यादत्तमितिबुध्योपयोज्यमेवेत्याशयेनपूजासमाप्तावुच्यते ( श्लो॰ ४३ ) कृत्वाशिर-
सितच्छेषामितिअतएवएकादशस्कंधेपिसप्तविंशाध्याये प्रत्यहंपूजानिरूपणे ( श्लो॰
४७) इतिशेषांमयादत्तांशिरस्याधायसादरमित्यादिभगवतोक्तं प्रकृतेप्रागुक्तनिवेदितभो-
जनंब्राह्मणभोजनोत्तरमेवनतुपूजामध्येइतिबोधनायअष्टमस्कंधेषोडशाध्याये ( श्लो॰
( ४३ ) द्यवरान्भोजयेद्विप्रान्पायसेनयथोचितं भुंजीततैरनुज्ञातःशेषंसेष्टः सभाजि-
तैरितिकथ्यते अत्रयथोचितमित्युत्तरत्रान्वेति तेनेष्टैःसकलंनिवेदितंभोक्तव्यंस्वयंतुनियम-
मानुरोधात्पयोमात्रमितिविवेकःसिध्यति अतएव ( श्लो॰ ४६ ) पयोभक्षोव्रतमिदं-
चरेद्विष्णवर्चनादृतइतिपयसएवभक्षणमुक्तं इहैकपदमवधारणं महाभाष्ये " सिद्धेश-
ब्दार्थसंबंधे " इतिवार्तिकविवरणे " अब्भक्षोवायुभक्षः " इत्यादाविवज्ञेयं
अग्रेत्रयोदश्यांमहतींपूजांनिरूपयन् ( श्लो॰ ५२ ) नैवेद्यंचातिगुणवद्दद्यात्पुरुषतु-
ष्टिदमितिवक्ति अत्रपुरुषस्यभगवतस्तुष्टिदंपुराणादिषुतत्तोषकतयोक्तमेवदद्यान्नतुमां-
सादिकमित्यर्थः हरिर्हिनिर्गुणःसाक्षात्पुरुषःप्रकृतेःपरः पुरुषंपुरुषसूक्तेनएवमादिषुभ
गवदर्थकताप्रसिद्धेः ॥ अतोनततोबंध्वादिबहूदरपूर्णस्यानुपपत्तिः तस्मात् ( श्लो॰
५६ ) भुक्तवत्सुचसर्वेषुदीनांधकृपणेषुच । विष्णोस्तत्प्रीणनंविद्वान्भुंजीतसहबंधुभिरि
त्यत्रतत्पूर्वोक्तं विष्णोःप्रीणनं प्रीतिकरणं नैवेद्यमित्येवार्थः नतुत्वदुक्तःभुक्तवत्सुभुंजी
तेतिवाक्यस्यापरिसमाप्तौमध्येवाक्यांतरप्रवेशस्यायोगात् प्रीणनाक्रियायांभोजनक्रि-
याविशेषणत्वादेरतिक्लेशाच्च • स्पष्टार्थबाधकाभावाच्च ॥ ( स्कं॰ ६ अ॰ १९ श्लो॰
२० ) उद्वास्यदेवंस्वेधाम्नितन्निवेदितमग्रतः ॥ अद्यादात्मविशुध्यर्थंसर्वकामर्द्धयेतथा
एवमन्यदापिदृश्यते ॥ रसनांतदर्पितइत्यादिस्फुटवाक्यांतरदर्शनादनिवेदितभक्षणेऽन्य-
त्रबहुप्रत्यवायश्रवणाच्चनित्यत्वसित्ध्या नाग्निष्टोमीयपशुवत्कादाचित्कत्वंसुवचं वस्तु
तस्तुअग्निष्टोमपशुरपिनकाम्यः " वसंतेवसंतेज्योतिषायजेते " तिवीप्साघटित-
विधिनानित्यत्वस्यबोधनात् शक्तस्याहिताग्नेस्तदननुष्ठानेप्रत्यवायश्रवणाच्चातोऽसंग-
तोदृष्टांतः ॥ प्रकृतेपिपयोव्रतमेवकाम्यंनैवेद्याशनंतुवचनांतरेभ्योनित्यमितिहृदयं ॥
एतेनैवउच्छिष्टभोजनइत्यादिप्रभवतीत्यंतमपास्तं प्रेताग्निहोत्राद्यधिकरणेषु " तृतीयेसं-

गच्छावहै " इत्यादिषुचमाधवेनअर्थवादमात्रेपिविधिकल्पनस्यांगीकाराच्च प्रेताग्नि-होत्राधिकरणंतु तृतीयस्यतुरीयेपादेपंचमं अत्रन्यायमालायांमाधवः धारयत्युपरिष्टा-द्धिदेवेभ्यइतिसंस्तवःविधिर्वाद्योधृतेःपित्र्येप्रोक्तायाः पूर्ववत्स्तुतिः ॥ ८ ॥ ऊर्ध्वं-विधारणंप्राप्तंसमिधोनान्यमानतः ॥ अतोहिशब्दसंत्यागादपूर्वार्थोविधीयते ॥ ९ ॥ प्रेताग्निहोत्र एवंश्रूयतेअधस्तात्समिधंधारयन्ननुद्रवेत् उपरिहिदेवेभ्योधारयति । तत्रपित्र्येहविर्होतुंहस्तेधारयन्यदामंत्रंपठति तदानींस्रुग्दंडस्याधस्तात्समिधंधारये-दितिविधीयतेतदेतद्दैविकेनोपरिधारणेनस्तूयते ॥ हिशब्देनपूर्वाधिकरणइवानुवा-वादत्वप्रतीतिरितिचेत्नैवंदैविकेहविषिस्रुग्दंडस्योपरिसमिद्धारणस्यापूर्वार्थत्वेनविधात-व्यत्वात् । अनुवादत्वगमकोहिशब्दोसंभवादुपेक्षणीयः इतिव्याचष्टे " तृतीयेसंग-च्छावहा " इतिवाजसनेयिब्राह्मणेर्थवादस्यविधायकत्वं पराशरमाधवीयोक्तं-तूपन्यसिष्यते ॥ हिनिश्चयेनमायांजयेमेतिस्वमंतभाव्यलिङः प्रयोगस्यात्रापिसत्त्वाच्च यज्ञशिष्टाशिनइतिगीतावाक्यंश्रुत्यादिषुयज्ञशब्दस्यविष्णुपरतयातन्नैवेद्याशनस्तावकं केचिद्वर्णयंति अधिकरम्यंतुतस्याग्निहोत्रपंचमहायज्ञादिश्रौतस्मार्तयज्ञशिष्टाशनप-रत्वमतोनवयंदुराग्रहंकुर्मः गीतायाभागवतादनुत्कृष्टत्वोक्तिस्त्वस्मन्मताज्ञानात् पु-राणांतराणीत्यादिकंतुपरमताज्ञानमूलकप्रलापमात्रंनिरस्तंचैतत्प्रागेव ॥ अन्यनिवे-दितस्यनिवेदनप्रसंगस्तुशैवसुधाकरादौत्वादशबहिर्मुखैःस्थापितस्यहरौतत्तद्देवांतरभ-क्तत्वस्यश्राद्धात्पूर्वंनिवेदनादिनिषेधकानामन्यविषयकवचसोचदर्शनात् अतोनिषे-धोयुक्तःअन्यनिवेदितस्यभोजनंतुधर्मप्रवृत्त्यादिबहुग्रंथधृतैः अन्यदेवस्यनैवेद्यंभुक्त्वा-चांद्रायणंचरेत् इत्यादिवचनैः प्रतिषिद्धमेवेतिनतत्प्राप्तिः ॥ दीपावलोकमपिनोप-युंज्यादित्यर्थव्यक्त्या दीपावलोकेऽनुज्ञाप्रतीतिस्तुतवैवभ्रमः तथासतित्वदभिमता-र्थेनिषेधश्चतस्यैवसिध्येत् एकादशे ( अ० २७ श्लो० ४३ ) दत्त्वाच-मनमुच्छेषंविष्वक्सेनायकल्पयेदितितुकमलाकरभट्टकृताह्निकादिधृविष्णुपूजाप्रस्ता-वेधृतैःउच्छिष्टभोजनंदासान्विष्वक्सेनादिकांस्तथा । दत्वाशेषंतुभुंजीयान्नैवेद्यंत्व-यमेवहि । योर्चयेत्केशवंनित्यंसयातिपरमांगतिमित्यादिभिर्वसिष्ठादिवचनैःसमाना-र्थकमितिनविरोधः विस्तरतोभगवत्प्रसादभक्षणस्यावश्यकत्वंनिषेधभ्रमजनकवच-नव्यवस्थापनंचमयासत्सिद्धांतमार्तंडेमागुक्तस्थलेदेवांतरनैवेद्यस्याभक्ष्यत्वादिचतद्व्य-वहिताग्रिमप्रश्नोत्तरेतत्रयथामतिसमार्थितमितिसुधीभिस्तदनुग्राह्यं पुराणांतराणांप्रामा-ण्यंमन्वादिस्मृतीनांचधर्मेप्रामाण्यंश्रीमदाचार्यचरणैर्निबंधेआद्यप्रकरणे ( श्लो १० - ११ ) द्वापरादौतुधर्मस्यद्विपरत्वाद्द्वयंप्रमा विरुद्धवचनानांचनिर्णयानांतथैवचेतिस्वी-कृतं सर्वार्थनिर्णयेचस्मृत्यादिप्रामाण्यंसुप्रपंचितं. स्मृतित्वाच्छ्रुत्यपेक्षयाजघन्यत्वंतु-पूर्वतंत्रप्रमाणाध्यायस्मृतिपादोक्तदिशास्त्येव. सर्वाविष्टनैवसर्जनवासोग्रहणादिस्मृती-नांयथायथंसंकोचाप्रामाण्ययोर्निर्णयात् ॥ तथाप्यद्यत्वेबहुशाखोच्छेदान्मन्वादिवच-

नेषुमूलश्रुतेरिदानींतनैरनुपलंभेपिनिर्मूलतायाअशक्यवचनतयाआचारात्स्मृतिमन्वि-च्छेनस्मृतेश्चश्रुतिकल्पनमितिन्यायेन असंदिग्धमन्वादिवचनैःसिद्धेऽर्थेश्रुतिकल्पनया-वयंविकल्पमेवबहामइत्यस्माकंमत्युतमन्वादिषुगौरवं स्पष्टंचेदंतत्तन्निबंधावरणभंग-योः यत्तु "यद्वैमनुरब्रवीत्तद्भेषज " मित्यायुष्मताश्रुतिपाठउपन्यस्तः सतुश्रुति गंधानाघ्राणात् वस्तुतस्तुतैत्तिरीयसंहितायांद्वितीयकांडे ( सपाठकं० २ अनुवाकं० १० ) " यद्वैकिंचमनुरवदत्तद्भेषज " मितिपाठःयद्यपिइदंवाक्यं " मानवीऋचौ-धाय्येकुर्यात् " इतिविधायतदग्रेस्तावकत्वेनास्तितत्रविकृतिरूपेसोमारौद्रेचरावति-देशतः प्राप्तासुसामिधेनीषुमध्येप्रक्षेप्यऋचौधाय्यसंज्ञकौमंत्रौ तौमानवौकर्तव्याविति-तत्प्रशंसनार्थार्थवादरूपस्यास्यस्वार्थेप्रामाण्यं अर्थवादानांस्वार्थेप्रामाण्याभावमभ्युपग-च्छद्भिर्भवादृशैरशक्यवचनमतोनानयातवमनुस्मृतिप्रामाण्यसिद्धिः तथापि तस्य-स्वार्थेप्रामाण्याभावेमनुपराशरादिस्तावबोधकानांमंत्रेतिहासपुराणादीनामपिकथंचित्स्वा-र्थेऽप्रामाण्यप्रसक्तौमन्वादिसद्भावेप्रामाण्यंव्याहन्येत तथासतितत्कृतस्मृतेरनुदयेऽयं-विधिरपिकुंठोभवेत् " ऋषयोवाइंद्रंप्रत्यक्षंनापश्यन् । तंवसिष्ठःप्रत्यक्षमपश्यत् । अत्रिर-ददादौर्वायप्रजांपुत्रकामाय " इत्यादीनांचबाधितार्थतैवस्यात् भट्टवार्तिकेपि वैदि-कैःस्मर्यमाणत्वात्तत्परिग्रहदार्ढ्यतः संभाव्यवेदमूलत्वान्स्मृतीनांमानतोचितेत्युक्तंपरा-शरमाधवीयारंभेतुक्वचित्पुस्तकेपरिग्रहसमत्वतइत्यपिपाठोदृश्यते ॥ किंच ( पराशर-अ० २ श्लो० १५ विवरणे ) माधवेन ( पृ० ४७१ ) " वाजसनेयकेपि " तस्माद्वा-समानादेव पुरुषादत्ताचाद्यश्चजायतेउततृतीयेसंगच्छावहैचतुर्थेसंगच्छावहै"इति । स-मानादेकस्मात् पुरुषादत्ताभोक्ताआद्यश्चभोग्यःद्वावप्युत्पद्येतेतौचमिथःसंकल्पयंतःकू-टस्थमारभ्यतृतीयेचतुर्थेवापुरुषेसंगच्छावहैविवहावहै " इत्यर्थः । यद्यप्ययमर्थवादः तथापिनान्तरविरोधाभावात् स्वार्थेप्रमाणम् " इतिमातुलसुताविवाहविचारेतत्प्रा-माण्यं आचारमाधवेप्रतिपादितमिति सर्वसंमतत्वेन तस्यतत्स्मृतिस्तावकत्वेप्यदो-षइतिमन्यामहे अस्मन्मतेऽर्थवादानांस्वार्थेपिप्रामाण्यांगीकाराच्च । स्पष्टंचैतदावरण-भंगे । एतेन जघन्यत्वेकिंमानमित्यंतमपास्तं शास्त्राद्बहिष्करणमित्यादेर्निरासस्तु मू-लेएवविशदः ॥

यत्तुएवंचचेतस्तत्श्रवणंसेवाफलरूपातुमानसी ॥ तत्सिद्ध्यर्थंदे-हवित्तजनिःकार्य्यातितोभवेत् ॥ संसारदुःखनाशोहिब्रह्मात्म-त्वावबोधनमित्याद्युक्त्वा यदितुभक्तिमात्रमुच्यते तर्हिनपरप्रा-प्तिः वासुदेवःसर्वमिति अहंब्रह्मास्मीतिज्ञानेनैवपरप्राप्तेरिति त-दपिनशोभनं ज्ञानमार्गापेक्षयाभक्तिमार्गस्योत्कृष्टत्वाज्ज्ञानेने-

त्यवधारणासंभवात् नचभक्तिमार्गस्योत्कृष्टत्वेबीजादर्शनात्त-
स्योत्कृष्टत्वेमानाभावइतिवाच्यं " सांपरायेतर्त्तव्याभावा "
दितिव्याससूत्रस्यैवप्रमाणत्त्वात्तत्रहिविषयवाक्यंवाजसनेयि-
शाखाया " मेवंसएषनेतिनेत्यात्मे " त्युपक्रम्यनव्यथतइत्यं-
तेनब्रह्मस्वरूपमुक्त्वाब्रह्मणएतादृशतेतितद्विदप्येतादृशइतिबोधः
नाग्रायेपठ्यते " अतःपापमकरवमित्यतःकल्याणमकरव-
मित्युभेह्येषएतेतरत्यमृत " इत्यादिनाब्रह्मविदोमाहात्म्यम-
ग्रेनिरूप्यते " तस्मादेवंविच्छांतोदांतउपरतस्तितिक्षुःश्रद्धा-
वित्तोभूत्वात्मन्येवात्मानंपश्येत्सर्वमेनंपश्यतिसर्वास्यात्माभव-
तिसर्वस्यात्माभवतिसर्वंपाप्मानंतरतिनैनंपाप्मातरति " इत्या-
द्युक्त्वाअंतेपठ्यते"यएवंवेदे"तिअत्रहिपाप्मतरणादिरूपंब्रह्मज्ञान-
स्यमाहात्म्यमुक्तं आथर्वणोपनिषदादिषुतुभगवद्भक्तेर्मुक्तिहे-
तुत्वपरं"ब्रह्मैतत्‌योधारयती"त्युपक्रम्य "भजतिसोऽमृतोभवती"-
ति अग्रेपिमुक्तोभवतिसंसृतेरिति भक्तेर्मुक्तिहेतुत्वंप्रतिपादि-
तं तत्रसंदेहःमुक्तिकारणत्वेनभक्तिज्ञानयोस्तौल्येसति " य-
एवंवेदसपाप्मानंतरती " तिवचनाज्ज्ञानदशायामपिपापसत्त्वं
वाच्यमन्यथातारणासंभवापत्तेः एवंसतिभक्तिदशायामप्येव-
मेवनवेतिसंशयः तत्रश्रुतावविशेषेणपापनाशश्रवणान्मुक्तिपू-
र्वकालेपापनाशावश्यंभावादेकत्रनिर्णीतशास्त्रार्थोपरत्रापितथे-
तिन्यायेनभक्त्यापिपापनाशस्यस्वीकरणीयत्वाद्भक्तिदशायाम-
पिपापसत्त्वमंगीकार्य्यमितिपूर्वपक्षे उत्तरमाहसूत्रकारः"सांप-
राय"इतिसंपरायःपरलोकःअथवापरःपुरुषोत्तमस्तस्यअयःज्ञानं-
यस्मात्ससंपरायोभक्तिमार्गः अथवापरेपुरुषोत्तमेअयनमयो-

गमनंप्रवेशइतियावत् तथाचसम्यकूपरायोयेनसतथा भक्ति-
मार्गइत्यर्थः एवंचज्ञानमार्गेऽक्षरप्राप्त्याभक्तिमार्गेपुरुषोत्तमप्रा-
प्त्यामोक्षोभवतीतिविशेषंज्ञापयितुंव्यासानामेवंकथनं तथाचभ-
क्तिमार्गेतर्त्तव्यस्यपापादेरभावः भक्तेःपूर्वमेवपापनाशोभवती-
तिभावः ब्रह्मभूतस्यभक्तिलाभानंतरंभक्त्यामामभिजानातीतिभ-
गवद्वाक्यात्पुरुषोत्तमस्वरूपज्ञानस्यभक्त्येकसाध्यत्वात्तथा एवंस
तिमुक्तानामपिसिद्धानांनारायणपरायणः ॥ सुदुर्लभःप्रशांता-
त्माकोटिष्वपिमहामुने सूत्रमपि " मुक्तोपसृप्यव्यपदेशा" दिति
जन्मांतरसहस्रेषुतपोध्यानसमाधिभिः ॥ नराणांक्षीणपापानां-
कृष्णेभक्तिःप्रजायते ॥ जन्मांतरसहस्रेषुसमाराध्यवृषध्वजं ॥
वैष्णवत्वंलभेत्कश्चित्सर्वपापक्षयादिहेत्यादिवाक्यैःपापनाशानं-
तरमेवभक्तिसंभवात् भक्तस्यतर्त्तव्यपापादेरभावान्ज्ञानमा-
र्गीयतुल्यतेत्यर्थः ननु " पाप्मानंतरतियएवंवेदे"तिसामान्यव
चनात्पुरुषोत्तमविदोपिपापसत्त्वंकुतोनेतितत्रसूत्रकारआह त-
थान्ये तथाज्ञानानंतरमपिप्रापवंतःअन्येभक्तिमार्गीयेभ्यो-
ऽन्यइत्यर्थः उक्तवचनरूपोपपत्तिर्हिशब्देनज्ञाप्यते ननुभक्ति-
मार्गीयाणामपिगोपस्त्रीणां दुःसहप्रेष्ठविरहतीव्रतापधुताऽशुभाः ॥
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्याक्षीणमंगलाइतिवचनेनदुष्कृतसु-
कृतयोरपिहानिश्रवणात्पूर्वोक्तवचनैर्विरोधइत्याशंकायामुत्त-
रंपठति " छंदतउभयाविरोधा "दिति छंदइच्छा तथाचभक्ति-
मार्गीयाणामपिपूर्वपापनाशोयःसभगवदिच्छाविशेषतोऽतोभ-
क्तेःपूर्वमेवपापनाशनिरूपकात्ऽन्नाशनिरूपकवचनयोरविरो-

धाद्धेतोःभक्तेःपूर्वमेवपापनाशआवश्यकइत्यर्थः एवंसतिभ-
क्तेःपूर्वमेवतन्नाशऔत्सर्गिकःसचक्वचिद्विशेषेच्छयापनोद्यतेअत्रे-
च्छाविशेषेववक्तव्यबहुत्वेपिकिंचिदुच्यते चिकीर्षितलीलाम-
ध्यपातिभक्तानसोपाधिस्नेहवत्योनसगुणविग्रहानंवासुकृता-
दियुक्ताइतिज्ञापयितुंकतिपयगोपीस्तद्विपरीतधर्मयुक्ताःकृत्वा-
तस्यांदशायांस्वप्राप्तौप्रतिबंधंकारयित्वास्वयमेवतांदशांनाशयि-
त्वा स्वलीलामध्यपातिनीःकृतवानिति नन्वेतावतासार्वदि-
कएवायंभावोभवति नहिमंत्रप्रतिबद्धशक्तिरग्निरदाहकइतित-
त्स्वभावत्वमेवतस्यसार्वदिकंवक्तुंशक्यं एतच्चश्रीभागवतदश-
मस्कंधविवृतौप्रपंचितमाचार्यैः नन्वन्यैर्यत्सूत्राणिव्याख्यायं-
ते तत्रपूर्वतंत्रोक्तन्यायाउपोद्बलकत्वेनोपन्यस्यंते व्यासपादैस्ते-
षांतत्रतत्रादरणात् अत्रतुपुराणेतिहासवाक्यानितत्रकिंज्या-
यइतिचेदुच्यतेइदमेवज्यायःइतिहासपुराणयोर्वेदोपबृंहणत्वा-
त्तत्रापिवेदांतकृद्वेदविदेवचाहमितिवाक्याद्गीतैवज्यायसी स्व-
यंव्यासैःसमाधावनुभूयोक्तत्वाद्भागवतंचज्यायः एवंचज्ञाना-
द्भक्तेर्व्यासैरधिकतयावर्णनात्भक्तेर्मुक्तिसाधनत्वं " यमेवै-
षवृणुतेतेनलभ्य" इतिश्रुत्या तस्मान्मद्भक्तियुक्तस्ययोगिनोवै-
मदात्मनः॥ नज्ञानंनचवैराग्यंप्रायःश्रेयोभवेदिहेतिभगवद्वचने-
नभक्तेर्मोक्षसाधनत्वस्यदुरपन्हवत्वेननपरप्राप्तिरित्यादिप्रलापो-
नर्थकएव॥ किंचमामेवयेप्रपद्यंतेमायामेतांतरंतितइतिभगवद्वा-
क्यादपिभक्तेरेवमायातरणहेतुत्वं नचपदधातोर्ज्ञानार्थकत्वमे-
वनभक्त्यर्थकत्वमिति प्रपूर्वकपदधातोर्भक्त्यर्थकत्वेबाधकाभा-
वात् उपसर्गेणधात्वर्थोबलादन्यत्रनीयतइत्यभियुक्तवाक्या-

च्च धातूनामनेकार्थत्वादितिभाष्याच्च अन्यथाजानंतीतिकथंनो-
क्तं यदपियुस्त्वित्यादिनायेतुज्ञानैकसन्निष्ठास्तेषांतुलयएवहि ॥
भक्तानामेवभवतिलीलास्वादोतिदुर्लभइतिश्लोकमनूद्यतन्नत्य-
टीकायामक्षरब्रह्मप्राप्त्यांपुनरावृत्तौपुरुषोत्तमप्राप्त्यापुनरावृत्तिशं-
कैवनास्तीतियत्प्रतिपादितंतदुपरितन्नेत्यादिनावृंदावनस्थापूर्व-
सुखप्राप्तैपुनर्जन्मशंकास्यादित्यादिप्रललाप तदपिन्नकिंचित्
यतोभक्तेर्ज्ञानापेक्षयाधिक्यंव्यासैःप्रतिपादितमेव एवंचभक्ताः
पुरुषोत्तमंप्राप्तालीलास्वादेऽक्षरब्रह्मस्थंश्रीवृंदावनश्रीयमुनागि-
रिगोवर्द्धनादिलोकंनित्यमेवानुभवंतितत्रजन्मशंकैवनसंभवति
लीलायांनित्यप्राप्तस्यसुखस्यापूर्णत्वाभावात् अतएवबृहद्वा-
मनपुराणेनारायणादिरूपाणिज्ञातान्यस्माभिरच्युतइत्याद्युक्त्वा-
आनंदमात्रमितियद्वदंतीहपुराविदः ॥ तद्रूपंदर्शयास्माकंयदि-
देयोवरोहिनइत्यादिश्रुतिप्रार्थनयाभगवानक्षरब्रह्मस्थंश्रीवृंदा-
वनयमुनाश्रीगोवर्द्धनादिलोकंतत्रश्रीगोपिकाकदंबस्थितंस्वस्व-
रूपंदर्शयामास आहच ब्रूतकिंकरवाणिवः ततःश्रुतयोनित्य-
सिद्धगोपिकावन्मनोरथंयाचितवत्यः ततः दुर्लभोदुर्घटश्चैव-
युष्माकंसुमनोरथः मयानुमोदितःसम्यक्सथ्योभवितुमर्हतीत-
त्याह तस्माल्लीलास्वादोदुर्लभःसभक्तानामेवभवति स्त्रियोवा-
पुरुषावापिभक्तिभावेनकेशवं ॥ हृदिकृत्वागतिंयांतिश्रुतीनांना-
त्रसंशयः उक्तंचभगवतास्वयमेवआब्रह्मभुवनाल्लोकात्पुनरावर्ति-
नोर्जुनं मामुपेत्यतुकौंतेयपुनर्जन्मनविद्यते तस्मात्पुरुषोत्तमंप्राप्त-
स्यपुनर्जन्मशंकाकथमपिनजायते एतेनतन्नेत्यादिकंसर्वमपास्तं
एवमुपास्यस्योत्कृष्टत्वमप्ययुक्तमितियत्तेनोक्तंतदपिस्वमतानु-

सारेण तन्मतेमायोपहितस्योपास्यत्वात् शुद्धस्यचज्ञेयत्वात् वस्तुतस्तुज्ञेयस्यशुद्धत्वंनसंभवतिदृश्यवच्छिन्नत्वात् दृश्यवच्छिन्नत्वाभावेज्ञेयत्वासंभवात् अतएवतन्मतानुसारिभिर्ज्ञेयस्यमिथ्यात्वंस्वीकृतम् किंचयथाश्रुत्यावेद्यत्वंप्रतिपादितंतथैवउपास्यत्वमपि "आत्मानमुपासीतकोयमात्माथमुपास्महे" इत्यादिश्रुत्याप्रतिपादनात्कथमुपास्यस्यन्यूनत्वं नच "नेदंयदिदमुपासते" इतिश्रुत्याउपास्यस्याब्रह्मत्वप्रतिपादनादुपास्यस्यन्यूनतेतिवाच्यं "अविज्ञातंविजानतांविज्ञातमविजानतां अन्यदेवतद्विदितादथोअविदितादधि यदिमन्यसेसुवेदेतिदभ्रमेवापिनूनंत्वंवेत्थब्रह्मणोरूप" मित्यादिश्रुत्यावेदस्यापिब्रह्मभिन्नत्वेनतस्योत्कृष्टत्वासंभवात् ननु शब्दवाच्यत्वेनवेद्यत्वंनिषिध्यतेलक्षणयावेद्यंब्रह्मस्वरूपमुत्कृष्टमेवेतिचेच्छब्दवाच्यस्यैवोपास्यस्याब्रह्मत्वंश्रुत्याप्रतिपाद्यतेलाक्षणिकस्योपास्यस्यसर्वोत्कृष्टत्वेतुबाधकाभावः ॥ इदंचतन्मतानुसारेणास्मन्मतेतुज्ञेयादक्षरादुपास्यस्यपुरुषोत्तमस्यैवोत्कृष्टत्वं तथाहिअस्थूलादिवाक्यस्योपसंहारे "यएतद्विदित्वाप्रैतिसब्राह्मण" इत्यक्षरवेत्तुर्ब्रह्मज्ञत्वमुच्यते "अथपरायया तदक्षरमधिगम्यते" इतिश्रुतौचपरविद्यायाअक्षरज्ञानजनकत्वमेवोक्तं तेनज्ञानरूपेमार्गेइष्टप्राप्त्युपायेअस्थूलत्वादिगुणकंयदक्षरंतद्विषयकाण्येवज्ञानानीष्टप्रापकाणिनिरूप्यंते नतुपुरुषोत्तमविषयकाणीतिज्ञानविषयविशेषणबलान्निश्चीयते तत्फलविचारेच "ब्रह्मविदाप्नोतिपर" मितिश्रुतावक्षरब्रह्मविदोऽक्षरात्परस्यप्राप्तिःफलत्वेनोच्यते नचाक्षरमेवपुरुषोत्तमइतिवाच्यं परपदप्रयोगवैयर्थ्यापत्तेः

" दिव्योह्यमूर्त्तःपुरुष " इतिश्रुतावक्षरात्परतःपरइत्युक्तंतस्य-
विरोधश्चस्यात् नचतत्राक्षरपदप्रतिपाद्याप्रकृतिर्वाजीवोवा-
स्यादितिवाच्यं जगत्कारणस्यचेतनस्यैवतत्रप्रकृतत्वेनतत्राप्रकृ-
तप्रकृत्यादिग्रहणेप्रकृतहान्यापत्तेः यस्मात्क्षरमतीतोहमक्षरादपि-
चोत्तमः ॥ अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमइतिभगव-
द्वाक्यविरोधापत्तेश्चेति तस्मात्तादृशभगवद्वाक्यादक्षरादुत्कृष्टया-
त्पुरुषोत्तमःश्रेष्ठस्तत्प्राप्तिरेवफलत्वेननिश्चीयते तत्कारणजिज्ञा-
सायांचश्रुत्या " ब्रह्मविदाप्नोतिपर " मिति श्रुतिविवरणभूतया "
योवेदनिहितंगुहायां सोश्नुते " इत्याकारिकयाप्रतिपादितंस्वरू-
पयोग्यतासंपादकमक्षरविषयकंज्ञानंप्रतीयते अतएवभगवद्गी-
तायांभक्त्यामामभिजानातीत्यस्मात्पूर्वंयत्ब्रह्मभूतःप्रसन्नात्मा-
नशोचतिनकांक्षति ॥ समःसर्वेषुभूतेषुमद्भक्तिंलभतेपरामितिवा-
क्यं तस्मिन्ब्रह्मभूतस्यभक्तिलाभोक्तेर्ब्रह्मभावस्यचस्वरूपलाभ-
रूपत्वेनानंदाविर्भावात्मकत्वादानंदाविर्भावस्यचाविद्यानाशज-
न्यत्वादविद्यानाशस्यचाक्षरब्रह्मज्ञानजन्यत्वात्परप्राप्तिपूर्वकक्षा-
विश्रांतमेवाक्षरज्ञानमुक्तंतथाचकुत्रचिदक्षरप्राप्तेर्मुक्तित्वंयदुच्य-
तेतदक्षरस्यपरमधामत्वेनपुरुषोत्तमाऽविनाभावादेव तेन " ब्रह्म-
वेदब्रह्मैवभवती "तियदवधारणंतदपिजीवस्याक्षरब्रह्मविदःपुनरा-
वृत्त्यभावेनमृत्युव्यतिक्रमणात्केवलाक्षरप्राप्तेर्ब्रह्मभावात्मकत्वेन-
चोपपद्यमानंनविरुद्ध्यतइति अतएवा " क्षरधियांत्ववरोधः
सामान्यतद्भावाभ्यामौपसदवत्तदुक्त " मितिसूत्रेणव्यासैरप्य-
यमेवार्थोदृढीकृतः तदर्थस्तुअक्षरविषयिणीनांधियांश्रुतौमुक्ति-
साधनेषुयोःविरोधःप्रवेशनंगणनेतियावत्ससामान्यतद्भावाभ्यां-

हेतुभ्यांभवति पुरुषोत्तमसंबंधिसंबंधेमुक्तिरितिसामान्यंमर्यादामार्गेऽगीकृतानांब्रह्मभूतःप्रसन्नात्मानशोचतिनकांक्षति ॥ समः सर्वेषुभूतेषुमद्भक्तिंलभतेपरामितिभगवदुक्तेर्ब्रह्मभावानंतरमेवभगवद्भावसंभवात् ततःपुरुषोत्तमप्रवेशात्तत्रपरंपरयोपयोगोब्रह्मभावस्येत्युभाभ्यांहेतुभ्यांतथेत्यर्थः वस्तुतस्तुपुरुषोत्तमप्राप्तिरेवमुक्तिरितिभावः ॥ नन्वक्षरस्याविशिष्टत्वेनतदुपासकानामपितथात्वात्केषांचित्तत्रैवलयःकेषांचिद्भक्तिलाभइतिंकथमुपपद्यतइत्याशंक्यतत्रहेतुंदृष्टांतेनाहऔपसदवदिति उपसदाख्येकर्मणितानूनप्त्रस्पर्शाख्यमौपसदंकर्मास्ति तत्रातिथ्यायाध्रौवात्स्रुचिचमसेवायदाज्यंचतुरवत्तंपंचावत्तंवासमवद्यतितत्तानूनप्त्रमित्युच्यते अनाधृष्टमसीतिमंत्रेणषोडशाप्यृत्विजोयजमानेनसहतानूनप्त्रंसमवमृशंति अनुमेदीक्षामितिमंत्रेणयजमानस्तत्समवमृशन्यमृत्विजंकामयेतायंयज्ञयशसमृच्छेदितितंप्रथमंसमवमर्शयेदितिश्रूयतेश्रुतौकल्पेचअत्रसर्वेषामृत्विजांतानुनप्तृत्वाविशेषेपियस्मिन्स्नेहातिशयेनतथेच्छातत्रैवतथाकरणंनान्येषु नहितत्राविशिष्टेषुकथमेवंकृतिरित्यपिपर्य्यनुयोगःसंभवति एवंप्रकृतेपीति एवंचोपास्यस्यपुरुषोत्तमस्योत्कृष्टतायाःश्रुतिस्मृतिसूत्रप्रतिपादितत्वाज्ज्ञेयाद्दुपास्यस्यन्यूनताप्रतिपादनंसाहसमेव यत्तुमुक्तानामपिसिद्धानांनारायणपरायणः ॥ सुदुर्लभइत्यत्रमुक्तेतरापेक्षयानारायणपरायणस्यदुर्लभत्वमुक्तं तन्नविभक्त्यर्थज्ञानाभावात् मुक्तानांसिद्धानामित्यत्रनिर्द्धारणेषष्ठी निर्द्धारणंचजातिगुणक्रियादिभिरेकदेशस्यपृथक्करणंनिर्द्धार्यत्वविशिष्टेसामान्यधर्मावच्छिन्नापेक्षयाजातिगुणक्रियायत्रच्छेदे-

नयत्किंचिद्धर्मिणिभेदबोधनमितियावत्. यथानराणांक्षत्रियः शूरतमइत्यत्रनराभिन्नक्षत्रियःक्षत्रियान्यनरान्यशूरतमाभिन्न-इत्यन्वयबोधःअत्राभेदोभेदश्चनिर्द्धारणषष्ठ्यर्थः निर्द्धार्य्यपदार्थविशेष्यतयाप्रकृत्यर्थविशेषणतयाचभेदान्वयः भेदस्यचद्विधाभानमुपगंतव्यंघटानांक्षत्रियःशूरइतिप्रयोगस्याप्रामाण्यानुरोधेनभेदस्याप्यर्थत्वंस्वीकृतं अभेदसंसर्गकबोधेविरुद्धविभक्तिराहित्यस्यतंत्रतयासंसर्गमर्य्यादयातद्भानासंभवात्. यदिचभेदस्य-द्विधाभानमनुभवविरुद्धंसकृदुच्चरितइतिन्यायेनक्षत्रियादेरपिन-द्विधाभानमित्युच्यतेतदाऽभेदएवषष्ट्यर्थः तस्यचक्षत्रियेतादात्म्येनान्वयः तस्यचसमानविभक्त्युपस्थापितशूरतमत्वावच्छेदेनान्वयःतथाचनराभिन्नक्षत्रियाभिन्नशूरतमइत्यन्वयबोधःकेचित्तु-क्षत्रियान्यनरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वविशिष्टतादात्म्यसंबंधेननराभिन्नक्षत्रियेशूरतमत्वान्वयइत्याहुः एवंचमुक्तसिद्धाभिन्ननारायणपरायणाभिन्नोदुर्लभइत्यन्वयबोधोथवा-नारायणपरायणान्यमुक्तसिद्धत्वव्यापकभेदप्रतियोगितावच्छेदकोमुक्तसिद्धाभिन्ननारायणपरायणइतिवान्वयबोधोदुर्लभः उभयथापिमुक्तेतरापेक्षयादुर्लभइत्यसंगतमेव तपस्विभ्योधिकोयोगीत्यादिनादर्शितोदृष्टांतस्तुनिर्द्धारणषष्ठ्यघटितत्वाद्विषमः शक्तिसंभवेलक्षणायाअयुक्तत्वात्. मुक्तानामित्यस्यकुटुंबवासनामुक्तानामित्यर्थइत्यप्ययुक्तमेव " योवेदनिहितंगुहाया„मितिश्रुतिस्त्वस्मन्मतमेवपुष्णाति तदर्थस्तुपूर्वदर्शितएव एतेनातएवेत्यादिकमप्यपास्तं ॥

टीका

सहसाक्षे एवंचचेतइत्यादिविरोधाच्चेत्यन्तमित्यंतंभागंपरिहरंति यत्त्वित्यादिना इत्यादिकमपास्तमित्यंतेन व्याससूत्रस्यैवेति ( अ० ३ पा० ३ सू० २७ )

"सांपरायेतर्तव्याभावात्तथाह्यन्ये " इतिसूत्रस्य एवकारोप्यर्थे ॥ तेनबहुप्रमाणसंग्रहे- ष्यदोषः **वाजसनेयिशाखायामिति** । बृहदारण्यकेषष्ठाध्यायेशारीरब्राह्मणाख्ये- चतुर्थब्राह्मणेइत्यर्थः । अत्रकिंचित् भिन्नपाठंप्रभुचरणव्याख्यामेवसूत्रद्वयस्या- नुवदंतिसएषनेतिनेत्यात्मेत्यादिना । अत्रविस्तरःप्रकाशेवध्येयः **एतादृशतेति** तत्र " अगृह्योनहिगृह्यते " इत्यादिनोक्तधर्मवत्वं **अतःपापमित्यादि** अतइति- ल्यब्लोपेपंचमीएतदभिसंधायपापमकरवंएतदभिसंधायपुण्यमकरवं एवमभिसंधानपु- र्वंकरुतेसाध्वसाधूनिउभेब्रह्मवित्तरतीत्यर्थः अयंमाध्यंदिनपाठःकाण्वशाखायांतु ( पृ- ९११ ) अतःपापमकरवमित्यतःकल्याणमकरवमित्युभेउहैवैषएतेतरतिनैनंकृताकृते तपत " इतिपाठः ॥ **निरूप्येति** ॥ " एषनित्योमहिमाब्रा- ह्मणस्य " इत्युगंतेननिरूप्येत्यर्थः ॥ श्रद्धावित्तइत्यत्रसमाहितइतिकाण्वपाठः ॥ पश्येदित्यत्रतुपश्यतीति " सर्वोस्यात्माभवती,, तिकाण्वैर्नपठ्यते । **आथर्वणोप- निषद्भ्रादिष्विति** ॥ इदंवाक्यंतुगोपालतापनीयस्थं । आदिपदेन " ब्रह्मसंस्थोमृ-

---

## सहस्राक्ष.

एवंच चेतस्तत्प्रवणंसेवाफलरूपातुमानसी तत्सिध्यर्थंदेहवित्तजनिःकार्यातोभवेत् सं- सारदुःखनाशोहिब्रह्मात्मत्वाऽवबोधनमित्यत्र यदि देहवित्ताभ्यां जनिर्यस्यास्सा तत्फलभू- तमानससेवासिध्यर्थं तयाऽथेब्रह्मविद्याप्राप्तिरित्युच्येत तर्ह्यस्माकं नकोपि विद्वेषः ॥ यदि- तु तत्र तत्प्रवणता ब्रह्मविद्योच्यते तर्हि देहवित्तयोस्तत्रनोपयोगः ॥ श्रवणादेरेवतत्रोपयो- गात् ॥ इतीदं नास्माभिर्मृष्यते ब्रह्मात्मत्वावबोधनमित्यस्यासङ्गतेश्च ॥ यदितु भक्तिमात्रमु- च्यते तर्हि नपरप्राप्तिःवासुदेवःसर्वमिति अहंब्रह्मास्मीतिज्ञानेनैव तत्प्राप्तेः ॥ एतेन मामेव ये प्रपद्यन्ते मायामेतां तरन्तिते इति वाक्यात्तु भक्तानामविद्याविनिवृत्तितइत्यपिचि- न्तितम् ॥ पद्यतेर्भक्त्यर्थकत्वाभावात् ॥ गत्यर्थानां ज्ञानार्थतया ज्ञानेनैवाविद्यानिवृत्ते- स्तेन वाक्येन प्रतीतेश्च ॥ यत्तुयेतुज्ञानैकसन्निष्ठास्तेषांतुलयएवहि भक्तानामेवभवतिलीला- स्वादोऽतिदुर्लभ इति श्लोकव्याख्यानेऽक्षरब्रह्मप्राप्तस्याऽपुनरावृत्तिमुक्त्वा पुरुषोत्तमं प्रा- प्तस्य पुनरावृत्तिमाशङ्क्य मामुपेत्यतुकौन्तेयपुनर्जन्मनविद्यतइति भगवद्वाक्येन कैमुतिक- न्यायेन समादधौ ॥ ब्रह्मज्ञानेनाक्षरं प्राप्तस्य पुनरावृत्त्यभावे ततोऽपि परं प्राप्तस्य- सुतरांतदभावसिद्धेरिति तन्न ॥ तेतुब्रह्मन्हदंनीताइति वक्ष्यमाणभागवतश्लोकस्य त्वत्संमता- र्थे सति तेषां गोपानामिव राधादीनामिवच ततोप्युत्कृष्टस्य वृन्दावनादिस्थभृगालतात्व- प्राप्तिपूर्वकमनुभूयमानस्यापूर्वफलस्य प्राप्त्यै पुनर्जन्मनस्त्वया वक्तुं त्वदीयैःशङ्कितुं चो- चितत्वात् ॥ विद्वन्मण्डने भक्तानां पुनरागमनस्योक्तत्वाच्च ॥ तदपि तत्खण्डनावसरे खण्ड-

तत्वमेति ” इतिछंदोगादिश्रुतीनां “ तत्संस्थस्यामृतत्वोपदेशात ” इतिशांडि-ल्यसूत्रस्य । दशमस्कंधेकुरुक्षेत्रप्रसंगे । मयिभक्तिर्हिभूतानाममृतत्वायकल्पते एवमा-दिपुराणवचसांचसंग्रहः ॥ **संपरायःपरलोकइत्यादि** । अत्रयथासंभवंतस्येदमिति-प्रज्ञादिभ्यइतिवा स्वार्थेऽणमाश्रित्यसांपरायइतिदैर्घ्यंबोध्यं । मुक्तानामपिसिद्धानामिति-षष्ठस्कंधचतुर्दशाध्यायस्थं ।**सूत्रमिति** प्रथमस्यतृतीयेपादे द्वितीयं ॥ **नैराणांक्षीण-**पापानामितिपांडवगीतास्थं ॥ समाराध्यवृषध्वजमितिवराहपुराणीयप्रबोधिनीमाहा-त्म्यस्थं ॥ द्वितीयसूत्रमवतारयंति ॥**ननुभक्तीत्यादिना** दुःसहप्रेष्ठविरहेतिदशमस्कंधे रासपंचाध्यायीस्थं । इतिप्रभुचरणोक्तिप्रायेणसंगृह्यप्रकाशस्थंसंगृह्णंति । **नन्व-न्यैरित्यादिना** ॥ अत्रभागवतंचज्यायइत्यंतंप्रकाशमनूद्यफलितमाहुः । **एवं-**चज्ञानादिति । तस्मान्मद्भक्तीत्येकादशस्थंवाक्यं ॥ **बृहद्वामनपुराणइति** तत्रोत्तरखिल्येभृग्वादीन्प्रतिब्रह्मवाक्यसंदर्भोऽयं ॥ सचोत्तरभागेविशेषतःस्फुटंविचार यिष्यते ॥ **दुर्लभोदुर्घटश्चेति** । अतएवमार्तंडादिषुलीलास्वादोतिदुर्लभइत्याद्युक्तं ॥ **क्रियेवेति** इदंतत्रत्यमेववाक्यं । **स्वीकृतमिति।** दृश्यत्वमिथ्यात्वयोर्व्याप्तिस्वीकारा त्तथा ॥ दृश्यत्वं ज्ञेयत्वं । अन्यथावास्वाकाशादावव्याप्तिप्रसंगादितिदिक् ॥ **अवि-ज्ञातमित्यादि** । तावकव्याख्यानांगीकारेपियस्यांतलवकारोपनिषदिब्रह्मणउपास्य त्वंप्रतिषिद्धतस्यामेव “ अन्यदेवतद्विदितात । अविज्ञातं ” इत्यादिभिर्ज्ञेयत्वमपि प्रतिषिध्यतइत्युपास्यवज्ज्ञेयस्याप्यब्रह्मत्वंदुर्वारमितिभावः ॥ अथपरेतिमुंडकश्रुतिरि-यं । जनकत्वमेवेत्येवकारोप्यर्थे । ज्ञानमार्गाद्भक्तिमार्गस्योत्कर्षंद्रढयितुमतःपरं-( अध्याय३ पा. ३. सू. ३३. ) अक्षरधियांत्वितिसूत्रेप्रकाशंश्रीप्रभुचरणोक्तिंचैकीकृत्य

---

यिष्यामः ॥ पुरुषोत्तमाक्षरयोरभेदोऽक्षरपदार्थश्चोक्तएव प्राक् ॥ एवमुपास्याज्ज्ञेयस्योत्कृष्ट-त्वमप्युक्तं ॥ निरतिशयत्वात् ॥ मुक्तानामपिसिद्धानांनारायणपरायणःसुदुर्लभइत्यादिपुराण-वाक्येन्तु मुक्तेतरापेक्षया नारायणपरायणस्योत्कर्षमाहत्यपिशब्देन गम्यते ॥ यथा तपस्वि-भ्योऽधिकोयोगीज्ञानिभ्योपिमतोधिकइत्यत्रापिशब्दबलेन ज्ञानीतरापेक्षया योगिनआधिक्यं प्र-तीयते ॥ अस्तु वा मुक्तानामित्यस्य कुटुम्बवासनाया मुक्तानामित्यर्थः सिद्धानामित्यस्य त्वणिमादिमतामितितावतैवार्थवादत्वोपपत्तेः ॥ अतएव योवेदनिहितंगुहायां सोऽश्नुतेसर्वा-न्कामान्सहेत्याद्याः श्रुतयः यावानर्थउदपानेसर्वतःसंप्लुतोदके तावान्सर्वेषुवेदेषुब्राह्मणस्यवि-जानतइत्याद्याः स्मृतयश्च संगताः ॥ यानि तु पुराणवाक्यानि अनुग्रहेण लीलाऽऽस्वादे प्रमाणतया दर्शयति तानि लीलास्वादस्यानुग्रहप्रयोज्यत्वे एव प्रमाणानि नतु इतरापेक्षया तस्योत्कर्षेपि ॥ प्रमाणाभावात्कृत्यादिविरोधाच्चेत्यलं ॥

प्रायेणानुवदंति । **तेनज्ञानरूपेमार्गेइत्यादिना** । इदमपिविदुषांसुगममेवेतिविशेषतो
नव्याख्यायते । **तत्रप्रकृतत्वेनेति** । दिव्योह्यमूर्तइतिवाक्यविशिष्टेमुंडके ॥ अथप
रेत्यादिनातथात्वेन । **संबंधिसंबंधेइति** भक्तसंगे ॥ सत्संगान्मामुपागताइत्येकादश-
स्कंधादिवाक्यैर्यथाभक्तसंगीभगवत्प्राप्तिहेतुस्तथाऽक्षरपदस्यापिपुरुषोत्तमसंबंधितया
तज्ज्ञानमपिमुक्तिहेतुरितिसमानत्वं॥ **पुरुषोत्तमप्रवेशादिति**नतोमांतत्वतोज्ञात्वाविश
तेतदनंतरमितिवाक्यात्तत्रमांपुरुषोत्तमं पुरुषोत्तमोऽस्मीतिपंचदशाध्यायेकथनात् ।
सौत्रंदृष्टांतमवतारयंति **नन्वक्षरस्येति** ॥ अविशिष्टत्वेकेवलज्ञानिनोभक्तांश्चप्रतिअक्ष
रस्यस्वज्ञानद्वाराऽविद्यानिवर्तकत्वब्रह्मभावसंपादकत्वादिनाअविशिष्टत्वेसत्यपिकेवल-
ज्ञानिनानक्षरएवलयः "ब्रह्मैवसन्ब्रह्माप्येति" विशंतियद्यतयोवीतरागाइत्यादिश्रुतिस्मृ
तिसिद्धः । भक्तानांतुपुरुषोत्तमप्रवेशहेतोःफलरूपभक्तेर्लाभः मद्भक्तिंलभतेपरामि-
त्यादिवाक्यसिद्धः । एवंफलेवैषम्यंकुतइतिभावः । **औपसदवदिति** । उप
सदःसंबंधिइदं औपसदंतानूनप्त्रं । तदाज्यसमवमर्शनंवा । उपसत्तुज्योतिष्टोमादौ सोम
क्रयानंतरंदिनत्रयपर्यंतंप्रातःसायंकर्तव्यइष्टिविशेषः ॥ तानूनप्त्रंतु सकृदेवभवतितच्चप्र
थमोपसद्दिवसएवतत्रक्रीतंसोमंशकटेनप्राग्वंशपूर्वद्वारआनीयशकटमुदगग्रंस्थापयित्वा-
दक्षिणमनड्वाहमेकमेवविमुच्यआतिथ्यायास्तंत्रंप्रक्रम्यवाग्विसर्जनान्तेद्वितीयमपिविमु-
च्यराजानंशकटादवरोप्यादायपूर्वयाद्वाराप्राग्वंशंप्रविश्यापरेणाहवनीयंदक्षिणातिक्र-
म्याध्वर्युःप्रतिप्रस्थात्रापूर्वमानीतामासन्दीमाहवनीयतोदक्षिणस्यांस्थापयित्वातदुपरिप्रा
चीनग्रीवमुत्तरलोमकृष्णाजिनमास्तीर्य तदुपरिराजानंस्थापयित्वापरिश्रयणवाससाप-
र्याणह्यति अग्निराजानंचान्तरेणमासंचारिष्टेतिसंप्रैष्यति ततोऽवहननादिकर्मप्रतिपद्य-
ते ॥ साचातिथ्याइडाभक्षणोत्तरतत्पात्रमार्जनान्तासंतिष्ठते धारयतिध्रौवमाज्यम् ।
आतिथ्यायाध्रौवात्एतदर्थमेवसंपादितायांस्रुचिचमसेवातानूनप्त्रंसमवद्यतिचतुरवत्तंपं-
चावत्तंवापंचावदानेएकाप्यायनम् । ( तैत्तिरीयसंहिताकां० १ प्रपा० २ अनु०
१० ) "आपतयेत्वागृह्णामि" प्राणायेदंनमम "परिपतयेत्वागृह्णामि" मनसइदं
"तनूनप्त्रेत्वागृह्णामि" अन्नयइदम् "शाक्वरायत्वागृह्णामि" शक्त्यैइदं "श-
क्मन्नोजिष्ठायत्वागृह्णामि" जीवात्मनइदम् "अनुमेदीक्षांदीक्षापतिर्मन्यतामनुत-
पस्तपस्पतिरंजसासत्यमुपगेषं सुवितेमाधाः" इतियजमानःप्रथमंतानूनप्त्रंस्पृशति
"अनाधृष्टमस्यनाधृष्यंदेवानामोजोऽभिशस्तिपाअनभिशस्तेन्यं" इतिऋत्विजोयुगपत्-
स्पृशन्तिसदस्यश्च । यदिसदस्यः । "प्रजापतौत्वामनसिजुहोमि" इतियजमा-
नस्तानूनप्त्रंत्रिरवजिघ्रतिसकृन्मंत्रेणद्विस्तूष्णीम् । प्रजापतयइदम् । अन्वहंवाव्रते-
ष्वपिनयति । सोत्रस्यास्यविकल्पस्यार्थन्तु वक्ष्यामः अत्रवेदार्थप्रकाशे ( कां० १
प्रपा० २ अनु० १० ) "आपतिः निश्वासरूपेणबहिर्गतं पुनर्वाचिमुखेनान्तःप-
ततीत्यापतिःप्राणः । हेआज्यप्राणार्थंत्वांअस्मिन्पात्रेगृह्णामि । परितोनानाविषयेषु

पततीतिपरिपतिर्मनः । तनूं शरीरंनपातयतिनविनाशयतीतितनूनपाजाठराग्निः । श-
कनशीलः शक्वरः शक्तिमानपुरुषः तस्यसंबंधिशाक्वरं शक्तिस्वरूपं शक्मन् शक्तिम-
त्सुयदोजिष्ठं तस्मै ओजोनामाष्टमो धातुःतस्यसारमोजिष्ठं तदवष्टंभेनैवशक्तिरवतिष्ठते
एतैर्मन्त्रैस्तानूनप्त्रंघ्राणम् तानूनपृत्रसंज्ञकजाठरवन्हिविषयस्यशपथकर्मणो हेतुभूतमा-
ज्यंतानूनप्त्रम् ।",, इतिमाधवः एषांमंत्राणांब्राह्मणन्तुषष्ठकाण्डे द्वितीयप्रपाठके श्रूयते
( अनु० २ ) "देवासुरास्संयत्ताआसन्तेदेवामिथोविप्रियाआसन्तेऽन्योन्यस्मै
ज्यैष्ठ्यायातिष्ठमानाःपंचधाव्यक्रामन्नग्निर्वसुभिःसोमोरुद्रैरिंद्रोमरुद्भिर्वरुणआदित्यैर्बृ-
हस्पतिर्विश्वैर्देवैस्तेमन्यन्तासुरेभ्योवाइदंभ्रातृव्येभ्योरध्यामोयन्मिथोविप्रियास्स्मोयान-
इमाःप्रियास्तनुवस्ताःसमवद्यामहैताभ्यःसनिर्ऋच्छाद्यः ॥ नःप्रथमोऽन्योन्य-
स्मैद्रुह्यादितितस्माद्यःसतानूनप्त्रिणांप्रथमोद्रुह्यतिसआर्तिमार्छतियत्तानूनप्त्रꣳसमवद्य-
तिभ्रातृव्याऽभिभूत्यैभवत्यात्मनापरास्यभ्रातृव्योभवतिपंचकृत्वोवद्यतिपंचधाहितेतत्स-
मवाद्यंताथोपंचाक्षरापंक्तिःपांक्तोयज्ञोयज्ञमेवावरुंधआपतयेत्वागृण्हामीत्याहप्राणोवा-
आपतिःप्राणमेवप्रीणातिपरिपतयइत्याहमनोवैपरिपतिर्मनएवप्रीणातितनूनप्त्रइत्याह-
तनवोहितेताःसमवाद्यंतशाक्वरायेत्याहशक्त्यैहितेतास्समवाद्यन्तशक्मन्नोजिष्ठायेत्या-
हौजिष्ठꣳहितेतदात्मनस्समवाद्यन्तानाधृष्टमस्यनाधृष्यमित्याहानाधृष्टꣳह्येतदनाधृष्यंदे-
वानामोजः। इत्याहदेवानाꣳह्येतदोजोभिशस्तिपाअनभिशस्तेन्यमित्याहाभिशस्तिपाह्ये-
तदनभिशस्तेन्यमनुमेदीक्षांदीक्षापतिर्मन्यतामित्याहयथायजुरेवैतद्घृतंवैदेवावज्रंकृत्वा-
सोममघ्नन्नन्तिकमिवखलुवाअस्यैतच्चरन्तियत्तानूनप्त्रेणप्रचरन्ति " इत्यादि एतद-
र्थोपिप्रथमकांडभाष्ये ( प्रपा २ अनु १० ) संयत्ताःसंग्रामंप्राप्ताः । मिथःपरस्परं ।
तेचदेवाःसर्वेपित्वात्तिरिक्तस्यज्यैष्ठ्यमनङ्गीकुर्वाणाःपंचव्यूहाअभवन् । तेषुव्यूहेष्व-
ग्न्यादयःपंचदेवताःसेनान्यःवस्वादयःपंचगणाःसेनाः । तेकंचित्कालं परस्परविरो-
धिनोभूत्वापश्चादेवंविचारितवन्तः यदिवयमन्योन्यविरोधिनस्तदावैरिणामसुराणांइ-
दंजयरूपंकार्यं वयमेवसाधयामः ।। ततस्तद्विरोधपरिहारहेतुंशपथंकर्तुं अस्मदी-
याःप्रियाःपुत्रभार्यादिरूपाइमाः तनूरेकत्रसंस्कुर्मइतिविचार्यसङ्गीकृत्यशपथ-
मेवं परिभाषितवन्तः अस्माकंमध्येयःप्रथमंद्रुह्यति सताभ्यस्तनूभ्योनिर्गच्छतु भ-
ष्टोभवत्विति । यस्माद्देवानामेवंवृत्तंतस्मान्मनुष्याणामपिशपथंकृतवतांमध्येयःप्रथमं-
द्रुह्यतिसविनाशंप्राप्नोति । समानेएकस्मिन् विषयेतानूनप्त्रिणः शपथवंतःसतानून-
प्त्रिणः। इदानींविधत्ते " यत्तानूनप्त्रꣳसमवद्यतिभ्रातृव्याभिभूत्यैभवत्यात्मनापरा-
स्यभ्रातृव्योभवति " इति । समवद्यतिसंभूयावदानंकुर्यात् । स्वयंभूतिमान्भव-
तिवैरीतुपराभवति । इयमेव भ्रातृव्याभिभूतिः । अवदानेसंख्यांविधत्ते । पंचकृ-
त्वोऽवद्यतीत्यादितेदेवाः ततदानींपंचधाविभक्ताःपश्चात् संभूयैकवत् प्रियत-
नूरवाद्यस्थापितवन्तः । इतिव्याख्यातः । तदेतत्सर्वमनुसंधायाह: श्रौतकल्पे-

श्चेति कल्पस्तुतत्रैवबैद्धभाष्ये " अथैतद्ध्रौवमाज्यमाप्याय्यक २ संवाचमसंवा-
यार्चाततमंतवेँदिनिधायतस्मिन्नेतत् तानूनप्त्रंसमवद्यगृण्हाति " कंसं कांस्यपात्रं ।
कचिच्चमंनमितिपाठेपिचम्यतेस्मिन्नित्यर्थसाम्याच्चमसएवार्थःतथा " सयावन्तऋ-
त्विजस्तएतत्समवमृशन्त्यनाधृष्टमस्यनाधृष्यंदेवानामोजोभिशस्तिपाअनभिशस्ते-
न्यं ,, इतिहेतानूनपात्राज्यत्वंइतःपूर्वकेनाप्यतिरस्कृतमसि । इतःपरमप्यतिरस्कृतं-
देवानामोजः सारमसि । अभिषस्तेर्हिंसारूपादन्योन्यविरोधाद्स्मान्पालयसित्वंपुनर-
भिशस्तेरविषयमसि । मंत्रस्ययथोक्तार्थःप्रसिद्धइत्याह " अनाधृष्टमस्यनाधृष्य-
मित्याहानाधृष्टः ह्येतदनाधृष्यंदेवानामोजइत्याहदेवानां ह्येतदोजोभिशस्तिपा-
अनभिशस्तेन्यमित्याहाभिशस्तिपाह्येतदनभिशस्तेन्यं ,, इतिदीक्षणीयेष्टौयो-
देवःसदीक्षापतिः । ममेमांदीक्षामनुजानातु । अहंचांजसासत्यमुपगेषंआर्जवेनता-
नूनपात्रस्पर्शनरूपंशपथंप्राप्तोस्मिहेतानूनपात्रसुवितेशोभनमार्गेयज्ञकर्मणिमांस्थापयमंत्र-
स्यस्पष्टार्थतामाह " अनुमेदीक्षांदीक्षापतिर्मन्यतामित्याहयथायजुरेवैतत् ,, इ-
तिआपस्तंबश्रौतसूत्रेद्वादशप्रपाठके आतिथ्यायाध्रौवात्स्रुचिचमसेवातानूनप्त्रं-
समवद्यतिचतुरवत्तंपंचावत्तंवापतयेत्वागृह्णामीत्येतैःप्रतिमंत्रमनाधृष्टमसीतियजमानसप्त-
दशाऋत्विजस्तानूनपात्रं समवमृषंत्यनुमेदीक्षामितियजमानोयंकामयेतयज्ञयशस-
मृच्छेदितितंप्रथमंयदिकामयेतसर्वानितिसर्वान्सहावमर्षयेत्तस्माद्यःसतानूनप्त्रिणामि-
त्युक्तंप्रजापतौत्वामनसिजुहोमीतियजमानस्तानूनपात्रंत्रिरवजिघ्रत्यन्वहंवाव्रतेष्वपिनय-
ति" इति एतच्चरुद्रदत्तः " तनूनपात्संबंधात्तानूनप्त्रमित्याज्यसमाख्या । येनर्त्विजः-
सख्यंयुगपत् गच्छन्ति चतुरवत्तं पंचावत्तंवेति चतुरवत्तिनोपिपंचावत्तमास्यर्थंनत्वित
रस्यइतरार्थं तस्य पंचावत्तंसर्वत्रेतिनियमात् । व्यवस्थितविकल्पोवास्यादुभयस्यव्य-
वस्थानुसारात् अनाधृष्टमसीतियजमानसप्तदशा ऋत्विजस्तानूनपात्रं समवमृशंति ।
सदस्यस्यानित्यत्वादुक्तं सप्तदशाइति तेनसदस्यस्यवरणे सोप्यवमृशत्येवार्थसा-
म्यात् । अनुमेदीक्षामितियजमानः गतं । यंकामयेतयज्ञयशसमृच्छेदितितंप्रथमं ।
यदिकामयेतसर्वानितिसर्वान्सहावमर्शयेत् यज्ञनिमित्तंयशोयज्ञयशसंयज्ञेसाधुकृ-
तमनेनेतितद्यंप्राप्नुयादितिकामयेत यजमानस्तं प्रथमवमर्शयेत् । यदिपुनः का-
मयेत । सर्वान् यज्ञयशसमृच्छेदिति तदासहैव सर्वानवमर्शयेत् । तस्माद्यःसतानूनप्त्रि-
णामित्युक्तं । तस्माद्यःसतानूनप्त्रिणांप्रथमोद्रुह्यति स आर्तिमार्छतीत्युक्तं तस्मान्ना-
न्योन्यमन्यस्मैद्रोग्धव्यमित्यर्थः । प्रजापतौत्वामनसिजुहोमीतियजमानस्तानूनप्त्रंत्रि-
रवजिघ्रति । गतं । अन्वहंवाव्रतेष्ववनयतितदातुप्रतिव्रतमावृत्तिर्मंत्रस्य ,, इतिव्या-
चष्टे रामाण्डारादिकन्तुविशिष्टप्रयोजनाभावान्नोपन्यस्यते ॥ सूत्रेअन्वहंवेतिविकल्प-
स्त्वेवंभातिप्रथमदिन एवत्रिराघ्राणमित्येकःपक्षः प्रतिदिवसंसकृत्सकृत्व्रतेष्वित्यपरः
आम्नानपक्षेमंत्रावृत्तिरितियद्यपितानूनप्त्रसमवमर्शनमुपसद्भिर्भूतं आतिथ्येष्ट्युत्तरत-

क्रियते तथापि तत्समवमर्शनानन्तरमेवप्रवर्ग्यप्रचारोपसदोरनुष्ठानांत्तदनन्तरानयोर-
नुष्ठातुमशक्यत्वात्तत्समवमर्शनमौपसदमित्यभिलप्यते किंचषष्टकाण्डे द्वितीयप्रपाठ-
के ( अनु. १ ) "स ॅ स्पर्शयतिरक्षसामनन्ववचाराय नपुरस्तात् परिदधात्यादि-
त्योह्येवोद्यन् पुरस्ताद्रक्षा ॅ स्यपहन्त्यूर्ध्वेसमिधावादधात्युपरिष्टादेवरक्षा ॅ स्यपह-
न्ति ,, इत्यादिना मध्यमपरिधेर्दक्षिणोत्तरपरिधिसंधिस्पर्शनंपूर्वभागेचतुर्थपरिधेर्नि-
षेध आघारसमिधोरूर्ध्वदिगवबुध्याऽहवनीयात्पूर्वभागेदूरेस्थापनंचेत्यादिकंविधीयते इ-
दंचदर्शपूर्णमासातिदेशलभ्यमप्युपसदर्थमत्रविधीयत इत्युपसदोपि तदंगंभवत्येव अ-
तएवप्रथमकाण्डभाष्ये ( प्रपा २ अनु० १० ) माधवः " ननुसंस्पर्शादिविधयः प्र-
कृतौदर्शपूर्णमासेष्टावपिसन्तीत्यतिदेशादेवतदनुष्ठानस्यात्रप्राप्तत्वान्नपृथक्विध्यन्तरापे-
क्षेतिचेत् । नउपसदर्थंविधेयत्वात् तर्हितत्रैवविधीयतामितिचेत् नंआतिथ्यो-
पसदोःपरिध्यादिभेदंवारयितुं साधारणत्वेनात्रैवविधेयत्वात् ,, इत्याह ॥ एवंचाति-
थ्यायांविहितमपितद्यथोपसदोप्यंगंतथाऽतिथ्योत्तरंविहितंतानूनप्त्रसमवमर्शनमप्यधि-
कारसमर्पकत्वादिनोपसदंगंस्यादेव । अतएव "अनुमेदीक्षांदीक्षापतिर्मन्यतामनुतपस्त-
पस्पतिः,, इत्यादौसमवमर्शनमंत्रे तपःशब्दाभिधेयायाउपसदःसमवमर्शनेसंबंधःस्पष्टए-
वाम्नायते तथाचवेदभाष्यं "तपउपसत् तत्रत्योदेवस्तपस्पतिः मदीयंतपोनुजानातु ,,
इत्यादिकमुपन्यस्तंप्राक् तस्मात्सूत्रऔपसदशब्देन तत्समवमर्शनस्य ग्रहणंयुक्तमेव ।
उपसत्संबंधादेव प्रतिदिवसमग्नीषोमीयपर्यंतमाम्नाणपक्षोप्यापस्तंबोक्तःप्राग्व्याख्यातःन
चसमवमर्शनोपसदोःप्रवर्ग्यप्रचारेणव्यवधानात् प्रवर्ग्यस्यांगंतन्नतूपसदइतिशंक्यं त-
थासतियत्रप्रवर्ग्यनिषेधस्तत्र तदपिनभवेत् तथाहितैत्तरीयारण्यकतुरीयप्रपाठके ( अ-
नु- ९ ) "नोक्थ्येप्रवृंज्यात् । प्रजावैपशवउक्थ्यानियदुक्थ्ये प्रवृंज्यात् प्रजां पशूनस्य
निर्दहेत ,, इतिज्योतिष्टोमविकृतावुक्थ्येप्रवर्ग्यःप्रतिषिध्यतेआपस्तंबसूत्रेप्येकादश-
प्रपाठके " अग्निष्टोमेप्रवृणक्तिनोक्थ्येप्रवृंज्यात् " इत्यारण्यकस्थप्रवर्ग्यब्राह्मणवा-
क्यमनूद्यतत्रसनिषिध्यते अतउक्थ्येसमवमर्शनोत्तरमुपसदएवक्रियन्तइतिदिक् यद्य-
पिदर्शितचरात्प्रकारात् प्रयोगान्तरेषुकश्चिदितरोदृश्यतेयथाबौधायनानां शकटाद्वा-
ज्यादानं प्राग्वंशेनयनं आसंद्युपर्यध्वर्य्वास्तीर्णकृष्णाजिनेस्थापनंचयजमानेनेत्या-
दिः । तानूनप्त्रावदानन्तुतेषांहिरण्यकेशिनांचोभयेषामपिकांस्यपात्रेचमसेवेत्येव ।
आम्नाणेतु बौधायनानांयजमानःप्रथमादिक्रमेणाध्वर्य्वादीन् सर्वानुपहूयतानूनप्त्र-
मवजिघ्रतिअथैनदद्भिः संस्पृश्यशालोत्तरेनिनयति । हिरण्यकेशिनान्तु अध्व-
र्युरवघ्राय " प्रजापतौत्वामनसिजुहोमी ,, तित्रिरवघ्रायांतर्वेदिंनिनयति एवमा-
दिस्तत्रतत्रविशेषोस्त्येव । तथापिप्रायेणापस्तम्बसूत्रमेवानुसृत्येहकर्मप्रकारदिक्प्र-

दर्शितेतिध्येयम् इहकिंचिदधिकप्रपंचनंतुतानूनम्त्रादित्वरूपव्युत्पादनायेत्यदोषः ॥
इत्थंप्रकाशंप्रभुचरणोक्तिंचप्रायेणसंगृह्यफलितमाहुः ॥ **एवंचोपास्यस्येत्या-
दिना** । अग्रेमूलप्रतिरोहितार्थं । किंचअत्रेदमवधेयं । सहस्राक्षेयदिदेहावित्ताभ्या-
मित्यादिनायोविकल्पःकृतःसकारिकार्थानवबोधादेव ॥ तत्रहिदेहवित्ताभ्यांजनि-
र्यस्यसार्संस्थ्नरूपासेवा । तयाअहंताममतारूपसंसारस्याविद्याकार्यस्यनाशः । स्वा-
त्मनिप्रपंचेचाक्षरब्रह्मात्मकतयाज्ञानमित्यवांतरंफलद्वयंभवति । ततःसर्वात्मभावा-
परपर्यायाफलरूपामानसीसेवा । साचब्रह्मज्ञानस्यापिफलरूपेतितस्याब्रह्मविद्यासा-
धनत्वमशक्यवचनं । अतएवसमासेनतुकौंतेयनिष्ठाज्ञानस्ययापरेतिसंक्षेपेणैवज्ञा-
नस्यपरांनिष्ठांप्रक्रम्यअहंकारंबलंदर्पमितिसंसारनाशं ब्रह्मभूयायकल्पतइतिब्रह्मभा-
वंचोक्त्वाब्रह्मभूतस्यपरभक्तिलाभोभगवताउक्तः ॥ तत्रसाधनभक्तिव्यावर्त्तनायपरपदं ।
एवंभजंत्यनन्यमनसोज्ञात्वाभूतादिमव्ययं । इतिमत्वाभजंतेमांबुधाभावसमन्विताः ॥
योमामेवमसंमूढोजानातिपुरुषोत्तमं । ससर्वविद्भजतिमांसर्वभावेनभारतेत्यादिष्वने-
कत्रसार्वश्यलिंगकब्रह्मज्ञानोत्तरमेवसानिरूप्यते वेदेपिबृहन्नारायणेसत्यतपोदमशम-
दानधर्मादीनुक्त्वांते " मानसमितिविद्वा ऽ स्तस्माद्विद्वा ऽ सएवमानसेरमंते "
इतिज्ञानसंपन्नानामेवमानससेवासिद्धिस्तत्ररमणंचाम्नायते विद्यारण्यभाष्येप्यत्रमा-
नसमुपासनविशेषएवव्याख्यायि । अस्मद्ग्रंथेसेवेतिविशेष्यानुरोधान्मानसीतिस्त्रीलिं-
गनिर्देशःपदार्थस्त्वेकएव । तत्रैवाग्रे " प्राजापत्योहारुणि " रित्यनुवाके
" किंभगवंतःपरमंवदंती"तिपुत्रेणपृष्टःप्रजापतिःसत्यादीनितथात्वेनोक्त्वांते " मानसंवै-
प्राजापत्यंपवित्रंमानसेनमनसासाधुपश्यतिमानसाऋषयःप्रजाअसृजत मानसेसर्वंप्रतिष्ठि
तंतस्मान्मानसंपरमंवदंति " अयमेव साधनभक्तिबंधाभावब्रह्मज्ञानपरभक्तीनांपूर्वोत्त-
रभावक्रमःतत्रतत्रश्रीभागवतादिषुवर्ण्यते । यथातृतीयस्कंधे ( अध्याय २५ श्लोक
। ४३ । ४४ ) ज्ञानवैराग्ययुक्तेनभक्तियोगेनयोगिनः ॥ क्षेमायपादमूलंमेप्रविशं-
त्यकुतोभयं ॥ एतावानेवलोकेऽस्मिन्पुंसांनिःश्रेयसोदयः ॥ तीव्रेणभक्तियोगेनम-
नोमय्यार्पितंस्थिरमितिबंधाभावज्ञानरूपांगयुक्तभक्तियोगाद्धामाप्तिरूपामुक्तिरुक्ता ॥
तत्रैव ( अध्याय २७ श्लो० २८ ) मद्भक्तःप्रतिबुद्धार्थोमत्प्रसादेनभूयसेत्यादिना सा-
धनभक्त्यैवज्ञानंततश्चसोक्ता ॥ ( अध्याय ३२ श्लो० २३ ) वासुदेवेभगवतिभ-
क्तियोगःप्रयोजितः जनयत्याशुवैराग्यंज्ञानंयद्ब्रह्मदर्शनम् ॥ इत्यादिनाआरूढपदमी-
क्षतेइत्यंतेनधामाद्वैतसाक्षात्कारादिवर्णितं ( चतुर्थस्कंधे अध्या० ७ श्लो०४४ )
तन्मायार्थमभिपद्यकलेवरेऽस्मिन्कृत्वाममाहमितिदुर्मतिरुत्पथैःस्वैः क्षिप्तोप्यसद्विषय-
लालसआत्ममोहंयुष्मत्कथाऽमृतनिषेवकउद्व्युदस्येदितिश्रवणादिसाधनभक्त्या बंधव्यु
दासउदितःतत्रैव (अध्या.११श्लो०२९)तमेनमंगात्मनिमुक्तविग्रहेव्यपाश्रितंनिर्गुणमेक-

मज्वरमित्याद्युक्त्वा ( श्लो० ३० ) भक्तिविधायपरमांशनकैर्विद्याग्रंथिंविभेत्स्यसिम-
माहमितिप्ररूढमितितदेवाख्याथि ॥ तथा ( अध्या० १६ श्लो० २५ ) आराध्य-
भक्त्यालभतामलंतज्ज्ञानंयतोब्रह्मपरंविदंतीति ( अध्या० २२ श्लो० २५ ) हरेर्मुहु-
स्तत्परकर्णपूरगुणाभिधानेनविजृंभमाणया भक्त्याह्यसंगःसदसत्यनात्मनिस्यान्निर्गुणे-
ब्रह्मणिचांजसारतिः ॥ यदारतिर्ब्रह्मणिनैष्ठिकीपुमानाचार्यवान्ज्ञानविरागरंहसे-
त्यादि तथा (अ० २३ श्लो० ११) तस्यानयाभगवतःपरिकर्मशुद्धसत्वात्मनस्तदनुसं-
स्मरणानुपूर्त्या ज्ञानंविरक्तिमदभून्निशितेनयेनचिच्छेदसंशयपदंनिजजीवकोशमित्या-
दि (अध्या०२९ श्लो३६।३७।३८) अथात्मनोर्थभूतस्ययतोऽनर्थपरंपरा संसृतिस्तद्व्य-
वच्छेदोभक्त्यापरमयागुरौ ॥ वासुदेवेभगवतिभक्तियोगःसमाहितः सध्रीचीनेनवैरा-
ग्यंज्ञानंचजनयिष्यति ॥ सोचिरादेवराजर्षेस्यादच्युतकथाश्रयः । शृण्वतःश्रद्द-
धानस्यनित्यदास्यादधीयतइत्यादिना (श्लो.४०) तायेपिबंत्यवितृषइतिजीवन्मुक्ताना-
मपिभक्तिरुक्ता ॥ षष्ठस्कंधे ( अध्याय १६ श्लोक ६२ ) दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तः
स्वेनतेजसा ॥ ज्ञानविज्ञानसंतुष्टोमद्भक्तःपुरुषोभवेदिति ज्ञानविज्ञानोत्तरंभक्तिरुक्ता ॥
सप्तमस्कंधेप्रल्हादः ( अ०७ श्लो०३३ ) एवंनिर्जितषड्वर्गैःक्रियतेभक्तिरीश्वरे ॥ वा-
सुदेवेभगवतिययासंलभतेरतिमितिसाधनभक्तितःफलभक्तिंवक्ति किंचतपःश्रुतादीनां-
केवलानांभगवत्तोषहेतुत्वंप्रतिषिध्यभक्तेरेवतथात्वंवदतिसएवतत्रैव (अध्याय९ श्लो०
९ ), मन्येधनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ॥ नाराधनाय-
हिभवंतिपरस्यपुंसोभक्त्यातुतोषभगवान्गजयूथपाय ॥ तत्रैव ( श्लो० १८ ) सोहंप्रि-
यस्यसुहृदःपरदेवतायालीलाकथास्तवनृसिंहविरिंचिगीताः ॥ अंजस्तितर्म्यनुगृणन्गुण-
विप्रमुक्तोदुर्गाणितेपदयुगालयहंससंगइति ॥ ( अध्याय १० श्लो० ४५ ) धर्मोभाग-
वतानांचभगवान्येनगम्यते इति (अध्या०१२ श्लो० २१) यस्यनारायणोदेवोभगवा-
न्हृद्गतःसदा ॥ भक्त्याकेवलयाऽज्ञानंधुनोतिध्वांतमर्कवदितिभगवल्लीलाकीर्तनादि-
रूपयाकेवलयाभक्त्याभागवतधर्मैश्चसमूलाज्ञानस्यनाशोदर्शितः । अष्टमस्कंधेच ( अ-
ध्या० २४ श्लो० ४७-४८. ) जनोऽबुधोऽयंनिजकर्मबंधनःसुखेच्छयाकर्मसमीहतेसु-
खम् ॥ यत्सेवयातांविधुनोत्यसन्मतिंग्रंथिंसभिंद्याध्दृदयंसनोगुरुः ॥ ॥ ॥ य-
त्सेवयाग्नेरिवरुद्ररोदनंपुमान्विजह्यान्मलमात्मनस्तमः ॥ भजेतवर्गंनिजमेषसोऽव्ययो-
भूयात्सईशःपरमोगुरोर्गुरुः इति सेवयैवसउक्तः ॥ दशमस्कंधे ( अ० ७० )
नारदः ( श्लो० ३९ ) जीवस्ययःसंसरतोविमोक्षणंनजानतोऽनर्थवहाच्छरीरतः ॥ ली-
लावतारैःस्वयशःप्रदीपकंप्राज्वालयत्वातमहंप्रपद्ये । ( अध्या० ७४ श्लो० ५ ) नवैतेऽ-
जितभक्तानांममाहमितिमाधवत्वंतवेतिचनानाधीःपशूनामिववैकृतेति । एकादशस्कं-
धे (अध्या११ ॥ श्लो०२५) सत्संगलब्धयाभक्त्यामयिमांसउपासिता ॥ स-
वैमेदर्शितंसद्भिरंजसाविंदतेपदं ॥ तत्रैव (अध्या-१२ श्लोक० २४ एवंगुरूपासनयैक-

भक्त्याविद्याकुठारेणशितेनधीरः ॥ विवृश्च्यजीवाशयममत्तःसंपद्यचात्मानमथत्यजा-
स्त्रम् ॥ ( अध्याय० २० श्लोकं ३२ । ३३ ) यत्कर्मभिर्यत्तपसाज्ञानवैराग्यतश्चय
त् ॥ योगेनदानधर्मेणश्रेयोभिरितरैरपि सर्वमद्भक्तियोगेनमद्भक्तोलभतेऽञ्जसा ॥
स्वर्गापवर्गंमध्धामकथंचिद्यदिवांछतीति ॥ एवमादिष्वनेकत्रकेवलभक्त्यामोक्षधाम-
प्रवेशादिकमुदितं ॥ नचैवमपिसाधनरूपाफलरूपेतिभक्तिद्वैविध्यकल्पनेमानाभावः
शंक्यः ॥ एकादशस्कंधे ( अध्या३ श्लो० ३१ ) भक्त्यासंजातयाभक्त्याबिभ्रत्युत्पुल-
कांतनुमित्यादौपूर्वस्यां साधनरूपतायाद्वितीयस्यां तत्फलरूपतायाश्चस्पष्टमे-
वप्रतीतेः ॥ किंचतत्र ( अ० २ कविवचनेषु श्लो० ३२ ) मन्येकुतश्चिद्भयमच्यु-
तस्येतिभगवदुपासनस्यैवसर्वात्मनासंसारभयनिवर्तकत्वमुक्त्वा ( श्लो० ३४ ) येवै-
भगवतेत्यादिनाभक्तिमार्गायोपायैरविदुषामपिभगवत्प्रापकंकथयित्वातदुपायदिक्प्रदर्श-
नार्थं (श्लोक३६) कायेनवाचेतिसर्वसमर्पणं (श्लो०-३७) भयंद्वितीयेतिद्वैतभयनिवृत्त्य
र्थमनन्यभक्त्यासर्वतः सेवनंचविधायतत्कथंभावाकांक्षायांमनोनिरोधंजन्मकर्मश्रवण-
कीर्तनादिरूपांसाधनभक्तिंवर्णयित्वा(श्लो०४२४३) भक्तिःपरेशानुभवोविरक्तिरन्यत्रचैष
त्रिकएककालः ॥ प्रपद्यमानस्ययथाऽश्नतःस्युस्तुष्टिःपुष्टिःक्षुदपायोऽनुघासं ॥ इत्यच्यु-
तांघ्रिंभजतोऽनुवृत्त्याभक्तिर्विरक्तिर्भगवत्प्रबोधः ॥ भवंतिवैभागवतस्यराजंस्ततःपरां
शांतिमुपैतिसाक्षादित्युच्यते ॥ इहप्रपद्यमानस्येतिशरणागतिं अनुवृत्त्या अ-
च्युतांघ्रिंभजतइतितनुजवित्तजसेवांचोक्त्वाप्रथमांतभक्तिपदेनतत्फलभूताकाचित्पराभ-
क्तिर्विरक्तिशब्देनाहंत्वममत्वोपरतिः परेशानुभवभगवत्प्रबोधशब्दाभ्यामपरोक्षज्ञानंच-
स्पष्टमेवोक्तं ॥ फलत्रयेकालव्यवधानाभावबोधनायतुष्ट्यादिदृष्टांतश्चोदाहृ-
तः ॥ ॥ सर्वांतेद्वादशस्कंधेद्वादशाध्यायेऽपि ( श्लोक ५२ ) नैष्कर्म्यमप्यच्यु-
तभाववर्जितंनशोभतेज्ञानमलंनिरंजनं ॥ कुतःपुनःशश्वदभद्रमीश्वरेनह्यर्पितंकर्मयद-
प्यनुत्तमम्मितिपुरुषोत्तमभक्त्यसंपादकंकेवलाक्षरजषांनिरस्ताविद्यमपिज्ञानंविनिंद्य(श्लो-
५३) यशः श्रियामेवपरिश्रमःपरोवर्णाश्रमाचारतपःश्रुतादिषु ॥ अविस्मृतिःश्री-
धरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेरितिभगवत्यनर्पितानांसकामकेवलकर्मणांभ-
क्त्यसंपादकत्वात् परिश्रममात्रत्वंश्रवणादिरूपतनुजभक्त्यैवाविस्मरणंचोक्त्वा (श्लो०
५४ ) अविस्मृतिःकृष्णपदारविंदयोःक्षिणोत्यभद्राणिशमंतनोतिच ॥ सत्त्वस्यशु-
द्धिंपरमात्मभक्तिंज्ञानंचविज्ञानविरागयुक्तमितिस्पष्टमेवसाधनभक्तेःफलंबंधाभावोज्ञानं-
भक्त्यंतरंचोच्यते ॥ नचपाठक्रमात् ज्ञानंपरभक्तेरपिफलमितिवाच्यं ॥ पाठक्रमा-
दार्थक्रमस्यबलीयस्तायाः ( अध्याय ५ पाद १ सूत्र २ ) " अर्थाच्च " इत्यधिकर-
णेयवागूपाकादौसिद्धत्वात् ॥ अन्यथावैराग्यं ज्ञानस्यापिफलंस्यात् इहभक्तिःप-
रेशानुभवोविरक्तिरित्यत्रचतस्यतदुत्तरंनिर्देशात् ॥ इष्टापत्तौभक्तौतत्फलत्वेकः
प्रद्वेषः ॥ आर्थक्रमस्तुमद्भक्तिंलभतेपरामित्यादौसिद्धएव ॥ अस्मिन्नेवाध्याये-

(श्लो० ३) अत्रसंकीर्तितःसाक्षात्सर्वपापहरोहरिः ॥ नारायणोहृषीकेशोभगवान्सा-
त्वतांपतिरितिपुरुषोत्तमं ( श्लो० ४ ) अत्रब्रह्मपरंगुह्यंजगतःप्रभवाप्ययं ॥ ज्ञा-
नंचतदुपाख्यानंप्रोक्तंविज्ञानसंयुतम् ॥ भक्तियोगःसमाख्यातोवैराग्यंचतदाश्रय-
मित्यक्षरंब्रह्मज्ञानंविज्ञानंततोभक्तियोगश्चोक्तः ॥ अतोनकोऽपिशंकावका-
शः ॥ किंचगीतायामपि ॥ ( अ० १० ) इतिमत्वाभजंतेमांमित्युक्त्वाद-
दामिबुद्धियोगंतमित्यादिना अपरोक्षज्ञानंसंसारनाशश्चसाधनभजनादेवोक्तः ॥ द्वा-
दशाध्यायेपित्वस्यपुरुषोत्तमस्यभक्तानामक्षरोपासकानांचविशेषमुक्त्वा येतुसर्वाणि-
कर्माणीत्यादिनात्वानन्योपासकानांसंसारादचिरादुद्धरणंस्वयमुक्तमितिकृतंबहुना ।
इदंत्ववधेयं ॥ ( स्कं० ७ अ० ५ श्लो० २३ ) श्रवणंकीर्तनंविष्णोरित्या-
दिना ( अ० ११ श्लो० ११ ) श्रवणंकीर्तनंचास्यस्मरणंमहतांगतिः ॥
सेवेज्यावनतिर्दास्यंसख्यमात्मसमर्पणमित्यनेनचयेनवधासाधनभक्तिप्रकाराउक्तास्तेत-
नुजाभेदाएव ॥ तनुजवित्तजसेवयोः स्वरूपमानसंक्षेपस्तुमदीयाचिंतामणौ तनुजा-
वित्तजासेवातस्याःसाधनमुच्यते ॥ सर्वेंद्रियैःशुद्धभावात्तत्परैःसेवनाऽऽदिमा ॥४५॥
तदिच्छाप्तैःस्वसर्वस्वोत्थैःसेवावैभवैःपरा ॥ उभेअपिप्रमाणोक्तेप्रथमंतनुजायथा ॥
ऋग्वेदे ॥ ( अष्ट०२ अ०२ वर्ग२६ऋ०३ ) तमुस्तोतारःपूर्व्यं यथाविदऋतस्यगर्भंजनु-
षापिपर्तन ॥ आऽस्यजानंतोनामचिद्विवक्तनमहस्तेविष्णोसुमतिंभजामहे ॥ भागवते-
( स्कं. ९ अ. ४ श्लो. १८ ) सवैमनःकृष्णपदारविंदयोर्वचांसिवैकुंठगुणानुवर्णने
करौहरेर्मंदिरमार्जनादिषुश्रुतिंचकाराच्युतसत्कथोदये ॥ ( स्कं. २ अ. ३ श्लो. २१ )
शावौकरौनोकुरुतःसपर्यांहरेर्लसत्कांचनकंकणौवा ॥ ( स्कं० १० अ० १०श्लो०
३८ ) वाणीगुणानुकथनेश्रवणौकथायांहस्तौचकर्मसुमनस्तवपादयोर्नः ॥ स्मृ-
त्यांशिरस्तवनिवासजगत्प्रणामेदृष्टिःसतांदर्शनेऽस्तुभवत्तनूनां (स्कं०१०अ०८०श्लो०३)
सावन्ध्ययातस्यगुणान्गृणीतेकरौचतत्कर्मकरौमनश्च ॥ स्मरेद्वसंतंस्थिरजंगमेषुशृणोति-
तत्पुण्यकथाःसकर्णः ॥ ( स्कं०११अ०११श्लो०३९ संमंजनोपलेपाभ्यांसेकमंडलवर्त-
नैः ॥ गृहशुश्रूषणंमह्यंदासवद्यदमायया ॥ ( स्कं०११अ० १८ श्लो०२१ ) आदरःप
रिचर्यायांसर्वांगैरभिवंदनं ॥ इत्यादौप्रथमाप्रोक्ताद्वितीयाऽप्युच्यते यथा ॥ ( स्कं०
११ अ० ११ श्लो० ३५ ) मत्कथाश्रवणेश्रद्धामदनुध्यानमुद्धव ॥ सर्वलाभो
पहरणंदास्येनात्मनिवेदनम् ॥ ( स्कं० १० अ० ८१ श्लो० ४ ) पत्रंपुष्पंफलं
तोयंयोमेभक्त्याप्रयच्छति ॥ तदहंभक्त्युपहृतमश्नामिप्रयतात्मनः ॥ ( स्कं० ४
अ० ३१ श्लो० ९ ) तज्जन्मतानिकर्माणितदायुस्तन्मनोवचः ॥ नृणांयेनेहवि-
श्वात्मासेव्यतेहरिरीश्वरः॥ (स्कं०५अ० १९ श्लो० २१) मुकुंदसेवौपयिकंस्पृहाहिनः

तैत्तरीयचितिं":भर्त्तासन्म्रियमाणोबिभर्ति"गीतायोगक्षेमंवहाम्यहं ॥इत्यादावपरोक्तैते-एकीभूयसुदुर्लभां ॥ अकृत्यशेषांकुर्वीतदशर्मीप्रेमलक्षणां सर्वार्पणात्प्रवृत्तस्यतसेवनेप्रेम-निर्मलं भवेदेवगुणाभिधौहरैास्यान्मानसीनतःइतिदिक्इयंमानस्यैवश्रीभागवतादिषुसर्वा-त्मभावशद्बेनाप्युच्यते॥तत्त्वरूपंचभूमविद्यादिषुश्रूयतेनदेतज्ज्ञाप्यादितिवधेयं॥अधिकंग्रं-थांतरेषुद्रष्टव्यं ॥ एतेनयदिदेहवित्ताभ्यामित्यादिः.ज्ञानेनैवतत्प्राप्तिरित्यंतःप्रलापोपास्तः ॥ ज्ञानस्यपरभक्त्यंगत्वंविस्तरेणभक्तिमीमांसाप्रथमाध्याये ( सू० ७० ) " सानुरूयेतरा-पेक्षितत्वात् " इत्यादिना (सू० २६) "ब्रह्मकांडंतुभक्तौतस्यानुज्ञानायसामान्यात् " इ-त्यंतेनद्वितीयान्हिकेनसम्यङ्निर्धारितं ॥ मामेवयेप्रपद्यंतइतिवाक्यमपिशरणागत्यैवमा-यातरणं बोधयति ॥ प्रपूर्वकस्यपद्यतेरुपसर्गबलेनताद्दशार्थकत्वात् ॥ शंकराचार्यैरपि-गीताभाष्येऽत्र ॥ तत्रैवंसतिसर्वधर्मान्परित्यज्यमामेवमायाविनंस्वात्मभूतंसर्वात्मनाये-प्रपद्यंते " इतिर्व्याचक्षाणैःसर्वधर्मान्परित्यज्यमामेकंशरणंव्रजेतिचरमाध्यायवाक्यं-स्पष्टंस्मारयद्भिःशरणागतिरेवेहार्थःस्वीकृतः ॥ अतःशंकराचार्यविरुध्धार्थस्वीकारस्त्व-दुक्तरीत्यातवैवप्रमत्त्वंगमयति ॥ शरणागत्यासंसरणतरणंचाष्टमस्कंधे ( अध्याय २४ श्लो० ४६ ) अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ॥ यदृच्छये-होपसृतायमाप्नुयुर्विमुक्तिदोनःपरमोगुरुर्भवान् ॥ एकादशस्कंधे ( अध्याय १२ श्लो० १५ ) मामेकमेवशरणमात्मानंसर्वदेहिनां ॥ याहिसर्वात्मभावेनयास्यसेत्ह्यकुतोभयं ॥ मयास्याह्यकुतोभयइतिवापाठः। एवमादिष्वसंदिग्धमेवेत्यत्रापिसएवार्थः ॥ तेनए-तेनेत्यादिप्रतीतेश्चेत्यंतंनिरस्तं ॥ यच्चयत्त्वित्यादि निरतिशयत्वादित्यंतंतदबोधात ॥ अक्षरप्राप्तस्यापुनरावृत्तौपरप्राप्तस्यकैमुतिकसिध्धा मामुपेत्यतुकौंतेयपुनर्जन्मनविद्यते॥ सर्गेऽपिनोपजायंतेप्रलयेनव्यथंतिचेत्यादिवचनसिध्धाचसायुक्तैव ॥ आवृत्तिश्चदुः-खबहुलाऽध्रुवप्रापंचिकजन्मप्राप्तिरेव ॥ तेनसंपद्याविर्भावाद्यंगीकारेऽपिनसनिषिध्य-मानाऽऽवृत्तिशब्दवाच्यतयाशक्योवक्तुं ॥ अतएवभगवान् । अनन्यचेताःसततमि-तिस्वप्राप्तिमुक्त्वामामुपेत्यतुकौंतेयेत्यतःपूर्वमेव ॥ मामुपेत्यतुकौंतेयदुःखालयमशाश्व-तं। नाप्नुवंतिमहात्मानःसंसिध्धिपरमांगताइत्युक्तवान् ॥ परमांसंसिध्धिलीलाप्रप्ति-रूपांमुक्तिं ॥ माध्यंदिनानांपंचाग्निविद्यायां ( कां० १४ अ० ९. १. १७ शतपथप० ११०१ ) " तेषुब्रह्मलोकेषुपराःपरावतोवसंति तेषामिहनपुनरावृत्तिर-स्ति " इतिपठ्यते ॥ अत्रब्रह्मलोकेषु अक्षरब्रह्मरूपेषुलोकेषुपराः स्वयंपुरुषोत्तमा-त्मकतांप्राप्ताःपरावतःपुरुषोत्तमात्मिकाःशाश्वतीः समाः वसंति तेषां इहप्रपंचे न पुनरावृत्तिः दुःखालयाशाश्वतजन्मरूपाऽस्तीत्यर्थः ॥ काण्वपाठे इहेतिपदा-भावेऽपिकाण्वबृहदारण्यकभाष्येशंकराचार्याः ॥ ( अ० ८ ब्राह्म० २ पृ० १०५८ ) " तेषांब्रह्मलोकंगतानांनास्तिपुनरावृत्तिरस्मिन्संसारे नपुनरागमनमिहेति-

शाखांतरपाठात् „ इत्यादि "तस्मात्" अस्मात्कल्पादूर्ध्वमावृत्तिर्गम्यतेइत्यर्थंव्याचक्षाणा-
स्तत्रापि इहपदावापंदर्शयंति ॥ छांदोग्ये ( पृ० २८२ ) षष्ठप्रपाठकेऽक्षिपुरुषवि-
द्यायां "एतेनप्रतिपद्यमानाइमंमानवमावर्तंनावर्तंते " इतिमानवावर्त्तावर्त्तनमेवनिषिध्य-
ते ॥ एतेनविद्वन्मंडनोक्तंसकलंसमर्थितं ॥ अक्षरपुरुषोत्तमयोस्तारतम्यमभेदश्चप्रा-
ङ्निर्णीतः ॥ एवंज्ञानिज्ञेयादक्षराद्उपास्यस्यपरस्योत्कर्षोऽपि ॥ मूलेचसप्रपंचितः ॥
शृगालेत्यादिकंतुभगवल्लोकनिंदाप्रलापमात्रम् ॥ मुक्तानामपिसिद्धानामितिवाक्य-
मपिब्रह्मसंपन्नानांज्ञानिनांमध्येपिपुरुषोत्तमपरायणःपरभक्तिमान्सुदुर्लभइत्यर्थकमेव ।
षष्ठस्कंधचतुर्दशाध्याये ( श्लो० २ ) देवानांशुद्धसत्वानामृषीणांचामलात्मनां ॥ भ-
क्तिर्मुकुंदचरणेप्रायेणोपजायतइतिज्ञानकारणसत्वशुद्ध्यादिशालिष्वपिपुरुषोत्तमभक्ते-
र्दौर्लभ्यमुक्त्वारजःसिवासंख्यातेषुप्राणिषुकेषांचिदेवश्रेयस्कत्वंचोक्त्वाप्रायोमुमुक्षव-
स्तेषांकेचनैवद्विजोत्तमाः ॥ मुमुक्षूणांसहस्रेषुकश्चिन्मुच्येतसिध्यति ॥ मुक्तानामपि-
सिद्धानां इत्याद्युच्यते अत्रकुटुंबवासनादिरहितामुमुक्षवएषणात्रयाद्युत्थिततयाभि-
क्षुचर्यार्हाःपूर्वमेवोक्ताः ॥ अतोलक्षणाक्लेशोनिर्मूलः । ( चतुर्थस्कं० अ० ९.
श्लो० १० ) यानिर्वृतिस्तनुभृतांतवपादपद्मध्यानाद्भवज्जनकथाश्रवणेनवास्यात् ॥
साब्रह्मणिस्वमहिमन्यपिनाथमाभूत्किंत्वंतकासिलुलितात्पततांविमानादित्येवमादिषु-
ब्रह्मनिष्ठापेक्षयापरभक्तस्योत्कर्षस्स्पष्टएव ॥ नचापिशब्दबलेनमुक्तेतरापेक्षये-
त्याद्यर्थःकल्प्यः ॥ तद्बलेनतादृशार्थस्यकथमपिसंभवाभावात् ॥ कल्पनेमा-
नाभावात् ॥ तपस्विभ्योधिकोयोगीतिवाक्येपिशांकरगीताभाष्यादौतथाव्याख्यान-
स्यादर्शनात् ॥ वस्तुतस्तुमुक्तेष्वपिदौर्लभ्येकिमुतामुक्तेष्वितिद्योतनार्थोऽपिशब्दः॥
तपस्व्यादित्रयादुत्कृष्टयोगिष्वपिपुरुषोत्तमभक्तस्यैवोत्कर्षोयोगिनामपिसर्वेषामित्यग्रि-
मवाक्येस्पष्टीकृतः ॥ अतएवशांडिल्यसूत्रेष्वपितद्वाक्यमेवादृत्य (अ०१ सूत्र२२ २३)
" तदेवकर्मिज्ञानियोगिभ्यआधिक्यशब्दात् ॥ प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेः „
इतिसर्वतउत्कृष्टत्वंनिर्णीतं ॥ अर्थवादाअपिस्वार्थेप्रमाणमित्यसकृदवोचाम ॥ यो-
वेदेतिश्रुतिःप्रागेवविवृता ॥ यावानर्थइतिवाक्यंचनतत्समानार्थमितिवक्ष्यामः ॥
कानिचिदस्मद्ग्रंथवाक्यानिपुराणवाक्यत्वेनजानन्सर्वज्ञंमन्यउपहसनीयोऽसि ॥ ली-
लास्वादस्येतरापेक्षयोत्कर्षंश्रुत्यादिसंमतमदोदृशामदर्शयिष्यामश्च ॥ एतेनमुक्ताना-
मित्यादिविरोधाद्वेत्यलमित्यंतंखंडितं ॥ अधिकंमूलेस्पष्टं ॥

यदपियत्त्वित्यादिना टीकाकृदुक्तंकिंचिदनूद्यतन्नेत्यादिना-
अस्मिन्मार्गइत्यादिनोक्तानांपदार्थानामेवशास्त्राप्रसिद्धतयातत्क-
मस्यशास्त्रीयत्वाभावेविप्रतिपत्त्यभावादितिजगाद तत्रसम्प्र-

व्योमार्गइत्यादिनोक्तेषुमार्गरुचिशरणागत्याचार्य्यकृष्णादिषुप-
देषुकस्यार्थःशास्त्रेनप्रसिद्धः एषनिष्कंटकःपंथामामेकंशरणंव्र-
जआचार्य्यवान्पुरुषोवेदेत्यादौसर्वेषांपदार्थानांप्रसिद्धत्वात्तस्मा
च्छास्त्राभ्यासेत्वयायत्नःकर्त्तव्योविनाशास्त्राऽभ्यासंप्रलपन्नुपेक्ष्यो
सियत्तुभगवत्कृपांकुरस्योद्बोधंप्रतिहेतुत्वेऽपसिद्धांतईश्वरेच्छा-
यास्तन्मतेहेतुत्वात् द्वारभूतेत्यादित्वसंगतं समित्पाणिःश्रोत्रियं-
ब्रह्मनिष्ठमित्यादिश्रुतिविरोधादित्याद्युक्तं तदपितुच्छं भगवत्कृ-
पायाइच्छाविशेषरूपायाईश्वरेच्छाभिन्नत्वेमानाभावात् किं-
चघटस्यजलाहरणंप्रत्यन्नस्यतृप्तिंप्रतिहेतुत्वेपीश्वरेच्छायास्त-
त्रतत्रहेतुत्वस्वीकारेण नतस्याहेतुत्त्वापलापःसंभवति श्रीमदा-
चार्य्यकुलस्यद्वारभावोपिसमित्पाणिःश्रोत्रियंब्रह्मनिष्ठमित्या-
दिश्रुत्युक्तमार्गेणोपसन्नस्यैवेतिनतादृशश्रुतिविरोधः अतएवतत्र-
गुरुणापि " यमेवैषवृणुतेतेनलभ्यः " अप्रमत्तेनबोद्धव्यंशरवत्त-
न्मयोभवेदित्यादिनाशरणागतिरेवोपदिष्टेति ॥

सहस्राक्षेयत्तट्टीकाकृतेत्यादिंश्रुतिविरोधादित्यंतंभागंखंडयंति ॥ यदपी-
त्यादिना उपदिष्टेतीत्यंतेन ॥ अयंभावः । तेनानूद्यमानेषुटीकाभागेषुसर्वोत्त-
मत्वभावनमित्यादौदृढत्वभावनमित्यादयःपाठभेदास्तुतत्रतत्रप्रायेणोपेक्ष्यंते ॥ यत्तुत-
न्नेत्यादि अभावादित्यंतंतदबोधात् । तत्रोक्तानांभगवन्मार्गतद्रुचिप्रभृतीनांश्रीभाग-
वतादिशास्त्रप्रसिद्धत्वात् । तत्र ( स्कंध ४ अ० २ श्लो० ३१) एषएवहिलोकानांशि-
वःपंथाःसनातनः ॥ यंपूर्वेचानुसंतस्थुर्यत्प्रमाणंजनार्दनः ॥ तद्ब्रह्मपरमंशुद्धंसतां-
वर्त्मसनातनमिति । ( स्कंध ३ अध्याय २९ श्लो ७) भक्तियोगोबहुविधोमार्गैर्भा-
मिनिभाव्यते ॥ एवमादौभक्तिमार्गस्यवर्णनं ( स्कंध ४ अ० २९ श्लो० ४६ ) यदा-
यमनुगृह्णातिभगवानात्मभावितः ॥ भक्तिसूत्र ( अध्या २ आ० १ सू० ४९ ) " मु-
ख्यंतस्यहिकारुण्यं " एवमादौकृपायाएवसर्वनिदानत्वं (स्कंध १ अ० ५श्लो २५)
एवंप्रवृत्तस्यविशुद्धचेतसस्तद्धर्मएवात्मरुचिःप्रजायते ॥ इत्यादौतद्रुचिः ( स्कंध ३
अध्याय २३ श्लो० ५५ ) संगोयत्संसृतेर्हेतुरसत्सुविहितोऽधिया सएवसाधुषुकृतोनिः-

संगत्वायकल्पते ॥ (अध्या०२५ श्लोक०२४)तएतेसाधवःसाध्विसर्वसंगविवर्जिताः ॥ संगस्तेष्वथतेप्रार्थ्यःसंगदोषहराहितेइत्यादौसत्संगस्यश्रेयोहेतुता ॥ छांदोग्येश्वेतकेतुविद्यायां "आचार्यवान्पुरुषोवेद" । ( स्कं०११अ०२ श्लो० ३७ तन्माययातोबुधआभजेत्तंभक्त्यैकयेशंगुरुदेवतात्मा ॥ ( अ०१८ श्लो ३८ ) अजिज्ञासितमद्धर्मोगुरुंमुनिमुपाव्रजेत् ॥ ( स्कंध११ अ०३ श्लो०२१ ) तस्माद्गुरुंप्रपद्येतजिज्ञासुःश्रेयउत्तमम् ॥ शाब्देपरेचनिष्णातम्ब्रह्मण्युपशमाश्रयम् इत्यादौगुरुद्वाराप्रवेशः ॥गीता(अ०१८)सवर्धर्मान्परित्यज्यमामेकंशरणंव्रज ॥ ( स्कं ११ अ० ५ श्लो० ४१ ) देवर्षिभूताप्तनृणांपितॄणांनाकिंकरोनायमृणीचराजन् ॥सर्वात्मनायःशरणंशरण्यंगतोमुकन्दंपरिहृत्यकर्त्तम् ॥ ( अ० १२ श्लो० १५ ) मामेकमेवशरणमात्मानंसर्वदेहिनां ॥ याहिसर्वात्मभावेनमयास्याह्यकुतोभयः ॥ यास्यसेह्यकुतोभयमितिवापाठः ॥ इत्यादौशरणागतिः ॥ भजंत्यनन्यमनसः । ससर्वविद्भजतिमामित्यादौशुध्धश्रीकृष्णभजनंचसिध्धमेवेतिशास्त्रीयत्वएवनविप्रतिपत्तिः ॥ कृपायां परदुःखप्रहाणेच्छारूपायामिच्छात्वानपायात्किंचेत्याद्यपास्तं ॥ सत्संगादिकारणपरंपरास्वीकारेपीशेच्छायाघटादिकंमतं वनिदामत्वमक्षतं द्वारभूतेत्यादितुसंगततममेव ॥ मुंडकश्रुत्यादिभिरेवकारादिनागुरूपसत्तेरावश्यकतायाबोधनात् । आधुनिकगुरुषुतत्रतत्रोक्तश्रोत्रियत्वब्रह्मनिष्ठत्वादीनामशेषाणामेकत्राप्यत्यक्षत्वाच्छास्त्रविरोधवारणायतेषांद्वारभूतत्वमेवोच्यते ॥ तद्वाराश्रीमदाचार्यचरणाएवोपदिशंतीतिवस्तुतस्तेषामेवोपसत्तिः ॥ तेषुतुश्रुतिस्मृतिपुराणोक्तलक्षणानांसमन्वयोस्तीतिनकोपिविरोधः ॥ इदानींतनानांद्वारभूततायाअन्यनादरेसंपूर्णलक्षणशालिगुरोःसंप्रतिसर्वमार्गेष्वलभ्यप्रायतयाभक्त्यादिसंप्रदायाएवोच्छिद्येरन् ॥

अतःशास्त्रोक्तानांयजनअध्यापनाद्यर्हब्राह्मणलक्षणानामशेषाणमिदानींतनेषुदुर्लभतमत्वेऽपियउपलभ्यंतेतैरेवतत्तत्कर्मनिर्वाहइवपरमपुरुषार्थरूपभगवद्भक्तिनदीक्षादिनिर्वा-

---

## सहस्राक्ष.

यत्तु टीकाकृता भगवत्कृपाङ्कुरस्य स्वतः संस्कारेण भगवन्मार्गीयसंगाविनावोद्बोधो मार्गेऽस्मिन् रुचिस्ततोऽस्मिन्प्रवेशेच्छा तत्राप्यङ्कुरस्य दृढत्वेऽस्मिन्मार्गे दृढत्वभावनं ॥ प्रवेशश्च द्वारभूतश्रीमदाचार्यकुलगुरुद्वारा शरणागतिस्ततः शुद्धंकृष्णं भजेदित्युक्तं ॥ तन्न युक्तम् ॥ अस्मिन्मार्गे इत्यादिनोक्तानांपदार्थानामेव शास्त्रप्रसिद्धतया तत्क्रमस्य शास्त्रीयत्वाभावे विप्रतिपत्त्यभावात् ॥ किञ्च भगवत्कृपाङ्कुरपदबोध्यस्योद्बोधंप्रति तस्यतस्य हेतुत्वं वक्तोऽपसिद्धान्तः ॥ ईश्वरेच्छामात्रस्य त्वन्मते तत्रापि हेतुत्वात् ॥ द्वारभूतेत्यादित्वसङ्गतं ॥ समित्पाणिःश्रोत्रियंब्रह्मनिष्ठमित्यादिश्रुतिविरोधात् ॥

ह्रोद्वारभूतैरवश्यंकर्तव्यः ॥ एतच्चसर्वमुपदेशशंकानिरासवादेश्रीपुरुषोत्तमचरणैस्सति-स्थांतमार्तंडमयाचप्रपंचितमितिततोऽवधेयं ॥ विनेति शास्त्राभ्यासंविना अथवा (स्कं० १० अ० ४ श्लो० ४६) आयुःश्रियंयशोधर्मलोकानाशिषएवच ॥ हं-तिश्रेयांसिसर्वाणिपुंसोमहदतिक्रमइतिश्रीभागवतादिषुस्मरणात्तद्विनाशस्यात्रभूतम-भ्यासमभिव्यतःक्षेपं । तत्रगुरुणेति मुंडकेअंगिरसा “ यमेवैषवृणुतेतेनलभ्यः ॥ प्रण-वोधनुःशरोह्यात्माब्रह्मतल्लक्ष्यमुच्यते ॥ अप्रमत्तेनवेध्धव्यंशरवत्तन्मयोभवेत् ” इ-त्यादौवर्णगम्यात्कृपातन्मयत्वगम्यातदेकमतिपत्तिश्चेत्यादिकंदर्शितमित्यर्थः ॥ शरणा-गतिरेवेत्येवकारोऽप्यर्थे ॥

ब्रह्मभावादुत्तरमपिफलांतरस्य “ योवेदसोश्नुतेसर्वान्का-मान्सहे ” त्यादिश्रुतिसिद्धत्वाद्यत्त्वित्यादिकमसंगतं ॥ यच्च ( यमेवैषवृणुतेतेनलभ्यइतिश्रुतावेवकारोज्ञानिनो-निरासायेतितन्नज्ञानीत्वात्मैवमेमतमितिभगवदुक्त्याज्ञानिन-आत्मत्वेनप्रतीयमानत्वा ) दित्युक्तं तदपिनशोभनं “ ना-यमात्माप्रवचनेनलभ्योनमेधयानबहुनाश्रुतेनेत्यादिनानिषेधंकृ-त्वावरणमात्रलभ्यत्वप्रबलश्रुतिविरोधेनतादृशस्थलेज्ञानिप्रशं-साप्रतिपादकत्वकल्पनात् विरोधेत्वनपेक्षंस्यादसतिह्यनुमान-मितिन्यायाच्च श्रुतेरसंजातविरोधत्त्वात् मुक्तिंददातीति-वाक्याद्भक्तेर्ज्ञानादिभ्यआधिक्यनिश्चयात् नचतस्यस्तुतिप-रत्वमितिवाच्यं तथात्वेप्याधिक्यबोधकत्वानपायात् पृथकर-णंचपुनर्जीवरूपेणाविर्भावः सचभेदाभावेपिसंभवति तेनतत्तु-वास्तवभेदाभावइत्यसंगतं पृथक्त्वमपिनभेदादन्यदितियदुक्तं तदपिनकिंचित् अन्योन्याभावतोनास्यचरितार्थत्वमिष्यते ॥ तस्मादयंपृथक्वेतिप्रतीतिर्हिविलक्षणेत्यादिनातस्यान्योन्याभाव-वैलक्षण्येप्रतीतेःप्रमाणतयोपन्यस्तत्वात् एतेनप्रमाणाभावादि-तिनिरस्तं यदपि “ संपद्याविर्भावःस्वेनशब्दादि ” तिसूत्रव्या-

ख्यानमस्मदुक्तरीत्यायत्त्वित्यादिनाकिंचिदनूद्यतन्न्युक्तमित्यादि-
नातत्रदोषप्रदर्शनं ( क्रियतेइतिपदाध्याहारेचगौरवात् प्रथमा-
न्तार्थस्यतिङ्तेनान्वयनियमोनसमूलोयेनक्रियतइतिपदमध्या-
क्रियतइत्युक्तं तच्चनहिक्रियाविनिर्मुक्तंवाक्यमस्तीतिभाष्यान-
वगमादधिगतपाणिनीयगोर्नद्वीयसर्वस्वइतिपूर्वप्रतिज्ञातंविपरी-
तत्वेनदर्शयति ॥ त्रयःकालाइत्यत्रावपिक्रियाध्याहारस्यपाणि-
नीयशास्त्रसंमतत्वात्त्रयःकालाइत्याद्यसंगतंस्वशब्दस्यपुरुषो-
त्तमबोधकत्वेप्रमाणाभावादितियदुक्तंतदपिनकिंचित् ब्रह्मवि-
दाप्नोतिपरमित्यत्रपरशब्देनपुरुषोत्तमस्यैवग्रहणं तस्यैवभगव-
ताअक्षरादपिचोत्तमइत्यादिनापरत्वेनप्रतिपादनात् तद्व्याख्या-
नरूपायांश्रुत्यपितस्यैवग्रहणंयुक्तंनान्यस्येतिशब्दादित्यनेन-
योवेदनिहितमित्यादिश्रुतिग्रहणेप्रमाणाभावइतिचेदेषसंप्रसादइ
तिश्रुतिग्रहणेतत्स्थस्वशब्दग्रहणेपिकिंप्रमाणमितितुल्यं केवल-
ज्ञानिनांलीलास्वादोनभवति ज्ञानोत्तरंभक्तियुक्तानांतुलीला-
स्वादोपिभवत्येव तेनकिंचेत्यसंगतं तेतुब्रह्मानंदनीताइतिश्लोक-
स्त्वस्मन्मतएवसंगच्छतेतद्व्याख्यानंतुसुबोधिन्यामाचार्यैःप्रतिपा
दितंग्रंथगौरवभयान्नात्रोक्तं तेनैवयस्त्वित्यादिकंनिरस्तमित्यल-
मत्यावेशेन॥ इति श्रीमन्मथुराधीशप्रभुचरणैकतानेनश्रीमत्प्रभु-
जिद्गोस्वामिस्थानस्थितेनश्रीमद्दीक्षितवंशमौक्तिकगोस्वामिश्री-
वल्लभात्मजश्रीविठ्ठलनाथेनविरचितेप्राभंजनाख्यग्रंथेमेघविस्ता-
रभंगोनामप्रथमोभागः ॥

टीका

सहस्त्रोक्षयत्तुब्रह्मभावमित्यादिस्पष्टमित्यंतंभागंपरिहरति ॥ ब्रह्मभावादुत्त-
रमित्यादिना यावत्पूर्वभागपूरणं ॥ अयमर्थः । यत्तुतेनतन्निर्मूलमित्या-

दिनिश्चयाञ्चेत्यंतमुक्तंतन्नयुक्तं । उध्धारादिवाधकप्रमाणानांत्वयानुक्तत्वादुक्तप्रमाणानांसमाहितत्वाद्ब्रह्मभावोत्तरमुध्धारेसंपद्याविर्भावाधिकरणस्यतद्विषयश्रुतीनांतेतु-ब्रह्मन्हृदमिन्यादिस्मृतीनांचप्रमाणत्वात् । फलांतरेसोऽश्नुतइत्यादिश्रुतीनांकौषीतकिपर्यंकविद्यादिश्रुत्यंतलग्नांब्रह्मभूतःप्रसन्नात्मेत्यादिस्मृतीनांपुराभणितपुराणवचसांचतथात्वात् । विरहक्लेशे " अतश्चतनूर्नतदामोअश्नुतेश्रितासइद्वहंतस्तत्समासत ". इत्यादिश्रुतीनां ( स्कं० १० अ० २९ ) श्लो० १० ) दुःसहःप्रेष्ठविरहेति ( स्कं ११ अ० १२ श्लो० १० ) निगाढभावेननमेवियोगतीव्राधयोऽन्यंददृशुःसुखायेत्यादिस्मृतीनांविरहतप्तस्यपुरुषोत्तमप्राप्तिबोधिकानांसत्त्वाच्च-भगवद्विरहेक्लेशत्वव्यवहारोलोकदृष्टिमात्रेण ॥ वस्तुतआनंदरूपःस्रः ॥ लोकेऽक्षुद्रेऽपिश्रृंगारेविरहंरसस्यैवेतरदलंरसस्यब्रह्मरूपत्वंचसाहित्यविदःसिध्धांतयंति ॥ स्पष्टंचेदंसाहित्यदर्पणतृतीयपरिच्छेदादौ ॥ किंपुनर्भक्त्यंगेभगवद्विरहे । अतएवभक्तिसूत्रकारः ( अध्याय २ सूत्र ४४ ) संमानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थप्राणस्थानतदीयतासर्वतद्भावाप्रातिकूल्यादीनिचस्म

---

## सहस्राक्ष.

यत्तु ब्रह्मभावंतुसंपाद्यपरमानुग्रहाद्विभुः गुहास्थितंस्वीयजीवंसमुद्धरतियत्नतः इत्युक्तोद्धृतौपरमक्लेशः इत्यादि जगाद ॥ तन्निर्मूलम् ॥ ब्रह्मभावादुत्तरमुद्धारफलान्तरयोः क्लेशस्य चोक्तप्रमाणविरुद्धत्वात् ॥ तत्सद्भावे प्रमाणाभावाच्च ॥ तस्यतावदेवचिरं तरतिशोकमित्यादिश्रुतिभिः कृतकृत्यत्वनिश्चयाच्च ॥ यत्तु ॥ यमेवैषवृणुतेतेनलभ्यइतिश्रुतावेवकारोज्ञानिनोनिरासायेति ॥ तन्न ॥ ज्ञानीत्वात्मैवमेमतमिति भगवदुक्त्या ज्ञानिनएव स्वीकृतत्वेन प्रतीयमानत्वात् ॥ मुक्तिंददातिसर्कर्हिचिन्नभक्तियोगमितितु भक्तियोगस्तुतिपरं नतु अक्षरार्थे तात्पर्यवत् ॥ अन्यथा भक्तियोगदानस्य सर्वथा निषेधेन तवाशैवोच्छिद्येत ॥ अनेकश्रुतिविरोधाच्च ॥ यत्तु समुद्धरतीत्यस्य पृथक्करोतीत्यर्थष्टीकाकृताकृतःतत्तुवास्तवभेदाभावादसंगतं ॥ पृथक्त्वमपिन भेदादन्यत्प्रमाणाभावाद्गौरवाच्च ॥ यत्तु संपद्याविर्भावःस्वेनशब्दादितिसूत्रेस्वोक्ते ब्रह्मभावोत्तरं फलान्तरसद्भावे, प्रमाणतयोपन्यस्तवान्व्याख्यातवांश्च ब्रह्मसंपद्य स्थितस्य जीवस्य अथवा सम्पद्येत्यत्रान्तर्भावितण्यर्थः तथाच ब्रह्मभावं संपाद्य स्वेन पुरुषोत्तमेनाविर्भावः क्रियते ॥ एवं कथमुच्यते तत्राह ॥ शब्दात् योवेदनिहितंगुहायांपरमेव्योमन्सोऽश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चितेति अत्र पुरुषोत्तमसाहित्येन सर्वकामोपभोगोजीवस्य निरूपितः सलीनस्योत्थरणंविना नसम्भवतीत्यस्मादुद्धरतीत्यर्थः॥ तथाच श्रीमद्भागवते तेतुब्रह्मन्हृदंनीतामग्नाःकृष्णेनचोद्धृताः ददृशुर्ब्रह्मणोलोकमित्युक्तमिति ॥ तन्न युक्तम् ॥ प्रथमव्याख्याने सम्पद्यर्थपृथक्कर्त्रध्याहारे स्थितपदाध्याहारेच द्वितीयव्याख्यानेणिजर्थकल्पने उभयत्र क्रियते पदाध्याहारेच गौरवात् ॥ प्रथमान्तार्थस्य तिङन्तार्थे ऽन्वयनियमोनसम्-

रणेभ्योबाहुल्यात् „ इत्याह अत्रैवत्वमैश्वरभाष्ये ॥ विरहोयश्चागोपीनां । विष्णु पुराणे ( अंश ५ अध्याय १८ श्लोक १७ ) गुरूणामग्रतोवक्तुंकिंब्रवीमिन- नःक्षमं ॥ गुरवःकिंकरिष्यंतिदग्धानांविरहाग्निना इत्याद्यास्मृतयोदर्शिताः ॥ " तस्यतावदेवचिरं " इतिश्वेतकेतुविद्यावाक्यंतुप्राङ्निर्णीतंनाप्युष्धारादिबाध- कं ॥ त्वद्रीत्यापिशरीरविमोक्षोत्तरमविलंबितसंपत्तिर्भातपादकंतदितिसंपत्त्युत्तरकालि- काविर्भावादौतेन किमायास्यति " तरतिशोकमात्मवित् " इतिभूमविद्यावाक्यं- चाविद्याकार्यस्यशोकस्यतरणंवक्ति ॥ नत्वानंदरूपस्यभक्त्यंगविरहस्य ॥ प्रत्यु- तभूमविद्यायामेवसर्वतआत्मादेशादौप्रभुचरणैःसविवृतइत्यधिकंतद्ग्रंथेभ्योज्ञेयं ॥ य- च्चयत्तुयमेवेत्यादिविरोधाच्चेत्यंतंतन्न ॥ यमेवेतिवाक्यंतृतीयमुंडकद्वितीयखंडेस्ति-

---

लोयेनक्रियतेइतिपदमध्याह्रियेत ॥ दशावताराहरेरित्यत्र विभागपरेत्वथःकालाइत्यत्रच तिङ- न्तार्थाभावात् तात्पर्याभावेन ज्ञायन्तामित्यादेरध्याहारायोगात्तदर्थाननुभवाच्च ॥ यस्यापि त- न्नियमाग्रहस्तन्मतेऽपि औत्सर्गिकभवतिपदाध्याहारं परित्यज्य क्रियतेइत्यस्याध्याहारे नमान- म् ॥ स्वशब्दस्य पुरुषोत्तमबोधकत्वे प्रमाणाभावाच्च ॥ शब्दादित्यनेन योवेदनिहितंगुहाया- मित्यस्यैवग्रहणे प्रमाणाभावाच्च ॥ तस्मात्स्वेनरूपेणेतिश्रुतिस्थस्वेनशब्दस्यतृतीयान्तस्य सूत्रे- स्वेनेत्यनुकरणम् ॥ तस्यच शब्दपदेन कर्मधारयःअनुकार्यादनुकरणस्य भेदान्वेनशब्दस्य सु- प्त्वमिति नतल्लुक् ॥ ततश्च एवमेवैषसंप्रसादोऽस्माच्छरीरात्समुत्थायपरंज्योतिरुपसम्पद्यस्वेनरू- पेणाभिनिष्पद्यते इति श्रुतिस्थतृतीयान्तस्वशब्दादितिसूत्रार्थः ॥ सच मुक्तस्येति स्वस्वरूपेणे- तिच अर्थात्तात्पर्याच्च लभ्यते ॥ नैवं तव किञ्चिद्भ्रमकं भाति ॥ किंच त्वन्मते ज्ञानिनोलीला- स्वादोनभवति किन्तूपासकस्य ॥ सोऽश्नुतेसर्वानितितुज्ञानिपरं नोपासकपरं॥ योवेदेत्युपक्रमात् ॥ ज्ञानिनश्च त्वन्मते न पुरुषोत्तमप्राप्तिरिति कथं पुरुषोत्तमेन सहेतिव्याख्यायते ॥ तस्माद्ब्रह्मणासह- इत्यस्य स्वस्वरूपभूतेन ब्रह्मणा युगपदित्यर्थः ॥ सचकमित्यादौ सशब्दस्थानिनः सहशब्द- स्य युगपदर्थतायाः प्रसिद्धत्वात् ॥ कामानां सर्वेषामपि ब्रह्मणोऽभिन्नत्वाद्ब्रह्मावाप्तौ तदवा- प्तेःसुलभत्वात् ॥ अतएव यावानर्थउदपानेसर्वतःसंप्लुतोदके तावान्सर्वेषुवेदेषुब्राह्मणस्यविजा- नतः इत्यनेन तुल्यार्थता ॥ त्वन्मतेतु सर्वपदसंकोचः स्यादतीतादिकामानुपभोगात् ॥ य- स्तु भागवतश्लोकः सोऽपि न त्वदुक्तार्थकोगोपानां पुनरागमनदर्शनात् तस्माद्दर्शयामासलोकं- स्वमित्युक्तत्वकथंभावाकांक्षायांतेतुब्रह्मह्रदंनीतामग्नाब्रह्मणोलोकंददृशुः ॥ पुनश्चब्रह्मह्रदात्कृ- ष्णेनोत्धृताइत्युक्तम् ॥ अक्रूरोयत्र दृष्टवांस्तस्य यमुनाह्रदस्यब्रह्मह्रदइतिनामेत्यादि श्रीधरकृत- तट्टीकायां स्पष्टम् इत्यलम् ॥ ११ ॥ ४४ ॥ इतिश्रीपरमहंसपरिव्राजकाचा- र्यश्रीमत्स्वरूपानन्दस्वामिशिष्यश्रीमत्सदानन्दस्वामिकृतेसहस्राक्षग्रंथेमेघविस्तारोनामप्रथमोभागः समाप्तः ॥ १ ॥ ॥६॥ ॥

तत्र " सवेदैतत्परमंब्रह्मधामयत्रविश्वंनिहितंभातिशुभ्रं ॥ उपासतेपुरुषंयेह्यकामास्तेशु-
क्रमेतदतिवर्ततिधीराः॥ " इतिधाम्नोऽक्षरतःपरंपुरुषं " दिव्योह्यमूर्तःपुरुषः" इतिप्रागुक्तं
पुरुषःसपरःपार्थेत्यादिस्मृतिप्रसिध्धंपुरुषोत्तमंयेअकामा कैवल्यमोक्षमर्थंनिच्छंतउपास-
तेभजंतितेधीराः विरहाद्विसोढारःशुक्रंशुक्लंनिरविद्यं एतत् प्रागुक्तमक्षरं अतिवर्तंति ।
संपद्याविर्भावादतिक्रम्यपरंगच्छंति ॥ इतिपुरुषोत्तमंतदुपासनंप्रक्रम्यद्वितीयाँच प-
रोपासकस्यपुरुषोत्तमएवसर्वकामसमाप्तिमुक्तापद्यते "नायमात्माप्रवचनेनलभ्योनमेध-
यानबहुनाश्रुतेन यमेवैषवृणुतुतेतेनलभ्यस्तस्यैषआत्मावृणुतेतनूंस्वा " इति । अत्र अ-
यंप्रागुक्तपुरुषाख्यइत्यात्मविशेषणमक्षरव्यावर्तनाय केवलज्ञानसाधनानिचश्रवणादी-
नि । तत्रमुख्यतयानिदिध्यासनवदधिकारकप्रवचनस्यमननहेतुमेधायाःश्रुतस्यचनि-
षेधार्थंकृतेकेवलैस्तैःपरलाभोनिषिध्धः । अतोयमेवेत्येवंकारःकेवलज्ञानिव्यवच्छेदा-
र्थंइतियुक्तमेव ॥ तनूंस्वामितिरूपोपयोगोऽपिभक्तस्यैव ॥ एतदग्रे " नायमात्माब-
लहीनेनलभ्योनचप्रमादात्तपसोवाप्यलिंगात् ॥ एतैरुपायैर्यततेयस्तुविद्वांस्तस्यैष-
आत्माविशतेब्रह्मधाम ॥ " इत्यादौविदुषोऽप्युपायैर्यत्नः । भक्तिरूपंबलंसत्त्वा-
भिभवजन्यप्रमादाभावः । भक्तिलिंगंसंतापश्चेत्यादिकमपितथैवसतिसंगच्छते एवं-
कठवल्लीष्वपिद्वितीयवल्ल्यांयमेवेतिवाक्यमस्ति । तत्रापि ( स्कंध ६ अ० ३
श्लो० २१ ) द्वादशैतेविजानीमोधर्मंभागवतंभटाः ॥ गुह्यंविशुध्धंदुर्बोधंयंज्ञात्वामृत-
मश्नुतइत्यादिपुराणोपबृंहितं " कस्तंमदामददेवंमदन्योज्ञातुमर्हती „ त्यादिकंपर-
भक्तिज्ञापकमस्तीत्युक्तमेवयुक्तं ॥ ज्ञानीत्वात्मैवेतिगीतावाक्यंतुचतुर्विधाभजंतेमा-
मित्युपक्रमात्तेषांज्ञानीनित्ययुक्तएकभक्तिर्विशिष्यतइत्यादिमध्यमवाक्याच्चासंदिग्ध-
मेवज्ञानिभक्तपरं ॥ नतुत्वदिष्टार्थकं ॥ अत्रमूलेसमाधिस्तुपिशाचःपिशाचभाषयेतिन्या-
याश्रयात् । वस्तुतस्तुगीताश्रुत्यर्थनिर्णायिकेतिसिध्धंनिबधादौ ॥ (स्कं५ अ०६ श्लो०
१८ ) राजन्पतिर्गुरुरलंभवतांयदूनांदैवंप्रियःकुलपतिःक्वचकिंकरोवः ॥ अस्त्वेवमङ्ग-
भगवान्भजतांमुकुंदोमुक्तिंददातिकर्हिचित्स्मनभक्तियोगं इतिवाक्यंतुज्ञानांगतया-
भक्तिंकुर्वद्भ्योमुक्तिंददाति नतुफलरूपभक्तियोगमित्यर्थकं । तस्यस्तुतिमात्रपरत्वं-
श्रीधरस्वामिभिरपिनिरस्तं । किंचतथात्वेप्यवास्तवस्तवस्यानिंदात्वादक्षरार्थेतात्पर्यं-
स्वीकार्यमेव ॥ अस्मत्तंत्रेऽर्थवादानामपिप्रामाण्यं निबंधावरणभंगपूर्वमीमांसाभा-
ष्यादौप्रपंचितं ॥ प्रकृतवाक्यापपाठोक्तिस्त्वज्ञानात् साधनभक्तेरवांतरफलं ज्ञानंमु-
ख्यफलंभक्तिंचमन्यमानानामनन्यमानसानामस्माकमनुग्रहसंभवादाशासफलैव ॥ तृ-
तीयस्कंधेपिपंचविंशाध्याये (श्लो० ३६) तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसू-
क्तैः ॥ हृतात्मनोहृतप्राणांश्चभक्तिरनिच्छतोमेगतिमण्वींप्रयुंक्तइतितदेवोक्तं । अत्रा-
ण्वीगतिर्मुक्तिरितिसर्वसंमतं ॥ एतदग्रे (श्लो० ३७) श्रियंभागवतींवास्पृहयंतिभद्रांपर-
स्यमेतेऽश्नुवतेतुलोके ॥ इत्यादिना (श्लो० ४०) भजंत्यनन्ययाभक्त्यातान्मृत्योर-

तिपारयेत्यंतेनानन्यभक्तानांलीलास्वादादिफलमुक्तमेव ॥ अत्रानेकश्रुतिविरोधइति-तुमनोरथमात्रं ॥ अत्रैवाशेषश्रुत्याशयविषयतायानवाष्यादिग्रंथपर्यालोचनेस्पष्ट-तयालाभात् ॥ अत्रकाश्चित् श्रुतयोविद्वन्मंडनसमाप्तावप्युक्ताः ॥ कठवल्लीष्वपि ( वल्ली॰ ५ ऋ॰ १२ ) " एकोवशीसर्वभूतांतरात्माएकंरूपंबहुधायःकरोती " तिभक्तकामपूरणार्थंस्वरूपस्यबहुधाकरणंयुच्यत्येत्यादावुपबृंहितमुक्ता ( ऋ॰ १३ ) नित्योनित्यानांचेतनश्चेतनानांएकोबहूनांयोविदधातिकामान् " इत्येकस्यैवमुक्तबहु-भक्तजीवकामपूरकत्वंतद्दर्शनाच्छाश्वतशांतिः ( ऋ॰ १४ ) " तदेतदितिमन्यंतेनिर्दे-श्यंपरमंसुखं " इतितादृशमुक्तेरगणितनिरतिशयानंदसाक्षात्काररूपत्वंचाभिधीयते ॥ भृगुप्रपाठकेपि " आनंदमयपुरुषोत्तमसंक्रमांनतरं " कामान्नीकामरूप्यनुसंचरन् । ए-तत्सामगायन्नास्ते " इतिकामाऽन्नत्वादिकंफलंश्राव्यते एवंभूमविद्यादिष्वनेकत्रद्रष्ट-व्यं ॥ एवंविधश्रुतिभागेष्वनुसंचरणादिकंभजनरूपमेवेतिदिक् ॥ उद्धरणंतुपृथक्कर-णंनचपृथक्त्वंभेदः ॥ तार्किकैरपिपृथक्त्वंगुणविशेषः । भेदोऽभावविशेषइतिस्वीका-रात् । ( कारिका॰११५ ) अन्योन्याभावतोनास्यचरितार्थत्वमिष्यते ॥ तस्मादयंपृथ-क्त्वेतिमतौतर्हिविलक्षणेनिर्गुणनिरूपणेविश्वनाथपंचाननेनोभयोर्विलक्षणानुभवरूपमा-नमदर्शि अत्रमुक्तावल्यामपितेन " ननुशब्दवैलक्षण्यंनार्थवैलक्षण्यमितिचेन्नविनार्थ भेदं घटात्पृथगितिवद्धटोनेत्यत्रापिपंचमीप्रसंगात् तस्मादवधित्वयोगेपंचमीसोर्थोनञर्था-न्योन्याभावतोभिन्नोगुणान्तरंकल्प्यते,, इति वस्तुतस्त्वत्रमार्तंडकारिकायामुद्धरणंतट्टी-कायांपृथक्करणंचसंपत्त्युत्तरंपुनरक्षराद्विभागरूपआविर्भावएवविवक्ष्यते ॥ सूत्रकृताऽऽ-विर्भावस्यैवाभिधानात् ॥ एतेनयत्त्वित्यादि गौरवाच्चेत्यंतंनिरस्तं यच्चसंपद्याविर्भाव-सूत्रस्यव्याख्यानंमार्तंडटीकास्थंकिंचित्पाठभेदेनानूद्यतद्दूषणायतन्नयुक्तमित्यादि प्र-माणाभावाच्चेत्यंतमुक्तंतदेवनयुक्तं ॥ अत्रहिविषयवाक्यंनब्रह्मवल्लीमात्रं । अपितूत्त-रदहरविद्यादिकमपिब्रह्मवल्ल्यांसंपत्तेर्वाचनिकत्वाभावात् ॥ अतस्तादृशविषयवाक्यो-पस्थापनायैवतत्स्थस्यसंपद्येतिपदस्यनिर्देशः ॥ किंचसंपत्तेःसाधनसाध्यतयातत्रजी-वस्यैवकर्तृत्वाज्ज्ञानमार्गेऽपितौल्यात्पुरुषोत्तमस्यतत्रानुपयोगादपितथानिर्देशः ॥ अ-न्यथासंपाद्येत्येववदेत् ॥ केषुचिच्छांकरभाष्यपुस्तकेषुतुसंपाद्याविर्भावइत्यपिपाठोद्द-श्यते ॥ सोऽप्यस्माकमनुगुणः । वस्तुतस्तुविषयवाक्यानुरोध्येवपाठःप्रामाणिकः ॥ अतःस्थितपदाध्याहारोनक्लेशः ॥ विषयवाक्येल्यपासंपत्तेः पूर्वकालिकत्वंलभ्यतेऽतः-संपद्यस्थितोभिनिष्पद्यतआविर्भवतीतितत्रापिस्थितेरार्थिकत्वात् ॥ समानकर्तृकतिङ्र-हितेषुत्वाल्यपूघटितेषुचित्रयुद्धंविलोक्याहंचापलादेत्यवंचितः तत्रासद्भिरिहोद्यद्भिःस्वे-डाहेषितबृंहितैरित्यादिवाक्येष्वनेकत्रस्थितपदाध्याहारस्यसुप्रसिद्धेश्च॥अध्याहारमात्र-स्यैवसूत्रेऽनादरणीयत्वे " सर्वत्रप्रसिद्धोपदेशात् ॥ कंपनात् " इत्याद्यधिकरणानिकथं योज्यानि ॥ किंतुजिज्ञासासूत्रेऽथशब्दमानंतर्यार्थकंकल्पयित्वातन्निरूपकतयाकैश्चि-

---

१ चंपूभारतेउत्तरगोग्रहे अर्जुनंप्रतिविराट्पुत्रस्योक्तिरियं

द्वेदाध्ययनमितरैःपूर्वतंत्राध्ययनमपरैःसाधनचतुष्टयंचाशक्यैकतरपक्षनिश्चयमध्याह्रि-
यते ॥ तादृशस्थलएवाध्याहारक्लेशः ॥ तथाचसाधनचतुष्टयाद्यध्याहारक्लेशान्सुखेनस्वी
कुर्वन्नत्यंताध्याहारैरानंदमयाद्यधिकरणान्यप्यन्यथानयन्किमित्यक्लिष्टंवृथाक्षिपसि ॥
एवंसंपद्येत्यस्यान्यथासंगत्यनुपपत्त्या । एषसंप्रसादइतिश्रुतावपिसंपद्यर्थंप्रतिजीवस्यै
वकर्तृतयाप्रकृतेस्थितस्यजीवस्येत्यर्थादेवोपतिष्ठेत ॥ अन्यथाजिज्ञासासूत्रादौजिज्ञासु-
भिरित्यपिनसंबध्येत ॥ प्रकृतसूत्रेजीवात्मोपस्थितिस्तवाप्यावश्यकी ॥ एवं( अध्याय २
पाद३ सूत्र४१ ) “परात्तुतच्छ्रुते„ रितिन्यायेन कारयति मत्तः सर्वंप्रवर्ततइतिश्रुतिस्मृ-
तिभिश्चसर्वंप्रतिवस्तुतोभगवतएवप्रयोजकत्वादत्रांतर्भावितोण्यर्थइतिपक्षोपिनक्लिष्टः ॥
शंभ्वादिशब्देषुभवत्यादेरंतर्भावितण्यर्थतायाभट्टोजीदीक्षितादिभिरक्लेशतःस्वीकारात्अ-
तएवव्याख्यासुधाकारोपिशंभुरीशःपशुपतिरित्यत्र “ शंसुखंभवतिअंतर्भावितण्यर्था-
न्मितंद्र्वादित्वाड्डुः यत्तुशंभवत्यस्मादितिस्वामिमुकुटौ तन्नकर्तरिक्तोविधानादपादाने-
डुप्रत्ययाभावात् ” इतिव्याचष्टेसंपाद्येत्यनुक्त्वातथाप्रयोगस्त्वानुपूर्वीसाम्येन स्वार्थ-
स्याप्यपरित्यागेनचविषयवाक्यस्योपस्थापनाय ॥ वाक्यस्यक्रियाविनिर्मुक्तत्वासंभ-
वात्सूत्रेस्वेनेतितृतीयान्तकर्तृपदनिर्देशाच्चोभयत्रक्रियतइत्यध्याहारोपिनगुरुः । जिज्ञा-
सासूत्रादौकर्तव्यादिपदान्यध्याहरतांभवतांकेयमिहैवाक्षमा ॥ यच्चप्रथमांतार्थेत्याद्युक्तं
तेनभवतांजिज्ञासासूत्रएवाध्याहारासंभवोमतांतरेणतत्संभवेप्यौत्सर्गिकभवतिपदस्यस-
सिद्ध्येत् । नतुकर्तव्यपदस्यकथंचिदपिसः ॥ कर्तृबोधकतृतीयापदानुपादाना-
त् । विध्यर्थकप्रत्ययांतस्यैवाध्याहारकल्पनेमहागौरवाच्च ॥ ( अ०२ पा०३ सू०४६)
“प्रातिपदिकार्थलिंगपरिमाणवचनमात्रेप्रथमे „त्यत्रमहाभाष्ये “अथवाभिहितेप्रथमेत्ये-
तल्लक्षणंकरिष्यते „ इतितिङ्कृत्तद्धितसमासैरभिहितेकर्त्रादौप्रथमांस्वीकृत्यक्रियापदशू
न्येवृक्षःप्लक्षइत्यादावभिधानाऽभावात्प्रथमाया अनुपपत्तिमाशंक्य “ अस्तिर्भवन्ती-
परःप्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति । वृक्षःप्लक्षः । अस्तीतिगम्यते „ ॥ इ-
त्युच्यते । अग्रेअभिहितलक्षणेदोषमुद्भाव्य “ एवंतर्हितिङ्समानाधिकरणेप्रथमे-
त्येतल्लक्षणंकरिष्यते । तिङ्मानाधिकरणइतिचेत्तिङोऽप्रयोगेप्रथमाविधिः ॥ ॥
तिङ्समानाधिकरणइतिचेत्तिङोऽप्रयोगेप्रथमाविधेया । वृक्षःप्लक्षइति । उक्तंपूर्वेण ॥
॥ किमुक्तं । अस्तिर्भवन्तीपरःप्रथमपुरुषोऽप्रयुज्यमानोप्यस्तीति । वृक्षःप्लक्षः ।
अस्तीतिगम्यते „ । इत्युक्तं । एवंचतिङ्समानाधिकरणएवप्रथमायाविधानस्य-
भाष्यवार्तिकयोरुरीकारात्प्रथमान्तार्थस्यतिङन्तार्थेऽन्वयनियमःसमूलएव ॥ अ-
तएवात्रकैयटः “ एवन्तर्हीति । यथादेवदत्तःपचतीति ॥ प्रासादेआस्तइत्या-
दौतुवैय्यधिकरण्यात्प्रथमायाअभावः । तिङोऽप्रयोगइति । नहितिङंतपदप्रयोगम-
न्तरेणतत्सामानाधिकरण्यसद्भावः । उक्तंपूर्वेणेति । आक्षिप्तक्रियापदापेक्षंसामा-
नाधिकरण्यमस्ति „ । इतिसामान्यतआक्षिप्तक्रियापदापेक्षंसामानाधिकरण्यंवक्ति ।

नन्वस्तिपदार्थएवप्रथमान्तार्थान्वयनियमंदर्शयत्यतःक्रियतइतिपदाध्याहारोनायुक्तः ॥ अत्रविवरणे " उक्तंपूर्वेणेति । पूर्वग्रंथेनेत्यर्थः । पूर्वेणाऽचार्येणेतिकश्चित् " इत्यादिव्याख्यातम् ॥ इत्थंचपूर्वाचार्योक्तिरप्युक्तान्वयनियमेमूलम् ॥ भाष्येभवन्तीपरइत्यस्यतुभवतीवर्त्तमानत्वादिबोधकःकालस्तत्परइत्यर्थः (पा० ३सू० १२८)" तृभूवहिवसिभासिसाधिगडिमंडिजिनन्दिभ्यश्च " इत्यौणादिकसूत्रेणदशभ्योझच्प्रत्ययःसचषित् । तेनभवन्तःकालइत्युदाहृतम् । तरन्तीनौकेतिवत्षित्वात्ङीषिभवन्तीतिसिद्धम् ॥ औत्सर्गिकभवतिपदाध्याहारमितिसहस्राक्षोक्तिस्तुअस्तिर्भवतिःपरइत्यशुद्धपाठजनितभ्रममूलिका ॥ अतोदशावतारास्त्रयःकालाइत्यादावपिसन्तीत्यार्थिकंसंबध्यते । तथात्रापिक्रियतइति । अस्तिपदमात्राध्याहारेत्वेनेतिकर्त्तरितृतीयायाअसंगत्यापत्तेः । किंच ( अ० २ पा० १ सू० १ ) समर्थसूत्रेभाष्ये " आख्यातं साव्ययकारकविशेषणंवाक्यम् ॥ आख्यातं साव्ययं सकारकं सकारकविशेषणंवाक्यसंज्ञंभवतीतिवक्तव्यम् ॥ साव्ययं । उच्चैःपठति नीचैःपठति ॥ सकारकम् । ओदनंपचति ॥ सकारकविशेषणम् । ओदनंमृदुविशदंपचति ॥ सक्रियाविशेषणंचेतिवक्तव्यं । सुष्ठुपचति । दुष्ठुपचति ॥ अपरआहआख्यातंसविशेषणमित्येव । सर्वाणिह्येतानिक्रियाविशेषणानिएकतिङ् ॥ ॥ एकतिङ्वाक्यसंज्ञंभवतीतिवक्तव्यम् । ब्रूहिब्रूहि " इतिवाक्यलक्षणमुक्तंप्रथमलक्षणापेक्षयाऽऽख्यातंसविशेषणंवाक्यमित्येवमुख्यंलक्षणम् । इदंचलोकशास्त्रसाधारणम् यत्तुकैयटेनास्यंस्वशास्त्रेपारिभाषिकत्वमुक्तंतत्प्रमादादितिनव्याःअत्राऽख्यातपदंक्रियाबोधकपरंतेनत्वयाशयितव्यंभोक्तव्यमित्यादौतादृशसुबन्तघटितत्वेपिनाऽव्याप्तिः । विशेषणपदंचसाक्षात्पारंपरिकोभयपरंअतोनद्यास्तिष्ठतिकूलइत्यादौ पारंपरिकस्यापिनद्यादेःसमानवाक्येन्तःपातःकारकविशेषणानामपिपरंपरयाक्रियाविशेषणत्वमभिप्रेत्य " सर्वाणिह्येतानिक्रियाविशेषणानी " त्युक्तंभाष्यकृताइहवाक्यपदमेकवाक्यपरंपदानांभेदेसतिपरस्परसाकांक्षतयाविलक्षणवाक्यार्थबोधजनकत्वात् । अतएव ( अ० पा० सू० ) " अर्थैक्यादेकंवाक्यंसाकांक्षंचेद्विभागेस्या " दितिजैमिनीयमनुसृत्यलक्षितंहरिणा साकांक्षावयवंभेदेपरानाकांक्षशब्दकं ॥ क्रियाप्रधानंगुणवदेकार्थंवाक्यमुच्यतइति ॥ भेदेविभागे । अत्रक्रियैवप्रधानमितरत्सर्वंविशेषणतयागुणभूतम् । यच्चात्रकैयटः " आख्यातमितिचैकत्वंविवक्ष्यतेलक्षणविधानसामर्थ्यात् । पचतिभवतीत्यादौसत्यपिसाध्यसाधनभावेआख्यातयोर्द्वित्वात्समानवाक्यत्वाभाव " इति तन्नआख्यातत्वपर्याप्त्यधिकरणमेकमेवेतिप्रागुक्तभाष्यरीत्याएकत्वविवक्षायाःफलाभावादितिनव्याः । तथासतिब्रूहिब्रूहीतिभाष्यस्थंवाक्योदाहरणंनसंगच्छेताख्यातद्वित्वात्निर्विशेषणाख्यातमात्रेवाक्यत्वाभावाच्च देवदत्तेत्यध्याहारेणपूरणन्तुदूषितंशब्देन्दुशेखरादौ । एकस्मिन्वाक्येपचतिभवतीत्यादौकारकभावापन्नतिङन्तान्तरसंभव-

मभिनेत्य ( अ० ८ पा० १ सू० २८ ) " तिङतिङ „ इत्यत्राऽतिङ्ग्रहणंसंगच्छते तच्चप्रागुक्तवाक्यलक्षणंज्ञापयतितेनपश्यमृगोधावतीत्यादिषुवाक्यत्वव्यवहारोनिर्बाधः ॥ पचतीत्यादिमात्रेवाक्यत्वाभावादेकतिङीत्यत्रबहुव्रीहिःएवमभिप्रायादेवसुप्तिङंतचयोवाक्यमितिलक्षणेचयपदं । तिङ्पदंचात्रकारिकभावानापन्नमाख्यातत्वंपर्याप्त्यधिकरणंतिङन्तंवक्तीतिनाव्याप्तिः । इदमेवस्वशास्त्रपरिभाषितलक्षणमितिनव्याःततइदं " समानवाक्येनिघातयुष्मदस्मदादेशावक्तव्याः „ इत्याद्यर्थं । एवमभिप्रायादेव " तिङतिङ „ इत्यत्रातिङ्ग्रहणप्रत्याख्यायकं " अतिङ्वचनमनर्थकंसमानवाक्याधिकारात् „ इतिवार्तिकं ॥ अत्रैवभाष्ये " नचसमानवाक्येद्वेतिङंतेस्त „ इत्युक्तं ॥ एकतिङितिलक्षणमस्त्वशास्त्रेपारिभाषिकंसार्वत्रिकंवेतियथातथमास्ताम् ॥ परंनहिक्रियाविनिर्मुक्तंवाक्यंभवतीतित्वविवादंनिष्कृष्टंवाक्यस्वरूपंचोक्तममरसिंहेन ( कां० १ व० ६ श्लोक २ ) सुप्तिङंतचयोवाक्यंक्रियावाकारकान्वितेतिसुबंतचयःतिङंतचयश्चवाक्यंवाशब्दःसमुच्चये कारकान्वितक्रियाबोधकंघटमानयेत्यादितिङ्सुप्चयात्मकमपिवाक्यमितिव्याख्यासुधाकारादयःनागेशभट्टमतेतुवाशब्दश्चेदर्थेकारकंतुसुबंतवाच्यं क्वचित्तिङंतवाच्यं कारकान्विताक्रियाचेत् ॥ एतेननिरर्थकशब्दसमूहोव्यावर्त्यतेसुबंतचयस्तिङंतचयःसुप्तिङंतचयश्चवाक्यमित्यर्थः । आद्यः प्रकृतिसिद्धमिदंहिमहात्मनां त्वयाशयितव्यमित्यादिः । द्वितीयःपचतिभवतीत्यादिः पाकोभवतीत्यर्थः । तृतीयश्चैत्रःपचतीत्यादिः । घटमित्यादौपदमात्रेवाक्यत्वव्यावर्त्तनायचयपदं । एतत्सर्वंहलंतशब्देन्दुशेखरेसमर्थसूत्रउक्तभाष्यस्थलेविवरणेचस्फुटम् ॥ तार्किकादीनांघटमित्यादिमात्रेवाक्यत्वंकल्पनंतुसूत्रभाष्याद्यार्षग्रंथविरोधादुपेक्ष्यम् ॥ अतोत्रवाक्येक्रियैवप्रधानंइतरच्चसर्वंतत्रैवसाक्षात्परंपरयावायथायोग्यमन्वेतितत्रापिप्रथमान्तार्थोऽभेदेनतिङर्थेऽन्वेत्येवअनभिहितकर्त्तृकर्मणोस्तृतीयाद्वितीयाप्राप्त्यातिङंताभिहितयोरेवतयोःप्रथमासंभवात्भाष्येकंठरवेणतिङ्समानाधिकरणेतद्विनाधात् फलस्यव्यापारस्यवाश्रयएवतिङर्थतायाः " आश्रयेतुतिङःस्मृता "इत्यादावंगीकारात् । युक्तंचैतत् तंडुलःपच्यतेदेवदत्तःपचतीत्यादौतथाप्रतीतेः । यद्यद्बोधकंतत्तदर्थकमितिनियमात्नचाख्यातस्याश्रयेलक्षणा । तथासतिततोभावनायाअभानप्रसंगात् । तस्यांतस्यशक्तिकल्पनेतु ॥ युगपद्वृत्तिद्वयविरोधान्नसा ॥ नापि " आख्यातपदबोध्याभावनाकिंचिदाश्रिताविशेषणत्वेनगृहीतशक्तिकत्वाद्घटपदबोध्यघटत्ववत् " इत्यनुमानेनाश्रयलाभस्सुवचःव्याप्त्यादिप्रतिसंधानंविनाप्याश्रयबोधस्यानुभवात् । तस्मादाश्रयएवतिङर्थःअतएव ( अ० ३ पा० ४ सू० ६९ ) " लः कर्मणिचभावेचाकर्मकेभ्यः " इतिकर्मणिकर्त्तरिचलकाराः बोधकतारूपांतिबादिशक्तितत्स्थानिनिलकारेप्रकल्प्यविधीयन्तेकिंचपचतिदेवदत्तइत्यत्रदेवदत्ताभिन्नैककर्त्तृकोवर्त्तमानोव्यापारइत्यभेदान्वयस्यदर्शनादाकरसंमतत्वा-

च्चकर्तुस्तिङ्वाच्यत्वमावश्यकं पक्तापाचकोदेवदत्तइत्यादिकप्रयोगवत् ॥ नचाभे-
दबोधेसमानविभक्तिकत्वंतंत्रंनीलोघटइत्यादौतथादर्शनादितिवाच्यं सोमेनयजेतंस्तोकं-
पचतिराजपुरुषइत्यादावप्यभेदबोधाऽऽनापत्तेः ॥ एवं तंडुलाःपच्यंतइत्यत्रतंडुला-
भिन्नबहुकर्मकोवर्तमानः पाकानुकूलोव्यापारइतिबोधात्. फलाश्रयस्यापितिङ्वा-
च्यत्वंव्याख्यातंस्पष्टंचैतत्सर्वंवैयाकरणभूषणे । अतःप्रथमांतार्थस्यविकृतार्थेन्व-
यनियमः समूलएव । अन्यथावृक्षः प्लक्षइत्यादिमात्रस्यापिवाक्यत्वसिध्योदा-
त्ततचरभाष्यादिकंबाधितार्थंस्यात् ॥ नाप्यस्तिपदाध्याहारमात्रेणनिर्वाहः सर्वत्रशक्यः
क्रियापदाध्याहारस्थलेविवक्षितार्थानुकूलस्यश्रूयमाणपदकदंबाकांक्षापूरकस्यक्रिया-
पदस्यैवविज्ञैरध्याहरणात् ॥ इत्थंच ( तैत्तरीय कां० सं० १ प्रपा०. १ अनु०.
१ ) " इषेत्वोर्जेत्वा " इत्यादिषुक्रियारहितमंत्रेषुयथाआच्छिनद्मिसंनमया-
म्यनुमार्ज्मीत्यादितादृशमेवक्रियापदमध्याह्रियते अन्यथाद्वितीयायाअनन्वयप्रसंगात्
तथासूत्रेप्यस्तिपदाध्याहारेत्वेनेतिकर्त्तरितृतीयाया अनन्वयप्रसंगात्तद्वारणायतादृशं-
क्रियतइत्येवाध्याहर्त्तव्यम् । ( तैत्तरीयसं० कां० १ प्रपा. १ अनु ४ ) " इदंदे-
वानामिदमुनःसह " इत्यादिप्रथमान्तघटितनिष्क्रियमंत्रेष्वपिशूर्पेनिरुप्तमिदंदेवानामेव-
स्वमभिमृश्यते इदन्तुशकटस्थंदेवैःसहितानामस्माकंस्वंयागान्तराणामस्माभिःकरिष्यमा-
णत्वाद्रक्ष्यमाणत्वाच्चेत्याद्यर्थकेषुतत्तत्पदाध्याहारइवात्रापितदध्याहारः ॥ तत्रयथा
"इषेत्वोर्जेत्वेतितामाच्छिनत्त्यपिवेषेत्वेत्याच्छिनत्त्यूर्जेत्वेतिसंनमयत्यनुमार्ष्टिवा" इत्या-
पस्तंबकल्पः " इदंदेवानामितिनिरुप्तानभिमृशतीदमुनःसहेत्यवशिष्टान् " इतिकल्पश्चा-
ध्याहारनिश्चायकस्तथात्रापिसंपद्याविर्भावशब्दाभिधेयउद्धरणेभगवत्कर्तृकत्वबोधकं
" मग्नाःकृष्णेनचोद्धृता " इत्यादिवाक्यमित्यलं ॥ अयंक्रियतइतिपदाध्याहारोपपाद-
नप्रकारोत्रपराऽऽस्यनिर्गतस्यपराऽऽस्यताप्रकाशनायैवादर्शि॥ वस्तुतस्तुमार्तंडटीकायां
सौलभ्यायेदंसर्वं । अतएवास्माकंब्रह्मसूत्रभाष्येक्रियतइतिपदस्याध्याहारोनदृश्यते भा-
ष्येस्थितस्योक्तिरपिसंपत्त्यनंतरंतत्रस्थितस्यैवायमाविर्भावोनतुसंपद्यमानस्य लयात्पू-
र्वमेवसइतितात्पर्यवतीतिभातिसूत्रेत्वेनेतितृतीयाचहेतौ ॥ विषयवाक्येअभिनिष्पद्य-
तइति जीवस्यकर्तृताश्रवणात्संपत्तावाविर्भावे चगौणीमपिजीवस्यकर्तृतामभिप्रेत्यसंप-
द्याविर्भावइति प्रयोगः " क्रीत्वानुशयःअभ्युपेत्याशुश्रूषासंभूयसमुत्थानंप्रसज्यप्र-
तिषेधः „ इत्यादिवत्तेचप्रयोगाःमनु ( अ० ८ श्लोक०४ ) संभूयचसमुत्थानंदत्त-
स्यानपकर्मच ॥ तत्रैव ( श्लो० २२२ ) क्रीत्वाविक्रीयवाकिंचिद्यस्येहानुशयोभवेत्
मिताक्षरायां (अ० २) अभ्युपेत्यतुशुश्रूषांयस्तांनप्रतिपद्यत इतिनारदवचनमुपन्य-
स्य " विवादपदमभ्युपेत्याशुश्रूषाख्यं „ इति ॥ एवमादिषुसुप्रसिद्धाः ॥ तथाच
तैत्तिरीयेसोश्नुतइत्यनेनाक्षिप्तःदहरविद्यायांच " परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्प-
द्यते „ इत्युक्तोजीवस्ययःसंपत्त्यनंतरमाविर्भावःसत्वेनपुरुषोत्तमेनैवहेतुनाभवति॥ श्रुता-
वभिनिष्पत्तिश्रवणादुत्पत्तिभ्रमवारणायसूत्रआविर्भावउक्तः । युक्तंचास्यपरमात्महे-

तुक्त्वम् । अतएवभूमविद्यायां " तस्यवाएतस्यैवंपश्यतएवंमन्वानस्यैवंविजानतः "
इत्यादिनाभूमब्रह्मविदःफलमुपक्रम्य " आत्मतआविर्भावतिरोभावावात्मतोऽन्नमात्म-
तोबलं"इतिपरमात्मनएवाविर्भावादिकंप्रतिहेतुत्वंश्रूयते ॥ नचस्वशब्दस्यपरमात्मबो-
धकत्वेप्रमाणाभावःशंक्यः ॥ छांदोग्य(अ० ८ ) " सतासोम्यतदासंपन्नोभवतिस्वम-
पीतोभवतितस्मादेनंस्वपितीत्याचक्षतेस्वंह्यपीतोभवति ॥ ( अ० १ पा० १ सू० ८
वा०९)"स्वाप्ययात् ( आध्याय १ पाद ३ सूत्र १ )द्युभ्वाद्यायतनंस्वशब्दात्" इत्यादिब-
हुमाणसद्भावात् ॥ पुनराविर्भावांगीकारिमानमाहसूत्रकारः "शब्दादिति" तैत्तिरीये "सो-
ऽश्नुतेसर्वान्कामान्सह ॥ ब्रह्मणाविपश्चितेती " तिदहरविद्यायां " सउत्तमःपुरुषःस-
तत्रपर्येतिजक्षन्क्रीडन्रममाणः " एवमादिशब्दादित्यर्थः ॥ इदंपुरुषोत्तमेनसहसर्व-
कामाशनजक्षणक्रीडनादिकं " ब्रह्मैवसन्ब्रह्माप्येति " इत्यादिश्रुत्याब्रह्मापीतस्य-
नसंभवति ॥ अतःसशब्दोऽपिभूमविद्याद्युक्तमाविर्भावमेव " स्वेनरूपेणाभिनिष्प-
द्यते " इत्यादौगमयति ॥ स्वेनपुरुषोत्तमात्मकेनरूपेणाविर्भवतीतितदर्थः ॥ य-
त्तुशब्दादित्यनेनेत्यादि भातीत्यंतमवादितदसत् ॥ अतिक्लेशेनात्रस्वेनपदकर्मधार-
यस्यभाष्येशंकराचार्यैरंगीकृतत्वाभावात् ॥ किंतुतत्र " केवलेनैवात्मनाऽऽविर्भ-
वति । नधर्मांतरेण " इतिव्याख्यानात्स्वेनेतिपदंभिन्नमेवाभिप्रेतंप्रतिभाति ॥ अ-
न्यथा आत्मनेतिकस्यार्थः स्यात् । धर्मांतरव्यावर्तकंचसूत्रेकिंस्यात् । एवंच-
सतिस्वशब्दादित्युक्तिःसौत्रस्यशब्दादित्यस्यफलितार्थकथनरूपैवेतिसिध्यति ॥ अत-
एवस्वेनशब्दादितिनावादिकर्मधारयादिकंचनादार्शि ॥ संपूर्णसाध्यस्यार्थात्तात्पर्या-
च्चाध्याहारकल्पनापेक्षयाशब्दादित्यत्रैवार्थात्साध्यानुकूलशब्दविवक्षणंलघीयोनतुवा-
क्येविधेयराहित्यं ॥ अनेकत्रचसूत्रकृताकेवलःशब्दोहेतूक्रियते(अ० २ पा० ३
सू० ४ " शब्दाच्च ॥ ( अ० ४ पा० ४ सू० २२ ) अनावृत्तिःशब्दात् " इ-
त्यादौएवमिहापिशब्दादित्येवहेतुः ॥ इत्थंचेद्दशस्थलेषुतत्तद्वाक्यग्रहणेतवापिकिंगम-
कम् ॥ साध्यानुकूलतयातस्योपस्थितिरितिचेन्ममाप्यत्रसोऽश्नुतेजक्षन्क्रीडन्नित्यादि-
शब्दग्रहणंतथैवसेत्स्यतिसंपद्येत्युक्तिरपितत्स्मारिकेत्युक्तंप्राक् । नचब्रह्मवल्ल्याएवो-
दाहृतत्वात्संप्रसादवाक्यादेर्विषयवाक्यत्वाभावःशंक्यः ॥ स्थालीपुलाकन्यायेनैक-
तरोदाहरणेऽपि एकत्रनिर्णीतइतिभाष्याद्युक्तपरिभाषयाप्रवृत्तियोग्येसर्वत्रतत्प्रवृ-
त्तेरिष्टत्वात् ॥ अतएव " जन्माद्यस्ययतःतत्तुसमन्वयात्ईक्षतेर्नाशब्दंप्रकृतिश्च " इत्या-
द्यधिकरणेषुतत्तद्भाष्यकारैरनेकानिवाक्यान्युपन्यस्यंते एवमेवसतिसूत्राणांन्यायरू-
पत्वंचसंगच्छते अतइंद्रप्रजापतिसंवादस्याधिकरणस्यप्रवृत्तिःप्रकाश[illegible]रैःशांकरमत-
मनूद्यतत्रेदमवधेयमित्यादिनादर्शिता ॥ अत्रसंपत्त्युत्तरंजक्षणादिवत्तैत्तिरीयेऽपि "
एतमानंदमयमात्मानमुपसंक्रम्यकामान्नीकामरूप्यनुसंचरन् । एतत्सामगायन्नास्ते "
इत्यादिश्रूयते ॥ तत्रापिपरोपसंक्रमानंतरंश्रूयमाणं कामाऽन्नित्वका-

मरूपित्वादिकंपुरुषोत्तमात्मकरूपेणपुनराविर्भावमंतरानघटतइतितत्राप्याविर्भावोवा-च्यः ॥ अथप्रकाशकारोक्तदिशोत्तरदहरविद्यार्थोतिसंक्षेपेणोच्यते ॥ छांदोग्येदशमप्रपाठके । इंद्रप्रजापतिसंवादेयआत्मावेद्यत्वेनप्रकृतःसदहरविद्योपास्यएव ॥ प्रजापतिवाक्येतस्यैवापहतपाप्मत्वादिगुणकस्यमर्त्यभिज्ञानात् तत्र ॥ " यआत्माऽपहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासःसत्यकामःसत्यसंकल्पःसोऽन्वेष्टव्यःसविजिज्ञासितव्यःससर्वांश्चलोकानाप्नोतिसर्वांश्चकामान्यस्तमात्मानमनुविद्यविजानातीतिहप्रजापतिरुवाच " इत्युपक्रमः ॥ एतत्प्रजापतिवचःश्रुत्वासुरासुराणांसर्वकामसर्वलोकेप्सयोऽऽत्मविविदिषाऽभूत् ॥ ततोदेवानामिंद्रोदैत्यानांविरोचनश्चजिज्ञासयाश्रीप्रजापतिमुपसेदतुः ॥ परंतुतौपरमार्थफलंमत्वानोपसन्नौ ॥ किंतुकामनयेतितदधिकारहीनंज्ञात्वाब्रह्माब्रह्मचर्यरूपंतपउपदिदेश ॥ श्लिष्टप्रयोगेणचोवाच ॥ तत्रप्रथमपर्याये " यएषोऽक्षिणिपुरुषोदृश्यते " इत्यार्षदर्शनमेवोपदिष्टं ॥ तच्च ( अ० १ पाद २ सू० १३ ) " अंतरउपपत्तेः " इत्यधिकरणेस्फुटं ॥ परंताभ्यांनबुध्यम् । किंतुदेहएवात्मावगतः ॥ प्रजापतेर्ब्रह्मवित्वात्तत्संनिधानेसंशयोत्पत्तिः ॥ विरोचनस्यत्वसुरत्वादसन्निधानेऽपिदेहात्मवादमात्रेणतोषः ॥ इंद्रस्तुदैवप्रकृतकत्वात्तद्वादेमार्गएवंभयंददर्श ॥ " अस्मिन्नन्धेऽन्धोभवति " इत्यादि ॥ एवंदृश्यस्याज्ञानेपुनस्तपउपदिश्यद्वितीयेपर्यायेस्वप्नसृष्टिकर्तारं " कामंकामंपुरुषोनिर्मिमाणः " इतिकठाद्युक्तंपरमात्मानमेवोपदिदेश ॥ " यएषस्वप्नेमहीयमानश्चरति " इति ॥ अत्रापि " एतंत्वेवतेभूयोऽनुव्याख्यास्यामि " इति ॥ एतच्छब्देनस्वबुधिस्थस्यपरामर्शः ॥ नात्विंद्रबुध्धिस्थस्य इंद्रेणदेहस्यैवपूर्वंबुध्धत्वादिति ॥ परंत्विंद्रेणद्वितीयेपिपर्यायेसनबुध्धः । किंतुदेहाद्भिन्नोजीवएव स्वप्नद्रष्टोपदिश्यतइतिबुध्धं । सयद्यपिबाह्योपाधिदोषान्नदुष्यतितथाप्यांतरदोषाध्धन्यमानविच्छाद्यमानमिवत्रादितौल्यरूपाद्दुष्यति । पुनस्तृतीयेपर्यायेसमागत्यभयमुक्तवान् । तदासुषुप्त्यधिकरणभूतंपरमात्मानंनज्ञातवान् । किंतुसुषुप्त्यवस्थाकंशारीरमेवज्ञात्वातत्राप्यज्ञानरूपंभयं " विनाशमेवापीतोभवति " इत्यंतेनप्रदर्श्येंद्रःपुनरुपससाद । तदाप्रजापतिस्तमेवस्वबुध्धिस्थमुपदेष्टव्यत्वेनोपक्षिप्य इंद्रेणावगतस्यजीवस्यसर्वकामभोगयोग्यंस्वरूपंतत्संपत्त्याभवतीतिवक्तुं " मघवन्मर्त्यंवाइदंशरीरं " इत्यादिनाशरीरस्यदुःखदत्वं । अशरीराणांवाय्वादीनांपरंज्योतिरुपसंपन्नानांस्वरूपप्राप्तिदृष्टांतेनास्यापितत्व्याख्यातांपरंज्योतिःपुरुषोत्तममुपसमीपेसंपन्नस्यतत्धामन्यक्षरेस्वकारणेलीनस्यस्वरूपाभिनिष्पत्तिमाविर्भावरूपां " एवमेवैषसंप्रसादः " इत्यादिनोत्क्वापरस्यज्योतिषःस्वरूपमाह " सउत्तमःपुरुषः " इतियोयमुत्तमःपुरुषस्त्वन्यःपरमात्मेतिगीताश्लोकद्वयेनकृतंतनिर्वचनः ॥ अतःपरंसंपद्याविर्भू-

तस्यभोगंवकुंतत्रपरस्यभोगमाह ॥ " सतत्रपर्यैतिजक्षन्क्रीडन् " इत्यादिना ॥ तथाचदेहेंद्रियासुहीनानांवैकुंठपुरवासिनामितिसप्तमस्कंधात्तादशानांसायुज्यादिमतांभगवत्प्रसादरूपस्तद्वत्तस्तेनसहभोगोनिराबाधः ॥ पर्यैतिभोगेत्वतंत्रोपिभक्तपराधीनत्वाद्स्वतंत्रइवभवतीतिकथनात् ॥ स्पष्टंचेदंतैत्तिरीयेब्रह्मणाविपश्चितेत्यप्रधानतृतीयानिर्देशात् ॥ अत्रेपक्षेपिसर्वलोकास्पर्थमुपासनाप्रवृत्तिः " सवाएषएतेनदैवेनचक्षुषामनसैतान्कामान्पश्यन्रमतेयएतेब्रह्मलोकेतंवाएतंदेवा आत्मानमुपासतेतस्मात्तेषाꣳसर्वेचलोकाआत्ताःसर्वेचकामाःससर्वांꣳश्चलोकानाप्नोतिसर्वांꣳश्चकामान्यस्तमात्मानमनुविद्यजानातीतिहप्रजापतिरुवाचप्रजापतिरुवाच " इत्युपसंहारश्चतथैवसतिसंगच्छतेअधिकंतुप्रकाशादिषुज्ञेयं ॥ इहापिप्रकाशग्रंथएवबोधोपयोगित्वात्केनचिद्विशेषेणसहितोमूयानूदितः ॥ संपद्याविर्भावैस्वहेतुकत्वविधानार्थमेवेदंसूत्रमितियुक्तं ॥ अन्यथा (अ० १ पा०३ सू०१९) " उत्तराच्चेदाविर्भूतस्वरूपस्तु " इत्यनेनगतार्थत्वापातात् ॥ ( अ० १ पा० ३ सू० ४० ) " ज्योतिर्दर्शनात् " इत्यत्रपूर्वदहरविद्यावाक्यंविषयीकृत्यपरंज्योतिरितिज्योतिःशब्दस्यपरब्रह्मपरतायाःसाधनात्वाक्यानुपूर्वीविद्याविषययोरैक्यादिहापिसैवसिध्यति यद्यपि " स्वेनरूपेणाभिनिष्पद्यते " इत्यत्रस्वेनआत्मनेतिव्याचक्षतेआविर्भावश्चात्मनैवाक्षरात्संभवतितथापियत्स्वेनपुरुषोत्तमात्मकेनेतिग्राह्ययाव्याख्यातंतत् " उत्तराच्चेदाविर्भूतस्वरूपस्तु " इतिसूत्रैकवाक्यतयाफलितस्यार्थस्यकथनमितिज्ञेयम् ॥ तत्रआविर्भूतंस्वरूपंपुरुषोत्तमरूपंयस्मिन्नितिव्याख्यानात् षष्ठीबहुव्रीहौस्वरूपतद्वतोरभेदादुपचारक्लेशापत्तिरितितदाशयात् पुरुषोत्तमावेशेनतास्ताविचेष्टाजगृहुस्तदात्मिकाइत्यादिवचनैस्तदात्मकतासंभवात् अयमर्थआकरेषुप्रपंचितइतिकिंबहुना ॥ तत्स्थस्वशब्देति वेदेबहूनां " स्वेनभागधेयेनोपधावति " इत्यादीनां तृतीयांतस्वशब्दघटितवाक्यानांसत्त्वात्तेषांग्रहणं । द्युभ्वाद्यधिकरणइवार्थाभिप्रायात् " ब्रह्मब्राह्मणआत्मना ॥ प्राज्ञेनात्मनापरिष्वक्तः " इत्यादीनांवाग्रहणंकुतोनस्यादितिभावः ॥ अर्थसंगतिस्तुविद्वद्भिर्यथाकथंचिच्छक्याकर्तुं ॥ यच्चकिंचेत्यादिकामानुपभोगादित्यंतंतत्तुपरमतपरमतत्वाज्ञानात् ॥ केवलज्ञानिनएवाक्षरविदःपरलीलास्वादःनैष्कर्म्यमप्यच्युतभाववर्जितं(स्कं० १० अ० ९ श्लो० २१ ) नायंसुखापोभगवान्देहिनांगोपिकासुतःज्ञानिनांचात्मभूतानांयथाभक्तिमतामिह भक्तयात्वनन्ययाशक्यइत्यादिवाक्यबलात्सिध्यतीतिषिध्यतेनतुपुरुषोत्तमविदोज्ञानिभक्तस्यआप्नोतिपरमितिपरमाप्तियोग्यस्य ॥ इदंज्ञानमुपाश्रित्यममसाधर्म्यमागताः ॥ योमामेवमसंमूढोजानातिपुरुषोत्तममित्यादिवचनेभ्यः ॥ ब्राह्मणवाक्यविवरणभूतायामृचि सत्यंज्ञानमनंतंब्रह्माक्षरंयोवेदनिहितमर्थात्तत्रधामिनंपरंचयोवेदेतिकथनाद्व्याख्येयवाक्येऽपिब्रह्मविदित्यत्राक्षरब्रह्मपरब्रह्मवित्सिध्यति ॥ इदंच " सवेदैतत्परमंब्रह्मधामयत्रविश्वंनिहितंभातिशुभ्रं ॥ उपासतेपुरुषंयेह्यका-

मास्तेशुक्रमेतदतिवर्त्तंतिधीराः ” इत्यादौमुंडकादिषुस्फुटम् ॥ तद्व्याख्यानेस्व-रूपभूतेने त्यध्याहारस्यसर्वकामपदेअशनेतृतीयानिर्देशेचलक्षणायाःसहशब्दस्यस्वाक्ष-णिकयौगपद्यार्थकतायाश्चकल्पनापेक्षयास्माकमबाधितश्शक्यार्थएवश्रेयान् ॥ स-चमान्व्यवरि विशेषतोविवित्सायांपरोक्तिनिरसनःपुरस्सरस्सविस्तरस्समामकेब्रह्मव-ल्लिविवरणेद्रष्टव्यः ” ॥ यत्तु ( सचक्रमित्यादौसशब्दस्थानिनःसहशब्दस्ययुगपद-र्थतायाःप्रसिद्धत्वा ) दितितत्र ( अध्याय २ पा० १ सूत्र ११ ) . वि-भाषाधिकारात्प्राक्तनेन ( अ० २पा० १ सू० ६ ) अव्ययंविभक्तीत्यादि-नायौगपद्येविहितनित्यसमासस्यअस्वपदविग्रहतया अव्ययीभावेचाकालइतिसभा-वापन्नसहशब्दस्यसचक्रमित्यादाविवकेवलस्यतस्ययौगपद्येप्रयोक्तुमशक्यत्वात् अन्य-थाचक्रेणसहेतिव्यस्तमपिप्रयुज्येतअतउक्तश्रुतौयौगपद्यविवक्षणेनित्यसमासोदुर्वारः ॥ किंच “ चक्रेणयुगपदितिविग्रहे ” इत्यत्रशेखरकृता “ युगपत्शब्देन-तुनसमासः सूत्रगृहीतत्वा ” दित्युच्यतेतत्त्वबोधिन्यामपि “ अत्रकेचित्युग-पच्चक्रमितिसमासेनैवभवितव्यंयुगपच्छब्दस्याप्यव्ययत्वात् किन्तुचक्रेणैककालेइत्या-दिविगृहीतुमुचितमित्याहु ” रितिसंगृह्यतेएवंचचक्रेणैककालइतिवत् ब्रह्मणै-ककालइत्यर्थःस्यात् तथाचसतिसचक्रंच्यवतीत्यत्रचक्रपुरुषयोरेककालिकधावन-वत्जीवब्रह्मणोरेककालिकमशनंसिध्येदिति यौगपद्यंप्रतिपद्यापिकिन्नश्छिन्नमायुष्म-ता एतदेवाश्रित्यसहशब्दस्ययौगपद्येशक्त्यंगीकारेक्षत्राणांसंपत्तिःसक्षत्रमित्यप्यत्रोदा-हरणात् संपत्तावपितस्यशक्तिस्वीकारेक्रियतांप्रयुज्यतांचतथार्थेक्षत्राणांसहेतिदि-क् ॥ नापिममसर्वपदसंकोचः परब्रह्माभिन्नेष्वलौकिकेषुनित्येषुकामेष्वतीतत्वाद्य-संभवात् ॥ यावानर्थइतिवाक्यंतुनब्रह्मवह्र्यर्थबोधकंप्रत्यभिज्ञापकपदादिरूपमान-गंधस्याप्यभावात् ॥ किंतु कर्मप्रक्रमस्थं वेदेषुत्रैगुण्यनानाकर्मप्रतिपादनेऽपिसर्वा-णितान्येकेनानुष्ठातुमशक्यानिसंपूर्णोजलाशयःपानादावुपयोक्तुमिवअतोयथासंप्लुतो-दकेऽपियावतापानादिसिद्धिस्तावदुपादेयंतथाज्ञानादिसिद्धयेकर्मेत्यभिप्रायकंतत् ॥ तेननेहास्योपयोगःकश्चित् ॥ यदपियस्तुभागवतेत्यादिइत्यलमित्यंततदुर्बलच्छलनफ-लकंलीलोपयोगितयापुनराविर्भावस्तुनप्रपंचेपुनरावृत्तिरूपइतिप्रागेवनिर्णीतं इदंचवा-क्यंदशमस्कंधेअष्टाविंशेध्यायेभगवतानंदस्यप्रत्यानयनोत्तरमेवंकारंपठ्यते श्लोक (१०)नंदस्त्वतींद्रियंदृष्ट्वालोकपालमहोदयं ॥ कृष्णेचसन्नतिंतेषांज्ञातिभ्योविस्मितोऽब्र-वीत् ॥ तेत्वौत्सुक्यधियोराजन्मत्वागोपास्तमीश्वरं ॥ अपिनःस्वगतिंसूक्ष्मामुपाधास्य-दधीश्वरः ॥ ॥ इतिस्वानांसभगवान्विज्ञायाखिलदृक्स्वयं ॥ संकल्पसिध्दयेते-षांकृपयैतदचिंतयत् ॥ ॥ जनोवैलोकएतस्मिन्नविद्याकामकर्मभिः ॥ उच्चावचा-सुगतिषुनवेदस्वांगतिंभ्रमन् ॥ ॥ इतिसंचिंत्यभगवान्महाकारुणिकोविभुः ॥ हरिरि-त्यपिपाठः ॥ दर्शयामासलोकंस्वंगोपानांतमसःपरं ॥ ॥ सत्यंज्ञानमनंतंयद्ब्रह्मज्योतिः

सनातनं ॥ यध्धिपश्यंतिमुनयोगुणापायेसमाहिताः ॥ ॥ तेतुब्रह्मन्हदंनीतामग्नाः कृष्णेनचोध्धृताः ॥ ददृशुर्ब्रह्मणोलोकंयत्राक्रूरोध्यगात्पुरा नंदाद्यस्तुतंदृष्ट्वापरमानंदनिर्वृताः ॥ कृष्णंचतत्रछंदोभिस्तूयमानंसुविस्मिताइति अत्रश्रीधरस्वामिनः " औत्सुक्ययुक्ताधीर्येषांते ॥ अपिकिं स्वगतिं स्वस्थानं सूक्ष्मां ब्रह्माख्यांच उपाधास्यत् उपाधास्यति नः अस्मान् प्रापयिष्यतीति संकल्पितवंत इत्यर्थः ॥ ११ ॥ इत्येवंभूतं स्वानांत्वेषांतेषामितिवापाठांतरंसंकल्पं अखिलदृक्सर्वज्ञः स्वयमेवविज्ञायतेषांसंकल्पसिध्धये कृपयैतद्वक्ष्यमाणमचिन्तयत् ॥ १२ ॥ अविद्यां देहाद्यहंबुध्धिः ततःकामः ततःकर्म तैरविद्याकामकर्मभिः । उच्चावचासु देवतिर्यगादिषु भ्रमन् स्वकीयां गतिंनवेद ॥ ब्रह्मस्वरूपंलोकंवैकुंठाख्यंचतमसःप्रकृतेःपरम्॥१४॥देहादिपिहितानांदर्शनमशक्यमितिप्रथमंदेहादिव्यतिरिक्तंब्रह्मस्वरूपंदर्शयामास ॥ तदाह सत्यंअबाध्यं ज्ञानंअजडंअनंतं अपरिच्छिन्नं ज्योतिःप्रकाशं सनातनं शश्वत्सिध्धं ब्रह्म गुणापायेगुणापोहे ज्ञानिनोयत्पश्यंति तत् कृपयैव दर्शयामास ॥ १५ ॥ एवंब्रह्मन्हदंब्रह्मैन्हदवध्धदः तत्रनिमग्नस्यविशेषविज्ञानाभावात् ॥ तंब्रह्मन्हदंतेतुनीताः प्रापितास्तस्मिन्मग्नाश्च ॥ तुशब्दोक्तंविशेषमाहपुनःकृष्णेनउध्धृताः ॥ समाधेरिवोत्थापिताः । संतोब्रह्मणः । तस्यैवलोकंवैकुंठाख्यंददृशुरिति ननुब्रह्मनिमग्नानांपुनर्लोकदर्शनमघटितमेवेत्याशंक्याहयत्रेतियत्रयस्मिन्कृष्णेनिमित्तेसतिपूर्वमक्रूरोऽध्यगात् दृष्टवान् ॥ शुकपरीक्षित्संवादात्प्राक्तनत्वाद्भूतनिर्देशः नह्यतर्क्यैश्वर्ये भगवतिकिंचिदप्यसंभावितमिति भावः इतिव्याचक्षते ॥ अत्रब्रह्मण्येवनिमज्जनंपुनस्ततएवभगवतोद्धरणंचतैरपिस्पष्टमेवव्याख्यातं॥अन्यथा अपिनःस्वगतिंसूक्ष्मामितिसंकल्पस्तत्सिद्धयेभगवताकृपयासत्यत्वादिलक्षणकब्रह्मधाम्नःप्रदर्शनादिकंचनैवसंगच्छेत॥ किंचसत्यज्ञानानंतस्वरूपस्यतमसःपरस्यब्रह्मज्योतिषःसाक्षात्कारेकथंचिदप्यविद्याशेषस्यवक्तुमशक्यत्वात् " ब्रह्मविद्ब्रह्मैव भवति ॥ ब्रह्मैवसन्ब्रह्माप्येति " इत्यादिश्रुतिभिःप्रतिबंधरहितस्यतदंशस्य " लवणमेतदुदकेऽवधाय यथासैंधवखिल्यउदकेप्रास्तउदकमेवानुविलीयेत " इत्यादिनाछांदोग्यबृहदारण्यकाद्युक्तदृष्टांतेनतत्रविलयोऽवश्यमेवस्यात् ॥ तदाऽप्यविलयेचकदाऽपिसनस्यात् ॥ तदुत्तरकारणांतरस्यत्वयाऽत्यंतदुरुपपादत्वात् दर्शनोत्तरंतदभावे " भिद्यतेहृदयग्रंथि " रितिकाठकप्रभृतिश्रुतिशतव्याघातापाताच्च ॥ अग्रेचश्रीधरस्वामिनः "अथवा अक्रूरोयत्रदृष्टवाँस्तस्ययमुनान्हदस्यब्रह्मन्हदइतिनामतंन्हदंनीताःसंतोब्रह्मणोलोकंददृशुः ॥ पुनश्चकृष्णेनोध्धृताःपूर्ववृत्तंदृष्ट्वाविस्मिताबभूवुः ॥ " इतित्वन्मतदुराग्रहग्रस्तैःप्राक्तनैःपरमहंसप्रियाकारादिभिःकैश्चिद्व्याख्यातं ॥ पक्षांतरत्वेनोपन्यस्यतस्यानौचित्यंध्वनयितुं " व्यवहितान्वयोऽप्रसिद्धकल्पनाचसोढव्या " इतितत्रदूषणंस्पष्टमेवदर्शयंति ॥ युक्तंचैतत् ॥ मग्नाःसंतोददृशुरित्यशक्यंकृष्णेनचोध्धृताइत्यनेनमध्येव्यवधानात् ॥ यत्राक्रूरोऽध्यगात्तंब्रह्मन्हदमितिचात्यंत-

व्यवहितंकिंचास्मिन्नेवश्लोकेउध्धरणमुक्तं ॥ तदनंतरंनंदादयइतिश्लोकोक्तं व्याह
न्येत ॥ ईदृशक्लिष्टकल्पनायाअप्यादरे भक्तोदाशरथेर्लंकाधीशस्यद्वेषकृत्कपिरित्या-
दौदाशरथेर्द्वेषकृत लंकाधीशस्यभक्तइत्याद्यपिव्याख्यायेत ॥ किंचनदीपरिचय-
वतांतेषामक्रूरस्यैवस्वतएवोन्मज्जनसंभवात्कृष्णेनचोध्धृताइतित्वत्पक्षेव्यर्थमेव ॥ अ-
पिचन्हृदविशेषंप्रतिनयनेकिंप्रयोजनं ॥ भगवतःप्रदर्शनसामर्थ्यैउपसमीपे आधा-
स्यतीतितत्संकल्पानुरोधात् तत्रैवदर्शयेत् ॥ असामर्थ्येनयनतोऽपिकिंस्यात् ॥ न-
हिन्हृदविशेषस्यसत्वभावःशक्योवक्तुं । अद्यापितत्रमग्नस्यदर्शनमसंगात् ॥ त्वत्प-
क्षेसंकल्पविरोधोपिबाधकः ॥ किंच अक्रूरोयत्रदृष्टवाँस्तस्ययमुनान्हृदस्यब्रह्मन्हृ-
दइतिनामेतिकल्पनेऽपिकपोलकल्पनांविनानकिमपिमानमस्ति ॥ व्रजस्थलनिरूपके-
षुवाराहब्रह्मवैवर्तादिषुपुराणभागेषुतादृशेषुपौरुषग्रंथेषुचक्वापिब्रह्मन्हृदइतितन्नाम्नोगंध-
स्याप्यभावात् ॥ श्रीभागवतेऽपितदभावाच्च ॥ एतदेवानुसंधायश्रीधरस्वामिभिरप्यप्र-
सिद्धकल्पनेतिदूषणांतरमुक्तं ॥ इदानीमप्यक्रूरदर्शनन्हृदस्थलं अक्रूरघट्टइत्ये-
वोच्यते ॥ नतुतद्ब्रह्मन्हृदइतिकेनापिव्यवन्हियते ॥ तस्मान्नामत्वकल्पनंमनोराज्य-
विजृंभितं ॥ एवंचश्रीधरकृततट्टीकायांस्पष्टमित्युक्तिस्तुधौर्त्यातिशयादेव ॥ विस्त-
रेणचामीश्लोकाःश्रीमदाचार्यचरणैःसुबोधिन्यांविवृताः ॥ तत्सर्वंततोऽनुसंधेयं ॥ आव-
श्यकोविशेषस्तुकश्चित्संगृह्यतेऔत्सुक्यधियइत्यत्र । अपीतिसंभावनायां ॥ सूक्ष्मांस्व-
गतिंवैकुंठाख्यां । उप । समीपे । आधास्यति ॥ अस्मन्निकटेतांकिंप्रकटीकरिष्यति ।
यतोऽधीश्वरः ॥ तथात्वसाधनाभावेऽपितस्यैश्वर्यमेवात्रहेतुः ॥ इतिस्वानामित्य-
त्रस्वाभक्ताः । भगवान् सर्वसमर्थः ॥ अचिंतयत् ॥ किमेतेसाधनेयोज्याः । उतकृप-
यैवफलंदेयमित्यचिंतयत् ॥ तत्रसाधनेशीघ्रमनिस्तारोजनोवाइत्यनेनदर्शितः । तेनकृ-
पापक्षएवावशिष्टः ॥ तदाह ॥ इतिसंचिन्त्येति । महाकरुणयैवप्रदर्शनम् ॥ विभु-
रितिपूर्वमक्षरदर्शनपुनरुध्धरणाद्युपायसामर्थ्यं । संचिंत्यैवदर्शयामासेत्युक्त्या भगवा-
नित्यादिपदैश्चतत्रवैस्थित्वात्तत्कालमेवदर्शयामासनतुक्वचिद्गत्वेतिज्ञायते ॥ विलं-
बेमानाभावाद्धेत्वभावाच्च ॥ लोकस्यसगुणत्वव्यावर्तनायाह तमसःप्रकृतेःपरमिति ।
नवीनरचनाजडत्वपरिच्छेदादिवारणायसत्यादिपदानि । यद्ब्रह्म परधामत्वेनसर्ववेदां-
तप्रत्ययमितिप्रमाणं । दर्शनमात्रेणसर्वदोषदाहकत्वाज्ज्योतिः ॥ लोकतयासादित्वशं-
कानिरासायसनातनमिति । निर्गुणत्वंस्पष्टयितुंपठ्यतीति "सदापश्यंतिसूरयः ॥ सो-
ऽध्वनःपारमाप्नोति" इत्यादौवेदकांडद्वयेपिस्फुटमिदं ॥ निर्गुणानामेवदर्शनाधिकारे-
तस्यनैर्गुण्येकिंवाच्यं ॥ ब्रह्मविशोधकत्वैकरसत्वागाधत्वप्रवेशाधारत्वादिनान्हृ-
दःकृष्णेनचेतिचकाराद्वैदैःउध्धरणेफलमाहददृशुरिति । तत्रपरलीलादर्शनंस्फुटीकृतं-
नंदादयइत्यनेन ॥ पुरुषोत्तमसाक्षात्कारएवपरमेवाङ्मनसागोचरत्वादगणितआनं-
दः ॥ अक्षरसाक्षात्कारेतुप्रजापतितःशतगुणः " तेयेशतंप्रजापतेरानंदाःसएकोब्रह्मण-

आनंद ” इतितैत्तिरीयश्रुतेः ॥ अन्नब्रह्म । अक्षरं । ( अ० ६ ब्राह्म० ३ पृ० ८२० ) “ सएकोब्रह्मलोकआनंदः ” इतिबृहदारण्यकेश्रावणात् परानंदस्यागणितत्वमपितैत्तिरीयएवानंदमयोपसंक्रमानंतरंपठितेयतोवाचइतिश्लोकेस्फुटं ॥ गणनायावाङ्मनसतंत्रत्वात् कृष्णंचतत्रछंदोभिस्तूयमानमितिलीलादर्शनंस्पष्टमेवेति दिक् ॥ इत्थंकारंसंपद्याविर्भावादिकंनिरवद्यमेवेतितदेतत्सर्वमनुसंधायोक्तंमूले अलमत्यावेशेनेति अस्यैकादशस्यश्लोकस्य खंडनेशाक्तमतंनिरस्तं ॥ प्रसंगाद्भगवत्प्रसादभक्षणं साधितं । क्षराक्षरपुरुषोत्तमरूपंसाधनरूपफलरूपसेवाविभागः । परभक्तेर्ज्ञानफलत्वंपुरुषोत्तमलीलाप्राप्तिरूपमोक्षेतत्स्वरूपयोग्यताजनकःसंपद्याविर्भावश्चसमर्थितः । इतिसकलंश्रीकृष्णकृपाजंमंगलमनाकुलमस्माकं श्रीमद्बालमुकुंदमिंदुवदनंवृन्दावनानंदिनंवंदेसुन्दरमेकमेवननपरान्निद्रामिवृंदारकान् ॥ वर्त्तंतामचिरंतनौ[1]दिविषदोऽनंताअनंतातलेमंतुं[2]तेगणयन्तुमायै[3]मितरान्मूर्धाननन्तुंक्षमः ॥ स्थित्वारैवत[4]पर्वतस्यपुरतःश्रीजीर्णदुर्ग[5]पुरे श्रीदा[6]मोदरकाममोहनविभूसंसेव्यमानान्सदा ॥ श्रीमद्दीक्षितवंशमौक्तिकमणीनेकादशानन्वयेत्वाचार्याद्व्रजवल्लभाभिधगुरून्मातामहान्स्वान्भजे ॥ २ ॥ मंदमपिवेदभागान्सांगान्षट्दर्शनानिमामंधं अध्यापितवान्दययानिजजनकंतंभजेघनश्यामम् ॥ ३ ॥ कृष्णयजुस्त्रिदिवतरोःसुमनःश्लाघ्यास्तितैत्तिरीशाखा तांसेवतेमधुग्वागापस्तंबद्विजातिकुलम् ॥ ४ ॥ तत्रोद्भूतोमतिमान्वाधूलसंगोत्रवारिधेश्चन्द्रः तैलंगवेल्लनाटीज्ञातिर्विद्वत्सभारत्नम् ॥ ५ ॥ यःपंचनद्युपाह्वयगोपीनाथांगजोघनश्यामः ॥ गोवर्द्धनाभिधोहंतत्सुनुस्तन्मुखाधिगतविद्यः ॥६ ॥ गर्भेगोस्वामिश्रीव्रजवल्लभतनुजयापतिव्रतया ॥ लाडोनाम्न्यास्मिधृतोगट्टूलालापराभिख्यः ॥७॥ मयार्पितादुःसमयां[14]भजालिं निरस्यदूरेबहुधान्[15]यकालं ॥लां[16]भंजनेसाधयितुंविशेषा-

---

१ “ एकोहवैनारायणआसनब्रह्मानेशानः ” इत्यादिश्रुतिभिःसृष्टिकालेजाताः २ मंतुमपराधं ॥ ३ अयंभगवतेनिवेदिततयास्वानधीनः ॥ ४ रैवतोलोकेगिरिनारइतिप्रसिद्धस्सौराष्ट्रदेशेद्वारकाप्रांतेपर्वतविशेषः ५ उक्तपर्वतोपत्यकायांजूनागढइतिप्रसिद्धे । ६ क्रमेण श्रीमदाचार्यश्रीविट्ठलेश्वरसेवितौभगवत्स्वरूपविशेषौ ॥ ७ श्रीविट्ठलेशप्रभुज्येष्ठपुत्रश्रीगिरिधरात्मजस्यश्रीगोपीनाथदीक्षितस्य ८ श्रीवल्लभाचार्यमारभ्यपुरुषपरंपरागणने एकादशसंख्यापूरणात् ९ सर्वमनोरथपूरकत्वसाम्यात्कल्पद्रुमस्य । १० सुमनो विद्वांसः पक्षेपुष्पाणि ११ बौधायनहिरण्यकेश्यापस्तंबेतित्रिधासूत्राणितैत्तरीयकाणांसंति १२ द्विजातयो ब्राह्मणाःपक्षिणश्च १३ भार्गवांतःपातिवाधूलसगोत्रं १४ दुःसमयोविरुद्धसिद्धान्तःवृष्ट्यनुपयोगीकालश्च १५ बहुभिःप्रकारैरन्येषांनाशकंपक्षेबहूनांधान्यानांनाशकं । १६ शुद्धज्ञानस्य पक्षेधान्यादेः ।

स्प्राभंजनेमारुतशक्तिरेषा ॥८॥ वसुरामनंदचंद्रिमितवर्षेविक्रमार्कशकगेऽसौ मार्गेकृष्ण नवम्यांसगुरौश्रीविठ्ठलोत्सवेपूर्णा॥१॥विस्तारोमेघानां विहतासारप्रपातदृग्घातः॥ विहतो मारुतशक्त्याजवादेवारणविचारधारणया ॥ २० ॥ अभ्रान्तोदितमार्त्तण्डप्रकाशात्मतमः शमम् इतःपरं चिररम्यंसुदिनमेप्रसेत्स्यति ॥ ११॥ सदाऽलोचनरोचिष्णु सारव्यापार-कारकं अवश्यंसुदिनंदृश्यचंडमार्त्तण्डमण्डनम् ॥ ११ ॥ वेदानुयायिविदुषःपरेभक्तिनि-ष्ठान् विज्ञापयामिचरणौपरिगृह्यनम्रः ॥ उद्यद्दयागुणदशोन्यपरिश्रमज्ञाअत्रप्रमादशत-कानिममक्षमध्वम् ॥ १२ ॥ अन्धोस्म्यहंनिजकरेणनलेखशक्तस्तल्लेखितंनिखिलमेवक-रैःपरेषां ॥ भ्रान्त्यादयोजगतिमानुषबुद्धिधर्माः सर्वांशतोनपरिहर्तुमिमेचशक्याः ॥१३॥ सदालिवल्लभश्रीमन्मुकुन्दचरणोर्पितः ॥ सामोदोरोचिताकारोवाक्पुष्पाञ्जलिरुज्ज्वलः ॥ इतिश्रीमद्वेदव्यासविष्णुस्वामिमतपुण्डरीकमंडलमंडनमार्त्तण्डश्रीमद्वल्लभाचार्यचरणाब्ज-चंचरीकचित्तेनमोक्षगुरुगोस्वामिश्रीव्रजवल्लभचरणानुचरेणतैलंगज्ञातीयविद्वद्दलपंचन-द्युपनामकघनश्यामभट्टात्मजेन वेदान्तचिन्तामण्याद्यनेकशास्त्रग्रंथनिर्मायिणारुक्मि-णीचंम्वादिविविधिकाव्यप्रबंधविधायिनागोवर्द्धनाऽऽशुकविनाविरचिताप्राभंजनपूर्व-भागस्यमारुतशक्तिनाम्नीटीकासमाप्तिमगमत् ॥

---

१७ ( १९ ३८ ) १८ संवत्सरे अमांतगणनयामार्गशीर्षेपूर्णिमांतगणनयापौषे १९ पक्षेमेघाञ-नामिति च्छेदः वस्तुतस्तुमेघविस्तारोनामसहस्राक्षपूर्वभागः । २० विहतःकृतो विगतहितोवा-निःसारःसन्मार्गात्पातो ज्ञानघातश्चयतइतिपक्षेआसारो धारासंपातः प्रपातः पंकादिमूलकः अंध कारान्नेत्रोपरोधश्चयतइति।२१ अप्रतिबद्धोविचारो धारणाचयस्यां पक्षेविशेषेणचारोगतिः धारणं वहनं । २२ अभ्रान्तैर्भ्रमरहितैरुक्तौशुद्धाद्वैतमार्त्तंडतत्प्रकाशाख्यौ ग्रंथविशेषौपक्षेअभ्राणामंतेना-शेसूर्यउदेति । २३ अज्ञानंअंधकारश्च २४ मारुतशक्त्यामेघविस्तारस्यनाशोत्तरं । २५ एतन्ना-मकंशुद्धाद्वैतमार्त्तण्डटिप्पणंपक्षेप्रकाशोज्ज्वलदिनंच २६ सद्वस्तुनआलोचनकरंपक्षेनिरंतरंनेत्र-रम्यं २७ भगवत्सेवादिःसारभूतोव्यापारःपक्षे दृढोत्तमव्यापारस्तत्प्रवर्त्तकंसारोगतिश्चव्यापारश्च-तयोः २८ ग्रंथःसूर्यश्च २९ परस्यपुरुषोत्तमस्यभक्तिः फलरूपावाभक्तिः ३० सतामालेःपं-क्तेःपक्षेसदाअलीनांभ्रमराणांप्रियः ३१ स्वगुरुदत्तःश्रीप्रभुचरणसामयिकःस्वगृहेविराजमानःश्रीम-द्बालमुकुन्दाख्योभगवत्स्वरूपविशेषः । ३२ सामसुयोग्यवचनेषूदारउचिताकारश्चपक्षेआमोदे-नसुगंधेनसहितः समस्ताद्रोचितआकारोस्य । ३३ अग्रंचरणःप्रथमस्कंधसुबोधिनीसमाप्तिस्थः श्रीमदाचार्योच्छिष्टोभक्त्यासंगृहीतः ॥

